विचार नहीं करता है फिर भी दुर्गवृत्ति की अपेक्षा एकाध स्थल ऐसे हैं जहाँ पर वैदिक रूपों के लिए भी सूत्रों[1] का उल्लेख है। जिसमें कर्तवे प्रयोग की सिद्धि बतलायी गई है।

### ३

### शिष्यहिता वृत्ति एवम् शिष्यालोक न्यास के रचयिता उग्रभूति भट्ट

कातन्त्र-व्याकरण की परम्परा में कातन्त्र सूत्रों पर शिष्यहितावृत्ति लिखी गयी, उसी वृत्ति पर यह शिष्यालोकन्यास है। अतः ग्रन्थ के बारे में कुछ कहने के पहले लेखक का परिचय देना आवश्यक है, तदनुसार ग्रन्थकार उग्रभूति भट्ट के बारे में ऐतिहासिक तथ्यों का संक्षेप में विवेचन प्रस्तुत किया जाता है।

**(क) लेखक का व्यक्तिगत परिचय**

"अल्बेरूनी का भारत" नामक एक मात्र ऐसा ग्रन्थ उपलब्ध है जिसमें उग्रभूति भट्ट एवम् उनकी कृति के बारे में प्रकाश डाला गया है। इस ग्रन्थ में किये गये उल्लेख से पता चलता है कि उग्रभूति भट्ट कश्मीर राज्य के दक्षिण एवं पश्चिमी सीमान्त पर स्थित प्रदेश के शासक राजा जयपाल के पुत्र शाह आनन्दपाल के गुरु एवं शिक्षक थे। इन्होंने अपना ग्रन्थ लिखकर कश्मीर में प्रचारार्थ प्रेषित किया। अल्बेरूनी लिखते हैं कि उस समय के कश्मीरी पण्डित सहज में ही किसी की सैद्धान्तिक मान्यताओं को स्वीकार नहीं करना चाहते थे। अतः उन लोगों ने उक्त ग्रन्थ के पठन-पाठन में रुचि नहीं दिखलाई। तब उग्रभूति ने अपने ग्रन्थ के प्रति अनादर की बात अपने शिष्य शाह आनन्दपाल को बतलाई। गुरु का सम्मान प्रकट करने के लिए शाह ने ग्रन्थ में रुचि लेने वालों को वृत्ति प्रदान करने के लिए २० हजार दिरहन (मुद्रा) एवम् इतने ही मूल्य की सामग्री कश्मीर भेज दी। जिससे प्रभावित होकर विद्वानों ने पठन-पाठन में गम्भीर रुचि का परिचय दिया। इस तरह उग्रभूति की कृति का पर्याप्त मात्रा में आदर एवं सम्मान हुआ। इन दोनों ग्रन्थों के अतिरिक्त एक[2] तिब्बतीय विद्वान् के अनुसार उग्रभूति ने ५,००० श्लोकों वाले कलाप-व्याकरण की रचना की थी। लेकिन वर्तमान समय में न तो यह ग्रन्थ प्राप्य ही है और न कहीं अन्यत्र इसका उल्लेख ही मिलता है।

---

१. तवै के केन्यद् वा (शिष्यहितावृत्ति ४।२।३६)

२. जर्नल, एशियाटिक सोसायटी आफ बंगाल, पृ० ८४-८५, १९११।

उग्रभूति भट्ट के समय की राजनीतिक स्थिति भारतीय इतिहास की दुर्भाग्यपूर्ण स्थिति थी। यह वही काल[1] है जबकि मुहम्मद गजनवी ने भारत पर आक्रमण किया था। उसका सामना पेशावर के निकट राजा जयपाल ने किया जिसमें राजा जयपाल पराजित कर बन्दी बनाये गये तथा उपहार प्रदान करने पर छोड़ दिये गये। इस युद्ध में महमूद जयपाल की राजधानी वैहिन्द (उद्भाण्डपुर) तक लूटमार करता चढ़ आया था। राजा जयपाल अपने इस अपमान को सहन नहीं कर पाया तथा अपने को अग्नि में जलाकर भस्म कर दिया। उसके बाद उसका पुत्र आनन्दपाल सन् १००२ में गद्दी पर बैठा। १००६ में महमूद ने मुल्तान पर पुनः आक्रमण किया। आनन्दपाल ने उसका सामना करने का असफल प्रयास किया तथा इस बार महमूद मुल्तान तक पहुंचने में सफल हो गया। दूसरी बार सन् १००९ में आनन्दपाल को वैहिन्द के मैदान में पुनः महमूद के आक्रमण का सामना करना पड़ा, इस बार तो उसे भयंकर पराजय का मुँह देखना पड़ा। इसके बाद शाह ने नन्दन की पहाड़ियों के छोर पर नन्दन नामक नगर को अपनी राजधानी बनाया। उसने अपना अन्तिम समय यहीं पर बिताया। ये शाह आनन्दपाल उसी राजशाही वंश के प्रतिनिधि हैं जो चिनाव नदी से हिन्दूकुश की पहाड़ियों तक फैला हुआ था। यह वंश २०० वर्षों तक अकेले ही अरब आक्रान्ताओं का सामना करता रहा।

### (ख) उग्रभूति का समय

अल्बेरूनी का भारत नामक ग्रन्थ की एक प्राचीन पाण्डुलिपि की एक प्रति के एक पृष्ठ पर अरबी भाषा में लिखे गये कुछ तथ्यों से पता चलता है कि इस पुस्तक की रचना पहली मुहर्रम ४२३ हिजरी अर्थात् १९ दिसम्बर १०३१ को महमूद की मृत्यु के डेढ़ वर्ष बाद गजनी में समाप्त की गई। अल्बेरूनी का पूरा नाम "अब्रेहाँ मुहम्मद इक अहमद अल्बेरूनी" था। वह खीवा (प्राचीन ख्वारिज्म) देश का रहने वाला था। वह खीवाराज्य का मन्त्री था। १०१७ में महमूद ने खीवाशासक को पराजित कर साथ में अल्बेरूनी को भी बन्दी बना लिया, तथा अल्बेरूनी महमूद के साथ एक लेखक के रूप में भारत आया। उस समय महमूद के क्रूर आक्रमणों से भारत की जनता पीड़ित हो चुकी थी, अतः मुसलमान यात्रियों अथवा आगन्तुकों

---

1. १००० ईश्वीय सन्।

से घृणा करने लगी थी। इस कारण से अल्बेरूनी भारतीय धर्म एवं दर्शन तथा ज्योतिष आदि विद्याओं के बारे में उपयुक्त जानकारी नहीं पा सका। परन्तु शिष्यहितावृत्ति के लेखक उग्रभूति आश्रयदाता एवं शिष्य[1] शाह आनन्द पाल को अपने समय के शासक के रूप में स्वीकार किया है, तथा उग्रभूति को १०वीं शती के अन्त में होने वाला बतलाया है। इससे यह अनुमान लगाया जा सकता है कि अल्बेरूनी का जन्मकाल ९७३ ई० है तथा वह १०१७ में बन्दी बनाकर गजनी ले जाया गया और महमूद भारत पर किये जाने वाले आक्रमणों के साथ ही अल्बेरूनी को भारत ले आया। और ऐतिहासिक उल्लेखों से यह भी निश्चित है कि शाह आनन्दपाल १००२ में सिंहासनारूढ़ हुआ। अतः शिष्यहितान्यास के अथवा वृत्ति के विरचित होने का समय १००२ एवम् १०१७ के मध्य का हो सकता है। अल्बेरूनी के भारत आगमन के पूर्व ही उग्रभूति के अन्त का समय हो सकता है। क्योंकि अल्बेरूनी ने उनके आश्रय दाता को अपने समय के शासक के रूप में बतलाया परन्तु उग्रभूति को अपने साथ साक्षात्कृत होते हुए नहीं बतलाया है।

उग्रभूति का निवास स्थान राजा जयपाल की राजधानी वैहिन्द हो सकती है। शिष्यहिता वृत्ति के कश्मीर भेजे जाने वाले प्रसङ्ग से यह सिद्ध है कि वे कश्मीर निवासी नहीं थे। शिष्यालोकन्यास के २।५।५ सूत्र पर "को राजा कश्मीरेषु" जिज्ञासा अर्थ में प्रस्तुत किया गया उदाहरण उग्रभूति के कश्मीर के बाहर के होने की धारणा को पुष्ट करता है।

### (ग) कृतियां

उग्रभूति भट्ट निश्चय ही अपने समय के महान् लेखकों में से हैं। परन्तु इसके बारे में विशेष विवरण आज तक उपलब्ध नहीं हो सका है। इस समय उनकी केवल दो कृतियां ही आंशिक रूप में उपलब्ध हैं एशियाटिक सोसायटी आफ बंगाल से प्रकाशित एक जर्नल[2] में किये गये उल्लेख के अनुसार उग्रभूति के द्वारा ५००० श्लोकों वाले कलाप व्याकरण के लिखे जाने की भी सूचना प्राप्त होती है। परन्तु यह रचना अभी तक अज्ञात ही है। इनकी

1. I have been told that the last mentioned author was the Teacher and instrueter of शाह आनन्दपाल, who ruled in our time. Alberunie's India, P. 135.
२. देखिये उक्त जर्नल, पृ० ८४-८५, १९११।

उपलब्ध दोनों कृतियाँ प्राण्डुलिपि के रूप में शारदा लिपि में निबद्ध हैं। जिनका विशेष वर्णन उनसे सम्बन्धित प्रकरण में किया जायेगा। यहाँ पर केवल उनके नाम का ही उल्लेख किया जा रहा है।

१. शिष्यहिता वृत्ति।

२. इसी वृत्ति पर लिखा गया "शिष्यालोक न्यास", जिसे शिष्यहितान्यास के नाम से भी जाना जाता है, तथा व्याकरण शास्त्र के इतिहास में शिष्यहितान्यास ही चर्चित है।

## ४

### (क) शिष्यहिता वृत्ति एवं शिष्यालोक न्यास—

व्याकरण शास्त्र के इतिहास लेखकों द्वारा किए गए उल्लेख से पता चला है कि कातन्त्र-व्याकरण परम्परा में शिष्यहितान्यास नामक ग्रन्थ उग्रभूति भट्ट द्वारा लिखा गया। यह न्यास ग्रन्थ और उसके मूल आधार के बारे में जो विभिन्न धारणाएँ प्रचलन में हैं तथा इसकी वास्तविकता क्या है उसके बारे में संक्षिप्त परिचय निम्न प्रकार से दिया जा रहा है।

1. Report H. 140

शिष्यहितान्यास by उग्रभूति (Aufrecht, Theodor, catalogus catalogrum for Sanskrit works and Authors, Page 656)

2. उग्रभूति[1] (Ref. to by Alberuni's India 1.13.5, as teacher of Anandpal son of Jayapal, who ruled in our time later part of tenth cent. A D.

...Sisyahita Nyasa[2], gr., Katantra, BORI 322 of 1875-76. H. Report XXI. See also Belvalkar. System of Skt. gr. P. 91, was known in Tibettan. See JASB sup. P. 85-1911.

3. There[3] is an other work called Balbodhini by जगद्धर भट्ट with a Nyasa on it by writer called Ugrabhuti.

---

1. By Author Index=New catalogus catalogrum Vol. 2 Page 383, University of Madras.
2. By Book index. —Same—
3. Kieth, A.B. History of Sanskrit literature P. 431.

४. कश्मीर[1] के जगद्धर भट्ट ने कातन्त्र-व्याकरण की परम्परा में बालबोधिनी नामक ग्रन्थ लिखा, उसी पर उग्रभूति ने न्यास नामक टीका लिखी।

५. इसी व्याकरण[2] के क्रम में एक प्रकार की टीका उग्रभूति द्वारा शिष्यहितान्यास १००० में उपलब्ध है।

६. उग्रभूति[3] ने दुर्ग वृत्ति पर शिष्यहितान्यास नामक टीका लिखी।

**इस विषय में वास्तविक तथ्य—**

इस विषय में गवेषणा करने पर जो तथ्य प्रकाश में आये हैं, उन के द्वारा ऊपर विभिन्न लेखकों द्वारा उल्लिखित विवरण अंशतः ही सत्य प्रतीत होता है। इस विषय में प्राप्त होने वाले कुछ वास्तविक तथ्य इस प्रकार हैं।

१. शिष्यहितान्यास शब्द ग्रन्थ का शीर्षक नहीं है अपितु शिष्यहिता वृत्ति पर लिखा गया न्यास है, तथा इसका वास्तविक नाम शिष्यालोक न्यास है। इस तथ्य का स्पष्टीकरण न्यास एवं वृत्ति ग्रन्थ में दी गई पादों के अन्त वाली पुष्पिकाओं से हो जाता है। प्रायः प्रत्येक पुष्पिका में "भट्टोग्रभूतिकृतायां शिष्यहितायां वृत्तौ शिष्यहितान्यासे शिष्यालोकाभिधाने·· प्रकरणे··· पादः" दिए गए उद्धरण ही प्रमाणस्वरूप उल्लिखित किए जा सकते हैं।

२. दुर्ग वृत्ति पर उग्रभूति द्वारा कोई भी ग्रन्थ नहीं लिखा गया है। यदि उग्रभूति ने इस प्रकार का ग्रन्थ लिखा होता तो प्रस्तुत ग्रन्थ में दुर्ग का उल्लेख किसी न किसी रूप में अवश्य किया होता।

३. बालबोधिनीकार जगद्धर भट्ट काल की दृष्टि से उग्रभूति के बहुत बाद के हैं। अतः उनके द्वारा लिखे गए ग्रन्थ पर उग्रभूति द्वारा टीका ग्रन्थ के लिखे जाने की सम्भावना नहीं हो सकती है।

४. अल्बेरूनी के ग्रन्थ में (१०३०) में किए गए उल्लेख से यह स्पष्ट है कि उग्रभूति का समय १०वीं शती का अन्तिम काल है। उसी समय से ही कातन्त्र-व्याकरण के पठन-पाठन का प्रचार कश्मीर तथा भारतवर्ष के पश्चिमोत्तर प्रान्तों में था जिसे कि वर्तमान काबुल का क्षेत्र कहा जा सकता है,

---

१. गौरेला, वाचस्पति, संस्कृत साहित्य का इतिहास, पृ० ६५६।
२. कीथ, ए०बी०, संस्कृत सा० का इतिहास, पृ० ५११, हिंदी अनुवाद।
३. मीमांसक, युधिष्ठिर, सं० व्या० शास्त्र का इतिहास, भाग-१, पृ० ४११, तथा पं० भगवद्दत्त, सं० व्या० शास्त्र का इतिहास, पृ० २१७।

तथा उन विद्वानों की धारणाएँ निर्मूल हो जाती हैं जो कि कश्मीर में कातन्त्र-व्याकरण के प्रवेश का समय १२वीं शती मानते हैं।

५. उग्रभूति के समय में दुर्गवृत्ति व्याकरणशास्त्र के मुख्य ग्रन्थों में से थी। क्योंकि अल्बेरूनी ने "भारत" नामक ग्रन्थ में जहां पर व्याकरण शास्त्र के ग्रन्थों का उल्लेख किया है उनमें से दुर्गवृत्ति का भी उल्लेख है।

६. शिष्यालोकन्यास में ग्रन्थकार ने न्यास करते समय अनेक स्थलों पर अपरे तु, अन्ये तु, केचित् आदि पदों से अनेक लोगों के मतों को उद्धृत किया है जिस से यह पता चलता है कि १०वीं शदी से पहले भी कश्मीर एवम् आसपास के प्रदेशों में कातन्त्र-व्याकरण के अध्ययन-अध्यापन की परम्परा विद्यमान रही होगी।

७ वामन शिवराम आप्टे के संस्कृत-हिन्दी शब्दकोष में किए गए उल्लेख के अनुसार जगद्धर भट्ट का काल १४वीं शती है। इस तरह ये उग्रभूति के कई सौ वर्ष बाद के हैं।

८. शिष्यहितावृत्ति एवं दुर्गवृत्ति ये दोनों ही कातन्त्र-सूत्रों को आधार मानकर उन पर लिखी गई वृत्तियां हैं, परन्तु परस्पर सूत्रों के पाठों में कुछ भिन्नताएँ अवश्य हैं।

**(ख) न्यास शब्द का विवेचन—**

अनुत्सूत्रपदन्यासा सद्वृत्तिः सन्निबन्धना।
शब्दविद्येव नो भाति राजनीतिरपस्पशा॥

उपर्युक्त श्लोक में प्रयुक्त न्यास शब्द व्याकरण शास्त्र के प्रायः सभी इतिहासकारों की चर्चा का विषय रहा है। इस शब्द का तादात्म्य काशिका-वृत्ति पर जिनेन्द्र बुद्धि द्वारा लिखे गए न्यास के साथ मान कर अनेकों ग्रन्थों एवं ग्रन्थकारों के समय का निर्धारण करने में अनेक विद्वानों द्वारा इसे तर्क रूप में प्रस्तुत किया गया है। परन्तु इस सन्दर्भ में यह बात विचारणीय है कि न्यास शब्द संज्ञापरक न होकर शैलीपरक है। किसी भी व्याख्या ग्रन्थ के लिए अपनाई गई शैलियों में से न्यास भी एक शैली के रूप में मान कर व्याख्या के लिए इसका उपयोग किया जा सकता है। कस्यचिद्वस्तुनः अर्थ न्यस्यते स्थाप्यते दृढीक्रियते वा स न्यासः, अर्थात् किसी तथ्य की दृढ़तापूर्वक व्याख्या करने के लिए जिस शैली का आश्रय लिया जाता है वह न्यास नाम

की शैली है। व्याख्याप्रक्रिया के अतिरिक्त न्यास शब्द के और कई अर्थ होते हैं। जैसे—

१. व्या० म० भा० आदि ग्रन्थों में किसी अर्थ विशेष की स्थापना के लिए अथवा समर्थन के लिए न्यास शब्द का प्रयोग किया गया है। यथा—"एवं न्यासः क्रियते", "क्रियते एतन्न्यासः" आदि।

२. व्याकरणशास्त्र से इतर गीतादि ग्रन्थों में न्यास शब्द का अर्थ परित्याग भी है। यथा—"काम्यानां कर्मणां न्यासः।" आदि।

३. काव्य ग्रन्थों में न्यास शब्द का प्रयोग वस्तुविषयक स्थापना के लिए आया है। यथा—"तस्याः खुरन्यास" इत्यादि। (रघुवंशमहाकाव्यम्)

४. न्यास का अर्थ धरोहर भी होता है। यथा—"नहि तावत् गृहं न्यासस्य स्थानं, किं तर्हि, हृदयम्।" (मृच्छकटिक प्रथम अङ्क)

५. लोक में न्यास शब्द का प्रयोग अंग्रेजी के ट्रस्ट शब्द के लिए भी किया जाता है।

यदि गम्भीरता से विचार किया जाए तो व्याकरण शास्त्र में प्रयुक्त न्यास शब्द केवल एक किसी विशेष ग्रन्थ का ही द्योतक नहीं है अपितु इसके उपनाम से कई व्याख्या ग्रन्थ हैं जिन में से कुछ का नाम इस प्रकार है—काशिकान्यास, महान्यास, अनुन्यास, शब्दार्णवन्यास, शिष्यालोकन्यास, बालबोधिनी न्यास आदि। भण्डारकर प्राच्यविद्या शोधसंस्थान में उपलब्ध शिष्यहितान्यास के एक हस्तलेख के आदि पृष्ठ पर पार्श्वभाग में एक श्लोक का उल्लेख है जिसके द्वारा न्यास के पारिभाषिक अर्थ का स्पष्टीकरण हो जाता है।

लेशोपदेशनिर्देश - विभागज्ञापकेष्टयः।
निपातो गणसूत्रञ्चेत्यष्टाङ्गं न्यासलक्षणम्॥

लेश, उपदेश, निर्देश, विभाग, ज्ञापक, इष्टि, निपात और गणसूत्र—ये आठ न्यास के लक्षण कहे जाते हैं। लेशादि शब्दों का अर्थ निम्न रूप में प्रस्तुत किया जा रहा है तथा इसके प्रस्तुतीकरण के लिए "ए डिक्शनरी आफ संस्कृत ग्रामर"[1] की सहायता ली गई है।

**लेश—**

अकार से युक्त य् एवं व् का अस्पष्ट उच्चारण एवम् अपूर्ण उच्चारण

---

१. लेखक, शास्त्री, वासुदेव अभ्यंकर।

जिसे कि पाणिनि के अनुसार लघु उच्चारण कहते हैं। अर्थात् इन दोनों वर्णों का उच्चारण इस प्रकार किया जाता है कि इन दोनों वर्णों में अकार का सहयोग समाप्तप्राय: है।

**उपदेश —**

तत्तच्छास्त्रों के तत्तद् विषय के प्रामाणिक आचार्यों द्वारा किया गया आदि प्रवचन ही उपदेश कहलाता है। यथा—उपदेश[1] आद्योच्चारणम्।

**निर्देश —**

किसी भी विषय के बारे में किसी आचार्य द्वारा दिया गया साधिकार वक्तव्य ही निर्देश कहलाता है।

**विभाग —**

किसी सूत्र अथवा वाक्य को उसके सार्थक अवयवों में विभाजित करना ही विभाग कहलाता है।

**ज्ञापक —**

व्याकरण शास्त्र में सूत्र एवं परिभाषा के प्रयोजन सम्बन्धी विचार के समय जिन सूत्रों एवं परिभाषाओं के अन्तर्गत किसी पद के द्वारा प्रत्यक्ष रूप से नहीं अपितु अप्रत्यक्ष रूप से जिस वस्तु के अस्तित्व के बारे में सङ्केत मिलता है वह वस्तु ज्ञापक सिद्ध कहलाती है।

**इष्टि —**

सूत्रों के द्वारा असंगृहीत अर्थ को भी उपलक्षण द्वारा प्रकट किया जाना ही इष्टि का द्योतक है। अभीप्सितार्थ की सिद्धि के लिए ही ऐसा किया जाता है। इसके द्योतक "एवं वक्तव्यम्", "एवमिष्यते", "एवं व्याख्यातव्यम्" आदि वाक्य हैं।

**निपात —**

निपात शब्द यद्यपि यास्क द्वारा शब्द के भेद के रूप में स्वीकार किया गया है परन्तु व्याकरणशास्त्र में इसका अतिरिक्त अर्थ भी स्वीकार किया जाता है। जिसके द्वारा लक्षण द्वारा असाध्य प्रयोगों की तत्तदर्थ विशेष में साधुता स्वीकार कर ली जाती है। "उच्चावचेष्वर्थेषु निपातनं निपात:", "तत्तदर्थविशेषेषु नि:शेषेण पात्यन्त इति निपाता:"।

---

१. भट्टोजि दीक्षित, वै० सि० कौ० १।१७।१।

**गण सूत्र—**

जिस सूत्र के अन्तर्गत किसी गण का निर्देश किया रहता है तथा वह गण अपने में निहित बहुत से शब्दों का प्रतिनिधित्व करता है। इस तरह एक गण के अन्तर्गत प्रयोगसिद्धि की दृष्टि से निर्दिष्ट सीमित पदावली को गणपाठ कहते हैं। तथा उस गण वाची सूत्र का निर्देश करने वाले सूत्र को गणसूत्र कहते हैं। जैसे "सर्वादीनि सर्वनामानि"। इसके अन्तर्गत सर्वादिगण का उल्लेख है। यह सर्वादि शब्द व्याकरणशास्त्र में प्रयोग की दृष्टि से सर्व, विश्व, उभ, उभय, डतर, डतम आदि शब्दों का ग्राहक है। उपर्युक्त विवेचन के अनुसार इन आठों प्रकार की नियमविधाओं का उल्लेख जिस व्याख्या-प्रणाली में किया जाता हो उस व्याख्या-प्रणाली को न्यास कहा जाना उपयुक्त है।

**(ग) शिष्यालोकन्यास—**

जैसा कि पहले कहा जा चुका है शिष्यहिता पर लिखा गया न्यास ही शिष्यालोक न्यास है। इस न्यास ग्रन्थ में प्रकरण एवं पादस्थिति के बारे में विचार करना आवश्यक है। कातन्त्र-व्याकरण के मूलरूप में प्रसिद्ध दुर्गवृत्ति शिष्यहितावृत्ति एवं न्यास आदि, इन सभी में प्रकरण क्रम एक जैसा है। सर्वत्र क्रमशः सन्धि, नाम अथवा लिङ्ग, आख्यात एवं कृत् प्रकरणों की स्थिति है। यद्यपि कृत् प्रकरण शर्ववर्मा विरचित नहीं माना जाता तथा यह विचार शिष्यहितावृत्ति अथवा सम्भवतः उसके पहले से ही अपना मूर्त रूप ले चुका है। परन्तु कृत् प्रकरण कातन्त्र-व्याकरण के सभी संस्करणों के साथ संलग्न है।

यद्यपि प्रकरण-संख्या एवं अनुक्रम सर्वत्र समान हैं, परन्तु प्रत्येक प्रकरण में पादों की स्थिति एक जैसी नहीं है। कातन्त्र के दुर्गपाठ अथवा बंगपाठ में सन्धि प्रकरण में निपात पाद का उल्लेख नहीं है। इसमें कुल सूत्रों की संख्या केवल ४ है। इसी प्रकार नाम प्रकरण में स्त्री-प्रत्यय पाद का भी अभाव इस पाठ में विद्यमान है, जिसमें कि कुल सूत्र ६९ या ७० हैं। कश्मीर संस्करण के ग्रन्थों में ये दोनों पाद पठित हैं। इसी प्रकार नामप्रकरण के अन्तर्गत पठित तद्धित पाद की मौलिकता पर भी डा० वेल्वल्कर ने सन्देह व्यक्त किया है तथा इन में पठित सूत्रों का ढंग अन्य पादों के सूत्रों के पठित होने की परम्परा से भिन्न है। इस पाद में सूत्र वृत्तिक्रम में पठित हैं। इसी

प्रकार इसी प्रकरण में समास पाद भी वृत्तिक्रम से पठित है। उसके बारे में भी विचार किया जाना आवश्यक है।

इस प्रकार अध्ययन करने पर पता चलता है कि प्रकरण एवं पाद स्थिति के बारे में तीन प्रकार के वर्गीकरण उपलब्ध हैं—१. जोगराज[1] कृत, २. उग्रभूति कृत, ३. दुर्गकृत। इन तीनों का क्रमशः विवेचन प्रस्तुत किया जा रहा है।

**१. जोगराजकृत वर्गीकरण—**

**(क) सन्धि प्रकरण—**

१. संज्ञापाद, २. स्वरसन्धि (समान) पाद, ३. स्वरसन्धिनिषेध (ओदन्त) पाद, ४. व्यञ्जनसन्धि (वर्ग) पाद, ५. विसर्गसन्धि पाद, ६. निपात पाद।

**(ख) नामप्रकरण—**

१. स्वरान्त (लिङ्ग) पाद, २. व्यञ्जनान्त पाद, ३. सखिपाद, ४. युष्मत् पाद, ५. कारक पाद, ६. समास पाद, ७. तद्धितपाद, ८. स्त्रीप्रत्यय पाद।

**(ग) आख्यातप्रकरण—**

१. परस्मैपाद, २. प्रत्ययपाद, ३. द्विर्वचनपाद, ४. सम्प्रसारणपाद, ५. गुणपाद, ६. अनुषङ्गपाद, ७. इडागमपाद, ८. धुट्पाद।

**(घ) कृत्प्रकरण—**

१. सिद्धिपाद, २. धातुपाद, ३. कर्मणिपाद, ४. क्वसुन्पाद, ५. उणादिपाद, ६. धातुसम्बन्धपाद।

**२. उग्रभूति के अनुसार वर्गीकरण—**

**(क) सन्धिप्रकरण—**

१. सन्धिपाद प्रथम (संज्ञापाद), २. द्वितीय सन्धिपाद (समानपाद), ३. तृतीय सन्धिपाद (ओदन्तपाद), ४. चतुर्थ वर्गपाद, ५. पञ्चम सन्धिपाद, ६. निपातपाद षष्ठ।

**(ख) नामप्रकरण—**

१. प्रथम पाद (लिङ्गपाद), २. द्वितीय पाद (सखिपाद) ३. युष्मत् पाद तृतीय, ४. कारकपाद चतुर्थ, ५. समासपाद पञ्चम, ६. षष्ठ पाद (तद्धितपादः), ७. स्त्रीप्रत्ययपाद सप्तम।

---

१. देखिये सिस्टम आफ संस्कृत ग्रामर, पृष्ठ ७०।

(ग) आख्यातप्रकरण—

१. परस्मैपाद, २. द्वितीय पाद, ३. तृतीय पाद, ४. चतुर्थ पाद, ५. पञ्चम पाद, ६. अनुषङ्गपाद, ७. इडागमपाद सप्तम, ८. धुट्पाद-अष्टम।

(घ) कृत्प्रकरण—

१. सिद्धिपाद प्रथम, २. द्वितीय पाद, ३. तृतीय पाद, ४. चतुर्थ पाद, ५. पञ्चम पाद, ६. षष्ठ पाद।

३. दुर्गकृतवर्गीकरण—

(क) सन्धिप्रकरण—

१. प्रथम पाद, २. द्वितीय पाद, ३. तृतीय पाद, ४. चतुर्थ पाद, ५. पञ्चम पाद।

(ख) नामप्रकरण—

१. प्रथम पाद, २. द्वितीय पाद, ३. तृतीय पाद, ४. चतुर्थ पाद (कारकपाद), ५. पञ्चम पाद (समासपाद), ६. षष्ठ पाद (तद्धितपाद)।

(ग) आख्यातप्रकरण—

१. प्रथम पाद, २. द्वितीय पाद, ३. तृतीय पाद, ४. चतुर्थ पाद, ५. पञ्चम पाद, ६. षष्ठ पाद, ७. सप्तम पाद, ८. अष्टम पाद।

(घ) कृत्प्रकरण—

१. प्रथम पाद, २. द्वितीय पाद, ३. तृतीय पाद, ४. चतुर्थ पाद, ५. पञ्चम पाद, ६. षष्ठ पाद।

इन तीनों प्रकारों के वर्गीकरण प्रक्रिया में उपलब्ध भिन्नताओं के अतिरिक्त सूत्रों के क्रमों में भी भिन्नता है। कुछ सूत्र ऐसे हैं जो कि दुर्गवृत्ति में तो उल्लिखित हैं परन्तु उग्रभूति ने उनका उल्लेख नहीं किया है, तथा ऐसे सूत्रों के स्थान पर नये सूत्रों का समावेश किया है। शिष्यहिता ग्रन्थ की उपलब्धि के बाद ही ऐसे सूत्रों का चयन किया जा सकता है।

(घ) पाण्डुलिपि वर्णन—

शिष्यहितावृत्ति के शिष्यालोकन्यास की पाण्डुलिपियों का परिचय—

शिष्यहितान्यास की मुख्य रूप से दो ही प्रतियों के अवलोकन का सौविध्य प्राप्त हुआ है।

१. वाडलियन पुस्तकालय, आक्सफोर्ड लन्दन से प्राप्त उक्त ग्रन्थ की छाया प्रति ।

२. भण्डारकर प्राच्यविद्या शोध संस्थान, पूना में उपलब्ध प्रति ।

इन दोनों स्थानों के अतिरिक्त भी उक्त पाण्डुलिपि के विद्यमान होने की सम्भावना का पता लगाने के लिए कई संस्थाओं से पत्र-व्यवहार किया परन्तु उन सब के उत्तर नकारात्मक ही रहे ।

इनमें से वाडलियन पुस्तकालय से प्राप्त प्रति का नाम वा० रखा है, तथा भण्डारकर संस्थान में उपलब्ध प्रति का नाम भं० रखा है । ग्रन्थपाठालोचन करते समय इन प्रतियों के स्थान पर इन्हीं दो संक्षिप्त नामों का व्यवहार किया गया है ।

**वाडलियन प्रति—**

यह प्रति मुझे पत्र-व्यवहार की एक दीर्घ परम्परा के बाद सम्पूर्ण औपचारिकताओं के पूर्ण हो जाने के पश्चात् अप्रैल ७६ में प्राप्त हुई । सन् १८७५-७६ के मध्य वूलर के द्वारा किए जाने वाले सर्वेक्षण कार्य के समय यह प्रति कश्मीर से प्राप्त की गई । उस के बाद भारतवर्ष से जर्मनी ले जाई गई तथा वहां से कुछ समय पश्चात् वाडलियन पुस्तकालय, आक्सफोर्ड लन्दन को हस्तान्तरित कर दी गई । वर्तमान समय में इस हस्तलेख की मूल प्रति वहीं पर विद्यमान है ।

**ग्रन्थ स्थिति—**

इस ग्रन्थ के बारे में जो कुछ परिचय प्रस्तुत किया जाएगा उसका आधार इस ग्रन्थ की छाया-प्रति ही है । इस छाया प्रति के प्रारम्भ के दो तीन पत्रों में नागरी लिपि में कुछ श्लोक लिखे गए हैं । ये श्लोक सुवाच्य नहीं हैं । परन्तु ऐसा प्रतीत होता है कि ये श्लोक कातन्त्र-व्याकरण से ही सम्बन्ध रखते हैं । इसके नीचे छोटे अक्षरों में इन श्लोकों की व्याख्या दी गई है । इसके पश्चात् ग्रन्थ प्रारम्भ होता है ।

प्रथम डेढ़ पृष्ठों में मङ्गलाचरण के बारे में विस्तृत चर्चा की गई है । परंतु यह चर्चा मध्य में अपूर्ण ही छोड़ दी गई । इसके पश्चात् अग्रिम पृष्ठ से वही मङ्गलाचरण की वार्ता पुनः प्रारम्भ से होती है । इसके पश्चात् ग्रन्थ

के आदि सूत्र सिद्धो वर्णसमाम्नायः पर विस्तृत चर्चा है। इस तरह इसके आगे ग्रन्थ यथावत् प्रारम्भ हो जाता है। प्रारम्भ के मङ्गलाचरण वाले डेढ़ पृष्ठों को छोड़कर आगे के शेष पृष्ठों पर अंग्रेजी भाषा में क्रमाङ्कन किया गया है। यह दो पृष्ठों का एक एकक मान कर किया गया है। इस तरह के क्रमाङ्कन से युक्त पर्णों की संख्या १४५ है। इसी तरह दो लिखित पृष्ठों का एक एकक मानकर प्रति पर्ण के नीचे दक्षिण भाग में शारदा लिपि में क्रमाङ्कन किया गया है। ग्रन्थ अपूर्ण है तथा कृत्प्रकरण के अन्तिम पाद के प्रायः आधे से अधिक सूत्रों वाले पृष्ठ ग्रन्थ में उपलब्ध नहीं हैं। इस छायाप्रति में किये परिमाण के अनुसार ग्रन्थ के प्रत्येक पर्ण का आकार २६$\frac{1}{2}$ × १६$\frac{1}{2}$ सेंटीमीटर है। पूरा ग्रंथ एक लेखनप्रक्रिया में नहीं है। लिपि देखकर अनुमान होता है कि कई प्रतिलिपिकारों द्वारा यह ग्रन्थ लिखा गया। कुछ पृष्ठों पर प्रति पंक्ति अक्षरों की संख्या २६ से ४० के मध्य की है तथा कुछ पृष्ठों पर संख्या २६ से ३६ के मध्य की है। अवग्रह के स्थान पर किसी भी चिह्न का प्रयोग नहीं किया गया है। कहीं-कहीं पर विराम या अर्ध विराम का उल्लेख है। परन्तु ग्रन्थ का वास्तविक तथ्य ग्रहण करने के लिए इतना कार्य पर्याप्त नहीं है, तथा यह नहीं के बराबर है।

**लिप्यासन**

लिप्यासन से तात्पर्य ग्रन्थ लिखने के लिए प्रयोग में लायी आधार रूप सामग्री का विवेचन है। इस ग्रन्थ के छायाचित्र की ही उपलब्धि के कारण लिप्यासन के बारे में उचित प्रकाश डालना असम्भव है। अक्षरों को देखकर यह अवश्य कहा जा सकता है कि लिप्यासन अच्छी स्थिति में है, तथा कहीं फटा नहीं है। सूची ग्रन्थ में दिये गये सन्दर्भ के अनुसार लिप्यासन भूर्ज पत्र का बना है। कश्मीर तथा उसके आस पास भूर्ज पत्रों पर ग्रन्थ लिखे जाने की परम्परा बहुत प्राचीन है यह बात सम्भवतः ठीक प्रतीत होती है।

**लिपि**

सम्पूर्ण ग्रन्थ शारदालिपि में लिखा गया है। इस लिपि का प्रयोग प्राचीन काल में कश्मीर एवम् आस-पास के प्रान्तों में संस्कृतभाषा के लिए किया जाता रहा। यद्यपि आजकल इस लिपि में किसी भी तरह का लेखन कार्य नहीं होता है फिर भी कश्मीर के पण्डित आज भी जन्मकुण्डली आदि धार्मिक कृत्यों में इस लिपि का प्रयोग करते हैं। धार्मिक परम्परा के अनुसार लिपि

का सम्बन्ध शारदा अर्थात् विद्या की अधिष्ठात्री देवी सरस्वती से माना जाता है।

**प्रतिलिपि काल**

ग्रन्थ की प्रतिलिपि तथा प्रतिलिपिकार एवं ग्रन्थ प्रयोजन आदि का सूचक कोई भी तथ्य इस ग्रन्थ के द्वारा प्राप्त नहीं हो सका है। परवर्ती काल के किसी संरक्षक द्वारा अंग्रेजी भाषा में के ३० लिखा गया है। इस विषय में यह प्रसङ्ग विचारणीय है।

इस पाण्डुलिपि के प्रारम्भ के कतिपय पृष्ठों तक पार्श्व भाग में बहुत अधिक टिप्पणियों का उल्लेख है। यह अत्यन्त छोटे-छोटे शारदालिपि के अक्षरों में है। इसका पढ़ा जाना स्पष्ट रूप से सम्भव नहीं हो सका है। ऐसा प्रतीत होता है कि स्थान-स्थान पर उल्लिखित ये टिप्पणियाँ किसी पाठक द्वारा लिखी गयी हैं। इनमें कातन्त्र-व्याकरण से सम्बन्धित अन्य ग्रन्थों को भी प्रसङ्गतः उद्धृत किया गया है। इसी प्रति के आश्रय से ही मैंने सम्पूर्ण ग्रन्थ का देवनागरी लिपि में रूपान्तरण कार्य सम्पन्न किया है।

**भण्डारकर प्रति**

न्यू कैटालोगस् कैटालोग्रुम, भाग-२ पृ० २८३ पर किये गये उल्लेख से पता चलता है कि उग्रभूति रचित शिष्यहिता नामक ग्रन्थ की भण्डारकर प्राच्यविद्या शोध संस्थान पूना में पाण्डुलिपि विद्यमान है। अतः वहाँ जाकर देखने पर पता चला कि यह ग्रन्थ कागज के डिब्बे के अन्दर रखा हुआ है। वहाँ की हस्तलेखपञ्जिका के अनुसार इस ग्रन्थ का नवीन अनुक्रमाङ्क १० है, तथा प्राचीन ३२२ है डिब्बे के ऊपर अंग्रेजी भाषा में इसका परिचय इस प्रकार दिया गया है —

Name : Sisyahita with Nyasa on it called Sisyaloka.
Author : Ugrabhuti Bhatta.
Age : Sapt Sami 30
Extent : Fol. 311, Lines 24, Letters 40.

सन १८७५-७६ के संस्कृत ग्रन्थों के हस्तलेखों के संग्रह के लिए चलाये गये अभियान के समय प्राप्त ८२३ हस्तलेखों का परिचय देने वाले एक ग्रन्थ में इस हस्तलेख का परिचय निम्न प्रकार से दिया गया है।

Ms. 322, Sisyahitanyasa, of 1875-76, Ugrabhuti.
Fol. 288, Lines-21, Age-0, Material-Bhurjpatra
It was brought from Kasmir, Incomplete, Script-Sharda.

यह हस्तलेख अत्यन्त जीर्ण-शीर्ण अवस्था में है। भूर्जपत्र जगह-जगह पर फट कर बिखर गया है ग्रन्थ के ऊपर किये गये उल्लेख के अनुसार इसमें कुल ३११ पर्ण हैं परन्तु पर्णशः गणना करने पर पता चला कि इसमें केवल ३०५ पर्ण ही अवशिष्ट हैं। सम्भवतः इन पर्णों पर डाले गये अनुक्रमाङ्क वाला भाग नष्ट हो चुका है। अधिकांश पर्ण फट जाने के कारण आपस में दूसरे कागज द्वारा जोड़े गये हैं, यह कागज पारदर्शी नहीं है, इससे चिपका हुआ अंश पढ़ा नहीं जा सकता है। कहीं-कहीं तो फटे हुए दो पर्णों को आपस में जोड़ने में इतनी असावधानी हुई है कि सूत्र क्रम ही नष्ट हो गया है। इससे मूलपाठ की वास्तविकता का पता लगाना असम्भव हो गया है। वृत्ति ग्रन्थ के प्रारम्भ में १२ पर्ण नष्ट हो गये हैं। कहीं-कहीं पर पर्णों का संयोजन करते समय सूत्रक्रम नष्ट हो गया है। ऐसी स्थिति में हस्तलेख का ठीक ढंग से पढ़ना असम्भव हो जाता है। ग्रन्थ का अन्तिम पृष्ठ जीर्ण हो गया है तथा मध्य में दो-दो, तीन-तीन पंक्तियाँ नष्ट हो गयी हैं। केवल ४।६।७० सूत्र तक का न्यास सुपाठ्य है, यद्यपि ग्रन्थ अपूर्ण तो है ही, फिर भी उक्त सूत्र के आगे का उपलब्ध अंश भी सुवाच्य नहीं है। अन्तिम पाद में कुल सूत्रों की संख्या ११६ है। इस प्रकार ४६ सूत्रों का उक्त ग्रन्थ का न्यास उपलब्ध नहीं है।

**लिपि एवं प्रतिलिपिकार**

इस ग्रन्थ की भी लिपि शारदा लिपि है। इस के प्रतिलिपिकार के बारे में जानकारी देने वाला कोई स्रोत उपलब्ध नहीं हुआ है।

**लिप्यासन—**

इस ग्रन्थ को लिखने के लिए भूर्जपत्र का कागज के रूप में प्रयोग किया गया है। सभी पर्ण अलग-अलग हैं तथा दोनों तरफ लिखे गये हैं। कहीं-कहीं पर बीच में खुर्दरापन है।

**प्रतिलिपिकाल—**

शिष्यहिता वृत्ति की पुष्पिका में सम्भवतः ग्रन्थ के पारिश्रमिक अथवा विक्रय मूल्य के ग्रहण करने अथवा प्रदान करने के रूप में ब्रह्मा, विष्णु,

महेश इन देवों का साक्षी के रूप में उल्लेख किया गया है। इस अंश की लिपि बाद में किसी अन्य द्वारा लिखी गयी प्रतीत होती है जो कि ग्रन्थ के प्रतिलिपि काल की नहीं प्रतीत होती है। यह अंश सुवाच्य नहीं है। यहां पर भी ३० संख्या का उल्लेख है। सम्भवतः यह कश्मीरी सम्वत् को प्रकट करने के लिए प्रयुक्त हो; इस विषय में शेष बातें विचारणीय हैं।

**दोनों प्रतियों में मूलभूत अन्तर—**

वाडलियन पुस्तकालय एवं भण्डारकर संस्थान की प्रतियों के स्वरूप एवं विषय वस्तु की मात्रा में अन्तर है। ऐसे तथ्यों का उल्लेख यहां किया जा रहा है जो परस्पर एक दूसरे से विद्यमान अन्तर का उद्‌घाटन करेंगे।

**वाडलियन प्रति—**

१. इस प्रति में वृत्तिग्रन्थ पर लिखा गया न्यास ४।५।४ (स्वरवृद्गमिग्रहामल्) तक ही उपलब्ध है।

२. मंगलाचरण के बारे में विशेष चर्चा की गयी है तथा इस ग्रन्थ में मंगलाचरण की दो प्रतियाँ हैं। जिनमें विषय वस्तु की दृष्टि से अन्तर नहीं है परन्तु न्यूनाधिक्य भाव है।

३. इस ग्रन्थ में न्यून पाठ अथवा छूटे हुए पाठों की सम्भावना अपेक्षाकृत कम है।

४. प्रत्येक पाद के अन्त में उल्लेख की जानेवाली पुष्पिका का स्वरूप संक्षिप्त है। पाद के नाम निर्देश की अपेक्षा केवल गणनात्मक निर्देश कर दिया गया है। यथा सन्धिप्रकरणे प्रथमः पादः आदि।

५. लिप्यासन अच्छी स्थिति में है।

६. ग्रन्थ के प्रारम्भ के कुछ पृष्ठों के चारों तरफ अवशिष्ट स्थान पर टिप्पणियों का उल्लेख अपेक्षाकृत अधिक है।

७. प्रत्येक पर्ण के नीचे दाहिनी ओर शारदा लिपि में पृष्ठांकन किया गया है।

८. लिपि सम्बन्धी अशुद्धियाँ अपेक्षाकृत न्यूनमात्रा में हैं।

९. ग्रन्थ के कृत् प्रकरण के पांचवें पाद में सूत्रों का क्रम यथावत् नहीं है।

१०. अवग्रहचिह्न (ऽ) के प्रयोग पर ध्यान नहीं दिया गया है। पदान्त में न तथा ण की अशुद्धियों पर ध्यान नहीं दिया गया है। इसी तरह लिपि की असावधानी से उत्पन्न पठन सम्बन्धी परिस्थितियों की ओर विचार न

करके ग्रन्थ लिखा गया है।

**भण्डारकर प्रति—**

१. इस प्रति में वा० प्रति की अपेक्षा कृत्प्रकरण के अन्तिम पाद के ४।६।७२ सूत्र तक की वृत्ति पर न्यास उपलब्ध है। परन्तु बीच-बीच में कुछ सूत्रों की वृत्ति के न्यास का उल्लेख नहीं है। ऐसी स्थिति केवल ६ठे पाद में ही है।

२. मंगलाचरण के बारे में अपेक्षाकृत न्यून मात्रा में ही विवरण प्रस्तुत किया गया है।

३. वा० प्रति की अपेक्षा इस ग्रन्थ में छूटे हुए तथा अशुद्ध पाठों की अधिकता है।

४. पाद के अन्त में पुष्पिका का विशेष रूप से उल्लेख है। उदाहरणार्थ शिष्यहितान्यासे, शिष्यालोकाभिधाने, सन्धिप्रकरणे, सखिपादः द्वितीयः आदि।

५. लिप्यासन का आकार छोटा है। जगह-जगह पर फट गया है। इसमें वा० प्रति की अपेक्षा प्रत्येक पृष्ठ में पंक्तियों एवम् अक्षरों की संख्या न्यून-मात्रा में है।

६ पार्श्वभाग में या अधोभाग में उल्लेख की जाने वाली टिप्पणी अपेक्षा-कृत कहीं अधिक न्यूनमात्रा में है।

७. इसके साथ संलग्न वृत्तिग्रन्थ में पृष्ठांकन नियमतः हैं परन्तु इस न्यास प्रति में पृष्ठांकन नहीं किये गये हैं।

८. लिखावट सम्बन्धी अशुद्धियां अपेक्षाकृत अधिक हैं।

९. इस प्रति में सूत्रसम्बन्धी क्रम-भ्रष्टता तो नहीं है परन्तु पृष्ठों का क्रम बिखरा हुआ है।

१०. अवग्रह चिह्नों के बारे में अपेक्षाकृत थोड़ा ध्यान दिया गया है, तथा न और ण के प्रयोग के बारे में प्रतिलिपिकार ने यहां भी असावधानी दिखलाई है। इसी प्रकार स एवं म अक्षरों की लिखावट यहां पर भी एक जैसी प्रतीत होती है।

भण्डारकर प्रति एवं वाडलियन प्रति के मध्य विशेष अन्तर यही है कि भण्डारकर प्रति में अधिक सूत्रों तक न्यास उपलब्ध है।

॥ ओ३म् नमः सरस्वत्यै ॥

# कातन्त्रव्याकरणम्

## शिष्यहितान्यासः

### अथ शिष्यहितायां वृत्तौ शिष्यालोकन्यासः

## सन्धिप्रकरणम्

### प्रथमः पादः

ओ३म्[1] नमः सरस्वत्यै । सरस्वतीरूपाय गुरवे नमः । श्रीरस्तु ।

श्रीकण्ठाय[2] महामोहध्वान्तविध्वंसभानवे ।
भुवनारम्भसंहारकारणाय नमो नमः ॥

श्रीकण्ठाय[3] जगज्जन्मस्थितिध्वंसैकहेतवे नमः, संसारगम्भीरमकराकरसेतवे ।

वृत्तौ[4] शिष्यहितायां न्यासारम्भेऽस्ति सफलता यस्मात् ।
सन्त्यपरेऽपि मृदुमतयः येषामेषास्ति यत्नगम्यैव ॥
न्यायलवोऽपि च न तथा वृत्तावस्यां ममास्ति तर्तुञ्च ।
तेनाऽप्यभिधातुमिदं चापलमधुना विरच्यतेऽस्माभिः ॥

अभिमतदेवताप्रणामपूर्विकाप्रवृत्तिरिति सतामाचारमनुपालयन् वृत्तिकृत् नमस्करोति । श्रीकण्ठायेति । अस्यायमर्थः । श्रीकण्ठाय नमो नमः इत्येको नमश्शब्दो वाक्कायमनसां प्रह्वतां प्रतिपादयति । द्वितीयस्य नमश्शब्दस्य प्रयोगो भक्त्यतिशयद्योतनार्थः । तथा च गोविन्दाय नमो नमो नम इति स्पष्टाक्षरा भारतीत्यादौ भक्तिप्रकर्षात्तृतीयस्यापि नमश्शब्दस्य प्रयोगो दृश्यते किं भूताय श्रीकण्ठाय, महामोहध्वान्तविध्वंसभानवे । अविद्यालक्षणो यो महान् मोहोऽज्ञानं तदेव तत्त्वालोकं प्रतिपत्त्यर्थिभूतत्वाद् ध्वान्तं तमः तस्य यो विध्वंसः विनाशः, तत्र भानुरिव यो भानुः तस्मै महामोहविध्वंसभानवे । उदये हि यथा सहस्रकिरणस्य तिमिरमपसरति तद्वत्परमेश्वरप्रवणचेतसामखिलमिदमनात्मन्यात्मग्रहणलक्षणमज्ञानं प्रतीयत इत्येतदस्य भगवतः श्रीकण्ठस्य भानुना साध-

---

१. इदं मङ्गलाचरणं प्रतिलिपिकारकृतं प्रतिभाति ।

२. इदन्तु वृत्तिकारकृतं प्रतिभाति ।

३. इदञ्च न्यासकारकृतं प्रतिभाति ।

४. न्यासारम्भे प्रयोजनद्वयमार्याद्वयेनाह (पार्श्व टि० वा०)

र्य्यम् । अन्यच्च किं भूताय ? भुवनारम्भसंहारकारणाय । त्रिसंख्यावच्छिन्नस्य भुवनस्य यौ आरम्भसंहारौ उत्पत्तिप्रलयौ तयोः कारणाय निमित्ताय । जगद्विषयकयो उत्पत्तिप्रलययोरीश्वराय तु वृत्तित्वात् । तदुक्तं मनुना (१।५२) ।

"यदा स देवो जार्गति तदेदं चेष्टते जगत् । यदा स्वपिति शान्तात्मा तदा सर्वं प्रलीयते" इति । किं पुनरत्र नमस्कारकरणस्य प्रयोजनम् ? विघ्नोपशमः[1] फलं नमस्कारकरणस्य । कृते हि नमस्कारे महापुरुषसङ्कीर्तनाद्धर्मावाप्तौ सत्यधर्मोद्भूतानामघार्थकादीनामुपशमो जायत इति क्रमेण शास्त्रनिष्पत्तिः भविष्यतीति विघ्नोपशमः फलं नमस्कारकरणस्य । कादम्बर्यादौ कृतेऽपि नमस्कारे कथं विघ्नोपशमः न सञ्जात इति चेत्, तन्न, कीर्तिलक्षण हि फलमभिसन्धाय नमस्कारकरणप्रवृत्तस्य कवेरस्त्येव तत्फलसम्बन्धे विघ्नोपशमः । यत्रास्यासति नमस्कारे विघ्नोपशमः दृष्टः तत्रापि श्रीशब्दादिमङ्गलाभिधायिनः शब्दस्य प्रयोगो निमित्तम् । यथा—"श्रियः कुरूणाम्" इत्यादाविति सर्वमनवद्यम् । सामन्तस्य महीपतेरित्यादि स्पष्टमेव[2] ।

अथ किमर्थमाचार्येणाद्यं सूत्रं प्रणीतम्, तथाहि नहि तावदिदं दशदाडिमादिवदनर्थकम् । भगवतः कार्तिकेयाल्लब्धवरप्रसादेन परहितप्रपन्नेन चेतसा सूत्रकारेण प्रणीतत्वम् । नाप्यधिकारार्थम् । अधिकारार्थे ह्यस्मिन् वर्णसमाम्नायः प्रसिद्धः उत्तरत्राधिक्रियत इत्ययमस्य सूत्रार्थः स्यात् । यदि चायमाचार्यस्यार्थो व्याख्यातुमिहाभिप्रेतस्स्यात्, वर्णसमाम्नाय इत्येतावतैव सूत्रविन्यासेनार्थस्यावगतत्वात् सिद्धग्रहणमधिकारार्थत्वेनानुपयुज्यमानत्वादपार्थकं स्यात् ।

मङ्गलादीनि च शास्त्राणि प्रथन्त इत्यतो मङ्गलार्थं शास्त्रादौ सिद्धग्रहणं कृतम् । अतस्तन्नापार्थकमिति चेत् भवेदेतदेवं यदि सिद्धमिति नपुंसकेन निर्देशः स्यात् । नह्यस्य सिद्धशब्दस्य मङ्गलं प्रतिपादयतो वर्णसमाम्नायो विशेष्यः, येन विशेषणत्वाद्विशेष्यगतं पुंस्त्वमसौ गृह्णीयात् ।

अथोच्यते, कथं न विशेष्यः यावता द्विविधः समाम्नायो अस्ति वर्णानाम् । एकः शास्त्रीयः, अन्यस्तु लौकिकः । तत्राद्यस्य अ इ उ ण् इत्यादिसन्निवेशविशिष्टस्येह ग्रहणं मा भूत्, आविद्वदङ्गनागोपालबालपर्यन्तप्रसिद्धस्येतरस्य ग्रहणं यथा स्यादिति सिद्धशब्देनावश्यं वर्णसमाम्नायो विशेष्यः । यथोक्तमपरैः वृत्तिकृद्भिः—न[3] पुनरन्यथोपदेष्टव्य इति । एवं च विशेषधर्मापत्त्या विशेषण-

---

१. प्रयोजनम् (मूलपाठः)

२. स्पष्ट एषः (सम्भावितः पाठः)

३. यथा पाणिनिनोपदिष्टमित्यर्थः (पार्श्व टि० बा०) पूर्वपक्षयति

सूतस्य सिद्धशब्दस्य पुंस्त्वेन निर्देशः। तस्य तु पूर्वमुच्चारणान्मङ्गलार्थप्रतिपादनेऽपि न काचित् क्षतिः। अधिकारपक्षे सिद्धग्रहणमनवश्यमेवेति, तन्न, यस्माल्लौकिकस्यैव वर्णसमाम्नायस्य ग्रहणं भविष्यति न शास्त्रीयस्य। कुतः, ते वर्गा पञ्च पञ्चश इत्यादेर्व्यवहारात्। नहि शास्त्रीयस्य वर्णसमाम्नायस्य परिग्रहे सति कादीनां कपय्, शषसर् हल् इत्यनेन सन्निवेशेन व्यवस्थितानां कादीनां व्यञ्जनानीत्यनेन व्यञ्जनसंज्ञायां सत्यामेष व्यवहारो घटते। अनन्तस्थानुनासिकमिति चायं निषेधारम्भो विफलः स्यात्। नहि शास्त्रान्तरे प्रसिद्धकादीनामवाप्तव्यञ्जनव्यपदेशानां मध्यस्था अनुनासिकवत् पठ्यन्ते येन हि तेषां व्यञ्जनत्वाद् धुट्संज्ञायाः प्राप्तौ सत्यां निषेधारम्भः दिफलः स्यात्। तस्मान्न शास्त्रीयस्य वर्णसमाम्नायस्य परिग्रहो भविष्यतीति न विशेष्यः सिद्धशब्दस्य वर्णसमाम्नायः। ततस्सावद्यमेवाधिकारपक्षे सिद्धग्रहणमिति तदुपादानान्नेदमधिकारार्थम्, नापि परिभाषार्थम्। परिभाषा ह्यनियमे नियमः उच्यते, यथा प्रत्ययः पर इति। न चाप्रसिद्धो वर्णसमाम्नायो यत्परिहारेण प्रसिद्धवर्णसमाम्नायपरिभाषणफला परिभाषेयं स्यात्। पक्षान्तराणि तु मनीषिणां मनांसि नावर्जयन्ति, इति किमिह तैः वृथा ग्रन्थगौरवकारिभिरुपन्यस्तैः। तत्कमर्थमाकलय्य सूत्रमिदं प्रणीतवानित्याह–शब्दानुशासनम् इत्यादि। अनुपूर्वाच्छासेरनुशासनमनुशिष्टिरिति व्युत्पादनमिति भावेऽर्थे युट् चेति युट्प्रत्ययः। शब्दानामनुशासनम् शब्दानुशासनम्। कर्तृकर्मणोः कृतीति कर्मणि षष्ठीं विधाय तत्पुरुषः। अय चात्रार्थः। शास्त्रमिदमुपायेन लघुना शब्दानामनुशासनार्थमारब्धम्। तच्च तथा[1] तेषामनुशासनं संज्ञाभिर्विना न शक्यते कर्तुम्। स्वरान्तानां सनीत्यादिषु लक्षणवाक्येषु स्वरूपेण कार्यभाजां वर्णानामुपादाने सति शास्त्रस्य गौरवप्रसङ्गात्। तस्माच्छब्दानुशासनं विदधता स्वरादिसंज्ञा[2] वश्यं पूर्वं प्रणेयाः, ताश्च तावत् प्रणेतुं न शक्यन्ते यावद्वर्णसमाम्नायस्य प्रथममुपदेशो न कृतः। नहि तदुपदेशमन्तरेण निर्विषयास्ताः शक्यन्तेऽवगन्तुं संज्ञ्यवगमपूर्वकत्वात् संज्ञावगमस्य।[3] (साधुत्वान्वाख्यानार्थं संज्ञासंज्ञिसम्बन्धावधारणार्थमित्यादीनि)। तस्मात् वक्ष्यमाण-प्रकरणत्रयेण शब्दानामनुशासने विधातव्ये वर्णसमाम्नायस्य स्वरादिसंज्ञाविषयसमर्पकत्वेन यः पूर्वमुपदेशः कर्तव्यः स कथं न कृत[4] इत्यपरेषां वचनमाशङ्क्य सूत्रमिदं

१. न्यूनपाठः (वा०)

२. संज्ञा अवश्यम् (वा०)

३. न्यूनपाठः (वा०)

४. इत्याशङ्क्य सूत्रमिदमाचार्यः प्रणीतवान् (वा०)

शङ्कामात्र-निवारणार्थमाद्यमाचार्यः प्रणीतवान्।

**सिद्धो वर्णसमाम्नायः १।१।१**

षिधु संराद्धौ सिध्यतिस्म गत्यर्थाकर्मकेत्यादिना सिध्यतेरकर्मकत्वात्कर्तरि क्तः। अत्र राध्रिरूधीत्यनेन वेडाभावोऽस्तु, 'नडीश्वीदनुबन्ध' इत्यनेन वेट्त्वादिति विचारणायां परत्वात् वेण्निबन्धनः एवेडभावो युक्त इति केचित्। अन्ये तु प्रतिपदविधानाद्राधिरूधीत्यनेनैवासावुचित इति मन्यन्ते। परस्मादपि हि वेण्निबन्धनाप्रतिषेधविधेः प्रातिपद्येन[1] साक्षाद्रूपतया सिध्यतिमुच्चार्य विधीयमानस्य प्रतिषेधस्य बलीयस्त्वात्। तदुक्तमभियुक्तैः—

परं विदुः पूर्वपरोपपत्तौ परस्य नित्यस्य च नित्य एव।
नित्यान्तरङ्गोपगमेऽन्तरङ्गस्तथाविधिः प्रातिपदो बलीयान्॥

इति प्रातिपदस्साक्षाद्विहितः। यद्यपि च फले नास्ति विशेषः। तथापि न्यायगतनिरूपणयैतदुक्तम्। सतीडभावे घढधभेभ्य इति धत्वम्, धुटां तृतीयश्चतुर्थ इति धस्य दः। तस्मिन् कृते डात्पूर्वस्य च द इति निष्ठातकारस्याभावात्। न च स्थानिवद्भावोऽस्ति तकारवर्णाश्रयेण नत्वलक्षणविधौ कर्तव्ये अवर्ण-विधाविति प्रतिषेधात्। अस्य चास्तित्वे सावौ सिलोपश्चेति लिङ्गम् सिलोपवचनम्। अन्यथा ह्यदसः सकारस्यौत्वे कृते सति स्थानिवद्भावादेव व्यञ्जनाच्चेति सिलोपः सिद्ध इति सि-लोपश्चेति न कुर्यात्। वर्ण वर्णने चुरादित्वादिन् वर्णयन्ति कथयन्ति तांस्तानर्थविशेषानिति। पचादित्वादच्, कारितलोपः। म्ना अभ्यासे समाङ्पूर्वः समाम्नानमिति। म्नातेः स्वरान्तत्वात् स्वृवृदृगमीत्यणि प्राप्ते तदपवादः। इजाभ्याञ्चेति भावे घञि, आयिरादेशः। वर्णानां समाम्नायः वर्णसमाम्नाय इत्यत्र वर्णेभ्यः समाम्नायस्य व्यतिरिक्तत्वादसति वास्तवे भेदेऽपि भेदव्यवहारमवस्थाभेदाश्रयमाश्रित्य व्यतिरेकनिबन्धनां षष्ठीं विधाय समासः क्रियते। ये वर्णाः लिख्यमान-पठ्यमानादि[2]रूपेणानेकावस्थाभेदेन प्रयुक्ताः दृष्टाः तेषामयं समाम्नायः लक्षणोऽवस्थाविशेषः क्रमपाठादभेदेन बुद्धाववभासत एव। एकस्यैव वस्तुनस्तदेवेदमिति प्रत्यभिज्ञाना[3]देकत्वमत्यजतोऽप्यवस्थाभेदान्नानारूपता प्रतिभासो लोके दृश्यते। यथा पद्द भवान् पटुरासीत्, पटुतरश्चैषम अन्य एवासि संवृत्त इति। बहुवचनान्तश्चायं

---

१. प्रतिपदेन (वा०)
२. पठमान (वा०)
३. प्रतिभिज्ञानात् (वा०)

वर्णशब्दः समस्यते नत्वेकवचनान्तश्चायं वर्णशब्दः, एकस्य वर्णस्य समाम्नायासम्भवात्[1]। समाम्नायो हि क्रमपाठः। स च बहूनामेव सम्भवति। नत्वेकस्य। वर्णशब्दो लोके बहुष्वर्थेषु दृष्टप्रयोग इति विशिनष्टि वर्णानामकारादीनामिति। शब्दानामनुशासनं प्रत्यकारादीनामेव वर्णानामुपयोगादिति भावः। तदयं सूत्रार्थः। अकारादीनां वर्णानां यः समाम्नायः सम्यग्ग्रस्तादिदोषरहितानां क्रमेण परिपाट्या पाठः सः लोके प्रसिद्ध इत्यतो हेतोः किं तेनोपदिष्टेन शास्त्रादावभिहितेन। एतदुक्तं भवति, वर्णसमाम्नायस्वरूपं तावल्लोकादधिगतमेव भवद्भिरिति प्रत्येकमकारादीनां पाठे नास्त्येव प्रयोजनं किञ्चित्। तद्विषयस्तु स्वरादिसंज्ञा समाकर्ण्यन्ताम्।

**तत्र चतुर्दशादौ स्वराः। १।१।२**

तत्र। तद् सप्तम्येकवचनं ङि, तस्मिंस्तत्र, त्र सप्तम्या इति त्र-प्रत्ययः। तत्स्था लोप्या विभक्तय इत्यत्र तत्र इति कर्तव्ये स्थाग्रहणादसमासार्थेऽपि वाक्ये विभक्तिलोपः। चत्वारः दशन् शब्दावुणादिप्रत्ययान्तौ। एवं प्रकाराच्च ग्रन्थगौरवभयादिह तथा न व्युत्पाद्यते। डुदाञ् दाने, आङ्पूर्व आदीयते प्रथममुपलभ्यत इत्युपसर्गे दः किः, आलोपो सार्वधातुक इत्यालोपः। स्वृ शब्दोपतापयोः, स्वर्यन्ते शब्द्यन्ते व्यञ्जनान्येभिरिति स्वराः, पुंसि संज्ञायां घः, गुणः संज्ञिनार्थेन स्वरूपेण वा स्वर-शब्दस्यार्थवत्वात् संज्ञिगते बहुत्वे बहुवचनम्। एवं समाना इत्यादावपि बोद्धव्यम्। तत्रेति लुप्तप्रथमैकवचनमव्ययमिति अलिङ्गसंख्यमव्ययमिति त्रान्तस्याव्ययत्वादव्ययाच्चेत्यनेनैव लुप्तं प्रथमैकवचनं यस्मात् तत्तथोक्तम्। ननु तत्रशब्दाद्विभक्त्यन्तात्कथं विभक्त्युत्पत्तिः? कथं च न स्यात्, विभक्तिवर्जमिति लिङ्गसंज्ञायाः प्रतिषेधात्। लिङ्गाच्च विभक्त्युत्पत्तेः। अस्त्येतत्, सर्वनामकार्ये एव तु तसादीनां विभक्तित्वं न लिङ्गकार्यम् इति विभक्तिसंज्ञासूत्र एव वृत्तिकृद् वक्ष्यति। विभक्त्युत्पत्तिश्च लिङ्गकार्यं न सर्वनामकार्यमित्यविरुद्धाविभक्तेरुत्पत्तिः। एवमपि प्रथमैकवचनैकत्वेऽर्थे स्मर्यमाणं कथमेकत्वशून्यात् तत्र शब्दादव्ययात् स्यात्। अव्ययाच्चेति लुग्विधानारम्भात् भविष्यति। ननु तत्र शब्दस्याधिकरणशक्तिप्रधानत्वादधिकरणेऽर्थे उत्पन्नायाः सप्तम्या एव लुङ्न्याय्यः। न प्रथमायाः, नैतत्। तत्र शब्दो ह्यधिकरणार्थो अन्त शब्द इव लिङ्गार्थीभूतः तस्य लिङ्गार्थीभूतत्वाल्लिङ्गार्थमात्राभिधाने प्रथमयैव भाव्यमिति तस्य एव लुङ् न्याय्यः। चतुर्दशेति द्वन्द्वः वृत्तावुक्तः। चतुर्भिरधिकाश्च ते दश चतुर्दशेति। तुल्याधिकरणलक्षणमप्यपरे

---

१. समाम्नायाभावात् (भं०)

समासमाहुः। अधिकशब्दस्य तु लोप्या इत्यर्हप्रत्ययनिर्देशाल्लोप्यः। यथा घृतपूर्णो घटः घृतघटः इति पूर्णशब्दस्य। चत्वारित्यस्य चतुरो वा शब्दस्येति उत्वम्, अन्ये तु परत्वाद् व्यञ्जनान्तस्य यत्सुभोरित्यनेन उत्वमाहुः। चतुर्दश च इति स्थिते संज्ञासंज्ञिनोरयं देवदत्त इतिवदभेदोपचाराद् भेदनिबन्धनायाः सम्बन्धषष्ठ्या अप्रवृत्तौ सत्यां प्रथमाबहुवचनम्, जस्, तस्य क्तेश्च जश्शसोर्लुक् इति लुक्। शास्त्रे अन्यत्र व्यवहारफलत्वात् संज्ञानाम्, स्वरसंज्ञायाः कस्मिन्प्रदेशवाक्ये व्यवहार इति मन्यमानः पृच्छति–स्वरसंज्ञायाः क्व प्रयोजनमिति ? इतरवाक्यप्रदेशवाक्यमाह। रोरे लोपमित्यादि। एवं सर्वत्र योज्यम्। अग्नी रक्षतीति।

घोषवत्स्वर पर इति रत्वे कृते रोरे लोपमित्यादिना रेफलोपो दीर्घश्च। नन्वानन्तर्यादेवात्रानुवर्तिष्यते वर्णसमाम्नायः तत्किं तत्परामर्शार्थेन तत्र ग्रहणेनेत्याह–वर्णसमाम्नायेत्यादिना। अस्मिन्सूत्रे वर्णसमाम्नायस्यानुवृत्त्यर्थं तत्र ग्रहणं कृतम्। किं तर्ह्युत्तरत्र वर्णसमाम्नायोऽनुवर्ततामित्यधिकारप्रवृत्त्यर्थमिह तत्र ग्रहणं क्रियते। ननु वक्ष्यमाणमपि संज्ञाविषयं प्रकरणं तत्तत्सूत्रार्थपर्यालोचनवशेन वर्णसमाम्नायस्यैव विज्ञास्यते तथाहि दशसंख्यावच्छेदकस्य सन्निविष्टानामनन्तरः वर्णसमाम्नायविषयः बुद्धि-उपारूढानां वर्णानामेव सम्भवति। तेषां द्वौ द्वावित्यादि। काऽपि त्रिसूत्री समानवर्णविषया नामि संज्ञापि स्वराणाम्। तेऽपि वर्णा एव। एकारादयोऽप्यव्यभिचरिताः वर्णत्वात्। तस्मादुत्तरत्रापि वर्णसमाम्नायानुवृत्तिरप्रयोजनैव। सत्यम्। अस्त्येतत्, किन्तु नेहोत्तरशब्देन समानसंज्ञादिकं प्रकरणं वृत्तिकृतोऽभिप्रेतम्, किं तर्हि, वक्ष्यमाणवाक्यानि। येषु वर्णसमाम्नायस्यानुवृत्तिः प्रकरणान्तरव्यवहिता सती न सम्भाव्यते। तान्युत्तरशब्देन विवक्षितानि। अतस्तेषूत्तरेषु लक्षणवाक्येषु वर्णानामनुवृत्तिर्यथा स्यादिति तत्र ग्रहणं क्रियते। तेनोपधासंज्ञाविधावन्त्याद्वर्णादेव पूर्वो वर्ण एवोपधासंज्ञः। तथा च शिष्ट इत्यादौ शासेर्नान्त्यादामित्यस्माद्वर्णसमुदायात्पूर्वं ष-मात्रमुपधासंज्ञम्, नाप्यन्त्याद्वर्णात्पूर्वः शा इत्ययं शब्दः, किं तर्हि वर्ण एव अकारः एवञ्च तस्यैवेत्वप्रवृत्तिः शासु अनुशिष्टाविति ज्ञापकं तु क्तिप्रत्ययविषयमेव स्यात्। तथौकारः पूर्वमित्यत्रापि अग्निसंज्ञकाल्लिङ्गात् पर औकारः पूर्वं वर्णम् एवापद्यते, नत्वग्निसंज्ञकं लिङ्गम्। उत्वम्मादित्यत्रापि मात् परस्य वर्णस्यैवोत्वमित्येवमन्यत्रापि वर्णानामनुवृत्तये तत्र ग्रहणम्।

अथ लृ-वर्णस्य स्वरसंज्ञायाः किं प्रयोजनम् ? साध्व्लृकारमधीते साध्व्लृकारमाह इत्यादौ स्वरनिबन्धनत्वादेव कार्यप्रवृत्तिः। ननु च स्वर इत्येवं

तत्कार्यं सूत्रकृता न विधीयते, यद्यपि न विधीयते तथापि सामर्थ्यात्स्वर एव विज्ञास्यते । एतच्च यत्वविधावेव वृत्तिकृद् वक्ष्यति कौ पुनरेतावभिहितौ, उदाहरणद्वये लृकारलृकारौ उच्येते । गम्लृ-प्रभृतीनां यः लृकारः तस्यानुकरणः ह्रस्वलृकारः । ऋ गतावित्यादिधातुः तस्यापि ऋकारस्य शक्तिवैकल्यात् केनचित् लृ इत्येवं प्रयुक्तस्यानुकरणम्लृकारः । ननु पुषादिद्युताद्यलृकारानुबन्धार्तिसर्तिशास्तिभ्य इति यत्वविधाल्लिङ्गात्[1] लृकारस्य स्वरसंज्ञा भविष्यति । नैतत् । असत्यामपीह तस्यां स्वरसंज्ञायां निर्देशबलादप्यत्र यत्वं स्यात् ।

यथा अणासुवचिख्यातिलिपिसिचिह्व इति कृते समाहारद्वन्द्वे ह्वशब्दस्य नपुंसकह्रस्वत्वाभावः । ननु क्रमप्राप्तानां चतुर्दशानां वर्णानां परित्यागे कारणाभावादादिभूतानामेव तेषां संज्ञा विज्ञास्यते न मध्यवर्तिनामिति किमादिग्रहणेन ? अस्त्येतत् । अत्रादिभूतानां त्विह चतुर्दशानां वर्णानां स्वरसंज्ञाविधानात् ततोऽन्येषां दशानां समानसंज्ञा भवतीत्युत्तरत्र मन्दमतिर्मुह्येदिति उत्तरार्थमादिग्रहणमिहापि विस्पष्टार्थं पूर्वाचार्य-संज्ञापरिग्रहः[2] स्वर्यन्ते शब्द्यन्ते व्यञ्जनान्येभिरित्यनया व्युत्पत्त्या वर्णधर्मप्रतिपत्त्यर्थं व्यवहारमात्र-फलायां किमिवानया निष्फलया वर्णधर्मप्रतिपत्त्या कृतमिति चेत्, चिन्त्यमेतत् ।

**दश समानः १।१।३**

श्वस् प्राणने, आनश्, सम्पूर्वः, समाननं समानः । भावे घञ्, अस्योपधेति दीर्घः । यद्यप्यस्यां व्युत्पत्तौ भावार्थो नावगम्यते तथापि तैलपायिकादिवदसतामप्यवयवार्थेन संज्ञाशब्दानामेवं प्रकाराणां व्युत्पत्तिः क्रियते । नहि तैलपायिकादौ शब्दाभिधेये प्राणिविशेषः तैलार्थपानार्थो वा विद्यते । अथ च तैल पिबतीत्यविद्यमानावयवानुगमनेन वुण्-प्रत्ययः[3] (शब्दसंस्कार एव प्रवर्तते) रामायतनमिति । रमन्तेऽस्मिन्प्राणिन इति रमेः व्यञ्जनाच्चेति घञ्, उपधादीर्घः । आयतनमिति । यतेराङ्पूर्वादायतन्तेऽस्मिन्नित्यधिकरणे युट् । युवुद्रामनेकान्तः षष्ठी तत्पुरुषः ।

**तेषां द्वौ द्वावन्योन्यस्य सवर्णौ १।१।४**

द्वावित्यस्य स्थाने द्विश्च पदमिति वचनाद् द्वावित्ययं शब्दो वीप्सायाः

१. यत्वविधलिङ्गात् (भं०)

२. संज्ञापग्रहः (भं०)

३. शब्दसंस्कारः प्रवर्तत एव (भं०)

विषयप्रसिद्धवृत्तिर्द्विश्रुतिरूप आदिश्यते । तेन द्वौ द्वावित्येकं पदं जायते । अन्योन्यशब्दो व्युत्पन्नः परस्परार्थवृत्तिर्वर्णशब्दः पूर्वमुक्तः । समानशब्दपूर्वः समानो वर्णः सवर्णः । दृग्दृशदृक्षेषु समानस्य स इति योगविभागात् समानशब्दस्य सभावः । तत्र च योगविभागस्यायमेव सवर्णशब्दनिर्देशो लिङ्गम् । तथा च सरूपस्सावयवसंस्थान इत्यादयः शब्दाः सिद्धाः । द्वौ द्वाविति संज्ञी सवर्णाविति संज्ञा । तेषामिति निर्धारणे[1] षष्ठी । अन्योऽन्यस्येति परस्परापेक्षया षष्ठी अन्योऽन्यशब्दार्थं विवृणोति । अकारस्याकारः सवर्ण इत्यादिना । एवं सर्वत्रेति । इवर्णविषये, उवर्णविषये, वर्णान्तरविषये इकारस्य ईकारस्सवर्ण इत्यादिना क्रमेण सर्वत्र परस्परार्थत्वमवगन्तव्यम् । रुद्रायुधमित्यादि । युधेराङ्पूर्वादायुध्यत अनेन घञर्थे क-प्रत्ययः । त्रयोऽप्येते षष्ठीसमासाः । सवर्णसंज्ञाकार्यम्, समानदीर्घः । गङ्गायतनमित्यत्र तु परलोपः । सोऽपि हि सवर्णसंज्ञा कार्यमेव । वक्ष्यति हि समानस्सवर्णे इत्यत्र वृत्तिकारो दीर्घात्परस्य लोपो यथा स्यादिति । ननु समाना आनन्तर्यादेवात्रानुवर्तिष्यन्त इति किं तेषां ग्रहणेन ? उच्यते—विशेषातिदिष्टः प्रकृतं न बाधते इति वचनादसति तेषां ग्रहणे वर्णानामनुवृत्तिर्यथा स्यात् । ततश्च यौ द्वौ द्वौ वर्णौ[2] तौ संज्ञिनौ स्याताम् । किं च स्यात्, अचीखनदित्यत्रालोपे समानस्येत्यादिना लघुनि धात्वक्षरे विधीयमानस्य समानवद्भावस्याभावः[3] । कथं कखयोरनेन सावर्ण्यात् परो दीर्घः इति वचनेनावाप्तदीर्घव्यपदेशः खस्य गुरोः परभूतत्वात् । विशेषातिदिष्टपरिभाषयाश्चास्तित्वे तेषामितीदमेव वचनं लिङ्गम् । अन्यथा ह्यपार्थकमेतत्स्यात् । तस्माद् वर्णानामनुवृत्तिरत्र मा भूदिति तेषां ग्रहणम् । अचीखनदिति । खान्तवन्तं[4] प्रयुक्तवानिति खनेः धातोश्च हेतावितीन्, उपधादीर्घः, श्रिद्रुस्रु कमीति चण् कारितलोपः । इन्यसमानेति ह्रस्वः, द्विर्व, कवर्गस्य चवर्ग इति खस्य छः, द्वितीयचतुर्थयोरिति छस्य च, आलोपे समानस्य इतीत्वम्, दीर्घो लघोरिति दीर्घः । यदि तर्हि समानानामनुवृत्तये तेषां ग्रहणं क्रियते तदा समानानां यो द्वौ द्वौ ताविह संज्ञिनाविति ह्रस्वदीर्घयोरेवानुवर्तमानयोरेषां सवर्णसंज्ञा स्यात् । द्वयोर्ह्रस्वयोर्द्वयोश्च दीर्घयोर्न प्राप्नोति । नहि समानानां मध्ये द्वौ ह्रस्वौ द्वौ वा दीर्घौ पठ्येते ततश्च रुद्रायुधमित्युदाहर्तुं युक्तम् । कृष्णाग्रम्, गङ्गायतनमित्यादि त्वयुक्तमेवेत्यनेनाभिप्रायेण पूर्वपक्षयति । नन्वनुवर्तमानयो-

---

१. निर्धारणी (वा०)

२. वर्णानाम् (भं०)

३. सन्वद्भावस्याभावः (भं०)

४. खातवन्तम् (भं०)

ह्रस्वदीर्घयोरित्यादि । इतरोऽपि ज्ञापकद्वारेण[1] ह्रस्वद्वयस्य दीर्घद्वयस्य च संज्ञां साधयितुमाह– सनि चानिटीत्यादि । सनि चानिटीत्यत्र ह्रस्वद्वयसन्निधाने सति दीर्घकरणं ह्रस्वद्वयस्य सवर्णसंज्ञाप्रवृत्तेः ज्ञापकार्थम्[2] । तृतीयादौ तु परादिरित्यत्रापि तृतीया-शब्दस्य सम्बन्धिनो दीर्घादुत्तरस्यादिशब्दाकारस्य प्रतिलब्धसवर्णव्यपदेशस्य लोपप्रवृत्तिर्दीर्घद्वयस्य सवर्णसंज्ञां ज्ञापयति । नन्वन्यथा सिद्धे वस्तुनि ज्ञापकं भवति, अस्ति च ह्रस्वद्वयस्य दीर्घद्वयस्य च सवर्णत्वस्य च सिद्धिः । समानो वर्णः सवर्ण इति लौकिकात् सावर्ण्यात् ज्ञापकं चालम्भ्यमाने कादीनीति ज्ञापकात् ह्रस्वदीर्घयोरपि सवर्णसंज्ञाकार्यस्य सिद्धत्वादपार्थकोऽयं योगारम्भः स्यात् । नैतत् । कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्यय इति वचनात् कृत्रिमे शास्त्रीये ह्रस्वदीर्घविषये सावर्ण्ये सम्भवति सति प्रदेशवाक्ये लौकिकस्याकृत्रिमस्य सावर्ण्यस्य गृहीतुमशक्यत्वात् । ततश्च ह्रस्वद्वयविषये दीर्घद्वयविषये च न भवेत्समानदीर्घादिको विधिरिति तत्सिद्धये ज्ञापकालम्भनमेव[3] ज्यायः, न च तदालम्भने सति वैफल्यं योगारम्भस्य, असिद्धे वस्तुनि ज्ञापकाश्रयणस्य न्याय्यत्वात्, यथा पिबादेशस्य लक्षणेनासिद्धौ गुणाभावो लोपः पिबतेरिति लिङ्गात् साध्यते शास्त्रेण, न तु सिद्धस्य ज्ञापकद्वारेण । अकरणे सति गुणाभाववत् पिबादेशस्यापि सिद्धत्वादपार्थकं पिब इति वचनं स्यात्, अन्यान्यपि लक्षणवाक्यानि ज्ञापकद्वारेण कर्तव्यानि स्युः । तस्मात् ह्रस्वदीर्घयोः सवर्णसंज्ञासिद्धये ज्ञापकमाश्रयितुमयुक्तम् । ह्रस्वद्वयविषये दीर्घद्वयविषये तु युक्तमेव । यद्येवं सवर्णविषयमेवैतद् वृत्तिकारोपदर्शितं ज्ञापकं स्यात् । इवर्णादिविषयस्य तु ह्रस्वद्वयस्य दीर्घद्वयस्य च सवर्णसंज्ञाकार्यं न प्राप्नोति सर्वत्रज्ञापकाभावात् । अस्त्येतत् । वर्णसामान्यविषयतया तु ज्ञापकमेतत् विज्ञास्यते यथा लोपः पिबतेरिति गुणाभावज्ञापकं न केवलं पिबतीत्येकत्वविषये प्रवर्तते यावता पिबतः पिबन्तीत्यादौ द्वित्वबहुत्वविषयेऽपि ज्ञापकस्य सामान्येन प्रवृत्तेः । अथ द्वौ द्वाविति किमर्थम्, यावता सवर्णाविति द्वित्वनिर्देशात् द्वित्वमवगतमेव । एकत्वसंख्यावच्छिन्नायाः संज्ञायाः द्वित्वविषयासम्भवात् । नैवम् । तत्र द्वित्वसंख्यावच्छिन्ने संज्ञिन्यवगते यदि वीप्सायोगो न स्यात् ततो द्वौ समानौ संज्ञिनावित्ययमर्थः स्यात्, कौ च तौ द्वावित्याकाङ्क्षायां क्रमव्यतिक्रमे कारणाभावादकाराकारयोरेव प्राथम्यात् संज्ञित्वं भवेत् । ननु यदि चैवं स्यात् तदा तावेव साक्षादुपादीयेताम्, अतस्तयोः अनुपादानाद्वीप्सा-

१. ज्ञापकत्व (वा०)

२. ज्ञापकात् (भं०)

३. ज्ञापकावलम्बनमेव ज्यायः (भं०)

योगितापि संज्ञिन्यवगतैवेति किं द्वौ द्वावित्यनेन ? सत्यम्, गुर्वी तु प्रतिपत्तिस्स्यादिति संज्ञिनिर्देशार्थं द्वौ द्वाविति क्रियते ।

वर्ग्यो वर्ग्येणेत्यादि । वर्गे भवः वर्ग्यः । यदुगवादित इति योगविभागाद् यत्-प्रत्ययः । सवर्ग्यो वर्णो परेण प्रत्यासन्नेनैव वर्ग्येण सह सवर्ण इत्यस्मादाचार्यवचनाद् व्यञ्जनानामपि सवर्णसंज्ञा भवति न केवलं समानानामित्येषोऽपि शब्दार्थः । तेन किं सिद्धं भवतीत्याह—तेनेत्यादि । यतो वर्ग्यो वर्गेण सवर्ण इति वचनेन व्यञ्जनान्यपि सवर्णव्यपदेशभाञ्जि । तेन क ख ग घ ङि-[1] इत्येते परस्परं सर्वत्र व्यपदेशं भजन्ते । एवमन्येऽपीति च छ ज झ ञ इत्यादयः । तथा च कत्वविधावुज्झतीत्यत्र जकारस्य झकारे घुटि सवर्णे परे कत्वनिवृत्त्यर्थमसवर्ण इति निषेधः क्रियते । ऋकारलृकारयोरित्यादि । ऋकारस्य विजातीयेन लृकारेण सह सवर्णसंज्ञा विधातव्या । न चेदमपूर्वमभिधातव्यम्, अन्योऽन्यवचनेनैव सवर्णसंज्ञायाः लब्धत्वात् । तथाहि सवर्ण इति पूर्वाचार्यसंज्ञापरिग्रहादेव समानो वर्णः सवर्ण इति व्युत्पत्त्या परस्परार्थत्वमवगतमेवेत्यतिरिच्यमानमिदमन्योऽन्यवचनं ऋकारलृकारयोः सवर्णसंज्ञायाः साधकमस्त्येव । होतुः ऋकारः होतॄकार इत्यत्र सवर्णसंज्ञाकार्यम् समानः सवर्णे दीर्घः । चिक्लृप्सतीत्यत्र च अकार[2] ऋवर्णस्येत्यत्वं तद्धि ऋवर्णस्योच्यमानं लृकारस्यापि भवति । स्वरस्सवर्णस्य ग्राहक इति ऋकारेण लृकारस्यापि ग्रहणात् । कृपू सामर्थ्ये, अक्लृपिस्यतेरिति ज्ञापकात् प्रत्ययोत्पत्तेः पूर्वमेवान्तरङ्गत्वादृकारस्य लृकारः क्लृप्तुमिच्छति, सन्, स्वरतिसूतीत्यादिनेड्विकल्पः, द्विर्वा, अकार ऋवर्णस्येति लृकारस्याप्यकारः, अभ्यासकार्यम् ।

**पूर्वो ह्रस्वः १।१।५**

पूर्वमवपूरणे,[3] पूर्वतीति पूर्वः, अच्, सवर्णग्रहणमत्रानुवर्तत इति पूर्वसूत्रात् । उत्तरत्र चेति । सवर्णग्रहणमनुवर्तत इति सम्बन्धः, तच्च योगद्वयेऽप्यनुवर्तमानं पूर्वपरशब्दयोरिह दिग्वाचिनो सतो निर्देशवृत्तित्वेन गुणेन निर्धार्यमाणत्वान्निर्धारणषष्ठ्यन्तं विज्ञास्यत इत्यनेनाभिप्रायेण विवृणोति । सवर्णयोर्यः पूर्व इति च । हे अम्ब इति । अम्बाशब्दः हे शब्दपूर्वः । ततस्सेरव्ययाच्चेति लुक्, प्रथमैकवचनम् । ह्रस्वोऽम्बार्थानामिति ह्रस्वः । ह्रस्वनदी-

---

१. ङ इत्येते (?)

२. अवर्णस्याकार ऋवर्णस्येत्यत्वम् (भं०)

३. पूर्व पूरणे (वा०)

श्रद्धाभ्य इति सिलोपः। पूर्वस्य लघुसंज्ञापि वक्तव्येति। न चेदमपूर्वमभिधातव्यम्। ह्रस्व इति पूर्वाचार्यसंज्ञाङ्गीकरणस्य संज्ञान्तरद्योतनफलत्वेनैव लब्धत्वात्। न च लघुना कालेन पूर्वस्योच्चारणाल्लघुव्यपदेशः सिद्ध इति शक्यते वक्तुम्। एवमभिधीयमाने हि ह्रस्वकालोच्चारणयोगाद् ह्रस्वसंज्ञाया अपि सिद्धौ सत्यां सूत्रस्याप्यकर्तव्यता[1]-प्रसङ्गात्। तस्मात् व्यवहारार्थं शास्त्रे लघुसंज्ञा सङ्ग्रहणीयैव। किं च न केवलं पूर्वस्य लघुसंज्ञा यावदनेनैव प्रकारेण तस्य संयोगपरस्य सतो गुरुसंज्ञापि बोद्धव्या तथा चोज्झाञ्चकारेत्यादौ नाम्यादेर्गुरुमत इत्याम्-प्रत्ययस्सिद्धः। एवं च कृत्वा अनृच्छ इति युज्यते निषेधारम्भः। नन्वस्मादेव निषेधारम्भात् संयोगपरो ह्रस्वो गुरुरिति व्यपदेक्ष्यते। तत् किं ह्रस्व इति पूर्वाचार्यसंज्ञाङ्गीकरणेन हेतुना पूर्वस्य संयोगपरस्य सतो गुरुसंज्ञा प्रार्थ्यते। असदेतत्। ऋच्छिनिषेधारम्भादस्ति कश्चिदृच्छिर्गुरुवर्ण इति प्रतिपत्तिः स्यात् सतुक इति विशेषे नास्ति प्रमाणम्। अथास्ति स्वरधर्मत्वाद् गुरुव्यपदेशस्य ऋकारो गुरुरिति निश्चयः। एवमपि ऋच्छिनिषेधाज्ज्ञापकाच्चकार-छकारः संयोगपरो यो ह्रस्वः सः गुरुरित्येवमपि कस्मान्न निश्चीयते। यतश्च ऋच्छि-प्रभृतीनामेव ह्रस्वो गुरुसंज्ञः स्यात्। नान्येषामुज्झि-प्रभृतीनाम्। तस्मादृच्छिप्रतिषेधेन[2] अशक्या ह्रस्वसंयोगपरस्य गुरुसंज्ञा विज्ञातुम्।

परो दीर्घः १।१।५

पॄ पालन-पूरणयोः। पिपर्तीति पचादित्वादच्, गुणः सवर्णयोर्यः पर इति पूर्ववत् षष्ठी सम्बन्धो व्याख्येयः। रुद्रायेति। ङेर्य अकारो दीर्घ घोषवतीति दीर्घः परस्य गुरु-संज्ञा वक्तव्येति। सा तु दीर्घ इति पूर्वाचार्यसंज्ञापरिग्रहात्पूर्ववल्लब्धेति नापूर्वत्वेन वक्तव्या। अथ किमर्थो योगारम्भः, यावता पूर्वस्य ह्रस्वसंज्ञायां कृतायां पूर्वशब्देन सम्बन्धिशब्दत्वादाक्षिप्तस्य परस्य ह्रस्वशब्दाक्षिप्तेन दीर्घशब्देन सामर्थ्यात् सम्बन्धो विज्ञास्यत इत्याह—(ननु[3] पूर्वं ह्रस्वलघुसंज्ञयोर्दीर्घगुरुसंज्ञयोश्चन्यतमयैव संज्ञया शास्त्रे व्यवहारसिद्धौ सत्यां संज्ञाद्वयं किमर्थं ? ब्रूमः, संयोगपरस्य ह्रस्वस्य गुरुसंज्ञा तावदवश्यं कर्तव्या कार्यान्तरसिद्ध्यर्थम्। तत्र यदि ह्रस्वसंज्ञैव क्रियते तदा संज्ञानां भिन्नफलत्वाद-

---

१. सूत्रस्याख्याकर्तव्यता प्रसङ्गात् (व०)
२. प्रतिषेधात् (भं०)
३. न्यूनपाठः (भं०)

यमन्तरेण बाध्यबाधकभावानुपपत्तेः गुरुसंज्ञया ह्रस्वसंज्ञायाः समावेशः स्यात् ? ततश्च अततक्षदित्यादौ सन्वद्भावो भवेत् सन्वल्लघुनि चङ्‌ पर इत्यत्र ह्रस्वग्रहणं भवन्मते कर्तव्यम्, अस्ति चात्र ह्रस्वोऽकारः संज्ञाद्वयविधाने तु तत्सामर्थ्यात् गुरुसंज्ञया ह्रस्वसंज्ञा बाध्यत इति नास्ति सन्वद्भावप्रसङ्गः ।) ननु पूर्वम् ह्रस्वशब्दाभ्यामिति[1] । अयमत्रार्थः । इह यद्यपि पूर्वं ह्रस्वशब्दाभ्याम् परो दीर्घशब्दावाक्षिप्येते तथापि विना वचनमाक्षेपमात्रात् तयोः संज्ञासंज्ञिलक्षणसम्बन्धो नोपलभ्यते । तथाहि परस्य दीर्घसंज्ञा भवतीति कस्यायमर्थः ? न तावत् पूर्वो ह्रस्व इत्यस्य पूर्वस्य ह्रस्वसंज्ञासम्बन्धे सत्यस्य योगस्योपक्षीणत्वात् । नाप्याक्षिप्तयोः परदीर्घशब्दयोः तयोः अयश्शलाकारूपत्वेन स्वार्थप्रतिपादन-प्रसिद्धव्यापारयोः सतोरन्वयाभावात् । न च सत्यां परस्य दीर्घसंज्ञायां पूर्वस्य ह्रस्वसंज्ञासम्बन्धः विघटते येन तद्विघटनभयात् परस्य दीर्घ इति व्यपदेशस्स्यात् । न च पूर्वशब्देन संज्ञिनाक्षिप्तस्य परस्य संज्ञित्वं शक्यमवमातुम् । आक्षेपे संज्ञित्वस्यानङ्गत्वादिति योगारम्भ एव ज्यायान् । दीर्घ इति पूर्वाचार्यसंज्ञापरिग्रहात पृथग्योगारम्भाच्च परस्यैव संज्ञा सिद्धेति परग्रहणं सन्ध्यक्षराणामपि दीर्घसंज्ञाप्रतिपत्त्यर्थम् । तेनोच्चैरधः, गोरमत इत्यादौ कृते रेफलोपे पूर्वस्वरयोरैकारौकारयोरेवावाप्तदीर्घव्यपदेशयोरन्तरतमौ दीर्घावीदूतौ न भवतः । दीर्घशब्देन सम्बन्धिशब्दत्वादाक्षिप्तस्य ह्रस्वस्यैव दीर्घविधौ स्थानिवत्वात् ।

8457

**स्वरोऽवर्णवर्जो नामि १।१।७**

स्वरशब्दः पूर्वमुक्तः, नमत्यवश्यमित्यावश्यकाधमर्ण्ययोर्णिनिरिति णिनिः । उपधादीर्घः । सि, इन्हन्पूषेति च दीर्घः । वृजेरिति वृजी वर्जन इत्यस्मात्, अवर्ण अकाराकारावििति । ननु कथमेतत्, अवर्ण इत्ययं कर्मधारयः । ततश्चाकारो ह्रस्व एवावर्णग्रहणेन गृह्यते । आकारस्तु कथं गृह्यत इत्याह—स्वरस्सवर्णस्य ग्राहक इति वचनादित्यस्माद्वचनादकारोऽत्र स्वरो गृह्यमाणस्सवर्णमाकारमपि गृह्णाति, तेनाकाराकारयोः द्वयोरपि निषेधः । इत्थं वर्णग्रहणेन सर्वत्र द्वयोः ग्रहणमिति स्वरस्सवर्णस्य ग्राहक इत्यनेन प्रकारेण यत्र-यत्र[2] हि वर्णशब्दस्य ग्रहणमुच्चारणम् अवर्णे इवर्णे ए इत्यादौ तत्र-तत्र सर्वत्र द्वयोर्ह्रस्वदीर्घयोर्ग्रहणं परिग्रहो वेदितव्य इत्यर्थः । अयं भावः स्वरस्सवर्णस्येत्यनया परिभाषया सर्वत्र सवर्णो गृह्यते, न तु वर्णग्रहणेन । वर्णशब्दो हि वर्णमात्र-

१. ह्रस्वशब्दाभ्यामित्यादि (भं०)
२. यत्र हि इत्यस्य स्थाने यत्रेह पाठः (उभयपेति)

स्यैव सूत्रस्थस्य विशेषको न तु तेन सवर्णस्य ग्रहणं शक्यते विज्ञातुम् । तेन यत्केनचिदुक्तम्[1], वर्णग्रहणेन सवर्णग्रहणमिति तदपास्तं भवति । यदि च वर्णग्रहणेन सवर्णो गृह्यते, यदुगवादित इत्यत्र उकारः ऊकारं न गृह्णीयात् । वर्णग्रहणाभावात् । ततश्च शङ्कव्यमित्यादावेव शङ्काप्रभृतिभ्यो यत् प्रत्ययः स्यात्, वधूभ्यो हित [2]वधव्यमित्यादौ तु न स्यात् । स्वरः सवर्णस्य ग्राहक इत्यस्याः परिभाषायाः जातिविषयः । तेनाकारसामान्यस्य ग्रहणे सति आकारोऽपि गृह्यते । अकारजातेर्ह्रस्वदीर्घभिन्नेऽपि व्यक्तिविषये त्वेषा परिभाषा नास्ति । तथा चास्यैक-व्यञ्जनमध्य इत्येत्वाभ्यासलोपौ विधीयमानौ बबाधेत्यादौ बाधेः न भवतः । तयोः विधौ [3]अकारव्यक्तेरेवोपादानात् । विषयविवेकस्त्वयं लक्ष्यानुरोधादवमन्तव्यः । नामि संज्ञो भवतीति । एतेन नकारान्तेयं संज्ञा न त्वीकारान्तेति दर्शयति । एतच्च नामिनस्स्वर इति व्यवहाराल्लभ्यते । दधिनीति । डुदाञ्[4] दानधारणयोः । दानशीलमिति । आद्वर्णेति किः द्वे चेति वचनादिति द्विर्वचनम्, अभ्यासकार्यम् आलोपे सार्वधातुक इत्यालोपः । औरीमितीकारः, नामिनस्स्वर इति नुरागमः स्वरग्रहणमनन्तराणां समानानां मा भूदिति । किञ्च स्यात् यदि तेषां नामिसंज्ञा स्यात् । चेषीढ्वमित्यादौ गुणे कृते धातोरनाम्यन्तत्वान्नाम्यन्ताद् धातोरिति धस्य ढत्वे न स्यात् । न च परत्वाद् ढत्वं भविष्यतीति शक्यते वक्तुम्, गुणस्यान्तरङ्गत्वात् पूर्वं प्रवृत्तेः । परस्माच्चान्तरङ्गं बलीयः, परविधिबाधकान्नित्यादपि विधेरन्तरङ्गस्य बलीयस्त्वात् । उक्तञ्च पूर्वम्—

परं विदुः पूर्वपरोपपत्तौ परस्य नित्यस्य च नित्य एव ।
नित्यान्तरङ्गोपगमेऽन्तरङ्गस्तथाविधिः प्रातिपदो बलीयान् ॥

अथ कथमन्तरङ्गो गुणमुच्यते[5] । प्रकृत्याश्रयत्वात् प्रकृत्याश्रयं हि कार्यमन्तरङ्गम्, शब्दव्युत्पत्तौ प्रकृतेः प्रथमं बुद्धावभासमानत्वात् । तस्याश्चान्तरङ्गत्वात् तदाश्रयस्यापि कार्यस्यान्तरङ्गत्वमेवेति गुणेऽन्तरङ्गत्वात् कृते ढत्वं व्याहन्यते । ननु नाम्यन्ताद्या विहिता आशीरद्यतनी परोक्षा तासु स्थितस्य ढत्वमिति विहिते विशेषपक्षाश्रयणात् कृतेऽपि गुणे नाम्यन्ताच्चिनोतेस्सीढ्वमो-

---

१. यत् किञ्चदुक्तम् (भं०)
२. वधव्यो वासः (वा०)
३. विधावकारः (वा०)
४. धाञ् (वा०)
५. गुण उच्यते (भं०)

विधानमाश्रित्य ढत्वं भविष्यतीति कथं तस्य व्याघातस्स्यात्, नैतत्, सम्भवे हि तुष्टुढ्वे कृषीढ्वमित्यादिर्मुख्यो ढत्वस्य विषयः। यत्र सर्वत्रात्मने ऋदन्तानां वेति गुणो निषिध्यते तत्कथं सम्भवत्यां गतौ विहितविशेषणपक्षाश्रयणेन चेषीढ्वमित्यादौ ढत्वं स्यात्। तस्मादत्र गुणेऽपि कृते ढत्व यथा स्यादिति समानं निवृत्त्यर्थं स्वरग्रहणम्। अनवर्ण इति कर्तव्ये वर्णग्रहणं नञानिर्दिष्ट-परिभाषां[1] प्रत्याशङ्का मा भूदिति। तथा च अजरत् अदर्शदित्यत्र जृदृशोरण्वि-कल्पविषयाद् वक्तव्यादण्यपि विहिते एतत्परिभाषा सामर्थ्यादेव नणकारेत्ययं गुणनिषेधो न प्रवर्तते।

**एकारादीनि सन्ध्यक्षराणि १।१।८**

एकार आदिर्येषां वर्णानामिति बहुव्रीहिः। जश्शसोः शिः, घुट्स्वराद् घुटि नुः, इन्हन्पूषेति दीर्घः। सन्धिशब्दे डुधाञ्, सम्पूर्वादुपसर्गे दः इति किः, पूर्ववदालोपः। सन्धिप्रधानान्यक्षराणि सन्ध्यक्षराणि इति मध्यमपदलोपि कर्म-धारयः। यथा घृतपूर्णो घटः घृतघट इति प्राग्वच्छिभावः। नुकारागमः। एकारादीनि वर्णानीति वर्णशब्दस्य पुंनपुंसकयोस्स्मरणादेवमुक्तम्। दातेति। देङ् रक्षणे, सन्ध्यक्षराणामाकार इत्यात्वम्। श्वस्तनीता अथवा दायता इति तृच्, चकारो धातोस्तृशब्दपारित्यत्र तृणोऽपि[2] ग्रहणार्थः। असति हि तृचः चकारे निरनुबन्धकग्रहणे न सानुबन्धकस्येति तृणो ग्रहणं न स्यात्। आमो सि-लोपश्चेत्यात्वं सि-लोपो औकारस्य सन्ध्यक्षरसंज्ञा प्रयोजनम्। डुढौके इत्यादौ ह्रस्व उकारः असत्यां हि तस्य सन्ध्यक्षरसंज्ञायां ह्रस्व इति ह्रस्वो ढौकेरभ्यासस्य सम्बन्धिनः औकारस्य विधीयमानः कण्ठभागेनान्तरतम्यादा-कारोऽपि ह्रस्वस्स्यात्। तस्यां तु सत्यां सन्ध्यक्षराणां ह्रस्वादेश इदुतावित्य[3]-स्यौकारस्य सन्ध्यक्षरस्यौष्ठ्य उकार एव ह्रस्वो भवति न त्वकारः। नन्वे-कारादीनीति बहुव्रीहौ वर्णानामन्यपदार्थेन व्यवस्थितानामियत्तापरिच्छेदे कारणाभावात् कादीनामपीयं संज्ञा प्राप्नोतीत्याशङ्क्याह–चतुर्णामियं संज्ञेति। ए ऐ ओ औ इत्येतेषामेव चतुर्णामियं संज्ञेति नान्येषाम्। कुतो हेतो इत्याह-[4]स्वरग्रहणानुवृत्तेरिति। चतुर्भ्यः परेषामस्वरत्वादिति भावः। ननूपलक्षणत्वा-दित्यादि। अयमर्थः। एकारादिर्येषामित्येकारोऽत्रोपलक्षणम्, तेन हि आदि-

१. परिभाषायाम् (भं०)
२. तृणे (वा०)
३. इदूतावित्यस्यौकारस्य (वा०)
४. स्वरग्रहणानुवृत्तिरिति (वा०)

भूतेनान्ये त्रयो वर्णा उपलक्ष्यन्ते । उपलक्षणञ्च तदुच्यते । येनान्यदुपलक्ष्यते ततश्चैकारोपलक्षितानां त्रयाणामेव वर्णानां संज्ञा प्राप्नोति । एकारस्त्वन्येषामुपलक्षणत्वात् कार्ययोगी न स्यात् । यथा चित्रगुमानयेत्यत्र चित्रगव्य: । नह्युपलक्ष्यदुपलक्षणमात्मानमुपलक्षयति स्वात्मनि क्रियाविरोधात् । नहि सुशिक्षित: प्लवग: स्वं स्कन्धमारोढुं समर्थ: । अत एकारस्योपलक्षणभूतत्वात् कथं संज्ञा स्यात् । नास्त्यसौ प्रकारो येनासावपि सन्ध्यक्षरमिति व्यपदिश्यते । देवदत्तशालाया: ब्राह्मणा आनीयन्तामित्यभिहिते तु शालोपलक्षणभूतस्यापि देवदत्तस्य यदानयनं तद् रूपान्तरेण ब्राह्मणत्वेन प्रवर्तते न तूपलक्षणरूपतया । इह त्वेकारस्य रूपान्तरासम्भवात् संयोगान्तो न स्यादित्याह—सत्यमित्यादि । सत्यमिति निपातोऽभ्युपगमे वर्तते । यदि सत्यं तर्हि किं नाङ्गीक्रियत इत्याह—ह्वामाश्चेति । यदयं ह्वामाश्चेति ह्वे ञ: सन्ध्यक्षरान्तानामित्यकार: सन्ध्यक्षरसंज्ञानिमित्तत्वमात्वं विदधाति । तत आत्वविधानादुपलक्षणस्यापि एकारस्य संज्ञा भवतीति कथं पूर्वपक्षार्थोऽङ्गीक्रियते । एवञ्च कृत्वेत्यादिना भङ्ग्या ज्ञापकान्तरमुपन्यस्यति । ह्वामाश्चेत्यस्य सौत्रत्वेनाशङ्क्यमानत्वात् । एवम्[1] च कृत्वाऽनव्ययतः परोक्षायामिति निषेधारम्भ: सफल: स्यात् ।

**कादीनि व्यञ्जनानि १।१।९**

ककारादिर्येषां वर्णानामिति विग्रह: । वि-पूर्वादञ्जे: व्यङ्ग्य: स्वरेण प्रकटीकर्तव्यमिति कृत्ययुटोऽन्यत्रापि कर्मणि युट् । ककारादीनि वर्णानीति हकारान्तानीति मन्तव्यम् । रुद्रं स्तौमीति स्तवनक्रियायां रुद्रस्याकर्तृकत्वात् कर्मणि द्वितीया । ष्टुञ् स्तुतौ, धात्वादेष्षस्य षत्वनिवृत्तौ टकारस्यापि तकार:, स्तौतीन्नन्तयोरिति ज्ञापकात् । सि, अन्वि, अदादेर्लुक् उकारस्य वृद्धिर्व्यञ्जनादावित्यौकार: । उपलक्षणस्यापि ककारस्य संज्ञा भवतीत्युक्तम् । तत्र हेतुमाह - य: करोतीत्यादि । य: करोति स: कर्तेत्यत्र स: शब्दात् परस्य विसर्जनीयस्य ककारे परत एव स परो लोप्य इति व्यञ्जननिमित्तकोऽयं लोपो दृश्यते ततो ज्ञायते भवत्युपलक्षणस्यापि ककारस्य व्यञ्जनसंज्ञेति ।

**ते[2] वर्गा: पञ्च पञ्चश: १।१।१०**

तद् जस् त्यदाद्यत्वम्, जस्सर्व ई, वृजे: वर्ज्यन्ते विजातीयेभ्य: पृथक्क्रियन्त इति कर्मणि घञ्, गुण: चजो: कगाविति गत्वम्, पञ्चन् जस्, लुक् । पञ्चश

१. एवञ्च कृत्वा (न्यूनपाठ: भं०) ।
२. ते वर्गा: पञ्च पञ्च पञ्च (दुर्गसूत्रपाठ:)

इत्यव्ययमेतदिति शसन्तस्याव्ययत्वेन प्रसिद्ध इति भावः। पञ्च पञ्चेत्याख्या-ताच्च तसादयः इति शसित्यनेन वीप्सायां शस्प्रत्यय इति दर्शयति। वक्ष्यति हि तसादि-प्रत्ययविधौ संख्याया एकवचनान्ताच्च वीप्सायामिति शसन्ताच्च सामान्येनोत्पन्नस्य सेरव्ययाच्चेति लुक्। वर्गसंज्ञाः भवन्तीति। वर्ग इति संज्ञा येषां ते तथोक्ताः। यादीनामपि पञ्चानां तर्हि संज्ञास्यादित्याह—तास्तु संज्ञा पञ्चेति विशेषणोपादानात्। त इति विशेषादिष्टपरिभाषया[1] वर्णानां मा भूत्, किञ्च स्यात्, अकारादीनामपि पञ्चानां सत्यां वर्गसंज्ञायां त्वमत्रेत्यत्र वर्ग्ये तद्वर्ग्येति सकारस्य वर्गपञ्चमो तकारो भवेत्। अथ किमर्थं शसो निर्देशः एवम्[2] सत्यपार्थकं स्यात्। पञ्चेति संज्ञाविशेषणत्वेन किं कृतं स्यात्, तस्मात् पञ्च वर्गसंज्ञाः। पञ्चानां कादीनां सफल एवेति पञ्चानां पञ्चशब्दो कादीनां विशेषणभूते सामर्थ्यादेव वीप्सायोगो विज्ञास्यत इति किं शसो निर्देशेन, अस्त्येतत्, पञ्च पञ्चेति तु कृते सति परिगृहीतवीप्साकमेवेदं कादीनां विशेषणमिति कश्चित् सम्भावयेत्। ततश्च पञ्च सङ्ख्यावच्छेदः संज्ञानां न प्राप्नोति तन्मा भूदिति दोष इति शसो निर्देशः कर्तव्यः।

**वर्गाणां प्रथमद्वितीयाः शषसाश्चाघोषाः १।१।११**

वर्गशब्दः पूर्वमुक्तः। द्वयोः पूरणः द्वितीयः, द्वेस्तीयः, घुषिरविशब्दने, घञ् गुणः, अविद्यमानो घोषो येषां ते अघोषाः। लोप्या इति अर्ह-प्रत्यय-निर्देशाद्विद्यमानशब्दस्य लोपः। वर्गाणामित्यादि। तथा च शषसाश्चेति अघोषसंज्ञाः भवन्तीति अपेक्षते। ज्ञानभुत्स्विवति। ज्ञानशब्दपूर्वाद् बुध्यतेः ज्ञानं बुध्यत इति क्विप्, हचतुर्थान्तस्य बस्य भः, अघोषे प्रथम इति धस्य तः। ननु वर्गग्रहणं पूर्वस्य सूत्रादनुवर्तमानमर्थवशात् षष्ठ्यन्ते विज्ञास्यते। तत्किं पुन-र्वर्गग्रहणेन, उच्यते—प्रथमद्वितीयव्यपदेश इह शास्त्रे वर्गविषय एव यथा स्या-दिति पुनर्वर्गग्रहणम्। तृतीयादि-व्यपदेशस्य तु वर्गविषयत्वम्। ([3]प्रथमद्वितीय-ग्रहणस्यात्र वर्तमानस्योपलक्षणत्वाद्विज्ञास्यते। अथ किमर्थं संज्ञिनां भेदेन निर्देशः क्रियते? सत्यम्, शक्यमेवं कर्तुम्। अवैस्पष्ट्यं स्यात्) ([4]द्वन्द्व-निष्ठानां कस्यचिद्विशेषणं कस्यचिन्न इतीदमवैस्पष्ट्यं स्यात्। प्रथमद्वितीय-

---

१. विशेषानतिदिष्टः (परिभाषासंग्रहपाठः)
२. न्यूनपाठः (वा०)
३. न्यूनपाठः (वा०)
४. न्यूनपाठः (मं०)

ग्रहणस्यात्रानुवर्तमानस्योपलक्षणत्वाद्विज्ञास्यते । अथ किमर्थं संज्ञिनां भेदेन निर्देशः, न शषसह प्रथमा द्वितीया इत्येवोच्यते । वर्गाणामिति च विशेषणं सम्भवानां प्रथमाद्वितीयानामेव विज्ञास्यते । सत्यम्, शक्यत एवं कर्तुम्, अवै-स्पष्टोत्तरं स्यात् ।)

**घोषवन्तोऽन्ये १।१।१२**

घुषेर्घञन्ताद् घोषो विद्यते येषामिति, तदस्यास्तीति वन्तु-प्रत्ययः । अन्य-शब्दाज्जस्, जसस्सर्व ईस् । अग्निर्गच्छतीति गम्लृ गतौ । नन्वघोषेभ्यः येऽन्ये वर्णास्ते चेत् संज्ञिनः तदा स्वराणामपि संज्ञा प्राप्नोति, तेऽप्यघोषेभ्योऽन्ये भव-न्तीति पूर्वपक्षयति । नन्वन्य इति वचनादित्यादि । अत्र परिहारमाह—न भवि-ष्यतीत्यादिना । अयमर्थः । स्वरान्प्रत्याशङ्कैव नास्ति । कादीनि व्यञ्जनानी-त्यतो हि सूत्रादारभ्य कादीनि संस्कार्यत्वेन प्रस्तुतानि । तेषां च लब्धव्य-ञ्जनव्यपदेशानां वर्गसंज्ञायां पूर्वेण योगेनाघोषव्यपदेशे सञ्जाते घोषवन्तोऽन्य इति सूत्रमिदमारभ्यमाणमन्येषामघोषव्यतिरिक्तानां गादीनामेव बुद्धौ परि-स्फुरतां घोषवत्संज्ञाविधायकं सम्पद्यते । ये तु संस्कार्यत्वेन प्रस्तुताः बुद्धावेवा-परिस्फुरन्तः स्वराः ते अन्यशब्देनाक्षिप्यमाणाः सन्तः कथमिव संज्ञिनः स्युः । घोषवन्त इति कर्तव्ये अन्यग्रहणं विस्पष्टार्थम् । पूर्वेषामपि[1] संज्ञा स्यादिति चेत्, न । भविष्यति पृथग्योगारम्भात् । [2]अघोषघोषवद्व्यपदेशयोः चैकवर्ण-विषयतया विरुद्धत्वात् । न च स्वरसंज्ञिन आशङ्क्यन्ते ।[3] तेषामप्यप्रस्तुत-त्वात् । अयं योगः पूर्वश्च मन्दधियां भ्रान्तिनिवारणार्थः । शक्यन्ते हि प्रदेश-वाक्येष्वघोषः घोषवद् व्यपदेशोऽन्वर्थत्वेन विशिष्टवर्णविषयो विज्ञातुम् । भ्रान्तिस्तु स्यात् के ते अघोषाः घोषवन्तो वेति ।

**अनुनासिका ङ ञ ण न माः १।१।१३**

णस् कौटिल्ये नसत इति वुण्तृचाविति वुण्, अकादेशः, उपधादीर्घः । आप् के प्रत्यय इतीत्वम् । अनुगता नासिका येष्विति विग्रहः । स्वरो ह्रस्व इति योगविभागान्नासिका शब्दस्य ह्रस्वः । ङकारस्य संज्ञाप्रयोजनम् क्रुङ्-भ्यामित्यादौ धुटां तृतीय इति गत्वाभावः । क्रुञ्च गतावित्यस्मात्क्रुञ्चतीति, क्विप्, अक्रुञ्चेरिति निषेधारम्भबलादनिदनुबन्धानामित्यनुषङ्गलोपाभावः ।

१. पूर्वेषामेव एषापि संज्ञा स्यादिति (वा०)
२. अघोषः घोषवद् (सम्भावितः शुद्धपाठः)
३. तेषामप्यप्रस्तुतत्वात् (वा०),

भ्याम् संयोगान्तलोपस्तावन्न क्रियते तिर्यङिङत्यादिनिर्देशात्। तेन चवर्गदृगिति[1] गत्वम्। वर्ग्ये[2] वर्ग्यान्तः, संयोगान्तस्य लोपः, अकारस्य याञ्चा, यज्ञ इत्यत्र कत्वगत्वाभावः। पूर्वाचार्यसंज्ञाङ्गीकरणं ङञणनमानां संज्ञान्तरास्तित्वद्योतनार्थम्। तेनैते पञ्चमे पञ्चमानित्यादौ पञ्चमशब्देनापि व्यवह्रियन्ते।

**अन्तस्थाः यरलवाः १।१।१४**

अन्तशब्दपूर्वात्तिष्ठतेरन्ते तिष्ठतीति नाम्नि स्थश्चेति डः, यरलवानां संज्ञायाः प्रयोजनम् सम्प्रसारणम् लकारस्य तु लिलावयिषतीत्यत्रेत्वप्रवृत्तिः। लूञ्, लुनन्तं प्रयोक्तुमिच्छतीति हेताविन्, वृद्धिः, सन्, इट्, गुणः। इनि कृतं स्थानिवदिति लू, द्विर्वचनम्, उवर्णस्य जान्तस्थेत्युवर्णस्य इत्वम्।

**ऊष्माणः शषसहाः १।१।१५**

देवं नौमीति, दिव क्रीडायाम्, दीव्यतीति देवः। अच्, णु स्तुतौ, वन्तुः, सि, अन्वि लुक् उकारस्य वृद्धिः। इह सर्वत्र संज्ञाकरणस्य व्यवहारः प्रयोजनं, न चानयोष्मसंज्ञया क्वचिदस्ति व्यवहारः। मनोरनुष्मणीत्यत्रास्तीति चेत्, न। अस्य सूत्रस्य वैफल्यादाचार्येणापठितत्वात्। तथा चानुस्वारो मकारनकारयोरनेन विधीयते। सः च मोऽनुस्वारं व्यञ्जने इत्यनेन पदान्ते मकारस्य सिद्धः, नकारस्य तु पदान्ते। तत्र भवान् रमते इत्यादौ न दृश्यते। अपदान्तेऽपि तयोर्मनोरनुस्वार इत्यनेनास्तीहानुस्वारसिद्धिः। ऊष्मण्यपि पञ्चशर इत्यादावनुस्वारो दृश्यते। ततो मनोरनुष्मण्यनुस्वार इत्यस्य फलशून्यस्यापठ्यमानत्वात् ऊष्मसंज्ञायाः प्रदेशवाक्येऽसम्भवात् योगारम्भो निरर्थक इत्यनेनाभिप्रायेणाह-मनोरनुष्मणीत्यस्यानर्थकत्वादिति पाठस्त्वेवं प्रकाराणामपि दृश्यते। यथा शक्तियष्ट्योरीकण्णित्यादीनामिति न पाठमात्रात् सार्थकत्वं शक्यं विज्ञातुम्।

**अः[3] इति विसर्जनीयः १।१।१६**

अपरो लोप्य इति विसर्जनीयलोपो न कृतः, संज्ञिभङ्गभयात्। विपूर्वात् सृजेः विसृष्टव्य इति तव्यानीयाविति अनीयप्रत्ययः। अ इति लुप्तप्रथमैकवचनमिति अं अः इति वर्णानां मध्ये विन्दुद्वयान्तोऽकारः पठ्यते, तस्येहानु-

---

१. चवकदृगिति (अशुद्धपाठः वा०)

२. वर्ग्ये वर्गान्तः (वा०)

३. अ इति विसर्जनीयः (दुर्गपाठः)

क्रियमाणत्वादनुकार्येणार्थेनार्थवत्त्वात् । ततः सञ्जातस्य प्रथमैकवचनस्य लोपः । लोपविधायकस्यैवंविधे विषये लक्षणस्याभावात् कथं लोप इत्याह— लोपस्त्वित्यादि । आदिलोपोऽन्तलोपश्चेति पूर्वाचार्याणां यदभियुक्तैः वचनं स्मर्यते तस्मादत्र लोप इत्यर्थः । कश्चरतीति, क्विप्, सि, किं[1] क इति क आदेशः । कश्छादयतीति । छदेश्चुरादित्वादिन्, उपधादीर्घः, सि, अन्वि, गुणः । अकारात् परं विन्दुद्वयं विसर्जनीयसंज्ञं भवतीत्युक्तम् । तत्कथमकारः परिहर्तुं शक्यत इत्याशङ्क्याह—इति शब्दोऽकारस्य संज्ञानिवृत्त्यर्थ इति । इतिशब्दस्येह क्रियमाणस्यैतदेव प्रयोजनम् । विन्दुद्वस्यैव संज्ञा यथा स्यादकारस्य मा भूदिति । अन्यथाप्रयोजनशून्यत्वादिति शब्दमाचार्यः न कुर्यात् । एवं च कृत्वा इदुदग्निरिति विन्दुद्वयात्पूर्वस्येकारस्याकृतयत्वस्य श्रवणमुपपद्यते यदि तर्हि अकारस्य संज्ञा माभूदिति इति-शब्दः क्रियते किमाकारेण विफलेनेत्याह--उच्चारणार्थस्त्वकार इति उच्चारणमर्थः प्रयोजनं यस्याकारस्य सः तथोक्तः । तु शब्दोऽवधारणे, तेनायमर्थः विन्दुद्वयमुच्चारयितुमकार इहोपात्तः न तु संज्ञासम्बन्धमनुभवितुम् नह्यकारं विना विन्दुद्वयमुच्चारयितुं शक्यते । एवमुत्तरत्र सूत्रेष्वपीत्यादि । यथात्राकारः उच्चारणार्थः । एवमग्रिमेषु त्रिषु सूत्रेषु ककारपकारयकारास्संज्ञित्वेनाभिमतानां वर्णानामुच्चारणार्थाः न तु संज्ञासम्बन्धस्तेषामपि भवतीति शब्दस्य करणादिति सर्वत्र हेतुः । इह च विपूर्वः सृजिः संज्ञा, तेन विसृष्टो विसर्ग इत्येतेन अपि विन्दुद्वयस्य संज्ञे भवतः इति रसकारयोर्विसृष्ट इत्यादिव्यवहार उत्पन्नः । अन्यथा ह्यन्यूनानतिरिक्ता संज्ञा संज्ञिनं प्रत्याययतीति विसृष्टशब्दो प्रतिलब्धविसर्जनीयसंज्ञः कथं विन्दुद्वयं प्रत्याययेत् ।

**ᳵक इति जिह्वामूलीयः १।१।१७**

कखयोर्जिह्वामूलीयं न वेत्येतत्सूत्रविहितो विसर्जनीयादेशः । इह क इति संज्ञित्वेन लुप्तप्रथमैकवचन उपात्तः । मूल प्रतिष्ठायाम् । नाम्युपधेति कः । जिह्वायाः मूलं जिह्वामूलम्, तत्र भव इतीयस्तुहित इति तु शब्दादीय-प्रत्ययः । ककारात् पूर्व इत्येतेन ककारस्य संज्ञित्वं दर्शयति । वर्ण इति । विसर्जनीयस्य वर्णस्थानिकत्वाद् वर्ण इत्युक्तम्, न त्वसौ वर्णानां मध्ये पठ्यते । केन पुनरसौ विसर्जनीयस्थाने विहित-कखयोर्जिह्वामूलीयं न वेत्यनेन, यद्येवं जिह्वामूलीयोच्चारणेन विधानम्, विधानाश्रयाच्च जिह्वामूलीयसंज्ञेति स्पष्टमितरेतराश्रयो दोषः स्यात् । अस्त्येतत्, भाविनी तु संज्ञा विज्ञायते,

---

१. किमः कः (दुर्गपाठः)

यथास्य सूत्रस्य शाटकं वयेति। तेन सः तथाविधः कश्चिदादेशः कखयोः परयोः विसर्जनीयस्य भाव्यते। यस्य भावितस्य स्थाने सतो जिह्वामूलीय इत्येतेषां संज्ञा भवति। एवं च न संज्ञोच्चारणेन संज्ञिनां विधानमिति नास्तीतरेतराश्रयदोषप्रसङ्गः। पाठक्रमाच्चार्थक्रमो बलीयानिति पूर्वं संज्ञासूत्रस्य पाठेऽपि विधिसूत्रादनन्तरं तद् व्याख्यातव्यम्। कः करोति, डुकृञ् करणे, इति तनादेरुः, करोतीति गुणः विकरणस्य तु नाम्यन्तयोरिति।

**⌣प इत्युपध्मानीयः १।१।१८**

पफयोरुपध्मानीयं न वेत्येतत्सूत्रविहितो विसर्जनीयादेशः। इह प इति संज्ञित्वेन पूर्ववद् उपात्तः। ध्माशब्दोऽग्निसंयोगयोरुपपूर्वः, उपध्मातव्य उपध्मानीय इत्यनीयः, पकारात् पूर्वो वर्ण इति व्याख्याक्रमोऽत्र पूर्ववन्मन्तव्यः। कः पातीति। पा रक्षणे, अन्विलुक्, कः फलतीति-फलानि।

**अं[1] इत्यनुस्वारः १।१।१९**

स्वृ शब्दोपतापयोरित्यस्मादनुपूर्वादनुस्वर्यत इति कर्तरि च कारक इति घञ्। अं इति लुप्तप्रथमैकवचनमिति। अं इति वर्णानां मध्ये अं इति यो वर्णः पठ्यते तस्येहानुक्रियमाणत्वादनुकार्येणार्थेनार्थवत्वादुत्पन्नस्य सेरादिलोप इत्यादिना लोपः। अं इत्यत्र यो विन्दुरित्येतेन विन्दुरिह संज्ञी नत्वकार इति दर्शयति। त्वं स्मरसीति। युष्मद् सि, त्वमहमिति त्वमादेशः।

**पूर्वपरयोरर्थोपलब्धौ पदम् १।१।२०**

अर्थ याञ्चायाम्, डुलभष्[2] प्राप्तौ, चुरादित्वादिन्। अर्थ्यत इति अर्थः। स्वरवृदृइत्यल्, कारितलोपः। उपपूर्वाल्लभेरुपलम्भनमुपलब्धिरस्त्यत एव ज्ञापकात् षानुबन्धलक्षणाप्रत्ययप्राप्तावपि क्तिप्रत्ययः। अर्थस्योपलब्धिरर्थोपलब्धिरिति कर्तृकर्मणोः कृतीति कर्मणि षष्ठ्यन्तस्यार्थशब्दस्य तत्पुरुषः। पद गतौ, पद्यते, क्षीयते येनार्थस्तत्पदम्। गोचरसंचरेति चर-शब्दाद् घप्रत्ययः। पूर्वपरयोरित्युच्यते। तत्र कः पूर्वः को वा पर इत्यपेक्षामपनेतुमाह — पूर्वस्य लिङ्गस्य परस्य च स्यादेरित्यादि शब्दव्युत्पत्तिनिमित्तेऽस्मिन्शास्त्रे शब्दसंस्कारोपयोगिनौ पूर्वपराविह गृह्येते। तदुपयोगिनौ च पूर्वपरौ प्रत्ययावेव

---

१. अमिति (भं०)
२. न्यूनपाठः (वा०)

प्रसिद्धावतस्तावेवात्र पूर्वपरत्वेनाभिमतौ । तत्र पूर्वशब्देन प्रकृतेर्लिङ्गस्य धातो-श्च ग्रहणम् । परशब्देनापि यथाक्रमं प्रत्ययस्य स्यादेस्त्यादेश्च[1] । पूर्वेणादिशब्दे-नौजसित्यादयो गृह्यन्ते । अपरेणापि तसन्तीत्यादयः । अन्यस्य तु परत्वेना-परिग्रहे कारणं वक्ष्यति । यस्समुदायस्तस्य पदसंज्ञा भवतीत्येतेन पूर्वपराविष्ट-समुदायस्यैवेयं संज्ञा न प्रत्येकं पूर्वपरयोरिति दर्शयति । एतच्च प्रत्येकं संज्ञा-सम्बन्धे प्रयोजनाभावाल्लभ्यते । नहि ग्रामोऽत्रेत्यादौ प्रकृतेः प्रत्ययस्य च द्वयोः पदव्यपदेशे सति किञ्चित् फलम् । एकयैव समुदायविषयया ग्राम इत्यस्य पद-संज्ञया अकारस्य लोपस्य प्रवृत्तेः । पदमिति पूर्वाचार्यसंज्ञापरिग्रहाच्च समुदाय-स्संज्ञी । यतो हि व्यवहारयोग्योऽर्थोपलभ्यते तत्पदम् । तथाविधश्चार्थः समु-दायादुपलभ्यते न तु एकस्मात् पूर्वस्मात्परस्माद्वा । तस्मात्समुदायस्यैवेयं संज्ञा तद्विशेषणं तु पूर्वपरयोरित्यर्थस्योपलब्धौ सत्यामित्येतेनार्थोपलब्धाविति सप्त-मीयं कालभावयोस्सप्तमीत्यनेनेति दर्शयति । अव्यधिकरणार्थस्योपलब्धस्य हि भावे पदसंज्ञाभावो लक्ष्यते ।

ग्रामो वस्स्वमिति । युष्मद् आम् एषां विभक्तावित्यन्तलोपः, स्वरागमः । सामाकम् । युष्माकमित्यस्य पदस्य लब्धव्यपदेशाद् ग्राम इत्यस्मादुत्तरस्य युष्मदस्मदोः पदमित्यादिना वमादेशौ । यजन्तेऽत्र यज् देवतापूजादौ[2], अन्ते, अन्वि, असन्ध्यक्षरलोपः । अत्रेति । एतद् त्र सप्तम्या इति त्र प्रत्ययः । तेष्वे-तदकारतामित्येतददोऽकारादेशः । यजन्त इत्यस्य पदत्वात् एदोत्पर इत्यकार-लोपः । अर्थोपलब्धिग्रहणं किमर्थं यावता पूर्वपरारब्धसमुदायस्येयं संज्ञा क्रियते न च तथाविधोऽस्ति कश्चित्प्रकृतिप्रत्ययसमुदायो यतोऽर्थो नोपलभ्यत इति व्यवच्छेद्याभावादपार्थकमर्थोपलब्धिग्रहणमिति पूर्वपक्षयति । ननु पूर्वपरौ यत्रे-त्यादि । यत्तच्छब्दाभ्यां संज्ञित्वेनाभिमतस्समुदायो निर्दिश्यते । अत्र परिहार-माह--सत्यमित्यादिना । अर्थावगमे पदसंज्ञा यथा स्यादित्येतदर्थम् अर्थोपलब्धि-ग्रहणम्[3] न कृतम् किं तर्हि, विशिष्टस्यार्थस्य विभक्त्यन्तेन शब्देन वाच्यस्य यदोपलम्भो भवति तदा यथा स्यादित्येतदर्थम् । एतच्च कथं प्रयोजनं भवति यदि परो विभक्तिसंज्ञकं परिगृह्यते । तेनेत्यादि । तेनार्थोपलब्धिग्रहणेन हेतुना स्यादित्यादि विभक्त्यन्तस्यैव शब्दस्य पदसंज्ञाप्रवर्तते न त्वन्यप्रत्ययान्तस्य स्यादित्यादिलक्षणाद् योऽन्यप्रत्ययः तदन्तस्येत्यर्थः । किं स्यादित्यादि । यद्य-

१. त्यादेस्स्यादेश्च (भं०)

२. न्यूनपाठः (भं०)

३. अर्थेनार्थोपलब्धिः (भं०)

न्यप्रत्ययान्तस्य पदसंज्ञा स्यात् को दोषो भवेदित्यर्थः । दोषमाह—ज्ञानबुधावित्यत्र प्रयोगे ज्ञानबुधित्ययमपि प्रत्ययलक्षणेन क्विबन्तः शब्दः पदमिति व्यपदिश्यते । ततश्च पदान्ते धुडामिति पदव्यपदेशनिबन्धनो धकारस्य प्रथमस्स्यात् । तस्मात् विभक्त्यन्तं पदं यथा विज्ञायेदित्येतदर्थमर्थोपलब्धिग्रहणम् । यद्येवमित्यादि । विशिष्टस्यार्थस्य परिग्रहायार्थोपलब्धिग्रहणं क्रियते तदा अर्थ इत्येव क्रियताम् । एवमपि कृते सत्यर्थग्रहणसामर्थ्यादेव विशिष्टार्थ-परिग्रहस्सिद्धः । अर्थ इति चेयं सत्सप्तमी । यत्र चार्थस्संस्तत्रावश्यमुपलभ्यत एवेत्यपार्थकमुपलब्धिग्रहणम् । ब्रूम इति । परिहारमिति विशेषः । तमेवाह—यत्रेत्यादि । उपलब्धिग्रहणे लब्धे यत् पुनरुपलब्धिग्रहणं कृतं तस्यैतत् प्रयोजनम् । यत्र पूर्वोऽस्ति परश्च नास्ति परो वा विद्यते पूर्वश्च न विद्यते तत्रापि पदसंज्ञा यथा स्यादित्युपलब्धिग्रहणसामर्थ्याद्धि पूर्वपरावप्रधानीकृतार्थोपलब्धे प्राधान्यं ख्याप्यते । तेनेत्यादि । उपलब्धिग्रहणेन हेतुनेत्यर्थः । व्यतिपूर्वस्यास्तेः से-प्रत्यय इति कर्मव्यतिहारेऽर्थे वर्तमानाद्धातोः कर्तर्यर्थे[1] आत्मनेपदं वक्तव्यमित्यनेन वचनेन परस्मैपदिनोऽप्यस् भुवीत्यस्मादात्मनेपदम् । से-प्रत्ययः अन्विलुक्, अत्र परस्य से-शब्दस्य पदत्वात् तत्परस्य युष्माकमित्यादेः क्वचित् प्रयोगे वस्नसादयो भवन्ति । दधीत्यत्रेत्यादि । पदत्वादेतदेव कार्यम् ।

**अनतिक्रमयन् विश्लेषयेत्**[2] १।१।२१

अतिपूर्वात्क्रमेरिति, क्रमु पादविक्षेप इत्यस्माद् दीर्घाभाव इति । अस्योपधाया इति प्राप्तस्य । नातिक्रमयन्ननतिक्रमयन्निति नञ् समासोऽयम् । प्रथमान्तयोरपि विभक्त्योः द्वितीयाद्या इत्यादिना द्वितीयाद्यभावेऽपि[3] क्वचिद् दृश्यते समास इति हि तत्रैव वक्ष्यति विपूर्वाद् श्लिषे इति श्लिष् आलिङ्गन इत्यस्मात् सप्तमी स्यादिति विधावर्थे विध्यादिषु सप्तमी चेत्यनेन । परिभाषेयमिति । परिभाषाप्रत्यवमर्शादियमिति स्त्रीत्वेन निर्देशः । परिभाषणं परिपरिभाट्, क्विप्, तस्यै परिभाषे । परिभाषणाय योगोऽयमिति व्याख्येयम् । वर्णानामेकत्र युक्तानामिति संश्लेषमुपगतानामित्यर्थः । ननु को नाम चक्षुष्मान् परत्र वर्णस्य विश्लेषणमव्यवहितेन रूपेण क्रमप्राप्तामुल्लङ्घ्य पूर्वत्र कुर्यात् । तत्किमनेनारब्धेन वचसेत्याशाङ्क्याह—बालानामित्यादि ।

---

१. कार्यर्थे (वा०)
२. १।१।२२ (दु० वृ०)
३. द्वितीयाऽपि (वा०)

**व्यञ्जनमस्वरं परं वर्णं नयेत् १।१।२२**[1]

अविद्यमानो स्वरो यस्य व्यञ्जनस्येति विग्रहः। नस्य लोप इत्यत्र तत्पुरुषग्रहणस्य समासविषयोपलक्षणम्। नस्य तत्पुरुषत्वाद् बहुव्रीहावपि नकारस्य लोपः। नयेदिति पूर्वविधौ सप्तमी। आद्यं पदचतुष्टयं द्वितीयान्तमिति नयतेर्द्विकर्मकत्वादित्यत्र हेतुः। यथा अजां ग्रामं नयतीति। विध्यर्थमिदमिति पर-नयनस्य विधीयमानत्वादविद्यमानस्य स्वरस्यैव वर्णस्य व्यञ्जनव्यपदेशप्रवृत्तेरस्वरग्रहणमतिरिच्यमानमुपध्मानीय- जिह्वामूलीययोरव्यञ्जनयोरपि पर-नयनार्थमिति केचिदाहुः तद्विघटयितुमाह—उपध्मानीयजिह्वामूलीययोः इत्यादि। अस्वरग्रहणं चेदं[2] मन्दमतीन्प्रति सिद्धस्यैवार्थस्यानुवादार्थम्, तथा च वर्णग्रहणमपि शक्यते हि वर्णाधिकारात्परं वर्णमित्यभिधातुम्।

**लोकोपचाराद् ग्रहणसिद्धिः १।१।२३**

लोकृ दर्शने। लोक्यन्ते श्रेयोऽर्थिभिर्जनैः। दृश्यन्त इत्यकर्तरि च कारके संज्ञायामिति घञ्। लोकोपचारादिति कर्मणि पञ्चमी, ल्यबन्तस्य शब्दस्य लोपः। कर्माधिकरणयोः पञ्चमी वक्तव्येत्यनेन लोकोपचारं समीक्ष्य ग्रहण-सिद्धिर्भवतीति ह्ययमत्रार्थः। सेधनं सिद्धिः, स्त्रियां क्तिः, ग्रहणस्य सिद्धिः ग्रहणसिद्धिः। लोकाः पूर्वाचार्याः इति तत्तद्वस्तु परिज्ञानार्थं सर्वैरवलोक्यन्त इति लोका उच्यन्ते ये शास्त्राणां प्रणेतारः पूर्वाचार्याः। कृत्ययुटोऽन्यत्रापीति युडिति भावे करणाधिकरणयोश्च विधीयमानो युट् कर्मणि न प्राप्नोतीत्यस्माद्वचनाद् भवतीति यथा राजभिर्भुज्यन्ते राजभोजनाश्शालय इत्यादौ कर्मसाधनेन च ग्रहणशब्देनात्र कार्यमुच्यते। तेनायमर्थः। लोकानामुपचारं समीक्ष्य ग्रन्थगौरवभयाद् यदिह शास्त्रे नोक्तं कार्यं तस्य निष्पत्तिर्भवति लोकोपचारात् तदनुमन्तव्यमित्यर्थः। किं पुनः तत्कार्यमित्याह—लुब्लोपलुप्तादय[3] इतिप्रत्ययादर्शनस्य लुक्संज्ञा, अदर्शनमात्रस्य च लोपसंज्ञा, दूराद्धाने प्लुत इत्यादयो विधय इहानुक्ताः पूर्वाचार्यशास्त्रादनुसरणीयाः। आदिग्रहणेनान्येषामनुक्तानां विधीनां परिग्रहः। यश्चेह शास्त्रे केनचिद् ज्ञापक-योगविभागादि-लक्षणेन प्रकारेण सङ्गृहीतुं न शक्यते तत्रानुसरणीयो लोकोपचारः न तु स्वशास्त्रसिद्धे सम्भवत्यपि प्रकारे तदनुसरणं ज्याय इत्यनेनाभिप्रायेणाह—यत्र त्वित्यादि। ज्ञापकेन

---

१. १।१।२१ (दु० वृ०)

२. चेदानीम् (भं०)

३. प्लुतादयः (भं०)

सिद्धिर्यथा नकारानुबन्धागमस्य[1] इदनुबन्धधातुविषयस्य । सः ह्यनिदनुबन्धानामिति प्रतिषेधारम्भादेव ज्ञापकसिद्धः । तत्र चेदितो नुं धातोरिति किमनेन लोकोपचारेण । योगविभागेनापि सिद्धिर्यथा चित्रगुः निष्कौशाम्बिरित्यादौ ह्रस्वत्वस्य । तद्धि स्वरः ह्रस्वः इति योगविभागादेव सिद्धम् । तत्र किं गोस्त्रियोरुपसर्जनस्येत्यनेन च योगविभागादिनेत्यादिग्रहणेन द्वाविंशतिरष्टाविंशतिरित्यादावात्वसिद्ध्यर्थं द्व्यष्टनोः संख्यायामबहुव्रीह्यशीत्योरित्यादिशास्त्रान्तरं नानुमन्तव्म् । आकारो महतः कार्य इति कार्यग्रहणादेव सिद्धत्वादिति दर्शयति । तदेवं कुशकाशावलम्बनेनापि स्वतन्त्रसिद्धावसत्यां लोकोपचारानुसरणं श्रेयः ।

भट्टोग्रभूतिकृते शिष्यालोकाभिधाने संज्ञापादः[2] प्रथमः ।

## द्वितीयः पादः

**समानस्सवर्णो दीर्घो भवति परश्च लोपम् १।२।१**

दीर्घी इत्यव्ययमिति । च्व्यन्तस्याव्ययत्वेन प्रसिद्धत्वात् लुप्तप्रथमैकवचनमिति । अव्ययाच्चेत्यनेन । च्वेश्च लोप इति, निर्देशसामर्थ्यादित्यपेक्षते । दधीहृत इति दधिशब्दादमो नपुंसकात्स्वमोरिति लोपः । ईह चेष्टायाम् । मधूहनमिति । ऊह वितर्के, युट् कर्मषष्ठीसमासः । होतॄषिरिति कर्मधारयः । मध्वानयेति मधुशब्दादमः पूर्ववल्लोपः । णीञ् प्रा,[3] आङ् पूर्वो हि । अन्विगुणः, हेरकारादिति सेर्लोपः । अथ लृकारस्यापि दीर्घविधिं प्रदर्शयितुमुदाहरणं कस्मान्नोपन्यस्तमित्याह--लृकारस्येत्यादि । तथा चाहुः शिक्षाकाराः "लृकारस्य दीर्घाः न सन्तीति" अनुकरणविषये तु सम्भवत्यपि लॄकारे ततः पूर्वस्य लृकारस्य दीर्घविधिभाजो न तथा प्रयोगस्सम्भवति । गम्लृ-सहितः लृकारः गम्लॄकार इत्येवं रपरस्तु दीर्घविधेर्विषयः सम्भवति न वेत्यत्र प्रयोगतत्त्वविदः प्रमाणम् । अथ समानग्रहणं किमर्थम्, यावता सवर्ण इति सप्तमी निर्देशात्सप्तम्या निर्दिष्टे पूर्वस्येति पूर्वेण दीर्घेण भवितव्यम् । पूर्वश्च यः सवर्णस्य सजातीयो वर्णो यदपेक्षया समानो वर्णस्सवर्ण इति व्यपदिश्यते तेनावश्यमर्थात्समानेनैव भवि-

---

१. नकारागमस्य (वा०)

२. सन्धिपादः (वा०)

१. प्रापणे (इति पूर्णपाठः)

तव्यम् । एवं च सवर्णे परे दीर्घ उच्यमानस्समानस्यैव भविष्यतीति किं समानग्रहणेनेति पूर्वपक्षयति । ननु सवर्णे पर इत्यादि । उच्यत इत्यादिना परिहरति, सवर्ण इति निमित्तोपादानबलादेव लब्धे समानग्रहणे यत्समानग्रहणं क्रियते तस्यैतत् प्रयोजनम् । यत्रापि प्रयोगे समानस्यानेन सूत्रेण दीर्घो न[1] क्रियते स्वभावदीर्घत्वाल्लक्षणान्तरेण वा दीर्घप्रवृत्तेस्तत्रापि दीर्घात्परस्य सवर्णस्य दीर्घो[2] लोपश्च यथा स्यादिति । अन्यथा हि दीर्घानुयायित्वेन विधीयमानस्सवर्णलोपः सति दीर्घत्वे सन्निपातपरिभाषया न स्यात् । तेनेत्यादि । तेन दीर्घमात्रात्सवर्णलोपप्रवृत्त्यर्थेन समानग्रहणेन हेतुना । कुमारीयं वृद्धेत्यत्र च परसवर्णलोपः सिद्ध्यति । कुमारीशब्दो वयसि प्रथम इति ई-प्रत्ययान्तः स्वभावदीर्घः वृद्धा इत्ययमपि जसीति लक्षणेन कृतदीर्घः । इदानीमेतत् प्रयोजनं विघटयितुमाह—ननु पर लोपार्थमित्यादि । यथैव आत्वरादीनां च इत्यनेन त्वरादीनामभ्याससम्बन्धिनोऽकारस्यैवात्वं सन्वदित्त्वदीर्घत्वबाधनार्थं क्रियते । तथैव कुमारीयं वृद्धा इत्यादावपि परलोपसम्पत्तये दीर्घस्यैव दीर्घः करिष्यते । इत्थं च कृते दीर्घत्वे तदनुयायी परसवर्णलोपो भविष्यतीति किं तत्प्रवृत्त्यर्थेन समासग्रहणेन । नैवं शक्यमिति । दीर्घस्य दीर्घविधानमिति शेषः । कथं न शक्यमित्याह—दीर्घीति हि च्विनेत्यादि हि यस्मादर्थे च्विनेति चेयं विशेषण इति तृतीया, तेनायमर्थः दीर्घीत्ययं निर्देशश्च्विप्रत्ययेन यस्मात्तस्माद्दीर्घस्यैव दीर्घविधानमशक्यमेवं कर्तुम् । कथं पुनः च्विप्रत्ययनिर्देशे सत्यशक्यमेवं कर्तुमित्याह—तेन दीर्घो ह्रस्व इत्यादि । तेन च्विप्रत्ययनिर्देशेनाभूततद्भावार्थाभिधायकेन हेतुना अदीर्घो ह्रस्वो दीर्घादेशविधिं प्रति स्थानित्वेनाक्षिप्तो न तु दीर्घोऽपि । तत्कथं[3] दीर्घस्यैव परलोपसम्पादनाय दीर्घो भवेत् । च्विप्रत्ययेन चायं दीर्घीति निर्देशो न तु तदस्यास्तीति इन्प्रत्ययेन भवति ग्रहणानर्थक्यप्रसङ्गात् । च्विप्रत्ययस्य निर्देशे तु नानर्थकं भवति ग्रहणम् । असति हि तस्मिन् कृभ्वस्तियोगे स्मर्यमाणस्य च्वेरप्रवृत्तिप्रसङ्गात् । एवं च च्विप्रत्ययप्रभावाद् दीर्घस्य दीर्घत्वाप्रवृत्तेः ।

कुमारीयमित्यादौ पर सवर्णलोपो न भवेदिति[4] तत्सिद्धये समानग्रहणम् । यद्येवम्, च्विप्रत्यय एव न निर्देष्टव्यः, प्रयोजनाभावात् । प्रत्युतनिर्देशे

---

१. दीर्घेन (वा०)

२. दीर्घो लोपश्च (?)

३. तत्केन प्रकारेण (भं०)

४. स्यादिति (वा०)

समानग्रहणं कर्तव्यं जायत इति पराभिप्रायमाशङ्क्य परिहर्तुमाह—च्विप्रत्यय-निर्देशस्तर्हि इत्यादि। तथेत्यनेन च्विप्रत्ययं प्रत्यवमृश्यते तथा तेन च्विप्रत्यय-प्रवृत्तिलक्षणेन प्रकारेण सूत्रे निर्देशस्य यत्करणं तद्[1] वैचित्र्यार्थम्। अर्थशब्दः प्रयोजनवाची। वैचित्र्यं वैचित्र्यता। च्विप्रत्ययनिर्देशस्य प्रयोजनं तच्च च्व्य-न्तशब्दविषयं विवक्षितं भवति। तेनैतदुक्तं भवति—च्विना निर्देश एतदर्थः क्रियते। दीर्घीभवतीत्यादिवच्छुक्लीभवतीत्यादीनामपि विचित्राणां च्व्यन्तानां शब्दानां साधुत्वं स्यात्। आचार्येण हि किञ्चित् साक्षात् लक्षणं प्रणीतं किञ्चिच्चैवंविधेन प्रकारेण सङ्गृहीतमिति च्विनिर्देशश्च्व्यन्तानां साधुत्वसं-सूचनार्थः कर्तव्यः। यद्येवम्, भवति योग एव तेषां साधुत्वं स्यात्। शुक्ली करोति, शुक्ली स्यादित्यादयस्त्वसाधव एव स्युः। अस्त्येतत्। भवतिस्तु धातुः क्रियासामान्यवाची धातूपलक्षणपरो विज्ञास्यते। तेन कृञस्तिभ्यामपि क्रिया-सामान्यवाचिभ्यां योगे च्विः भविष्यति। न च विद् सत्तायामित्यनेनापि योगे स्यादित्याशङ्कनीयम्। तद्योगे च्वेरभिधानाभावात्। अभिधानलक्षणाश्च कृत्तद्धितसमासाः। अभूततद्भावलक्षणस्तर्ह्यर्थः च्व्यन्तस्य दीर्घीत्यतो निर्देशात्[2] कथमवाप्य इति चेत्, न। शब्दैरर्थाभिधानस्य स्वाभाविकत्वात्। तथा च देवानाप्नोतीति वातमाप्नोतीति इत्येवं व्युत्पादितावपि देवापिवातापि-शब्दा-वसुरविशेषलक्षण एवार्थे वर्तेते, शब्दशक्तिस्वाभाव्यात्। तस्माच्च्विना निर्देश-श्च्व्यन्तानां साधुत्वद्योतनार्थः कृतः। तेन ह्रस्वस्यैव समानस्य दीर्घत्वविधाना-द्दीर्घाणां दीर्घाप्रवृत्तेः स्वभावदीर्घाल्लक्षणान्तरे वा कृतदीर्घात्परस्य समाना-त्परस्य सवर्णस्य लोपो न स्यात्। सः यथा स्यादिति समासग्रहणं क्रियते। ननु सवर्णे परे समानस्योत्तरैर्लक्षणवाक्यैरेत्वादीनि कार्याणि वक्ष्यन्ते, अतः पारिशेष्यात्सवर्ण एव दीर्घो विज्ञास्यत इति किं सवर्णग्रहणेन, उच्यते—निमित्त-शून्यमिदं दीर्घविधानं मा भूदिति सवर्णग्रहणम्। नन्वेवं च सति परश्च लोप-मित्येतत् कथं सङ्गच्छते। तत्राप्युच्यते—आमिप्रत्ययविधौ सः लोपवदन्वाचीय-मानोऽपि परलोपः यथा स्यादिति कैवास्यासङ्गतिः। अथ दण्डहस्त इत्यत्र दीर्घः कस्मान्न भवति। अस्ति ह्यत्र सावर्ण्यम्, अकारापेक्षया हकारस्य सावर्ण्यसद्भावात्। अकुहविसर्जनीया[3] कण्ठ्या इति स्थानसावर्ण्यात्। उच्यते—प्रत्यासत्तेस्तेषां द्वौ द्वावित्यनेन परस्य सवर्णव्यपदेशः तस्यात्र निमित्तभावः। न चैवं हकारस्येति न भवति तस्मिन्परे दीर्घः। न च न व्यञ्जन इति निषेध-

१. तद्वैचित्र्यम् (भं०)

२. निर्देशः (वा०)

३. अकुहविसर्जनीयानाम् (वा०)

स्यायं विषय इति वाच्यम् । अभिहितेन हेतुना दीर्घत्वस्य प्राप्त्यभावात्परग्रहणं समानस्यैव पक्षे लोपो मा भूदिति । शकन्ध्वादीनां पूर्वलोप[1] एव वक्तव्य इति एवकारो दीर्घव्यावृत्त्यर्थः । के पुनस्ते शकन्ध्वादयश्शब्दा इत्याह—येषां शब्दानामित्यादि । शिष्टप्रयोगानुसारेणेति न तु स्वमनीषिकयेत्यर्थः । शकन्धुरित्यादिशब्दः पचाद्यजन्तः । कुलशब्दः कुल-संस्त्यान इत्यस्य नाम्युपधत्वात्कप्रत्ययान्तः । अजा शब्दो जान्तः । त्रयोऽप्येते षष्ठी-समासाः । केशविषय एवेति सीमन्तशब्दः साधुरिति शेषः । अन्यत्रेति[2] केशविषयात् ।

**अवर्ण इवर्णे ए १।२।२**

इवर्णे इति सप्तमी कालभावयोरित्यनेन । एवमन्यत्राप्येवं प्रकारे विषये सप्तम्यनेनैव मन्तव्या । ए इत्यस्मात्स्वरूपेणार्थेनार्थवत्वादुत्पन्नस्य सेरादिलोप इत्यादिना लोपः । एवमुत्तरत्रापि । एवं च सर्वत्रेति । इवर्ण इत्यत्र निर्देशे उत्तरत्र चैवमेव कर्मधारयो बोद्धव्यः । परश्च लोपमित्येवेति । ननु परलोपग्रहणं प्राक्तनयोगे कृतकृत्यत्वादुपक्षीणसामर्थ्यं तत्कथमिहानुवर्तते, केनोक्तं तदनुवर्तत इति, किं तर्हि तत्सदृशं शब्दान्तरप्रयोगसंसिद्धये यदनुमीयते तदिहानुवर्तते । यथा च न च परलोप्य इत्याह—एवं सर्वशब्दानाम् अनुवृत्तावयमेव प्रकारः । अवर्ण अकाराकाराविति । स्वरस्सवर्णस्य ग्राहक इति वचनात् । तवेदमिति । युष्मद् जस्, तवममजसीति तवादेशः । सेयमिति । तद् सि त्यदाद्यत्वम्, तस्य च आप्प्रत्ययः । सूत्रे सन्धिर्न कृत इत्यादि । इवर्ण ये इति हि अयादेशलक्षणो सन्धौ कृते इवर्ण इति लुप्तसप्तमीकं पदं ये इत्येव रूपस्तु वमादेशोऽत्र इति कस्यचिन्मन्दमतेस्सन्देहः स्यात्, सः मा भूदिति सन्धिर्न कृतः । सूत्र इति च जातावेकवचनम्, तेन वक्ष्यमाणेष्वपि सूत्रेष्वेवमेव बोद्धव्यम् ।

**उवर्णे[3] ओ १।२।३**

अवर्णवत् ।

**ऋवर्णे अर् १।२।४**

ऋ चासौ वर्ण ऋवर्णः । अरो रेफस्य विसर्गो न कृतः, स्वरूपभङ्गभयात् । उवर्णमिति । ऋणशब्दो भित्तर्णवित्ताश्शकल इत्यत्र साधुः । सर्द्धिरिति । ऋधु

---

१. पर (भं०)

२. अन्यत्र हि (भं०)

३. न्यूनपाठः (वा०)

वृद्धौ, अर्द्धनमिति[1]। स्त्रियां क्तिः ऋणप्रवसनेत्यादि। ननु ऋणार्णमित्यादौ अरादेशे कृते ह्रस्वस्य दीर्घतेत्यनेन सिद्धो दीर्घः। नामधातुविषयेऽप्यकारः प्रवृत्त्यप्रवृत्ती तत्रैव क्वचिद्ग्रहणानुवृत्त्या अरो दीर्घविकल्पे कृते विज्ञास्येते। तत्किमरादेशविधानेन, नैतत्, तत्र ह्याकारो महतः कार्य इत्यतः पदग्रहणस्यानुवृत्तेः। पदे परतः पूर्वपदस्य ह्रस्वान्तस्य दीर्घो विज्ञायते। तत्कथमरादेशे[2] कृते दीर्घस्स्यात्। ननु पूर्वपदेन ह्रस्वं विशेषयिष्यामः। पूर्वपदस्य यो ह्रस्व इति तथा च अनन्त्यस्यापि अरो अकारस्य दीर्घो भविष्यति। नैवं शक्यम्। एवं हि सति पूर्वपदस्य सम्बन्धिनो ह्रस्वस्य यत्र-तत्रस्थस्यापि दीर्घः स्यात्, ततो[3] ह्रस्वेनैव पूर्वपदं विशेष्यम्। तथा च पूर्वपदस्य ह्रस्वान्तस्येति विज्ञायमाने अरादेशस्य दीर्घो न सिध्यति। ननु दीर्घशब्देनाक्षिप्यमाणस्य ह्रस्वग्रहणस्य तत्रातिरिच्यमानत्वादनन्त्यस्याप्यरो ह्रस्वस्य दीर्घो भविष्यति, अस्त्येतत, अतिप्रसङ्गस्तु स्यात्। क्वचिद् ग्रहणानुवृत्त्या न भविष्यति इति चेत्सोऽयं व्यक्तः। एवं लक्षणानुसारेण व्यवहरतामन्धकुक्कुटीन्याय इति वक्तव्यमेव ज्यायः। ऋणार्णमित्यादि। ऋणाधिकमृणम्, प्रकृष्टमेव ऋणम् वसनमेव ऋणम्, वत्सरमेव ऋणम्, कम्बलमेव ऋणम्, दशानामेव ऋणम् इति विग्रहः। शीतार्त इति। शीतशब्दे श्यायतेः क्त प्रत्ययः। द्रवघनस्पर्शयोश्श्यः सम्प्रसारणम्, तद्दीर्घमन्त्यमिति दीर्घः ऋत[4] इत्यतो गत्यर्थाकर्मकेति क्तः, आधमर्ण्याभावाद् भित्तर्णवित्ताश्शकलाधमर्णभोगेष्विति नत्वाभावः। सुखार्त इति। सुखेश्चौरादिकाददन्तादिनि कृते पचादित्वादच्। उपसर्गावर्णस्येत्यादि। प्रादीनामुपसर्गाणां सम्बन्धिनो वर्णस्य धातुसम्बन्धिनि ऋकारे परे आरादेशो वक्तव्यः। प्राच्छेतीति। ऋच्छेन्द्रियेत्यस्य रूपम्। नामधातौ[5] तु वेति नामलिङ्गविभक्त्यन्तमाहुः। नामभूत्वा यो धातुस्सम्वृत्तस्ते धातव इति वचनेन। तत्र नामधातौ य ऋकारस्तस्मिन्परे उपसर्गावर्णस्यारादेशो वा वक्तव्यः। पक्षे अरादेशः।

**लृवर्णे अल् १।२।५**

ऋकारलकारयोस्सावर्ण्यादृकारस्येव लृकारस्याप्यात्वे कते आ चासौ वर्णश्चे ति लृवर्ण इत्येवं विग्रहः तवल्कारः।

---

१. तत्किमारादेशे कृते (वा०)

२. अवर्णमिति (वा०)

३. तेन (भं०)

४. इत्यत्रान्ते (वा०)

५. नाम्नो (भं०)

**एकारे ऐ ऐकारे च १।२।६**

खट्वैतिकायन इति । कस्यापत्यमिति कुञ्जादेरित्यायनण्, सप्तमीतत्पुरुषः । तमैषेति । एतत् सि त्यदाद्यत्वम्, सो सः, श्राप् । प्रेलयति । इल् प्रेरणे चुरादित्वादिन्, गुणः । प्रैषः, प्रेष्य-इति । ऐष एष इत्येते इषेः घञि घ्यणि च, गुणे कृते सति रूपे । प्रैतीति । इण् गतौ । प्रैधत इति । एध वृद्धौ । कथं तर्हीत्यादि । ऐषैष्ययोः सम्बन्धिन्येकारे परे लोपो निषिद्धः । तत्कथं प्रैषः प्रेष्य इत्येते रूपे भवत इति प्रश्न ? ईष उञ्छे इत्येतस्येति द्वे रूपे भवत इति घञि घ्यणि च गुरूपधत्वाद् गुणाभावे सतीति विशेषः । स्वशब्दाकारस्येत्यादि । स्वशब्दस्य सम्बन्धिनोऽकारस्येरीरिन्नित्येतयोः परयोः ऐत्वं वक्तव्यम् । स्वैरमिति । ईर् गतौ भावे घञ्, स्वस्येरः स्वैरः, क्रियां काञ्चिदध्याहृत्य विशेषणत्वान्नपुंसकत्वम् । स्वैरीति । स्वमीरितुं शीलमस्या इति । नाम्न्यजाताविति णिनिः । ननु स्वैरोऽस्यास्तीति सन्त्वादित्वादिनि कृते स्वैरीति भविष्यतीति किमीरिन् ग्रहणेन, ग्रस्त्येतत्, स्वेन ईरते अवश्यमिति आवश्यकाधमर्ण्ययोर्णिनौ सति स्वैरीत्यपि[1] रूपं स्यादिति ईरिन्-ग्रहणम् ।

**ओकारे ओ औकारे च १।२।७**

खट्वौपगव इति । उपगतो गावो यस्य स उपगुः । स्वरो ह्रस्व इति ह्रस्वः । उपगोरपत्यमित्यण् । उवर्णस्त्वौत्वमापाद्यः । सप्तमी तत्पुरुषः । औखतीति उख गत्यर्थः । उख उखीत्यत्र पठ्यते स्थूलौतुरिति । ओतुर्मार्जारः, कर्मधारयः । बिम्बौष्ठीति बहुव्रीहिः । अक्षौहिणीति । अक्षाणामूहोऽस्यास्तीतीन्प्रत्ययः । ऋन्नेभ्यस्त्वीति । प्रौह इति । ऊहेः भावे घञ्, प्रौढः प्रौढिरिति वहेरेकत्र निष्ठेति क्तः । अन्यत्र स्त्रियां क्तिः स्वपिवचीति सम्प्रसारणम् । होढः, घढधभेभ्य इति धत्वम्, तवर्गस्य षढेति धस्य ढः ढोढे लोप इति ढलोपः । उपधायाश्च दीर्घः ।

**इवर्णोऽयमसवर्णेन च परो लोप्यः १।२।८**

य इत्यस्मात्स्वरूपेणार्थेनार्थवतो विधीयमानत्वात्कर्मणि द्वितीया, लोपनीयो लोप्यः । शकिसहीति य-प्रत्ययः । व्यञ्जने पर इत्यादि । न व्यञ्जने स्वरा इति यत्वादेस्सन्धिकार्यस्य व्यञ्जने परे प्रतिषेधो वक्ष्यते । अतो हेतोः स्वर एव परे सामर्थ्याद् यत्वादिकार्यम् अत्र प्रकरणे विज्ञायते । दध्यत्रेति । दधि-

---

१. स्वैरीति (वा०)

शब्दे डुधाञः कि-प्रत्ययान्तः । नद्येषेति । नदतीति पचादित्वादच्, नदादित्वादीकारः । एषेति प्राग्वत् । नन्वसवर्णे परे वर्णान्तराणां वत्वादीनि सन्धिकार्याणि सन्तीति सामर्थ्यादिवर्णस्यैव यत्वमसवर्णे भविष्यतीति किमिव वर्णग्रहणेन, अस्त्येतत्, आन्तरतम्यात्तु तालव्यो यकारादेशः । तालव्यस्य चवर्गस्याप्याशङ्क्यते इति । ततश्च पचति यजतीत्यादावपि यत्वं स्यात् । तन्मा भूदेष दोष इतीवर्ण-ग्रहणम् । असवर्ण इति किम् ? इति इवर्णस्य सवर्णेदीर्घविधानादसवर्ण एव यत्वं भविष्यतीति, तत्किमसवर्णग्रहणेनेति प्रश्नः । अथ मतम्, यत्र सवर्णेऽपि दीर्घत्वं न विहितं कुमारी इयं कुमारीयमित्यादौ । तत्र यत्वं माभूदिति, तन्न, यतो दीर्घविधौ समानग्रहणादत्र परसवर्णलोपे कृते न व्यञ्जन इति यत्वस्य निषेधो भविष्यति, तत्किमेतन्निवृत्त्यर्थेनासवर्णग्रहणेन । न च स्वरादेशत्वात् बलीयो यत्वं लोपात्पूर्वं प्राप्नुयादित्याशङ्कनीयम् । स्वरूपस्यादेशस्य स्वरादेशपरिभाषया लोपात्पूर्वं प्रवृत्तेः । तथा च यस्य इत्यादौ सि-लोपात्पूर्वं स्वरूपादेशस्ताद्यकारं च प्रवर्तते । एवं च कृत्वा नामि व्यञ्जनान्तादिति आयेराकारे[1] लुप्ते स्वरवद् भावविधानमर्थवद् भवतीत्याह — दधीत्यादि । यत्वं प्रति निमित्तं वर्णमावेदयितुमसवर्णग्रहणं क्रियते अन्यथा तु निमित्तं विना यत्वं विधीयमानं दधीत्यादावपि प्रसज्येत । कथं पुनः सत्यवर्णग्रहणे वर्णस्य निमित्तभावश्शक्य आवेदयितुम् ? उच्यते — सवर्णादन्यस्मिन्वर्णे असवर्णे इत्येवं व्याख्यायमाने सति वर्णस्य निमित्तत्वेन परिग्रहात् । असवर्ण इति हि पर्युदासोऽयम् । पक्षान्तरे त्वभिहितेन न्यायेनापार्थकमसवर्णग्रहणं स्यात्, तस्मात् सवर्णादन्यस्मिन् वर्णे परे यत्वमिदमित्यसवर्णग्रहणाज्ज्ञायते । नन्वेतद् परलोप निषेधारम्भसामर्थ्यादेव विज्ञास्यते, नैतत्, अन्वाचीयमानोऽपि हि परलोपनिषेधः स्यात् । पर्युदासे च सवर्णादन्यो वर्णः समान एव न निमित्तम् । दीधीवीव्योरित्यसमानेऽपि ओकारे परे यत्वस्य दर्शनात् । न च विसर्गेऽपि वर्णे परे यत्वमाशङ्कनीयम् । इदुदग्निरिति इकारस्याविकृतस्य दर्शनात् । तस्माद्वर्णस्य यत्वं प्रतिनिमित्तत्वार्थमसवर्णग्रहणम् । अत एवासवर्णे पर इति वृत्तावुक्तम् । प्रसज्यप्रतिषेधे तु सवर्णे न भवतीति व्याख्यायमाने कीदृशमभावस्य परत्वं स्यात् । वर्णश्च स्वर स्वर एव न व्यञ्जनम् तत्र निषेधस्य वक्ष्यमाणत्वात् लोपप्राप्तेर्विषये पर एवेति परग्रहणं विस्पष्टार्थम् । तथा च लोप्यग्रहणमपि लोपस्यैव हि प्राप्तस्य निषेधो विज्ञास्यते न च पर इति कृते परस्यैवाशङ्क्येत, परलोपग्रहणानुवृत्त्यैव परस्याभावसिद्धेः । न च पर इत्यस्यानर्थक्यप्रसङ्गात् ।

---

१. आयिः (भं०)

**वमुवर्णः १।२।९**

असवर्णे पर इति । सवर्णादन्यस्मिन्स्वरे वर्णे पर इत्यर्थः । एवमुत्तरत्रापि व्याख्येयम् । वध्वाख्येति । आख्यानमाख्येति । ख्यातेराङ्पूर्वात् । आतश्चोपसर्ग इत्याङ्-प्रत्ययः । षष्ठीसमासः ।

**ए अय्** [1]**१।२।१०**

ए इत्यस्मादनुकार्येणार्थेनार्थवत्वात् सेरुत्पन्नस्यादिलोप इत्यादिना लोपः । अनुकार्यस्त्वत्र प्रयोगस्थ एकारः । एवमुत्तरत्रापि । अय् इत्यस्मात्स्वरूपेणार्थेनार्थवत्वात्प्रथमा । एवमुत्तरत्रापि । बुद्धय इति । बुधेः स्त्रियां क्तिः ।

**ओ अव् १।२।११**[2]

पक्षे गोऽग्रम्, गोऽजिनमित्येदोत्पर इत्यकार लोपः । इह तु नित्यमिष्यते इति । स च इष्यमाणो वा शब्दस्य व्यवस्थितविभाषाविज्ञानाल्लभ्यते । गवेन्द्रः गवाक्ष इति षष्ठी समासावेतौ ।

**अयादीनां य-वलोपः पदान्ते न वा लोपे तु प्रकृतिः १।२।१२**[3]

यश्च वश्च तौ यवौ, यवयोर्लोपः । अत्र यवयोरयादीनपेक्षमाणयोस्सापेक्षत्वादयुक्तार्थत्वे अपि समासो भवत्येव । यवयोः केवलयोरसम्भवात् सापेक्षत्वस्याव्यभिचारात् । एवंविधायां चापेक्षायां दृश्यते समासो यथा देवदत्तस्य गुरुकुलमित्यत्र गुरोः । न वेति निपातसमुदायो विकल्पार्थः, प्रतिषेधार्थोऽपि च दृश्यते । सः तु न गृह्यते प्रतिषेद्धव्याभावात् । लोप इति सप्तमीकालभावयोरित्यनेन । प्रकृतिशब्दोऽव्युत्पन्नः स्वभावार्थवृत्तिः । क आसते । (इह[4] लोपे सति सामान्येन यस्य कस्यचित्कार्यं प्राप्नोति तस्य प्रकृतिभावः, नत्वयादीनामेव सम्बन्धिनस्स्वरस्य । तेन कस्मा आसनमित्यादौ दीर्घात्परः लोपो भवतीति) किमो जस्, किं कः, जस्सर्व ईस् आसे अन्ते प्रत्ययः, आत्मने चानकारादिति न-लोपः, अयादेशः, अनेन य-लोपः । कस्मायिदमिति । किम्, ङे, किं कः, स्मै सर्वनाम्नः । इन्द इतीति । इन्दु शब्दस्य सम्बुद्धौ चेत्योत्वम् ।

१. १।२।१२ (दु० वृ०)
२. १।२।१४ (दु० वृ०)
३. १।२।१६ (दु० वृ०)
४. न्यूनपाठः (वा०)

भूतपूर्वं ह्रस्वमाश्रित्य ह्रस्वनदीति सि-लोपः । वक्ष्यति हि तत्र सम्बुद्धिग्रहणेऽनुवर्तमाने पुनः सि-ग्रहणं भूतपूर्वाभ्यामिकारोकाराभ्यां सिलोपप्रतिपत्त्यर्थमिति । असा इहेति । अदस्, सि, सावौ सिलोपश्चेत्यौत्वम् । सेश्च लोपः । सौ स इहेति इदमो रूपम् । गौर्यत्रेति । गौरशब्दोऽत्राव्युत्पन्नः । गौरादेरितीकार-प्रत्ययः । वर्णान्त्यपरिभाषया यवयोर्लोपे सिद्धे पदग्रहणमस्याः परिभाषायाः अनित्यत्वज्ञापनार्थम् । एतेन तत्रेदमिरिति इदमोऽन्त्यस्येत्वं न भवति । न वा शब्दो विकल्पवाच्यप्यस्तीति बोधयितुं वा ग्रहणमेव न कृतम् । ननु प्रकृतिग्रहणेनात्र सन्धिकार्यं निषिध्यते, तच्च यवयोर्लोपप्रवृत्तावेव प्राप्तः न त्वप्रवृत्तावित्यर्थाल्लोप एव सति प्रकृतिरिति विज्ञास्यते, तत्किं लोपग्रहणेन, असदेतत्, लोपाप्रवृत्तावपि परनयननिवृत्तिकारिणी प्रकृतिस्स्यादिति लोपग्रहणम् । तु-शब्दः प्रकृतिभावो नित्य एवेति विशेषद्योतनार्थः । नेति कर्तव्ये प्रकृतिग्रहणं वैचित्र्यार्थम् ।

**एदोत्परः पदान्ते लोपमकारः १।२।१३**[1]

पदान्ते यावेदोताविति । एतेन पदान्तग्रहणम् तत्पुरुषं उत्तरपदार्थप्रधाने लब्धाप्रधानभावयोरप्येदोतोरेव विशेषणम् न तु प्रधानस्याकारस्येति दर्शयति । अन्यथा हि नय भवेत्यादावपि गुणे कृतेऽकारलोपः प्रसज्येत । बहुत्वे स्त्रियां यतोऽपैतीत्यादयश्च निर्देशाः न सङ्गताः स्युः । अयवोर्बाधः इति । यस्मिन्प्राप्ते यो विधिरारभ्यते सः तस्य बाधको भवतीति । अग्नेऽत्र वायोऽत्रेति । अग्नि-वायु-शब्दयोः सम्बुद्धौ चेत्येत्वमोत्वञ्च । एदोदिति । तपरकरणमसन्देहार्थम् ।

नो अत्रेत्यादावकार-लोपाभावं प्रति पुनः पदान्तग्रहणं हेतुत्वेनोक्तम् । एतच्च ग्रन्थाधिक्यादर्थाधिक्यमेव लभ्यते । सन्धेरविवक्षणं वा अकारलोपाभावे हेतुरित्यपरे मन्यन्ते । तान् प्रति तु पदान्तग्रहणमिहैव पदान्ते विधिर्नोत्तरत्रेत्यवधारणार्थम् । तेन न व्यन्जन इत्यस्य निषेधस्यापदान्तेऽपि प्रवृत्तेः । चितं स्तुतमित्यादौ यत्ववत्वे न भवतः । यवलोप इति । समासस्थं लोपग्रहणमिहाकृष्टं दुश्शकमिति पुनर्लोपग्रहणम् । कारवचनं तपरस्तत्कालस्य ग्राहकः । कारशब्दपरश्चेति तत्कालार्थं कृतम् । तेन वायो आयाहि वायवायाहीत्यादौ आकारस्य लोपो न भवति ।

---

१. १।२।१७ (दु० वृ०)

**न व्यञ्जने स्वरास्सन्धेयाः १।२।१४[1]**

सन्धेया इति। सम्पूर्वाद् धाञः सन्धातव्या इति स्वराद् यः, आत्खनोरी चेतीत्वं, गुणः। यत्वादयस्सामान्येनेत्यादि। आदिग्रहणेन वत्वरत्वादयो विधयः गृह्यन्ते। यत्वविधौ स्वरग्रहणस्यासत्वाद् यत्वादयो विधयः स्वरे व्यञ्जने च सामान्येन विहितास्ते स्वर इव व्यञ्जनेऽपि परे प्रसज्येरन्। मा प्रसाङ्क्षुरिति निषेधोऽयमारभ्यते। गौरीगृहमिति। गृहशब्दो गेहे त्वमिति ग्रहेरक् प्रत्ययान्तः। त्रयोऽप्येते षष्ठीसमासाः। यथाक्रमं यत्ववत्वरत्वानि निषिध्यन्ते। पित्रमित्यत्र रत्वमिष्यत इति स्वरग्रहणादिति शेषः। यत्वादिलक्षणो हि विधिस्स्वराणामेव प्राप्त इति त एव सन्धिनिषेधभाजो विज्ञास्यन्त इति स्वरग्रहणं क्वचित्सन्धिनिषेधस्यानित्यत्वे हेतुः सम्पद्यते। एवं गव्यूतावप्यवादेशः। अन्यत्रेत्यध्वपरिमाणात्। यूतिशब्दः साति हेति इत्यत्र साधुः। अथ सन्धेय-ग्रहणं किमर्थम्, यावता व्यञ्जने परे स्वराः यत्वादीनि न प्राप्नुवन्तीत्यर्थः विनापि सन्धेयग्रहणं विज्ञास्यते, अस्त्येतत्, संहिताविषये तु कार्याणि पाश्चात्यानीति प्रदर्शयितुं सन्धेयग्रहणम्। तेनाविवक्षणे संहितायाः सन्धिकार्यं न भवति। का पुनरियं संहिता। परो यः सन्निकर्षो वर्णानां वर्णशून्येन कालेनाव्यवधानं सा संहिता।

[2]भट्ट श्री उग्रभूतिकृते शिष्यहितान्यासे भट्टोत्सवलिखिते द्वितीयस्सन्धिपादः।

## तृतीयः पादः

**ओदन्ता अ इ उ आ निपाताः स्वरे प्रकृत्या १।३।१**

नो इत्यादीनामेकदेशानुकरणमोकारः। उकारोऽसन्देहार्थः। निपतत्यन्त्येषु अर्था इति निपाताः। व्यञ्जनाच्चेति[3]। अधिकरणे घञ्। प्रकृतिशब्दोऽव्युत्पन्नः, ततः प्रकृत्यादित्वात्तृतीया। तथा अ इ उ आश्चेति। निपाता इत्यपेक्षते। नो इतीत्यादि। नो प्रभृतिभ्यः सेरव्ययाच्चेति लुक्, प्रकृतिभावादवादेशस्याभावः। अ अपेहीत्यादि। अत्रापि समानदीर्घस्य। अपेहीति। अपपूर्वादिणः हि, अन्विलुक्, हौ चेति गुणाभावः। इ इन्द्रं पश्येति। दृशिर् प्रेक्षणे,

---

१. १।२।१८ (दु० वृ०)

२. द्वितीयः पादः समाप्तः (पुष्पिका भं०)

३. व्यञ्जनान्ताच्चेति (भं०)

हि अन्विलुक्, दृशेः पश्यः, हेरकारादिति हि लोपः पूर्ववत्[1]। उ उत्तिष्ठेति। तिष्ठतिरुत्पूर्वः, स्थस्तिष्ठः, हि लोपः पूर्ववत्। आ एवं नु मन्यस इत्यादि। अत्रैवं न भवति। मन्यस इति। मन ज्ञाने, दिवादेर्यनः यद्येवम्, क्रियायोगे मर्यादाभिविधौ च य आकारस्तस्यापि प्रकृतिभावः कस्मान्न भवति। आ उष्णं ओष्णम्, आ इह एहि, आ उदकान्तात् ओदकान्तात्, आ आहिच्छत्राद् आहिच्छत्रादिति। उच्यते—द्विविधोऽस्ति आकारः, अङनुबन्धो ङनुबन्धश्चेति। तत्र आकारादिभिरनुबन्धैः साहचर्यादङनुबन्धस्यैवाकारस्य ग्रहणं न तु ङनुबन्धस्य। क्व पुनरयमङ्-अनुबन्धः ? उच्यते—यत्र पूर्वप्रक्रान्तस्यार्थस्य अन्यथात्वद्योतनायाकारः प्रयुज्यते, यथा—आ एवं नु मन्यस इति। नैवं त्वं पूर्वमवमंस्थाः, सम्प्रति तु मन्यस इति। यत्रापि च स्मृतेः सूचकः आकारः प्रयुज्यते तत्रापि अङनुबन्धस्य यथा—आ एवं किल तत् इति। ईषदर्थादिषु वर्तमानो ङनुबन्ध इति, नासाविह गृह्यते, कुतः पुनरेष विशेषावसायो यदीषदाद्यर्थवृत्तिरयमाकारो ङनुबन्धोऽन्यत्राङनुबन्धः। अत्रोच्यते[2]—आङीषदर्थे, आङ्मर्यादाभिविध्योरिति च पूर्वाचार्यवचनादीषदर्थे मर्यादाभिविधौ च ङनुबन्धः। विना तेनेति मर्यादा। सह तेनेत्यभिविधिः। क्रियायोगे अपि ङनुबन्धविशिष्टस्यैव, आङि युद्ध इति ह्वयति क्रियायोगेऽपि ङनुबन्धविशिष्टस्य निर्देशात्। तस्मादीषदर्थादिवृत्तेराकारस्य ङनुबन्धकस्य न भवति प्रकृतिभावः। आकारोपादानञ्च स्वरस्सवर्णस्य ग्राहक इत्यस्यानित्यत्वज्ञापनार्थम्, नित्ये ह्यस्मिन्नकारेणाकारस्यापि ग्रहणादाकारं नोपाददीत। अनित्यत्वज्ञापनस्य तु[3] प्रयोजनं बबाधेत्यादावस्यैकव्यञ्जनमध्ये इत्येत्वाभ्यासलोपयोरभावः। पटाविहेति। पटुशब्दस्य सम्बुद्धौ चेत्यौत्वम्। ह्रस्वनदीति सि-लोपः। येनविधिस्तदन्तस्येत्यादि। येन विशेषणेन यत्किञ्चिद्विधीयते तत्तदन्तस्यात्मान्तस्य ग्राहकं दृष्टं, येन विधिस्तदन्तस्येति वचनात्। यथा इङाभ्याञ्चेत्याकार आकारान्तस्य। इह च निपातानामोकारेण विशेषणभूतेन प्रकृतिभावलक्षणं कार्यं विधीयत इत्यतोऽकारान्तत्वे निपातविषये लब्धे सति यत्पुनरप्यन्तग्रहणं क्रियते तस्यैतत् प्रयोजनम्, ओदन्तविषय एवान्तत्वापत्तिर्यथा स्यात्। अकारादिनिपातविषये मा भूदिति परिभाषा-सामर्थ्याद्ध्यन्तत्वावबोधः ओकारस्येवाकारादीनामपि विशेषाभावात् स्यात्। ततः च इति चेति, इति इह इतीह, ननु इदम् नन्वि-

---

१. न्यूनपाठः (भं०)

२. इत्यत्रोच्यते (वा०)

३. अनित्यत्वज्ञापनार्थस्य (वा०)

दम्, वा इति वेति । अत्राप्यकारादीनां [1]अनुवर्तिनां प्रकृतिभावो भवेत् तस्मादकारादीनामन्तत्वविज्ञानं मा भूत्, ओकारस्यैव यथा स्यादित्यन्तग्रहणम् । तेनेत्यादि । तेनान्तग्रहणेनेत्यर्थः । तदन्तानामिति । तेषां निपातानां येऽन्तावयवभूतास्तेषामित्यर्थः[2] । ननु अर्थवद्-ग्रहणपरिभाषया केवलानामेव सार्थकानामकारादीनां प्रकृतिभावो विज्ञास्यते न निपातानामन्तर्वर्तिनामनर्थकानामिति किमकारादीनामन्तत्वव्यावृत्त्यर्थेन [3]अन्तग्रहणेन, एवं तर्हि अस्या एवानित्यत्वज्ञापनार्थमिदमन्तग्रहणम् । तेनेन्हन्पूषार्यम्णेति दीर्घत्वव्यावृत्तिः । वाग्मिनावित्यादावनर्थकस्यापि ग्मिन्नवयवस्येनो भवति । यथा सार्थकस्य दण्डिनौ दण्डिन इत्यादौ । एवञ्चान्तर्भूतानामप्यकारादीनां प्रकृतिभावः स्यात् । सः मा भूदित्यन्तग्रहणम् । ओ अत्रेत्यत्र तु प्रकृतिभाव आद्यन्तवदेकस्मिन्निति वचनात् । स्वरग्रहणं विस्पष्टार्थमित्युक्तं तत् कथं यावता स्वर इत्यक्रियमाणे सति कुतो हेतोस्स्वरस्य निमित्तभावोऽवगम्यत इत्याह— स्वर एव सन्धिकार्यं प्राप्तमिति व्यञ्जने निषेधारम्भादित्यभिप्रायः । ननु यस्य कार्यस्य स्वरो निमित्तं तस्य प्रकृतिभावेन निवृत्तिर्यथा स्यादन्यस्य मा भूदित्येतत् प्रयोजनं स्वरग्रहणस्य कस्मान्न भवति, तथाहि दधि इ अस्मै ददाति, दधी अस्मै ददातीत्यत्रेकारस्य निपातत्वे कार्ये प्राप्नुतः परलोपः स्वरनिमित्तकं यत्वञ्च । ततः यदि स्वरग्रहणं न क्रियते तदा यथैव परस्वरनिमित्तकं यत्वमिकारस्य प्रकृतिभावान्न भवति, एवं परलोपोऽपि न स्यात् । तस्मात् एतदर्थं स्वरग्रहणं क्रियते, स्वरनिमित्तकस्य यत्वस्य प्रकृतिभावेन निवृत्तिर्यथा स्यात्, परलोपस्य मा भूदिति । नहि परलोपस्स्वरनिमित्तकः तेनासौ भवत्येव । तदेतेन प्रयोजनेन प्रयोजनवत् स्वरग्रहणं कथं विस्पष्टार्थं स्यात् । अस्त्येतत्, व्यवहारोपारूढं त्वेतन्न तथा प्रयोगजातमिति नोपन्यस्तम् । न सन्धेया इति । वर्तमाने प्रकृत्या वचनान्तरमपि क्वचिन्मानुवर्तेदिति ज्ञापनार्थम् । तेन द्वितीयातृतीयाभ्यां वेत्यतो वेत्युत्तरत्र न सम्बध्यते । टा प्रत्ययनिर्देशो विना कर्तृकरणाभ्यां क्वचित्तृतीया सम्भवः प्रदर्शनार्थः । तेन प्रकृत्या सुन्दर इत्यादयस्सिद्धाः ।

**द्विर्वचनमनौ १।३।२**

उच्यतेऽनेनेति वचनम् । करणे युट् द्वयोर्वचनम् द्विर्वचनम्, कर्मषष्ठ्यन्तस्य द्विशब्दस्य वचनशब्देन तत्पुरुषः । अनाविति लुप्तप्रथमैकवचनमिति । आदि-

१. अन्तर्वर्तिनाम् (वा०)

२. तेषां निपातानां येऽन्ते अवयवभूता अ इ उ आस्तेषामित्यर्थः (वा०)

३. अर्थः (भं०)

लोप इत्यादिना अनो यद् द्विर्वचनमिति । एतेन द्विर्ववचनमनौ ग्रहणेन विशेषयन्ननाविति पर्युदासोऽयमिति सूचयति । यथा चैतत् तथा दर्शयिष्यते । अग्नी अत्रेत्यादि । अग्निशालाशब्दाभ्यां प्रथमाद्विर्वचनम् । पटुशब्दादानयनक्रियापेक्षया लब्धकर्मभावाद् द्वितीया द्विर्वचनम्, तस्यौकारः पूर्वमिति । शालेत्यत्र औरीम् । अत्रेत्येतददो रूपम् । आनयेति । हेरकारादिति हेर्लोपः । प्रकृतिभावाद् यथाक्रमं यत्ववत्वादय आदेशाः न भवन्ति । इह कस्मात्प्रकृतिर्न भवतीति प्रसज्यप्रतिषेधं मन्यमानस्यायं प्रश्नः । तत्र हि सर्वं द्विर्वचनं प्रकृत्यौकारस्तु न भवतीति सूत्रार्थः । एवञ्च देवयोरिदं वृक्षाभ्यामत्रेत्यत्रापि द्विर्वचनत्वादोस्भ्यामोरपि प्रकृतिभावः प्राप्नोति, तथा च रेफपरनयनेन स्याताम् । इतरः पर्युदासाश्रयणेन परिहरति, ब्रूमः इत्यादिना । अनाविति नायं प्रतिषेधमात्रप्रधानः प्रसज्यप्रतिषेधः, किं तर्हि सदृशवस्तुपरिग्राही पर्युदासः । तेन पर्युदासपक्षपरिग्रहणेन हेतुना यदौकारेण सदृशं द्विर्वचनं वर्णमात्रं स्यादिरूपं तस्य प्रकृतिभावः न तु अन्यस्यौकारेण विसदृशस्य स्यादेः । तद्देवयोः वृक्षाभ्यामित्यत्रापि यावेतावोस्भ्यामौ तावपि सदृशावौकारेणेति तयोरपि प्रकृतिभावः स्यादित्याह—न चौस्भ्यामौ तथा भूतावित्यादि । भूतशब्दो भू-प्राप्तावित्यस्य चौरादिकस्य [1]आधृषाद्वेति विकल्पितेऽन्नन्तस्य क्तप्रत्ययान्तः । यावेतावोस्भ्यामौ तौ तथात्वमौकारेण सादृश्येन प्राप्तौ वर्णसमुदायरूपत्वादनयोः । अत औकारे सदृशस्य द्विर्वचनस्य प्रकृतिभावविधानादोस्भ्यामोश्चौकारेण वैसादृश्याद् देवयोरिदमित्यादौ नास्ति प्रकृतिभावः । एतदेवार्थं वैधर्म्येण प्रतिपादयितुमाह—यदि त्वित्यादि । यदि पुनरयमनाविति निषेधमात्रप्रतिपादनपरः प्रसज्यप्रतिषेधस्स्यात् तदा सर्वस्य द्विर्वचनस्य सदृशस्य विसदृशस्याप्यौकारेण प्रकृतिर्भवतीति सूत्रार्थविज्ञानादोस्भ्यामोरपि सा प्रकृतिस्स्यात् न त्वेष प्रसज्यप्रतिषेधः । द्विर्वचनं प्रकृत्या भवत्यौकारस्तु न भवतीति वाक्यभेदप्रसङ्गात् । पर्युदासे त्वनयोः यद् द्विर्वचनं तत्प्रकृत्या भवतीति नास्ति वाक्यभेदप्रसङ्गः । एकवाक्यतायाञ्च सम्भवत्यामयुक्तः प्रतिपत्तृप्रतीतिगौरवकारी वाक्यभेद इति लाघवार्थमनाविति पर्युदास एवाश्रीयते । यद्येवमौकारेण सदृशस्य द्विर्वचनस्यासम्भवात् कस्यायं प्रकृतिभावो विधीयते इति सकोपस्यायं प्रश्नः ? किं पुनः तद् द्विर्वचनमित्यादि । इतरोऽपि विकृत्यवस्थां प्राप्तमौकारमेव प्रकृतिभावभाजं प्रदर्शयितुमाह—उच्यत इत्यादि । औरीमौकार पूर्वमिति च लक्षणद्वयेन य औकारस्यादेशः क्रियते तस्यास्ति औकारेण सादृश्यमिति सोऽस्य प्रकृतिभावस्य विषयः । ननु परश्च लोपमिति वचनेन लुप्तोऽसौ कथमिव तस्य विषयस्स्यादिति

१. धृषत्वेति (वा०) ।

पृच्छति । ननु तल्लुप्तमिति विकाररूपं यद् द्विर्वचनमित्यर्थः । अस्त्येतदित्यानोत्तरयति । पर निमित्तमाश्रित्य पूर्वस्मिन्स्थानिनि य आदेशः सञ्जातः सः पर एव ज्ञातव्यः । तथा च अग्नी पटू शाले इत्यादीनां ये ईदूदेतः परसवर्णनिमित्ताः ते द्विर्वचनरूपा इति लब्धो विषयः प्रकृतिभावस्य कृते वा परलोपे प्रत्ययलोपमाश्रयणेन द्विर्वचननिमित्तः प्रकृतिभावो विज्ञास्यते, वचनसामर्थ्याद्वा । ननु अहेतुरयमस्तीह द्विर्वचनस्य, दधिनी अत्रेत्यकृतपरलोपविषयः । सत्यम् । अस्ति, नन्वीकार एव केवलो द्विर्वचनग्रहणं प्रयोजयति । यद्यनाविति पर्युदासः किं द्विर्वचनग्रहणेन ? उच्यते—औकारसदृशस्य सन्ध्यक्षरमात्रस्य ते इह तयिहेत्यादौ प्रकृतिभावनिवृत्त्यर्थं द्विर्वचनग्रहणम् । यद्येवम्, अग्नी इत्याहेत्यादौ प्रकृतिभावं न प्राप्नोति, नहि एतद् द्विर्वचनम्, अनुकरणत्वात् । सत्यम् । प्रकृतिवदनुकरणं भवतीत्येवात्र सन्धिनिषेधो विज्ञास्यते । प्रकृतिरनुकरणस्य अनुकार्यम्[1] उच्यते । अयं तर्हि पर्युदासपरिग्रहे दोषः । पचेते अत्र, पचेथे -अत्रेत्यत्र आते आथे[2] (इत्येतयोः द्विर्वचनयो औकारेण सादृश्यात् प्रकृतिभावो न प्राप्नोति, भवत्ययं दोषः, यथा तु न दोषस्तथा आते आथे) इति चेत्यत्र वक्ष्यति —इह पर्युदासप्रसज्यप्रतिषेधयोर्यथाक्रमम् । अब्राह्मणमानय, अश्राद्धभोजीत्यादिकं विषयमुदाहरन्ति । तत्रोभयत्रापि नञ्समासश्रवणाद्विशेषो नावधार्यते को वा पर्युदासः को वा प्रसज्यप्रतिषेधः इति सन्दिहानः पृच्छति । अथ पर्युदासप्रसज्यप्रतिषेधयोः को भेद इति, ब्रूम इत्यादिना तयोः विशेषमाह - नञ् समासावुभयत्रापि तुल्यौ यत्र समासविधेः प्राधान्यं प्रतिषेधस्योपसर्जनोभावः । परपदेन च सह नञः सम्बन्धः सः पर्युदासः । यथा अब्राह्मणमानयेति । अत्र हि ब्राह्मणसदृशस्य क्षत्रियादेरानयनात् विधिः प्रधानम्, अप्रधानं तु प्रतिषेधो ब्राह्मणानयननिषेधस्य फलतः सम्पत्तेः । अतएव नञ् ब्राह्मणपदेन सम्बध्यते । तस्मादयं पर्युदासः । यत्र तु प्रतिषेधाभिधायिनो नञः प्राधान्यं क्रियापदेन सह तस्याभिसम्बन्धो विधेः त्वप्रधानभावः सः प्रसज्यप्रतिषेधः । यथा अश्राद्धभोजीति । अत्र हि श्राद्धं न भुङ्क्त इत्यर्थावगमान्नञ् क्रियापदेन सह सम्बध्यमानो भोजनविधिमप्रधानीकृत्य प्राधान्यमनुभवति । श्राद्धं तावन्न भुङ्क्ते वस्त्वन्तरं भुङ्क्ते मा वा भुङ्क्त इति नास्ति विधावत्र तात्पर्यम् । तेनेमं प्रसज्यप्रतिषेधमामनन्ति । यद्येवम्, नञोऽत्र क्रियया सम्बन्धादुत्तरपदेन सह सम्बन्धो नास्तीत्ययुक्तार्थत्वात्प्रसज्य-

---

१. अनुकरणम् (वा०)

२. न्यूनपाठः (भं०) ।

३. ब्राह्मणस्यानयन (वा०) ।

प्रतिषेधो समास एवानावित्येवं रूपो न सम्भवतीति कथं तत्पक्षाश्रयेणेह[1] कस्मात्प्रकृतिर्न भवतीत्युक्तम्। एवं मन्यते, अकर्तरि च कारक इति कारकग्रहणाज्ज्ञापकात्प्रसज्यप्रतिषेधेऽप्यस्ति समासः। एतच्च तत्रैव[2] वक्ष्यामः।

**बहुवचनममी १।३।३**

वचनशब्दः करणसाधनः। बहूनामर्थानां वचनं बहुवचनम्। अमीति। अदःशब्दस्य बह्वर्थवृत्तेः[3] यः प्रयोगः तस्यामीत्येतदनुक्रियते। अमीति लुप्तप्रथमैकवचनमिति पूर्ववदमीत्येतद् बहुवचनमिति बह्वर्थाभिधायकमित्यर्थः। अमी आदित्या इति। अदितेरपत्यानीति ण्य[4]-प्रत्ययः। आदि वृद्धिः। अम्यत्रेति। ननु अत्रेनो न लोपस्यालुप्तवद्भावात् स्वरो न परभूत इति यत्वं न प्राप्नोति, नैतत्, सन्धिकार्ये कर्तव्ये नास्त्यलुप्तवद्‌भावः[5] स्वामीश्वरेति समानदीर्घश्रवणात्।

**अनुपदिष्टाश्च १।३।४**

दिश् अतिसर्जने, उपपूर्वः, उपदिश्यतेस्मेति निष्ठेति क्तः। हशोश्चेति षत्वम्, तवर्गस्य षटेति टः, नञ्-समासः, पूर्वं तत्र ग्रहणादधिकृते वर्णसमाम्नाये येऽनुच्चारितास्तेऽनुपदिष्टा इत्युच्यन्ते। यद्येवम्, का तेषां सन्धिकार्यप्राप्तिरित्याशङ्क्याह—अनुपदिष्टाः साक्षान्नोक्ताः इति व्यक्तिद्वारेणोपदेशाभावेऽपि जातिद्वारेण तेषां सङ्ग्रहात् स्वरस्सवर्णस्य ग्राहक इति वचनेनास्ति सन्धिकार्यप्राप्तिरिति वचनम्। के पुनः तेनोक्ताः इत्याह—प्लुता इति। मात्रात्रयपरिमाणवर्णाः प्लुता उच्यन्ते। का पुनः मात्रा, यावता कालेनाक्ष्णोरुन्मेषनिर्मेषौ भवतः तावता कालेनोच्चारणक्रिया मात्रा। देवदत्त३ इह इत्यादि प्लुतस्य प्रकृतिभावाद् यथाक्रममेत्वमोत्वं च न भवतः। सम्बुद्धावोदन्तस्येत्यादि। सम्बुद्धिनिमित्त ओकारोऽन्तो यस्य तस्य प्रकृतिभाव इतिशब्दपरे वा वक्तव्यः। एतच्च प्लुतग्रहणे कर्तव्ये यदनुपदिष्टग्रहणं कृतं ततो लभ्यते। अनुपदिष्टा हि ते उच्यन्ते य इह प्रकरणे प्रकृतिभाङ्क्त्वेन न कथिताः। भानो

---

१. तत्पक्षाश्रयणेनेह (६)
२. तत्र (भं०)
३. बहुत्व (भं०)
४. यण् (भं०)
५. नास्य (वा०)

इतीत्यादि भानुशब्दस्य सम्बुद्धौ चेत्योत्वम्, ह्रस्वनदीति सिलोपः। गवित्यय-माह इति गोशब्दस्य डो प्रत्ययान्तत्वात्। तेन प्रकृतिभावस्याभावादवादेशः। अत्र चानुकार्यानुकरणयोर्भेदस्याविवक्षितत्वात् अनुकार्येणार्थेनार्थवत्वस्यासत्वाद्[1] असत्यां लिङ्गसंज्ञायां गोशब्दाद्विभक्त्यभावः। समानसंज्ञकस्य ऋकारे परे चेति प्रकृतिर्वा वक्तव्येति सम्बध्यते। देव ऋषिरित्यत्र कर्मधारयः। माला ऋषिरित्ययं तु मालाहस्त ऋषिः मालर्षिरिति मध्यपदलोपि कर्मधारयः। प्रकृतिभावपक्षे ऋवर्णे अरित्यरादेशः।

भट्टोग्रभूति[2] कृते शिष्यहितान्यासे शिष्यालोकाभिधाने तृतीयस्सन्धिपादः।

## चतुर्थपादः

**वर्गप्रथमाः पदान्ताः स्वरघोषवत्सु तृतीयान् १।४।१**

पदान्तवृत्तयो वर्गप्रथमाः तृतीयानापद्यन्ते। तत्र स्ववर्गापरवर्गाद् वेति सन्देहमपाकर्तुमाह--स्ववर्गादिति। प्रत्यासत्तेरित्यत्रैव हेतुः। एतच्च स्थाने अन्तरतम इति परिभाषया लभ्यते। कण्ठस्थानस्य हि प्रथमस्य तादृश एव कण्ठस्थानेऽन्तरतमस्तृतीयो भवति। एवं तालुस्थानस्यापि तालुस्थानत इत्ययं क्रमस्सर्वत्र बोद्धव्यः। वागत्रेति। वाच् इत्यस्य चवर्गस्य दृगिति गत्वम्। वा विराम इति प्रथमः ततो अत्र शब्दे परे तृतीयोऽनेन गः। नन्वयं प्रथमो लाक्षणिक इति कथमस्य तृतीयस्स्यात्। वक्तीति वाक् शक्नोतीति शक्, क्विप्, शगत्रेत्यादावेव तृतीयः स्यात् यत्र प्रतिपदोक्तः प्रथमः। अस्त्येतत्। अनित्या तु लक्षणप्रतिपदोक्तपरिभाषा नेहाश्रीयते, अनित्यत्वं चास्याः स्थादोश्चेति स्थादोर्लाक्षणिकस्य नामिनो गुण प्रतिषेधादवसीयते। षडानयेति, षष् शस् कतेश्च जस्शसोर्लुक्, हशषेति डः, तस्य प्रथमे कृते तृतीयोऽनेन डः। आनयेति। (हेर्वकाराद्[3] हन्तेः हिलोपः) त्रिष्टुबियमिति। ष्टुभुस्तम्भेस्त्रीणि। स्तोभत इति क्विप्। वाग्गतिरिति। गमनं गतिः इति स्त्रियां क्तिः, पञ्चमोपधेति दीर्घः। वनतितनोत्यादीनि पञ्चमलोपः, अश्चातः[4] इति आकारस्य अकारः, षड्

---

१. अनुकार्येणार्थेनार्थवत्वात् (वा०)

२. तृतीयः पादः (पुष्पिका भं०)

३. न्यूनपाठः (भं०)

४. अतश्चातः (भं०)

गच्छन्ति इति षषो जसः पूर्ववल्लुक् । तद्गमनमिति गमेर्भावे युट्, भिन्ने पदे षष्ठीसमासो वा । त्रिष्टुब्गायत्रीति । त्रिष्टुप् सहिता गायत्रीति कर्मधारयः । भवानाहेति । भवन्त्, सि, अत्वसन्तस्येति दीर्घः, आहेति, ब्रूञ् व्याख्याने, अदादिः, ब्रुवः पञ्चानामादित इति ति प्रत्ययः स्यात् ब्रुवश्च आह[1] आदेशः । प्रथमव्यपदेशो वर्गविषय एवेति प्रथमशब्दश्रवणाद् एव वर्गग्रहणे लब्धे पुनर्वर्ग-ग्रहणं संज्ञापूर्वकत्वेन क्वचित्तृतीयस्थाप्यनित्यत्वज्ञापनार्थम् । तेन मरुदस्यास्तीति, विद्युदस्यास्तीति कृते वन्तुप्रत्यये मरुत्वान्, विद्युत्वान् इत्यन्तर्वर्तिनीं विभक्तिमाश्रित्य प्रत्ययलक्षणेन पदान्तवृत्तिरपि वर्गप्रथमस्तृतीयादेशं न प्रति-पद्यते । विद्युत्वानिति । विपूर्वाद् द्युतेर्विद्योतनशीलेति । क्विब्भ्राजीति क्विप् । वाक्पुनातीति पूञ् पवने । प्वादीनां ह्रस्वः ।

**पञ्चमे पञ्चमांस्तृतीयान्न वा १।४।२**

पञ्चानां पूरण इति, संख्यायाः डमाविति म प्रत्ययः । तृतीयान्वेति । समुच्चये वा शब्दः । यदि तु विकल्पे स्यात्ततः पञ्चमतृतीययोरभावपक्षे प्रथमोऽपि श्रूयेत । न वा ग्रहणं च विकल्पाभिधायकमुत्तरत्रापार्थकं स्यात् । वाङ्मधुर इति, तृतीयासमासः । षण्नयनम् । तन्नीति षष्ठीसमासः । त्रिष्टु-म्मिनोतीति, डुमिञ् प्रक्षेपणे, अथ पञ्चमे तंवेति कस्मान्न क्रियते, तंवेति च वचनेन पञ्चमादेशे विकल्पिते सति घोषवति पञ्चमे परे पक्षे प्रथमस्य पूर्व-सूत्रेण तृतीय आदेशः सिद्ध इति किमर्थं गुरुसूत्रं क्रियते, तंवेति कृते तकारो वर्णः पाक्षिकः आदेशः स्यादिति चेत्, न । भविष्यति तत्प्राङ्नाम चेति निर्दे-शादित्याह—पञ्चमं तंवेत्यादि सुबोधम् ।

**वर्गप्रथमेभ्यः शकारः स्वरयवरपरश्छकारं न वा १।४।३**

स्वरयवराः परे यस्माच्छकारादिति विग्रह इत्येतेन स्वरयवरपरा इत्ययं पञ्चम्यर्थे बहुव्रीहिरिति दर्शयति । स्वरयवरेभ्यः पर इति पञ्चमीतत्पुरुषस्तु न विज्ञायते, एवं हि विज्ञायमाने सति शकारं प्रति स्वरयवराणामवधित्वं प्रति-पादितं स्यात्, तच्च नेष्टम् । वर्गप्रथमेभ्यः परे ये स्वरयवरास्तेभ्य परो यश्श-कार इति व्याख्यायते । एवमपि स्वरयवरान्प्रति वर्गप्रथमानामवधित्वं न सम्भवति । तेषु परेषु वर्गप्रथमानां तृतीयादेशस्य विहितत्वादविद्यमानत्वात्

---

१. आहिरादेशः (भं०) आहि आदेशः (वा०)

(अथ[1] भूतपूर्वगत्या वर्गप्रथमानामवधित्वं भविष्यतीत्याशङ्क्याह—) न च सर्वेभ्यः स्वरयवरेभ्यः परश्शकारो दृश्यत इति नायं तत्पुरुषः। वाक्छूर इति शूरवीर विक्रान्तौ चुरादित्वादिन्। अच्, कारितलोपः, तृतीयासमासः। षट्छ्यामेति। बहुव्रीहिः। तच्छ्वेतमिति। श्विता वर्णे अजन्तः, भिन्ने पदे षष्ठीसमासो वा। त्रिष्टुब्छ्रूयत इति श्रु गतौ यण्[2] नाम्यन्तानां यणायीति दीर्घः। प्रत्यङ्छेते इति अञ्चु गतौ, प्रतिपूर्वः, प्रत्यञ्चतीति क्विप्। अनिदनुबन्धानामिति अनुषङ्गलोपः नास्ति, तद्विधौ जिघ्रतेर्वेत्यतो वेत्यस्याभिसम्बध्यमानस्य व्यवस्थितविभाषावाचित्वात् संयोगान्तलोपस्तावन्न भवति। उदङ्ङिति निर्देशाच्चवर्गदृगादीनाञ्चेति गत्वम्। वर्ग्ये वर्गान्तः संयोगान्तलोपः। शेते इति। शीङस्सार्वधातुक—इति गुणः वर्गप्रथमग्रहणं विस्पष्टार्थमिति प्राक्तनस्य वर्गप्रथमग्रहणस्यार्थवशाद्विभक्तिविपरिणाम इति पञ्चमीविपरिणामे सति मन्दमतीनाम् अवैस्पष्ट्यं[3] स्यादित्यभिप्रायः। लानुनासिक इत्यादि। लकारपरस्यानुनासिकपरस्य च शकारस्य छत्वं विकल्पेनेष्यते। वेत्यनुवर्तमाने पुनर्वाग्रहणं विषयान्तरेऽपि विकल्पं सूचयति। ननु समुच्चयाभिधायी पूर्वो वा शब्दः कथमिहाभिसम्बध्यमानः वैकल्पमभिलष्यात्[4]। भवेतेतदेवं यदि पूर्वो वा शब्दोऽत्राभिसम्बध्येत, नत्वसावभिसम्बध्यते। तस्य पूर्वत्रैव कृतकृत्यत्वात्। तत् सदृशं वस्त्वन्तरं यदनुमीयते तदनुमीयमाने येन विकल्पाभिधायकेन रूपेणेह सम्बन्धमुपयाति तेनैव सम्बत्स्यते[5]। तच्छ्लाघ्यमिति। श्लाघ्यकत्थने, श्लाघनीयमिति घ्यण्, छत्वाभावपक्षे चंश इति तकारस्य चत्वम्। स्वरयवरेष्विति न कृतं वैचित्र्यार्थम्। ननु चंश इति सूत्रारम्भात् विकल्पः लब्ध इति किं नवाग्रहणेन, नित्ये ह्यस्मिश्छत्वे तच्छ्लाघ्यमित्यादि पररूपे प्रथमे च कृते सिद्धमेवेति चंश इति सूत्रमनारम्भणीयं स्यात्, अस्त्येतत्, सूत्रकारमते तु लानुनासिकपरस्य शकारस्य छत्वं नास्तीति तत्र चंश इत्येतत् वचनमर्थवत्स्यात्। स्वरयवरपरस्य तु नित्यं छत्वं प्राप्नुयात्। तन्मा भूदेष[6] दोष इति पुनः नवाग्रहणम्।

---

१. न्यूनपाठः (वा०)
२. न्यूनपाठः (वा०)
३. अवैस्पष्ट्यार्थम् (वा०)
४. वैकल्पमभिदध्यात् (मं०)
५. सम्बध्यते (वा०)
६. भूदेव (वा०)

**तेभ्य एव हकारः पूर्वचतुर्थं न वा १।४।४**

चतुर्णां पूर्ण इति संख्यायाः पूरण इति डः, अन्तस्थो डेर्षो इति थकारागमः। चतुरो[1] वा शब्दस्योत्वम्। ततः षष्ठीसमासः। वाग्घीन इति। ओहाक् त्यागे। हीयते स्मेति निष्ठेति क्तः, दामागायतीतीत्वम्, ल्वाद्योदनुबन्धाच्चेति निष्ठानत्वम्। तृतीयासमासः। तद्धितमिति। हि गतौ वृद्धौ च, क्तः, अथवा दधातेर्हिः, तेभ्यो हितं तद्धितमिति चतुर्थी समासः, चतुर्थी तु हितयोगे चेत्यनेन वक्ष्यमाणेन वचनेन। त्रिष्टुब्भुतमिति जुहोतेः क्त-प्रत्ययः। तृतीयासमासः इति। प्रत्यङ् हसति इति। हसे हासे एकारः। सिचि दीर्घप्रतिषेधार्थः। वर्गप्रथमेभ्य इति वर्तमाने तेभ्यः ग्रहणं स्वरयवरपर इत्यस्य निवृत्त्यर्थम्। तेनेहापि भवति। वाग्घ्लादयति वाग्ह्लादयति। एव शब्दोऽत्र समुच्चये निपातानामनेकार्थत्वात्। पुनः न वा ग्रहणमिहैव विकल्पेनोत्तरत्रेत्यवधारणार्थम्।

**पररूपं तकारो लचटवर्गेषु १।४।५**

रूप रूपक्रियायाम्। चुरादित्वादिन्। रूप्यत इति रूपम्। स्वरवृद् इत्यल्, षष्ठीसमासः। चवर्गे तवर्गे च परतः इत्येतेन वर्गग्रहणं चकारेणापि संम्बध्यते इति दर्शयति। एतच्च लकारात् पूर्वं चकारस्य पाठाल्लभ्यते। तल्लुनातीति प्वादीनां ह्रस्व इति लूञो ह्रस्वः। तच्छादयतीति, छदिः, चुरादित्वादिनन्तः। तज्जुषतीति[2] जुष हिंसायाम्, कष शिष इत्यत्र पठ्यते। उड्डीनः, इति डीङ् गतौ, उत्पूर्वः, उड्डयते, गत्यर्थाकर्मकेति क्तः, ल्वाद्योदनुबन्धानामिति नत्वम्। डीङ् ओदनुबन्धत्वं स्वादय ओदित इति गणसूत्रेण पदान्ते धुडामिति तदो दस्य तत्वं तस्यानेन पररूपम्। तन्नकार इति षष्ठी समासः। एवं तज्जकार[3] इत्ययमपि तानिति कर्तव्ये पररूपग्रहणं व्युत्क्रमशङ्कानिवृत्त्यर्थम्।

**चंशे १।४।६**

यत्र पक्ष इत्यादिना सूत्रारम्भस्य प्रयोजनमाह—लानुनासिकपरस्यापि शकारस्य वा छत्वमिष्यत इत्युक्तम्, तन्न, छत्वाभावपक्षे सफलमिदं वचनम्, शकारस्य श्रूयमाणत्वात्। छत्वसत्तापक्षे तु न सफलमित्यत्र कारणमाह—छत्वपक्षे हीत्यादि पररूपे कृते इति पूर्वसूत्रेण प्रयोगाणामिति कृत्वचत्वानाम्।

---

१. चतुर्वा (वा०)
२. तज्खषति (वा०)
३. तणकारः (वा०)

**ङणनाः ह्रस्वोपधाः स्वरे द्विः १।४।७**

डुधाञ् उपपूर्वाद्दुपधीयत इत्यातश्चोपसर्गा इत्यङ्, द्विर्भावः विधीयमानः ङणनाविधिभाज इत्येवमवयवार्थो मन्तव्यः। उदङ्ङ्त्रेति। उदङ्ङिति प्रत्यङ्ङित्यनेन तुल्यम्। सुगण्णाहेति। शोभनं गणयतीति गणेः अदन्तात् सुपूर्वात् चुरादीन्नन्तात्, क्विप् कारितलोपः। आहेति ब्रूञो रूपम्। पचन्निहेति, पचन्निति शन्तृङ्। पूषणाविति। घुटि चासम्बुद्धाविति दीर्घोऽत्र न भवति, इन्हन्पूषेति नियमात्। परमदण्डिनावित्यादौ तूत्तरपदस्य तत्स्था लोप्या इति लुप्तविभक्तेरप्युपलब्धिग्रहणाल्लब्धव्यपदेशस्य नकारो द्वित्वं न प्रतिपद्यते, भावकर्मणोरिति नकारस्य द्वित्वाकरणात्। ननु ह्रस्वादिति क्रियताम्, एतच्च ङणनामवधित्वेन[1] विशेषणं विज्ञास्यते, ह्रस्वात् परे ये ङणना इति तत्किमुपधाग्रहणेन, अस्त्येतत्, संज्ञापूर्वकत्वेन द्वित्वस्य नित्यार्थमुपधाग्रहणम्। तेन सणनिट इत्यादयो निर्देशाः। सुगण् गत इति। गच्छति स्म, गत्यर्थाकर्मकेति क्तः।

**नोऽन्तश्चछयोः शकारमनुस्वारपूर्वम् १।४।८**

अनुस्वारपूर्वं शकारमापद्यत इति। एतेनानुस्वारपूर्वमिति विशेषणोऽन्यथानुपपत्त्यानेनैव व्याख्यानेनाकारात्पूर्वमनुस्वारो विधीयत इति दर्शयति। अन्यथा ह्यनुस्वारपूर्वमिति शकारस्य विशेषणं दुर्योज्यं स्यात्। सिद्धं हि सर्वत्र विशेषणमुपादीयते न तु सिद्धं भवांश्चिनोतीत्यादि-उदाहरणेनैवं प्रकारेण निवृत्तमत्र ह्रस्वोपधाग्रहणमिति सूचयतीत्येतच्च पदान्त इत्यनुवर्तमाने पुनरन्तग्रहणाल्लभ्यते। प्रशाञ्चिनोति, प्रशाञ्चरतीति शसिः पूर्वः प्रशास्यतीति क्विप्। पञ्चमोपध[2] इति दीर्घः। मोनो धातोरिति मस्य नः, एवम् उत्तरसूत्रयोरपि[3] इति प्रशान् शब्दस्य नेष्यत इति सम्बन्धः।

**तथयोः सकारम्[4] १।४।९**

भवांस्थुडति, थुडसम्वरणे, तुदादेरनीत्यगुणत्वम्। अथ त्वन्तनोषि इत्यादौ नकारस्य सत्वं कस्मान्न भवति, न भवति, अपदान्तत्वात्। पदान्तो हि स उच्यते यः[5] पदस्यावग्रहकाले श्रूयते यथा भवांस्तनोतीत्यत्र भवान् इति नकारः।

१. द्वित्वेण (वा०)
२. न्यूनपाठः (वा०)
३. उत्तरत्र (भं०)
४. १।४।१० (दु० वृ०)
५. पदान्तस्य (भं०), इत्यत्रैव अवग्रह इत्यस्यार्थः उच्चारण इति कृतम् (भं०)

न चैषः प्रकारः त्वन्तनोषीत्यत्र भवति, संहिताविषय एव नकारस्य श्रूयमाणत्वादिति न भवति सत्वम् ।

**ले लम् १।४।१०**[1]

अनुस्वारपूर्वमिति लकारस्य विशेषणमिह न सम्बध्यते यतस्सानुनासिकोऽयं लकारः स्मर्यते तदुक्तं सन्ति हि यणस्सानुनासिकाः निरनुनासिकाश्चेति यणोऽन्तस्था उच्यन्ते । अतएव वृत्तौ भवाँल्लुनातीत्यत्रार्धचन्द्राकृतिरनुनासिकः उदाहृतः ।

**जझनशकारेषु ञकारम् १।४।११**[2]

महाञ्जयतीत्यादि । महन्त् सि, सान्तमहतोरिति दीर्घः । ननु महाञ्जयतीत्यादीनि त्रीणि रूपाणि, तवर्गचटवर्गेति चवर्गादेशविधानेनैव सिद्धानि तदपार्थकं जझञेषु ञकारादेशविधानम् । अस्त्येतत्, इदमेव तु[3] तेष्वादेशविधानं ज्ञापयत्यपदान्ते सः विधिर्न तु पदान्त इति ।

**शिञ्चौ वा १।४।१२**[4]

ञ्चाविति द्वितीया द्विर्वचनान्तम् । समुच्चये वाशब्दो इति न तु विकल्पे, कुतः, विकल्पे हि सति आदेशाभावपक्षे ञकारोऽप्यभ्यनुज्ञायेत, न च पूर्वेण तस्य ञकारादेशविधानादभ्यनुज्ञानं न भविष्यतीति शक्यं वक्तुम् । एवं हि सति वाग्रहणमनर्थकं स्यात् । ञ्चकारञकारयोः उभयोः[5] विधानसामर्थ्यादादेशद्वयस्य लब्धत्वात् । महाञ्च्छूर इति कृते[6] शादेशे सामान्यव्यञ्जननिमित्तकं चवर्गदृगिति गत्वं प्राप्नोति, तन्न भवति, चकारोच्चारणसामर्थ्यात् । ननु ञ्चाविति द्विर्वचननिर्देशेनादेशद्वयप्रतिपत्तौ सत्यां प्रत्येकं ञकारचकारावादेशावुदाहर्तुं युक्तः, तत्कथं ञ्च इति समुदायरूप आदेश उदाहृत इत्याह—ञ्च इति समुदायादेश इति द्वित्वनिर्देशात्कथं समुदायादेशपक्षो युक्त इत्याह— यदि पुनरित्यादि । आदेशद्वये हि व्याख्यायमाने ञकारादेशविधानं पूर्वेणासिद्धत्वात्पुनर-

---

१. १।४।११ (दु० वृ०)
२. १।४।१२ (दु० वृ०)
३. न्यूनपाठः (वा०)
४. १।४।१३ (दु०वृ०)
५. न्यूनपाठः (भं०)
६. न्यूनपाठः (वा०)

पार्थकं स्यादित्येके । एवमयमादेशः किमर्थः तर्हि द्विर्वचननिर्देश इत्याह—द्विर्वचननिर्देशः वैचित्र्यार्थ इत्यवयवद्वित्वापेक्षया द्विर्वचनेनायं विचित्रो निर्देशः कृत इत्यर्थः । अन्ये त्वादेशादित्वापेक्षयैव द्विर्वचनेन निर्देशं व्याचक्षते । तथाहि ञ्च ञ्च इति द्वाविमावादेशौ तत्र वा शब्दस्य विकल्पार्थत्वाशङ्कायां ञ्चादेशस्य प्रवृत्तिपक्षे यन्नकारस्य स्थानिनोऽभ्यनुज्ञानमायातं तद् द्वितीयेनादेशेन प्रवृत्तेन सता निवृत्त्यर्थ[1] इत्यर्थः । तत्समुच्चयाभिधायी वा शब्दोऽत्र सम्पद्यते[2] । एवं चादेशविषयत्वेन पुनः प्रवृत्तिरूपं यद्वैचित्र्यं तदस्य द्विर्वचननिर्देशस्य प्रयोजनं जायते । यद्येवम्, विकल्पानभिधायी चशब्द एव कस्मान्न कृतः, किं वा ग्रहणेन, उच्यते—निपातानामनेकार्थत्वं प्रदर्शयितुमेव न कृतम् ।

**डढणपरस्तु णकारम्**[3] **१।४।१३**

ननु डढणाः परे यस्मात् इत्ययमर्थो डढणेष्विति सप्तम्यैव लब्ध इति डढणेष्विति कस्मान्न कृतम्, किं परग्रहणेनेत्याह—डढणेष्वित्यादि । ननु डढणेभ्यः पर इत्यस्यापि समाससङ्ग्रहार्थं परग्रहणं स्यात् तथा च षण्णामित्यत्र षडो णो नेति डस्य णत्वे कृते सत्यागमनकारस्य णकारः परस्यानेन[4] सिद्धं भवति । नैतत् । तत्र तवर्गचटेति टवर्गादेशविधानेनैव तस्य सिद्धत्वात् । तु शब्दः समुच्चयार्थः । अथ वा शब्दस्य निवृत्त्यर्थः कस्मान्न भवति, शक्नोति हि न विशेषप्रतिपत्तिकारी तु शब्दो वा शब्दं निवर्तयितुम् । असदेतत् । अवर्तमानेऽपि वा शब्दे समुच्चयार्थे दोषाभावात् । न चानुवृत्तिमात्राद्विकल्पं वा शब्दः प्रतिपादयति[5] येन तन्निवृत्तये तु शब्दोऽयमिति व्याख्यायते[6] ।

**मोऽनुस्वारं व्यञ्जने १।४।१४**[7]

सम्राडित्यत्र वेर्लोपो अपृक्तस्येति क्विपि, लुप्तेऽपि प्रत्ययलक्षणेन क्विबन्तता वेदितव्या । संराजितेति तृच् ।

१. निवर्त्यते (भं०)
२. समुच्यते (बा०)
३. १.४।१४ (दु०वृ०)
४. परस्याणेन (भं०)
५. समुच्चयार्थे वा शब्दे (वा०)
६. व्यारुयायेत (भं०)
७. १।४।१५ (दु०वृ०)

**वर्गे तद्वर्गपञ्चमं वा[1] १।४।१५**

मकारस्यान्तस्थायां परस्यामित्यादि यदुक्तं तत्तद्ग्रहणाद् विशेषान्तर-प्रतिपत्तिकारिणो लब्धमिति नापूर्वत्वेन वक्तव्यम् । तँल्लोकमिति । दृश्यादि-क्रियापेक्षे कर्मत्वे द्वितीयान्तप्रयोगोऽयम् ।

"भट्टोग्रभूति[2] कृते शिष्यहितान्यासे सन्धिप्रकरणे वर्गपादश्चतुर्थः ।"

## पञ्चमः पादः

**विसर्जनीयश्चे छे वा शम् १।५।१**

चे छे इति सप्तम्यौ, कालभावयोरित्यनेन । चछयोर्हि सत्तायां शकारस्य सत्ता लक्ष्यते । एवमुत्तरत्रापि सप्तमी । शमिति स्वरूपेणार्थेनार्थवत्वाद्वि-भक्तिः । एवं षमित्यादावपि वाच्यम् । समुच्चये वा शब्द इति चे छे वा इत्यनेन प्रकारेण वा शब्दोऽयं निमित्तसमुच्चये न तु विकल्पे, विकल्पे सति विसर्जनीयोऽपि पक्षे श्रूयेत । उत्तरसूत्रयोश्चेति समुच्चये वा शब्द इति सम्बन्धः । कश्चरतीत्यादि । नन्वत्र शकारस्य इचुयशास्तालव्या इति स्थान-सावर्ण्यादघोषे प्रथम इति चत्वं कस्मान्न भवति, न भवति प्रक्रियालाघवार्थं शमित्येवमकरणात् । एवमुत्तरत्रापि षत्व-सत्वयोः कृतयोः प्रथमादेशविधानेना-न्तरतम्याट्टत्वठत्वयोः प्राप्तिः परिहर्तव्या[3] । ऋषिश्चेत्स्यात् । इत्यभिधेयः इति शेषः । हरिश्चन्द्र इत्यत्र रूढिशब्दत्वादसत्यप्यवयवार्थानुगमे हरिश्चन्द्रोऽस्येति शब्दसंस्कारस्य विगृह्णन्ति । चछयोरिति न कृतं वैचित्र्यार्थम् ।

**टठे वा षम् १।५।२**

सेवितप्रमाणे चेत्स्याताम् इति प्रमीयते परिच्छिद्यते येन तत्प्रमाणम् । सेवितप्रमाणे च यदि वाच्यत्वेन भवेतामिति । ततो गोशब्दस्य पदशब्दे परे षकारागमो वक्तव्यः । गोष्पदो देश इति गावो पद्यन्ते गच्छन्ति यस्मिन्देशे सः गोभिस्सेवितो देशो गोष्पद इत्युच्यते । गोचरादिसूत्रेण च शब्दाद् घः । गोष्पदोऽयं[4] जलाशयः इति गोः पदं गोष्पदम् । नन्वत्र षष्ठीसमासे गो-

---

१. १।४।१६ (दु०वृ०)
२. चतुर्थः पादः (पु०भं०)
३. परिहेतव्या (वा०)
४. गोष्पदमयम् (मं०)

सम्बन्धिपदं वाच्यत्वेन प्रतीमः न तु लक्षणार्थं किञ्चित्, तत्कथं प्रमाणमेतदुदाहरणं स्यात्, उच्यते—नेह गोष्पदशब्दस्स्वार्थप्रतिपादनायोपात्तः, किं तर्हि, जलाशयस्येयत्तां परिच्छेत्तुम् । तेन परिच्छेदमात्रं हेतुत्वेन युज्यते एतत् प्रमाणम् । उदाहरणमन्यत्र । सेवितात्प्रमाणाच्च गोः पदं गोष्पदमित्यत्र गोसम्बन्धिपदमर्थो न तु सेवितप्रमाणे ।

**तेथे वा सम् १।५।३**

प्रतिष्ठा चेत्स्यात् इति । अवस्थानं, तिष्ठा सा यदि वाच्या भवेदित्यर्थः । प्रतिष्ठातः अन्यत्र । अपदादापदमिति पर्यपाङ्योगे पञ्चमीति पञ्चम्यन्तेन पदशब्देनाङ्मर्यादाभिविध्योरयमव्ययीभावः । यथासंख्यं यथाक्रममिति । संख्या[१] क्रमाञ्चानतिक्रम्येत्यर्थः । स-आदेशो वक्तव्यः । वर्णान्त्यस्य विधिरिति च नादन्त्यस्येति[२] शेषः । तस्कर इत्यादि । तत्करोतीति । त्यदाद्यकाराद्यन्तेति कृञष्टः । वृहतां पतिः वृहस्पतिः । अन्यत्रेति—चोरदेवताभ्याम् ।

**कखयोर्जिह्वामूलीयं न वा १।५।४**

कखयोश्शिट्परयोरित्यादि । शिडिति शषसहा उच्यन्ते । ते कखाभ्यां परे यदा भवन्ति तदा विसर्जनीयस्य सौत्रकार्यं नेष्यते । अत्र च न वा शब्दस्य व्यवस्थितविभाषात्वे हेतुः । वृक्षः । क्षर सञ्चलने । अस्य पूर्वाचार्यसंज्ञा प्रदर्शनलक्षणं वैचित्र्यं प्रतिपादयितुं कखयोः कं वेति न कृतम् ।

**पफयोरुपध्मानीयं न वा १।५।५**

क पातीति पा रक्षणे, अदादिः, अद्भिः प्सातमिति अप्, भिस्, अपां भेद इति दत्वम् । प्सा भक्षणे प्सायतेस्म, निष्ठेति क्तः । पुनः नवा-ग्रहणं विकल्पप्रतिपत्त्यर्थम् । अन्यथा द्वयोर्विकल्पयोः मध्ये ये विधयस्ते[३] नित्या भवन्तीति नित्योऽयं विधिर्ज्ञायते[४] ।

**शषे से वा वा पररूपम् १।५।६**

एको वा शब्दः निमित्तसमुच्चये इति निमित्तेषु शषसेषु अनुक्तस्य कार्यस्य

१. संख्याक्रमम् (वा०)
२. तदन्तस्येति (६)
३. विधेयाः (वा०)
४. विधिर्विज्ञायेत (वा०)

यस्समुच्चयः तत्रैको वा शब्दो वर्तते, तेनाघोषपरेषु शषसेषु परतो विसर्जनीयस्य लोपः विकल्पः समुच्चीयते। वृक्षाः स्थावराः लोपाभावे पक्षे तु सौत्रो विकल्पः। वृक्षास्स्थावराः, वृक्षाः स्थावराः इति। शे वा, षे वा, से वा इत्येवं रूपस्तु निमित्तसमुच्चयो न तथा सूत्राङ्गम् इति यथोक्तमेव निमित्तसमुच्चयो मन्तव्यः। कश्शेते इति। शीङः सार्वधातुक गुण इति गुणः। कष्षष्ठ इति। षष्, षण्णां पूरण इति संख्यापूरणे डमाविति डः। अन्तस्थो डेर्षोरिति थकारागमः, तवर्गस्य षटेति थस्य ठत्वम्। कः स्तौतीति ष्टुञ् स्तुतौ, अदादिः, उकारस्य वृद्धिरिति वृद्धिः। न वेत्यनुवर्तमाने विकल्पोपादानमिहैव विकल्पो नोत्तरत्रेत्यवधारणार्थम्।

**उमकारयोर्मध्ये** १।५।७

उमित्यत्राग्नेरमोऽकार इत्यमोऽकार[1]-लोपः। अकारयोरित्येकशेषोऽयम्। मध्यापेक्षा चैषा षष्ठी तदाह—द्वयोरकारयोर्मध्यमिति। अकारयोर्मध्यमितीह कश्चिच्चोदयति। अथामुमिति कस्मान्न क्रियते। अकारस्य परस्य विसर्जनीयस्योत्वमकारघोषवतोरेव परयोस्सामर्थ्याद्विज्ञास्यते। अन्यस्वरे यत्वलोपयोर्विधानादघोषे परे शादीनाञ्च पररूपपर्यन्तानाम्। अतः किमनेनोत्तरेण च योगेनेति। तदसत्। जिह्वामूलीयादीनामादेशानामभावपक्षेऽप्युत्वप्रसङ्गादिति यथान्यासकरणमेव ज्यायः।

**अघोषवतोश्च** १।५।८

को गत इति। गच्छतिस्मेति गत्यर्थाकर्मकेति क्तः। यो धावतीति, यत् सि त्यदाद्यत्वम्। धावतीति सर्तेर्धावः। अघोषवतोरूमित्येको योगो न कृतो वैचित्र्यात्[2]।

**अपरलोप्योऽन्यस्वरे यं वा** १।५।९

अन्यस्मिन्नकारादौ स्वरे पर इत्यकारस्यावधित्वेनोपादानात् तदपेक्षया-न्यत्वविधानादेवमुक्तम्। समुच्चये वा शब्दः इति विकल्पवृत्तित्वे तु विसर्जनीयोऽपि पक्षे श्रूयते। रुद्र उपरीति। उपरीति ऊर्ध्व-शब्दादूर्ध्वायां दिशीति विगृह्य पुरस्तादादित्वाद् हि-प्रत्यया प्रकृतेश्चोपदेशः। अव्ययमेतत्। नन्वकारात् परस्य

---

१. इत्यकारः (भं०)
२. वैचित्र्यार्थम् (वा०)

विसर्जनीयस्योत्तरसूत्रेण यत्वलोपो विधास्यते[1], नामिनोऽपि परस्य रत्वं वक्ष्यति[2] ततोऽर्थादकारस्यैव विसर्जनीयं प्रत्यवधित्वं लब्धमिति किमपरग्रहणेन, अस्त्येतत्, गुर्वी तु प्रतिपत्तिस्स्यादित्यपर इत्युच्यते। अतएवादिति कर्तव्ये परग्रहणं कृतम्। अन्यः स्वर इति किम्, इति अन्यशब्दविषयोऽयं प्रश्नः। इतर अकारे परे मा भूदिति प्रत्युदाहरति कोऽर्थ इति प्रश्नवाची स्वाभिप्राय-माह। तत्त्वस्यायं विषय इति अकारात् परस्य विसर्जनीयस्य अकार एव परे विसर्जनीयलोपो विकल्पेन[3] भूतामित्यन्यग्रहणं क्रियते। एतच्चाप्रयोजनम्। अयं हि विषयो विशेषविहितस्योत्वस्येति तद्विषयपरिहारेणाकारादावेव स्वरे परे यत्वलोपौ विज्ञास्येते, तत्किमन्यग्रहणेनेत्याह — अन्यग्रहणमित्यादि। सामर्थ्यलब्धोऽप्यर्थो मन्दमतीनां सुखार्थमन्यग्रहणेनोपात्त इत्यर्थः। यलोपाविति कर्तव्ये यं वेति पृथङ्निर्देशो यत्वस्येषत्स्पृष्टतरत्वेन प्राधान्याख्यापनार्थः। ईषत्स्पृष्टतरत्वं हि अत्र यत्वमिच्छन्ति। ईषत्स्पृष्टतरत्वं हि पुनरुच्चारणे स्थानकरणशैथिल्यमुच्यते।

**आभोभ्यामेवमेव स्वरे १।५।१०**

भो इत्यादौ यो भो-शब्दस्तस्य भो इत्यनुकरणमनुकार्येणार्थेनार्थवत्वाद्वि-भक्त्युत्पत्तिः आकाराद् भो-शब्दाच्च परो विसर्जनीयो लोप्यो भवतीत्येवं विवृण्वन्नाकारभोशब्दयोः लोपयत्वयोश्च यथासंख्यभावं सूचयति। एतच्च प्रत्येकं कार्यद्वय-समुच्चयार्थस्य वा शब्दस्येहानुवर्तमानत्वाल्लभ्यते। देवा आहु-रिति। दीव्यन्तीति देवाः दिवि राजन्तः इति[4] वा। आहुरिति ब्रूञ्, अन्ति, ब्रुव पञ्चानामिति अन्ति-प्रत्ययस्य उस्, ब्रुवश्चाह आदेशः, भो इहेति। भवन्त् सि, भवतो वादेरिति वन्त् इत्यस्यौत्वम्। प्रभोराश्रय इत्यत्र तु यत्व-लोपौ न भवतः। भो-शब्दस्यानर्थकत्वात्। पुरुषाः शेरते, इति शीङ् स्वप्ने, अन्ते, शीङस्सार्वधातुक इति गुणः। शेतेरिदन्तेरिति रेफागमः। आत्मने चान-कारादिति न लोपः। पररूपं नास्तीत्यादिना कार्यभाजो विसर्जनीयस्य सत्तां प्रदर्शयन्प्रत्युदाहरणस्य साङ्गत्यं प्रदर्शयति। सति हि पररूपे विसर्जनीया-भावात्कस्यात्र यत्वलोपौ निषिध्येते इति प्रत्युदाहरणमसङ्गतं स्यात्। एवमेव ग्रहणमित्यादि। नन्वीषत्स्पृष्टतरं यत्वस्य सूचयितुमेव ग्रहणं स्यात् तत्कथं तस्य

१. विज्ञास्यते (भं०)
२. वक्ष्यते (वा०)
३. किल (वा०)
४. इति वा (६)

अन्यत्र[1] प्रयोजनं भवेत्, उच्यते—अजहद्धर्मत्वादधिकाराणां पूर्वसूत्रोपात्तधर्मपरिगृहीतस्यैव, यत्वस्येहानुवृत्तिर्भविष्यतीति विशिष्टयत्वस्यानुवृत्तिलक्षणं प्रयोजनमुल्लङ्घ्य वृत्तिकारोपदर्शितमेव प्रयोजनमेवमेव ग्रहणस्य व्याख्येयम् । ननु भो शब्द एवामन्त्रणार्थवृत्तेरोकारान्तस्योपलक्षणं विज्ञास्यते तत्कथमेतत् प्रयोजनं व्याख्यायते । नैतत्, अवधिमात्रं प्रत्युपक्षीणस्य तस्योपलक्षणत्वायोगात् । भगो अत्रेत्यादि । भगवन्त्[2] सि, उत्वविधौ वक्तव्यकथनात् वन्तु इत्यस्य चोत्वम् । सामान्यस्वरार्थमिति । अकारे स्वरेऽन्यत्र च यथा स्यादिति स्वरग्रहणम् । असति हि स्वरग्रहणे कथमकारे स्वरे न स्यादित्याह—अन्यस्वर इति । वचनादित्यादि ।

### घोषवतिलोपम् १।५।११

दोषा यान्तीति, दुष्यत्येभिः[3] इति दुषेः व्यञ्जनान्ताच्चेति करणे घञ्, यान्तीति, या प्रापणे, अदादिः लुक् । भो यज इति यजेः हि लोपः, पुनर्लोपग्रहणं यकारनिवृत्त्यर्थम् इति । प्राक्तनं तु लोप्य-ग्रहणं यकारेण सम्बद्धमिति तदनुवृत्तौ सकारोऽप्यनुवर्तेत । तस्यानुवृत्तौ अपार्थको योगभेदस्स्यात् । स्वरघोषवतोरिति पूर्वप्राकरणाद्[4] योगभेदादेव तत्प्रतिपत्तये किमर्थं लोपग्रहणमिति चेत्, शक्यत एवं विज्ञातुम्, गुर्वी तु प्रतिपत्तिस्स्यादिति, यकारनिवृत्त्यै लोपग्रहणमेव ज्यायः । भगो-अघो-शब्दाभ्यामपि लोपो वक्तव्य इत्येवमेव ग्रहणानुवृत्तेरेतत्फलं व्याख्येयम् ।

### नामिपरो रम् १।५।१२

नामिनः परो नामिपर इत्येतेन पञ्चमीसमासस्तत्पुरुषो न तु पञ्चम्यर्थे बहुव्रीहिरिति दर्शयति । कथं पुनर्नायं बहुव्रीहिरित्यवसीयते, उच्यते—यद्ययं बहुव्रीहिस्स्यात् ततो नामिनि परे रत्वं विहितं स्यात्, नामि च स्वरान्तर्गतः स्वरे च परे उत्तरसूत्रेण रेफादेशः विधास्यते । एवं घोषवत्स्वरपरे रमित्येव सूत्रविन्यासं कुर्यात् किं नामिनि परे पृथक्त्वविधानेन—तदेवमकरणान्नेह[5] बहुव्रीहिराश्रीयते । ननु सुपीस्सुतूरित्यादावपि पिसितुसोस्सकारस्य विसर्जनीये

---

१. अन्यत्र (वा०,
२. भगवन्त्, अघवन्त् (वा०)
३. दुष्यत एभिः (वा०)
४. पूर्वत्रैवाकरणात् (वा०)
५. तदेवमकारणान्नेह (वा०)

कृते यदि तस्य यद्रत्वं तस्यापि यदि विसर्जनीयः स्यात् तत्किमनेनान्तरासञ्जा-तेन रत्वेन कृतं स्यात् । रूपविशेषलक्षणस्य फलस्यानुपलभ्यमानत्वादित्याह—ईरूरौ विधीयेते । न चासति रत्वे ईरूरौ भवत इति रत्वेन ईरूरौ भाव्येते । भावितयोश्च तयोरीरूरौ भवत इति तत्प्रवृत्तये रत्वमिदं सूत्रेण विधीयते । यद्येवं बुद्धिः धेनुरित्यादावपि सकारस्य यो विसर्जनीयस्तस्यापि नामिपरस्य रत्वमीरूरोः प्रवृत्त्यर्थं कस्मान्न भवति, उच्यते—नात्र विषये कृतेऽपि रत्वे ईरूरौ प्रवर्तेते । तद्विधौ हचतुर्थान्तस्येत्यतो धातुग्रहणानुवृत्त्या धातुसम्बन्धिनो-रीरूरोः स्थानित्वेन परिग्रहात् । तथा च धनुर्भ्यामित्यत्र ईरूरौ न भवतः । अतो बुद्धिः धेनुरित्यादौ कृतेऽपि रत्वे धातुत्वाभावादीरूरोरप्रवृत्तेः कस्मै प्रयोजनाय रत्वं स्यात् । परग्रहणं रत्वं प्रतिस्थानिनः स्थानित्वाशङ्का निरा-सार्थम् । देवा इह, भो उत्तिष्ठेत्यादावाभोभ्यां परो नामी रत्वं प्राप्नोतीति एवमपि कश्चिदाशङ्क्येत् ।

**घोषवत्स्वरपरः १।५।१३**

घोषवन्ताश्च स्वराश्चेत्यादि-द्वन्द्वेऽत्राल्पस्वरस्य स्वरशब्दस्य पूर्वनिपात-करणं तद्विधेरनित्यत्वसूचनार्थम् । तेनोलूखलमुसल इत्यादि सिद्धम् । ते परे यस्मादित्यादि । एतेनायं पञ्चमीसमासः तत्पुरुष इति दर्शयति । एतच्च घोषवत परस्य विसर्जनीयस्यासम्भवाल्लभ्यते । पूर्वेण सिद्धत्वादपार्थको योगा-रम्भ इत्याह—सिद्धे सतीत्यादि । नियमस्वरूपं प्रदर्शयितुमाह—तेनेत्यादि । अद्भिः प्सातमित्यत्र यदि रत्वं स्यात् ततस्तद्विधानसामर्थ्यादसति विसर्जनीये रेफ एव श्रूयेत ।

**र प्रकृतिरनामि परोऽपि १।५।१४**

यो यस्माज्जायते सः तस्य प्रकृतिरित्यनेन कारणपर्यायेण प्रकृतिशब्दो यथा पटस्य तन्तवः प्रकृतिरिति दर्शयति । जायते सत्तां प्रतिलभते इत्यर्थः । उमकारयोर्मध्ये अघोषवतोश्चेति सूत्राभ्यामुत्वं प्राप्तम् । अपरो लोप्यो अन्य-स्वरो यं वेति अनेनापि[1] लोप-यत्वे प्राप्ते यस्मिन्प्राप्ते यो विधिरारभ्यते सः तस्य बाधको भवतीत्यनेन रेफादेशविधानेन बाध्यन्ते । तेषां तूत्वलोपयत्वानां को विषय इत्याह—तेषां त्वित्यादि । सः प्रकृतिः सकारस्य स्थाने यो विहितः विसर्जनीयः सः तेषामुत्वलोपयत्वानां विषय इत्यतोऽन्यस्य यो विसर्जनीय-स्तस्यानेन रत्वं विधीयते । अन्तर्गत इत्यादि । अन्तर् स्वर् इत्येतेऽव्यये ।

१. न्यूनपाठः (मं०)

रेफस्य विसर्गः तस्यानेन रत्वम् । चेतसो राजनित्यादिप्रचेतसः सकारस्य यो विसर्जनीयस्तस्य राजन्नित्येतस्मिन्परे रत्वं वक्तव्यम् । हे प्रचेता राजन्निति, प्रगतो चेतो वा अस्य[१] सः प्रचेता, तस्यामन्त्रणमेतत् । सकारस्य विसर्गे[२] कृते वा रत्वं रत्वपक्षे रोरे लोपमित्यादिना रेफलोपो दीर्घश्च । अन्यत्र घोषवतोऽश्चेत्युक्तम् । अहरादीनामित्यादि । अहरादयः पत्यादयश्च प्रयोगतोऽनुसर्तव्याः । गीर्पतिरित्यादि । गॄ निगरणे, दुर्वी[३] हिंसार्थः, क्विप्, ऋदन्तस्येरः गुणे इति रः, राल्लोप्याविति व-लोपः । सर्वत्र षष्ठीसमासः कृते रेफे इरूरोरीरूरौ । एतच्चापि शब्दस्य बहुलार्थस्य विजृम्भितमिति नापूर्वत्वेन वक्तव्यम्, तथा च अहर्गच्छति, अहर्ददाति, अहरिदमित्यादौ घोषवति स्वरे च नित्यं रत्वम् । क्वचित्तु नैव, अह्नोरूपम् अहोरूपमिति । अहश्च रात्रिश्च अहोरात्रः । अकारस्समासान्तः । अह्नोः रथन्तरम् अहोरथन्तरमित्यादौ ।

**एष स परो व्यञ्जने लोप्यः १।५।१५**

एष चरति, स चरति, इत्यादिषु प्रयोगेषु यावेष सः शब्दौ तावेष स पर इत्यत्र निर्देशेऽनुक्रियेते[४] । अतएवानुकरणत्वाद् एषश्च सश्च तौ एषसाविति । वृत्तौ विसर्जनीयस्य लोपो न कृतः । एषसाभ्यां पर एषस पर इत्येतेन तत्पुरुषोऽयं न तु बहुव्रीहिरिति दर्शयति ततश्च यः करोति स कर्ता इति सशब्दात्परस्य विसर्जनीयस्य लोपदर्शनादवगम्यते । शादय आदेशप्राप्ता इति तेऽपवादत्वादनेन बाध्यन्त इति शेषः । एष चरतीत्यादि । एतत् तत्[५] सि, त्यदाद्यत्वम् । सोमः ददातीति । डुदाञ् दाने जुहोत्यादिः । यश्चरतीत्यादि । यत् सि, त्यदाद्यत्वम् । एषसाभ्यामिति कर्तव्य इत्यादि । एषसाभ्यामिति पञ्चमीनिर्देशेनैव पञ्चम्या निर्दिष्टे परस्येति परग्रहणे लब्धे यत्पुनरपि परग्रहणं क्रियते तस्याधिकस्य करणे एतत्प्रयोजनमक्-प्रत्यये कृते नञ्समासे च लोपो मा भूदिति । तेनेति । परग्रहणेनेत्यर्थः । अव्ययसर्वनाम्न इत्यक्-प्रत्यय इति । अज्ञातादावर्थ इति शेषः । नन्वेषसशब्दाभ्यामित्यादि । एषसपर इति वचनेन केवलाभ्यामेषसाभ्यां परस्य विसर्जनीयस्य यल्लोपलक्षणं कार्यं सूत्रेणोक्तं तत्केन

---

१. यस्य (भं०)

२. विसर्जनीये कृते (भं०)

३. धुर्वी (भं०)

४. निर्देशेन क्रियेते (वा०)

५. न्यूनपाठः (भं०)

प्रकारेणाक्-प्रत्ययसहिताभ्यां परस्य प्राप्नुयात्। शब्दान्तरत्वादित्यक् प्रत्यय-विषये लोपस्य प्राप्तिरेव नास्तीति किं तन्निवृत्त्यर्थेन परग्रहणेनेति मन्यमानस्य प्रश्नः। तन्मध्यपरिभाषा सामर्थ्यात् सत्यक्-प्रत्ययेऽस्ति प्राप्तिरित्युत्तरयति। सत्यमित्यादि। स्वरादन्त्यात्पूर्व इति वचनेन तयोरेतत्तदोर्मध्ये पतिते क्-प्रत्यय एतत्तद्ग्रहणेनैव गृह्यत इत्येषसाभ्यामुच्यमानो लोप एषक-सकाभ्यामपि प्राप्नोति। तन्मध्यपतित इत्यस्य वचनस्यास्तित्वे वक्ष्यमाणमनक इति निषेध-करणं लिङ्गम्। असति ह्यस्मिन्वचने इदमोत्वमुच्यमानमिदकसो नैव प्राप्नोती-त्यद्व्यञ्जने नक इत्यत्रानक इति प्रतिषेधं न कुर्यात्। तस्मात्तन्मध्यपतित-स्तद्ग्रहणेन गृह्यत इति वचनात्। सत्यप्यक्-प्रत्यये लोपस्य (प्राप्तिरेव[1] नास्तीति) तन्निवृत्तये परग्रहणं युक्तम्। [2]नञ्समासेऽप्यस्ति प्राप्तिः येनविधि-स्तदन्तस्येति वचनात्। तथा च पतिरमास इत्यसमासग्रहणं क्रियते। मेषो गतः दासः पचति इत्यत्र मेषदासशब्दाभ्यां योऽर्थः प्रतीयते तस्मादेकदेशभूता-भ्यामेषसशब्दाभ्यामप्रतिपादनात्तयोरनर्थकत्वमित्यर्थवद्ग्रहणपरिभाषया ताभ्यां परस्य विसर्जनीयस्य लोपो न भवति। यद्येवम्, सम्प्रैषो वर्तत इत्यत्र भवत्ययमेष शब्दो भावघञन्तोऽर्थवानिति कृत्वा लोपः कस्मान्न भवति। प्रशब्दाकारेण सन्धौ कृते नायमेष शब्द इति चेत् परनिमित्त आदेश इति वचनादेष शब्द एवायमित्यस्ति लोपस्य प्राप्तिरित्याह— एष शब्दस्येत्यादि। एतच्छब्दे सर्वनाम्ना व्युत्पादितस्यैषशब्दस्यार्थवतो ग्रहणं न त्वन्यस्याप्यर्थवतो भावघञन्तस्य। अत्र हेतुमाह— स शब्देनेत्यादि। नन्वसर्वनामापि ग्रामवासा-द्येकदेशः स शब्दोऽस्ति तत्कथं तेन साहचर्यादिति युक्तो हेतुः स्यात्। सत्यम्। अर्थवतस्तु स-शब्दस्येह ग्रहणादित्युक्तम्। अर्थवांश्च तच्छब्दसाधितः सर्व-नामैव सूत्रे परिगृहीत इति तेन साहचर्यं भवति व्यवस्था हेतुः।

**न विसर्जनीयलोपे पुनः सन्धिः १।५।१६**

लोपनं लोपः। भावे घञ्। सन्धिरिति। सम्पूर्वात् डुधाञः सन्धानं सन्धि-रित्युपसर्गे दः किः, आलोपे सार्वधातुक इत्यालोपः। रुद्र आहेति। ब्रूञो रूपम्। अपरलोप्य इति विसर्ग लोपः। भो इदमिति। भो इति भवन्त् इत्यस्य सम्बुद्धेः रूपम्। आभोभ्यामिति विसर्गलोपः। विसर्जनीयग्रहणं शब्दान्तरलोपे सति सन्धिनिषेधाशङ्कानिरासार्थं तेन क्षीरमिश्रमुदकं क्षीरोदकमित्यादौ मध्यम-

१. प्राप्तिरस्तीति (वा०)
२. नहि (वा०)

पदलोपेऽपि सन्धिर्न निषिध्यते । पुनर्ग्रहणमित्यादि । तत्र केचित्तावदाहुः—

सैष दाशरथी रामस्सैष राजा युधिष्ठिरः ।
सैष दुर्योधनो राजा सैष पार्थो धनञ्जयः ॥

इत्यादौ क्वचिद्विसर्गस्य लोपेऽपि सन्धिनिषेधो मा भूदिति पुनर्ग्रहणं क्रियत इति । अन्ये त्वाहुः—इतिहासपुराणादावेवंविधाश्शब्दाः प्रयुज्यन्ते । अन्यत्र त्वेषां साधुत्वसंसिद्धये लक्षणमिदानीन्तनं प्रवर्तते न वा इत्यत्र सूरयः प्रमाणम् । सन्धिकार्यस्य प्राप्तस्यैव निषेधो विज्ञास्यत इति सन्धिग्रहणं संहिताविषये प्रकरमेतदिति प्रदर्शनार्थम् ।

**रो रे लोपं स्वरश्च पूर्वो दीर्घम् १।५।१७**

अग्नीरक्षतीत्यादि घोषवत्स्वरपर इति रत्वे कृते अनेन[1] रेफलोपो दीर्घश्च । इह कस्मान्न[2] भवतीत्यादि । उच्चैरित्यव्ययम् । गौरिति । गोशब्दस्य सौ परे गोरौ घुटि इत्यौत्वम् । अत्र पूर्ववद्रेफादेशे कृते रेफलोपे सञ्जाते तत्सहभावेन विधीयमानः पूर्वस्वरयोरैकारौकारयोः यथाक्रमं दीर्घ ईकार ऊकारश्च कस्मान्न भवति, तत्कथं पुनर्दीर्घान्तरसम्भवेऽप्यैकारौकारयोः (स्थाने[3] दीर्घावीदूतावेव प्राप्नुयातामित्यत्र हेतुमाह—तालव्योष्ठ्ययोरित्यादि । एतेन तालव्यौष्ठ्ययोरैकारौकारयोः) आन्तरतम्यात्तालव्यौष्ठ्यावेव दीर्घावीदुतौ प्रसज्येयातामिति दर्शयति । तत्रैदौतोस्तालव्यौष्ठ्यत्वम् । ए ऐ कण्ठतालव्यौ, ओ औ कण्ठ्यौष्ठ्याविति वचनात् । ईदूतोरपि इचुयशास्तालव्याः उपूपध्मानीया ओष्ठ्या इति तालव्यौष्ठ्यत्वम् । अत्र परिहारमाह—सत्यमित्यादिना । (दीर्घेण[4] हि सम्बुद्धि) शब्दत्वादाक्षिप्तस्य ह्रस्वस्य स्वरस्य स्थाने भवितव्यम्, न तु दीर्घस्य । नित्यदीर्घाणि तु सन्ध्यक्षराणीत्युक्तं प्राक् । अतो दीर्घत्वादैकारौकारयोर्दीर्घावीदूतौ न भवतः । यद्येवम्, दीर्घेणाक्षिप्यमाणो ह्रस्वः स्वर एवेति किं स्वरग्रहणेन, उच्यते दीर्घस्य क्वचिदनित्यत्वसूचनार्थं स्वरग्रहणम् । तेन "स्वर्गार्थं ब्राह्मणे दानं, यशोऽर्थं नटनर्तके । सङ्ग्रहार्थञ्च भृत्येषु, भयार्थं पुन राजसु ॥" इत्यादौ पुनः रो रेफस्य लोपे सत्यकारो दीर्घो न भवति । ननु

१. तेन (वा०)
२. कस्माद् भवति (वा०)
३. न्यूनपाठः (भं०)
४. दीर्घेण हि सम्बन्धि (भं०)

रेफे परे यस्स्वर इति व्याख्यायमाने सप्तम्या निर्दिष्टे पूर्वस्येति निर्दिष्टग्रहणस्यानन्तर्यार्थत्वादनन्तरो व्यवहितपूर्व एव स्वरो दीर्घं प्रतिस्थानित्वेन विज्ञास्यते । तदपार्थकं पूर्वग्रहणम् । विस्पष्टार्थं तु ।

**द्विर्भावं स्वरपरश्छकारः १।५।१८**

भवनं भावः । श्रिणीभूभ्यो नुपेति घञ्, द्वौ वारौ द्विरित्येवं विगृह्यते । द्विशब्दात् तसादित्वादाख्याताच्च तमादय इति सु-प्रत्ययः । स्वरात्परश्छकार इत्येतेन पञ्चमीसमास एव न तु पञ्चम्यर्थे बहुव्रीहिरिति दर्शयति । एतच्च छादेर्घिरिति स्वरे परे छकारस्य द्वित्वाकरणाल्लभ्यते । दीर्घात्पदान्ताद्वेष्यत इति पदस्यान्ते वर्तमानाद् दीर्घात्परस्य छकारस्य द्वित्वं विकल्पेनेष्यते । एतच्च यथालक्ष्यं छकारस्य द्विर्भावार्थाद् भावग्रहणादेवावगतमिति नापूर्वत्वेन वक्तव्यम् । देवीच्छायेति । देवशब्दात्पचाद्यजन्तान्नदादित्वादीकारः प्रत्ययः । षष्ठी समासः । अन्तर्वर्तिनीं विभक्तिमाश्रित्य पदान्तवृत्तिरयं दीर्घ ईकारः । ह्रीच्छतीति । ह्रीच्छ लज्जायाम् । आङः परस्य तु नित्यमिष्यत इति द्वित्वमिति शेषः । आच्छायेति, ईषच्छायेति विग्रहः । आङ् इति ङ्-अनुबन्धविशिष्टस्याकारस्योपादानादीषदर्थादिवृत्तेरेवाकारादयं नित्यो विधिः । अन्यत्र तु दीर्घात्पदान्ताद्वेति विकल्प एव भवति । आच्छाया आछायेति । आङ् इति चैतदुपलक्षणपरत्वेन व्याख्येयमिति । तेन माङोऽपि परस्य छकारस्य नित्यं द्वित्वमिष्यते । माच्छैत्सीत्, छिदिर द्वैधीकरणे दि, सिच्, सिचः इतीट् । व्यञ्जनान्तानामनिटामिति वृद्धिः । न मा मास्म योग इति निषेधादकारागमाभावः । आङ्-अनुबन्धविशिष्टात्तु मा शब्दात्पूर्वं वा विकल्पः । प्रमाच्छन्दः, प्रमाछन्दः इति प्रमाशब्दो समान इत्यस्य प्र-पूर्वस्यातश्चोपसर्ग इत्याङ्प्रत्ययान्तः । स्वरादिति कर्तव्य इत्यादि । स्वरादिति पञ्चम्या परग्रहणं लब्धमिति भावः । लक्ष्यानुसारेणेति स्वमनीषिकयेत्यर्थः । नन्वयमर्थो भावग्रहणादेवाधिकादवाप्यत इति किं परग्रहणेन, सत्यम्[२] । अन्यतरं तु शक्यमकर्तुम् । भाव-परयोरेकस्य कर्तुमशक्यत्वात् । दद्ध्यत्र, मद्ध्वत्रेति दधिमधु-शब्दाभ्यां नपुंसकात्स्यमोरिति सि लोपः । कृते द्विर्भावे धुटां तृतीयः इति पूर्वस्य दस्य तृतीयो दः । ननु स्वरादेशपरिभाषया यत्ववत्वयोस्स्थानिवद्भावाद् व्यञ्जनं न परभूतमिति कथमत्र धस्य द्विर्भावस्स्यात् । अस्त्येतत् । द्विर्वचनविधिं प्रति

---

१. आच्छायेति (वा०)

२. नित्यम् (वा०)

तु प्रतिषिध्यते स्थानिवद्भावो द्विर्वचनविधि प्रति न स्थानिवद् इति वचनात् ।
भट्टोग्रभूतिकृते शिष्यहितान्यासे सन्धिप्रकरणे वर्गपादः पञ्चमः ।

## षष्ठः पादः

**च बा हा १।६।१**

ब्राह्मणो क्षत्रियो वा इत्येवमादि-प्रयोगस्थानां चादीनामनुकरणभूताश्चादय इह संज्ञित्वेन निर्दिश्यन्ते तेभ्योऽनुकार्येणार्थेनार्थवत्वात्प्रत्येकं (सञ्जातस्य[1] प्रथमैकवचने स्यादि) लोपः । निपातशब्दोऽधिकरणघञन्त इत्युक्तं प्राक् । नन्विपूर्वादिणो न व्येतीत्यव्ययमिति पचादित्वादच्प्रत्ययः । नाम्यन्तयोरित्यादिना गुणे कृते विशब्देकारस्य[2] यत्वम् । ननु कथमेतत्, यावता पूर्वं धातुरुपसर्गेण युज्यते पश्चात् साधनेनेति गुणात्पूर्वं विशब्देकारस्य समानदीर्घत्वं प्राप्नोति । कृते तु तस्मिन्परनिमित्त आदेश इति वचनादिकारस्य धातुत्वाद् गुणस्स्यात्, ततश्चाव्ययशब्दो न सिध्यति । पूर्वञ्च धातोरुपसर्गेण योगो न्याय्यः । अन्यथा साधनसम्बन्धे सत्यनुभूयत इत्यादावकर्मकत्वाद् भवतेः, कर्मण्यात्मनेपदं न प्राप्नोति । पूर्वं धातूपसर्गेण योगे सति अकर्मका अपि धातवः सोपसर्गाः अर्थान्तराभिधायित्वे सति सकर्मकाः भवन्तीति कर्मण्यात्मनेपदं सिध्यतीति तस्माद् धातूपसर्गसम्बन्धस्यान्तरङ्गत्वात्तन्निमित्तकस्य दीर्घस्य[3] स्यादेव गुणात्पूर्वं प्रवृत्तिः । अत्रोच्यते—पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेणेति । प्राक्त्वयुक्त उपसर्गेण सम्बन्धः । उपसर्गो हि क्रियाविशेषणत्वेन[4] प्रसिद्धः । न च साधनादवाप्तजन्माक्रिया उपसर्गजनितेन विशेषणेन सम्बन्धमनुभवितुमलमित्युत्पादकेन साधनेन। साध्यस्वभावा सा पूर्वमभिसम्बन्धमपेक्षते । साधनसम्बन्धं तु विरहय्य[5] कीदृशं तस्याः रूपं यद्विशेषणायोपसर्ग उपादीयते तत्तस्मात्पूर्वं धातोस्साधनेन सम्बन्धः । यद्येवम्, अनुभूयत इत्यादौ का गतिः, उच्यते—अनेकार्थत्वाद् धातूनां भवतेस्सकर्मकादर्थान्तरवृत्तित्वात्कर्मण्यात्मनेपदं भविष्यति । तस्मादिण इणो धातोस्सञ्जाते साधनाभिधायिनि प्रत्यये

---

१. संज्ञा तस्य प्रथमैकवचनस्यादि (?)
२. विकारेऽकारस्य (वा०)
३. दीर्घस्यादावेव (भं०)
४. विशेषकत्वेन (वा०)
५. विरहय (वा०+भं०)

तन्निमित्ते च गुणे कृते सति सिद्धो व्ययशब्दः निपातसंज्ञो भवति। (अव्यय-संज्ञश्चेति[1]। अथ किमर्थमिमे उभे संज्ञे क्रियेते नत्वेकैव निपातसंज्ञा क्रियतां तयैव च व्यवहारो भविष्यति किमव्ययसंज्ञया, उच्यते—अव्ययसंज्ञायाः प्रणयन-मव्ययमित्यनेनैकदेशेन "सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु। सर्वेषु च वचनेषु यन्न व्येति तदव्ययमिति।" पूर्वाचार्यलक्षणस्य सङ्ग्रहार्थम्। तेन त्रिषु स्त्रीपुंनपुंसकेषु यत्सदृशं लिङ्गविशेषापरिग्रहात्तुल्यं रूपं तथा सर्वासु च विभक्तिषु विभक्तिनिमित्तेषु च कर्मादिकारकेष्वेकरूपम्। यदपि सर्वेषु वच-नेषु एकत्वादिषु न व्येति, नानात्वं न गच्छति) रूपान्तरं न प्रतिलभ्यते तत्सर्वमव्ययम्। तेनानुपात्तानामुच्चैः-प्रभृतीनामव्ययसंज्ञा सिद्धा भवति। अपार्थकस्तर्ह्युत्तरो योगः। नापार्थकः, तत्प्रपञ्चार्थत्वात्। यद्येवम्, अव्यय-संज्ञैवास्तु किं निपातसंज्ञया, अव्ययमिति पूर्वाचार्यसंज्ञा संश्रयणात् सूत्रानु-पात्ताप्यव्ययसंज्ञा विज्ञास्यते एवं तर्हि निपातसंज्ञयाप्यस्ति एषां चादीनां व्यवहार इति पूर्वाचार्यप्रसिद्धिमुपदर्शयितुं निपातसंज्ञा प्रणीयते इति केचिन्म-न्यन्ते। नो शब्दस्य निपातत्वादोदन्त इत्यादिना प्रकृतिभावः। ब्राह्मणाश्चेति। च शब्दस्याव्ययत्वात् ततः परस्य सेरव्ययाच्चेति लुक्। गुरुसंज्ञाकरणादि-त्यादि। दा शिडित्यादिवल्लघ्व्यां संज्ञायां कर्तव्यायां यदेतदव्ययमिति गुरु-संज्ञायाः करणं ततो हेतोश्चादीनां समुच्चयादिलक्षणार्थं प्रतिपादनप्रसिद्ध-व्यापाराणां सतामियमव्ययसंज्ञेष्यते। अर्थमात्रप्राधान्यविवक्षया त्वेषामव्ययत्वं नास्त्येव, तेन किं सिद्धं भवतीत्याह—तेनेत्यादि। वाक्यान्तरस्थस्य च शब्द-स्यानुकरणभूतो स्थानेऽयं च पठित इत्ययं च शब्दः। एवं यस्मादर्थ इत्यव्यय-मपि[2] हि शब्दः। तथा चानयोस्समुच्चयादिलक्षणमर्थमप्रतिपादयतोरनुकार्येणा-र्थेनार्थवत्वेऽप्यव्ययसंज्ञा न भवतीत्यादावित्यादिग्रहणेनोच्चैरतिक्रान्तोऽत्युच्चैः सो अत्युच्चैः स इत्यादावतिक्रान्तस्यार्थस्य प्राधान्ये सत्यप्यव्ययसंज्ञा पूर्ववन्न भवति।

**अन्तर् स्वर् प्रातर् पुनरधोऽप्याहुः १।६।२**

पुनरधरिति। र प्रकृतिरिति रत्वम्, अपि समुच्चय इत्युत्तरत्रेति शेषः। किमुत्तरत्रासौ समुच्चिनोतीति चेत्, अव्ययसंज्ञा, इतरथा हि तां येन नाप्राप्ति-न्यायेनोपसर्गसंज्ञा बाधेत।

---

१. न्यूनपाठः (भं०)
२. इत्ययमपि (वा०)

**प्र परा नि १।६।३**

निर्देशे नि-शब्दस्य णत्वं न भवति। स्वरूपभङ्गप्रसङ्गात्। उपपूर्वात् सृजेरुपसृज्यते धात्वर्थेन युज्यत इत्यकर्तरि च कारक इति कर्मणि घञ्। अपोपेत्यतदन्तमिति अपोपेत्येकदेशेन सूत्रमुपलक्षयति। पदमिति कृतद्वन्द्वं लुप्तजस्कमिति पूर्ववत्, पूर्वाचार्यसंज्ञाङ्गीकरणं क्रियायोगे सति प्रादीनां संज्ञासम्बन्धप्रतिपत्त्यर्थम्। तेन सेना परा अयत इत्यत्रोत्कृष्टवाचिनः परा-शब्दस्य अयतिक्रियासम्बन्धाभावादुपसर्गस्यायताविति लत्वं न भवति, क्रियायोगे चोपसर्गस्मरणादाकार इह सूत्रे ङनुबन्धविशिष्टः पठितः। क्रियायोगे तथाभूतस्यैव तस्य स्मरणात्। तदुक्तम्—

ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः।
एतमातं ङितं विद्यात् वाक्यस्मरणयोरङित्॥

इति। तथा चाङि युद्ध इति निर्देशं करोति।

**अन्वाद्या कर्मप्रवचनीयाः १।६।४**

आदौ भव आद्य इति यदुगवादित इति योगविभागाद् यत्। कर्मप्रोक्तवन्तः कर्मप्रवचनीयाः। अतीते काले कृत्ययुटोऽन्यत्रापीति कर्तरि अनीयः प्रत्ययः। कर्मशब्दः क्रियावचनः। वचिरप्यनेकार्थत्वाद् द्योतने वर्तते। तेन ये प्रयुज्यमानाः क्रियापदे क्रियाविशेषं द्योतितवन्तः, प्रयुज्यमाने तु वक्ष्यमाणस्य सम्बन्धस्य विशेषस्य द्योतकाः ते कर्मप्रवचनीया इत्युक्तं भवति। पूर्वाचार्यसंज्ञाङ्गीकरणं तदुक्तं विषयविशेषपरिग्रहार्थम्। तेनानु-शब्दो लक्षणेत्थंभूताख्यानभागवीप्सासु सहार्थे डानौ च कर्मप्रवचनीयसंज्ञः। तत्र लक्षणं चिह्नं हेतुर्वा। किञ्चित्प्रकारं प्राप्तः इत्थम्भूतस्तस्याख्यानमित्थम्भूताख्यानं स्वीक्रियमाणोऽसौ[2] भागः। पदार्थान्[3] व्याप्तुमिच्छा वीप्सा। सह लक्षणोऽर्थः सहार्थः। हानिर्न्यूनता। तत्र लक्षणे तावत्—वृक्षमनुविद्योतते विद्युत्। अत्र वृक्षो लक्षणं विद्योतमाना तु विद्युल्लक्ष्या। तयोः वृक्षं प्राप्य विद्युत् विद्योतते इति प्राप्तिक्रियाजनितो यो लक्ष्यलक्षणः सम्बन्धः सोऽनुशब्देन द्योतते। एवं शाकल्यस्य संहितामनु प्रावर्षत्। अत्र संहिता हेतुः, वर्षणं हेतुमत्तया[4] शाकल्य-

१. अपूर्णमिदं सूत्रम् (उभयत्र)
२. शो (उभयत्र)
३. पदार्थम् (वा०)
४. हेतुमत्तयोः (उभयत्र)

शाकल्यस्य संहितां श्रुत्वा देवः प्रावर्षदिति श्रवणक्रियाजनित हेतुहेतुमद्भाव-लक्षणं सम्बन्धमनुशब्दः द्योतयति । इत्थंभूताख्याने—साधुर्देवदत्तो मातरमनु । देवदत्तस्यात्र मातृविषये साधुत्वापत्तिराख्यायते तेन मातरं प्राप्य देवदत्तस्य साधुत्वापत्तिरिति प्राप्तिक्रियाजनितो मातुः साधुत्वापत्तेश्च यो विषयविषयि-भावलक्षणसम्बन्धः तस्य द्योतकोऽयमनुशब्दः । भागे – यदत्र मामनु स्यात्तद् दीयताम् । योऽत्र मम भाग आभजति स दीयतामित्याभजनक्रियाजनितस्स्व-स्वामिभावलक्षणोऽत्र सम्बन्धः । मामित्यस्मदो द्वितीयैकवचनो त्वन्मदोरेकत्व इति मदादेशः, अन्तलोपः, अमोचाम् । वीप्सायाम्—वृक्षं वृक्षमनुशेते । द्विश्च पदमिति वीप्सायां द्विर्वचनं द्विर्वा, अत्र वृक्षाणां पक्षिशयनक्रियायाश्च[1] यो आधाराधेयसम्बन्धः सोऽनुशब्दद्योत्यः । सहार्थे—पर्वतमनुसम्बद्धा सेना । पर्व-तेन सहेत्यर्थः । हानौ – अनुशाकटायनं वैयाकरणाः, शाकटायनं वैयाकरण-मपेक्षयान्ये वैयाकरणाः हीनाः इत्यर्थः । परिशब्दो लक्षणादिषु चतुर्षु वर्जने च कर्मप्रवचनीयसंज्ञः । वृक्षं परि विद्योतते विद्युत्, साधुर्देवदत्तो मातरं परि, यदत्र मां परि स्यात्तद् दीयताम्, वृक्षं वृक्षं परिशेते, परित्रिगर्तेभ्यः वृष्टो देवः, त्रिगर्तान्विर्जयित्वेत्यर्थः । अभिशब्दो लक्षणेत्थम्भूताख्यानभागवीप्सासु[2] । वृक्ष-मभिविद्योतते विद्युत्, साधुर्देवदत्तो मातरमभि, वृक्षं वृक्षमभिशेते यस्मादधिकं[3] यस्य चेश्वरवचनं तस्य सप्तमी (इति[4] स्वस्वामिनोर्द्वयोरपि पर्यायेण सप्तमी भवति ।) अधि स्वस्वामिसम्बन्धे—अधिब्रह्मदत्ते पाञ्चालाः, अधिपाञ्चालेषु ब्रह्मदत्तः । अत्र कालभावयोः सप्तमीत्यत्र कर्तरि चेति चकारानुवृत्त्या सम्बन्ध-षष्ठ्यां प्राप्तायां सप्तमी च, सा च कदाचित्स्वामिनो वा ब्रह्मदत्तात्, कदा-चिद्वा स्यात् पाञ्चालात् । कथमु, उच्यते – इह सर्वत्र सम्बन्धे किञ्चित्प्रसिद्ध-मनूद्याप्रसिद्धं विधीयते । अत्र यदा स्वमप्रसिद्धत्वाद्विधीयते तदा स्वामिनो-ऽनूद्यमानात्सप्तमी (यदा[5] तु स्वाम्यप्रसिद्धत्वाद्विधीयते तदा स्वमनूद्यमाना-त्सप्तमी) प्रति शब्दो लक्षणादिषु पूर्वोक्तेषु चतुर्षु प्रतिनिधिप्रतिदानविषये च कर्मप्रवचनीयः । मुख्यसदृशः प्रतिनिधिः । दत्तस्य प्रतिनिर्यातनं प्रतिदानम् । वृक्षं प्रति विद्योतते, साधुर्देवदत्तो मातरं प्रति, यदत्र मां प्रति स्यात्तद् दीयताम्, वृक्षं प्रति शेते, अभिमन्युः अर्जुनतः प्रति, माषानस्मै तिलेभ्यः प्रतियच्छति,

१. मयूर (वा०)
२. न्यूनपाठः (भं०)
३. न्यूनपाठः (भं०)
४. न्यूनपाठः (भं०)
५. न्यूनपाठः (भं०)

तिलान्गृहीत्वा माषान्ददातीति ग्रहणादानक्रियाजनित उत्तमर्णाधमर्णभाव-लक्षणसम्बन्धोऽत्र प्रतिना द्योतते । पूर्ववदनुकरणः[1] क्रियाजनितोऽनुकार्यानु-करणभावलक्षणः । अर्जुनस्य मुख्यस्य तत्सदृशेनाभिमन्युनानुक्रियमाणत्वात्, पञ्चमी च दिगितरर्तेऽन्यैश्चेति च शब्दत्वात्[2] । आङ् मर्यादाभिविध्योः कर्म-प्रवचनीयः । विना तेन मर्यादा, सह तेनेत्यभिविधिरति । आपाटलिपुत्राद् वृष्टो देवः, पञ्चमी पर्यपाङ्योगे इत्यनेन । अप शब्दो वर्जनेऽर्थे । अपसाकेतात् वृष्टो देवः, साकेतं वर्जयित्वेत्यर्थः । उप-शब्दो हानावधिकार्थकः[3] सम्बन्धे च । उपार्जुनं योद्धारः, उपखार्यां द्रोणः, खार्याः द्रोणोऽधिक इत्यर्थः । पूर्ववदत्र सप्तमी । एवमन्येषामपि विषये विशेषकर्मप्रवचनीयत्वमवगन्तव्यम् ।

**परकार्ये विकार्यादिः १।६।५**

विकारीति । विकार[4]-शब्दात्सदस्यास्तीति इन्-प्रत्ययः । परिभाषेयम् । विकारित्वं परिभाष्यमाणमादिवर्णः परिभाषणभाक् । परकार्य इति कर्तव्यता-विषयः । परस्य कार्ये कर्तव्य इति । क्व च परस्य कार्यं क्रियते, यत्र पञ्चम्या निर्देशोऽस्ति । यथा ई तस्यास इत्यत्र हि आस इति पञ्चमी निर्देशात् पञ्च-म्या निर्दिष्टे परस्येति परस्य कार्यं क्रियते । आदिवर्ण इति वर्णाधिकारात् ।

**पूर्वे कार्ये त्य इष्यते १।६।६**

अन्ते भव अन्त्यः इति । यदुगवादित इति योगविभागाद् यत् । इयमपि परिभाषा। अधिकारित्वं[5] परिभाष्यमाणमन्त्यो वर्णः परिभाषणभाक्। पूर्वकार्यम् इति कर्तव्यता-विषयः । पूर्वस्य कार्ये कर्तव्य इत्यादि । क्व च पूर्वस्य कार्यं क्रियते यत्र सप्तम्या निर्देशोऽस्ति यथा त्यदादीनाम विभक्तावित्यत्र हि विभक्ताविति सप्तमीनिर्देशात् । सप्तम्या निर्दिष्टे पूर्वस्येति कार्यं क्रियते ।

**क्वचित्पूर्वः परो सर्गो १।६।७**

पूर्वेण परिभाषाद्वयेनातिप्रसक्तेऽधिकारित्वे[6] वचनमिदमारभ्यत । इत

---

१. न्यूनपाठः (भं०)

२. पूर्वत्र त्वनुकरण (भं०)

३. धिकः (६)

४. विकारि (वा०)

५. विकारित्वम् (वा०)

६. विकारित्वे (वा०)

इहेति। इदं ङसि, ङि, अस्मादस्मिन्निति विगृहीत पञ्चम्यास्तस्, इदमो ह, तत्रेदमिरिति सर्वस्येदमः इत्वं न त्वन्त्यस्य, अष्टौ तिष्ठन्तीत्यादि। अष्टन्सर्वास्विति आत्वे कृते जश्शसोः सर्वयोरौत्वं न तु तयोरादेः।

**संसार्य[1] योगसाधनम् १।६।८**

संसरणीयं संसार्यमिति। सर्तेः ध्यण्, युज्यते नानाप्रकारैरर्थैस्सम्बध्यत इति योगः सूत्रमुच्यते। तदाह—योगस्य सूत्रस्येति, लोकोपचारादित्यस्यैवायं प्रपञ्च इति। एतत्सूत्र-साध्यस्यार्थस्य लोकोपचाराद् ग्रहणसिद्धिरित्यनेनैव सिद्धत्वादिति भावः।

"भट्टोग्रभूति[2] कृते शिष्यहितान्यासे शिष्यालोकाभिधाने सन्धिप्रकरणे निपातपादः षष्ठः।"

---

१. अपूर्णोऽयं प्रतिभाति।

२. निपातपादः षष्ठः (वा०)

# नामप्रकरणम्

## प्रथमः पादः

**धातुविभक्तिवर्जमर्थवल्लिङ्गम् २।१।१**

धातवश्च विभक्तयश्च धातुविभक्तयः इति विग्रहविशेषप्रदर्शनेन धातोः विभक्तय इति नायं तत्पुरुष इति दर्शयति। कथं पुनरेतदवगम्यते, त्यादिवर्ज-मित्यकरणात्। तत्पुरुषे हि विभक्तिशब्दः त्यादीनां वाचक इति तन्निषेधार्थं त्यादिवर्जग्रहणमेव कुर्यात्। वर्ज्यत इति वर्ज इति धातुविभक्तीनां वाचित्वाद् वर्ज-शब्दादव्प्रत्ययान्तादाप्प्रत्ययः। ततो धातुविभक्तयो वर्जं यस्मिन्नर्थवतीति विग्रहे कृते स्वरो ह्रस्वो नपुंसक इति ह्रस्वत्वम्। अर्थोऽस्यास्तीत्यर्थवदिति शब्दो रूपापेक्षया नपुंसकेन निर्देशः नपुंसकात्स्यमोरिति सि लोपः। विराम-व्यञ्जनादावित्यनुषङ्गलोप इति, नत्वानुषङ्गश्चाकुञ्चेरित्यनेन। तत्र ह्यघुट्-स्वरव्यञ्जनग्रहणं सम्बध्यते। यथा चात्र संयोगान्तलोपस्य प्रवृत्तिः। तथा चानुषङ्गसंज्ञाविधावेव वक्ष्यति। अर्थवदित्युच्यते। तत्रार्थशब्दो बहुष्वर्थेषु दृष्टप्रयोगः। तथा ह्ययं धनवचनो दृश्यते। यथा—"यस्यार्थस्तस्य मित्रा-णीति"। तथा याञ्चावचनोऽपि यथा—अर्थी देवदत्तो याञ्चावानिति गम्यते। अभिधेयवचनोऽपि यथा—अयमस्याभिधेयावयवस्यार्थ इति। इदमस्याभिधेय-मिति गम्यते। तत्रार्थशब्देनेह किमुच्यत इत्याह—शब्देनोच्चारितेनेत्यादि। एतेनाभिधेयवचनोऽर्थ शब्द इह गम्यते न धनयाञ्चावचन इति दर्शयति। तद्वचने तु ग्रहणं धनयाञ्चयोश्शब्दविषयत्वेनासम्भवात्प्रयोजनवचनोऽप्यस्ति। केनार्थेनागत, केन प्रयोजनेनेति गम्यते तत्राभिधेयप्रतिपादनम् एव[1] शब्दस्य प्रयोजनमिति प्रयोजनवचनोऽपि अभिधेयवचनान्न भिद्यते ततः प्रयोजनवचनो-ऽस्त्वभिधेयवचनो वा किमत्र शब्दविप्रतिपत्त्या। सर्वथा धनयाञ्चावचनो न गृह्यते। निवृत्तिवाचिनस्त्वसम्भवादिह न परिग्रहः। ननु सम्भवति मशकार्थो धूम इत्यत्रार्थशब्दो निवृत्तिवाची। भवेतेदेवम्, यदिमशकनिवृत्त्यर्थो धूम इति द्वितीयस्यार्थशब्दस्य प्रयोगो न स्यात्। तस्मान्नार्थशब्दो निवृत्तिवाचीति किं-वचनस्तर्ह्यत्रार्थशब्दः, प्रयोजनवचन इति ब्रूमः। तच्च प्रयोजनं क्वचिन्निवर्त्य-

---

१. इह (भं०)

मानतयाऽपि भवतीति निवर्त्यमानघूमस्य मशकः प्रयोजनम्। अथवा सम्भवन्यप्यर्थशब्दो निवृत्तिवचनो न गृह्यते। वृत्तिमतश्शब्दस्य स्वतोऽसत्त्वात् संज्ञासम्बन्धानुपपत्तेः। तस्मादभिधेयवचनोऽत्रार्थशब्दः। धातुविभक्तिवर्जमिति धातोः केवलस्यार्थवत्वात्प्राप्तौ सत्यां निषेध आरभ्यते। विभक्तिशब्देन विभक्त्यन्तस्य निषेधः केवलायाः विभक्तेरभावात्। धातोरपि केवलस्यासम्भवो प्रयोग इति चेत्, भवत्येव, प्रयोगमध्यगतस्यापि तु तस्य प्राप्नोत्यर्थवत्वाल्लिङ्गसंज्ञा (तस्य[1] तु भाष्यत इति) प्रत्युदाहरणे केवलस्यैव धातोस्संज्ञासम्बन्धे सति द्वित्वप्राप्तिराशङ्क्यते। यथा च धातुमात्रस्यार्थवत्वं तथा च धातुसंज्ञासूत्रे वक्ष्यामः। राजेति। राजन्नित्यस्यार्थवत्वात्तस्मात्पराविभक्तय[2] इति सि-प्रत्ययः। घुटि चासम्बुद्धाविति दीर्घः। ननु विना विभक्तिमनुप्रयुज्यमानस्यास्य कथमर्थवत्वं निश्चीयते, उच्यते—अन्वयव्यतिरेकाभ्याम्। तथा हि सति शब्दे तदर्थप्रतिपत्तिः अन्वयव्यतिरेको सति शब्दे तदर्थस्याप्रतीतिः। अत्र च तौ सम्भवतः। तथाहि राजा राजानौ राजान इत्येकत्वादीनामर्थानां विभक्तिवाच्यानामाविर्भावतिरोभावेऽपि राजार्थो न हीयत अतो मन्यामहे, सम्भवति कश्चित् प्रातिस्विकेन रूपेण राजन्-शब्दस्यार्थ इति। ततोऽर्थवत्वाद् युक्तः, ततो विभक्त्युत्पत्तिः। भाष्येत इति। भाष् व्यक्तायाम्, आते सार्वधातुके यण्। कुले इति। औरीम्, द्वित्वं स्यादिति। सामान्यव्यञ्जननिमित्तकमिति शेषः। ह्रस्वैकारस्य इकारो भवेदिति। सन्ध्यक्षराणां ह्रस्वादेश इदुताविति वचनात्। ननु परश्च लोपमिति वचनेन कुल इत्यत्र लुप्तायां विभक्तौ कथं विभक्त्यन्तता प्रयुज्येत, उच्यते—परनिमित्त आदेश इति। पूर्वस्मिन्स एव बोद्धव्यः। विभक्तिलोपोऽपि युज्यते। विभक्त्यन्तत्वमेव विभक्तिग्रहणं च प्रकरणान्तरविहितानामपि त्यादिविभक्तीनां ग्राहकम्, अन्यथा स्यादिग्रहणमेव कुर्यात्।

अथ भित् छित् एवमादीनां क्विबन्तानां कथं लिङ्गसंज्ञा यावता क्विबन्तो धातुत्वं न जहातीति धातव एवैते तत्र धातुवर्जमिति प्रतिषेधो प्राप्नोति, अस्त्येतत्, किन्तु यदयं युजेरसमास इति युजेः क्विबन्तस्य घुटि परतो नुरागमं शास्ति ततो ज्ञायते भवति क्विबन्तस्यापि धातोः लिङ्गसंज्ञा। नह्यसत्यां तस्यां घुट उत्पत्तिर्युज्यते। अथ धातुविभक्तीत्येवं कस्मान्न क्रियते। एवं हि कृते अक्षरलाघवं भवत्यर्थवद् ग्रहणञ्च न[3] कर्तव्यं जायते, पर्युदासवृत्त्यैव धातु-

१. तथा तु भाष्येत इति (वा०)
२. पर (वा०)
३. कर्तव्यं न (वा०)

विभक्त्यन्तसदृशस्यार्थवतस्संज्ञित्वेन विज्ञानात्, तत्किं वर्णग्रहणेन, नैतत्, नञो निर्देशे हि सति धातुविभक्तिविषयेऽपि कश्चिदल्पमतिः[1] संज्ञामाशङ्कयेत् । नञा निर्दिष्टपरिभाषादर्शनात् सादृश्यस्य चानवस्थितत्वाच्छब्दमात्रेणाऽपि सादृश्यं परिगृह्येत्, ततश्च धातुना शब्देन विभक्त्यन्तेन सदृशस्य शब्दस्य संज्ञा विज्ञायते तथा राजन्शब्दे प्रत्येकमनर्थकानामपि वर्णानां संज्ञा स्यात् । अर्थवत्वेन तु सादृश्यमाश्रीयते, तदर्थवतस्संज्ञेयमिति नास्त्येष निश्चयः । पर्युदासे चैवमुच्यते । प्रसज्यप्रतिषेधे तु सादृश्याभावात्कथमर्थवतस्संज्ञा लभ्यत इति । वर्जग्रहणमेव कर्तव्यम् । अर्थवदिति किमिति, अर्थवद्ग्रहणपरिभाषयार्थवत एव संज्ञा भविष्यतीति मन्यमानस्य प्रश्नः । परिहारमाह—वृक्ष इत्यादावप्ययं भावः नियतशब्दस्वरूपमादाय यत्र कार्यं विधीयते तत्रैषा परिभाषा व्यवस्था हेतुत्वेन स्मर्यते । यथा—आभोभ्यामित्यत्र । अत्र हि लोपयतेः भो इति नियतरूपापादानेन विधीयमाने सति प्रभोराश्रय इत्यत्र न प्रवर्तते । इह तु रूपविशेषस्य संज्ञित्वेन कस्यचिदनुपादानादेतस्याः परिभाषाया अनुपस्थाने[2] सत्यनर्थकानामपि वृक्षेत्यादावयवानामकारादीनां संज्ञा प्रसज्येत्, ततश्चाव्ययेभ्य इव तेभ्यो विभक्तिः प्राप्नोति, सा तेषां लिङ्गसंज्ञानिबन्धना मा भूदित्यर्थवद्ग्रहणम् । यदि तर्ह्यनर्थकाः वर्णाः तत्समुदायस्यार्थवत्वं केन हेतुना स्यात्, उच्यते—अबाधितायां समुदायार्थप्रतीतौ किमत्र कारणोपन्यासेन, दृश्यते चावयवानाम् आनर्थक्येऽपि[3] समुदायस्यार्थवत्वम्, तद्यथा विक्षिप्तानि रथाङ्गानि प्रत्येकं व्रजिक्रियायामसमर्थान्यपि समुदायभावमापन्नानि समर्थानि भवन्ति । अभावशशविषाणादिशब्दानां बाह्यार्थत्वाभावेऽपि बुद्धिप्रतिभासमानेनार्थेनार्थवत्वाल्लिङ्गसंज्ञा प्रवर्तत एव ।

**तस्मात्पराः विभक्तयः २।१।२**

सि औ जस्, अम् औ शस्, टा भ्याम्, भिस्, ङे भ्याम् भ्यस्, ङसि भ्याम् भ्यस्, ङस् ओस् आम्, ङि ओस् सुप् इत्यादि विभक्तिरिति । विपूर्वाद् भजेः विभज्यत आभिः लिङ्गार्थः कर्मादिभावेन विगृहीते, स्त्रियां क्तिः । स्यादीनां द्वन्द्व इति । नन्वत्र कृते द्वन्द्वे ऐकपद्यात् संहितैकपदे नित्येति वचनात् यत्वादिना सन्धिकार्येण भवितव्यम् तत् कस्मान्न भवति, न भवति, विभक्ति-

१. प्रतिभः (भं०)
२. अनुपादाने (वा०)
३. अनर्थके (वा०)

स्वरूपपरिज्ञानभ्रान्तिप्रसङ्गात्। सन्धिकार्ये कृते (वा[1] कियती) विभक्तिरिति भ्रान्तिः प्रसज्येत। लुप्तजस्कं चैतदिति पदापेक्षया नपुंसकेन च निर्देशः स्यादिभ्यः स्वरूपेणार्थेनार्थवत्वादुत्पन्नस्य जसो लोप आदिलोप इत्यादिना। तस्माल्लिङ्गात् पराः स्यादयो विभक्तयो भवन्तीति। एतेन परत्वं विभक्तित्वं चानूद्य स्यादयो विधीयन्त इति दर्शयति। अथ स्यादीनां विभक्तिसंज्ञार्थमिदं वचनमिति कस्मान्न व्याख्यायते, कथमविहितानां तेषां संज्ञा सम्बन्धो युक्त इति इति चेत्, न प्रथमाविभक्तिरित्यादिना प्रकरणेन तेषां विशिष्टं विधानमस्त्येव। अत्रोच्यते – यदीदं विभक्तिसंज्ञार्थं स्यात् ततः स्यादीनां स्वरूपेणोपादानं ग्रन्थगौरवहेतुत्वादपार्थकं स्यात्। प्रथमादय इत्येव कुर्यात्। विधौ तु प्रत्येकं प्रत्ययस्वरूपपरिज्ञानार्थमवश्यं स्यादयः सर्वेऽत्रोपादेयाः। तस्मात् प्रथमादय इत्यकरणान्नेदं संज्ञार्थमित्यवगम्यते। ननु प्रथमादयः इति कृते घुट्संज्ञा पञ्चानां प्रथमादिविभक्तीनामपि प्राप्नोति, प्राप्नुयाद् यदि न सखिष्टादावग्निरिति वक्ष्यमाणेन व्याख्याक्रमेण ज्ञापकं न स्यात्। सति तु तस्मिन्प्रथमादिविभक्त्यन्तर्गतानां स्यादिप्रत्ययानामेव पञ्चानां घुटसंज्ञा विज्ञास्यते। इदानीं विभक्तिसंज्ञानुवादप्रसङ्गेन स्यादीनां संज्ञान्तरमप्यस्ति इति दर्शयन्नाह—एषाञ्चेत्यादि। कुतः पुनरेतेषां स्यादीनां प्रथमादिसंज्ञा लभ्यत इत्याह – प्रथमादिसंज्ञा इत्यादि। एषां स्यादीनामनुबन्ध उच्चारणविशेषार्थः[2]। तत्र सेरिकार उच्चारणार्थः। जश्शसोर्जकारशकारौ वा जस्शसोश्शिरित्यत्र विशेषणार्थौ। असति हि तयोरनुबन्धोपादाने अससोरिति निर्देशस्स्यात्, ततश्च व्यामोहो भवेत् किमिदमुत्सृष्टानुबन्धयोर्ङसिङसोः ग्रहणम्, अथवा प्रथमाद्वितीयाबहुवचनयोरिति। तन्न, निरनुबन्धकग्रहणे न सानुबन्धकस्येति परिभाषाव्यापारे सति प्रतिपत्तिगौरवं मा भूदिति अनुबन्धोपादानमेव ज्यायः। टा प्रत्ययस्य टकार इनटेत्यादौ विशेषणार्थः, इनेत्युच्यमाने स्थान्यादेशविभागो दुर्घटः स्यात्। अथाप्यसन्देहार्थमिन आ इत्युच्येत, एवमपि आकारस्य ग्रहणं प्राप्नोतीति, अनर्थकत्वान्न भविष्यतीति चेत्, अर्थवद्ग्रहणपरिभाषाया अनित्यत्वप्रदर्शनात् प्राप्नोत्येवेति कर्तव्यो विशेषणार्थष्टकारः। ङे इति ङकारः ङेर्य इत्यत्र विशेषणार्थः। एर्य इत्युच्यमाने वर्तमानाया आत्मनेपदोत्तमैकवचनस्याप्येकारस्य ग्रहणं प्रसज्येत। तथा च पचे इत्यादावप्येकारस्य विकरणादुत्तरस्य यत्वमाशङ्क्येत, अकारान्तस्य पच (द) इत्यस्यालिङ्गत्वादेकारस्य प्रकरणान्तरस्थत्वान्नैवं भविष्यतीति चेत् तदुत्तरे प्रति-

---

१. का कियिते (उभयत्र)

२. विशेषणार्थः (?)

पत्तिलाघवकारी ङकार एवानुबन्धो ज्यायान् । ङसि ङसोरपि ङकारेकार-ङकाराः ङसिङसोरलोपश्चेत्यत्र विशेषणार्थः सुपः पूर्वाचार्यप्रसिद्ध्या पठितो न त्वस्य पाठे प्रयोजनं पश्यामः ।

वृक्षाः इति । जसीति दीर्घः । वृक्षानिति । शसि सस्य च न इति दीर्घत्वं नकारो वृक्षाभ्यामित्यकारो दीर्घमिति दीर्घः । वृक्षायेत्यादावपि वृक्षेभ्य इति घुटि बहुत्वेत्त्वे इत्येत्वम् । ननु प्राक्तनस्यैव लिङ्गग्रहणवशाद्विभक्तिविपरिणाम इति । इति[1] पञ्चम्यन्तता विज्ञानादवधिभावो विज्ञास्यते तत्किं[2] परामर्शार्थेन तस्माद् ग्रहणेनेत्याह—तस्माद् ग्रहणमित्यादि । ग्रहणमुच्चारणम् इत्यर्थः । ततोऽस्मात्सूत्राद्वक्ष्यमाणे प्रकरणे लिङ्गग्रहणस्याधिकारो यथा स्यादिति तस्माद् ग्रहणं क्रियते । इह तु तस्यानुवृत्तिरानन्तर्यादेव सिद्धेति नेहार्थं तदुपयुज्यते । यद्येवम्, उपधादिसंज्ञा धातुविषये न स्युः, सत्यम्, अस्य उपधाया इति व्यवहाराद् भविष्यति । ननु सकलशास्त्रव्यापिन्या प्रत्यय पर इति परिभाषया[3] स्यादयः परे विज्ञास्यन्त इति[4] किं परग्रहणेन । सा च परिभाषा न त्वधिकारः अन्यथा अणादीनां स्त्रीप्रत्ययानां च[5] परत्वं न स्यादित्याह—प्रत्यय पर इत्यादि । अनेकप्रकरणव्यवहितायां परिभाषायामपेक्षमाणायां मन्दमतीनामवैस्पष्ट्यं[6] स्यादिति । परग्रहणे स्यादिति ताननुगृहीतुं परग्रहणं क्रियते । नन्वयं यथा असत्यपि विभक्तिग्रहणे विशेषणे पूर्वाचार्यप्रसिद्धिवशात् त्यादयो विभक्तय इति व्यपदिश्यन्ते यथा स्यादयो विभक्तयोऽपि व्यपदेक्ष्यन्ते । अन्तरेणापि विभक्तिग्रहणं तत्किं विभक्तिग्रहणेन स्यादिविशेषणार्थेन इत्याह—त्यादिवत् स्यादीनामित्यादि । त्यादिवदवगते स्यादीनां विभक्तिव्यवहारे यद्विभक्तिग्रहणं क्रियते तदाकारो दीर्घमित्यादावुपयोगार्थप्रकारो दीर्घं घोषवति विभक्तिसम्बन्धिन्येव दीर्घमापद्यते । एतस्यार्थस्य प्रतिपत्तिर्यथा स्यादिति (देववानित्यादौ[7] वन्तुप्रत्यये दीर्घाभावः) शसि सस्य च नेत्येषोऽपि विधिरल्पशो ददातीत्यादौ तमादि शसि न प्रवर्तते । विभक्तिसम्बन्धिनि[8] चाकारे लोप-

---

१. न्यूनपाठः (वा०)
२. परामर्शत्वेन (वा०)
३. परिभाषायास्स्यादयः (वा०)
४. तत् (मं०)
५. शब्दानां (वा०)
६. असति (मं०)
७. न्यूनपाठः (मं०)
८. सम्बन्धिन्यकारे च (मं०)

विज्ञानाद् दण्डाग्रमित्यादावकारे लोपमित्येतन्न भवति तदेवमुत्तरार्थं विभक्तिग्रहणमित्येतदुक्तम् भवति। एतच्च यद्यप्युत्तरत्र स्याद्यनुवृत्त्यापि सिध्यति तथापि विभक्तिग्रहणस्याकृतार्थस्य सतोऽतिरिच्यमानत्वादुक्तम्। प्रसङ्गप्राप्तांस्तु स्यादीन्विभक्तिरिति पूर्वाचार्यसंज्ञया विशेषयितुमत्रैव विभक्तिग्रहणं क्रियते।

**पञ्चादौ घुट् २।१।३**

पञ्चन् जस् लुक्,[1] संज्ञिलक्षणेनार्थेनार्थवतो घुट्शब्दादुत्पन्नस्य जस आदिलोप इत्यादिना लोपः। राजेत्यादि सर्वत्र घुटि चासम्बुद्धाविति दीर्घः। राज्ञः पश्येति, राजन् शस्, तत्रासत्यां घुट्संज्ञायामघुट्स्वरादावुच्यमानो वमसंयोगादित्यादिनाकारलोपो न स्यात्। तवर्गश्चटेति तस्य नत्वम्। अथ पञ्चानां विभक्तीनामित्यानाम्। अथेत्याक्षेपो निपातः। पञ्चशब्दोऽयं संख्याशब्दः। संख्याशब्दस्य योगः केनचित् संख्येयेन भवितव्यम्। तत्रास्य पञ्चशब्दस्य विभक्तयो वा संख्येयाः प्रत्ययाः वा स्यादयः, तत्र विशेषानुपादानात् युक्तानां[2] प्रथमादिविभक्तीनां संज्ञा कस्मान्न भवति, यद्यपि चायमर्थोऽनन्तरस्य विधिर्वा भवतीत्यनन्तरस्यादि अनुवृत्त्यापि परिहर्तुं शक्यते। तथापि स्वतन्त्रसिद्धं[3] परिभाषान्तरमस्तीति प्रदर्शयितुमाह—न भवतीत्यादि। यद्यनेन पञ्चानां विभक्तीनां संज्ञा स्यात् (ततस्तृतीयाचतुर्थ्योरपि[4] घुड्व्यपदेशः प्राप्नोति। एवञ्च सख्या सख्ये इत्यत्र सखिशब्दस्य) घुट्संज्ञकयोष्टाङ्योः परयोः परत्वाद् घुटित्वे इत्येत्वे कृते सति इकारान्तत्वस्य विहितत्वादिदुदग्निरित्यग्निसंज्ञायाः प्राप्तिरेव नास्ति, तदप्राप्तौ च सत्यां तन्निबन्धमपि कार्यं न भवति, एतवञ्च न सम्भवतीति तस्या अग्निसंज्ञायाः योऽयं निषेधारम्भः सः फलशून्यो भवेत् निषेधस्याभावात्, तस्मात्ततो निषेधारम्भात्पञ्चमशब्दस्य विभक्तीरपास्य प्रत्यया एव[5] सङ्ख्येया इत्यनुमीयते[6] क्रमे व्यतिक्रमे कारणाभावादादाविति शब्दमवैस्पष्ट्यं स्यात्।

---

१. वतेश्च जस्शसोर्लुक् (भं०)
२. पञ्चानाम् (वा०)
३. परिहारान्तरम् (भं०)
४. न्यूनपाठः (भं०)
५. च त्व (वा०)
६. इत्यवसीयते (भं०)

**जश्शसोः नपुंसके २।१।४**

जस्च शस्च तौ जस्शसौ । सामानि रम्याणि, सामानि पठति । जस्शसो-शिशः, घुटि चासम्बुद्धाविति दीर्घः । रम्याणि पठतीत्यनयोरुपन्यासो जश्शसोः प्रवृत्ति प्रदर्शनार्थः । ननु जसः पूर्वसूत्रेण सिद्धा घुट्संज्ञा, तदपार्थकम् तस्य पुनरिहोपादानमित्याह—जसः सिद्धायां घुट्संज्ञायामित्यादि नियमस्वरूपं प्रदर्शयितुमाह—नपुंसके जस एवेत्यादि । नान्यस्येति सिप्रभृतेः चतुः संख्या-वच्छिन्नघुट्संज्ञकस्य नपुंसक एव जसो घुट्संज्ञेति तु विपरीतः नियमो न भवति । राजान इत्यादौ पुंसि घुट्संज्ञाया अभावप्रसङ्गात् । सामनी वेमनी इति, औरीम्, नपुंसके जस एव घुट्त्वादौकारस्य घुट्त्वव्यपदेशस्य नास्तीति घुटि चासम्बुद्धाविति दीर्घाभावः । ननु नपुंसकविषये जश्शसोरवश्यं भाविना शिभावेनैव भवितव्यम्, ततश्च लाघवार्थं शिनपुंसक इति कस्मान्न क्रियते, एवमपि कृते जस्शसोरेव संज्ञा विज्ञास्यते तत् किं जस्शसोरित्यनेन स्यात् । मतम् । एवं कृते सति शस एव शेर्ग्रहणं स्यात् न तु जसश्शिः, तस्य पूर्वेण सिद्धत्वादिति, तन्न, एवं हि विज्ञायमाने सत्यसन्देहार्थं शस्नपुंसक इति कर्तु-मुचितं स्यात् । शिरिति कृते नपुंसकग्रहणमपार्थकं स्यात्, नापार्थकम्, असति हि तस्मिन् शस एव शिग्रहणेन ग्रहणं स्यात्, न तु जसः, शसो ग्रहणे शसित्येवं कुर्यादिति चेत् न, पुंस्यपि शसो घुट्संज्ञा प्रसङ्गात्, तस्मान्नपुंसकग्रहणं जसो-ऽपि शेः परिप्रापकत्वान्नापार्थकत्वमिति शिर्नपुंसक इति करणाज्जसोऽपि शेर्ग्रहणं भविष्यति । एवं तर्हि शक्यत एवं कर्तुम्, प्रतिपत्तिगौरवं तु स्यात् ।

**आमन्त्रिते सिः सम्बुद्धिः २।१।५**

मत्रि गुप्तपरिभाषणे आङ्पूर्वः इकारो नकारागमार्थः । अनिदनुबन्धाना-मिति प्रतिषेधकरणाज्ज्ञापकान्नकारागमः, चुरादित्वादिन्, आमन्त्रणमामन्त्रि-तम्, नपुंसके भावे क्तः, इट् निष्ठेटीन इतीनो लोपः, सम्बोधनं सम्बुद्धिः, सम्पूर्वाद् बुधः स्त्रियां क्तिः । आमन्त्रितेऽर्थे यस्सिरिति आमन्त्रणे चेत्यनेन विहितः । हे गङ्गे इति । अत्र लोपात्पूर्वं स्वरादेशत्वात् सम्बुद्धौ चेत्येत्वे कृतेऽपि ह्रस्वनदीत्यादिना श्रद्धाग्रहणसामर्थ्यात् सम्बुद्धिलोपः । गङ्गे इति सम्बुद्धौ चेत्येत्वं न भवति[1] ।

**आगम उदनुबन्धः स्वरादन्त्यात् परः २।१।६**

आगच्छतीत्यागमः, पचादित्वादच्, अनुबध्यते कार्यार्थमासज्यते इत्यनु-

---

1. स्यात् (वा०)

बन्धः। अकर्तरि चेति घञ्। स्वरादिति। स्वरतः पुंसि संज्ञायामिति घः, अन्ते भवः अन्त्यः इति यदुगवादित—इति योगविभागाद् यत्। परिभाषेयमिति। तत्र परत्वं परिभाष्यमाणमुदनुबन्धः आगमः परिभाषणभाक्। अन्त्यस्वरादित्यवधिनिर्देशः। का पुनरियं परिभाषणमित्याह—अनियमे नियमः परिभाषति। इह चानियमः प्राप्तः, यदागम उदनुबन्ध आगमिनः क्वावकाशो वर्ततामित्यनियमेनागमस्य प्रवृत्तौ प्राप्तायां नियमार्थमिदं वचनं परिभाषेत्युच्यते, सा चेयं परिभाषा लिङ्गवती। लिङ्गमुकारोऽनुबन्धश्चिह्नमित्यर्थः। एतेन चिह्नेन विधिवाक्येषु इयमुपतिष्ठते। विध्यङ्गशेषभूतायां वा विधिः। सो नुरित्यादि। तस्य यदङ्गं सो नुरिति नुकारागमः। तस्य शेषभूता तदङ्गभावं प्राप्तेत्यर्थः। अङ्गभावाभ्युपगमस्य तु अनडुह इत्यस्यान्त्यात् स्वरात्परस्सौ परः नुकारागमो भवतीत्येकवाक्यतया मन्तव्यः, तदेवं विधिवाक्यं दर्शयति। सोऽनुरिति। अनड्वामिति। वह् प्रापणे अनस्पूर्वः। अनो वहतीत्यनसि डुश्चेति विण्, अनसश्चान्त्यस्य डत्वं वेर्लोप इति वलोपः, उपधादीर्घः, सि, सो नुरिति नुकारागमः संयोगान्तलोपः। आगमग्रहणं किम्, मरुत्वान्, तदस्यास्तीति वन्तुप्रत्ययः। भवत्ययमुदनुबन्धो नत्वागमः इति नायमन्त्यात्स्वरात्परो भवति। पर इति किम्, पूर्वो मा भूत्। न च पञ्चम्या निर्दिष्टे परस्येति परिभाषया परग्रहणमवाप्यते, कुतः, परस्येति षष्ठीनिर्देशेन परस्मिन्देशे स्थितस्य सतः कार्ये[1] कर्तव्ये स्याः परिभाषायाः उपस्थानात्, तथा[2] ईतस्यास इत्यत्र नहि आसः परस्यान्प्रत्ययस्य प्रत्यय पर इति वचनादेव[3] आ परत्वस्य ईत्वं क्रियते ततोऽत्र युज्यते तस्योपस्थानमिह तु नैवमिति परग्रहणं क्रियते।

### तृतीयादौ तु परादिः २।१।७

इयमपि परिभाषा तत्र परादित्वं परिभाष्यमाणमुदनुबन्ध आगमः परिभाषणभाक्। तृतीयादाविति सप्तमी सा तु कालभावयोरित्यनेन। तुशब्दः तृतीयादौ तु विभक्तिगणे सत्युदनुबन्ध आगमः परस्यादिर्भवतीति पूर्वस्मादत्र विशेषं द्योतयति। ननूत्तरत्र तृतीयादिग्रहणस्याननुवृत्तिद्योतनार्थस्तु शब्दस्स्यात्, तत्कथमसौ विशेषं द्योतयेत्, ब्रूमः, यदयं न सखिष्टादावग्निरित्यत्र आदिग्रहणं करोति ततोऽवगम्यते नाग्निसंज्ञाविधौ तृतीयादिग्रहणमनुवर्तत इति

१. कर्तव्ये कार्ये (भं०)
२. यथा (भं०)
३. वचनादवाप्त (भं०)

नदीश्रद्धासंज्ञाविधावपि नानुवर्तिष्यते। नद्या अम्शसोरादिलोपविधानात् श्रद्धा-यास्सिलोपारम्भाच्च। एवमुपधादिसंज्ञाविधायकेष्वपि वाक्येषु तृतीयादिग्रहणं ज्ञापकद्वारेण नानुप्रवर्तिष्यते इति न तस्योत्तरत्रानुवृत्तिद्योतनार्थस्तु शब्दः। ततो विशेषमेवासौ द्योतयति। परस्य प्रत्ययस्येति शास्त्रे परत्वेन प्रत्ययस्यैव प्रसिद्धेः परस्यावयवो भवति। एतेनादिशब्दोऽयमिहावयव-वचन इति दर्शयति। दृश्यते चावयवार्थवृत्तिरादिशब्दो यथा—धात्वादेषस्स इत्यत्र परावयवे सति यत्फलं तद् दर्शयितुमाह—तद्ग्रहणेनेत्यादि। तद्ग्रहणेन परः प्रत्ययः प्रत्यव-मृश्यते पूर्वेणेति। आगम उदनुबन्ध इत्यादिना सर्वेषामिति सुरामि सर्वत इति सुः, उकार इहार्थः। अस्य परावयवत्वे सति किं सिद्धमित्याह—अकारागम-स्येत्यादि लिङ्गावयवत्वे तु घुटि बहुत्वेत्वे इति निमित्तं सम्पूर्वयोः[1] नोपपद्येत। अथ तृतीयायामुदाहरणं किम्, केचिदाहुः - अतिरिणा अतिनुनेति। अत्र राय-मतिक्रान्तेन कुलेन, नावमतिक्रान्तेन जलेनेति विगृहीते अतिरै, अतिनौ इत्ये-ताभ्यां टा-प्रत्यये विहिते नपुंसकह्रस्वात्पूर्वमागम-(आदेशयोरागमविधिर्बल-वानिति[2] वचनात् ह्रस्वात् पूर्वादागम) विधेर्बलवत्त्वेन नामिनस्स्वर इति नुः, तस्य परावयवत्वात्स्वरान्तस्य लिङ्गस्योच्यमाने स्वरो ह्रस्वो नपुंसक इति ह्रस्वः सिद्धो भवति। अन्ये तु व्याचक्षते—प्रत्ययोत्पत्तिमनपेक्ष्य प्रकृत्युत्पत्ति-मनन्तरमेवात्र नपुंसकस्य ह्रस्वत्वं प्रवर्तते, तद्धि नपुंसकानुवृत्तिमपेक्ष्यमाणं न प्रत्ययोत्पत्तिं प्रतीक्षते एवं च कृते ह्रस्वत्वे प्रत्यये च सञ्जाते नुरागमो लिङ्गा-वयवोऽपि भवन्न दोषायेति नेदमुदाहरणं तृतीयायाः। किमर्थं तर्हि तृतीया-ग्रहणमिति चेत्, चतुर्थ्यादीनामुपलक्षणार्थं तृतीयादाविति बहुव्रीहिणा चतुर्थ्यादय उपलक्ष्यन्ते, यद्येवम्, चतुर्थ्यादाविति कर्तव्ये किं तृतीयाग्रहणेन, अस्ति च चतुर्थ्यादावागमस्य परादित्वात् फलं किं तदिति चेत्, सर्वस्यै सर्वस्या इत्यादा-वन्तादेशवर्तिनस्सकारस्य विसर्जनीयाभावः। अत्रोच्यते, अतद्गुणसंविज्ञानोऽपि बहुव्रीहिरस्तीत्येतदनेन तृतीयाग्रहणेन साध्यते, नह्युपलक्षणमतद्गुणसंविज्ञाने बहुव्रीहौ कार्येण युज्यते। यथा—चित्रगुमानयेत्यत्र चित्रगव्याः। अत्रापि चोप-लक्षणभूता तृतीया न स्वतः कार्यं प्रतिपद्यते।

---

१. संशयो (मं०)
२. न्यूनपाठः (मं०)
३. नपुंसकार्थवृत्तित्वमपेक्ष्यमाणम् (मं०)
४. न्यूनपाठः (मं०)

**इदुदग्निः २।१।८**

इत् उत् इति प्रथमान्तपदे। वर्णग्रहणेत्यादि। वर्णो यत्र गृह्यते तत्र सवर्णोऽन्तो यस्य तस्य विधिकार्यं भवति। एवञ्चाग्निसंज्ञेयमिदुदिति वचनादिकारोकारान्तयोश्शब्दयोः विज्ञायते। यद्येवम्, अस्यापत्यमिः, अ शब्दाद् भगवतो विष्णुवाचकादिणतः इतीञ्, इवर्णावर्णावित्यकारलोपः। ततो द्वितीयैकवचनम्। इं पश्येत्यत्र न प्राप्नोति (सत्यम्[1], आद्यन्तवदेकस्मिन्नित्यन्तवद्भावं भविष्यति। तपरत्वमसन्देहार्थम्) इति तपरशब्दात् कर्मधारयात् तु प्रत्ययः। असति तपरत्वे अग्निरिति सन्धौ कृते किमिदं यवयोर्ग्रहणम्। अथेकारोकारयोरिति सन्देहस्स्यात्, सः मा भूदिति तपरकरणम्। नन्वसति तस्मिन्स्वरस्सवर्णस्य ग्राहकः इति ईकारान्तावपि शब्दौ संज्ञां प्रतिपद्येयाताम्, ततश्च नियं लुवमित्यत्रापि अग्निसंज्ञाकार्यम्। अमोऽकारलोपः स्यात्, नैतत्, अस्याः परिभाषायाः पूर्वमनित्यत्व-प्रतिपादनादिह ग्रहणादिकारोकारयोरेव परिग्रहो विज्ञास्यत इत्यसन्देहार्थमेव तपरकरणम्।

**ईदूत्स्त्र्याख्यौ नदी २।१।९**

स्त्र्याख्याविति द्विर्वचननिर्देशादीदुदित्यत्रापि द्विर्वचनं विज्ञायते तच्चादिलोप इत्यादिना लुप्तत्वान्न श्रूयत इत्याह—ईदूदिति लुप्तप्रथमाद्विर्वचनमिति। अन्तर्वर्तिनीं च प्रत्ययलक्षणेन विभक्तिमाश्रित्य वर्गप्रथमेत्यादिना तृतीयो दः, स्त्र्याख्यावित्यत्र प्रत्ययोत्पत्तेर्पूर्वं ख्याञादेशः। तत्र[2] असार्वधातुकविषये व्याख्यानात् मूलविभुजादिभ्यश्चेति क-प्रत्यय इत्येतेन स्त्र्याख्यशब्दोऽयं मूलविभुजादिदर्शनात् क-प्रत्ययान्तो न तूपसर्गे त्वातो डः इति ड-प्रत्ययान्तः इति दर्शयति। ड-प्रत्ययो हि कर्मण्यणीत्यनेनाण्-प्रत्ययेन परत्वात् बाध्यत इत्यण् प्रत्ययोऽत्र कर्मोपपदत्वात् स्यात्। ततश्च स्त्र्याख्यावित्यनिष्टं रूपं भवेत्, अत्र च स्त्र्याख्याविति संज्ञिपदमीकारोकाराभ्यां विशेष्यते विशेषणेन च विशेष्यस्य तदन्तविधिर्भवतीति वचनादीकारोकारान्तौ शब्दौ स्त्र्याख्यौ नदीसंज्ञौ विज्ञायेत इत्याह—ईकारोकारान्तावित्यादिशब्दौ स्त्रियाः वाचकाविति विवृण्वन्नाख्या शब्दार्थं व्याचष्टे[3]। स्त्रियाः वाचको यो पदान्तरसन्निधिमन्तरेण स्त्रियमाचक्षत इत्यर्थः। मात्र इति मात्र-शब्दसम्बन्धिशब्दो नित्यं

---

१. न्यूनपाठः (भं०)
२. कुतः (भं०)
३. विवृणोति (वा०)

स्त्रीविषय इति स्त्र्याख्यत्वात्प्राप्तः तस्य नदीसंज्ञा ईदूद्ग्रहणान्न भवति। यू इति लुप्तविभक्तिके निर्देशे कर्तव्ये तपरकरणं विस्पष्टार्थम्। अत्र स्त्रियामिति कस्मान्न क्रियते, एवमपि कृते स्त्र्यर्थवृत्तित्वं लभ्यत—एवेति[1] किमाख्याग्रहणेनेत्याह—स्त्रियामिति कर्तव्य इत्यादि। स्त्रियामिति कर्तव्ये यदाख्याग्रहणं क्रियते तस्यैतत्प्रयोजनं पदान्तरसन्निधिमन्तरेण वागिति[2] यः स्त्र्यर्थवृत्तिशब्दः तस्येयं नदीसंज्ञा यथास्यादन्यस्य मा भूदित्याख्याग्रहणसामर्थ्याद्धि नियम आश्रीयते, (स्त्रियामेव[3] ये वाचकाः ते न तु) लिङ्गान्तरमपीत्यर्थः। क्व च माभूदित्याह—इह मा भूदित्यादि। ग्रामं नयतीति ग्रामणीः, यवांल्लुनातीति यवलूः, क्विप्, अनयोः नदीसंज्ञा मा भूदित्याख्याग्रहणं क्रियते, यदि स्याद् ग्रामण्यै स्त्रियै, यवल्वै स्त्रियै इत्यत्र नदीसंज्ञानिबन्धन ऐ भावो भवेत्, कथं पुनराख्याग्रहणे नित्यस्त्रीविषये कृते सत्येतौ ग्रामणीयवलू-शब्दौ परिहर्तुं शक्येत इत्याह—नेमौ ग्रामणी-यवलू-शब्दावित्यादि। एतयोर्हि नित्यस्त्रीविषयत्वं नास्ति क्रियाशब्दत्वेन पुंस्यपि वर्तमानत्वात्। या त्वनयोः स्त्रियां वृत्तिस्सा स्त्रीशब्दसान्निध्यात्। यद्येवम्, यः शब्दः प्रथमं स्त्रीत्वविशिष्टमर्थमाह पश्चात्तु प्रकारान्तरेण लिङ्गान्तरयुक्तमर्थान्तरं तस्य तदानीमस्त्र्याख्यत्वान्नदीसंज्ञा न प्राप्नोति, कस्य, उच्यते—कुमारीमिच्छत्यात्मन इति यिन् ततः कर्तरि क्विप्, य्वोर्व्यञ्जन इति य-लोपः, चतुर्थ्येकवचनं कुमार्यै ब्राह्मणायेत्येवं प्रकारे विषये कुमारीप्रभृतेः। अस्त्येतत्, किन्त्वत्र स्त्र्याख्यत्वात्पूर्वमेव या नदी संज्ञा प्रवृत्ता तामन्तरङ्गत्वात्कृतास्पदां पश्चादुपजायमानो लिङ्गान्तरप्रयोगो न निवर्तयति बहिरङ्गत्वादिति भवत्येवमादौ संज्ञायाः प्रवृत्तिः। इयुवस्थानीयस्येत्यादि। इय् च उव् च तावियुवौ इयुवोस्स्थानं इयुवस्थानम् (इव[4] इयुवस्थानीय) इति विगृहीते तमादित्वादीय-प्रत्ययः। यस्य शब्दस्येयुवादेशौ दृश्येते तस्य स्त्र्याख्यस्य नदीसंज्ञा नेष्यते किं सर्वस्य, नेत्याह—स्त्रीशब्दं वर्जयित्वेति। स्त्रीशब्दः स्त्री चेति धातुवद् भावादियादेशोऽपि[5] वर्ज्यते तेन तस्य नदीसंज्ञा भवत्येव। हे श्रीः हे भूरिति श्रिञ् सेवायाम् क्विब् वचिप्रच्छीति क्विप्, दीर्घश्च। भ्रू-शब्दो भ्रमेः भ्रूः[6] इति भ्रू-प्रत्ययान्तः। हे शब्द आमन्त्र-

१. इति (मं०)
२. खगिति (वा०)
३. यो वाचयते न च (मं०)
४. अस्य (मं०)
५. देशस्थानीयो (मं०)
६. भ्रसश्चतूरिति ऊप्रत्ययान्तः (वा०)

णाभिव्यनक्त्यर्थः। ततो द्योतनार्थेनार्थवत्वात्सिः, तस्याव्ययाच्चेति लुक् भवत एतौ श्रीभ्रूशब्दावियुस्थानीयावेकस्य क्विबन्तस्य सतो धातुत्वात् श्रियै इत्यादावियादेशदर्शनात्। अपरस्यापि भ्रूर्धातुवदिति धातुत्वातिदेशात् भ्रुवावित्यादावुवादेशदर्शनात् स्त्र्याख्यौ चैतेनानयोर्नदीसंज्ञा निषिध्यते। तन्निषेधात्किं भवतीत्याह—सम्बुद्धौ ह्रस्व इत्यादि। स्त्रीशब्दस्येत्यादि। हे स्त्रिरित्येव भवतीति नदीसंज्ञानिमित्तयोः ह्रस्वसम्बुद्धिलोपयोरनिषेधात्। यद्येवम्, तत्कथं महाकविप्रयोगः "विमानना सुभ्रु कुतः पितुर्गृहे" इति। भवति हि सुभ्रुशब्दो निषेधविषयः। ततश्चात्रापि ह्रस्वसम्बुद्धिलोपौ न स्याताम्। एवं तर्ह्यसाधुरेवायं प्रमादात्प्रयुक्तः, नञानिर्दिष्टस्यानित्यत्वाद्वा क्वचिन्निषेधो न प्रवर्तते, तदत्र सूरयः प्रमाणम्।

**आ श्रद्धा २।१।१०**

आ इति लुप्तप्रथमैकवचनम्। श्रत्पूर्वाद् धाञः। अतएव निपातनादाङ्प्रत्ययः। आकारान्तः स्त्र्याख्य इत्याकारेण स्त्र्याख्यस्य विशेषणात् पूर्ववत् तदन्तविधिः। मतिरिति। मन ज्ञाने, भावेऽर्थे स्त्रियां क्तिः, पञ्चमोपधेति दीर्घः, वनति-तनोतीति पञ्चमलोपः। आतश्चातः[1] इत्याकारस्याकारः। भवत्ययं मतिशब्दः स्त्र्याख्यः नत्वादन्त इति श्रद्धासंज्ञाया अभावः। कीलालपा इति। पा पाने कीलालं पिबतीति मनिनादिसूत्रेण च शब्दाद्विट्, टकारो विड्वनोरा इत्यत्र विशेषणार्थो वेर्लोपः, क्विप्-प्रत्ययः त्वत्र[2] न क्रियते, वेर्लोपात् पूर्वं स्वरादेशत्वाद् दामागायतीत्यादिना ईत्वप्रसङ्गात्कीलालपशब्दः पुंस्यपि स्यान्न[3] नित्यं स्त्रीविषय इति श्रद्धासंज्ञः।

**अन्त्यात्पूर्वोपधा २।१।११**

उपपूर्वाद् धाञः, उपधीयत इत्युपधा इति, आतश्चोपसर्ग इत्याङि सत्यालोपो सार्वधातुक इत्यालोपः। स्त्रियामादाप्, अन्त्यात् वर्णात् पूर्वो वर्ण इति पूर्वं तत्र ग्रहणस्य वर्णाधिकारार्थत्वादेवमुक्तम्। पञ्चानाम् सप्तानाम्, इति पञ्चन् सप्तन्, आम् संख्यायाष्ष्णान्तायाः इति नुरागमः नान्तस्य चोपधाया इति दीर्घः। लिङ्गान्तनकारलोपः। अन्त्यात् वर्णादिति किम्, अन्त्याद्वर्णसमुदायान् मा भूत्। किञ्च स्यात्, शिष्ट इत्यादौ शासेरिदुपधाया इति

१. पश्चात्र (वा०)

२. तत्र (भं०)

३. वृत्तेर्न (भं०)

शमात्रस्येत्वं स्यात् । पूर्वो वर्ण इति किम्, वर्णसमुदायः पूर्वो[1] मा भूत्, तथा चात्रैव शात इत्यस्येत्वं स्यात् ।

**व्यञ्जनान्नोऽनुषङ्गः २।१।१२**

अनुपूर्वात् ष्वञ्ज सङ्गे इत्यस्मात् अनुषज्यत इत्यकर्तरि चेति घञ्, चजोः कगाविति गत्वं, विदुष इत्यादौ विद् ज्ञाने वर्तमाने शन्तृङ्, वेत्तेश्शन्तु वन्सु इति तस्य वन्सुरादेशः । अन्विलुक्, ङे न गुण इति गुणाभावः । विद्वन्स्, महन्त् इति स्थिते, शस्, तकारस्यानुषङ्गसंज्ञायां सत्यां अनुषङ्गश्चाक्रुञ्चेरिति न लोपः । ऊर्जेरिति । ऊर्ज बलप्राणनयोः । ऊर्जनमिति । क्विबिति भावेऽर्थे कृत्ययुटोऽन्यत्रापीति क्विप्, न तु क्विप्चेत्यनेन क्विप् । एतेन हि कर्तरि क्विब्विधीयते । कारितलोप इति कारितस्यानामिड्-विकरण इत्यनेन । अथ किमर्थमनुषङ्ग इति गुर्वी संज्ञा क्रियते, यावता व्यवहारसिद्धये दा शिडिति-वल्लघ्व्येव संज्ञा प्रणेतव्येत्याह—गुरुसंज्ञाकरणमित्यादि । अनुषङ्गसंज्ञा-निमित्तं कारणं यस्य लोपस्य तस्य कार्यान्तरेण सह सम्प्रधारणायां सत्यां बलवत्ता यथा स्यादिति गुर्वी संज्ञा क्रियते । तेन किं सिद्धं भवतीत्याह – तेनेत्यादि । तेन गुरुसंज्ञाकरणेनेत्यर्थः । भवद्भ्याम् (इत्यत्र[2] भवन्त् इत्यस्य भ्यामि परे) संयोगान्तलोपश्च प्राप्नोति अनुषङ्गलोपश्च । तत्र परत्वात् संयोगान्तलोप-स्स्यात् । गुरुसंज्ञाकरणात् त्वनुषङ्गलोप एव भवति इति तस्मिन्कृते धुटां तृतीय इति दत्वम् । अर्थवदित्यत्रापि नपुंसकात्स्यमोर्लोप इति सौ लुप्ते अर्थ-वन्त् इत्यस्य संयोगान्तलोपश्च प्राप्नोति । विरामव्यञ्जनादावुक्तमित्यादिना-नुषङ्गलोपश्च । तत्रानुषङ्गलोप एव भवति, बलीयस्त्वात् । ननु परत्वादेवासौ भवति[3], नैतत्, अन्तरङ्गत्वाद्धि संयोगान्तलोप एव प्राप्नोति । अन्तरङ्गत्वं तु तस्याल्पापेक्षत्वाद् बहिरङ्ग इति तद् बाधनेन संयोगान्तलोपो अन्तरङ्गत्वात् स्यात् । गुरुसंज्ञाकरणान्नानुषङ्गलोप एव भवति ।

**धुड् व्यञ्जनमनन्तःस्थानुनासिकम् २।१।१३**

(अनन्तस्थानुनासिकशब्दो[4] पूर्वं कृतव्युत्पत्तिः, अन्तस्थाश्च अनुनासिकाश्च तदन्तस्थानुनासिकं ततो नञ्समासः ।) विद्युद्भ्याम्, विपूर्वाद् द्युतेः विद्योतन-

---

१. पूर्वम् (मं०)
२. न्यूनपाठः (मं०
३. भविष्यति (मं०)
४. अन्तःस्थानुनासिकमिति द्वन्द्वः ततो नञ्समासः (मं०)

शीलेति क्विब्भ्राजि इति क्विप्, घुटां तृतीय इति दत्वम्। चत्वारि सामानीति जस्शसोरन्यतमस्य शिभावः। अत्र रेफनकारयोरन्तःस्थानुनासिकयोर्यदि घुट्संज्ञा स्यात् ततः किं स्यादित्याह—घुड्स्वरादित्यादि। व्यञ्जनग्रहणं किम्, स्वरस्य मा भूत्। अभित्साताम्। अत्र यद्याकारस्य घुट्-संज्ञा स्यात् ततो घुटश्च घुटीति सिज्लोपः स्यात्। नन्वेवं सति घुटश्च घुटीत्यनेन इटश्चेटीति वचनमपार्थकं स्यात्। नापार्थकम्, ईटि परे सिचो लोप इट एव परस्येति नियमार्थत्वात्। तथा च अचैषीदित्यादौ सिच एव श्रवणं सिध्यति। इतरथा ह्यत्रापि घुट् च घुटीति सिच् लुप्येत्, तस्मात् स्वरस्य संज्ञा मा भूदिति व्यञ्जनग्रहणं तच्चानन्तस्थानुनासिकमिति प्रसज्यप्रतिषेध पक्षेक्रियते।

**अकारो दीर्घं घोषवति परे २।१।१४**

अकारान्तं लिङ्गमित्येतेन लिङ्गग्रहणमिहाभिसम्बध्यमानमकारेण विशेष्यते विशेषणेन विशेष्यस्य तदन्तविधिः भवति इत्यकारग्रहणेनाकारान्तं लिङ्गं कार्यत्वेन विज्ञायते इति दर्शयति। यद्येवम्, आभ्यामित्यत्रेदमोऽनक् इत्यत्रात्वे दीर्घत्वं न प्राप्नोति, अनकारान्तत्वादन्तर्वद्भावाद् भविष्यतीत्यदोषः। घोषवदादौ विभक्तौ परस्यामित्युक्तम्। तत्रापरश्चोदयति कथं पुनः घोषवतीत्यनेन घोषवदादिर्लभ्यत इत्याह—यस्मिन्विधिरित्यादि। यस्मिन्घोषवति परे विधिकार्यं तत्तदादाविति। सघोषवानादिर्यस्यां विभक्तौ तस्यां प्रत्येतव्यम्। एवञ्च घोषवदादौ विभक्ताविति लभ्यते देवायेति। ङेर्यः, अनेन दीर्घः। नन्वकारनिमित्तं यत्वं कथमकारस्य दीर्घत्वं विधाय विघातं कुर्यात्। सन्निपातलक्षणो हि विधिरनिमित्तं तद्विघातस्येति, उच्यते—नास्त्यवस्थानं[1] वर्णग्रहणेऽस्याः परिभाषायाः हि लोपविधावहन्तेरिति प्रतिषेधारम्भात्। सः ह्येतदर्थो जहीत्यत्र हि लोपो मा भूदिति। यदि च वर्णग्रहणेऽप्येषा परिभाषोपतिष्ठेत् ततो हौ परे हन्तेर्जहाविति यो हन्तेर्जकारः सः कथं हं विघातं प्रति निमित्तं स्यात्, अतो हन्तेर्जकारस्य सम्बन्धिनोऽकाराद् वर्णादुत्तरस्य हेर्लोपो नैव प्राप्नोति हन्तेरिति निषेधो[2] नारम्भणीयं स्यात्। तदारम्भणाच्चैतदवगम्यते, नूनमेषा सन्निपातपरिभाषा वर्णग्रहणे नोपतिष्ठत इतीह च घोषवान् वर्णो दीर्घं प्रतिनिमित्तत्वेन परिगृह्यत इति सिद्धं देवायेत्यादौ वकारस्य दीर्घत्वम्। अन्ये त्वकारस्य दीर्घत्वे सति मात्राधिक्यं जायते न तु विघात इति वर्णयन्तस्सन्निपातपरिभाषायाः नायं विषय इति मन्यन्ते। कारवचनं तपरस्तत्कालस्य

---

१. नास्त्युपस्थानम् (भं०)
२. प्रतिषेधो (भं०)

कारशब्दपरश्च इति वचनादैस्भावो मा भूत् । खट्वाभिरित्यत्र आदिति कर्तव्ये दीर्घग्रहणं वैचित्र्यार्थं, संज्ञापूर्वकत्वाद्विधेरनित्यत्वार्थं तु न भवति । लक्ष्यानुरोधात् । देववानित्यत्वसन्तस्येति दीर्घः ।

**जसि २।१।१५**

अकारे लोपमिति लोपस्य बाध इति । इतरथा तु समानदीर्घत्वेन सिद्धत्वात्सूत्रमिदमनारम्भणीयं स्यात् । अग्नय इति । इरेदुरोज्जसीत्येत्वम्, अकारो दीर्घम्, जस्, घोषवतोरिति कर्तव्ये योगविभागो वैचित्र्यार्थम् ।

**शसि सस्य च नः २।१।१६**

न इति वकारस्य स्वरूपेणार्थेनार्थवत्वात्प्रथमा । एवमस्यादेशविषयेऽपि वाच्यं शसश्च सकारस्येति । एतेन शसस्सन्निधानात् तत् सम्बन्धिनस्सस्य नत्वं न तु सारसानित्यादौ लिङ्गसम्बन्धिन इति दर्शयति । विभक्तिग्रहणानुवृत्तेरिति । तस्मात्परा विभक्तय—इत्यतः अल्पश इति शसन्तादव्ययाच्चेति सेर्लुक्, सस्येति किम्, अकारस्य मा भूत् ।

**अकारे लोपम् २।१।१७**

अकारे विभक्तिसम्बन्धिनि पर इति विभक्तिग्रहणानुवृत्त्याकारस्य विशेषणादिति भावः । यद्येवम्, यस्याकारस्य विभक्तिनिमित्तं तस्मिन्परेऽकारस्य लोपो न प्राप्नोति, अविभक्त्यकारत्वात् । ततश्च यस्म इत्यादौ न सिध्यतीत्याशङ्क्याह—विभक्तिनिमित्तेऽपीत्यादि । एतेन विभक्तिनिमित्तोऽप्यकारो विभक्तिरित्युच्यत इति दर्शयति । भवति हि तन्निमित्तत्वात्तच्छब्दलाभो यथा—आयुषो निमित्तं घृतमायुरित्युच्यते । एवं च विभक्त्यकारोच्यमानोऽकारस्य लोपः विभक्तिनिमित्तत्वाद्विभक्तिव्यपदेशभाज्यप्यकारे प्रवर्तत एव । ननु देवमित्यादि मुख्यो विधेर्विषयोऽस्ति । तत् कथं य इत्यादौ गौणे विषयेऽस्य प्रवृत्तिस्स्यादित्याह—यः करोतीत्याद्याचार्यवचनाद् गौणमुख्यव्यवहारो नेहाश्रीयत इति भावः ।

**भिसैस्वा २।१।१८**

अकार इत्येतद् इह पञ्चम्यन्तं सम्बध्यत इत्युक्तम् । तत्र कारणमाह—अर्थवशादित्यादि । विभक्तिशब्देन विभक्त्यन्तशब्दः उच्यते, अर्थवशात्प्रयोजन-

---

१. समासान्ताद् (भं०)

सामर्थ्याद्विभक्तेः। विभक्त्यन्तशब्दस्य विपरिणामो भवति। पूर्वं विभक्ति-तिरोधाने सति तस्य विभक्त्यन्तरादेशो भवतीत्यर्थः। एवञ्चाकार इत्येव पूर्वं प्रथमान्तो यद्यपि प्रकृतस्तथापीहानुवर्तमानः पञ्चम्यन्तो विज्ञायते। एवं लिङ्गग्रहणमपि प्रथमायास्तु विभक्तेः पञ्चमीत्वेन विपरिणाम इत्यशक्यं व्याख्यातुम्। परिणामो हि स उच्यते, तत्त्वादप्रच्युतस्य धर्मिणः पूर्वधर्म-तिरोधाने[1] सति धर्मान्तरोदयः। [2]यथा—पयसो दधि-भावापत्तिः। न चैव-मात्मकः परिणामः प्रथमायास्सम्भवति। नहि सा पञ्चमीभावेनावस्थिता[4]। नापि तदर्थः पञ्चम्यर्थभावेन। तत् कोऽयं विभक्तेः शब्दात्मिकायाः विपरि-णामव्यवहारः, शब्दस्य त्वकार इत्यस्य विभक्त्यन्तरादेशोऽपि, स एवायम-कार इमामवस्थां प्राप्त इति प्रत्यभिज्ञायमानत्वाच्छक्यते विपरिणामो वर्ण-यितुम्। वा शब्दो वैचित्र्यार्थ इति विचित्राणामैस्भाव-रहितानां भावो वैचि-त्र्यम्, सोऽर्थः प्रयोजनं यस्य वा शब्दस्य सः तथोक्तः। अयं भावः। वा शब्दो अयं व्यवस्थितविभाषावाची। तेन क्वचिदैसादेशस्याप्रवृत्तिरिति [5]भद्रं कर्णेभि-रित्याद्यपि सिद्धम्। छन्दोविषयेऽस्मिन्प्रयोगे किं यत्नेनेति चेत्, तर्ह्यर्वन्नर्वन्त-मित्यादिकमपि सूत्रद्वयमयत्नार्हः स्यात्। तस्मात्सूत्रकारेणैव[6] कृतच्छन्दोऽर्थो[7] यत्न इति युक्तो वा शब्दः कर्णेभिरित्याद्यर्थः। घुटि बहुत्वे त्वे इत्येवं प्राप्त-मिति तद् बाध्यत इति शेषः। ननु देवैरित्यादयः प्रयोगाः एस्यपि कृते सिद्धाः तत्किमैस्भावेन, एस्क्रियतामैस्वा कोऽत्र विचार इति चेत्, न खलु कश्चित्[8] क्रमप्राप्त्या एसिति पाठो युक्त इत्याह—एसिति कर्तव्य इत्यादि व्यञ्जना-न्तशब्दविषय—ऐसादेशं विना नास्ति सिद्धिरिति तदर्थमैसित्युच्यते। कः पुन-रसौ व्यञ्जनान्तो विषय इत्याह—अतिक्रान्तैः जरामतिजरसैरिति। जरा शब्दो जॄषः षानुबन्धेत्यङ्-प्रत्ययः। गुणस्तु ङे न गुण इति निषेधोऽपि जरा जरस्स्वरे वेति निर्देशाद् भवति, एकदेशविकृतस्यानन्यवदिति वचनादिति। अन्यथा तु जरा-शब्दस्योच्यमानो जरस्भावः कृतह्रस्वस्य तस्य नैव प्राप्नोति

१. भावे (मं०)
२. न्यूनपाठः (मं०)
३. तुविभक्तेस्सः न सम्भवति (मं०)
४. न्यूनपाठः (वा०)
५. भद्रं कर्णेभिः शृणुयाम देवा (वा०)
६. तेन क्वचिद् (मं०)
७. च्छन्दार्थो कृतः (मं०)
८. कश्चिदित्यर्थः (मं०)

शब्दान्तरत्वात् । तस्मादतिजरसैरित्यस्य सिद्ध्यर्थमैस्वचनम् । एतत् प्रयोजनं विघटयितुमाह—नन्वत्रेत्यादि । अत्रास्मिन्भवदभिहिते प्रयोगे सन्निपातपरिभाषया जरस्भावो नैव प्राप्नोति । अकारान्तत्वस्य हि सन्निपातेन संश्लेषेण लक्षितो यो विधिरैसादेशलक्षणः सः तद्विघातस्याकारान्तता संश्लेषविघातस्य जरस्भावकरणेन[1] निमित्तं न भवति । एवञ्चातिजरसैरित्यत्र जरस्भावस्याप्रवृत्तेरैसादेश एव कर्तव्यः किमैस्करणेनेत्याह—एवं तर्हीत्यादि । सन्निपातपरिभाषायाः अनित्यत्वज्ञापनार्थमिदमैस्वचनम् । नित्यत्वे सति जरस्भावस्याप्रवृत्तेरफलमैस्वचनं स्यात्, तेन किं सिद्धं भवतीत्याह—तेनेत्यादि । अन्यथा त्विणत इत्यकारान्तता निमित्त इण्प्रत्ययोऽकारस्य विघातं न कुर्यात् । अन्ये तु नित्यत्वमत्र विषयेऽस्याः वर्णयन्तोऽतिजरसैरिति[2] भाव्यमित्याहुः । तत्र युक्तायुक्तत्वविवेके सूरयः प्रमाणम् ।

### धुटि बहुत्वे त्वे २।१।१९

यस्मिन्विधिस्तदादौ तत्कार्यमिति वचनात् केवलस्य वा धुटो निमित्तत्वेनासम्भवात् । धुटीत्यनेन धुडादि-प्रत्ययो गृह्यते । तस्य बहुत्व इत्येतद्विषयभावेन विशेषणमित्याह—बहुत्वे स्थितो यो धुटादि-प्रत्यय इति । देवानामिति । आमि च नुः दीर्घः, तु शब्दो व्यवस्थितविभाषां समुच्चिनोति । तेन युष्मभ्यमस्मभ्यमित्यत्र एत्वं न भवति । चतुर्थीबहुवचनम् । युष्मत् अस्मत्, एषां विभक्तावन्तलोपः । भ्यसभ्यमिति अभ्यमादेशः ।

### ओसि च २।१।२०

ओसिति रूपसामान्य[3]विवक्षायां द्वावप्योसौ गृह्येते । चकारो वा ओसः परस्य समुच्चयार्थः ।

### ङसिरात् २।१।२१

अथ किमर्थमादित्युच्यते । मात्रालाघवार्थम् अदित्येवमुच्यताम्[4] । एवमप्युच्यमाने देवादित्यादि सिध्यत्येव । न चातिजरसादित्यस्य सिद्ध्यर्थं दीर्घोच्चारणमत्र विषये सन्निपातपरिभाषया जरस्भावस्याप्रवृत्तेः । तत्किमर्थं-

१. सन्दिग्धः पाठः (?)
२. अतिजरैः (मं०)
३. विवक्षणाद् (मं०)
४. अदेवोच्यताम् (मं०)

मादिति दीर्घोच्चारणमित्याह—दीर्घोच्चारणं वैचित्र्यार्थम्। नन्वदित्युच्यमाने सति समानदीर्घं बाधित्वा अकारलोपः प्रवर्तते। तथा च देवादित्यादि न सिध्यतीति मन्यमानश्चोदयति—नन्वदिति कृत इत्यादि। अत्र परिहारमाह—न भविष्यतीत्यादिना। न भविष्यत्यकारलोपः, कुत इत्याह—आदेशस्येत्यादि। यदि ह्यदिति कृतेऽप्यकारलोपः प्रवर्तेत ततो देवदित्यादि रूपं भवेत्। ततश्चादित्येतस्यादेशस्य यदकारोच्चारणं तदनर्थकं प्रसज्येत, तकारमेवादेशं विदध्यात्। अत्रोच्यते—तकारादेशे विहिते सति परकार्ये त्रिकार्यादिरिति ङसेरकारस्य तकारादेशः प्राप्नोति, ततः तन्निवृत्त्यर्थमकारोच्चारणं स्यात्। अनेकवर्णस्सर्वस्येति सर्वादेशप्रवृत्तेरकारलोपस्तु न निवर्तयितुं[1] शक्यत इति तन्न, क्वचित्पूर्वपरो सर्वाविति सर्वस्यैव ङसेस्तकारादेशो विज्ञास्यते। तस्मादकारोच्चारणमादेशनिवृत्त्यर्थं[2] न भवतीत्यकारलोपे क्रियमाणे सत्यपार्थकं स्यात्। अतस्तदनर्थकं मा भूदित्यकारलोपबाधनेन समानदीर्घत्वमेव भविष्यतीति दीर्घोच्चारणमपार्थकं सद्वैचित्र्यार्थमेव जायते।

**इन टा २।१।२२[3]**

प्रकरणक्रमेण पूर्वं स्थानिन उपादाने कर्तव्ये यदादेशस्य प्रथममुपादानं तस्य प्रयोजनं कार्यान्तरं बाधित्वा पूर्वमिनादेशो यथा स्यात् इति। तेनातिक्रान्तेन कुलेनातिजरसिना[4] इत्यत्र अतिजर टा इति स्थिते, परमपि जरस्भावं बाधित्वा पूर्वमिनादेशः प्रवर्तते यथा तु सन्निपातपरिभाषा, तथा नैतदिष्यत इत्याहुः।

**ङेर्यः २।१।१३[5]**

ङेरिति चतुर्थ्येकवचनात्प्रथमा। नन्वेतद्रूपं सप्तम्येकवचनस्यापि समानमिति तत्कस्मान्न गृह्यत इत्याह—ङेरित्यादि। यदि सप्तम्येकवचनं गृह्येत ततो बहुत्व इत्यत्र कृतयकारादेशं निर्देशं न कुर्यात्। तस्माद् घुटि बहुत्व इति निर्देशो ज्ञापयति नेह सप्तम्येकवचनं गृह्यत इति।

---

१. निवारयितुम् (भं०)
२. मादेरादेशः (भं०)
३. २।१।२३ (दु० वृ०)
४. जरेण (?)
५. ३।१।२४ (दु० वृ०)

**स्मै सर्वनाम्नः २।१।२४**[1]

नत्वं न भवति। अतएव सर्वनाम्न इति निर्देशात् यत्वस्य बाध इति पूर्वसूत्रेण प्राप्तस्य कस्मै इति। किं कः। अमुष्मै इति। अदसः ङे, त्यदाद्यत्वम्, स्मैभावः, अदसः पदे मः, उत्वम्मादित्युत्वम्। भवते इत्यनुषङ्गश्चाक्रुञ्चे इत्यनुषङ्गलोपः। इह सर्वनामग्रहणेन पूर्वाचार्यप्रसिद्ध्या सर्व विश्व उभ उभय इत्यादयस्सर्वादयो गृह्यन्ते। तेषामेव सर्वनामसंज्ञात्वात्। तथा चोक्तम्--सर्वादीनि सर्वनामानीति सर्वादिरिति तु न कृतं सर्वेषां यानि नामानि सर्वादीनि तेषां परिग्रहो यथा स्यादिति। तेन ये संज्ञाभूतास्सर्वादयस्ते सर्वनामत्वात् पर्युदस्ताः भवन्ति कथं पुनः संज्ञाभूतानाम् असर्वनामत्वमित्याह--सर्वादीनामिति संज्ञाभूतानां कस्यचित्संज्ञात्वं प्राप्तानामित्याहुः[2]। संज्ञाभूता हि ते प्रतिनियतवस्तुविनिवेशनो भवन्तीति तेषां सर्वार्थाभिधायित्वान्नास्ति सर्वनामत्वम्। स्मर्यत इत्यनेन पूर्वाचार्यप्रसिद्धिमुपदर्शयन्सर्वार्थाभिधायिनामपि कृत्स्नप्रभृतीनामसर्वनामत्वं सूचयति। ननु नामी सर्वादयः परस्परस्य पर्यायतां यान्ति भिन्नार्थत्वात्। तथा ह्ययमिति प्रत्यक्षवस्तुविषयो निर्देशः। सः प्रतिपरोक्षविषयः तत्कथम् एषां[3] सर्वादीनां सर्वेषां नामानीत्येवं सर्वनामव्यपदेशो प्रवर्तते। उच्यते--यद्यपि सर्वेषां नाम सर्वनामेत्येवं विगृह्यते तथाप्येषां स्वविषयापेक्षं सर्वनामत्वं मन्तव्यम्[4]। यथा स्वविषयापेक्षं सामान्यस्यापि गोत्वस्य सर्वगतत्वम्। नहि गोत्वं पादपादिष्वसम्भवादसर्वगतमिति शक्यतेऽभिधातुम्। तस्मात् गोत्वसामान्यवत् सर्वादयः सर्वनामव्यपदेशभाजः। यद्येवम्, अतिक्रान्तः सर्वमतिसर्वः तस्मै अतिसर्वायेत्यादौ स्मैभावः प्राप्नोति।

भवति ह्ययं सर्वशब्दः सर्वार्थवृत्तित्वात्सर्वनाम। तदन्तविधिश्च येन विधिस्तदन्तस्येति वचनादत्रास्ति। तथा च परमसर्वस्मै इत्यादिसिद्धम्। तस्मात्प्राप्नोति अतिसर्वायेत्यादौ स्मैभावः इत्याशङ्क्याह--अप्रधानेभ्य इत्यादि। अत्रैव हेतुमाह--प्रधान इत्यादि। प्रधाने कार्यसम्प्रत्यय इति[5] कार्यस्य सम्प्रत्ययः सम्प्रतीतिः परिज्ञानमित्यर्थः। सर्वार्थश्चात्रा[6]प्रधानम्। अतिक्रान्ता-

---

१. २।१।२५ (दु० वृ०)
२. प्राप्तमित्यर्थः (भं०)
३. एतेषाम् (भं०)
४. उच्यते (भं०)
५. न्यूनपाठः (भं०)
६. सर्वश्चात्र (वा०)

र्थस्य प्राधान्यमिति न स्मैभावः। तीय-प्रत्ययान्तादित्यादि। द्वेस्तीयः, त्रेस्तृ चेत्येतद् योगद्वय-विहितस्तीय-प्रत्ययोऽन्तो यस्य तस्मादपि परस्य ङे-प्रत्ययस्य स्मै भावो विकल्पेनेष्यते। इह सर्वनाम्नां मध्ये उभशब्दः पठ्यते तस्यात्र पाठे प्रयोजनं न विद्मः। सर्वनामकार्यं ह्येकत्वबहुत्वविषयमुभशब्दस्याप्प्रत्ययो द्विर्वचनं च विषयः। सोऽप्यप्-प्रत्ययेन विना द्वित्वम्, तथा च उभे उभाविति प्रयोगौ स्मर्येते। न च सर्वनामत्वादव्ययसर्वनाम्न इत्यक्-प्रत्ययोऽस्य कार्यम्। उभकावित्यस्य प्रयोगस्य स्वार्थिके क-प्रत्यये एव कृते सिद्धत्वात्। त्रतसावपि सर्वनाम्नो विधीयमानावुभशब्दान्न सम्भवतः, तयोरव्ययत्वाद् द्वित्वाभिधाने सामर्थ्याभावात्। अस्य च नित्यं द्विर्वचनविषयत्वात्। तस्मात् चिन्त्यमभियुक्तैरस्य पाठे प्रयोजनम्। डतरडतमावत्र पठ्येते तौ तमादित्वाद्, विधायं कतरस्मै कतमस्मै इत्युदाहार्यम्। को भवतो कतरो किं-शब्दाद् द्वयोरेकस्य निर्धारणे गम्यमाने डतर-प्रत्ययः। को भवतां कतमः, जातिपरिप्रश्नविषयादेव किं शब्दात्, बहूनां मध्यादेकस्य निर्धारणे गम्यमाने डतम-प्रत्ययः। भवन्तु-इत्युदनुबन्धोऽत्र पठ्यते। तस्य प्रयोजनमव्ययसर्वनाम्न इत्यक्-प्रत्ययः। अज्ञातो भवान् भवकानिति। तथा विश्वग्देवयोरित्यादिना अद्र्यादेशोऽपि। भवन्तमञ्चतीति भवद्र्यङ्ङिति। स ह्यसर्वनाम्न इत्यत्र सर्वनामग्रहणानुवृत्तेः सर्वनाम्नोऽपीष्यते। पूर्व-पर-अवर-दक्षिण-उत्तर-अपर-अधर-इत्येते[1] गणे पठ्यन्ते। तत्कथं दक्षिणाय गाथकायेत्ययं स्मैभावशून्यः प्रयोगः। उच्यते— व्यवस्थायां गम्यमानायामेतानि पूर्वादीनि सर्वनामानि स्मर्यन्ते। कदा पुनर्व्यवस्था गम्यते यदैते पूर्वादयस्स्वार्थमवध्यपेक्षं प्रतिपादयन्ति। तद्यथा—ग्रामात्पूर्वादिति। अत्र हि पूर्वशब्देन योऽर्थः प्रतिपाद्यते सः ग्रामलक्षणमवधिमपेक्षते। एवं दक्षिणशब्दोऽप्यवधिं व्यपेक्ष्य स्वार्थं प्रतिपादयन्सर्वनामकार्यं प्रतिलभ्यते। दक्षिणाय गाथकायेत्यत्र च दक्षिण-शब्दो नावधिमपेक्षते। प्रावीण्यार्थप्रतिपादनपरत्वात्। तेनात्र स्मैभावो न भवति।

स्व-शब्दस्येत्यादि। आत्मा-आत्मीय-ज्ञाति-धनवचनः स्वशब्दः। तत्रास्य स्वशब्दस्य ज्ञातिधनयोस्संज्ञारूपेण वर्तमानस्य सर्वनामत्वमाचार्यैर्नेष्यते। उल्कानीव मेऽमी अश्वाः प्रभूताः स्वानः भुज्यन्ते इति च प्रत्युदाहरति। चतुर्थ्येकवचनप्रसङ्गेऽप्यत्र न भवति। किं पुनः ज्ञातिधनाभ्यामन्यत्र स्वशब्दस्योदाहरणम्। स्वस्मै पुत्राय स्वस्मै गवे इत्यादि। स्व-शब्दोऽत्रात्मीयवचनः। अन्तर शब्दस्य तु बहिर्योग इष्यते इति। सर्वनामत्वमिति शेषः। ननूप-

---

१. इत्येतानि (भं०)

संख्यानेऽप्यस्य सर्वनामत्वं स्मर्यते । अस्त्येतत् । बहिर्योगग्रहणेनैवोपसंव्यानेऽपि भविष्यति । तथा हि बहिरित्यनुवृत्तो देश उच्यते । तेन योगः बहिर्योगः । स च बाह्यस्य भवतीति । अन्तरस्मै चाण्डालगृहायेति । नगरबाह्याः चाण्डालगृहा उच्यन्ते । अथापि बहिश्शब्देन बाह्यमुच्यते बाह्येन योगः बहिर्योग इति । तथापि[1] नगराभ्यन्तरवर्ति यद्गृहं तदेवेदमुच्यते । उपसंव्यानशब्दोऽप्ययं यद्यप्युपसंवीयते प्रावरणान्तरेणाच्छाद्यत इति कर्मसाधनः । तदोपसंव्यानमन्तर्वासोऽभिधीयते[2] तस्य च बाह्येन योगाद् बहिर्योगग्रहणेनैव सिद्धिरस्ति । अथाप्युपसंवीयत अनेनेति करणसाधनः । ततश्चाप्युपसंव्यानस्य[3] परि प्रावरण विवक्षितं तस्य च बहिष्ठ्येन योगसद्भावाद् बहिर्योगेनैव सिद्धिः । अथोच्यते तुल्यप्रमाणे शाटकयुगेऽपि रहिते सति यत्रेदं न निश्चीयते किमन्तरीयमुत्तरीयं वा किमिति, तत्र बहिर्योगस्यानिश्चयाद् बहिर्योगग्रहणेन न सिध्यति इति तदर्थमुपसंव्यानग्रहणमिति । तन्न, यतो य एष मन्तव्यः प्रेक्षापूर्वकारी तेनावश्यं व्यवहारनियममिच्छता किञ्चिदुपलक्षणमाश्रित्य विभक्तव्यमिदमत्रान्तरीयमिदमुत्तरीयमिति । तथा च सति नियतो बहिर्योग इति नार्थ उपसंव्यानग्रहणेन, बहिर्योगग्रहणेनैवावगतत्वात् । तेन बहिर्योगे गम्यमानेऽन्तरशब्दस्य सर्वनामत्वमिष्यते । यद्येवम्, अन्तरायै पुरीत्यत्रान्तरा शब्दस्यापि लिङ्गग्रहणपरिभाषया सर्वनामत्वाद्ध्रस्वस्वरागमौ प्राप्नुतः, उच्यते--अपुरीति । बहिर्योगे विशेषं स्मरन्ति । तेन सर्वनामकार्याभावः ।

**ङिः स्मिन् २।१।२५**[4]

समे देशे यजेतेत्यत्रास्मिन् भावो न भवति सर्वशब्दपर्यायस्य सम-शब्दस्य सर्वनामत्वास्मरणात् । न चात्र सम-शब्दस्सर्वशब्दस्य पर्यायः । (निम्नोन्नतत्वरहिते[5] देशे वर्तमानत्वात् । दृश्यते च सम-शब्दः सर्वशब्दपर्यायः ।) यथा समराज्यं वर्तते ते सर्वेषां राज्यमित्यर्थः । ङसिङ्योस्स्मात् स्मिनाविति कर्तव्ये योगविभागो वैचित्र्यार्थः ।

---

१. तदपि (भं०)
२. वस्त्रम् (भं०)
३. उपसंव्यानमुपरि (भं०)
४. २।१।२४ (दु० वृ०)
५. न्यूनपाठः (भं०)

**विभाष्येते पूर्वादे: २।१।२६**[1]

भाष् व्यक्तायां वाचि । विपूर्वः, सि, ततोऽव्ययाच्चेति लुक्, आते सार्वधातुक इत्यण् । आते आथे चेतीत्वं विभाष्येते इति । द्वे पदे इति । ऐकपद्ये लक्षणाभावादिति भावः । विभाष्येते इत्यस्यार्थमाह—विकल्पेन कथ्येते इति विकल्पेन भावात्मकेन रूपेणेत्यर्थः । नित्यं प्राप्ताविति । एतेन प्राप्तविकल्पोऽयमिति दर्शयति । अथ किमर्थं विभाष्येत इति कर्तव्ये यावता तौ वेति क्रियताम्, एवमपि कृते विकल्पो लभ्यत एवेत्याह—तौ वेति कर्तव्य इत्यादि । सत्यम्, लभ्यते विकल्पः । सत्यनन्तरस्यैव स्मिन्नादेशस्य स्यान्न तु स्मादादेशस्यापि । कथं पुनः प्रकृतेऽप्यादेशद्वये अनन्तरस्यैव[2] विकल्पः स्यादित्याह—अनन्तरस्येत्यादि । कृते तु विभाष्येते ग्रहणे द्विर्वचननिर्देशसामर्थ्यादादेशद्वयस्यापि विकल्पस्सिध्यतीति तदर्थं विभाष्येते इति क्रियते । तर्हि आदेशद्वयं ङेरेव कस्मान्न विकल्प्यते । उच्यते—तौ वेति कर्तव्ये यद् विभाष्येते इत्यक्षराधिक्यं करणं ततो ज्ञायते अधिकोऽप्यत्र कार्यी कार्यभाक्त्वेनाभिप्रेत इति । तेन ङसिरप्यधिकोऽनुवर्तते । प्रत्येकं तु ङसिङ्योस्स्मात्स्मिनौ न विभाष्येते व्याख्यानात् तीयप्रत्ययान्तादपि वेष्यत इति स्मात्स्मिनाविति शेषः ।

**सुरामि सर्वतः २।१।२७**[3]

सर्वत इति तसन्तमव्ययस्यार्थं व्यक्तीकर्तुमाह—अकारान्तादाकारान्ताच्चेति । तस्मिन्नामीति । एतेन तृतीयादौ परादिरिति वचनादामः आगमित्वं दर्शयति । यद्येवम्, आगमिनः आगमसम्बन्धे सति षष्ठ्या निर्देशो युक्तो यथा इडागमो सार्वधातुकस्येति तत्कथमामीति सप्तम्या निर्देशः, उच्यते—नायं नियमः षष्ठ्यैवागमी निर्देष्टव्य इति सप्तम्यापि निर्दिश्यते । यथा सार्वधातुके च रुदादेरिति । आगमो ह्यवयव उच्यते, सः चावयविनः कदाचित् सम्बन्धित्वेन विवक्ष्यते कदाचिदाधेयत्वेन तत्र यदा सम्बन्धित्वेन तदा (वृक्षस्य[4] शाखेतिवत् अवयवी षष्ठ्या निर्दिश्यते तदा चास्यायमागम इति व्याख्यायते । यदा त्वाधेयत्वेन) वृक्षे शाखेतिवत्सप्तम्या निर्दिश्यते तथा च व्याख्यायते अयमस्मिन्नागम इति । एवं चाकारागमस्याधेयत्वविवक्षायामामीति युक्तः

१. २।१।२८ (दु० वृ०)
२. अन्यतरस्यैव (मं०)
३. २।१।२९ (दु० वृ०)
४. न्यूनपाठः (मं०)

सप्तम्या निर्देशः । सर्वेषामिति । धुटि बहुत्वे त्वे इत्येत्वम् । येषां केषामिति । यद् तद् किम्, त्यदाद्यत्वम्, किं कः विकल्पः[1] । सर्वासामित्यादि । स्त्रियामादाप् ततः स्वरागमः । त्वां मां युवामावामित्यत्र स्वरागमो न भवति । अमो चामित्यस्यामो लाक्षणिकत्वात् । नान्यदिति व्यञ्जनान्तमित्यर्थः[2] (अन्यथा[3] हि भवतामिर्यत्रापि स्वरागमः प्राप्नोति, कुतो हेतो व्यञ्जनान्तार्थम्) सर्वग्रहणं न भवतीत्याह—व्याख्यानादिति । किं पुनस्तद् व्याख्यानमित्याह—अविच्छिन्न इत्यादि । अविच्छिन्नः पारम्पर्यक्रमागत इत्यर्थः । स्वरूपेण सर्वशब्दो न गृह्यते तेषां परमिति निर्देशात् । अतएव च निर्देशान्नान्तरस्य विपूर्वादेः सर्वत इति विशेषणं विज्ञायते । ननु लिङ्गग्रहणपरिभाषया आकारान्तादपि सर्वनाम्नः कार्यं विज्ञायते तत्किं सर्वग्रहणेन, सत्यम् । अस्या एव त्वनित्यत्वज्ञापनार्थमिदं सर्वग्रहणम् । तेन सख्युश्च घुटित्वे इत्येत्वे विधीयमाने सखीशब्दस्य न भवतः सखी सख्याविति । अत्र [4]सख्यशिश्व्योश्चेति सखिशब्दादीप्रत्ययः ।

**जस्सर्व ईम् २।१।२८[5]**

ईमित्यस्यागमोऽकारस्यादिलोप इत्यादिना लोपः । परकार्ये विकार्यादिरिति वचनात् जस आदेरीत्वं मा भूदिति सर्वग्रहणम् । ननु क्वचित् पूर्वपराविति सर्वस्य भविष्यतीति । तथा च परन्तु ये इत्याह—अस्त्येतत्, अवैस्पष्ट्यं तु स्यात् । इमिति कर्तव्ये किम् दीर्घोच्चारणेनेत्याह – दीर्घोच्चारणमिति । ननु सर्वे च्छात्राः सर्वे छात्रा इत्यादौ परनिमित्त आदेशः पूर्वस्मिन् स एवेति वचनाद् दीर्घस्य विद्यमानत्वात् दीर्घात्पदान्ताद्वेष्यत इति छकारस्य द्वित्वविकल्पार्थं दीर्घोच्चारणं स्यात् । तत्किं वैचित्र्यार्थं भवेत्, उच्यते—द्विर्भावमिति भावग्रहणादेव यथेष्टं द्वित्वविकल्पः सिद्ध इति । तेनैतत्प्रयोजनं दीर्घोच्चारणार्थम् ।

---

१. न्यूनपाठः (भं०)
२. व्यञ्जनान्तार्थम् (भं०)
३. न्यूनपाठः (भं०)
४. सूत्रोऽयं प्रतीयते ।
५. जस सर्व इ २।१।३० (दु० वृ०)

**अल्पादेर्वा २।१।२९**[1]

प्रकारेऽत्रादिशब्दः। प्रकारश्च सादृश्यम्[2]। तच्चेत्वं विकल्पकृतमाहुः। तेनाल्पशब्दस्य यथा जस ईत्वविकल्पस्तथा येषां शब्दानां जस ईत्वं विकल्पेन दृश्यते तेऽल्पादयः। तेन प्रथमचरमतयाल्पार्धकतिपयनेमाः (शास्त्रान्तरपरिदृष्टा[3]) अल्पादिग्रहणेन गृह्यन्ते। व्यवस्थावाचिनि त्वादिशब्दे आश्रीयमाणे अल्पार्थकतिपयनेमानामेव सङ्ग्रहः स्यात्। व्यवस्थारचनासन्निवेश इत्यर्थः। एवञ्च सति पूर्वादेश्चेति योगः प्रपञ्चार्थः। नेमशब्दोऽत्र पठ्यते, तस्य सर्वनामत्वात् प्राप्तो विकल्पः। अन्येषामप्राप्त इत्युभयत्र विकल्पोऽयं तत्रेति पठ्यते। तं तमादित्वाद्विधाय द्वितय द्वितया इत्युदाहार्यम्। द्वाववयवौ येषामिति विग्रहः।

**पूर्वादेश्च २।१।३०**[4]

पूर्वादेर्गणादिति विभाष्येते पूर्वादेरित्यत्र पठितत्वात्। पूर्वादिभ्यश्च सप्तभ्यो व्यवस्थायामवाप्तसर्वनामव्यपदेशेभ्योऽयं विधिः। स्वशब्दात् त्वज्ञातिधनाख्यायाम्। अन्तरशब्दाद् बहिर्योगे।

**द्वन्द्वस्थाच्च २।१।३१**[5]

(विशेषादिष्टः[6] प्रकृतं न बाधत) इति वचनात् सर्वनाम्नः इति वर्तते, नान्तरं पूर्वादिग्रहणमेव। कतर कतम इत्यादि आख्याताच्च तमादय इति किमो डतरडतमौ। द्वन्द्व इति कर्तव्ये स्थाग्रहणं वैचित्र्यार्थम्। इह वस्त्रमन्तरं येषां ते वस्त्रान्तराः, वसनमन्तरं येषां त इति बहुव्रीहौ कृते वस्त्रान्तरवसनान्तरौ इति द्वन्द्वे च कृते सति अन्तरशब्दस्याप्रधानत्वादसर्वनामत्वाद्विकल्पाभावः। ननु वस्त्रान्तरवसनान्तरशब्दौ पर्यायशब्दौ[7] युगपदप्रयोगार्हौ इति कथमनयोर्द्वन्द्वः, समानार्थानां[8] विरूपाणामित्येकशेषो ह्यत्र स्यात्। यथा वक्रदण्डश्च

---

१. २।१।३१ (दु० वृ०)
२. सादृश्ये (वा०)
३. अनेनात्र पाणिनिः निर्दिश्यत इति।
४. न्यूनपाठः (दुर्गवृत्तिः)
५. २।१।३२ (दु० वृ०)
६. विशेषातिदिष्टः प्रकृतं न बाधते (परिभाषासङ्ग्रहः)
७. न्यूनपाठः (वा०)
८. सदृशार्थानाम् (भं०)

कुटिलदण्डश्च कुटिलदण्डाविति। सत्यम्, वसनशब्दस्त्वत्र न वस्त्राभिधायी किन्तु वसन्त्यस्मिन्निति अधिकरणयुडन्तो निवासे वर्तते, तेन भिन्नार्थयोः प्रयोगे सति युज्यते द्वन्द्वः।

**नान्यत्सार्वनामिकम् २।१।३२**[1]

अन्यदित्यत्र अन्यादेस्तुरिति तुरागमः। कार्यापेक्षया विशेषणत्वेन नपुंसकेन निर्देशः। सर्वनामप्रयोजकं यस्येत्यादि। प्रयोजकं प्रेरकमित्यर्थः। आदिग्रहणादिति। अर्थान्तरोपसङ्ग्रहादिति शेषः। नस्य तु क्वचिदिति न लोपे कृते इवर्णावर्णयोरित्यकारलोपः।

नन्वसौ स्वरनिमित्तको नलोपस्यालुप्तवद्भावात्कथमत्र स्यात्। नैतत्, लिङ्गान्तनकारलोपस्यैव हि प्राकरणिकस्यासावलुप्तवद्भावो नान्यस्य। इह सार्वनामिकं कार्यं स्मायादिस्वागमान्तं निषिध्यते, तच्च ङे-प्रभृतेः प्रत्ययस्यैव प्राप्तमिति स एव सार्वनामिककार्यप्रतिषेधभाक्त्वेन विज्ञायत इत्याह—परस्य प्रत्ययस्येत्यादि। पूर्वापरायेत्यादि पूर्वश्चापरश्चेति द्वन्द्वः। अत्र यथाक्रमञ्च सर्वनाम्नः ङसि स्मात् ङि स्मिन् सुरामि सर्वत इत्येते विधयो न भवन्ति सूत्रार्थरचनायाम्। अनभिसम्बध्यमानमन्यग्रहणं मत्वा यश्चोदयति किमर्थमन्यग्रहणमत्र कृतमिति तं प्रत्याह—अन्यत्र ग्रहणमित्यादि। प्रकृतस्मायाद्यादेशापेक्षया यदन्यदक्-प्रत्ययप्रवृत्तिलक्षणं कार्यं तस्यापि निषेधो यथा स्यादित्येतदर्थमन्यग्रहणम्। असति हि तस्मिन्स्मायादेरेव प्रकृतस्य निषेधो विज्ञायेत[2] न तु प्रकरणान्तरविहितस्याक् प्रत्ययस्यापि। केचित्तु प्रकृतमीत्वविकल्पमपेक्ष्य (स्मायादेर्निषेधकमन्यग्रहणं[3] व्याचक्षते) तन्न, चतुरस्रम्, असत्यप्यन्यग्रहणे स्मायादेरेव निषेधो विज्ञास्यते न तु प्रकृतस्य विकल्पस्य, द्वन्द्वस्थाच्चेत्यस्यानर्थक्यप्रसङ्गात्। तस्मात्प्रकृते स्मायाद्यपेक्षया निषेधकमक्प्रत्ययस्यैवेदमन्यग्रहणम्। तच्च वाक्यभेदेन व्याख्यायते। सार्वनामिकं कार्यं स्मायादिकं न भवति। अन्यच्चाग्लक्षणमपि कार्यं न भवतीति वाक्यभेदस्त्वत्रान्यग्रहणसामर्थ्यान्मन्तव्यः। न तु तदर्थं पूर्वसूत्राच्चकारः खेदनीयः।

यथोक्तमपरेण[4], चकारोऽनुवर्तत इति। क्व पुनरक्प्रत्ययो निषिध्यत

१. २।१।३३ (दु० वृ०)
२. विज्ञास्यते (मं०)
३. न्यूनपाठः (मं०)
४. अपरैः (मं०, पाठभेदः)

इत्याह अज्ञाताः कतरकतमा इत्यादि । कतरे च कतमे च कतरकतमाः । अज्ञाताः कतरकतमाः कतरकतमका इति विगृहीते सत्यज्ञातादावर्थे लिङ्गात्क-प्रत्यये वक्तव्य इत्यस्माद्वक्तव्यात् मकारात् परः क-प्रत्ययः । अत्रान्यग्रहणा-दक्-प्रत्ययो न भवति । अथेत्यादि । सकोषस्यायं प्रश्नः । किल कतरकतमका[1] इत्यत्राक्प्रत्ययस्य निषेधार्थमन्यग्रहणं भवता कृतम् । अत्र च क-प्रत्यये कृतेऽपि तदेव सकारकं रूपमायातम्, किमिवात्राक्प्रत्ययेनापराद्धम् यदसौ निषिध्यते । तस्यानिषेधे यो दोषः प्राप्नोति । तं प्रदर्शयितुमाह – तन्मध्यपतित इत्यादि । अयं भावः । इह कतरकतमका इति यदन्यग्रहणेनाक्-प्रत्ययो निषिध्यते ततो-ऽसावप्यव्ययसर्वनाम्नः स्वरादन्त्यादिति वचनेन मकारात्पूर्वं प्रवर्तेत, ततश्च तन्मध्यपतितस्तद्ग्रहणेन गृह्यत इति सर्वनामग्रहणेन ग्रहणं प्राप्नोति । एवं च सति कतरकतमक-शब्दात्परस्य जसो द्वन्द्वस्थाच्चेति विकल्पेनैत्वं प्राप्नोति, ततश्च कतरकतमे कतरकतमका इत्यनिष्टरूपप्रसङ्गलक्षणो दोषः प्रसज्येत् ।

स्यादेतत् क-प्रत्ययेऽपि सत्येष दोषः कस्मान्न प्रसज्यत इत्याह—क-प्रत्यये तु सतीत्यादि । कथं पुनः क-प्रत्यये सति नास्त्येष दोष इत्याह—सर्वनाम्नः परस्येत्यादि । द्वन्द्वस्थात् सर्वनाम्नः परस्य जस ईत्व-विकल्पः क्रियते । क-प्रत्यये तु मध्यवर्तिनि सति नास्ति जसः सर्वनाम्नः परत्वम् । तेन क-प्रत्ययेन व्यवधानादिति कुतस्तस्यैत्व-विकल्पः प्रवर्तते । तस्मात् कतरकतमका इत्यत्रैत्वविकल्पप्रवृत्तिलक्षणदोषविनिवृत्तयेऽक्-प्रत्यये प्रतिषेधार्थमन्यग्रहणं क्रियते । ननु च सार्वनामिकग्रहणेनैव तस्य प्रति-षेधः सिध्यति, अव्ययसर्वनाम्न इति वचनात् सर्वनाम्नः तस्य[2] प्रयोजकमित्य-सावपि सार्वनामिक एव, तत्किं तन्निषेधार्थेन पृथगन्यग्रहणेनेति मन्यमानः पूर्व-पक्षयति । नन्वक्प्रत्ययोऽपीत्यादि । अज्ञातादिरर्थ्यर्थ इत्यादिना पराभिप्रायमा-शङ्क्यते । अथ मन्यसे सार्वनामिकं कार्यं तदुच्यते यस्य सर्वनामैव प्रयोजकं यथा स्मायादेः । यस्य च सर्वनामप्रयोजकमज्ञातादयश्चार्थः सः कथमक्प्रत्ययः सार्वनामिकव्यपदेशभाक् स्यात् । ततश्चासत्यन्यग्रहणे तस्य निषेधो न भवेदिति चेत्, तन्न, कथमित्याह—यो हि उभयोरित्यादि । उभयसम्बन्धे सति यस्या-त्मलाभः तमेकेनापि लोके व्यपदिशति । यथा—मातापित्रोः पुत्रः मातुः[3] पुत्रो-ऽयम्, पितुः पुत्रोऽयमिति । एवं चाप्यक्प्रत्ययस्य यद्यप्यज्ञातादिनिमित्तक आत्म-

१. कतमाः (वा०)

२. तम् (वा०)

३. मातुरयं पुत्रः पितुरयं पुत्रः (भं०)

लाभः तथाप्यसौ सार्वनामिक इति शक्यते व्यपदेष्टुम् । तं प्रति सर्वनाम्नोऽपि प्रयोजकत्वात् । एवं च सिद्ध अक्प्रत्ययस्य सार्वनामिकग्रहणादेव निषेध इति किमन्यद्ग्रहणेन । एतत्प्रकरणविहितस्येत्यादि । अथैवं मनुषे । यद्यसत्यन्यद्ग्रहणे सार्वनामिकग्रहणमेतत्प्रकरणविहितस्यैव कार्यस्य निषेधकं स्यात्, प्रकरणानामवच्छेदकत्वात् । यत्तु प्रकरणान्तरविहितं कार्यं तत्कथमिव बुद्धावपरिस्फुरणान्निषेद्धुं शक्येत । ततोऽक्-प्रत्ययस्य सार्वनामिकग्रहणान्निषेधो न भवेदिति तन्निषेधाय युक्तन्यद्ग्रहणमिति । तदपि न । कथमित्याह—एतदपीत्यादि । यदि हि सार्वनामिकग्रहणमेतत्प्रकरणविहितस्यैव स्मायादेर्निषेधकं स्यात्, प्राप्तकार्यनिषेधकारित्वेन प्रतिषेधस्य प्रवृत्तेः । प्राप्तानां स्मायादीनामेव निषेधो विज्ञास्यत इति सार्वनामिकग्रहणमपार्थकं स्यात् । नेत्येवं ब्रूयात् । तस्मात्सार्वनामिकग्रहणात् स्मायाद्यादेशवदक्प्रत्ययस्यापि निषेधो विज्ञास्यत इति किमन्यद्ग्रहणेनेत्याह---एवं तर्हीत्यादि । प्रतिपत्तिगौरवपरिहारार्थमन्यद्ग्रहणं कृतम्, अन्यथा प्राथमकल्पिकानां[1] प्रतिपत्तिगौरव भवेदिति भावः ।

**तृतीयासमासे २।१।३३**[2]

समस्यन्तेऽस्मिन्पदानीति समासः । व्यञ्जनान्ताच्चेत्यधिकरणे घञ् । तृतीयायास्समासः तृतीयासमासः । तृतीयासमासे सतीति । तृतीयान्तस्य शब्दस्य याः विभक्तयो द्वितीयाद्या इत्यादिना समासः तस्मिन्सतीत्यर्थः । मासपूर्वायेत्यादि । यथाक्रमं स्मायादयोऽत्र न भवन्ति, मासपूर्वा इत्यत्र च जस ईत्वं न भवति । वाक्येऽपि नेष्यत इति तृतीयासमासार्थे वाक्येऽपि सार्वनामिकं कार्यं नेष्यते (कथं[3] पुनरनिष्यमाणमपि) लभ्यते, उच्यते---तृतीयासमास इति योगोऽयमावर्तते तेन न केवलं तृतीयान्तस्य समासे सति नेष्यते यावदसमासे वाक्येऽपि किमावृत्तौ प्रमाणमिति चेत्, व्याख्यानात् । यद्येवम्, अज्ञातेन त्वया कृतम्, अज्ञातेन मया कृतं त्वयका कृतं मयका कृतमित्यत्रापि वाक्ये सार्वनामिकस्याक्प्रत्ययस्य निषेधः प्राप्नोति, न भविष्यति । एतत्प्रकरणविहितस्यैव कार्यस्य निषेधविज्ञानात् । न चान्यदित्यभिसम्बध्यते येनाक्प्रत्ययोऽपि निषिध्यते । युष्मदस्मद् टा, त्वन्मदोरेकत्व इति युष्मदस्मदोः त्वन्मदोः । एत्वमस्थानिनीत्येवम् । ए अय्, सर्वनामविभक्तेः पूर्वमक्-प्रत्ययो वेष्यत इति वचनादक्प्रत्ययः । महापूर्वस्मै इति । अनुषङ्गलोपे सत्याकारो महतः कार्य इत्या-

---

१. मन्दमतीनाम् (भं०)

२. तृतीयासमासे च २।१।३४ (दु० वृ०)

३. तत्कथमनिष्यमाणमपि (भं०)

त्वम् ।

**बहुव्रीहौ च २।१।३४**[1]

येनविधिस्तदन्तस्येति वचनात् सर्वाद्यन्तादपि प्रियसर्व इत्यादेरस्ति सार्वनामिककार्यप्राप्तिरिति प्रतिषेधोऽयमारभ्यते । नन्वन्यपदार्थे प्रधाने बहुव्रीहौ सर्वादीनामप्राधान्यात् प्रधाने च कार्यसम्प्रत्ययात् प्राप्तिरेव सार्वनामिककार्यस्य नास्तीति किमन्येन योगारम्भेण, उच्यते––अज्ञातस्त्वं पिता यस्य सः त्वत्कपितृकः, अज्ञातोऽहंपिता यस्य सः मत्कपितृक––इत्यत्राक्प्रत्ययो मा भूदिति योगोऽयमारभ्यते । अत्र हि पदान्तरसन्निधाने सत्यन्यपदार्थविवक्षायां यावद् बहुव्रीहिस्समासः क्रियते तावदन्तरङ्गत्वात्पूर्वपदस्य सर्वनामव्यपदेशनिमित्तकअक्प्रत्ययः प्राप्नोति सोऽनेन निषिध्यते । अप्राधान्यं च[2] सर्वादीनां बहुव्रीहौ सत्यभिधातुं शक्यं न त्वप्रवृत्तेऽपि बहुव्रीहाविति न पूर्वपदस्यास्त्यप्रधानभावो येन तस्याक्प्रत्ययो न स्यात् । ननु बहुव्रीहिसंशब्दने यो निषेध उच्यते (सः[3] कथं, शक्यते वक्तुं बहुव्रीहौ पदमात्रस्य स्यात् । एवं तर्हि योगारम्भसामर्थ्याद् बहुव्रीहिशब्देनात्रोच्यते) तेन बहुव्रीह्यर्थे वा वाक्ये सार्वनामिकं कार्यं न भवतीति पूर्वपदस्याक्प्रत्ययो न भवति । यद्येवम्, [4]प्रियसर्वायेत्यादीनि अनुदाहरणीयानि स्युः । सत्यम्, किन्तु त्वकत्पितृको मकत्पितृक इत्यत्राक्प्रत्ययनिषेधायावश्यमारम्भणीयोऽयं निषेधविधिः । स एतदर्थमारभ्यमाणः प्रियसर्वायेत्यादावपि सार्वनामिककार्यनिषेधायास्तु, किमत्र प्रधाने कार्यसम्प्रत्यय इति वचनोपन्यासेन । अन्ये तु त्वकत्पितृको मकत्पितृक इत्येवं भवितव्यमिति मन्यन्ते, तान्प्रति चानभिमत एव योगारम्भः ।

**दिशां वा २।१।३५**[5]

दिक्छब्दः ऋत्विगादिसूत्रेण कर्मणि क्विबन्तो निपातयिष्यते । दिग्वाचिनां शब्दानामिति । दिगुच्यन्ते यैस्तेषां पूर्वादिशब्दानामित्यर्थः । पूर्वेण निषेधे सिद्धे विकल्पोऽयमारभ्यते । योगविभागादिति । योगो विभज्यते ततो दक्षिणशब्दस्य पुंवद्भावः । असति तु योगविभागे अन्या दक्षिणा, अन्या पूर्वेति भिन्नाधिकरण-

१. बहुव्रीहि २।१।३५ (दु० वृ०)
२. तु भं०)
३. न्यूनपाठः (वा०)
४. पूर्व (वा०)
५. २।१।३६ (दु० वृ०)

त्वात् तुल्याधिकरणलक्षणः पुंवद्भावो न प्राप्नोति। एवमुत्तरपूर्वस्यै उत्तर-पूर्वायै इत्यादीत्यादिग्रहणेन उत्तरपूर्वस्याः, उत्तरपूर्वायाः, उत्तरपूर्वस्याम्, उत्तरपूर्वायामित्येते गृह्यन्ते। अत्रापि पूर्ववत् पूर्वपदस्य पुंवद्भावः ह्रस्वमुकारागमौ च। अत्र[1] पूर्वा एव दिगुत्तरा यस्याः नगर्याः सा पूर्वोत्तरा तस्यै पूर्वोत्तरायै इत्यत्र सार्वनामिककार्यं विकल्पेन कस्मान्न भवति, भवति ह्ययं दिग्वाचिनोः पूर्वोत्तरशब्दयोः बहुव्रीहिः ततश्च पक्षे ह्रस्वमुकारागमौ प्राप्नुयातामित्यनेनाभिप्रायेण पूर्वपक्षयति। इह कस्मान्न भवतीत्यादि। अत्रोच्यत इत्यादिना परिहरति। इह दिग्वाचिनां शब्दानां द्विविधोऽस्ति बहुव्रीहिः, एकः स्यातामित्यादिना, अपरस्तु विदिकुथेत्यनेन। तत्र यः स्यातां यदीत्यादिना बहुव्रीहिः, न तत्रायं दिशाम्वेति विकल्पः। यस्तु विदिकुथेत्यादिना बहुव्रीहिस्तत्र कुतः पुनरेष विशेषोऽवाप्यत इत्याह—गौणमुख्ययोरित्यादि। गुणादागतो गौणः, यथा—गौर्वाहीक इत्यत्र गोशब्दस्य जडत्वादि[2]निमित्तको वाहीकलक्षणोऽर्थः मुखमिव प्रधानत्वान्मुख्यः। तत्र गौणमुख्यबहुव्रीहिः सम्भवति सति[3] गौणमुख्ययोः मुख्ये सम्प्रत्ययः इति मुख्य एव बहुव्रीहिः। विदिकुथेत्येतत्सूत्रविहितो गृह्यते, न तु स्यातां यदीत्येतत्सूत्रविहितः पूर्वपक्षवादिनोऽभिप्रायमाशङ्क्यमानमाह—विदिकुथेत्ययमित्यादि। विदिकुथेत्ययं बहुव्रीहिः मुख्यः, स्यातां यदीत्ययं तु गौण इति यदुक्तं तत्केन प्रकारेण पर्याति[4] इति। यदि पूर्वपक्षवादिभिर्मन्यसे तदत्र युक्तिं ब्रूमः। बहुव्रीहिस्तावदयं दिग्वाचिनां सूत्रद्वयेनापि क्रियते। तत्र विदिकुथेत्यनेन बहुव्रीहिः तेषामेव भवन्मुख्यो भवति। स हि बहुव्रीहिः विदिशि प्रतिपाद्यमानायां क्रियते। सः च विदिग्दिग्वाचिभिरेव पूर्वादिशब्दैः प्रतिपादयितुं शक्यते न त्वदिग्वाचिभिः। अतो विदिशि यो दिग्वाचिनां बहुव्रीहिस्तत्र वस्तुस्थित्या दिग्वाचिन एव समस्यन्त इति सः तेषां न बहुव्रीहिर्मुख्यो भवति शृङ्गग्राहिकतया तेषामेव सः बहुव्रीहिर्विधीयत इति कृत्वा[5] यस्त्वितरः स्यातां यदीत्यनेन बहुव्रीहिस्सोऽन्यपदार्थमात्रविवक्षायामदिग्वाचिनां दिग्वाचिनां च विधीयमानो न दिग्वाचिनां मुख्यो भवति, अतोऽसौ तेषां गौणः स्यातां यदि पदे इत्येतत्पदलक्षणाद् गुणादागतः इति कृत्वा गौणमुख्ययोर्मुख्ये

१. अथ (भं०)
२. जाड्यादि (वा०)
३. सम्भवे सति (वा०)
४. घटते (भं०)
५. मुख्यः (भं०)

सम्प्रत्यय इति लौकिकोऽयं[1] न्यायः तस्मात्पूर्वोत्तरायै इत्ययं स्यातां यदीत्येतत्सूत्रविहितो बहुव्रीहिः गौण इति नात्रायं विकल्पः। तेन पूर्वसूत्रेण प्रतिषेध एव भवति।

श्रद्धायाः सिर्लोपम् २।१।३६[2]

श्रद्धा संज्ञकाल्लिङ्गादिति। एतेन विशेषादिष्टपरिभाषया लिङ्गमनुवर्तमानं श्रद्धाग्रहणेन विशेष्यते न तु सर्वनाम्नैवेति। या सा का इति यत् तत् किम्, त्यदाद्यत्वम्। किं कः, स्त्रियामादाप्। कीलालप इति। मनिनादिसूत्रेण च शब्दाद्विट्, अस्त्र्याख्यत्वात् नायं[3] शब्दः श्रद्धासंज्ञः। अत्र सेरकारादेशः कस्मान्न विधीयते। विहिते तस्मिन्परसवर्णलोपे कृते गङ्गेत्यादि सिध्यत्येवेति किं लोपग्रहणेन, अस्त्येतत्, जरा इत्येतत्तु नित्यं न सिध्येत्। जरस्भावस्यापि प्रसङ्गादित्येके।

टौसोरे २।१।३७[4]

श्रद्धाया एत्वं भवतीत्यनेन श्रद्धाया एत्वं न तु टौसोरिति दर्शयति। एतच्च पुरुषे तु विभाषया समुदोर्गणप्रशंसयोरिति निर्देशादनुगम्यते।

सम्बुद्धौ च २।१।३८[5]

हे गङ्गेति। कृते एत्वे ह्रस्वनदीत्यादिना सिलोपः। उत्तरार्थ इति। उत्तरयोगे सम्बुद्धेरेवानुवृत्तिर्यथा स्यात् टौसोर्मा भूत्। समासस्थं पुनस्सम्बुद्धिग्रहणमशक्यं केवलमुत्तरत्रानुवर्तयितुम्।

ह्रस्वोऽम्बार्थानाम् २।१।३९[6]

एत्वस्य बाध इति पूर्वसूत्रप्राप्तस्य हि अम्बेत्यादि। कृते ह्रस्वे पूर्वात्सिलोपः। नन्वम्बार्थानां ह्रस्वो भवन्नकार एव स्थानेऽन्तरतमपरिभाषया भवितुमर्हति। ततश्चाम्बार्थानाम् इत्येव क्रियतां किं ह्रस्वग्रहणेनेत्याह—अ

---

१. न्यायो लौकिकः (भं०)
२. २।१।३७ (दु० वृ०)
३. वायम् (वा०)
४. २।१।३८ (दु० वृ०)
५. २।१।३९ (दु० वृ०)
६. २।१।४० (दु० वृ०)

इति कर्तव्य इत्यादि। ह्रस्व इति संज्ञापूर्वकोऽयं विधिरकारस्तस्य क्वचिदनित्यत्वव्यभिचारो यथा स्यादिति ह्रस्वग्रहणं क्रियते। तेनेत्यादि। अम्बदा, अम्बला अम्बिका इत्येतेषां ह्रस्वाभावे सति पूर्वेणैत्वम्। सेः पूर्ववल्लोपः। अम्बानामिति कर्तव्ये बहुत्वनिर्देशादेवाम्बार्थपरिग्रहे सिद्धेऽर्थग्रहणं प्रतिपत्तिगौरवपरिहारार्थम्।

**औरीम् २।१।४०**[1]

श्रद्धायाः पर औकार इति। विशेषादिष्ट इति वचनाच्छ्रद्धायाः इति सम्बध्यते। नाम्बार्थानामिति भावः। श्रद्धासंज्ञकाः मध्यपातित्वेन त्वम्बार्थाः सम्बध्यन्त एव। उमा गङ्गेति। द्वन्द्वादिदं प्रथमाद्विवचनं तिष्ठत इत्यस्योपयोगात्। माले इति द्वितीयाद्विवचनमानयनक्रियायां मालायाः कर्मत्वात्। ईमिति कर्तव्ये किं दीर्घोच्चारणेनेत्याह—दीर्घोच्चारणमित्यादि। जरसीत्ययं प्रयोगः सन्निपातपरिभाषायां सत्यां युक्तो न वेति सूरयः प्रमाणम्।

**ङवन्ति यै यास् यास् याम् २।१।४१**[2]

ङवन्तीति। ङमन्तमिति वचनापेक्षया नपुंसकेनायं निर्देशः। ङे, ङसि, ङस्, ङि इत्येतेषां ङकारस्यानुकरणोऽयं ङकारः, सः विद्यते येषामिति। तस्यास्तीति वन्तुः, जसो वचनापेक्षया नपुंसकत्वात् जस्शसोरिति शिभावः, घुट्स्वराद् घुटि नुरिति नुकारागमोऽत्र यथा न भवति तथा तद्विधावेवोक्तप्रायमिति तत एवानुगन्तव्यम्। लुप्तशस्कमिति। आदेशानां विधीयमानत्वात्कर्मणि सञ्जातस्य[3] शसः आदिलोप इत्यादिना लोपः।

**सर्वनाम्नस्तु ससवो ह्रस्वपूर्वाच्च २।१।४२**[4]

निर्देशसामर्थ्यादिति। ससवो[5] योऽयं निर्देशः तद्बलादित्यर्थः। अन्ये तु सहशब्देन समानार्थस्समासविषयः सः शब्दोऽस्ति तस्यायं ससव इति निर्देश इति व्याचक्षते। एवञ्च व्याख्यायमाने सत्यस्त्वसहशब्दः पदेन विग्रहः

---

१. २।१।४१ (दु० वृ०)

२. २।१।४२ (दु० वृ०)

३. संज्ञा तत्र (भं०)

४. सर्वनाम्नस्तु ससवो ह्रस्वपूर्वश्च २।१।४३ (दु० वृ०)

५. समासोऽयं निर्देशः तद्बलादित्यर्थः (भं०) ससवो इत्यस्य स्थाने सह सुना इति पाठः (दु० वृ०)

कर्तव्यः, यथा सुसखीत्यत्र शोभनशब्देन ह्रस्वपूर्वस्य येभ्य इत्यादिविग्रहविशेषं प्रदर्शयन्नादेशेभ्यः पूर्वस्य दीर्घस्य ह्रस्वो भवत्येवं रूपः स्थान्यादेशो भावोऽत्रान्तर्नीयत इति सूचयति । ह्रस्वपूर्वो येभ्य इति तु न विगृह्यते । एवं हि सति आदेशेभ्यः पूर्वो ह्रस्वो भवतीत्येवमपि कश्चित्सम्भावयेत् । सुकारागमयुक्त इति । उकारेणानुबन्धेन तृतीयादौ तु परादिरिति सुकारस्य परावयवत्वादेवमुक्तं यस्मै तस्याः[1] कस्यामिति यद् तद् किम् ङे ङसि ङि इत्यस्य तु किंकः, स्त्रियामादाप्, यै यास् याम् ससवो ह्रस्वपूर्वश्चादेशाः । तुशब्दः पूर्वस्मादस्य विधेरामादिकृतम् विशेषं द्योतयति । अथोत्तरत्र स्वागमाधिकारनिवृत्त्यर्थस्तुशब्दः कस्मान्न भवति, न भवति ससवो[2] इत्यस्योत्तरत्रैवानुवृत्तिप्रसङ्गात् नद्या इति च निर्देशः स्वागमाधिकारे सति विरुध्येत । अथ सुरिति कस्मान्न क्रियते, सर्वनाम्नः श्रद्धासंज्ञकात्परेषां ङवतां यै यास् यास् यामादेशाः ह्रस्वपूर्वाः भवन्ति । सुश्चैषामागमो भवतीति चार्थो विज्ञास्यते तत् किं ससवो इत्यनेन अस्त्येतत्, आदेशानां तु स्वागमसम्बन्धे सति षष्ठ्यां व्याख्यायमानायां सुश्चैषामागम इति वाक्यभेदात् प्रतिपत्तिगौरवं स्यात्, ससवो इति तु समानाधिकरण्यनिर्देशे सत्येकवाक्यत्वात् प्रतिपत्तिलाघवं च भवतीति तन्निर्देश एव ज्यायान् । ह्रस्वश्चेति कर्तव्ये पूर्वग्रहणमादेशानां ह्रस्वो मा भूदिति ।

**द्वितीयातृतीयाभ्यां वा २।१।४३[3]**

द्वितीयातृतीयाशब्दाभ्यामिति । एतेन द्वितीयातृतीयाशब्दौ स्वरूपेण गृह्येते न तु द्वितीया तृतीया विभक्तीति दर्शयति । न त्वादेश इति विकल्प्यन्त इतिवचन विपरिणामेन सम्बध्यते । कथं पुनः प्राप्तविकल्पेऽस्यादेशविषये सम्भवति सत्येवमवगन्तुं शक्यत इत्याह—व्याख्यानादिति । तीयाद्वेति न कृतं सुखतीयादेर्मा भूदिति । ननु सुखशब्दात् सुखतो भव इतीय-प्रत्यये कृतेऽन्त्यस्सुरादिलोपे च सुखतीय इति भवतीति । एवं चायमनर्थकः तीयशब्द इत्यानर्थक्यादेवास्य तीयशब्दस्य ग्रहणमिह न भविष्यति[4] । यस्तु अद्वेस्तीयः त्रेस्तृ चेति पूरणार्थाभिधायी प्रत्ययः स एवार्थवत्वाद् ग्रहीष्यते । ततः तीयाद्वेति क्रियतां किं द्वितीयातृतीयाभ्यां वेति गौरवकरणेन, अस्त्येतत्, अर्थवद्ग्रहण-

---

१. तस्मै यस्याः (वा०)

२. ससवो इत्ययं पाठः दुर्गवृत्तिमेवाश्रित्य मया स्वीकृतः, न्यासग्रन्थे तु उभयोः प्रत्ययोः ससर्व इति पाठः ससवो इत्यस्य स्थाने वर्तते ।

३. २।१।४४ (दु० वृ०)

४. भवति (वा०)

परिभाषायाः त्वनित्यत्वदर्शनान्सुखतीयादेरपि ग्रहणं विज्ञास्यते । तन्मैवं विज्ञायीति यथान्यासकरणमेव ज्यायः ।

**नद्या ऐ आसासाम् २।१।४४**[१]

ससवो ह्रस्व पूर्व इति निवृत्तमिति नद्या इत्यत एव निर्देशात् इति भावः ।

**अम्शसोरादिलोपम् २।१।४५**[२]

नद्या परयोरम्शसोरित्यादि । एतेनाम्शसोरादिवर्णो लुप्यते न तु तयोः परयोर्नदीसंज्ञकस्येति दर्शयति । एतच्च नद्या इति पञ्चम्यन्तस्यानुवर्तमानस्य षष्ठी सम्बन्धे कारणाभावादवगम्यते । अल्लोपमिति न कृतं वैचित्र्यार्थम्[३] ।

**ईकारान्तात्सिः २।१।४६**[४]

ग्रामणीरिति । नायं नदीसंज्ञकः, नित्यस्त्रीविषयत्वाभावात् । लक्ष्म्यादिभ्यस्सेर्लोपो नेष्यत—इति । येभ्योऽनेन सूत्रेण सेर्लोपो न दृश्यते ते लक्ष्म्यादयः । आदिशब्दस्य प्रकारवाचित्वादन्तग्रहणमीकारमात्रात्सिलोपो मा भूदिति । नन्वेवं सति ईदूत्-स्त्र्याख्यौ नदीत्यत्र नदीशब्दात्केवलात्मकेन[५] सेर्लोपः स्यात् । आदिलोप इत्यादिना लोपो भविष्यति ।

**व्यञ्जनाच्च २।१।४७**[६]

व्यञ्जनेन लिङ्गस्य विशेषणात् तदन्तविधिर्लभ्यत इत्याह – व्यञ्जनान्तादिति । वागिति चवर्गदृगिति गत्वम् । राजेति । घुटि चासम्बुद्धाविति दीर्घः । नन्वित्यादि । चोद्यमित्यादिना परिहरति । अयमर्थः संयोगान्तस्य लोप इत्यत्र लिङ्गाधिकाराल्लिङ्गग्रहणेन संयोगो विशेष्यते, तेन लिङ्गसम्बन्धिनस्संयोगस्य योऽन्तः, तस्य लोपः क्रियते । न च सिप्रत्ययान्तं लिङ्गविभक्तिवर्जमिति लिङ्गसंज्ञानिषेधात् । अतो लिङ्गसंयोगस्य अन्तलोप उच्यमानोऽन्यस्य न प्राप्नोति । न च सम्भवी, सर्वत्र संयोगान्तलोपः । वाग्विद्युदित्यादौ संयोगादेर्धुट—इति

१. २।१।४५ (दु० वृ०)

२. अम्शसोरादिर्लोपम् २।१।४७ (दु० वृ०)

३. वैचित्र्यात् (वा०)

४. २।१।४८ (दु० वृ०)

५. न्यासग्रन्थे तु "केवलात्केन" इत्येव पाठः इति विचारणीयः ।

६. २।१।४९ (दु० वृ०)

धुटो लोपप्रसङ्गात् राजेत्यादौ च न लोपः न प्राप्नोति संयोगान्तलोपस्या-लुप्तवद्भावात् । तस्मात् व्यञ्जनान्ताच्चेति सूत्रं कर्तव्यमेव ।

**अग्नेरमोऽकारः २।१।४८[1]**

परकार्ये विकार्यादिरित्यकारस्यैवावगम्यते । स्थानित्वे सति पुनरकारोपादानं क्वचित्पूर्वपरौ सर्वाविति सर्वस्यामो लोपाशङ्का निवृत्त्यर्थम् ।

**औकारः पूर्वम् २।१।४९[2]**

पूर्वं वर्णमापद्यत इति, न तु पूर्वमग्निसंज्ञकम्, कुतः, वर्णाधिकारात् । यद्येवम्, यौ पूर्वाविदुतौ तावेवौकारस्य स्थाने भवत इति कस्मान्न व्याख्यायते, नैवं शक्यम् । एवं हि व्याख्यायमाने सति बुद्धि धेन्वितीदृशे रूपे स्याताम् । ततश्चैवंविधरूपसम्पत्तये औकारो लोपमित्येव कुर्यात् । पूर्वग्रहणं त्वपार्थकं भवेत् । अतः पूर्वग्रहणात्पूर्ववर्णादकारादेशेऽस्य औकारस्य विज्ञायते । पूर्वोत्तर-सूत्रमध्यपातित्वेन प्रतिभिज्ञायमानस्य द्वितीयाद्विर्वचनस्यैवौकारस्य ग्रहणं प्राप्नोति न प्रथमाद्विर्वचनस्य । तदपि च गृह्यते कारप्रत्ययस्याधिकस्य निर्देशात् ।

**शसोऽकारः सश्च नोऽस्त्रियाम् २।१।५०[3]**

अस्त्रियामिति स्त्रीशब्दस्य स्त्री चेति धातुवद्भावादियादेशः शसश्च सकारस्य नत्वम् भवत्यस्त्रियामित्येतेषां अस्त्रियामिति निषेधोऽयं प्रत्यासत्तेर्न तु विधिनैव सम्बध्यते । न तु पूर्ववर्णविधिनेति दर्शयति । अथ किमर्थमकार इत्युच्यते यावता शस इत्यवयवसम्बन्धे षष्ठी व्याख्यायिष्यते, शसोऽवयव इति । एवं च परकार्ये विकार्यादिरित्यवयवादिरकार एव स्थानी विज्ञास्यते । तत्किमकारग्रहणेन, असदेतत्, श्रुतमकारमवयवं विहायाश्रुतस्याकारस्यावयवस्थानित्वेन विज्ञातुमशक्यत्वात् । परकार्ये इत्येषा हि परिभाषा स्थानिनमकारं प्रकल्पयेत् । यदि शसोऽवयवस्सकारः सूत्रे नोपलभ्यते । तदुपलम्भे तु तस्यैव पूर्वो वर्णादेशः प्राप्नोति । नत्वञ्च पाक्षिकं तस्यैव भवेत् । तन्मा भूदेष दोष इत्यकारोपादानम् । पुंसीति कर्तव्ये स्त्रीग्रहणमुत्तरार्थम् । तेनामुना कुलेनेत्ययं स्वरादेशो नपुंसके सिद्धो भवति ।

---

१. २।१।५० (दु० वृ०)
२. २।१।५१ (दु० वृ०)
३. २।१।५२ (दु० वृ०)

**अदोऽमुश्च २।१।५१**[1]

अद इत्यदशब्दात्परस्य जसः आदिलोप इत्यादिना शि-भावे भविते[2] लोपे प्रत्ययलोपे आश्रये त्यदाद्यत्वं न भवति साक्षाद्विभक्तौ तस्य विधीयमानत्वात्। तथा च तद्विधौ वक्ष्यति। पुनर्विभक्तिग्रहणं साक्षाद्विभक्तौ त्यदाद्यत्वार्थमिति। स्वरादेशस्य विधेर्बलीयस्त्वात् लोपात्पूर्वमपि न भवति स्वरूपभङ्गभयात्। सति हि त्यदाद्यत्वे मत्वोत्वयोरुदयादमू इति रूपसम्पत्तेः अद इति रूपमदसशब्दस्यावगमकं हीयते। टा इत्यनुवर्तत इति पूर्वसूत्रात्। ततश्चार्थवशात्सप्तम्यन्तमिह विज्ञायते। च-शब्दाट्टा प्रत्ययस्य च नाभाव इति। एतेन च-शब्दोऽत्र नाभावं समुच्चिनोतीति दर्शयति। अन्यथा तु टाप्रत्यये परे लब्धसत्ताको स्वरादेशः कथं सत्यां सन्निपातपरिभाषायां ना-भावं विदध्यात्। नन्वमुनेति रूपम् अदसः पदे मः इति अदसः दस्य मत्वे कृते सत्युत्वम्मादित्युत्वे कृते पूर्वेण च टाप्रत्ययस्य ना-भावे उपजाते सिद्धमिति किं योगारम्भेण, असदेतत्, पर इति वचनाददसः पदकार्ये कृते सति मत्वं विधीयते। न चाकृते नाभावलक्षणे पदकार्ये मत्वं भवितुमर्हति। न चासति मत्वे ना-भावस्यास्ति सम्भवः। मत्वापेक्षमत्रोत्वं तत् सव्यपेक्षत्वात् नाभावस्य। एवञ्चासति ना-भावे लक्षणविहितयोर्मत्वोत्वयोरप्रवृत्तेः कथममुनेत्यस्य सिद्धिः स्यात्, यद्येवम्, ना-भावस्य सूत्रार्थम् अदस इति सूत्रं क्रियताम्, एवञ्चादसः परस्य टाप्रत्ययस्य कृते नाभावे त्यदाद्यत्वोत्तरकालं स्वलक्षणविहितयोर्मत्वोत्वयोस्सतोः सिद्धममुनेति। एतन्न सिध्यति, कृते हि नाभावे पदकार्यत्वात् यन्मत्वात् पूर्वं त्यदाद्यत्वं सञ्जातं तस्याकारो दीर्घमिति पदकार्यं दीर्घत्वमाशङ्क्येत्। ततो मत्वे सति उत्वम्मादिति द्विमात्रस्याकारस्यान्तरतम्यात् द्विमात्रादेशे[3] सत्यमुनेत्यनिष्टं भवेदिति तन्निवृत्तये योगारम्भ एव ज्यायान्। अद इति व्यक्तिमात्रं निर्दिश्यते तेनामुनेत्यत्राक्प्रत्ययसहितस्यादसो म-आदेशो न भवति। अदसअव्ययसर्वनाम्न इत्यज्ञातादावर्थे स्वरादन्त्यात्पूर्वोऽक्प्रत्ययः। त्यदाद्यत्वम्, अदसः पदे मः उत्वम्मादित्युत्वम्। अक्प्रत्ययस्य सहितस्यादसो म-आदेशे सत्यज्ञातादयोऽर्थान् प्रतीयेरन्निति चेत्, प्रकरणवशात् प्रत्येष्यन्ते।

**इरेदुरोज्जसि २।१।५**[4]

इकारोकारयोरनुकार्येणार्थेनार्थवत्वात् प्रथमा। अनुकार्यौ तु बुद्धिधेनु-

१. २।१।५४ (दु० वृ०)
२. कृते (मं० प्र०)
३. द्विमात्रे तूत्वे (मं०)
४. २।१।५५ (दु० वृ०)

सम्बन्धिनाविकारोकारौ एदौतोस्तु स्वरूपेणार्थेनार्थवत्वादग्निग्रहणेऽनुवर्तमाने इदुद्वचनमस्त्रियामित्यस्य निवृत्त्यर्थम् । तेन बुद्धयः धेनवः ।

**सम्बुद्धौ च २।१।५३**[1]

अथ हे नदि, हे वधु इत्यत्र नदी-वधूशब्दयोः सम्बुद्धौ ह्रस्व इति ह्रस्वे कृते यौ इदुतौ तयोरप्येदोतावादेशौ कस्मान्न भवत इत्याह—हे नदीत्यादि कुतो न भवतीत्याह - ह्रस्वविधानसामर्थ्यादिति । यदि ह्यत्र कृतेऽपि ह्रस्वे एदोतौ स्यातामपार्थकं ह्रस्वशासनं स्यात् । सम्बुद्धौ ह्रस्व इति ह्रस्वग्रहण-मपास्य सम्बुद्धावेदोतावित्येवं कुर्यात् । तस्माद् ह्रस्वप्रवृत्तिवचनाद्[2] हे नदि हे वधु इत्यत्रैदोतौ न भवतः । जस्सम्बुद्धेरिति पूर्वत्रैव न कृतं यथासंख्यभयात् ।

**ङे च २।१।५४**[3]

ङयीति प्राकरणिके विभक्तिनिर्देशे कर्तव्ये ङे इत्यश्रूयमाणसप्तमीको निर्देशो रूपमात्र परिग्रहार्थः । तेन ङे इत्यस्य रूपस्य विभङ्गे[4] सत्येदोतौ न भवतः । बुद्ध्यै धेन्वै, ह्रस्वश्च ङवतीति बुद्धिधेनु-शब्दयोः नदीसंज्ञकत्वात् नद्या ऐ आसासामित्यै-भावः । तस्मिन्कृते स्थानिवद्भावाद् न भवत्ययं ङे-प्रत्यय इत्येदोतौ स्याताम् ।

**ङसिङसोरलोपश्च २।१।५५**[5]

ङसिङसोः परयो इरेद् भवति उरोत् च भवति इत्येतेनेदुतोः प्रति ङसिङ-सोः प्रत्येकं निमित्तभावमुपदर्शयन्यथासंख्यभावं सूचयति । एतच्च ङसि-ङसोरिति ङसोरल्पस्वरस्य लक्षणव्यभिचारसूचनार्थः पर[6]-निपातकरणाल्लभ्यते । एवञ्च कृत्वा छादेर्घ इति षष्ठ्येकवचने परतः इकारस्यैव विधानं न्याय्यम्[7] । तयोश्चाकारलोप इत्येतेनाप्यकारलोपविधौ ङसिङसोरित्यर्थवशात् षष्ठ्यन्ततया विपरिणम्यत इति दर्शयति ।

---

१. २।१।५६ (दु० वृ०)
२. बलात् (भं०)
३. ङे २।१।५७ (दु० वृ०)
४. भङ्गे (वा०)
५. २।१।५८ (दु० वृ०)
६. परि (भं०)
७. ज्यायः (वा०)

**गोश्च २।१।५६**[1]

गोरिति गोशब्दात् परस्य ङसेरनेनैवाकारलोपसम्भविना शब्देन निर्देशो न्याय्यः इतीतरेतराश्रयदोषः शास्त्रेऽस्मिन्प्रकल्प्यते । द्यौ-शब्दादपीष्यत इति ङसिङसोरकारलोप इति शेषः । अत्र च हेतुः च शब्दः ।

**ङिरौस् पूर्वः २।१।५७**[2]

औ इति प्रथमायाः द्वितीयस्याः[3] वैकवचनस्य लोपः पूर्वेण वर्णेन इति । वर्णाधिकारात् । अग्नेः परो ङिरित्येतेनाग्नेरिति वर्तते न त्वनन्तरं गो-ग्रहणमिति दर्शयति । एतच्च परो ङः दृतिनाथयोः पशाविति च निर्देशादवगम्यते । अङे-द्वाविति कृते को दोषस्स्याद् येनैवं लघुसूत्रं परिहृत्य गुरुः क्रियत इत्याह—ङेर्द्वाविति कृते विंशताविति न सिध्येत् इति । अत्र हेतुमाह—तेर्विंशतेरित्यादि । तस्माद्विंशताविव्यस्य शब्दस्य सिद्ध्यर्थमुत्तरत्र चानिष्टप्रयोगनिवृत्त्यर्थम् ङेर्द्वा-विति न क्रियते ।

**ङसिङसोरुमः २।१।५८**[4]

ङसिश्च ङसश्चेति द्वन्द्वः । उमित्यग्नेरमोऽकार इत्यमोऽकारलोपः । अ-इत्यकारादनुकार्येणार्थेनार्थवत्वात्प्रथमा । अनुकार्यस्तु ङसिङसोरकारः । ननु सखिपती द्वौ, ङसिङसावपि द्वावेव, ततश्च संख्यासाम्याद् यथासंख्यं प्राप्नोति तत्कस्मान्न भवतीत्याह – यथासंख्यं न भवतीत्यादि । सति हि यथासंख्य-सम्बन्धे सख्युरिति सखिशब्दस्य षष्ठ्यन्तस्य निर्देशो विरुध्येतेति भावः । इह निर्दिश्यमानानामादेशिनामादेशाः भवन्तीति सर्वयोर्ङसिङसोरुत्वं प्राप्नोति तन्मा भूदेष दोष इत्यकारग्रहणं किल क्रियते । एतच्चाप्रयोजनं सर्वादेशे ह्युत्वे विज्ञायमाने सख्युश्च पत्युश्चेति निर्देशावनन्वितौ[5] स्याताम् । तस्मादकारस्यै-वोत्वं भविष्यतीति किमकारोपादानेन, अत्रोच्यते, अधिकविषयोपसङ्ग्रहार्थम-कार उपादीयते । तेन सखी-पती-शब्दयोः लूनी-पूनी-शब्दयोश्च सख्युः पत्युः लून्युः पून्युः इत्यादिसिद्धम् । सह खेन सखः, लून-पून-शब्दौ ल्वाद्योदनुबन्धा-दिति कृतनत्वौ सखिपति-लून-पून-शब्देभ्य. सखमिच्छत्यात्मनः पतिमिच्छ-

१. २।१।५९ (दु० वृ०)
२. २।१।६० (दु० वृ०)
३. द्वितीयायाः (भं०)
४ २।१।६२ (दु० वृ०)
५. निर्देशाविति न्यूनपाठः (भं०)

त्यात्मनः इत्यादिविग्रहे कृते नाम्न आत्मेच्छायामिति यिन्, सख-लून-पून-शब्दानां यिन्यवर्णस्येतीत्वं पतिशब्दस्य नाम्यन्तानां यिणायीति दीर्घः। ततः सखीय् पतीय् लुनीय् पूनीय् इति स्थिते क्विप्, य्वोर्व्यञ्जन इति य लोपः, ङसिङसोरिति तयोरकारस्योत्वम्, ङसोऽल्पस्वरस्य परनिपातो लक्षणव्यभिचारं सूचयति। तेन पूर्वनिपातलक्षणवदुत्वलक्षणमपि व्यभिचरतीति। अतिसखेः, सेनापतेरिति च सिद्धम्।

**ऋदन्तात् सपूर्वः २।१।५९[1]**

ऋदन्तस्येति विग्रहः। तपरकरणमसन्देहार्थम्। असति तपरत्वे रन्तादित्युच्यमाने किमयं ऋकारस्य निर्देशः। उत रेफस्येति मधुरमतीनां सन्देहः स्यादिति तन्निवृत्तये तपरकरणम्। तपरस्तत्कालस्येति वचनात् ऋकारादेव विधिर्यथा स्यात् ॠकारान्मा भूदित्येतदर्थं तु तन्न भवति ॠदन्तस्य लिङ्गस्यासम्भवात्। स्त्रश्च प्रथन इत्यत्र निर्देशबलादपि शक्यते उत्वभावोऽस्यावमातुमृकारेण लिङ्गस्य विशेषणाद्विशेषणेन विशेष्यस्य च तदन्तविधिरिति तदन्तविधौ लब्धेऽन्तग्रहणं विस्पष्टार्थम्।

**आ सौ सि लोपश्च २।१।६०[2]**

स्वरूपेणार्थेनार्थवत आ इत्येतस्मात् सञ्जातस्य सेरादिलोप इत्यादिना लोपः। ऋदन्तादित्यनुवर्तमानमर्थवशात्षष्ठ्यन्तं विज्ञायत इत्याह— ऋदन्तस्य लिङ्गस्य। इह सौ सिकारे पर इत्येतेन साविति प्रथमैकवचनस्येह ग्रहणं न तु सप्तमीबहुवचनस्येति दर्शयति। एतच्च सिलोपवचनाल्लभ्यते। ननु यथा अस्तेस्सावित्यत्र सावितिनिर्देशे अभिव्यतिसे इति प्रयोगदर्शनात् परस्मैपदात्मनेपदसंज्ञकं सकारादिप्रत्ययद्वयं गृह्यते तथेहापि सामान्येन सकारादिविभक्तिः कस्मान्न परिगृह्यते, ततश्च सप्तमीबहुवचनेऽप्यात्वं प्राप्नोति। अस्त्येतत्। प्राथम्यात्तु प्रथमैकवचनमेव गृह्यते तत्र च कृत्वार्थं वचनं प्रत्ययान्तरे नावगाह्यत एव। आस्तेस्सावित्यत्र तर्हि परस्मैपदसकारस्य ग्रहणं प्राप्नोति, प्राथम्यात्, नत्वात्मनेपदसकारस्य। सन्ध्यक्षरे चेत्यतश्चानुवृत्त्या आत्मनेपदसकारेऽपि परे लोपोऽस्तेरन्त्यस्य विज्ञास्यत इत्यदोषः। अन्त्यस्येति। वर्णान्त्यस्य विधिरिति वचनार्थ इह विशेषविधिः सामान्यविधेर्बाधको दृष्टः,

---

१. २।१।६३ (दु० वृ०)

२. २।१।६४ (दु० वृ०)

यथा—दधि ब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्यायेति तक्रदानं दधिदानस्य। एवं चैतत् सूत्रानारम्भे सति ऋदन्तस्य लिङ्गस्य घुटि च धातोस्तृशब्दस्यारिति योगाभ्यामरारौ सामान्येन प्राप्तौ, तयोरेव प्राप्तयोरिदमात्वमारभ्यमाणं तयोर्बाधकं सम्पद्यत इत्यनेनाभिप्रायेणाह—यस्मिन्प्राप्त इत्यादि। पितेति। अत्रारादेशो बाध्यते। कर्त्रेत्यत्रापि आरादेशः। अथ सेर्डादेश एव कस्मान्न क्रियते। एवञ्च कृतेऽन्त्यस्वरादिलोप – उपजातेऽपि पितेत्यादि सर्वं सिध्यत्येवेति सेर्डा इति सूत्रं कस्मान्न क्रियत इत्याह – सेर्डा इति न कृतमित्यादि। नन्वेवं सति कृते डानुबन्धे तद्धितप्रत्यये प्रत्यासत्तेर्विधीयमानोऽन्त्यस्वरादिलोपः कथमिहातद्धिते परे स्यात्, डानुबन्धकरणसामर्थ्याद् भविष्यति। श्रवणार्थोऽपि डकारस्स्यात्, यथा—जमन्ताड्ड इत्ययमिति चेत्, एवं हि सति स कर्त्रेत्येष निर्देशो विरुध्येत।

**अग्निवच्छन्दसि २।१।६१**[1]

अग्निवद् भवतीत्यस्यार्थं विवृण्वन्नाह—अग्नेः परस्येत्यादि। यदुक्तमिति शसोऽकार इत्यादिना पूर्वस्वरो नत्वञ्च। स्त्रियां नत्वं न भवतीति अस्त्रियामिति निषेधादिति भावः। स्वश्रूरित्यत्र पूर्वस्वर ऋकार एव भवति।

**अर्डौ २।१।६२**[2]

स्वरो रेफस्य विसर्जनीयो न भवति, स्वरूपभङ्गप्रसङ्गात्। ऋदन्तात् पूर्व इत्यत्र ऋकारमात्रमपेक्ष्यते इति। ननु कथमेतत्, यावता ऋदन्तादिति बहुव्रीहिरयं तत्र च लब्धोपसर्जनभावमकारग्रहणं च कथं पृथगपेक्षितुमिह शक्यते, उच्यते—न पूर्वकमृदन्तग्रहणं पूर्वत्रैव कृतकृत्यमिहापेक्षितुं शक्यम्, किं तर्हि तत्सदृशमनुमीय मन्यमानात्। तच्च कर्मधारयसमासाविष्टमिह व्याख्यायते। ऋच्चासावन्तः ऋदन्त इति, तेनान्तर्भूतमृकारमात्रमनेन व्याख्याक्रमेणोपेक्षितुं भवतीति लिङ्गसम्बन्धिन ऋकारस्यान्तर्भवतीत्याह—लिङ्गस्यान्त्यस्य ऋकार इति। यदि तु ऋदन्तादिति बहुव्रीहिरेष व्याख्यायेत ततो बहुव्रीहेरन्यपदार्थप्रधानत्वाल्लब्धप्रधानभावमृदन्तं सर्वमेव लिङ्गमनेकवर्णस्सर्वस्येति वचनादारादेशं प्रति स्थानित्वेन विज्ञायते। कर्तरि चेत्येतत्तु ज्ञापकं कर्तृविषयमेव सम्भाव्यते। उत्तरत्र च ज्ञापकाभावात् सर्वादेशत्वमरः केन वार्यत। ततश्च ऋकारमात्रमपेक्षते। तन्मात्रस्यैवारादेशः।

---

१. २।१।६५ (दु० वृ०)

२. २।१।६६ (दु० वृ०)

**घुटि च २।१।६३**[1]

अङि घुटोरित्यादि। अङि घुटोरित्येव योगे कर्तव्ये योगविभाग उत्तरत्र घुट एव अनुवृत्तिर्यथा स्यात्। ङिप्रत्ययस्य मा भूत् इत्येवमर्थः।

**धातोस्तृशब्दस्यार् २।१।६४**[2]

आरिति। स्वरूपभङ्गभयाद्विसर्गाभावः। तृ-शब्दस्येति तृन्तृचौ द्वावपि गृह्येते। विशेषाभावात्। अरो बाध इति पूर्वसूत्रेण प्राप्तस्य। यतेर्वृद्धिश्चेति ऋन्प्रत्यय इति। तत्र हि सुञ्यमोर्नृन्नित्यत ऋन्निति वर्तते। ननु ता इत्ययं शब्दः शब्दत्वं न व्यभिचरतीति तुरित्येव क्रियते किं शब्दग्रहणम्, वैचित्र्यार्थमिति। ननु क्रुशेः तृचि यद् रूपं तत्तस्य तृन्नन्तस्य घुट्यसम्बुद्धौ स्त्रियामीकारे च यथा स्यादिति अस्य विशेषस्य संशब्दनार्थं ग्रहणं स्यात् तत्कथं तद् वैचित्र्यार्थं भवेत्। तेन क्रोष्टा क्रोष्टारौ क्रोष्टारः, क्रोष्टारम् क्रोष्टारौ क्रोष्टॄन् इति क्रोष्टुशब्दस्य रूपाणि सिद्धानि भवन्ति। क्रोष्ट्रीति। गौरादित्वादीकारः। अत्रोच्यते—घुटि स्त्रियां च क्रोष्टुशब्दस्य एवोत्तरत्र प्रयोक्ष्यते। एवं च पाश्चात्यानि रूपाणि क्रोष्टुशब्दस्यैव भविष्यन्ति। अन्यत्र शसादौ क्रुशिः तृजन्तस्तुन्नन्तस्तु प्रयुज्यते। क्रोष्टॄन्, क्रोष्टून्। क्रोष्टा, क्रोष्टुना। क्रुशेर्वुन्-तृचौ इति तृच्। सितनिगमिसनिमध्यविधक्रुशेभ्यः तुन्निति तुन्-प्रत्ययश्च। एवञ्चेदं शब्दग्रहणं वैचित्र्यार्थम्।

**स्वस्रादीनां च २।१।६५**[3]

इह आदिग्रहणेन नप्त्रादयस्सप्त वृत्तावुपदर्शिताः परिगृह्यन्ते। तत्रैषां सङ्ग्रहार्थमिदमादिग्रहणं न कर्तव्यम्। यतोऽमी नप्त्रादयः पञ्चपाद्यां नप्तृ-नेष्टृ-त्वष्टृ-क्षतृ-होतृ-पोतृ-मातृ-भ्रातृ-जामातृ-पितृ-दुहितृ-इत्येतत् सूत्रे तृनि तृचि वा निपातिताः। तथा हि नप्तेति नमेस्तृचि मकारस्य पकारादेशो निपात्यते। नेष्टेति, नयतेस्तृचि षकारागमो गुणश्च। त्वष्टेति, त्विषेः तृचि उपधाया अकारादेश इडभावश्च। क्षत्तेति, क्षदेस्तृचि इडभावः। होतृ-पोतृ इत्येतेऽपि रूपे जुहोतिपुनात्योस्तृचि। प्रशास्तीति, शासेः प्र-पूर्वस्य तृन्तृचौ शन्सिक्षदादिभ्यः संज्ञायां चानिटाविति तृचि रूपम्। तदनेन प्रकारेण नप्त्रादयः

१. २।१।६७ (दु० वृ०)
२. २।१।६८ (दु० वृ)
३. २।१।६९ (दु० वृ०)

तृ-प्रत्ययान्ताः । ततः तेषामृकारस्य पूर्वसूत्रेण सिद्ध आरादेशः, तदपार्थकमेतत् सङ्ग्रहार्थमादिग्रहणम् । एवं स्वसृ-शब्दार्थः सस्वरिति सूत्रं क्रियतामित्याशयेन पूर्वपक्षयति । ननु नप्त्रादयः इत्यादि । सत्यमित्यादिना परिहरति । सत्यम्, सिद्धो नप्त्रादीनामारादेशः, सिद्धे त्वारम्भः नियमार्थ इति नियमस्वरूपं प्रदर्शयितुमाह— उणादिप्रत्ययान्तानामित्यादि । उणादिप्रत्यये तृन्तृचावत्र विवक्षितौ तेन तदन्तानां शब्दानां पूर्वसूत्रेणारादेशः प्रवर्तते, तदा नप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तृ-इत्येतेषामेव सप्तानां नान्येषाम्, तेन क्व पुनर्भवतीत्याह— तेनेत्यादि । पितरौ पितरः । भवत्ययं पितृशब्दः तृ-प्रत्ययान्तः, नप्त्रादिसूत्रे पा रक्षण इत्यस्य तृचि एत्वे च निपातनात् । तेनास्यारादेशः प्राप्तोऽपि नियमान्न भवति ।

**आ च न सम्बुद्धौ २।१।६६**[1]

आरादेशो न भवति । पूर्वेतरेण सूत्रेण प्राप्तः । आत्वं चेति न भवति, इत्यनुषज्यते । सावौ सिलोपश्चेत्यनेन प्राप्तः ।

**ह्रस्वनदीश्रद्धाभ्यः सिर्लोपम् २।१।६७**[2]

अर्थवशादिति । प्रयोजनसामर्थ्यादिति । अर्थः प्रयोजनम् तु सम्बुद्धिग्रहणेन प्रथमान्तेन सेस्सामान्येनाधिकरण्येन सम्बन्धः ह्रस्वान्तादि ह्रस्वेन लिङ्गस्य विशेषणाद् विशेषेण च विशेष्यस्य तदन्तविधिविज्ञानादेवमुक्तम् । हे वृक्ष इत्यादि सर्वत्रामन्त्रणे चेति सिः सम्बुद्धौ ह्रस्व इति नदीवधूशब्दयोः ह्रस्वः । सम्बुद्धौ चेति गङ्गाशब्दस्येत्वम् । वृक्ष इति । प्रथमा विभक्तिरित्यनेनात्र सि-प्रत्ययो नायमामन्त्रिते सिरिति सम्बुद्धि-संज्ञो न भवति । नदीग्रहणमुत्तरार्थमिति । ननु हे नदि इत्यादौ नद्याः परस्य सम्बुद्धेः लोपो यथा स्यादिति । इहार्थतायां सम्भवन्त्यां कथमुत्तरार्थत्वं युज्यत इत्याह— हे नदि इत्यादावित्यादि । हे नदि, हे वधु इत्यत्र नदीवधू-शब्दयोः सम्बुद्धौ ह्रस्व इति कृते ह्रस्वे ह्रस्वग्रहणादेव सिद्धः सम्बुद्धिलोप इति नदीग्रहणमिहापार्थकं सदुत्तरार्थं जायते । सन्निपातपरिभाषयेत्यादि । पराभिप्रायमाशङ्क्यते । अथैवेहार्थत्ववादिन्[3] मन्यसे, सम्बुद्धिनिमित्तो यो ह्रस्वः सन्निपातपरिभाषायां

---

१. २।१।७० (दु० वृ०)
२. २।१।७१ (दु०वृ०)
३. अथैवेहार्थवत्वात् (मं०)

सत्यां सम्बुद्धेर्विघातं कुर्यादित्येवं च हे नदीत्यादौ ह्रस्वग्रहणात् कथं सम्बुद्धिलोपो भवेदिति, तन्न, कथमित्याह — वर्णग्रहण इत्यादि। ह्रस्वोऽत्र वर्णः सम्बुद्धिलोपं प्रति हेतुत्वेनोपपत्तेः[1] । वर्णग्रहणे च सम्बुद्धिविघातं प्रति ह्रस्वो निमित्तमेव । सिद्धो हे नदीत्यादौ ह्रस्वग्रहणाल्लोपः सम्बुद्धेरिति । नदीग्रहणमुत्तरार्थम् । इह करणे तस्य किं प्रयोजनमिति चेत्, सन्निपातपरिभाषामपेक्षमाणानां मन्दमतीनां यत्प्रतिपत्तिगौरवमापतति तस्य परिहारः । अत्र श्रद्धायाः सम्बुद्धिलोपे किमुदाहरणम् ? हे श्रद्धेत्यादि । नन्वत्र लोपस्वरादेशपरिभाषया सम्बुद्धिलोपात्पूर्वमेत्वे कृते लिङ्गस्य श्रद्धासंज्ञकात्[2] कथं सम्बुद्धिलोपः प्राप्नुयादित्याह—हे श्रद्धेत्यादाविति । यदि पूर्वमेत्वे कृते सम्बुद्धिलोपो न स्यात् श्रद्धाग्रहणं प्रयोजनाभावादनर्थकं स्यात् । अतः श्रद्धाग्रहणसामर्थ्यात् एत्वेऽपि कृते भूतपूर्वकं[3] श्रद्धासंज्ञकत्वमाश्रित्य हे श्रद्धेत्यादौ सम्बुद्धिलोपो भविष्यति । अथ मन्यसे श्रद्धाग्रहणस्यास्त्येव प्रयोजनमुत्तरार्थत्वं नाम, तदेतस्मिन्प्रयोजने सति कथं श्रद्धाग्रहणसामर्थ्यादिति हेतूपन्यासो युक्तः स्यादित्याशङ्क्य परिहर्तुमाह--उत्तरार्थं श्रद्धाग्रहणं स्यादिति चेत्, तन्नेति कथमित्याह--असति हीत्यादि । सूत्रोपात्तस्य पदस्याविद्यमाने प्रयोजने युज्यते उत्तरार्थत्वम्, यथा नदीग्रहणस्य । ननु[4] विद्यमाने स्वसूत्र एव कृतार्थत्वात्कथं तदुत्तरार्थं भवेत्,[5] अस्ति तु प्रयोजनं श्रद्धाग्रहणस्य, हे श्रद्धे इत्यादीनां साधुत्वं यथा स्यादिति, अन्यथा ह्येत्वे नित्यत्वादन्तरङ्गत्वात् स्वरादेशत्वाच्च कृते सति कथं सम्बुद्धिलोपस्स्यात् । तस्मात् स्थितमेतत् हे श्रद्धेत्यादौ श्रद्धाग्रहणसामर्थ्यात् सम्बुद्धिसिलोपो भवतीति। ननु सिप्रत्ययः चेत् सम्बुद्धिग्रहणेनेह विशेष्यते तर्हि सम्बुद्धिग्रहणमेवानुवृत्य सम्बुद्धेर्लोपो विज्ञास्यते तर्त्किं सिग्रहणेनेत्याह--सम्बुद्धिग्रहणेनेत्यादि । पूर्वं भूतो भूतपूर्वः ताभ्यां भूतपूर्वाभ्यां परस्य सेर्लोपः यथा स्यादिति सिग्रहणं क्रियते । तेन हे अग्ने हे वायो इत्यादौ अग्निवायुशब्दयोः स्वरादेशत्वात् सम्बुद्धौ चेत्येत्वे आत्वे च कृतेऽपि भूतपूर्वौ इदुतौ ह्रस्वौ आश्रित्य सिग्रहणात् सम्बुद्धिलोपः सिद्धो भवति । ननु ह्रस्वग्रहणादेवासौ सेत्स्यति, अन्यथा तस्य किं फलं स्यात् । उत्तरत्रानुवृत्तिफलमिति चेत्, कथमुत्तरार्थत्वे

---

१. हेतुत्वेनापत्तेः (वा० + भं०)

२. संज्ञकत्वात् (भं०)

३. पूर्वम् (भं०)

४. न तु (वा०)

५. न्यूनपाठः (भं०)

सति हे वृक्ष इत्यादौ सम्बुद्धिलोपो भवेत् । इहाद्ग्रहणं करिष्यते ततो भविष्यतीति चेत्, तर्ह्युत्तरत्र ह्रस्वग्रहणं कर्तव्यम् । इहाप्याद्ग्रहणमिति तद् गुरुः भवति, तस्मादिहैव लाघवाय ह्रस्वग्रहणं कर्तव्यम् । तथा च तत एव सम्बुद्धिलोपः, नैतत्, हे वृक्ष इत्यादौ हि तस्य ह्रस्वग्रहणस्य सफलत्वात् । उत्तरत्रापि सप्रयोजनत्वात् । हे अग्ने इत्यादौ सम्बुद्धिलोपविधानं प्रति सामर्थ्यं नास्तीति तदर्थं सम्बुद्धिग्रहणेऽप्यनुवर्तमाने सिग्रहणं क्रियते ।

**आमि च नुः २।१।६८**[1]

ह्रस्वनदीश्रद्धाभ्यः परस्मिन्नामीत्यनेन तृतीयादौ तु परादिरिति वचनादामः आगमित्वं दर्शयति । नद्यौ इत्यत्र नद्या ऐ आसासाम् इति कर्तव्ये आमादेशे तत्रापि नुरागमः कस्मान्न भवतीत्याह—लक्षणप्रतिपदोक्तयोरित्यादि । लक्षणप्रतिपदोक्तपरिभाषया लक्षणानुसन्धानद्वारेण यदाम् सञ्जातमत्र न भवतीत्यर्थः ।

**त्रेस्त्रयश्च २।१।६९**[2]

त्रिरिति त्रिशब्दस्य बह्वर्थवृत्तेरपि शब्दमात्रविवक्षायां तात्पर्यात् एकत्वेन निर्देशः एवमुत्तरत्रापि परमत्रयाणामिति कर्मधारयः । प्रियत्रीणामिति कर्मधारयः । प्रियत्रीणामित्यत्र बहुव्रीहेरन्यपदार्थप्राधान्यात् त्रिशब्दस्याप्रधानत्वात् त्रयादेशाभावः । एवमुत्तरेऽपि विधयः प्राधान्ये सति न भवन्ति इति मन्तव्यम् । सार्थकस्य त्रिशब्दस्य ग्रहणमिति । अर्थवद्ग्रहणपरिभाषयेति भावः ।

**संख्यायाः ष्णान्तायाः २।१।७०**[3]

संख्यानं संख्या । आतश्चोपसर्ग इत्याङ्-प्रत्ययः, आ लोपः, स्त्रियामादाप्, षण्णामिति । षष्, आम्, अनेन नुरागमः । हषशच्छेति डत्वम्, षडो णो नेति डस्य णत्वं, तवर्गश्चटेति नस्य णः, पञ्चानां दशानामिति नान्तस्य चोपधाया इति दीर्घः । लिङ्गान्तनकारलोपः । विप्रुषां यज्वनामिति । प्रुष्प्लुष् स्नेहनसेचनपूरणेषु वि-पूर्वः, विप्रुष्णातीति क्विप् । इष्टवानिति । यजेः ङ्वनिप् सुयजोरिति ङ्वनिप् । ननु ष्णाभ्यां (लिङ्गसंख्याभ्यां[4]) विशेषयिष्यामः ।

---

१. २।१।७२ (दु० वृ०)
२. २।१।७३ (दु० वृ०)
३. २।१।७५ (दु० वृ०)
४. संख्याम् (भं०)

विशेषणेन विशेष्यस्य च तदन्तविधिरित्यन्तग्रहणमन्तरेणापि संख्यायाः ष्णान्तत्वं लभ्यत इति किमन्तग्रहणेन, अष्टानामिति । अष्टनस्सर्वास्विति परत्वादष्टन आत्वे कृतेऽपि भूतपूर्वनान्तत्वमाश्रित्य नुरागमो यथा स्यादित्येतदर्थमन्तग्रहणमिति चेत्, न । आगमादेशयोः आगमविधिर्बलवानित्यागमविधेर्बलवत्वादात्वपूर्वमेवात्र नुरागमो विज्ञास्यते, एवं तर्हि अन्तग्रहणं क्वचिदन्तत्वव्यभिचारार्थं, तेनोत्तरत्राग्निसंज्ञानिषेधः सुसखिना सुसखये इत्यत्र सख्यन्तस्य न भवति । यद्येवम्, अनयैव युक्त्या नरपतिना नरपतये इत्यत्र पत्युरग्निसंज्ञानिषेधो न भविष्यतीति पतिरसमास इत्यत्र व्यक्तीकरणात् समासग्रहणं न कर्तव्यम् । सत्यम् । अस्यैव तदन्तव्यभिचारस्य व्यक्तीकरणार्थं क्रियते तत् ।

**कतेश्च जस्शसोर्लुक् २।१।७१**[1]

का संख्यापरिमाणमेषामिति । किं-शब्दात् तमादित्वाड्डति-प्रत्ययः । षट् तिष्ठन्तीत्यादि । हशषछान्त इति डत्वम्, वा विराम इति टः । अथ पञ्चेत्यादौ प्रकृत्याश्रयत्वेनान्तरङ्गत्वात् घुटि चासम्बुद्धाविति लुक्पूर्वं दीर्घत्वं कस्मान्न भवति, न भवति, तस्माल्लुक् शब्दोच्चारणार्थः । तदुच्चारणस्य हि प्रयोजनं लुग्लोपे न प्रत्ययकृतमिति प्रत्ययलक्षणप्रतिषेधः यदि लुकः पूर्वं दीर्घत्वं भवेल्लुग्ग्रहणेन प्रत्ययनिषेधार्थेन किं कृतं स्यात् । लोपग्रहणमेव कुर्यात्, तस्माल्लुग्ग्रहणादवसितमन्तरङ्गमपि प्रकृतिकार्यं बहिरङ्गो लुग्बाधत इति शतानीत्यत्र घुट्स्वराद् घुटि नुरिति न्वागमे कृते जस्शसोरन्यतरस्य लुक् न भवति, नान्तायाः लाक्षणिकत्वात् । घुण्निमित्तता वा नान्तता सन्निपातपरिभाषया कथं घुटो विघातं स्यात् ।

**नियो ङि राम् २।१।७२**[2]

क्विबन्तादिति । क्विपं[3] विना नियो धातोः ङि-प्रत्ययसम्भवादिति भावः, सेनान्याम्, ग्रामण्यामिति सेनां नयति, ग्रामं नयतीति क्विप् । सेनान्यामित्यत्र कृते णत्वे विषये सावकाशः आमादेशो ग्रामण्यामित्यत्र कृते णत्वे न प्राप्नोतीत्याशङ्क्याह—कृते णत्वे इत्यादि गतार्थम् ।

भट्टोग्रभूतिकृते शिष्यहितान्यासे शिष्यालोकाभिधाने नामप्रकरणे प्रथमः पादः ।

---

१. २।१।७६ (दु० वृ०)
२. २।१।७७ (दु० वृ०)
३. क्विबन्तम् (भं०)

## द्वितीयः पादः

**न सखिष्टादावग्निः २।२।१**

इहायं सखि-शब्दः प्रयोगस्थः सखिशब्दस्यानुकरणत्वेन निर्दिश्यते अतएवानुकरणे स्वरूपविनाशप्रसङ्गं परिहर्तुमग्निसंज्ञा प्राप्तेर्वा[1] प्रदर्शयितुं सख्युश्चेत्यन्नादेशो न कृतः[2]। टा आदिर्यस्येत्यादि । एतेन टादाविति बहुव्रीहिरयं न तु षष्ठीतत्पुरुष इति दर्शयति। षष्ठीतत्पुरुषे हि शसो निमित्तत्वं यथा स्यात्, तथा च शस्-ग्रहणमेव कुर्यात् । आदिग्रहणाच्च नायं कर्मधारयः । नाभाव एत्वं च न भवतीति टा नेति नाभावः प्राप्तः ङे चेत्यनेनैत्वम्, सखीनित्यत्र अग्निसंज्ञाया अनिषेधाच्छसोऽकार इत्यादिना अग्निसंज्ञानिमित्तः पूर्वो स्वरो नत्वं च भवत्येव । इह सुसखिना सुसखय इति सख्यन्तस्यापि तदन्तविधिविज्ञानादग्निसंज्ञानिषेधः कस्मान्न भवतीत्याह—उत्तरसूत्रादित्यादि । ननु पूर्वमन्तग्रहणात् तदन्तत्व-व्यभिचारज्ञापनार्थात् सख्यन्तस्याग्निसंज्ञानिषेधो न भवतीति[3] किमर्थमसमास ग्रहणमिहाभिसम्बध्यते । अस्त्येतत् । ज्ञापकद्वारेण तु य एवं प्रतिपत्तुमसमर्थाः तान्प्रतियुक्तोऽयमसमासग्रहणस्याभिसम्बन्धः ।

**पतिरसमासे २।२।२**

समस्यन्तेऽस्मिन्पदानीति । व्यञ्जनान्ताच्चेत्यधिकरणे घञ् । पत्या पत्ये इति पूर्ववन्नाभावः एत्वं च प्राप्तं न भवति । नरपतिना नरपतये इति नराणां पतिरिति षष्ठीसमासः । येन विधिस्तदन्तस्येति वचनात् समासविषये निषेधः प्राप्नोतीत्यसमास इत्युच्यते । पतिमिति । अग्नेरमोऽकार इत्यमोऽकारलोपः क्लीबेषु पतिते पतावित्यादयस्तु षष्ठ[4]प्रयोगाः नञानिर्दिष्टस्यानित्यत्वात् सिद्धसाधुत्वमित्याहुः[5] ।

**स्त्री नदीवत् २।२।३**

नदीव[6] नदीवदिति । नदीशब्दात् प्रथमान्तात् वतिप्रत्ययः । स्त्रीशब्दस्य

---

१. प्राप्तेश्च विषयम् (भं०)

२. विहितः (भं०)

३. भविष्यतीति (भं०)

४. प्रयोगाः नञा (भं०)

५. साधुत्वार्थमित्याहुः (पाठभेदः भं०)

६. न्यूनपाठः (वा०,

प्रथमान्तत्वात् उपमाने च य शंसय स उपमेयत्वाद् व्यावर्तते। (उपमाने[1] चेति भिन्नविभक्तिकत्वे सत्युपमानोपमेयभावमसम्भवादिति भावः।) स्त्रीशब्दो नदीवद्भवतीति। एतेन स्त्रीति स्वरूपस्य ग्रहणं न तु स्त्र्यर्थवृत्तेः शब्दस्येति दर्शयति। एतच्चाशिषि च परस्माथिति स्त्र्यर्थवृत्तेराशीश्शब्दात् परस्याः सप्तम्याः नदीकार्याकरणाल्लभ्यते स्त्रीप्रत्ययान्तोऽपि शब्दः न गृह्यते ह्रस्व-नदीश्रद्धाभ्य इति नदीत्वात् सिद्धे सम्बुद्धिलोपे पृथक् श्रद्धाग्रहणात् नदीवद्-भवतीति विधिमुपदर्शयन्निषेधोऽत्र नाभिसम्बध्यत इति दर्शयति। तच्च स्त्रियामिति नदीकार्यस्य दर्शनात् नदीसंज्ञाविधावस्त्रीत्येवमकरणाच्च लभ्यते स्त्रीणामित्यादि नदीवद्भावादामि च नुरिति नुः। ङवतां च नद्या ऐ आसा-सामित्यैत्वादय आदेशाः स्त्री चेति धातुवद्भावादियादेशः। ननु सिद्धा स्त्री-शब्दस्य नदीसंज्ञा ततश्चोत्तरत्र नदीवदिति क्रियताम् अपार्थकस्त्वस्य योगस्या-रम्भ इत्याह—नदीसंज्ञायां सिद्धायामित्यादि। कालभावयोरित्यनेनैषा भावे सत्तायां सप्तमी स्त्र्याख्याावियुवौ वामि ह्रस्वश्च ङवतीति वक्ष्यमाणं यद्योग-द्वयं तेन य आमि ङवति च नदीवद्भावस्य विकल्पः प्राप्तः तस्य प्राप्तस्य[2] निवृत्तिर्यथा स्यादित्येवमर्थः। सिद्धायामपि स्त्रीशब्दस्य नदीसंज्ञायामयं योग आरभ्यते तेन नित्यमेव स्त्री-शब्दो नदीवद् भवति। अन्ये त्वियुस्थानीयानां मध्ये स्त्रीशब्द एव नदीकार्यभाग् यथा स्यात्। अन्ये श्री-भ्रू-प्रभृतयो मा भूवन्निति नियमार्थमिदं वचनमाचक्षते तथा च हे श्रीः हे भ्रूरित्यादौ नदी-संज्ञानिमित्तौ ह्रस्वसम्बुद्धिलोपौ न भवतः। तदेतन्न चतुरस्रम्। यतस्तुल्य-जातीयविषयव्यावृत्तिकारित्वान्नियमानामियुस्थानीयस्यैव श्रीत्यादेर्व्यावृत्ति-कारी स्यान्न तु उ-स्थानीयस्य भ्रू-प्रभृतेरपि। ततश्च नियमपक्षे हे भ्रूरित्यादि न सिध्येत्। ह्रस्वसम्बुद्धिलोपयोः प्रसङ्गादिति न नियमपक्षो ज्यायान्। असमास इति सम्बध्यते वत्करणाल्लिङ्गात् तेन परमस्त्रीणामित्याद्यपि भवति।

**स्त्र्याख्याावियुवौ वामि २।२।४**

स्त्र्याख्याावित्यत्र यद्वाच्यं तन्नदीसंज्ञासूत्रम् एवोक्तम्। स्त्र्याख्याावित्य-स्यार्थं स्पष्टीकर्तुमाह[3]—स्त्रीवाचकाविति। स्त्रिया[4] अभिधायकावित्यर्थः।

---

१. न्यूनपाठः (भं०)

२. न्यूनपाठः (भं०)

३. व्यक्तो (भं०)

४. स्त्रियो (भं०)

कौ पुनस्तौ स्त्रीवाचकावित्याह—इयुवाविति[1]। एवमीकारोकारान्तयोः शब्दयोः स्त्रीवृत्तित्वेन प्रसिद्धत्वात् कथमियुवोः नाम स्त्रीवाचकत्वे स्यादित्याह—ययो इयुव्-इत्येतावादेशौ दृष्टाविति। नन्वियुवादेशावीदूतोः दृश्येते। न च तावपि स्त्र्याख्यौ भवतः। एवं तर्हि स्त्र्याख्याविति विशेषणोपादानसामर्थ्यात् ययोरियुवावादेशौ दृष्टावीदूतोस्तावन्तौ ययोश्शब्दयोस्तयोरिदं स्त्र्याख्याविति विशेषणं विज्ञायते। एवं चेकारोकारान्तौ शब्दौ स्त्र्याख्यौ नदीवद्भवत इत्यर्थो जायते। आमि परत इत्येतेन वामीति[2] संहितासाम्येऽप्यामो ग्रहणं न तु अम इति दर्शयति। एतच्चाविच्छिन्नाचार्योपदेशाल्लभ्यते। अप्राप्तविकल्पश्चायम्। इयुव्-स्थानीयस्य स्त्र्याख्यस्य नदीसंज्ञा नेष्यत इति पूर्वं निषेधस्याभिहितत्वात् श्रीणामित्यादि श्री-शब्दो क्विब्वचिप्रच्छिश्रिद्रुश्रुप्रुवां दीर्घो सम्प्रसारणं चेति श्रयतेः क्विपि दीर्घत्वे च कृते साध्यते। तेनास्य क्विबन्तस्य सतो धातुत्वादीदूतोरियुवोः स्वरे इतीयादेशो दृश्यते। भ्रू-शब्दस्यापि भ्रू-धातुवदिति धातुवद्भावादुवादेशोऽत्र दृश्यते। तेन श्री-भ्रू-शब्दयोः दृष्टे इयुवादेशयोर्न नदीवद्भावः। नदीवद्भावपक्षे नुरागम इति आमि च नुरित्यनेन तत्र ह्रस्वनदीश्रद्धाभ्य इत्यतः नदीग्रहणमभिसम्बध्यते। ननु स्त्रियामिति क्रियताम्, एवमपि कृते सति स्त्र्यर्थवृत्तित्वं लभ्यत एवेति किमाख्याग्रहणेनेत्याह—स्त्रियामिति कर्तव्य इत्यादि। नित्यं यः स्त्रीविषयः पदान्तरसन्निधिमन्तरेण तस्यायं नदीवद्भावो यथा स्यादित्याख्याग्रहणं क्रियते। तेन क्व न भवतीत्याह—तेनेत्यादि। यवान् क्रीणन्ति, कटे प्रवन्त इति यव-कट-पूर्वाभ्यां डुक्रीञ् द्रव्यविनिमये प्रु गतावित्येताभ्यां क्विप्, क्विब्वचिप्रच्छीति इत्यादिना प्रु इत्यस्य दीर्घः। नेमौ यवक्री-कटप्रू-शब्दौ नित्यस्त्रीविषयौ क्रियाशब्दत्वेन पुंस्यपि वर्तमानत्वात्। तेनात्रातिदेशाभावात्[3] आगमाभावः। अन्ये तु बहिरङ्गमत्र स्त्रीवृत्तित्वमिति मन्यमानाः चिन्त्यप्रयोजनमाख्याग्रहणमित्याचक्षते[4]। इयुवाविति किमिति ईदूताविति कर्तव्ये इयुवाविति कुर्वतः कोऽभिप्राय इति मन्यमानस्यैष प्रश्नः। यत्रेदूतौ[5] स्तः नत्वियुवौ तत्रातिदेशो मा भूदिति ईदूताविति न कृतमित्याकूतेन प्रत्युदाहरन्ति। शस्त्रीणाम्, जम्बूनामिति। अत्रेयुवौ

---

१. न्यूनपाठः (भं०)
२. वाचीति (वा०)
३. अतिदेशत्वात् (भं०)
४. ग्रहणमित्याहुः (भं०)
५. यत्र तु ईदूतौ (भं०)

न स्तः तयोर्विधावाधातोरघुट्स्वर इत्यतो धातुग्रहणानुवृत्तेः शस्त्री-जम्बू-शब्दयोश्चासाधुत्वात् ।

**ह्रस्वश्च ङवति २।२।५**

विद्यते यस्येति । तदस्यास्तीति वन्तुः । अग्निग्रहणमिह मण्डूकप्लुतिन्यायेनानुवर्तत इति । नन्वियुवावत्र सम्बध्येते ततश्च तयोः सम्बन्धात् तत्स्थान्यपेक्षया ह्रस्वेकारोकारात्मक एव ग्रहीष्यत इति किमग्नि-ग्रहणानुवृत्त्या, नैतत्, नदीवद्भावविधाने[1] प्रत्युपक्षीणयोः इयुवोर्ह्रस्वत्वं प्रत्ययविशेषकत्वात् । स्त्रीवृत्तिः ह्रस्वान्तोऽग्निसंज्ञकश्चेति वृत्तिशब्दं प्रदर्शयन्निवृत्तं ह्रस्वविशेषणं स्त्र्याख्यावित्यत्राख्याग्रहणमिति दर्शयति । तन्निवृत्तेस्तु फलमिष्वै इषवे, अशन्यै अशनये, पट्वै पट्वे, स्त्रियै स्त्रिये इत्यादावपि नदीवद्भावस्य विकल्पेन प्रवृत्तिः कथं च न स्यात् । इषु अशनि प्रभृतीनां द्विलिङ्गत्वात् पट्वादीनां च गुणवचनत्वे सति शुक्लादिशब्दात् त्रिलिङ्गत्वात् पदान्तरद्योत्यत्वात् । स्त्रीत्वस्यायमपि पूर्ववदप्राप्त एव विकल्पो ह्रस्वश्चेति तु च शब्दोऽर्थापिते स्त्र्याख्यावित्यादिवाक्ये आख्याग्रहणमनिवृत्तमेव । बुद्ध्यै इत्यादिनदीवद्भावात् नद्या ऐ आसासामित्यैत्वादयः बुद्धये इत्यादि ङेचेत्यादिनैत्वादयः अग्नये अतिदेशस्याप्रवृत्तावैत्वाभावः । एवं मात्रे इत्यत्रापि ।

**नपुंसकात्स्यमोर्लोपेऽपि न च तदुक्तम् २।२।६**

उक्तमिति । वचेरुच्यते स्मेति । निष्ठेति क्तः । स्वपिवचीति सम्प्रसारणम् । चवर्गस्य किः । तयोरुक्तं तदुक्तमिति सप्तमीसमासः । नपुंसकलिङ्गादित्येतेन नपुंसकादिति नेदं स्वरूपस्य ग्रहणमिति दर्शयति । एतच्च । न च तदुक्तमिति निषेधारम्भादवगम्यते । अथ स्यमोस्सतोर्यत्कार्यमुच्यते तल्लोपे कृते सत्यसतोस्तयोः[2] कथं प्राप्नुयादित्याह—प्रत्ययलोप इत्यादिना प्रत्ययलक्षणं प्रत्ययनिमित्तमित्यर्थः । प्रत्ययलोप-परिभाषायाश्चास्तित्वम् । अतएव निषेधारम्भादवसीयते । विग्रह इति विशेषेण गृह्यते ज्ञायते समासस्यार्थोऽनेन इति विग्रहो वाक्यमुच्यते । तत्र सख्युरुश्चेत्यनादेशः प्राप्त इति । सि-निमित्तक इति शेषः । सख्युश्चेत्यत्र हि सूत्रे तु उशनस्पुरुदंसोऽनेहसामित्यतः सावनन्त इति वर्तते । अथामो लोपे किं प्राप्तम् ? न किञ्चित्, घुटित्वै इत्येतद्धि न सम्भवत्यमो नपुंसकविषये घुट्त्वाभावात् । तदभावस्तु जस्शसोः नपुंसक इति नियमात् । नन्वित्यादि ।

१. ग्रहणम् (वा०)

२. सति तयोः (भं०)

इत्यादिना परिहरति । प्रधाने कार्यसम्प्रत्यय इति । यदीदं वचनं नित्यं स्याद् द्युसखि-शब्दयोः बहुव्रीहिसमासान्तर्गतयोरप्राधान्यात् स्यमाश्रयस्य कार्यस्यानादेशादेरप्राप्तिः । न चेदं नित्यम्, अन्यथा प्रियं दधि यस्य सः प्रियदधिः तेन प्रियदध्ना प्रियदध्ने इत्यादौ दधिशब्दस्याप्राधान्यादस्थ्यादिसूत्रेणान्नादेशो न स्यात् तदेव प्रधाने कार्यसम्प्रत्यय (इत्यस्यानित्यत्वादप्रधानत्वात् तयोरपि द्युसखिशब्दयोः स्यमाश्रयं कार्यं प्राप्नोत्येवेति[1]) तत्र च तदुक्तवचनान्निषिध्यते । यद्येवं हे त्रपो इत्यत्र सम्बुद्धौ लुप्तायां तन्निमित्तं सम्बुद्धौ चेत्योत्वं न प्राप्नोति । न चात्र ह्रस्वनदीश्रद्धाभ्य इत्यादिना सम्बुद्धौ लुप्तायां प्रत्यय; लक्षणेनौत्वं भविष्यतीति शक्यते वक्तुम्, परत्वान्नपुंसकलक्षणस्यैव सि-लोपस्य प्रवृत्तेनापि लोपस्वरादेशपरिभाषया लोपात् पूर्वमोत्वं शक्यं विज्ञातुम्, नपुंसकविषये एतत् परिभाषाया प्रवृत्तौ सत्यां यत्तदित्यादावपि सि-लोपात् पूर्वं त्यदाद्यत्वप्रसङ्गात् । अत्रोच्यते नञानिर्दिष्टस्यानित्यत्वात् सम्बुद्धिलोपस्यौत्वस्य निषेधो न भविष्यति । नपुंसकात्स्यमोर्लुगिति कृते कथं स्यमाश्रयं कार्यप्रत्ययलक्षणेन प्रवर्तमानं सन्निवर्तयितुम् शक्यत इत्याह--लुग्लोप इत्यादि । नन्वसति न च तदुक्तग्रहणे नपुंसकादिति स्वरूपग्रहण कथमपाकीर्येत, निर्देशस्यार्थपरत्वादर्थग्रहणं विज्ञास्यते । प्रत्ययलोप-परिभाषायास्तर्ह्यस्तित्वं न ज्ञापितं स्यात् । लुग्लोपपरिभाषा एवास्यास्तित्वे ज्ञापिका भविष्यति ।

**अकारादसम्बुद्धौ मुश्च २।२।७**

इहोकारमुच्चारणार्थं कृत्वा यद्ययमकारस्य मुरादेश इति व्याख्यायेत कुण्डमित्यादौ अकारो दीर्घमित्यादिना दीर्घत्वमकारस्य प्राप्नोति न चाकारनिमित्तो मकारः कथमकारस्य दीर्घत्वं विदध्यादिति शक्यं वक्तुम्, घोषवतो वर्णस्य मकारस्याकारविघातं प्रति निमित्तत्वात् । तथा चोच्यते वर्णग्रहणे निमित्तमिति । तदेतस्य दीर्घत्वप्रवृत्तिलक्षणस्य दोषस्य परिहारार्थमागमपक्षोऽत्र व्याख्यायते समकारागमो भवतीति । एवं च दीर्घत्वं न सम्भवति मकारस्य विभक्तिसम्बन्धित्वादागमित्वं चार्थवशादवाप्तषष्ठीविभक्तेर्नपुंसकस्यैव, कुतः, नपुंसकग्रहणानुवृत्तेः । तच्च नपुंसकमकारेण विशेष्यते । अकारान्तस्य नपुंसकलिङ्गस्येति । एवं चाकारस्येति षष्ठीनिर्देशो न्याय्यः । तत् कथमकारादिति पञ्चमीनिर्देश इत्याह—अकारादिति षष्ठ्याः स्थाने पञ्चमीति । अय भावः, मुरित्युकारोऽत्रानुबन्धः कार्यार्थमासक्तः आगम उदनुबन्ध

---

१. न्यूनपाठः (वा०)

इतीमां परिभाषां समुत्थापयति, तदुपस्थानाच्च नपुंसकलिङ्गस्याकारान्तस्यान्त्यात् स्वरादकारात् परेण मुकारागमेन भवितव्यम्। एवं च परिभाषासामर्थ्यादकारविषये या पञ्चमी तयाऽत्र निर्देशः कृत इति षष्ठ्याः प्रसङ्गे पञ्चमीनिर्देशो न विरुध्यते। स्यमोः परयोरिति। अर्थवशात्स्यमोरिति सप्तमी एषा कालभावयोरित्यादिना। एवमुत्तरत्रेति उकार आगम उदनुबन्ध इत्यर्थ इत्यनुषज्यते। कुण्डं वनमिति कृते मुकारागमे स्यमो पूर्वेण लोपः। ननु लोपे प्राप्ते मुकारागम आरभ्यमाणः लोपं बाधते, न[1] बाधते। भिन्नविषयत्वात्। आगमे हि प्रकृतेः प्रत्ययस्य च लोप इति कोऽयं बाधप्रकारः। एवं च नायं च-शब्दः लोपस्यानुकर्षणार्थः, किं तर्हि, अकारान्तस्य नपुंसकलिङ्गस्याकारात्परो मुकारागम इति विशेषप्रतिपत्त्यर्थः। हे कुण्ड इति पूर्वेण सि-लोपः।

**अन्यादेस्तु तुः २।२।८**

तुरिति स्वरूपेणार्थेनार्थवत्वाद्विभक्तिः। एवमुत्तरत्र यथासम्भवं वाच्यम्। असम्बुद्धाविति निवृत्त्यर्थमिति तु शब्दस्यात्र सम्बुद्धिनिवृत्तिद्योतनफलत्वात्। अन्यादेर्गणस्येति। आगम उदनुबन्ध इति वचनादन्यादेरागमित्वादेवमुक्तम्।

**औरीम् २।२।९**

विशेषादिष्ट इत्यादि। अन्यादि विशेषणादिष्टः[2] कथितः प्रकृतं तु नपुंसकं प्रति सूत्रमभिसम्बध्यमानत्वात् नान्तरमन्यादिग्रहणमेवेति। एवकारस्यायमर्थः। आनन्तर्यादन्यादिग्रहणमेव नानुवर्तते! किं तर्हि नपुंसकादिति[3] वर्तते। तदन्तर्गतत्वेन तु यदन्यादिरनुवर्तते कामं तदनुवर्ततामिति। ईमिति। दीर्घनिर्देशो अनकारान्तार्थः। तथा चोदाहरन्ति पयसीति, औ इति रूपसामान्यं गृह्यते न तु प्रथमाद्विवचनमेव।

**जस्शसोः शिः २।२।१०**

कुण्डानीत्यादि। धुट्स्वराद् धुटि नुः घुटि चासम्बुद्धाविति दीर्घः। पयांसीत्यत्र सान्तमहतोरित्यादिना। गोमत इति। अनुषङ्गश्चाक्रुञ्चेरित्यनुषङ्गलोपः, जसा सहचरितस्य शस इति द्वितीया-बहुवचनस्य। शतशो ददाति। तमादि-

---

१. न्यूनपाठः (वा०)

२. विशेषादिष्टः (भं०)

३. नपुंसकग्रहणं च तदनुवर्तते (भं०)

त्वाच्छस्. अव्ययं चैतत् जस्शसोस्स्वरूपोलम्भे शि-भावो यथा अस्य स्यात्। अष्टौ कुलानीत्यत्र औ तस्माज्जस्शसोरित्यत्रात्वे कृते विकारावस्थायां मा भूदिति धुटः शिरिति न क्रियते (औत्[1] विधानसामर्थ्याच्छिभावो न भविष्यतीति नाशङ्कनीयम्) औत्वं तु स्त्रीपुंसयोश्चरितार्थमेव।

**धुट्स्वराद् घुटि नुः २।२।११**

इह धुट्स्वराभ्यां प्रकृतं नपुंसकं विशिष्यते, विशेषणेन च विशेष्यस्य तदन्तविधिविज्ञानाद् धुडन्तस्य स्वरान्तस्य च नपुंसकलिङ्गस्यागमेन भवितव्यम्। एवं च धुट्स्वरस्येति षष्ठीनिर्देशे न्याय्ये किमर्थः पञ्चमीनिर्देश इत्याह— पञ्चमीयं षष्ठ्याः स्थान इति आगम उदनुबन्ध इति वचनात् धुडन्तस्य धुटः पूर्वेणागमेन भवितव्यम्। स्वरान्तस्य च स्वरात् परेण, एवं च परिभाषासामर्थ्याद् यावेतौ पूर्वपरशब्दौ इहाक्षिप्तौ तदपेक्षयायं पञ्चमी-निर्देशः। एवं च कृत्वा सुवल्गीत्यादौ न भवति। नह्यत्र धुटः पूर्वमागमः क्रियमाणोऽन्त्यात् स्वरात् परः (कृतस्स्यात्[2] स्वरादन्त्यात् परो वा) क्रियमाणो धुटः पूर्वं कृतो भवति। यद्येवम्, उक्तेन न्यायेन गौराङ्गीत्यादावपि[3] न प्राप्नोति। धुट्सामान्यस्य विवक्षितत्वात् भविष्यति। तदा ह्येक एवात्रान्त्यो धुट् तेन ततः पूर्वमप्ययं भवन्नुरागमोऽन्त्यात् स्वरात् परः सङ्गतो भवति। सामान्यस्य चान्त्यत्वं वर्णव्यक्तिद्वारकं वेदितव्यम्। धुडन्तस्य तावदिति। तावच्छब्दः क्रमद्योतनार्थः। शकृन्ति पयांसीत्यादि। जस्शसोः शिः, अनेन नुरागमः, यशांसीति। सान्तमहतोरिति दीर्घः। अहानीत्यत्र तु घुटि चासम्बुद्धाविति दीर्घः। जस्सश्यादेशमनुवर्तते तेन घुटो विशेषणादिह न भवति, अष्टौ कुलानीति। जस्ससोरिति वर्तमाने धुड्ग्रहणं बहूर्जे नपुंसकविषये धुट्यन्त्याद्वर्णात्पूर्वं न्वागमार्थः। तेन बहूर्जि कुलानि। ऊर्ज बलप्राणनयोः चुरादित्वादिन्। क्विप्, कारितलोपः जसः शिभावः। अन्ये तु नात्रेष्यत इत्याहुः, तान्प्रति च धुड्ग्रहणं जस्शसोः सप्तमीविपरिणामेन यत्प्रतिपत्तिगौरवमापतति तत्परिहारार्थं क्रियते। सुवल्गीति। वल्ग गत्यर्थः। उख उखीत्यत्र पठ्यते, सु पूर्वः शोभनं वल्गतीति क्विप्, जस्, शिभावः।

**नामिनः स्वरे २।२।१२**

स्वर पर इति। अविशेषाभिधानेऽपि विभक्तिस्वर इति बोद्धव्यम्।

---

१. न्यूनपाठः (भं०)
२. न्यूनपाठः (भं०)
३. गौरक्षी (वा०)

विभक्त्यधिकारात् । तेनेह न भवति । तुम्बुरुणोः विकारः तौम्बुरवं चूर्णमिति । एवमादेरणिष्यत इत्यण्, उवर्णस्त्वौत्वमापाद्यः दधिनी मधुनीति । औरीम्, एवं कुण्डे इत्यत्र । कुण्ड्योरित्यादौ तु ओसि चैत्वे कृते नुरागमो न भवति । नाम्यन्तत्वस्य गौणत्वात् । लाक्षणिकत्वादित्यर्थः[1] । स्वर इति किमिति । वारिभिरित्यत्र व्यञ्जने परेऽस्तु नुरागमः तस्य च लिङ्गान्तनकारस्येति न लोपो भविष्यतीति तत् किमेतन्निवृत्त्यर्थेन स्वरग्रहणेनेति मन्यमानस्यैष प्रश्नः, विभक्त्यवयवत्वादिनोत्तरयति, एवं मन्यते, लिङ्गान्तनकारस्य लोपः क्रियते । न च वारिभिरित्यत्र नुरागमो क्रियमाणो लिङ्गान्तो भवितुमर्हति, तृतीयादौ तु परादिरिति तस्य विभक्त्यवयवत्वात् । न च विभक्त्यवयवस्य नकारस्यास्ति लोपप्रसङ्गः इति श्रवणमेव तस्य स्यात् तन्मा भूदेष दोष इति स्वरग्रहणं कर्तव्यम् ।

**अस्थिदधिसक्थ्यक्ष्णामन्नन्तष्टादौ २।२।१३**

अक्ष्णामित्यनेनवान्नादेशः । अवर्णसंयोगादित्यकारलोपः, अन्, इत्यत्र लक्षणस्याप्रवृत्तिः स्वरूपभङ्गप्रसङ्गात् । अन्तः अन्नादेशं प्राप्नोतीति । एतेनान्तशब्द आगमत्वमनो तेन द्योतयति । अक्ष्णामिति निर्देशादिति दर्शयति पूर्वेण नुरागमः प्राप्त इति नामिनः स्वर इत्यनेनास्थीनीत्यादौ जस्शसोः शिः, घुट्स्वराद् घुटि नुः । अस्थ्यादिभिः लिङ्गस्य विशेषणादित्यस्थ्यक्ष इत्याद्यपि भवति । केवलानां तर्हि अस्थ्यादीनां न प्राप्नोति, व्यपदेशिवद्भावाद् भविष्यति । नपुंसक-ग्रहणानुवृत्त्या च नपुंसकानामस्थ्यादीनामिति विज्ञायते, तेन यदेते यदृच्छाशब्दाः अस्थ्यादयो भवन्ति तदेतेषामन्नादेशो न भवति । अस्थिर्नाम कश्चिद्विप्रः[2] तेनास्थिनेत्यादावनोऽकारकरणमस्थनि[3] दधिनि इत्यादौ ङिप्रत्यये परेऽकारस्य श्रवणार्थमनोऽकारकरणम् । इङ्योर्वेति पाक्षिकोऽकारलोपः अन्तग्रहणमनःसर्वादेशत्वाशङ्कानिवृत्त्यर्थम् । नाम्यनुवृत्त्यान्त्यस्यैव भविष्यतीति चेत् तर्हि विस्पष्टार्थम् ।

**भाषितपुंस्कं पुम्वद् वा २।२।१४**

भाष् व्यक्तायां वाचि । भाष्यतेस्म, निष्ठेति क्तः, इट्, भाषितः पुमान्येन

---

१. न्यूनपाठः (भं०)

२. विप्र इति न्यूनपाठः (भं०)

३. न्यूनपाठः (वा०)

लिङ्गेन[1] तद्भाषितपुंस्कम्। समासान्तर्गतानामित्यत्रादन्ततेति भावप्रत्ययस्य निर्देशात् ककारः समासान्तः पुंसोश्शब्दस्य लोपः। संयोगान्तलोपस्तु न भवति। पुंसोऽघोषे परे संयोगान्तस्यानित्यत्वाभिधानात् मनोरनुस्वारः पुंवदित्यत्र त्वघोषः परो नास्तीति संयोगान्तो लुप्यते। अन्तर्वर्तिनीं च प्रत्ययलक्षणेन प्रथमां विभक्तिमाश्रित्य पदान्तवृत्तेर्मकारस्य मनोरनुस्वार—व्यञ्जन इत्यनुस्वारः। पुंवद् भवतीत्यस्यार्थं प्रकटीकर्तुमाह—पुंसि यदुक्तमित्यादि। एवमभिहिते पुंसि न कश्चिदाहेत्यकार्यमिह शास्त्रेऽभिहितं यन्नपुंसकार्थवृत्तेर्भाषितपुंस्कस्यातिदिश्येतेति मन्यमानश्चोदयति। किञ्च पुंस्युक्तमिति। न किञ्चित्पुंस्यभिहितमित्यर्थः। पुंवदित्यभावातिदेशोऽयमित्यनेनाभिप्रायेणोत्तरयति। स्वरो ह्रस्वो नपुंसक इत्यादि। अयं भावः, नेह टादौ स्वरे परे किञ्चित्कार्यं विधीयते यन्नपुंसकस्यातिदिश्येत, केवलं पुंसि यत् ह्रस्वत्वस्य प्रवर्तनम् तन्नपुंसकस्यापि न (भवतीत्यर्थादभावातिदेशोऽय[2]) विज्ञायते यथा—उशीनरवन्मद्रेषु यवा इत्यतिदेशे सन्तीति अवगम्यत एव। नामिनः स्वर इति च नुरागमस्येति अभावः इत्यनुषज्यते। नुरागमो हि नपुंसके भवन् पुंसि नोपलभ्यत इति नुर्नपुंसकस्यापि पुंवदतिदेशान्न भवति। नन्वतिदिश्यतां प्राकरणिकस्य बुद्धौ परिस्फुरतो नोरागमस्याभावः। अप्राकरणिकस्तु ह्रस्वाभावः कथमतिदेष्टुं शक्यते, उच्यते—यदि न्वागमाभावमतिदेष्टुमभिप्रेतं स्यात् नामिनः स्वर इत्यतोऽनन्तरं भाषितपुंस्कस्य टादौ वेति कुर्यात्। तदेवमकरणादवसीयते प्रकरणान्नाम्नातोऽपि ह्रस्वाभावोऽत्रातिदिश्यत इति। एवमपि विभक्त्युत्पत्तेः पूर्वमन्तरङ्गत्वात् ह्रस्वस्य प्रवृत्तत्वात् कथमभावपक्षेऽतिदेष्टुं शक्यः, नहि भुक्तवतो मा भुक्ता—इत्यभिहिते किमपि कथितं स्यात्। अस्त्येतत्, अतिदेशं प्रणयन् सामर्थ्यात् त्वनन्तरङ्गस्य बलीयसोऽपि प्राक्प्रवृत्तस्य ह्रस्वस्य विभक्तौ सञ्जातायां पक्षे निवृत्तिर्विज्ञास्यते। तदेतस्मात् पुंवदतिदेशात् ह्रस्वनुकारागमयोरभावो नपुंसके क्रियत इति गतमेतत्, ग्रामणीर्ब्राह्मण इति भाषितपुंस्कत्वप्रदर्शनार्थमेतदुपन्यस्तम्। ग्रामणिकुलमित्येतदपि नपुंसकार्थवृत्तित्वमुपदर्शयितुमधुना ग्रामणी-शब्दस्य भाषितपुंस्कस्य नपुंसकार्थवृत्तेरुदाहरणमाह—ग्रामण्या कुलेन ग्रामणिकुलेनेति पुंवद्भावपक्षे इत्यादि। ग्रामण्या कुलेनेत्ययं पुंवद्भावपक्षे ह्रस्वनकारागमयोरप्रवृत्तेः ग्रामणिना कुलेनेत्ययं तु तत्पक्षो न भवति ततो ह्रस्वनकारागमौ स्तः। एवं मृदुर्ब्राह्मणः मृदुकुलमिति पूर्ववत्—

१. न्यूनपाठः (वा०)

२. भवतीत्यर्थः ततो भावातिदेशोऽयम् (भं०)

पुंनपुंसकत्वप्रदर्शनपरमेतदुदाहरणं तु मृदवे कुलाय मृदुने कुलायेति पूर्वत्र ङे चेत्योत्वम् अपरत्र नामिनः स्वर इति नुः। त्रपुण इति त्रपुशब्दोऽयं नपुंसकवृत्तिरिति भाषितपुंस्कत्वाभावादसत्यतिदेशे नित्यं नुरागमः।

कीलालपेन कुलेनेति। कीलालपश्शब्दो मनिनाद-सूत्रेण च शब्दाद्विडन्तः, टा, स्वरो ह्रस्व इति ह्रस्वः। इन टा, यदि पुंवद्भावः स्यात् स्वरो ह्रस्व इति ह्रस्वो न भवेदिति तच्चावातोरघुट्स्वरे इत्याकारे लुप्ते कीलालपाकुलेनेत्यनिष्टं प्रसज्येत इति भावः। मृद्वै इति मृदु-शब्दादुदन्ताद् गुणवाचिन इतीप्रत्ययः, ङे, नायं मृद्वीशब्दो नपुंसकवृत्तिरिति पुंवद्भावस्याभावात्। स्त्रीविषयत्वमिति स्त्र्याख्यत्वात् नदीसंज्ञायां सत्यां तन्निबन्धनो नद्या ऐ आसासामित्यैभावः। यदि पुनरत्र पुंवद्भावः स्यात् किं स्यादित्याह--पुंवद्भावे सत्यैभावो न स्यादिति। मृदुनीव स्त्री इति औरीम्, अतिदेशाभावान्नुरागमः। स्वरो ह्रस्व इति ह्रस्वः, अतिदेशाभावादिति भावः। अथ पीलुने फलायेत्यत्र पुंवद्भावः कस्मान्न भवति, भवत्ययं पीलुशब्दः पूर्वं वृक्षवृत्तिः सन् भाषितपुंस्को नाम्यन्तः फलवृत्तिवाच्यः नपुंसकार्थवृत्तिः। ततश्च पक्षे नोरागमस्याप्रवृत्तौ सत्यां पीलवे फलायेत्यपि रूपं प्राप्नोति, पीलोर्वृक्षस्य फलं विकारः इत्यस्यां विवक्षायामेवमादेरणिति अणि कृते तस्य फले लुगिति लोकोपचाराल्लुक्, तत्र परिहारमाह—वा शब्दोऽत्रेत्यादि। विविधं नानाप्रकारमवस्थितिमवस्थानं यस्यास्सा। व्यवस्थितविभाषा व्यवस्थिता चासौ विभाषेति विकल्पः इत्युच्यते तां व्यनक्तीति व्यवस्थितविभाषावाची। आवश्यकाधमर्णयोरिति णिनिः। तेन क्वचित्पुंवद्भावस्याप्रवृत्तिरपि भवति, पीलुने फलायेति सिद्धम्। अपरे तु पुनरेवं परिहरन्ति इह भाषितपुंस्कशब्देन बहुव्रीहिः, भाषितः पुमान्येन शब्देनेति। न शब्दोऽन्यपदार्थत्वेनाश्रीयते, किं तर्हि, प्रत्यासत्तेः। शब्दप्रवृत्तिनिमित्तभूतो जातिगुणक्रियारूपोऽर्थः शब्दप्रवृत्तिनिमित्तभूतः कारणतां प्राप्तः स शब्दप्रवृत्तिनिमित्तभूत इत्युच्यते। तथाहि गवादेर्जातिशब्दस्य शावलेयादौ अभिधायकत्वेन प्रवृत्तिमतो जातिनिमित्तं गोजातित्वसम्बन्धाद्धि शावलेयादौ गोशब्दः प्रवर्तते। तेन जातिशब्दानां जातिः प्रवृत्तौ निमित्तं भवति। गुणशब्दानामपि गुणः, शुक्लः इति। क्रिया शब्दानामपि क्रियावाचक इति। स च जातिगुणक्रियालक्षणोऽर्थः शब्दस्य प्रत्यासन्नोऽन्तरङ्गत्वात्। तेन तस्यान्यपदार्थत्वाज्जात्यादिरर्थः। इह भाषितपुंस्कः[1] तस्यापि यदभिधायकं शब्दरूपं तदपि तेन भाषितपुंस्केन नपुंसकलक्षणोऽर्थेन योगाद्

---

१. न्यूनपाठः (भं०)

भाषितपुंस्कमभिधेयधर्मस्याभिधाने उपचारात्। तेनेत्थं योऽर्थो भाषितपुंस्कस्तस्यायमतिदेशः। यथा—ग्रामणी-शब्दस्य। अयं हि शब्दो भाषितपुंस्केन ग्रामनयनकर्तृत्वलक्षणेनार्थेन सम्बद्धं नपुंसकधर्माविष्टमर्थं प्रतिपादयति। ततोऽस्य युक्ता पुंवद्भावस्य प्रवृत्तिः। पीलु-शब्दस्तु नैवं भाषितपुंस्कः। नहि तेन यत्र प्रवृत्तिनिमित्तभूतो वृक्षजातिलक्षणेऽर्थे पुमान्भाषितः। तेन सम्बद्धमसौ नपुंसकमाह—किं तर्हि फलजातिलक्षणेनार्थेन सम्बद्धम्। न च फलजातिलक्षणोऽर्थो भाषितपुंस्कः। नहि तत्र पीलुशब्दः पुमांसं भाषितवान्। यद्यपि तत्रार्थे पीलुशब्दः शब्दान्तरं[1] वा पुमान्सं भाषते तथाऽपि यस्य शब्दस्य पुंवद्भावश्चिकीर्षितः स एव चेत्पुमान्सं तत्र भाषते तदेत्थं भाषितपुंस्कस्य पुंवद्भावः प्रवर्तते। अन्यथा हि सर्वस्यैवं सति भाषितपुंस्कत्वाद् व्यावर्त्यानुपलम्भादपार्थकं भाषितपुंस्कग्रहणं स्यात्। तदेवं तुल्ये प्रवृत्तिनिमित्ते सति भाषितपुंस्कातिदेशविज्ञानात् पीलु-शब्दस्य च पुंसि नपुंसके च वर्तमानस्य वृक्षजाति-फलजाति-लक्षयोः प्रवृत्तिनिमित्तभूतयोरर्थयोरतुल्यत्वान्न भवति। पीलुने फलायेत्यत्र पुंवद्भाव इति।

**दीर्घमामि सनौ २।२।१५**

सनाविति सहशब्देन समानार्थस्य समासविषयस्य स शब्दस्यायं प्रयोगः। दीर्घशब्दो ह्रस्वं स्थानिनमाक्षिपतीत्यत्र हेतुमाह—सम्बन्धिशब्दत्वादिति। दीर्घशब्दोप्ययं पित्रादिशब्दवत् सम्बन्धिशब्दः। ये चामी सम्बन्धिशब्दास्ते प्रतियोगिनमनुपात्तमप्याक्षिपन्तीत्यसन्निहितोऽपि ह्रस्व इह स्थानित्वेनाक्षिप्यते। तेन किं सिद्धं भवतीत्याह—तेनेत्यादि। देवानामित्यादि। सर्वत्रापि च नुः नपुंसकग्रहणं चेह निवृत्तम्, गर्गयस्कविदादीनां चेति, अनपुंसकस्यापि दीर्घत्वदर्शनात्। वारिण इति। नामिनः स्वरे इति नुरागमः, सनावित्यागो विशेषणमुत्तरार्थमिति। उत्तरसूत्रे अर्थः, प्रयोजनं यस्य तत् तथोक्तम्। अथेहार्थमपि कस्मान्न भवतीत्याह—इह त्वित्यादिदीर्घशब्देनेह सम्बन्धिशब्दत्वादाक्षिप्तो यो ह्रस्वस्तस्मात्परो य आम्-प्रत्ययः स नुकारागमं सर्वदा प्रवृत्तेर्न व्यभिचरत्येव। तस्माद् अव्यभिचारादामीत्यपि कृते आगमास्तद्ग्रहणेन गृह्यन्त इति सनुकारकेऽप्यामि दीर्घो भविष्यतीति सनाविति विशेषणमिहापार्थकं सदुत्तरार्थं जायते। अथ कृते न्वागमे दीर्घो यथा स्यादितीहार्थमपि कस्मान्न भवति, अन्यथा अग्नीनामित्यादौ अग्नि आम् इति स्थिते नित्यत्वाद् दीर्घत्वे कृते सति न्वागमो न स्यात्। न च तद्विधौ ह्रस्वानुवृत्तिसामर्थ्यात् कृतेऽपि दीर्घे

1. अर्थान्तरम् (मं०)

भूतपूर्व-ह्रस्वाश्रयेण न्वागमो भविष्यतीति शक्यं वक्तुम्। तिसृणां चतसृणां नृणामित्यत्राकृतदीर्घविषये नुकारागमस्य सावकाशत्वात्। नैतदस्ति, आगमादेशयोः आगमविधिर्बलवानिति आगमविधेर्बलवत्वान्नित्यमपि दीर्घं बाधित्वा न्वागमो भविष्यतीति। आदेशात् त्वागमो बलवानिति अवश्यं मन्तव्यम्, अन्यथा गृहीतेत्यादौ परमपि इडागमं बाधित्वा ढत्वमन्तरङ्गत्वात् स्यात्। तस्मात् सनाविति विशेषणमिह फलशून्यं सदुत्तरार्थं क्रियते। उत्तरत्रासम्भवन्नुकारागमे चर्मणामित्यादिविषये दीर्घो मा भूदिति।

**नान्तस्य चोपधायाः २।२।१६**

पञ्चानां सप्तानामित्यादि। संख्यायाष्ष्णान्ताया नुरिति[1] नुः, चर्मणामित्यत्र न्वागमाभावः तद्विधौ ह्रस्वनदीश्रद्धाभ्य इत्यस्यानुवृत्तेः। नाम्येति कर्तव्येऽन्तग्रहणमुत्तरत्र लाक्षणिकस्याप्युशना सखेत्यादेर्नान्तस्य घुटि दीर्घत्वप्रतिपत्त्यर्थम्।

**घुटि चासम्बुद्धौ २।२।१७**

नान्तस्य लिङ्गस्येत्येतेन नान्तं यल्लिङ्गं तस्यानेनोपधादीर्घ इति व्याचष्टे, तेन जनमित्यादावकारे लुप्तेऽपि जन इत्यस्यालिङ्गत्वादुपधादीर्घो न भवति। न ह्येतल्लिङ्गमर्थवत्वाभावात्। न चात्र स्वरादेशपरिभाषया लोपस्य स्थानिवद्भावादनान्तत्वं शक्यमवमातुम्, दीर्घविधिं प्रतिस्थानिवत्वस्य निषेधात्। सामानीति जस्शसोश्शिः, हे राजन्निति, सम्बुद्धिसिकारोऽयमामन्त्रिते सिस्सम्बुद्धिरिति वचनात्। न लोपाभावस्तु न सम्बुद्धाविति निषेधात्।

**सान्तमहतोर्नोपधायाः २।२।१८**

नस्योपधा नोपधेति। नस्येतीयं[2] निमित्तिनैमित्तिभावलक्षणे[3] सम्बन्धे षष्ठी। नकारो हि निमित्तम् उपधा हि निमित्तिनी, नकारापेक्षया पूर्वस्योपधाव्यपदेशात्। नन्वन्त्याद्वर्णात्पूर्वस्योपधा संज्ञाविहिता। न च सान्तमहतोरन्त्यो नकारस्सम्भवति, यदपेक्षया पूर्वोपधेति व्यपदिश्यते, पूर्ववर्णापेक्षया नकारोऽन्त्य इति चेत् तर्हि ततक्ष इत्यादावपि पूर्ववर्णापेक्षया ककारस्यान्त्य-

१. कोष्ठाङ्कितस्य स्थाने "इति नुरागमः, अनेनोपधादीर्घः, लिङ्गान्तनकारलोपः, चतुर्णामिति चतुर।···(भं०)
२. नस्येत्ययम् (वा०)
३. निमित्तनिमित्ति (भं०)

त्वात् ततः पूर्वस्याकारस्योपधाव्यपदेशादस्योपधेति दीर्घस्स्यात्। तस्मादशक्यं पूर्ववर्णापेक्षयान्त्यत्वं विज्ञातुम् गौणश्चायमुपधासंज्ञाविषयः। एवं तर्हि उपधाग्रहणसामर्थ्यादुपधाग्रहणेनेह नकारसमीपवर्तिदीर्घभाक् पूर्वो वर्ण उपलक्ष्यते। तेन नस्योपधा नकारात् पूर्वो यो वर्णस्तस्य दीर्घो भवति। यद्येवम्, सुमनसावित्यत्रापि दीर्घत्वं प्राप्नोति, न भविष्यति, अन्त्यग्रहणस्य मकारसमीपवर्तिनकारपरिग्रहार्थत्वात्। श्रेयानित्यादि। प्रशस्यशब्दादयमनयोरतिशयेन प्रशस्य इति तसादित्वादीयन्स्-प्रत्ययः। प्रशस्य श्र इति लोकोपचारात् प्रशस्यशब्दस्य श्र-भावः। इवर्णावर्णौ स्वरे प्रत्यये चेत्यकारलोपस्तु न भवति। तद्धिधाविष्ठेयन्सो परयोरेकस्वरस्यावर्णस्य लोपो नेष्यत इति वचनात्। अनेन दीर्घः व्यञ्जनान्ताच्चेति[1] सि-लोपः, संयोगान्तलोपः, तस्यालुप्तवद्भावाल्लिङ्गान्तनकारलोपो न भवति। श्रेयांसीति जस्सशोश्शिः। जरसाविति जराजरस्स्वरे वेति जरस्भावः। श्रेयसीति। औरीम्, जस्शसोः नपुंसक इति नियमान्नायं घुट्परमत्यनुषङ्गलोपं बाधित्वा स्वरादेशत्वादत्र दीर्घस्स्यात्। एतच्चानुषङ्गसंज्ञानिमित्तस्य लोपस्य गुरुसंज्ञाकरणेन यद्बलीयस्त्वम् पूर्वमभिहितं तदनपेक्ष्योक्तं महत्साहचर्यात्क्विबन्तस्य धातोस्सान्तस्य न भवति। हिसि हिंसायां सु-पूर्वः। शोभनं हिनस्तीति क्विप् सुहिन् सुहिंसावित्यादि।

**अपश्च २।२।१९**

बह्वर्थवृत्तेरप्-शब्दस्य शब्दमात्रविवक्षातात्पर्यादिकत्वेन निर्देशः। अप् इत्यस्य यो ह्रस्व इति दीर्घशब्दस्य सम्बुद्धिशब्दत्वादेवमुक्तम्। आप इति जस्, स्वाम्पीति शि-भावः। समासान्ताभावः, समासान्तविधेरनित्यत्वादपः पश्येति शस्।

**अन्त्वसन्तस्य चाधातोस्सौ २।२।२०**

अन्तुश्च अस् च अन्त्वसाविति, आच्चेत्यनेन दीर्घः। भवानिति। भवन्तुशब्दः, उदनुबन्धविशिष्टः सर्वनाम्नां मध्ये पठ्यते। गोमानिति। गावो विद्यन्तेऽस्येति मन्तुप्रत्ययः। चन्द्रमाः अप्सरा इति असुन् प्रत्ययान्तावेतौ। एवं सुयशा इत्यपि। न चान्त्वसन्तस्य दीर्घः क्रियमाणो ह्रस्वस्य स्थाने भवन्विशेषानुपादानात् सर्वस्य ह्रस्वस्य प्रसज्येतेत्याह—अन्त्याभाव इत्यादि।

---

१. न्यूनपाठः (भं०)

२. शोभना आपः येषु तडागेषु इति स्वाम्पितडाकानि (टिप्पणी वा०)

वर्णान्त्यस्य विधिरिति वचनात् अन्त्यस्य ह्रस्वस्य दीर्घेण भवितव्यम्। न चान्त्वसन्तस्य लिङ्गस्यान्त्योऽस्ति, ह्रस्वस्यानेन दीर्घस्स्यात्। अतोऽन्त्यस्य ह्रस्वस्याभावे सत्यन्त्यस्य वर्णस्य यः सादेशो निकटदेशो ह्रस्वोऽकारस्तस्यायं दीर्घो विज्ञायते एवमप्यसन्तविषय एवैष परिहारस्स्यात्। अन्त्वत्विषये पुनरनया[1] परिभाषया नकारस्य दीर्घः प्राप्नोति कः पुनस्तस्य दीर्घ इति चेत्, सर्वे पर्यायेण दीर्घाः लृतुलसाः दन्त्या इति स्थानसावर्ण्यात् वा लृकाराः, सत्यम्, असन्त[2]-साहचर्यादन्त्वन्तस्यापि अकारस्य सूत्र-श्रुतस्यैव दीर्घो विज्ञास्यते। पठन्निति। पठन्तु इत्यस्य शन्तृङ्ङन्तस्य दीर्घः कस्मान्न भवतीत्याह—उदनुबन्धयुक्तस्येत्यादि। अन्त्वसन्तस्येति कर्तव्ये यो यमन्तुरित्युकारो निर्दिष्टः, स कार्यार्थमनुबन्धसंज्ञकः नोच्चारणार्थः[3]। तेनोकारानुबन्धयुक्तो योऽन्तु-शब्दस्तस्य ग्रहणात् ऋकारानुबन्ध युक्तस्य न भवति। ननु चान्त्वन्ताभ्यां लिङ्गं विशेषयिष्यामः, विशेष्यस्य तदन्तविधिर्भवति, एवं च विनाप्यन्तुग्रहणमन्त्वसन्तस्येति विज्ञास्यते, तदपार्थकम् अन्तुग्रहणम्। नापार्थकम्, लाक्षणिकमन्तत्वप्रतिपत्त्यर्थत्वात्। तेनेहापि दीर्घो भवति। दीर्घाण्यहानि यस्मिन्सः दीर्घाहः निदाघः इति। अह्नः स इति सत्वं ततो दीर्घः। पिण्डाग्र इत्यस्य क्विबन्तस्य कर्तृवाचिनः कथं धातुत्वं येनात्राधातोरिति निषेधो भवतीति यो मन्यते तं प्रत्याह—क्विबन्तो धातुत्वं न जहातीत्यादि। नन्वर्थवद्ग्रहणपरिभाषया पिण्डाग्र इत्यादौ असोऽनर्थकत्वाद् दीर्घो न भविष्यति, यस्त्वसुन्प्रत्ययसम्बन्धी अस् इत्ययं शब्दः स एवार्थवत्वाद् ग्रहीष्यते। यथा मूलोदाहरणे, तदपार्थकमधातोरिति प्रतिषेधकरणम्। अस्त्येतत्। अर्थवद्ग्रहणपरिभाषायास्त्वनित्यत्वदर्शनादनर्थकस्यासो दीर्घः प्राप्नोति स मा भूदिति निषेधः क्रियते। तथा च दामामीमेत्युभयस्यापि सार्थकादनर्थकाच्च सन्नन्तात्सन् इति सूत्रेण स्त्रीप्रत्ययप्रतिषेधः सिद्धो भवति। यद्येवम्, इहापि धातुत्वान्न भवति। गोमन्तमिच्छत्यात्मनः नाम्नः आत्मेच्छायामिति यिन्, क्विप्, य्वोर्व्यञ्जन इति यलोपः गोमानिति। क्विबन्तो ह्ययं धातुः क्विबन्तो धातुरिति वचनात्। सत्यम्, अधातोरिति प्रतिषेध आनन्तर्यादसन्तस्यैव विज्ञास्यते नत्वन्त्वन्तस्य। गोमानित्यत्र यिनिपरे न लोपश्चेति न लोपो न भवति, अनित्यत्वात्। तस्यानित्यत्वं त्वसन्ध्यक्षरयोः अस्येत्यतो[4] लोप इति अनुवर्तमाने पुनर्लोपग्रहणात्।

१. पुनरपि (भं०)
२. असन्त्य (वा०)
३. जतूपचारणार्थः (भं०)
४. अस्यते इत्यतो (वा०)

यद्येवम्, गोमत्यति गोमत्यत इत्यत्रापि न लोपो न प्राप्नोति, नैष दोषः। घुड्विषय एव न लोपस्यानित्यत्वस्मरणात्। गोमन्तमिच्छत्यात्मनः यिन्, गोमानिवाचरति, कर्तुरायिरित्यायिः नलोपश्चेति न लोपः नामि व्यञ्जनान्तादित्यायेरादिलोपः ति[1], ते इत्यन्विकरणः।

**इन्हन्पूषार्यम्णां शौ सौ च २।२।२१**

ई च हा च पूषा च अर्यमा चेति द्वन्द्वनिर्देशे लिङ्गान्ततकारलोपो न कृतः स्वरूपभङ्गभयात्। इन्हन्पूषन्अर्यमनित्येतेषामिति सामान्याभिधानेऽप्येतदन्तानां लिङ्गान्तानामिति बोद्धव्यम्। केवलेभ्य इन्नादिभ्यः परस्य नपुंसकाद्विधीयमानस्य शेरादेशस्यासम्भवात्। बहुदण्डिनीत्यादि। दण्डो विद्यते येषां ते दण्डिनः तदस्यास्तीतीन् प्रत्ययः। ततो बहुशब्देन बहुव्रीहिः। जस्शसोश्शिः अनेन दीर्घः, एवं बहुवृत्रहाणीति। वृत्रं हतवन्त इति क्विप्, ब्रह्मेत्यादिना क्विप्। बहवो वृत्रहणो येष्विति सर्वत्रैवं प्रकारो विग्रहः। ननु सिद्ध इन्नादीनां घुटि चासम्बुद्धाविति दीर्घः तदपार्थको योगारम्भ इत्याहुः—([2]घुटि चासम्बुद्धावित्यादिनियमस्वरूपप्रदर्शयितुमाह—इन्नादीनां शौ भावे वेत्यादि) एतेन यत एवकारस्ततोऽन्यत्रावधारणमितीन्नादयश्शौ सौ दीर्घो[3] नान्तस्येत्येव रूपस्तु नियमोऽयमिति (दर्शयति[4], इन्नादीनामेव शौ सौ दीर्घः नान्ये) परस्तु[5] प्रत्ययनियमो न भवति व्यञ्जनानीति शावन्यस्यापि दीर्घत्वदर्शनात्। क्विबाश्रयोऽपि हन्तेः पञ्चमोपधेत्युपधादीर्घो न भवति नियमविधानसामर्थ्यात्। ननु शौ सौ घुटि नियमः आरभ्यमाणस्तुल्यजातीयविषयव्यावृत्तिकारित्वान्नियमानामन्यत्र घुट्येव दीर्घत्वं निवर्तयेत्। वृत्रहाणीत्यादौ तु घुटि क्विबाश्रस्य तस्य[6] केनचिद् विनिवृत्तिस्स्यात्[7]। उच्यते—यदयं हनेः हेर्घिरुपधालोप इत्यघुट्स्वरादिप्रत्ययनिमित्ते उपधालोपे कृते सति हन्तेर्घत्वमारभते। ततो ज्ञायते, घुटोऽन्यत्रापि निमित्ते क्विबाश्रये दीर्घो न भवतीति। नहि हन्तेः क्विपि दीर्घ

---

१. ति ते अन्विकरणः (वा० + मं०)

२. न्यूनपाठः (मं०)

३. नियत इति अर्थमुपदर्शयन्प्रकृतिनियमोऽयमिति (मं०)

४. कोष्ठांकितो भागः निरस्तः वर्तते (वा०)

५. न्यूनपाठः (वा०)

६. दीर्घस्य (पाठभेदः वा०)

७. केनचिन्निवृत्तिस्स्यात् (मं०)

सत्युपधालोपः सम्भवति। एवमप्येतज्ज्ञापकं स्वरादावघुटि दीर्घत्वं निवर्तयेत्। तत्र स्वरादाववमसंयोगादित्यादिना उपधालोपस्यासम्भवात्। व्यञ्जनादौ तु घुटि दीर्घत्वप्रवृत्तिः केन निवार्येत, एवं तर्हि संज्ञापूर्वकस्य विधेरनित्यत्वाद् हन्तेः क्विपि दीर्घो न भविष्यति। यथा ऋणितृणिघृणीनां ऋतं त्रितं घृतमित्यत्र प्लीहानावित्यादौ तर्हि हनो दीर्घत्वं न प्राप्नोति नियमेन दीर्घस्य व्यावृत्तेः। असदेतत्। अर्थवद्ग्रहणपरिभाषयार्थवतो हनो दीर्घत्वस्य नियमेन व्यावृत्तिः न त्वनर्थकस्यापि प्लीहानावित्यादौ चानर्थको हन्शब्दः प्लीह गतावित्यस्य यान्युपधाया दीर्घत्वे कृते प्लीहशब्दस्य पञ्चपाद्यां निपातितत्वात्। यद्येवम्, इनोऽप्यर्थवत एव नियमस्स्यात्। ततश्चेहैव दीर्घत्वतद्व्यावृत्ती भवेताम्। बहुदण्डीनि बहुदण्डिनावित्यादौ बहुवाग्मीनि बहुवाग्मिनावित्यादौ तु न स्याताम्। ग्मिन्नवयवस्येनोऽनर्थकत्वात्। सत्यम्। अर्थवद्ग्रहणपरिभाषायास्तु यथा लक्ष्यमनित्यत्वं स्मर्यते। तेनेन्विषयेऽस्याः प्रवृत्तिर्न भविष्यति हन्विषये तु भविष्यतीति शेः प्रत्ययविशेषस्योपात्तत्वादनन्तरस्य सेरनुवृत्तिर्न स्यादिति साविति क्रियते। चकारात्तदनुवृत्तिर्भविष्यतीति चेत् चकारात्तदनुवृत्तिर्दौर्गमतमाश्रित्याह[1] निपातानामनेकार्थत्वाच्छावेवेति प्रकृतिनियमद्योतकोऽयं चकारस्स्यात्। अन्यथा त्विन्नादीनामेव शावित्येषोऽपि नियमो भवेत्। व्यञ्जनानीत्यादिज्ञापकाश्रयणेऽपि प्रतिपत्तिगौरवमापद्येत। तस्मात् सेरनुवृत्तिर्न स्यादिति सि-ग्रहणम्। शिस्योरिति न कृतमवैचित्र्यात्।

**उशनस्पुरुदंशोऽनेहसां सावनन्तः २।२।२२**

अनेनैवान्तादेशे कृते उशना च पुरूदंसो च अनेहा चेति विग्रहः। अतोऽन्नादेशं प्राप्नोतीति। एतेनान्शब्द आगमित्वमनो न द्योतयति व्याख्यानादिति दर्शयति। सम्बुद्धिविषये इत्यादित्रयाणां रूपाणां समाहारः त्रिरूपमिति पात्रोदराकृतिगणत्वादकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यत इति स्त्रीत्वमत्र न भवति। कानि पुनस्त्रीणि रूपाणीत्याह—नान्तं तथा सान्तमथाप्यदन्तमिति। कथं पुनरनिष्यमाणानि[2] अमूनि त्रीणि रूपाणि लभ्यन्ते सावित्यनुवर्तमाने पुनस्सिग्रहणस्य[3] सिविशेषे सम्बुद्धावुशनसोर्विकल्पेनान्नादेशार्थत्वात्। ननु पूर्वकस्य सेरनुवृत्तौ शिरप्येकयोगनिर्दिष्टोऽनुवर्तेत। तथा च समासस्थानाम्[4]

---

१. टिप्पणी (वा०)

२. पुनरिष्यमाणानि (भं०)

३. ग्रहणं सविशेष (भं०)

४. समस्तानाम् (भं०)

उशनादीनां नपुंसकार्थवृत्तीनां शावपि[1] परेऽन्त्यस्यान्नादेशः स्यात्। नैतत्। आनन्तर्यात्सिरेवानुवृत्तेः। हे उशनन्नित्यादि। उशनसावन्नादेशो न सम्बुद्धाविति निषेधात् लिङ्गान्तनकारलोपाभावे सत्युशनन् इति नान्तमेकं रूपं तस्यापि निषेधस्य नञा निर्दिष्टत्वेनानित्यत्वात् पक्षे प्रवृत्त्यभावान्नलोपे सति हे उशन इत्यदन्तं द्वितीयं रूपम्, आदेशाभावपक्षेऽपि सकारश्रवणात् सान्तं तृतीयम्। अनोऽकारकरणं तूत्तरार्थम्। सर्वेषामुशनसादीनामन्नादेशनिवृत्त्यर्थमिति[2] आशङ्कामात्रमेतदनो हि सर्वादेशत्वे सति आ इत्यस्य रूपस्य शब्दत्रयविषयेऽपि समानत्वात् कीदृशोऽर्थविशेषावसायः स्यात्। प्रकरणादिजनितो भविष्यति इति चेत् तर्हि प्रतिपत्तिगौरवं स्यात्।

**सख्युश्च २।२।२३**

ङसिङसोरूमिति ङस उत्वम्। सखेति। अन्नादेशः घुटि चासम्बुद्धाविति दीर्घः हे सखे इति सम्बुद्धौ चेति एत्वम्, ह्रस्वनदीति सि-लोपः योगविभागः उत्तरार्थः।

**घुटि त्वै २।२।२४**

ऐ शब्दात्स्वरूपेणार्थेनार्थवत्वात् द्वितीया, तस्याः आदिलोपः इत्यादिना लोपः। तु-शब्दः इहैव सम्बुद्धिनिषेधो नोत्तरत्रेति विशेषं द्योतयति।

**दिव उद् व्यञ्जने २।२।२५**

दिव् इत्यस्येति। अन्त्यवर्णापेक्षयासम्बन्धे एषा षष्ठी। अन्त्यो हि वर्ण उत्वं प्रतिकार्यभाक्, वर्णान्त्यस्य विधिरिति वचनात्। एवमुत्तरयोगयोः द्युभ्यामित्यादि। नन्वत्र कृते उत्वे बहिरङ्गासिद्धपरिभाषया प्रकृत्याश्रयेऽन्तरङ्गे यत्वे कर्तव्ये बाह्यव्यञ्जनादिप्रत्ययापेक्षिणो बहिरङ्गस्योत्वस्यासिद्धत्वाद् यत्वं न प्राप्नोति, उच्यते—श्वयुवमघोनां चेत्युत्वकरणात् स्वरानन्तर्येणास्याः परिभाषायाः न[3] प्रवृत्तिः। तपरकरणमित्यादि। उरिति कर्तव्ये तपरत्वविशिष्टस्योकारस्य यत्करणं तत्तपरस्तत्कालस्यैत्युकारस्यैवादेशभावो यथा स्यादित्येवमर्थम्। किं पुनरसति तपरत्वे स्यादित्याह—स्वरस्सवर्णस्येत्यादि।

---

१. सावपि (मं०)

२. सादीनां स्थाने आदीनामिति पाठः (मं०)

३. नास्ति (मं०)

असत्वे तपरत्वे स्वरो गृह्यमाणस्सवर्णमपि गृह्णातीति उकारः ऊकारमपि गृह्णीयात् । तथा च ऊकारोऽप्यादेशः स्यात्, स मा भूदुकार एव यथा स्यादिति तपरकरणम् । ननु विधीयमानः स्वरः सवर्णान्न गृह्णातीति उकार ऊकारं न गृह्णीयादिति तथा च सनन्ताशंसिभिक्षामुः इति उकारः ऊकारं न गृह्णाति तदपार्थकं तपरकरणम् । नैतदस्ति । विधीयमानोऽपि स्वरः क्वचित्सवर्णस्य ग्राहको दृष्टः । यथा उत्वम्मादिति उकारः ऊकारस्य । तथा च अमूभ्यामित्याद्यपि सिद्धं भवति । एवं चासति तपरत्वे ऊकारोऽप्यादेशः स्यात्, स मा भूदिति तत्कालार्थं तपरकरणम् (उत्तरार्थम्[1], सर्वेषामुशनसादीनामन्त्यादेशनिवृत्त्यर्थमिति आशङ्कामात्रमेतदनो हि सर्वादेशत्वे सत्या इन्यन्यस्य रूपस्य शब्दमात्रविषयेऽपि समानत्वात् कीदृशोऽर्थविशेषावसायः स्यात् । प्रकरणादिजनितो भविष्यतीति चेत्, तर्हि प्रतिपत्तिगौरवं स्यात् ।) नन्वर्धमात्रापरिमाणस्य व्यञ्जनस्य वकारस्यैकमात्रिक एवान्तरतम्यादुकारो भविष्यति न तूकारोऽपि द्विमात्रस्तत्किं तपरकरणेन, सत्यम् । गुर्वी तु प्रतिपत्तिस्स्यादिति तपरत्वमेव ज्यायः । ननु विभक्ति अधिकाराद्विभक्तिव्यञ्जने[2] उत्वेन भवितव्यम् । तच्च सुकार-भकाराभ्यामन्यत्र न सम्भवति इति सुभोरिति क्रियताम्, अपार्थकं तु व्यञ्जनग्रहणमित्याह—सुभोरिति कर्तव्ये इत्यादि । सामान्यस्य विभक्तिसम्बन्धिनोऽपि व्यञ्जनस्य परिग्रहो यथा स्यादिति व्यञ्जनग्रहणं क्रियते । तेन दिवो भावः द्युता द्युत्वमिति तात्वयोरपि परयोर्दिव उत्वम् सिद्धं भवति । यद्येवम्, दिवि भवं दिव्यमित्यत्रापि प्राप्नोतीत्याह—वाम्येत्यतो वेति सम्बध्यते इति सिंहावलोकितन्यायेनेति भावः । व्यञ्जनमात्रेऽपि तर्हि विकल्पस्स्यादित्याह—सा च व्यवस्थितविभाषा इति । तेन व्यवस्थितविभाषाविज्ञानात् यकारे व्यञ्जने न भवत्यन्यत्र तु व्यञ्जने भवतीति । यद्येवम्, अक्षद्यूभ्यामित्यादौ अक्षैर्दीव्यतीति दिवः क्विपि छ्वोश्शूटो पाञ्चमेति वकारस्य कृते उत्वादेशे एकदेशविकृतस्यानन्यत्वात् दिव्-शब्द एवायमित्यूकारस्य उत्वं प्राप्नोति तत्कस्मान्न भवति । उच्यते—दिवेर्दिविति दिव्शब्दो व्युत्पाद्यते । तस्य लिङ्गस्येह ग्रहणं निरनुबन्धत्वात् । यस्तु क्रीडाद्यर्थ-वृत्तिस्सानुबन्धको धातुः क्विबन्तः स न गृह्यते निरनुबन्धकग्रहणे न सानुबन्धकस्येति वचनात् । तेनाक्षद्यूभ्यामित्यादौ न भवति ।

---

१. न्यूनपाठः (वा०)

२. अविभक्ति (वा०)

**ओ सौ २।२।२६**

अपीत्यकरणादिति । असन्देहार्थमिति शेषः । प्राथम्याद्वा प्रथमैक वचनमेव गृह्यते । अक्षद्यूरित्यत्र पूर्ववदौत्वं प्राप्तं तत्तु न भवति, दिवः सानुबन्धकत्वात् ॥

**वाम्या २।२।२७**

अमि पर इति । एतेन द्वितीयैकवचनस्य ग्रहणं न तु षष्ठीबहुवचनस्येति दर्शयति । एष च विशेषः । आ निर्देशाल्लभ्यते षष्ठीबहुवचने हि गृह्यमाणे सति आ इति दीर्घनिर्देशो विफलस्स्यात् । अ इत्येवं कुर्यात् एवमपि कृते द्यामिति समानदीर्घत्वे सिध्यत्येव अकारात् पर आम् नुकारागमस्य विषयः, तत् कथं द्यामिति सिध्येदिति चेत्, तन्न, आगमशासनस्यानित्यत्वात् । अत्र विषये नोरागमस्याप्रवृत्तिः । तस्माद् आ इति दीर्घनिर्देशादमो न ग्रहणम् । अमो ग्रहणे तु दीर्घो निर्दिश्येत्, अकारलोपस्य प्रवृत्तिस्स्यात्, सत्यकारलोपे वाकारस्याश्रयणार्थं लोपग्रहणमेव कुर्यात्, किमकारादेशविधानेनेति चेत्, न । ग्रन्थगौरवप्रसङ्गात् । तस्मादमो ग्रहणे सति आ इति दीर्घो निर्देष्टव्य एव ।

**युजेरसमासे २।२।२८**

क्विबन्तस्येति क्विपं विना धातोर्युजेः धुटोऽसम्भवादिति भावः । क्विबन्तात्तु सम्भवति क्विबन्तो धातुत्वं न जहाति लिङ्गत्वं च प्रतिपद्यत इति क्विबन्तस्य लिङ्गत्वात् नुकारागमो भवतीति । तदनुबन्धेन चिह्नेन आगम उदनुबन्ध इत्यस्याः परिभाषायाः उपस्थानादिति भावः । युङ् युञ्जाविति । युजिर् योगे युनक्तीति क्विप्, सि, औ, जस्, अम्, औ, अनेन नुरागमः सौ परे इति । तिर्यङिङ्त्यादिनिर्देशात् संयोगात् लोपात्[1] पूर्वं चवर्गदृगादीनां चेति जस्य गत्वम्, वर्ग्ये वर्गान्तः संयोगान्तलोपः । अन्यत्र तवर्गश्चटवर्गेति नस्य ञः, अश्वयुक्, अश्वयुजाविति, अश्वान्युनक्तीति कर्मण्यणिति अणि प्राप्ते, वा सरूपविधानात्क्विप्, तस्य तेन समास इति समासत्वादसमास इति निषेधान्नोरभावः । युजेः योगार्थस्य ग्रहणे वेति वर्तत इति हेतुः उक्तः । अन्ये तु युजेरिति इकारेणोपलक्षितस्य योगार्थस्यैव युजेर्ग्रहणं न तु सामान्यस्येत्याहुः[2], तदसारम्, आगन्तुनापि इकारेण निर्देशं कृत्वा युजेरिति निर्देशस्य सम्भवात् सामान्यस्यापि[3] ग्रहणप्रसङ्गत्वात् । योजनमिति क्विबीति भावेऽर्थे कृत्ययुटोऽन्यत्रापी-

१. लोप (भं०)
२. ससाध्यर्थस्य (भं०)
३. साध्यर्थस्यापि (भं०)

त्यनेन ।

**अभ्यस्तादन्तिरनकारो वा नपुंसके २।२।२९**

अभ्यस्तादिति । अभिपूर्वादस्यतेरभ्यस्यतेस्मेति निष्ठेति क्तः । नडीश्वीतीडभावः । अविद्यमानो नकारो यस्यान्तेरिति । अकाराभावोऽन्तेरिति तु न विज्ञायते । अल्लोपमित्यसन्देहार्थमकरणात् । लोपोऽभ्यस्तादन्तिन इति नित्यलोपः प्राप्त इति व्याप्तेर्न्यायात् । तत्र शन्तृङ्सम्बन्धिनोऽप्यन्तेग्रहणादिति भावः । लिहन्ति कुलानीति लिह आस्वादने वर्तमाने शन्तृङिङति शन्तृङ्, अन्विलुक्[1] । जस्शसांशिशः पूर्ववदानशसिति वर्तमाने शन्तृङ्ङानशावित्यनेन अन्त्यात् पूर्ववदिति अन्वि, जुहोत्यादेश्चेति लुक् । जुहोत्यादीनां सार्वधातुक इति द्विर्वचनं, ह्रस्वः, द्वितीयचतुर्थयोरिति धस्य[2] दः, अभ्यस्तानामाकारस्येत्यालोपः, शिः[3], धुट्स्वराद् घुटि नुः घुटि चासम्बुद्धाविति दीर्घः । ददतीकुले इति, गौरीमिति, अत्र लोपोऽभ्यस्तादन्तिन इति नित्यं लोपः । एवं ददतौ विप्रौ इत्यत्रापि । ननु नपुंसकविषये शिरेव घुट् नान्यः, ततश्च नपुंसक इत्यपास्य शाविति कस्मान्न क्रियत इत्याह—शाविति कर्तव्य इत्यादि ।

**तुदभादिभ्यो ईकारे २।२।३०[4]**

भा इत्यनेन भा-सदृशाः भादय इति । एतेन भा-शब्दात्तृतीयां विधाय भादिशब्दोऽयं तृतीयातत्पुरुष इति दर्शयति । तुदादिभ्यो धातुभ्य इति । पिष अवयवे इत्येतदन्तेभ्य आदिशब्दस्य व्यवस्थावाचित्वात् पिषेश्च परं वृत्करणम् समाप्तिचिह्नस्य पठितत्वात् । स्त्रियां कृतस्य ग्रहणमिति कथं पुनः समनन्तरनपुंसकशब्दश्रुत्या ईकारः स्त्रियां कृतोऽपि गृहीतुं शक्यते[5], एवं मन्यते, निवृत्तमेव नपुंसकग्रहणम्, ई-इति कर्तव्ये कार-प्रत्ययस्य निर्देशात्, तत् निर्देशं नह्यधिकस्यापि ईकारस्य निमित्तत्वम् ख्याप्यते, एवं चैतत् ख्यापितं भवति । यदि नपुंसकग्रहण[6]-विनिवृत्त्या स्त्रियां कृतेऽपि ईकारो गृह्यते । तुदतीत्यादि । नन्वत्र शन्तृङि परे सार्वधातुकवद्भावादुपजातेनान्विकरणेन व्यवहितस्यान्ते

---

१. अन्विकरणः अदादेर्लुक् (भं०)

२. तस्य दः (भं०)

३. जसः शिभावः न्यूनपाठः (वा०)

४. २।२।३१ (दु०वृ०)

५. शक्यः (सं०)

६. न नपुंसक (वा०)

कथम् अनकारत्वं[1] स्यात् । उच्यते—विकरणकृतं व्यवधानमव्यवधानमेव, वचनसामर्थ्यात् । असन्ध्यक्षरविधानाल्लुप्तेऽप्यन्तेरकारे[2] अन्तिव्यपदेशः, एकदेशविकृतस्यानन्यत्वात् । स्नातीत्यादि । ष्णा शौचे, धात्वादेष्षस्सः, गात्रपुरुषयोः स्ना इति निर्देशाण्णस्य नः । अथ याती यान्तीत्यादौ केन विकल्पेनान्ति-नकारलोपः, नह्ययं या प्रापण इति या-धातुः तुदादिर्नापि भादिरित्याशङ्क्याह—आदिशब्द इत्यादि । एतेन या प्रभृतय आदन्ताः धातवः सर्वे भादिग्रहणेनेह गृह्यन्त इति दर्शयति तत् कथम्, उच्यते – भादिशब्दो अयमादिशब्दः । न स व्यवस्थावाची येन क्रमपठितानामेव भादीनामनेनादि-ग्रहणेन सङ्ग्रहः स्यात् । किं तर्हि, प्रकारे, प्रकारश्च सादृश्यम् । तेन भाधातुसदृशाः आकारान्ताः ये धातवः ते सर्वे भादिग्रहणेन गृह्यन्ते तथा च याती यान्तीत्याद्यपि सिद्धं भवति । भवन्ती, देव्यन्ती[3], ब्रूमः, दिवु[4] क्रीडादौ शन्तृङ्, अन्विकरणः, दिवादेर्यन्, असन्ध्यक्षरविधिः । दिवेर्नामिनोर्वोरिति दीर्घः । उदृकारानुबन्धात्त्वी वा ग्रहणं तत्र सम्बध्यत इति तत्रेत्यनुषङ्गश्चाकुञ्चेरिति सूत्रं परामृशति वा ग्रहणमभिसम्बन्धस्तु वा नपुंसक इत्यस्मात् । सा च व्यवस्थितविभाषेति । अन्यथा सर्वत्रानुषङ्गलोपो वा भवेदिति भावः । स्य-शब्दादित्यादि । शन्त्राणौस्यसंहितौ शेष चेत्येतत् सूत्र-विहितात् करिष्यति करिष्यन्तीति । उदृकारेति ई-प्रत्ययः । औरीमिति वा ।

**हनेर्हेघिरुपधालोपे २।२।३१[5]**

हन हिंसागत्योरित्यस्य । क्विबन्तस्येति । एतदुपधालोपग्रहणाल्लभ्यते । उपधालोपो ह्यघुट्स्वरादिनिमित्तकः । न च विना क्विपं हन्तेर्धातोरघुट्स्वरादिविभक्तिस्सम्भवति इत्यर्थात् क्विबन्तस्येति विज्ञायते । वृत्रं हन्तवानिति, क्विब्निति, क्विब्रह्मेत्यादिना । हनेरिति किम्, द्व्यह्नः । द्वयोरह्नोर्भवः इत्येवमादेरणिष्यत इत्यण् तस्य द्विगोर्लुगनपत्य इति लोकोपचारात् लुक् तद्धितार्थे संख्यापूर्वोऽयं द्विगुः समासान्तगतानामित्यकारस्समासान्तः अवमसंयोगादित्यकारलोपः । हनोऽस्यानर्थकत्वेऽप्यर्थवद्ग्रहणपरिभाषायाः अनित्यत्वदर्शना—

१. न्यूनपाठः (भं०)
२. विधिना (भं०)
३. देवन्तीति (वा०)
४. दिव (वा०)
५. २।२।३२ (भं०)

दत्र घत्वं स्यात्। हेरिति किम्, अन्त्यस्य मा भूत्। वृत्रहणावित्यादि। उपधालोपो नास्त्यघुट्स्वरादौ तस्य विधानादल्लोप इति कर्तव्य उपधालोपग्रहणं वृत्रहणमाचष्टे वृत्रह्यतीत्यत्रेन्कारितं चेति इनि कृते इनि लिङ्गस्येत्यन्त्यस्वरादिलोपे सति घत्वाशङ्का निवृत्त्यर्थम्, यदि पुनर्न इति क्रियते[1] शक्यमुपधालोपग्रहणमकर्तुम्। नन्वेवं कृते सति स्वरादेशपरिभाषया अल्लोपस्य स्थानिवत्वात् कथं हकारस्य नकारपरत्वं स्यात्। उच्यते – न इति निमित्तसंश्रयणसामर्थ्यात् स्थानिवद्भावोऽत्रानाश्रयिष्यते। नन्वित्यादि। चोद्यम्, न च अलुप्तवद्भावशासनात् कथमत्र लुप्तोपधस्य चेत्यनेन[2] सिद्धिरभिधातुं शक्यम्, अलुप्तवद्भाव-प्राकरणिककार्यनिषेध एव चरितार्थत्वात्। अत्रोच्यत इत्यादिना परिहरति। अयमर्थः, लुप्तोपधस्य चेत्यनेन हन्तेर्धातोः घत्वलक्षणं कार्यमुच्यते। धातोश्च कार्यमुच्यमानं धातुविहित एव प्रत्यये भवति, न तु लिङ्गप्रत्ययेऽपि। एवं च घ्नन्ति, घ्नन्त्वित्यादावेव तेन सूत्रेण घत्वं युक्तम्। वृत्रघ्न इत्यादौ तु स्यादिप्रत्यये सत्यपि लुप्तोपधत्वे घत्वं न युक्तिमदतस्तत्र अपि तद्यथा स्यादिति योगोऽयमारभ्यते। यदि पुनर्धातुकार्यं लिङ्गप्रत्ययेऽपि परे स्यात्, किं स्यादित्याह—यदि चेत्यादि। वा स्वर इत्यनेन गिरतेः धातोः लत्वं यथा निगिलति निगिरति इत्यत्रान्विकरणे धातुप्रत्यये भवति तथा **गिरौ** गिर इत्यत्रापि लिङ्गप्रत्यये परे विशेषाभावात् स्यात। धातोः कार्यमुच्यमानं धातुप्रत्यय एव भवतीत्यस्मिन्नर्थे योगारम्भः ज्ञापिते सति न भवति। गॄ निगरणे गिरतीति गीः, क्विप्, ॠदन्तस्येरगुण इति इरादेशः, औ, जस्।

**गोरौ घुटि २।२।३२**[3]

**गो**-शब्दस्य घुटीति। एतेन गो शब्दस्य यो घुट् गवार्थगत एकत्वादावर्थे सञ्जातः तस्मिन्निदम् औत्वं विधीयत इति दर्शयति। एवं च सति चित्रगुरित्यत्र बहुव्रीहौ कृते स्वरो ह्रस्वो नपुंसक इति योगविभागाद् ह्रस्वत्वे सत्येकदेशविकृतस्यानन्यत्वात् गो-शब्द एवायमिति कृत्वा यदौत्वं प्राप्नोति तदपास्तं भवति। नह्यत्र गवार्थगत एकत्वे[4] सि-प्रत्ययः उत्पन्नः, किं तर्हि, अन्यपदार्थगते, अतोऽत्रौत्वं न भवति। एवं हे चित्रगो हे चित्रगव इत्यत्रापि सम्बुद्धिजसोरौत्वे कृते न भवति। नन्वत्र लाक्षणिकत्वादेवात्र न भविष्यति

१. क्रियेत् (भं०)
२. चेत्यन्तेन (वा० + भं०)
३. २।२।३३ (दु० वृ०)
४ एत्वे (भं०)

अशक्या लक्षणप्रतिपदोक्तपरिभाषेहाश्रयितुम्, प्रतिपदोक्तस्य गो-शब्दस्यासम्भवात्। योऽपि ह्ययमौणादिको गो-शब्दस्सोऽपि लाक्षणिक एव। गमेर्डो इति लक्षणेनावयवशस्तस्य निष्पत्तेरिति पूर्वक एवात्र समाधिः। द्यौ-शब्दस्यापीष्यते। गोर्घुट्यावविति कर्तव्ये गुरुसूत्रकरणादिति शेषः[1]।

**अम्शसोरा २।२।३३**[2]

अम् च शश्चेति विग्रहः। गो शब्दस्य अम् शसि पर[3] इति। गवार्थगत एकत्वादौ यावम्शसाविति पूर्ववद् व्याख्येयः। तेन चित्रगुमानयेत्यत्रात्वं न भवति। आ इति दीर्घोच्चारणकरणम्[4] अकारलोपस्य निवृत्त्यर्थम्। शस्यापि दीर्घनत्वयोः। पुंसि चायं दोषः, न तु स्त्रियाम्, तत्राप्प्रत्ययस्य प्रवृत्तेः। द्यौशब्दस्यापीष्यत इति अम्शस्या इति कर्तव्ये गुरुसूत्रकरणादिति शेषः। अम्शसी चायं समाहारे द्वन्द्वः।

**पथिमथिऋभुक्षीणां शौ २।२।३४**[5]

पन्थाः मन्थाः ऋभुक्षाश्चेत्यनेनैव कृतात्वानां द्वन्द्वः। सूत्रनिर्देशे व्यञ्जने चैषां निरिति न-लोपो न भवति। स्वरूपभङ्गभयात्।

**अनन्तो घुटि २।२।३५**[6]

अन्नादेशं प्राप्नोतीत्येतेनान्तशब्द आगमत्वमनो न द्योतयतीति दर्शयति। पन्थानावित्यादि। अन्नादेशः, घुटि चासम्बुद्धाविति दीर्घः पथिषु मथिषु। व्यञ्जने चैषां निरिति नलोपः।

**अघुट्स्वरे लोपम् २।२।३६**[7]

अघुडिति लुप्तसप्तमीकमिति। आदिलोप इत्यादिना। यदघुट्स्वरः, न घुट्स्वरः अघुट्स्वरः – इति समासो न क्रियते। समासे हि सति स्वर-

१. करणादिति शेषः (भं०)
२. च परतः २।२।३४ (दु० वृ०)
३. परतः (भं०) अन्तादेशं (भं०)
४. न्यूनपाठः (वा०)
५. २।२।३५ (दु० वृ०)
६. २।२।३६ (दु० वृ०)
७. २।२।३७ (दु० वृ०)

व्यञ्जनयोरुभयोरघुडित्यत्रादिश्यमानं[1] न स्यात्। स्वरादावघुटि पर इति मन्तव्यम्। पथ इत्यादि। शस्, टा, ङे, अनेनान्तलोपः। व्यञ्जने चैषां निरिति न लोपः। अघुट्स्वरग्रहणमुत्तरार्थम्। अथेहार्थमपि कस्मान्न भवतीत्याह—इह त्वित्यादि। अत्र[2] हेतुमाह—घुटि अन्नादेशस्य विहितत्वादिति पूर्वसूत्रेणेति शेषः।

**व्यञ्जने चैषां निः २।२।३७[3]**

एषामिति। इदं षष्ठीबहुवचनम्। त्यदाद्यत्वम्। अकारे लोपम्, सुरामि सर्वतः, अद् व्यञ्जनेऽनक इतीदमौत्वम्, घुटि बहुत्वे त्वे चैत्वम्, स्वरपरे व्यञ्जनान्ते चेति। अनेन च-शब्दात् स्वरो यत्र निमित्तमिति सूचयति। ननु तस्मिन्परे पूर्वेणान्ते लुप्ते सिद्धे उत्तरसूत्रेणैवानुषङ्गलोप इति किं स्वरग्रहणस्यानुकर्षणार्थेन चकारेण, अस्त्येतत्, स्वरादेशपरिभाषया त्वन्तलोपस्य स्थानिवद्भावोऽस्ति तत्कथं उत्तरसूत्रेण सिद्धिस्स्यात्। अघुट्ग्रहणमुभयोर्विशेषणमिति उभयोस्स्वरव्यञ्जनयोर्पथिभ्यामित्यादि सर्वत्रानेन लोपः। पथा पथेत्यादि। पूर्वेणान्तलोपः, पन्थानौ पन्थान इति। अनन्तो[4] घुटीत्यन्, घुटि चासम्बुद्धाविति दीर्घः। पन्थाः मन्थाः, पन्थिमन्थीत्यात्वम्। अथैषां ग्रहणं किमर्थं यावता पथ्यादीनां तदनुकर्षणार्थं क्रियते। न च सर्वेषां तेषां[5] नकारस्सम्भवति, किन्तर्हि, द्वयोरेव एवं [6]चानयोरिति वक्तव्यम् अथवा तदपि न वक्तव्यम्, अनुवृत्तिवशादेव पन्थिमन्थिशब्दयोः यो नकार इति प्रतिपत्तेः। तत् किमर्थमेषां ग्रहणमित्याह—एषां ग्रहणमित्यादि। विभक्त्यधिकाराद्विभक्तावेव परस्यां न लोपः स्यादविभक्तावपि तु यथा स्यादित्येषां ग्रहणम्। एषां हि ग्रहणे सति बहुत्वनिर्देशेन सकललक्ष्यसङ्ग्रहात् अविभक्तावपि लोपस्सिद्धो भवति। तेनेत्यादि। तेनैषां ग्रहणेनेत्यर्थः। पथितेत्यादि। पथो भावः पथितेति। ता त्वौ भाव इति ता-त्वौ प्रत्ययौ।

---

१. उपदिश्यमानम् (भं०

२. अत्रैव (भं०)

३ २।२।३८ दु०वृ०)

४. अनन्तो घुटीत्यन्तादेशः (भं०)

५. एषां (भं०)

६. पक्षयोरिति वक्तव्यम् (भं०)

**अनुषङ्गश्चाक्रुञ्चेः २।२।३८**[1]

कृतव्युत्पत्तिपूर्वमनुषङ्गशब्दः । विदुष इत्यादि । विद् ज्ञाने वर्तमाने शन्तृङ्, अन्विलुक्, वेत्तेश्शन्तुवन्सुरिति शन्तुवन्सुरादेशः[2], शस्, टा, ङे, अनेनानुषङ्गलोपः । अघुट्स्वरस्येति उत्वम् । अघोषे प्रथम इति सस्य तत्वम्, क्रुङ्भ्याम्, क्रुङ्क्षु वति । क्रुञ्च गतीत्यस्मात् क्विप्, भ्याम्, सुप् । तिर्यङ्ङित्यादि । निर्देशात् संयोगान्तलोपं बाधित्वा चवर्गदृगिति गत्वम्, वर्ग्ये वर्गान्तः संयोगान्तलोपः । अथ किमर्थं अक्रुञ्चेरिति निषेधः क्रियते, यावता क्रुञ्चेरित्यादौ प्रत्ययोत्पत्तिमनपेक्ष्य प्रकृत्याश्रयत्वेतान्तरङ्गत्वात् धातूपदेशावस्थायामेव वर्ग्ये वर्गान्तनकारस्य वर्गान्तेन भवितव्यम् । कृते च वर्गान्ते क्रुञ्चेर्नकारोऽनुषङ्गो न सम्भवति, अतः प्राप्त्यभावादपार्थकमक्रुञ्चेरिति प्रतिषेधकरणमिति पूर्वपक्षयति । नन्वन्तरङ्गत्वादित्यादि । सत्यमित्यादिना परिहरति । सत्यम्, उक्तेन न्यायेन न कर्तव्यः । क्रुञ्चेः प्रतिषेधः । निषेधकरणात्तु ज्ञायते वर्ग्ये वर्गान्त इति क्वचिदनित्योऽयं विधिरिति नित्ये हि तस्मिन्क्रुञ्चिनिषेधो विफलः स्यात् । तस्मात् क्रुञ्चेरवस्थितो नकारस्तस्य लोपप्राप्तावक्रुञ्चेरिति निषेधः क्रियते । वर्गान्तत्वान्नित्यत्वज्ञापने[3] किं सिद्धं भवतीत्याह—तेनेत्यादि । आदिग्रहणेन प्रशान्भ्यामित्यादि[4] गृह्णाति[5] । शमु उपशमे प्रपूर्वः, प्रशाम्यतीति क्विप्, पञ्चमोपधेति दीर्घः । मनोधातोरिति मस्य नत्वम्, भ्याम् । अत्र स्यादि घुटि परे तकारस्य वर्गान्तो मकारो न भवति, वर्गान्तस्यानित्यत्वात्, तदुक्तम्, अपरेणाप्यन्यत्र स्यादि घुटि पदान्तवदिति । एवमपार्थकः क्रुञ्चेः प्रतिषेधः । क्विपि परतोऽनिदनुबन्धानामित्यादिना घुट्स्वरव्यञ्जनोत्पत्तेः पूर्वमेवानुषङ्गलुप्तत्वात् प्राप्त्यभावादाशङ्क्याह—अतएवेत्यादि । अतो अस्मादेव क्रुञ्चेर्निषेधादेतदवगम्यते क्विपाश्रयो क्रुञ्चेरनुषङ्गलोपो न भवति । अनुषङ्गलोपोऽपीत्यपि शब्दो भिन्नक्रमः अनिदनुबन्धानामित्यस्यानन्तरं द्रष्टव्यः । अनिदनुबन्धानामित्यनेनाप्यनुषङ्गलोपो नास्तीति । विद्वानिति । सान्तमहतो दीर्घः । सुकन्सः सुकन्भ्यामित्यादावपि अनुषङ्गलोपः कस्मान्न भवतीत्याह—लक्षणप्रतिपदोक्तयोरित्यादि । सुकन्स इत्यादावनुषङ्गलक्षणद्वारेण सञ्जातः

---

१. २।२।३९ (दु०वृ०)

२. शन्तृप्रत्ययस्य वन्सुरादेशः (भं०)

३. वर्गान्तात् (भं०)

४. सुकन्भ्याम् (वा०)

५. गृह्यते (भं०)

इति लाक्षणिकत्वात् तस्य लोपाभावः। अन्यत्रापीति। अविभक्तौ, विद्वत्ता विद्वत्त्वमिति विरामव्यञ्जनादिषु इति सस्य दत्वम्। अघोषे प्रथमः। वैदुषमिति वृद्धिरादौ सनीति वृद्धिः अघुट्स्वरादावित्युत्वम्।

**पुंसोऽन्शब्दलोपः २।२।३९**[1]

पुंभिः पुंस्वितिसंयोगान्तलोपः। पुमानित्यादि। सान्तमहतोरिति दीर्घः। शब्दग्रहणमित्यादि। अल्लोप इति कर्तव्ये यच्छब्दग्रहणं क्रियते तस्यैतत् प्रयोजनमन्यत्राविभक्तावप्यल्लोपस्य संशब्दनं यथा स्यादिति अन्शब्दस्येति कर्तव्ये पुनर्लोपग्रहणं पुंस्यति पुंस्यते इत्यत्र यिन्नाय्योरप्यन्शब्दस्य लोपो यथा स्यादिति कथं न च स्यात्, न लोपश्चेति नियमेन कार्यान्तराणां व्यावृत्तेः। पुमांसमिच्छत्यात्मनः नाम्न आत्मेच्छायां यिन्। पुमानिवाचरति, कर्तुरायिरित्यायिः, नाम्नि व्यञ्जनान्तादित्यायेरादिलोपः। आय्यन्ताच्चेत्यात्मनेपदम्।

**चतुरो वा शब्दस्योत्वम् २।२।४०**[2]

उत्वं भवतीति। एतेन ह्रस्वोऽयमादेशो न तु दीर्घः। चतुर इति निर्देशादिति दर्शयति। चतुर इति शस्, चतुर्णामिति चतुर इति नुरागमः। उदिति कर्तव्ये त्व-प्रत्ययनिर्देशः किमर्थ इत्याह—त्वप्रत्ययनिर्देशादिति। चत्वारः इति जस्, प्रियचत्वार इति प्रथमैकवचनम्, वा इति लुप्तषष्ठीके निर्देशे कर्तव्ये शब्दग्रहणं चतुर्यति चतुर्यत इत्यत्र यिन्नाय्योरपि वा शब्दस्योत्वं संशब्दनार्थम्। नन्वसति शब्दग्रहणे वोत्वमिति निर्देशः स्यात् ततश्च सन्देहो भवेत् किमयं वा-शब्दो विकल्पार्थः अन्त्यस्य चोत्वमिति, आहोस्वित् वा शब्दस्योत्वमिति। नास्त्येष सन्देहः चतुर इति निर्देशात्।

**अनडुहश्च २।२।४१**[3]

च शब्दो यिन्नाय्योरप्युत्वार्थः। अनडुह्यति, अनडुह्यते। उत्वानुवृत्तेरविभक्तावप्युत्वम्। अनडुहोभावः आनडुह्यमिति चतुरनडुहो वा शब्दस्योत्वमित्येकयोगे कर्तव्ये योगविभाग उत्तरार्थः।

**सो नुः २।२।४२**[4]

नुरागमो भवतीति स्वरादन्त्यात् परः कथमागम उदनुबन्ध इति वचनात्।

---

१. २।२।४० (दु०वृ०)
२. २।२।४१ (दु० वृ०)
३. २।२।४२ (दु० वृ०)
४. २।२।४३ (दु० वृ०)

अनड्वानिति संयोगान्तलोपः। अनड्वाह इति जस्।

**सम्बुद्धावुभयोर्ह्रस्वः** २।२।४३[1]

हे प्रियचत्वारिति। प्रियचत्वारित्यतो बहुव्रीहेस्सिः अनेन ह्रस्वः, व्यञ्जनान्ताच्चेति सिलोपः। रेफस्य विसर्गः। हे अनड्वन्[2] इति सो नुरिति नुरागमः, अनेन ह्रस्वः। ननु ह्रस्वेन नुकारागमो बाध्यते, न बाध्यते। चानुवृत्त्या द्वयोरपि समावेशात्। अदिति कर्तव्ये ह्रस्वग्रहणं चतुरनडुहोरन्त्यस्य स्थानिवत्वनिवृत्त्यर्थम्।

**अदसः पदे मः** २।२।४४[3]

अदस इति रूपमात्रविवक्षातात्पर्यात् त्यदाद्यत्वाभावः। त्यदाद्युत्वे हि सति अमुष्येति रूपं स्यात्, ततश्चादस इति रूपं हीयेत। पदे कार्ये कृते सति। एतेन पदार्थकार्यं स्मायादिलक्षणं इह तादर्थ्यात् पदशब्देनोच्यत इति दर्शयति। भवति हि तादर्थ्यात्ताच्छब्द्यं यथेन्द्रार्था स्थूणाः। इन्द्र इति मुख्यं तु पदं प्रयोगार्हपदशब्देन चाभिधीयते योगारम्भवैफल्यप्रसङ्गात्। ननु पदे सति विभक्तौ सत्यां मत्वमदस इत्यर्थः कस्मान्न व्याख्यायते, अशक्यमेवं व्याख्यातुम्। एवं हि व्याख्यायमाने (न[4] न्यायेन प्रतिलब्धस्थानिभावः स्यात्) सति विभक्तिप्रकरणादेव विभक्तिग्रहणस्य लब्धत्वादपार्थकं पदग्रहणं स्यात्। विभक्ताविति वा सन्देहापनोदाय कुर्यात्, तस्मात्पदे सति विभक्तौ सत्याम् इति नायमस्य योगस्यार्थः। वक्ष्यमाणेन न्यायेन प्रतिलब्धस्थानिवद्भावस्यादसो दकारस्यैव मत्वं विज्ञायत इत्याह—दस्य मत्वं भवतीति। अमुष्मै इत्यादि। अदस्, ङे, ङसि, ङस्, ङि त्यदाद्यत्वमकारे लोपं स्मै सर्वनाम्न इत्यादयो विधयः। अनेन दस्यमत्वमुत्वम्मादित्युत्वम्, षत्वम्[5]। इदानीमदसो वर्णान्तराणि परिहृत्य यतो हेतोर्दकारस्य मत्वं भवति तं हेतुं दर्शयितुमाह— अथेत्यादि। अथेत्ययमाक्षेपे निपातः। मत्वमिदमदसस्सामान्येनोच्यमानं वर्णान्त्यपरिभाषया मकारस्य कस्मान्न भवतीत्याह—नैवं शक्यमिति कुतो हेतोरित्याह—पदग्रहणं ह्यपार्थकम् स्यादिति। अर्थशब्दः प्रयोजनवचनः। अपार्थ-

१. २।२।४४ (दु० वृ०)
२. अनडुन् (वा०)
३. २।२।४५ (दु० वृ०)
४. न्यूनपाठः (वा०)
५. न्यूनपाठः (भं०)

कमपगतप्रयोजनमित्यर्थः। अयं भावः नान्त्यस्य मत्वं व्याख्यातुं शक्यते तथा हि यद्यनेनान्त्यस्य मत्वं स्यात् पदग्रहणमप्रयोजनं स्यात्। तस्य ह्येतत् प्रयोजनम्, पदकार्ये कृते सति मत्वं यथा स्यादिति। यदि चान्त्यस्य मत्वं क्रियते, पदकार्ये कृते सति इति वाचो युक्तिरियमनन्विता स्यात्। पदकार्यस्य कस्यचिदसत्वात्। त्यदाद्यत्वलक्षणे पदकार्ये कृते त्यदाद्यकारस्यैवान्त्यस्य मत्वं भवतीति[1] चेत् किमेवं सति त्यदाद्यत्वेन कृतं स्यात्। अकारान्ततानिमित्तं स्मायादिकार्यमिति चेन्न, त्यदाद्यत्वमनन्तरमन्तरङ्गत्वात् अत्राकारलोपे प्रवृत्ते नित्यत्वान्तरङ्गत्वाभ्यां दोऽद्रेर्म इत्यादिना मत्वोत्वयोस्सतोरकारान्तताविघातात् कथमकारान्ततानिमित्तं स्मायादिकं स्यात् तदेवं त्यदाद्यत्वलक्षणे पदकार्ये कृते सति तस्यैव मत्वमित्यशक्यमेवं व्याख्यातुम्। तस्माद् दकारस्य मत्वे व्याख्यायमाने पदग्रहणमफलं स्यात्। पदकार्यस्यासत्वादिति पदग्रहणान्नादसोऽन्त्यस्य मत्वं विज्ञायते। नाप्यन्तभावेऽन्त्यसदेशस्येति[2] मकारात् पूर्वस्याकारस्य पदकार्यानुपलम्भात्। पदग्रहणवैयर्थ्यप्रसङ्गादेव नाप्यादेरकारस्य। अतएव हेतोरित्यर्थाद् दकारस्यैव मत्वम्। अतएव च पदग्रहणादमुमिच्छत्यात्मनः असौ इवाचरति अदस्यते अदस्यति इत्यादावविभक्तौ विध्यर्थमिदं न भवति। यद्येवं दोऽद्रेर्म इति सिद्धे मत्वे वचनमपार्थकमित्याह—दोऽद्रेर्म इत्यादि सिद्धे मत्वे नियमार्थमिदं वचनमारभ्यते। पदकार्ये कृते पश्चान्मत्वं यथा स्यादिति वचनारम्भे हि सति अमुष्मै इत्यादि उदाहरणेषु स्मायादीनादेशान् बाधित्वा परत्वात् प्रकृत्याश्रयत्वेन चान्तरङ्गत्वान्मत्वमुत्वं च प्राप्नुयात्। तथा च स्मायादयो न भवेयुः। तस्मात् सिद्धस्यापि मत्वस्य प्रवृत्तिक्रमाख्यापनार्थमिदमारभ्यते। पूर्वं स्मायादीनां पदकार्याणां प्रवृत्तिः ततो मत्वोत्वयोरिति। तस्मात् पदकार्ये कृते मत्वं यथा स्यादिति नियमार्थमिदं वचनम्। वेति वर्तते सा च व्यवस्थितविभाषा, तेनाद्र्यादेशविषये मतभेदः सिद्धः। तत्र हि केचित् द्वयोरपि दकारयोर्मत्वमिच्छन्ति। अमुमुयङ्। अन्ये तु अन्त्यदकारस्यैव, अदमुयङ्। अपरे तु त्यदाद्यत्वविषय एवादसो मत्वमिति व्याचक्षाणा नैव। अदद्र्यङ्, अदस्शब्दपूर्वादञ्चतेः क्विप् अनुषङ्गलोपस्याभावः। तद्विधौ जिघ्रतेर्वा इत्यतो वा शब्दस्य व्यवस्थितविभाषारूपस्याभिसम्बन्धात् विश्वग्देवतयोरित्यादिना कृतेऽन्त्यस्वरादेरद्र्यादेशे दकारद्वयस्य मत्वात् अकाररेफयोरुत्वम्मादित्युत्वम्। यत्ववर्गान्तसंयोगान्तलोपाः।

---

१. भवत्विति (वा०)

२. नाप्यन्त्यभावे (मं०)

**अघुट्स्वरादौ सेट्कस्यापि २।२।४५**[1]

सेट्कस्येति कृते बहुव्रीहौ समासान्तर्गतानामिति ककारः समासान्तः। वन्सेरिति विदेः शन्तृङ्ङादौ शस्य क्वन्सोश्च यत्साधारणं वन्स इति रूपं तद्वन्सिग्रहणेन गृह्यते। इकार उच्चारणार्थः। पेचुष इत्यादि। पेचिवन्स् शस् टा अनुषङ्गलोपः। विदुष इत्यादि वर्तमाने शन्तृङिति शन्तृङ्, तस्य वन्सुरादेशः। घोषवन्त्योश्चेतीडभावः, विद्वद्भ्यामिति विरामव्यञ्जनादिष्विति सस्य दः। यस्मिन्विधिस्तदादौ तत्कार्यमिति तदादित्वे लब्धे यदघुट्स्वरादावित्यादिग्रहणं कृतं ततः किं फलं भवतीत्याह—अविभक्तावपीष्यत इति तद्धिते यकारे इष्यते इति वस्येति कर्तव्ये शब्दग्रहणादिति शेषः। एवमुत्तरत्रेति तद्धितेऽपि यकार इष्यत इति सम्बध्यते। ननु निमित्ताभावपरिभाषया वन्सिवकारविनिवृत्ताविटोऽपि विनिवृत्तिर्भविष्यतीति किं सेट्कस्यापीत्यनेन, अन्त्यादिसूत्रेण विधीयमानस्येटो वन्सिनिमित्तं न तु वकार इति चेन्न, मूलप्राप्त्या वकारस्यापि निमित्तत्वात्। तथाहि[2] अर्तीण्घसैकस्वरातामिड्वन्सौ पच्यादिभ्यः सामान्यविहितस्येटः पचिवचीत्यादिना निषिद्धस्य क्रादिनियमात् पुनः प्राप्तिमतो घोषवत्योश्च कृतीति निषिद्धस्य पुनरन्त्यादिसूत्रेण विहितस्य प्रथमाप्राप्तिनिरूपणाय भवति व्यञ्जनवकारो निमित्तम्। एवं सिद्धावकारविनिवृत्तौ इटोऽपि निवृत्तिः[3] तत्र केचिदाहुः—अन्तरङ्गायामिण्निवृत्तौ क्रियमाणायां बाह्याघुट्स्वरादिप्रत्ययाश्रयस्योत्वस्यासिद्धत्वात् वकारस्य निमित्तस्याभावो नास्तीति कथमिटो निवृत्तिस्स्यात्। अन्ये तु निमित्ताभावपरिभाषया अनित्यत्वज्ञापनाय[4] सेट्कग्रहणं कृतमिति व्याचक्षते। तथा च कार्यत इत्यादौ कारितनिवृत्तावपि तन्निमित्ता वृद्धिर्न निवर्तते ह्रस्वोऽयमादेशो व्याख्यानात्।

**श्वयुवमघोनां च २।२।४६**[5]

मघोनामित्यनेनैवात्वम् बहिरङ्गासिद्धपरिभाषा स्वरानन्तर्येनोपतिष्ठते। अस्ति चात्र स्वरयोरकारोकारयोरानन्तर्यम्, इह कस्मान्न भवतीति। उपशुनमित्यविभक्तिस्वरेऽप्युत्वदर्शनाच्छोवनमित्यादावप्युत्वं प्राप्नोतीति मन्यमानस्य

१. २।२।४६ (दु० वृ०)
२. तेषाम् (मं०)
३. निष्पत्तिः (मं०)
४. ख्यापनाय (मं०)
५. २।२।५७ (दु० वृ०)

प्रश्नः, अनभिधानादिति परिहारः। अयमर्थः सतां शब्दानामिदमन्वाख्यानं नासतामिति कृतोत्वस्य[1] शोवनादेशस्य प्रयोगासम्भवात्। अणादौ तद्धिते परे उत्वं न भवति। तथा च मघवतेत्यत्रापि न भवति। यद्येवम्। समीपं शुनमुपशुनमित्यकारेऽपि समासान्ते कृते न प्राप्नोतीत्याह – यत्र त्वित्यादि। उत्वाभावेऽनभिधानं हेतुर्यत्र पुनरभिधानमस्ति तत्रोत्वं भवत्येव। स्त्रियां विषयेऽपीष्यत इति च शब्दात्। नन्वित्यादि लिङ्गस्यार्थवतश्शब्दरूपस्य यत्र ग्रहणं[2] तत्र तस्य लिङ्गविशिष्टस्य स्त्रीत्वेन युक्तस्यापि ग्रहणमुपादानं भवति। तद्यथा भवतोर्वदेरिति भवत उत्वम्। हे भो ब्राह्मणीत्यत्र भवतीशब्दस्यापि प्रवर्तते एवं च युवन्नित्यस्माद् यूनस्तिरिति ति-प्रत्यये उत्पन्ने तदन्ताच्छसि युवतीः पश्येत्यत्र युवती-शब्दस्याप्युत्वं प्राप्नोतीति कस्मान्न भवतीत्याह—उच्यत इत्यादि। परिहार इति शेषः। लिङ्गग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमित्येतदनित्यं वचनम्, सखी-शब्दस्य सख्यशिश्वोश्चेति ई-प्रत्ययान्तस्य सख्युश्चेत्यन्नादेशस्यादर्शनात्। तेनास्य वचनस्यानित्यत्वात् युवतीरित्यत्रोत्वाभावः। युवतिशब्दाच्छस्, शसोऽकार इत्यादिना पूर्वस्वरः तेन घुटि त्वै इत्यादि तेनानित्यत्वेन हेतुनेत्यर्थः।

**वाहेर्वाशब्दस्यौत्वम् २।२।४७[3]**

वह प्रापण इत्यस्य विण्प्रत्ययान्तस्येति। अस्योपधायाः कृतदीर्घस्येति शेषः। बाह्यप्रयत्न इत्ययं तु बहिर्न गृह्यते ततः परस्याघुट्स्वरादेः विनाक्विपमसम्भवात्। क्विबप्यनभिधानात् ततो न भवतीत्याहुः – असन्देहार्थं वा बहुरिति निर्देशं कुर्यात्। यो वा शब्दस्तस्येति। एतेन वा इत्ययं शब्दो वकाराकार समुदायोऽत्र स्थानी न तु वर्णान्त्यपरिभाषया वा शब्दस्यान्त्य इति दर्शयति। एतच्च शब्दग्रहणाल्लभ्यते। प्रष्ठौह इत्यादि। औत्वम्, सन्धिकार्यम्, प्राष्ठौह्यमिति। यण् च प्रकीर्तित इति यण्, यद्येतच्छब्दस्याभिधानमस्ति वाहेर्हिच्छन्दो[4] विषय एव वाहिति रूपं स्मरन्ति। कथं शाल्यूह इत्यादि। उच्यते—ऊहेः क्विप्येतत् भविष्यति। अनकारान्ते उपपदे तु विदुहेः[5] न दृश्यते, अनभिधानात्। या च पुनरत्र प्रयोगे वह्यर्थावगतिः सा धातूनामनेकार्थत्वात्,

१. कृतोऽन्यस्य शौ वनादेशशब्दस्य (भं०)
२. उच्चारणम् (वा०)
३. २।२।४८ (दु० वृ०)
४. वहेर्हिच्छन्दोविषय एव वाहिति (भं०)
५. वहेर्वि न (भं०)

अनेकार्थत्वे कुर्द गुर्द गुद क्रीडायामेवेत्येव कारकरणादवसीयते। प्रष्ठवाडित्यादि। हशषच्छेति डत्वम्। ननु वा शब्दस्य प्रकृतमुत्वं विधाय तस्य विण्णाश्रये गुणे कृते च सन्धौ प्रष्ठौह इत्यादि सिध्यत्येवेति किमौत्वादेशविधानेन नैवं शक्यम्, बहिरङ्गासिद्धपरिभाषायाः विण्-मात्राश्रयेऽन्तरङ्गे गुणे कर्तव्ये बाह्याघुट्-स्वरादिप्रत्ययस्यापेक्षस्योत्वस्यासिद्धत्वात्। गुणस्याप्रवृत्तेः। न चात्रान्तरङ्गस्य गुणस्य स्वरद्वयानन्तर्यम् अव्यपेक्षा[1]-प्रवृत्तिर्येन स्वरानन्तर्ये बहिरङ्गपरि-भाषायाः प्रवृत्तिर्न स्यात्।

**अञ्चेरलोपः पूर्वस्य च दीर्घः २।२।४८[2]**

पूर्वस्य च ह्रस्वस्य दीर्घो भवतीति दीर्घशब्देन ह्रस्वस्य स्थानित्वेना-क्षिप्तत्वादेवमुक्तम्। अतएव गोचा रैचेत्यादौ सन्ध्यक्षरस्य दीर्घो न भवति। दीर्घेण स हि निर्दिष्टो लोपोऽपि तर्हि न स्यादिति चेन्न, अन्वाचीयमानस्य दीर्घस्य प्रवृत्तावपि लोपस्य प्राधान्यात् प्रवृत्तेः पूर्ववदी-प्रत्यय इति नदाद्यञ्चि-वाह्वचन्स्यन्तृसखिनान्तेभ्य ई २।४।५० इत्यनेन। अथ यथा प्रत्यङ्भ्यामित्य-त्राञ्चेः क्विप्यनुषङ्गलोपो भवति तथा प्रत्यञ्चावित्यत्रापि कस्मान्न भवती-त्याह—अत्रानुषङ्गलोपो न भवति इति, कुत इत्याह—तत्रेत्यादि। तत्रेत्य-नेनानुषङ्गलोपविधिं परामृशति। अनिदनुबन्धानामित्यत्रानुषङ्गलोपविधौ यज्जिप्रतेर्वेत्यतो वा ग्रहणमभिसम्बध्यते। सा च व्यवस्थितविभाषा, तेनाञ्चे-पूजायामर्थेऽनुषङ्गलोपस्य प्रतिषेधो नान्यत्र गतावर्थान्तरे च। स च प्रतिषेधो घुड्विषय एव व्यवस्थितविभाषाविज्ञानात्। तेन प्रत्यञ्चावित्यादावेवानुषङ्ग-लोपो न भवति। पूर्वस्येति किम्, अञ्चेरेव पक्षे दीर्घो मा भूत्। गोचा रै-चेति। गामञ्चतीति रायमञ्चतीति क्विप्, अनुषङ्गलोपः, टा, अञ्चेरलोपः।

**तिर्यङ्तिरश्चि २।२।४९[3]**

अञ्चु गतीत्यस्मात्तिरश्शब्दपूर्वात्तिरोऽञ्चतीति क्विप्, सहसन्तिरसां सध्रिसमितिरय इति तिर्यादेशः, तिर्यञ्च इति स्थिते, सिः। अतएव निर्देशात् संयोगान्तलोपात् पूर्वं गत्वं ततो वर्गान्तसंयोगान्तलोपः एवमुत्तरत्रेति। अनु-षङ्गलोपाभाव इति सम्बध्यते। तिरश्चीति, पूर्ववद् ई-प्रत्ययः। तैरश्च्यमिति भावेऽर्थेऽण्। तिर्यञ्चौ तिर्यग्भ्यामिति। पूर्ववदनुषङ्गलोपस्य भावाभावौ मन्तव्यौ।

---

१. अन्त्यापेक्षा (मं०)
२. २।२।४६ (दु० वृ०)
३. २।२।५० (दु० वृ०)

**उदङ्ङुदीचि २।२।५०**[1]

उद् ईदिति कृतेऽञ्चेति ग्रहणानुवृत्त्या अञ्चतेरकारस्य ईत्वे विज्ञायमाने सति सत्यम् उदीच इत्यादि सिध्यति किन्तु क्वचित् पूर्वपरौ सवौ इति सर्वस्याञ्चतेः स्थानित्वाशङ्का स्यादिति तन्निवृत्तये यथान्यासकरणमेव ज्यायः।

**पात्पदं समासान्तः २।२।५१**[2]

पादिति। पादशब्दो लुप्ताकारो[3] गृह्यत इति। कथं पुनर्लुप्ताकारत्वमित्याह—हस्त्यादिवर्जितादित्यादि। समासान्तगतानामित्यत्र हस्त्यादिवर्जितादुपमानात् परस्य बहुव्रीहावन्त लोप इति वक्ष्यति, तेन पादशब्दस्यान्तलोपः। यदि बहुव्रीहावन्तलोपः तर्हि समासान्तग्रहणमपार्थकम्। न च पदशब्दे[4] समासान्तपदशब्दोऽस्ति यः समासान्तग्रहणस्य[5] व्यावृत्त्या स्यात्, नापि पादयतिः क्विबन्तः। पदेरिन्नन्तात् क्विपः सन्दिग्धत्वात्। नापि पादेन क्रीतं पादो वास्यास्तीति पादिकमित्येतद् व्यवच्छेद्यमकारलोपस्य स्थानिवद्भावात् पादिति रूपाभावात्। एवं तर्हि मधुरमतीन्प्रतिपत्सूननुग्रहीतुं सिद्धस्यैवार्थस्यानुवादार्थं समासान्तग्रहणं क्रियते। वैयाघ्रपद्यमिति यण् च प्रकीर्तित इति यण्।

**अवमसंयोगादनोऽलोपोऽलुप्तवच्च पूर्वविधौ २।२।५२**[6]

युजिर् योगे सम्पूर्वः। संयुज्यन्तेऽस्मिन्वर्णा इति व्यञ्जनान्ताच्चेत्यधिकरणे घञ्। आधाराधेयभावोऽत्र बुद्धिपरिकल्पितः। यथा वने कुसुमिताः वृक्षा इति। वृक्षा एव हि वनं तत्कीदृशोऽत्राधाराधेयभावः। बुद्ध्या तु परिकल्प्यते। राजन्नित्यादीनामेकदेशानुकरणभूतोऽन्शब्दः। ततोऽनुकार्येणार्थेनार्थवत्वात् विभक्तिः विधीयत इति विधः, उपसर्गे दः किः, वश्च मश्च वमौ वमाभ्यां संयोगः वमसंयोग इति ताभ्यामारब्धो यः संयोगः स एवमुच्यते वमसंयोगात्तु न परस्य न भवतीति। एतेन प्रसज्यप्रतिषेधोऽयमिति दर्शयन्नवमसंयोगादित्ये-

---

१. उदङ्ङुदीचिः २।२।५१ (दु०वृ०)
२. २।२।५२ (दु० वृ०)
३. लुब्धाकारो (वा०)
४. पादशब्देन समानार्थः पाच्छब्दोऽस्ति (भं०)
५. ग्रहणस्याव्यावर्त्यः (भं०)
६. २।२।५३ (दु० वृ०)

तद्वाक्यभेदेन सम्बध्यंत इति दर्शयति । अलुप्तवद् भवतीति । अस्यार्थं व्यक्तीकर्तुमाह—अकारलोपे कृत इत्यादि । नकारे व्यञ्जने परे णत्वं प्राप्तमित्येवं वदन् सामान्यव्यञ्जननिमित्तकत्वं णत्वस्य दर्शयति । ननु तद्विधौ चवर्गेण लिङ्गस्य विशेषणाच्च लिङ्गान्तस्य[1] णत्वं विधीयते । ततश्च कथं तद्राज्ञ इत्यादौ प्राप्नुयात्, अस्त्येतत्, विशेषण-विशेष्यभावं प्रति तु कामचारो दृश्यते । ततो यस्य लिङ्गेन चवर्गो विशेष्यत इति प्रतिपत्तिस्तन्मतेन यत्र-तत्रस्थस्यापि चवर्गस्य णत्वं प्राप्नोति, षत्वस्य डत्वम् प्राप्तमिति घुटां तृतीय इत्यनेन शेषः । नकारे घोषवति परे इति इसुस्दोषाः घोषवति र इत्यतो घुटां तृतीय इत्यत्र घोषवद्ग्रहणानुवृत्तेरेवमुक्तम् । ननु दध्नेत्यादावन्नादेशो लाक्षणिकस्तत् कथं तस्याल्लोपः[2] स्यात् स्थादोश्चेत्यारम्भाल्लक्षणप्रतिपदोक्तपरिभाषाया अनित्यत्वात् भविष्यति । यद्यलुप्तवद्भावो विधीयते तदा प्रतिदीव्न इत्यत्राल्लोपे कृते यथा च्छ्वोश्शूटो पञ्चमे चेति वकारस्य ऊडादेशो न भवति एवं नामिनो र्वोरिति नकारस्य परभूतत्वात् व्यञ्जननिमित्तकं दीर्घत्वमपि[3] न प्राप्नोति । नैष दोषः । अनस्सन्निधानात् तमपेक्ष्य यः पूर्वः तस्य विधौ अलुप्तवद्भावो विज्ञायते, प्रतिदीव्न इत्यत्र च यस्य दीर्घत्वलक्षणं कार्यं विधीयते, नासावनः पूर्वमिति न तस्य विधौ कर्तव्ये लुप्तवद्भावस्यास्ति प्रसङ्गः । अनर्थकोऽप्यन् गृह्यते । अर्थवद्ग्रहणपरिभाषायाः अनित्यत्वात् । तेन सीम्न इति सीमन्शब्दोव्युत्पन्नं लिङ्गम् । अल्लोप इति तपरकरणमनस्सर्वस्यान्त्यस्य वा लोपाशङ्कानिवृत्त्यर्थम् । नन्वलुप्तवद्भावश्रवणादकारस्य लोपोऽवगम्यत इति । अन इति क्रियताम्, किम् लोपग्रहणेन, उच्यते—संज्ञापूर्वकत्वेन क्वचिदकारलोपानित्यत्वार्थं लोपग्रहणम्, तेन सामनो वैमन इत्यादौ तस्येदमित्यणि परे लोपो न भवति । क्वचित्तु भवत्येव, औक्ष्णः भ्रौणघ्नः धृतराज्ञ[4] इति उक्षन्[5], भ्रूणहन्, धृतराजन् एभ्यो वाणपत्ये इत्यण् यदि स्यात् नकारस्य जकारेण योगो न स्यादिति, अकारेण व्यवधानादिति भावः । नन्वलुप्तवद्भावातिदेशेन यत्साध्यं तत्स्वरादेशपरिभाषयैव सिद्धम् । तथाहि—स्वरस्याकारस्य य आदेशो लोपः परमघुट्स्वरादिनिमित्तमाश्रित्य सञ्जातः सुपूर्वस्य राज्ञ इत्यादौ जकारादेर्ग-

---

१. वर्गान्तस्य लिङ्गस्य (भं०)

२. तस्य लोपः (भं०)

३. अत्र इति अपि इत्यस्य स्थाने (भं०)

४. धार्तराज्ञः (भं०)

५. उक्षण् (वा०)

त्वादिलक्षणे कार्ये कर्तव्ये स्थानिवद्[1] भवति एवं चाकारलोपस्य स्थानिवद्भावादिष्टं सिध्यत्येव, तत्किमनेनालुप्तवद्भावातिदेशेनेत्याह— स्वरादेश इत्यादि अनित्यत्वज्ञापने सति सिद्धं[2] भवतीत्याह—तेन युञ्जन्ति विषन्ति इत्यादि सिद्धमित्यादि किं पुनरत्र[3] सिद्धम्, नकारस्य वर्गान्तानुस्वारो, अन्यथा तु विकरणान्तलोपस्य स्थानिवद्भावान्निमित्तमव्यपेक्षयोस्तयोरप्रवृत्तिस्स्यात् इत्यादि । इत्यादिग्रहणाज्जक्षतुः जक्षुरित्यत्राप्युपधालोपस्य स्थानिवत्वात् अघोषनिमित्तं घस्य कत्वं सिद्धं भवति । तस्मादनित्यत्वं स्थानिवद्भावस्य ज्ञापयितुमारभ्यतेऽतिदेशः । भुज पालन-अभ्यवहारयोः शिष्लृ विशरणे[4] । अन्त्यस्वराद्[5] रुधादेः परो[6] न शब्दः, रुधादेर्विकरणान्त लोपः ततो वर्गान्तानुस्वारो । जक्षतुः जक्षुरिति । अद् भक्षणे अतुस् उस्, वा परोक्षायामदेः घस्लृभावः, द्विर्वचनाभ्यासकार्ये, गमहनेत्युपधा लोपः, अघोषेष्वशिडामिति घस्य कः शासिवसिघसीनां चेति षत्वम् ।

**ईङ्योर्वा २।२।५३[7]**

प्राप्तविकल्पोऽयमिति पूर्वेण नित्यं प्राप्तत्वात् । यज्वनी कर्मणीति, औरीम्, ङिप्रत्ययेनेत्यादि । औरीमित्यनेन य ईकारादेश औकारस्य स्थाने विहितः सः ङिप्रत्ययेन सहचरितः विभक्त्यादेशत्वात् तस्य विभक्तिव्यपदेशप्रवृत्तेरिति तस्येह ग्रहणम् । यस्तु ऋन्तेभ्यस्त्वीत्यनेन[8] विहितः ईकारः सः न गृह्यते तेनेयं राज्ञीत्यत्र पूर्वेण नित्यमल्लोपः । ननु पृथग्योगारम्भाद्विकल्पः सिद्धः[9] तत् किं वा ग्रहणेन, असदेतत्, पृथग्योगारम्भे हि वमसंयोगविषयेऽप्याशङ्क्येत पूर्वत्र वा विकल्पः इह तु नित्यमित्येवमपि कश्चित् सम्भावयेदिति वेति कर्तव्यमेव ।

---

१. स्थानिवद्भावः भवति (भं०)
२. न्यूनपाठः (वा०)
३. सिद्धम् (वा०)
४. विशेषणे (भं०)
५. अन्ति (वा०)
६. इति (वा०)
७. २।२।५४ (दु० वृ०)
८. इत्येतत् सूत्र (भं०)
९. लब्धः (भं०)

**अधातोरघुट्स्वरे २।२।५४**[1]

आ इति लुप्तषष्ठीकं घुट्स्वरोऽघुट्स्वरः ततो नञ्समासः। वेति निवृत्तमिति अनपेक्षणात्। धातोराकारस्येति। अश्राव्य प्रत्ययान्तस्येति मन्तव्यम्। कीलालपेत्यादि। कीलालप-शब्दो मनिनादिसूत्रेण च शब्दाद्विट्-प्रत्ययान्तः। टा, ङे, अनेनालोपः। मालाः पश्य इति। शस् क्त्वो यबित्यादौ त्वालोपः। आ अघुट्स्वर इति योगविभागात्समासो भाविन्यनञः क्त्वा इति सूत्रनिर्देशाद्वा अघुट्स्वर इति किमिति, अनन्तरयोः ईङ्योस्तावदर्थनिवृत्त्यर्थमघुट्स्वरग्रहणं न भवति, तथाहि ईकारस्तावदयं नपुंसकादवाप्तसत्ताक आ तदन्ताद्धातोः परो न सम्भवतीति नासावनुवर्तते तत्साहचर्यात् ङिरपि नानुवर्तिष्यते तत् किमघुट्स्वरग्रहणेन, नाप्यवमसंयोगादित्यस्य विनिवृत्तये लिपिसिचिह्वः पाघ्राध्मा इति च निर्देशात् तन्निवृत्तेस्सिद्धत्वादित्यघुट्स्वरादिग्रहणानुवृत्त्या तस्यैव निमित्तभावो विज्ञास्यते इति मन्यमानस्यैष प्रश्नः, प्रत्यय-सामान्ये आलोप आशङ्क्येत इत्युत्तरयति। कीलालप इति जसन्तमेतत्।

**ईदूतोरियुवौ स्वरे २।२।५५**[2]

स्वरे पर इति। स्वरादौ पर इत्यर्थः। यस्मिन्विधिस्तदादौ तत्कार्यमिति वचनात् स्वरमात्रे तु परतो विधिराद्यन्तवद्भावात्। नियावित्यादि। णीञ् प्रापणे, लूञ् छेदने नयतीति लुनातीति क्विप्, तपरकरणमसन्देहार्थमिति। असति तपरत्वे य्वोरिति निर्देशः स्यात् ततश्च किमिदं यवयोर्ग्रहणमुत स्विदीदूतोरिति सन्देहो भवति। स मा भूदिति तपरकरणम्। नीभ्याम्, लूभ्यामिति नीलूभ्यां क्विबन्ताभ्यां भ्याम्-प्रत्ययः। नियोऽर्थः न्यर्थः, लुवोऽर्थः ल्वर्थ इत्यत्र तु न भवति। विभक्तिग्रहणानुवृत्तेः। एवमुत्तरेऽपि विधयो विभक्तिस्वर एव मन्तव्याः। स्वायम्भुव इत्यत्र तर्हि स्वयम्भू-शब्दस्यापत्यार्थविहितेऽणि परतः उवादेशो न प्राप्नोति। अवमसंयोगादित्यतश्चानुवृत्तेर्भविष्यति, पुनस्स्वरग्रहणमित्यादि सामान्यस्य स्वरस्य घुट्सम्बन्धिन इतरस्य च परिग्रहो यथा स्यादित्यनुवर्तमानेऽपि स्वरग्रहणे पुनः स्वरग्रहणं क्रियते अन्यथा ह्यघुट्स्वर एव स्यात्।

**सुधीः २।२।५६**[3]

अतएव निर्देशात् सम्प्रसारणमिति। ननु ध्याप्योस्सम्प्रसारणं चेत्यस्त्येव

---

१. २।२।५५ (दु० वृ०)
२. २।२।५६ (दु० वृ०)
३. २।२।५७ (दु०वृ०)

सम्प्रसारणस्य विधानम्, तत् कथम् अयं निर्देशः सम्प्रसारणस्य निमित्तं स्यात्। सत्यम्, अस्ति विधानं तु तत्र पञ्चपाद्याम्, इह तु यदि निर्देशबलात्सम्प्रसारणम् अनुगन्तुं शक्यते किं लक्षणान्तरानुसरणेन (धीङो[1] वा धारणार्थस्य) रूपमेतत् षष्ठ्येकवचनान्तं चैतदिति ईकारापेक्षया सुधीशब्दस्य सम्बन्धषष्ठीविज्ञानात्, यदि तु सुधीशब्दः प्रथमान्तो व्याख्यायेत स एवेयादेशं प्रति कार्यत्वेन विज्ञायेत तथा च तस्य सर्वस्यानेकवर्णः सर्वस्येति ईयादेशः प्रसज्येत, ईकारोऽनुवर्तत इति न लूकारः। सुधीशब्दस्य तदसम्भवादिति भावः। इयादेशश्चेत्यनुवर्तत इत्यनुषज्यते उवादेशस्तु नानुवर्तत अनान्तरतभ्यात्। अनेकाक्षरयोरिति यत्वं प्राप्तमिति तस्य बाधनार्थंसिद्धेऽपीयादेशे योगारम्भ इति शेषः।

भूरवर्षाभूरपुनर्भूः २।२।५७[2]

पदत्रयं षष्ठ्येकवचनान्तमिति पूर्ववद् एतद् व्याख्येयम्। अकारोऽनुवर्तत इत्यादावपि पूर्ववद्-व्याख्याक्रमः। भूशब्दस्येति केवलस्य भूशब्दस्य सिद्धे उवादेशे इति कृत्वा भू-शब्दस्येत्यविशेषाभिधाने भू-शब्दान्तस्येति मन्तव्यम्। अनेकाक्षरयोरिति वत्वं प्राप्तमिति तेन सिद्धेऽपि उवादेशे योगारम्भ इति शेषः। वर्षाभ्वावित्यादि। वर्षासु भवतीति पुनर्भवतीति क्विप्। औ जस्। अनेकाक्षरयोरिति वत्वम्। अथ किमर्थाविमौ प्रतिषेधावुपादीयेते न एक एवोपादीयेतेत्याह—प्रतिषेधकरणादित्यादि। द्वौ वारौ द्विः, तसादित्वान्मुः प्रत्ययः, प्रतिषेधशब्देन चात्र प्रतिषेधाभिधायी नञुच्यते। तेनायमर्थः द्वौ वारौ प्रतिषेधाभिधायिनो नञो यत्करणं ततो हेतोः कारभू-शब्दस्याप्युवादेशो न भवति, प्रतिषेधाधिक्यकरणादन्यस्यापि उवादेशनिषेधप्रवृत्तेरिति भावः।

अनेकाक्षरयोः त्वसंयोगाद् यवौ २।२।५८[3]

क्षर् संचलने नञ्पूर्वः न क्षरतीति पचादित्वादच्। इयुवोर्बाध इत्येतेन सिद्ध्योरपि सामान्येन यत्ववत्वयोर्योगारम्भः। इयुवोर्बाधनार्थ इति दर्शयति। यद्येवम्, नेति क्रियताम्। एवमपि कृते इयुवोर्बाधनार्थाद् यत्ववत्वे भविष्यत इति किं यव-ग्रहणेन, सत्यम्, विचित्रा सूत्रस्य कृतिः शर्ववर्मणः। अथानेकाक्षरयोरनेकस्वरयोरिति कथं व्याख्यातम्, यावता क्षर-शब्दो वर्णेषु प्रसिद्धः

---

१. धीङो आदरार्थस्य (६)
२. २।२।५८ (दु० वृ०)
३. २।२।५९ (दु० वृ०)

तत्कथमसावत्र स्वराणामभिधायकस्स्यादित्याह—न क्षरतीति न चलतीत्यादि। एतेनान्वर्थोऽयमक्षरशब्दः स्वराणां वाचक इह गृह्यते न पुनः[1] सामान्यवर्णवाचक इति दर्शयति। परवर्णं नानुगच्छतीति व्यञ्जनम्। उच्चारणवेलायां नानुसरतीत्यर्थः। यथा हि व्यञ्जनमुच्चारणं प्रति प्रायेण स्वरमपेक्षते न तथा स्वरो व्यञ्जनम्। अतो व्यञ्जनानुयायित्वेन तेषां स्वराणां लक्ष्ये प्रयोगादन्वर्थेनाक्षरशब्देनोपपद्यते व्यपदेशः, यदि पुनः सामान्यवर्णवाच्यक्षरशब्दो गृह्येत नियौ लुवावित्यत्रापि यत्ववत्वे प्राप्नुयाताम्। इयुवोस्तर्हि कोऽवकाश इति चेत् विधानसामर्थ्यात् तयोरप्यस्तु पाक्षिकी प्रवृत्तिः तस्मादक्षरशब्देन स्वर उच्यते। प्रध्यौ प्रध्य इति। ध्यै चिन्तायां प्रपूर्वः प्रध्यापयतीति क्विप्, ध्याप्योस्सम्प्रसारणमिति सम्प्रसारणम्, तद्दीर्घमन्त्यमिति दीर्घः। ग्रामण्यावित्यादि। ग्रामं नयति, यवांल्लुनातीति क्विप्। नियौ लुवौ इति नी लू शब्दावेकस्वराविति यत्ववत्वे न स्तः, धातुना संयोगो विशेषयितव्य इति। आधातोरघुट्स्वर इत्यतो धातुग्रहणमपेक्ष्यते, तेन संयोगो विशेष्यते (धातोर्यस्संयोग[2] इति) तेन किं सिद्धं भवत्याह—तेनेत्यादि। उन्न्यौ उन्न्य इति उदो दस्य पदान्ते धुटामिति प्रथमः पञ्चमे पञ्चमानिति नत्वम्। अत्रोपसर्गसाहित्येन संयोगोपसञ्जात इति धातुसंयोगाभावादसंयोगादिति निषेधो न भवति। अव्ययकारके यदा पूर्वे इति अव्ययपूर्वकत्वं प्रध्यावित्यादौ प्र-शब्दस्य अव्ययत्वात्। ग्रामण्यावित्यादौ कारकपूर्वकत्वं ग्रामस्य कर्मणः कारकत्वात्। परमनियाविति। परमश्चासौ नीरिति कर्मधारयः। परमशब्दोऽत्र नयतिक्रियाकर्तृविशेषणभूतो नाव्ययं न च कारकमिति यत्वाभावः। यद्यपि च परमादीनामपि क्रियां प्रति कर्तृत्वं तथापि (तु[3] तेषां न साक्षात्) किं तर्हि, गौणम्, विशेषणद्वारेण।

**भ्रू धातुवत् २।२।५६**[4]

धातुवदिति। प्रथमान्ताद्वतिः। भ्रू-शब्दस्य प्रथमान्तत्वात्। अतिदेशस्यार्थं व्याचक्षाणः आह—अथेत्यादि। उवादेश उक्त इति ईदूतोरियुवौ स्वर इत्यनेन, स हि धातोरुक्तः। तद्विधावाधातोरघुट्स्वर इत्यतो धातु-ग्रहणानु-

१. तु (मं०)
२. न्यूनपाठः (मं०)
३. न तत्तेषां साक्षात् (मं०)
४. २।२।६० (दु० वृ०)

वृत्तेः । अथोवादेशवद् वत्वमपि कस्मान्नातिदिश्यते, तदपि ह्यनेकाक्षरयोरित्यादिना धातोराकारान्तस्योक्तमेव, नैतत्, सामान्येन हि धातोरुकारान्तस्य यदुक्तं तस्यायमतिदेशो न तु यदनेकाक्षरयोरसंयोगादिति विशेषेणोक्ते, तस्यापि कुतः सामान्यातिदेशे विशेषस्यानतिदेशात् । नहि ब्राह्मणवदस्मिन्क्षत्रिये वर्तितव्यमिति सामान्यब्राह्मणनिबन्धनकार्यवत् कौण्डिन्यब्राह्मणनिबन्धनमपि कार्यं क्षत्रिये सामर्थ्यमन्तरेणातिदेष्टुं शक्यते तस्मादूकारान्तधातुमात्रनिबन्धनस्य कार्यस्य भ्रू-शब्देऽतिदेशाद्वत्वं नातिदिश्यते । नापीयादेशः अनान्तरतम्यात्[1] । ननु परार्थे शब्दप्रयोगादन्तरेणापि वतिमतिदेशोऽवगम्यत एव । यथा—सिंहो माणवकः, गौर्वाहीकः इति तदपार्थकम् वत्करणम्, नैतत्, असति हि वतौ धातुसंज्ञार्थमिदं वचनमित्यपि सम्भाव्यते । ततश्च भ्रू-शब्दाद् यादयोऽपि भवेयुः अप्राकरणिकत्वान्न भविष्यन्तीति चेत्, न । प्रतिपत्तिगौरवं स्यादिति वत्करणमेव ज्यायः । उविति कर्तव्ये धातुवद्ग्रहणं वैचित्र्यार्थम् । उत्तरत्रापीयिति शक्यते एवं कर्तुम् ।

**स्त्री च २।२।६०[2]**

स्त्री-शब्दो धातुवद् भवतीत्येतेन स्त्रीति स्वरूपस्येह ग्रहणं न तु स्त्रीप्रत्ययान्तस्य शब्दस्य नापि स्त्र्यर्थवृत्तेरिति दर्शयति । एतच्च नद्या ऐ आसासाम् जातेरयोपधादिति च नदी जातिशब्दयो धातुवद्भावनिबन्धनस्येयादेशस्याकरणादवगम्यते । योगविभाग उत्तरार्थ इति । उत्तरत्र स्त्रीशब्द एवानुवर्ततां भ्रू-शब्दस्तु नानुवर्ततामित्युत्तरार्थो योग-विभागः ।

**वाम्शसोः २।२।६१[3]**

अमि शसि च पर इत्येतेन शस्प्रत्यासत्त्या द्वितीयैकवचनं गृह्यत इति दर्शयति ।

**भवतो वादेरुत्वं सम्बुद्धौ (च[4]) २।२।६२[5]**

भवन्त् इत्यस्य सम्बुद्धौ परस्यां आदेरुत्वं वा भवतीति नायमस्य योग-

---

१. नान्तरतम्यात् (मं०)
२. २।२।६१ (दु० वृ०)
३. २।२।६२ (दु०वृ०)
४. च इत्यधिको पाठः (दु० वृ०)
५. २।२।६३ (दु० वृ०)

स्यार्थः वाग्रहणानर्थक्यप्रसङ्गात् । हे भो इति, भवन्त् हे शब्द-पूर्वः सि, अनेन वन्तु-शब्दस्योत्वम् । अथोत्वे कृते ह्रस्वलक्षणः सम्बुद्धिलोपः कस्मान्न भवति, सम्बुद्धिनिमित्तमुत्वं कथं सन्निपातपरिभाषायां सत्यां सम्बुद्धिं विहन्तुमलमिति चेत्, न । वर्णग्रहणेऽस्याः परिभाषाया अनुपस्थानात् ह्रस्ववर्णाश्रयश्च सम्बुद्धिलोपः स्वरादेशत्वात् सन्धिकार्यमुत्वञ्च बलीय इति चेत्, अस्तु तत्, परलोपं तु बाधित्वा परत्वात् सम्बुद्धिलोपः स्यात् । अत्रोच्यते—नित्यत्वादन्तरङ्गत्वाच्च परलोप एव भवति । कृते तस्मिन्ह्रस्वाभावात् सम्बुद्धिलोपाभावः । ज्ञापकाच्च यदयमाभोभ्याम् एवमेव स्वर इति भो-शब्दात् परस्य विसर्जनीयस्य लोपमारभ्यते । ततोऽवगम्यते सत्युत्वे सम्बुद्धिलोपो न भवतीति भगवन्त् अघवन्त् इत्येतयोरपि वादेरुत्वं वा वक्तव्यम् । सम्बुद्धौ परस्यामिति । उदिति कर्तव्ये त्वप्रत्ययनिर्देशात् हे भो ब्राह्मणीति भवन्तु-शब्द उदनुबन्धविशिष्टः सर्वनाम्नां मध्ये पठ्यते । उकारः उदृकारेत्यर्थः (उदृकार[1]-इतीकारः) अनुषङ्गश्चाक्रुञ्चेरिति अनुषङ्गलोपः, सम्बुद्धौ परस्यावती-शब्दस्य उत्वम्, हे भवति ब्राह्मणीति । सम्बुद्धौ ह्रस्व इति ह्रस्वः । यदि भवतः सम्बुद्धावुत्वम् विधीयते भो ब्राह्मणौ ब्राह्मणा इति द्वित्व-बहुत्वविषये उत्वं न प्राप्नोति, उच्यते—नेदं भवतः उत्वं किं तर्हि निपातोऽस्ति यो भो शब्दस्तस्यैव प्रयोगः । यद्येवम् एकत्वेऽपि स एव प्रयोक्ष्यत इति किं योगारम्भेण, भगो अघो शब्दावपि निपातौ स्त इति तदर्थोऽपि यत्न आस्थेय इति चिन्त्यप्रयोजनं योगारम्भस्य ।

**अव्ययसर्वनाम्नः स्वरादन्त्यात्पूर्वोऽक् कः २।२।६३[2]**

नञ् वि-पूर्वादिणो न व्येतीति पचादित्वादच्, यच्चात्र वक्तव्यं तदव्ययसंज्ञा सूत्र एव उक्तम् । अज्ञाते कुत्सित इत्यादि । अज्ञातो विशेषणरूपेणावबुद्धः । कुत्सितः निन्दितः, अल्पोपचितपरिमाणः, दीर्घः प्रतियोगी ह्रस्वः कारुण्येन परानुग्रहोऽनुकम्पा । तत्र संज्ञानुकम्पयोः गम्यमानत्वात् । अज्ञातादीनां तु प्रकृत्यर्थविशेषणत्वात्[3] सर्वनामविभक्तेरित्यादिसर्वनाम्नो या विहिता विभक्तिः तस्याः यः स्वरः ततः पूर्वः क्वचिदक्-प्रत्ययो वेष्यते । त्वयका त्वयकि, मयका मयकि इति युष्मद् अस्मद् टा ङि त्वन्मदोरेकत्व इति त्वन्मदी आदेशौ, एत्वमस्थानिनीत्येत्वम्, विभक्तेः पूर्वमक्-प्रत्ययः क्वचिदिति वचनात् क्वचिद्विभक्तेः पूर्वमक्-प्रत्ययो न भवति, युष्मकाभिः अस्मकाभिः, युष्मकासु

१. उकारानुबन्धात्त्वीति ई-प्रत्ययः (मं०)
२. २।२।६४ (दु० वृ०)
३. विशेषणत्वम् (मं०)

अस्मकासु । युवकयोः आवकयो इति युष्मदस्मदोरक्-प्रत्ययः भिस्, सुप् आत्वं व्यञ्जनादौ इत्यात्वम् । ओसि पूर्ववदेत्वम् । आख्यातविभक्तेरपीति स्वरात्-पूर्वोऽक्-प्रत्ययो वेष्यत इति सम्बध्यते । कुत्सितः अश्वः अश्वक इति । कुत्सितायां क-प्रत्ययः । कथं तर्हि कुत्सितकः, अनुकम्पायां कः-प्रत्ययः । अथवा कुत्सितस्यैव या कुत्सा तस्याः, यथा च प्रकृष्टतम इति प्रकृष्टस्य प्रकर्षे तम-प्रत्ययः । नायमस्य कुत्सितत्वमिति । यदा तु कुत्सितत्वमेव कुत्स्यते तदा कुत्सायां कुत्सितक इति क-प्रत्ययः । संज्ञायां देवदत्तक इति ह्रस्वे कुत्सायां वा संज्ञायां क-प्रत्ययो न संज्ञामात्र इत्याहुः ।

**के प्रत्यये स्त्रीकृताकारपरे पूर्वोऽकार इकारम् २।२।६४**[1]

प्रतिपूर्वादिणः प्रत्यायन्त्यनेनार्थमिति पुंसि संज्ञायामिति घः । के ककारे प्रत्यये प्रत्ययस्थे पर इति । अयं भावः । इह क इति ककारमात्रं निमित्तम् । अकारस्तूच्चारणार्थः । न च ककारमात्रं प्रत्ययोऽस्ति इति सामर्थ्यात्प्रत्ययस्थः ककारः प्रत्ययशब्देनेह निर्दिश्यते । भवति हि तात्स्थ्यात्ताच्छब्द्यम्, यथा मञ्चाः क्रोशन्ति इति । यदि पुनः क इति संघातो गृह्यते प्रत्यय-शब्देन च सामानाधिकरण्येन स एव विशिष्येत ततो दन्तिकेत्यादावेव स्यात् । ककारस्याप्रत्ययत्वात् । तस्मात् ककारो वर्णः प्रत्ययस्थत्वात् प्रत्यय इत्युच्यते पूर्वमकार इति क-इत्यस्य सन्निहितत्वात् ततः पूर्व इति मन्तव्यम् । सर्विका विश्विकेति । अज्ञातादावक्प्रत्ययः । कारिका, हारिकेति । करोतीति वुण् अस्योपधाया इत्यादिवृद्धिः ननु सर्वत्रैवात्राकारेण व्यवधानादाकारपरः[2] ककारो न भवतीति कथमित्वं स्यात् । समानदीर्घत्वे सति अव्यवधानमिति चेत्,[3] न । स्वरादेश-परिभाषया स्थानिवद्भावाद् व्यवधानमेव । एवं तर्हि वचनसामर्थ्यात् स्थानि-वद्भावकृतं व्यवधानमाश्रीयत एव । यद्येवम्, अनेकवर्णजनितमपि व्यवधानं कस्मान्नाश्रीयते—ततश्च पुत्रकाम्यया[4] इत्यादावपि इत्वं त्रशब्दाकारस्य प्राप्नोति एकवर्णव्यवहिते विषये वचनं चरितार्थमनेकवर्णव्यवहितं विषयं नावगाहत इति चेत्, तन्न, यतो वचनेन तावदङ्गीकृतो व्यवहितो विषयः तत्र च व्यामूढं तद्व्यवहितविषयावगाहित्वेन प्रवर्तमानमिदमेकवर्णव्यवधानमनेक-वर्णव्यवधानमिति विवेकं नापेक्षत एव ततश्चानेकवर्णव्यवधानेऽपि तस्य प्रवृत्ति-

---

१. २।२।६५ (दु० वृ०)
२. पूर्वः (भं०)
३. इत्यत्र "न" इति न्यूनपाठः (भं०)
४. काम्येत्यादावपि (वा०)

स्स्यात्। अत्रोच्यते—स्त्रीकृताकारपर इति सप्तमीनिर्देशे सप्तम्यानिर्दिष्टे पूर्वस्येति परिभाषोपतिष्ठते। तत्र निर्दिष्टग्रहणस्यानन्तर्यार्थत्वात् अनन्तरे अकारे परे य ककारः तत्र परत इत्वेन भवितव्यम्। न चासावनन्तरोऽस्तीति वचनबलाद् व्यवधानमाश्रीयते तच्चैकेनैव वर्णेन कुतः अनेकवर्णव्यवधानमित्य-पेक्षया एकवर्णस्य व्यवहिते विषये आकारस्यानन्तर्यार्थस्त्वनेकवर्णव्यवहितस्तु यो विषयः तत्राकारस्यातिविप्रकृष्टत्वान्निर्दिष्टपरिभाषाया बाधप्रसङ्ग इति नासावस्य विषयः। यद्यपि चासौ परिभाषान्यत्र सावकाशा तथापि व्यक्ति-पक्षावलम्बनेनेह विषये तस्या अप्रवर्तमानायास्तावद्बाध उच्यते। तस्माद् वचनादेकवर्णव्यवधानमेवाश्रीयते, तत्र चेत्वमिति गतमेतत्। तस्मादिन्नन्ता-दिति। हेत्विन्नन्तात्। पुत्रकाम्येति काम्यप्रत्ययान्तात् शन्सु प्रत्ययाद् इत्यकार-प्रत्ययः। अस्य च लोपः, आम्-प्रत्ययः। भवत्ययं कात्पर आकारो न तु स्त्रियां कृतः। कृत-ग्रहणमप्याम्प्रत्ययस्यापि कस्यचित् ककारस्य परि-ग्रहार्थं तेन मामिका नारिका इति च सिद्धं भवति। ममेयमित्यस्मात् तस्येद-मित्यण्, तवकममकावेकवचन इति लोकोपचारान्ममकादेशः, आदिवृद्धिः, अजादिदर्शनादाप्प्रत्ययः। नरान्कायतीति कै गै इत्यस्मादातोऽनुपसर्गाड्डः, न तु कीर्तिषडनुबन्धात्त्वीस्त्रीकृताकारपरे इति सप्तम्यैव परत्वे लब्धे परग्रहणं विभक्तेः परस्मिन्नाकारे परे मा भूदिति। बहूदका नदी, उदकशब्दाद् या प्रथमाविभक्तिः बहुव्रीहौ कृते लुप्ता तां प्रत्ययलक्षणेनाश्रित्य विभक्तेः परो-ऽयमाकार इति इत्वं न भवति। पूर्वग्रहणं श्रूयमाणपूर्वत्व-परिग्रहार्थं तेनेहापि भवति बहूनि चर्माण्यस्यां बहुचर्मिकेति। समासान्तगतानामिति। ककार-स्समासान्तः, न लोपस्यालुप्तवद्भावात् क-पूर्वोऽकारो न भवतीति, न प्राप्नोति, श्रूयमाणपूर्वत्वपरिग्रहार्थात्तु पूर्वग्रहणादत्रापि भवतीति। केचित् कारवचनं तपरस्तत्कालस्य कारशब्दपरश्चेति तत्कालार्थं स्वरस्सवर्णस्य ग्राहक इति वचनाद्राकेत्यादौ[1] प्राप्तमप्याकारस्येत्वं न भवति। रा आदान इत्यस्मात् [2]कृदाधारान्विकलिभ्यः क इति क-प्रत्ययः। वेति वाम्शसोरित्यतः। सा च व्यवस्थितविभाषेति अन्यथा सर्वत्रेत्वविकल्पो भवेदिति भावः। यका सकेति यत् तद् पूर्वसूत्रेणाक्प्रत्ययः, सि, त्यदाद्यत्वम्, तस्य चेति सत्वम्। सूतिका पुत्रि-केति। स्वार्थे कः प्रत्ययः, आप्, वा इत्वम्। वृन्दारिकेति। वृन्दमस्यास्तीति। तदस्यास्तीति[3] आरक्-प्रत्ययः। तारकेति। तरतेः वुण्-प्रत्ययः वृद्धिः अन्य-

१. वचनाद्धाकेत्यादौ (वा०)
२. कृदाधारार्थिभ्यः कः (भं०)
३. तदस्यासन्त्वाद्या इत्यकारप्रत्ययः (भं०)

त्रेति। ज्योतिषोऽर्थात्। अष्टकेति। अशूङ् व्याप्तौ इष्यशिभ्यां तकन्निति तकन्। छशोश्चेति षत्वम्, टवर्गः, अष्टिकेति। अष्टौ परिमाणमस्या इति तमादित्वात् क-प्रत्ययः।

सखिपादो द्वितीयः[1]।

## तृतीयः पादः

**युष्मदस्मदोः पदं पदात्षष्ठीचतुर्थीद्वितीयासु वस्नसौ २।३।१**

युषि-असिभ्यां मदगित्यत्र यौ सिद्धौ युष्मदस्मच्छब्दौ तयोरनुकरणत्वेन युष्मदस्मदी इह निर्दिश्येते। ताभ्यामनुकार्येणार्थेनार्थवत्वात् विभक्तिमुत्पाद्य शब्दरूपापेक्षया नपुंसकलिङ्गतामाश्रित्य युष्मच्च अस्मच्च ते युष्मदस्मदीति विग्रहे कृते युष्मदस्मदोरिति निर्देशः। ओसि परतो लक्षणानुप्रवृत्तिरनुक्रियमाणरूपविनाशप्रसङ्गात्। पदशब्दो गोचरादिसूत्रेण च शब्दात् घ-प्रत्ययान्तः। षण्णां पूरणी षष्ठी संख्यायाः पूरणे इति डः। अन्तस्थो डेर्थोरिति थकारागमः टवर्गः, नदादित्वादीकारः प्रत्ययः। चतसृणां पूरणी चतुर्थी, पूर्ववड्ड-प्रत्ययः थकारागमः ईकारश्च। द्वयोः पूरणी द्वितीया, द्वेस्तीयः। वश्च नश्च तौ वस्नसौ स्वरूपेणार्थेनार्थवत्वाद् द्वितीयाद्विवचनान्तमेतत्। विसर्गाद्यभावः, स्वरूपभङ्गप्रसङ्गात्। वाम्शसोरित्यतो वेति वर्तत इति। तेन व्यवस्थितविभाषावाचित्वादन्वादेशविषयादन्यत्र विकल्पः। यथा वृत्तावुदाहृतम्। अन्वादेशे नित्यो विधिः। अथो वो ग्रामस्स्वम्, अथो नो ग्रामस्स्वम् इति। कः पुनरन्वादेशः। एकस्याभिधेयस्य पूर्वं क्रियादिसम्बन्धे शब्देन प्रतिपादितस्य द्वितीयं प्रतिपादनमन्वादेशः। (विद्यमानपूर्वात् प्रथमान्तत्वादन्वादेशेऽपि[2]) विकल्पः। अथो ग्रामे कम्बलो वः स्वम्, अथो ग्रामे कम्बलो नः स्वम्। अथो ग्रामे कम्बलो युष्माकं स्वम्, अथो ग्रामे कम्बलोऽस्माकं स्वम् इति तस्य यथासंख्यं वस्नसावित्येतावादेशौ वा भवतः इति वस्तुमात्रव्याख्यानमेतत्। अन्यथा पदशब्दस्य प्रथमान्तत्वात् वस्नसोश्च प्रत्ययान्तत्वात् पदं वस्नसौ वा प्राप्नोतीति युक्तं व्याख्यानं स्यात्। रुद्रो वः प्रभुरित्यादि। युष्मद्-अस्मद्-षष्ठी-

---

१. इति भट्टोग्रभूति कृते शिष्यहितान्यासे शिष्यालोकाभिधाने नामप्रकरणे द्वितीयः पादः। (पुष्पिका भं०)

२. न्यूनपाठः (भं०)

बहुवचनम् । एषां विभक्तावन्तलोपः । ([1]स्वरागमः सामाकम्, अनेन युष्माकमस्माकमित्यनयोः पदयोः वस्नसावादेशौ वा भवतः । रुद्रो वो दास्यतीत्यादि । युष्मदस्मद्-चतुर्थीबहुवचनम्, पूर्ववदन्तलोपः) भ्यसो भ्यम्, पूर्ववद् वस्नसौ । शिवो वो रक्षतीत्यादि । युष्मदस्मद्[2]-द्वितीया-बहुवचनम्, अन्तलोपः, आन्शसः, ततो वस्नसौ । गृहे यूयं वने वयमिति युष्मदस्मद्-प्रथमा-बहुवचनम्, यूयं वयं जसीति यूयं वयमादेशौ षष्ठीचतुर्थीद्वितीयास्विति व्युत्क्रमनिर्देशात् 'एकं दृष्ट्वा धनुष्पाणिं मानुषं समुपस्थितम्, राक्षसं बलमुत्सृज्य किं वो भीताः इवास्थिताः ।'' इत्यत्र यूयं-शब्दस्य वसादेशः सिद्धः, युष्मदस्मत्पदमिति कर्तव्ये युष्मदस्मदोरिति विभक्तिनिर्देशः श्रूयमाणविभक्तिकृत-पदत्व-परिहारार्थः । तेनेह न भवति, इह युष्मत्पुत्रो ददाति इहास्मत्पुत्रो ददाति । इह एतौ वस्नसौ द्वित्वैकत्व-विषये परिहृत्य कस्माद् बहुत्वविषयमेव एवावगाहेते इति यो मन्यते तं प्रत्याह—उत्तरत्रेत्यादि । वां नौ द्वित्वे त्वन्मदोरेकत्वे इत्यादिना च द्वित्वैकत्वविषये वांनावादीनामादेशानामभिधास्यमानत्वादर्थाद्वस्नसौ इमावादेशौ बहुत्वविषयमेवावगाहेते द्वित्वैकत्वयोर्बाधकं वांनावादीनां[3] विद्यमानत्वादिति भावः ।

**वां नौ द्वित्वे २।३।२**

इति लुप्त-द्वितीया-द्विर्वचनम् । वस्नसौ तु निवृत्ताविति विधेयान्तर-निर्देशात् षष्ठी-चतुर्थी-द्वितीयासु द्वित्वे स्थितमित्येतेन स्थानिनः पदस्य यद् द्वित्वे इति विभावेन विशेषणं तस्य षष्ठीचतुर्थीद्वितीयास्वित्येतदाधारभावेन विशेषणमिति दर्शयति । वा भवत इति पूर्ववत् सर्वत्र विकल्पसम्बन्धो योज्यः । शिवो वां स्वामीत्यादि । युष्मदस्मत् षष्ठी-द्विर्वचनम्, युवावौ द्विवाचिनोरिति युवावौ, एत्वमस्थानिनीत्येत्वम्, अनेन[4] (वांनावादेशौ युवयोरावयोरिति युवावादेशौ) । शिवो वां दास्यतीत्यादि । युष्मदस्मद्, चतुर्थीद्विर्वचनम्, पूर्ववत् युवावौ, आत्वं व्यञ्जनादावित्यात्वम् । ततो वां नौ शिवो वो रक्षतीत्यादि । युष्मदस्मद्, द्वितीयाद्विर्वचनम्, पूर्ववत् युवावौ, अमो चाम् इत्यकारस्याम्-भावः । ततो वांनौ कीदृशौ युवां शोभनौ आवाम् इति प्रथमाद्विर्वचनस्यामादेशः ।

---

१. न्यूनपाठः (भं०)
२. न्यूनपाठः (भं०)
३. नावित्येवमादीनाम् (भं०)
४. युवयोरावयोरित्येतयोः पदयोः वांनावादेशौ (भं०)

**त्वन्मदोरेकत्वे ते मे त्वा मा तु द्वितीयायाम् २।३।३**

त्वन्मदोः स्वरूपेणार्थेनार्थवत्वाद्विभक्तिमुत्पाद्य शब्दस्वरूपापेक्षया नपुंसकत्वात् त्वच्च मच्च, ते त्वन्मदीति विग्रहः। त्वदित्यस्य पदान्ते धुटामिति प्रथमः, पञ्चमे पञ्चमानिति नत्वम्, ते मे इति लुप्तद्वितीया-द्विर्वचनम्। एत्वं। त्वा मा इत्यपि। अत्रैकस्मिन् सूत्रे त्रीणि सूत्राणीति सूत्रार्थभेदादिति[1]। तथा च सूत्रभेदद्योतनफलस्तु शब्द उपादीयते। अत्रेत्यादि। त्वन्मदोरेकत्व इत्येतत् सूत्रे युष्मदस्मदी एवाभिसम्बध्येते। पदं पदादित्यादिनिवृत्तम्, एकत्वावग्रहणे त्वन्मदोरविशेषेणेष्यमाणत्वात्। यद्येवम्, विधीयमानत्वात् तयोः प्राधान्यमिति विधीयमानस्य विभक्त्या प्रथमया[2] निर्देशो न्याय्यः। तत् कथं त्वन्मदोरिति भूतविभक्त्या षष्ठ्या निर्देश इत्याह—त्वन्मदोरिति चेयं षष्ठीत्यादि। सत्यम्, प्राप्ता प्रथमा, तस्यास्तु प्रसङ्गे विचित्रा सूत्रस्य कृतिराचार्यस्येति वृत्तिशब्दाध्याहारेणायं त्वन्मदोरिति षष्ठ्यानिर्देशः। तेन युस्मदस्मदोः स्थाने त्वन्मदोः प्रवृत्तिर्भवतीति सूत्रार्थो जायते। यत्तु युष्मदस्मदोर्यथासंख्यं त्वद्-मद्-इत्येतावादेशौ भवत इति सूत्रार्थ-रचना-भावस्तु मात्रकथन-परत्वेनेत्यदोषः। अथैकत्व-विषये त्वन्मदोः [3]पदं ते मे आदेशौ प्राप्नुतः इति कस्मान्न व्याख्यायते, नैवं शक्यम्। त्वन्मदोरलब्धसत्ताकत्वात् शास्त्रान्तरात् तयोस्सत्ता प्रतिलम्भ इति चेत्, न। तत्र [4]तयोरकारान्तयोरादेशत्वेनाश्रीयमाणत्वात्। तथा चोक्तम्, त्वमावेकवचन इति इहैव वृद्धकुमारीवरन्यायेन युष्मदस्मदोः एकत्वे त्वन्मदी कल्प्येते इति चेच्छब्दान्तरकल्पनापि त्वन्मदोः सम्भाव्येत्। ततश्च तद्विषये युष्मदस्मदर्थानन्वयान्मध्यमोत्तमव्यवस्था न घटते तस्मात् त्वन्मदोरेकत्वे इत्येतावता सूत्रेणावश्यमेकत्वे युष्मदस्मदोः त्वन्मदी विधातव्ये त्वां मामिति। अमि परे त्वन्मदी, अन्तलोपः। अमो चाम्, त्वदीय इति इदमर्थे ईय-प्रत्ययः। एवमतिक्रान्तो त्वाम् अतित्वाम्, अतिमाम्, अमो चामित्योकारस्याम् भावः। अतिक्रान्तं त्वामतित्वाम् अतिमाम्, पूर्ववदाम् (अतिक्रान्तौ[5] त्वाम्, अतित्वाम् अतिमाम्। द्वितीयाद्विर्वचनस्याम्भावः) अतिक्रान्तान् त्वाम्, अतित्वान्। अतिक्रान्तान् माम्, अतिमान्। आन्शसः, अतिक्रान्तेन त्वाम्, अतित्वया। अतिमया। एत्वमस्थानिनीत्येत्वम्। अतिक्रान्ताभ्याम् त्वाम्,

---

१. भावादिति भावः (वा०)
२. प्रथमायाः (वा०)
३. पदान्ते मयावादेशौ (भं०)
४. तमोर्मकारान्तयोरादेशत्वेनाश्रूयमाणत्वात् (भं०)
५. न्यूनपाठः (भं०)

अतित्वाभ्याम्, अतिमाभ्याम्। आत्वं व्यञ्जनादावित्यात्वम्। अतिक्रान्तै-स्त्वाम् अतित्वाभिः अतिमाभिः। पूर्ववदात्वम्। अतिक्रान्ताभ्याम् त्वाम् अतित्वाभ्याम्, अतिमाभ्याम्। चतुर्थीद्विवचनमेतत्। अतिक्रान्तेभ्यः त्वाम् अतितुभ्यम, अतिमभ्यम्। भ्यस्भ्यम्। अतिक्रान्तात् त्वाम् अतित्वत्, अति-मत्। अत्पञ्चम्यद्वित्व इति ङसेरत् आदेशः। अतिक्रान्ताभ्यां त्वाम् अति-त्वाभ्याम् अतिमाभ्याम्। अतिक्रान्तेभ्यस्त्वाम् अतित्वत् अतिमत्। पूर्ववद् भ्यसो-ऽदादेशः। अतिक्रान्तयोस्त्वाम् अतित्वयोः, अतिमयोः। अतिक्रान्तानां त्वाम् अतित्वयाम्, अतिमयाम्। अतिक्रान्ते त्वाम् अतित्वयि, अतिमयि। अति-क्रान्तयोः त्वाम् अतित्वयोः अतिमयोः। अतिक्रान्तेषु त्वाम् अतित्वासु अति-मासु। इत्थं सर्वत्रैकत्वे त्वन्मदी भवतः। यत्र पुनर्बाधकः विषयः तत्र बाधकैः त्वमहमादिभिः बाध्यमाने मती सत्यप्येकत्वेन प्रवर्तन्ते। अतिक्रान्तस्त्वाम् अतित्वम् अत्यहम्। अतिक्रान्ताः त्वामतियूयम् अतिवयम्। अतिक्रान्ताय त्वाम् अतितुभ्यम् अतिमह्यम्। अतिक्रान्तस्य त्वाम् अतितव अतिमम। युष्मदीयः अस्मदीय इति पूर्ववदीय-प्रत्ययः। त्वन्मदी न भवतौ युष्मदस्मदोर्बह्वर्थवृत्ति-त्वात्। रुद्रस्ते स्वामीत्यादि। युष्मदस्मद् ङस् तव मम ङसीति युष्मदस्मदोस्स-विभक्तिकयोः तव ममादेशौ तयोरप्यनेन ते मे यौ रुद्रस्ते दास्यतीत्यादि। युष्मदस्मद् ङे। तुभ्यमह्यौ ङयीति तथैव तुभ्यं मह्यमादेशौ सविभक्तिकयो-स्तयोरपि तेमयौ, रुद्रस्त्वां रक्षतीत्यादि। युष्मदस्मद् अम् त्वन्मदोरेकत्वे इति युष्मदस्मदोः त्वन्मदी, अन्तलोपः, अमो चाम् अनेन त्वामा आदेशौ।

**न पादादौ २।३।४**

पादशब्दः पद गतावित्यस्य, पदरुजेति कर्तरि घञ्-प्रत्ययान्तः। पादस्य, श्लोकपादस्येति। एतेनास्य लक्षणस्य प्रायेण भाषाविषयत्वात्पादशब्दः श्लोक-पादस्य ग्राहकः न तु ऋक्पादस्येति दर्शयति। तस्य वस्नसादयः आदेशाः न भवन्तीति। एतेन पादादौ सर्वे वस्नसादयो निषिध्यन्ते न त्वनन्तरो त्वमावेति[1] दर्शयति। एतच्च त्वामा (तु द्वितीयायां[2] न पादादावित्येक)योगकरणा-ल्लभ्यते। यद्येवम्, त्वन्मदोरपि पादादौ निषेधः स्यात्। भवेद् यदि पदग्रहण-मिह नाभिसम्बध्यते तस्मिंस्तु अभिसम्बध्यमाने यत् कार्यं प्राप्नोति तन्नि-षिध्यते। न च त्वन्मदी पदस्य प्राप्ते इति तयोर्निषेधो न भविष्यतीति। भूया-दित्यादि। अत्र युष्माकमस्माकमित्येतयोरष्टाक्षरस्य श्लोकपादस्यादौ वर्त-

१. त्वामावेति (६)
२. द्वितीयायामपादाक्षावित्येक (मं०)

मानयोः वस्नसौ निषिध्येते । एवं प्रणमामीत्यादावपि श्लोकत्रये युवयोरावयो-रित्यादेः पदस्य वां नावादयो निषिध्यन्ते । ह्रस्येत्यादि । अत्र पान्तु वो विततत्विष इति यः पादः तस्यादौ युष्मानित्येतत् पदं नावस्थितमिति तस्य वमादेशौ निषिध्येते । आमन्त्रितवदादित्यादि । कथं पुनरेतल्लभ्यते, नेति योग-विभागात् । तथा च नाना-वाक्येऽपि निषेधः । ओदनं पच युष्माकं भविष्यति, ओदनं पच अस्माकं भविष्यति । अत्र ओदनं पच इत्येतदेकं वाक्यम्, युष्माकं भविष्यतीति द्वितीयम्, एवमस्मद्विषयेऽपि नाना-वाक्यता कृता ।

**चादि योगे च २।३।५**

योगशब्दो युजेर्भावघञन्तः, युष्मदस्मदोः पदस्य चादिभिर्योगो इत्येतेन युष्मदस्मदोः पदस्य यदा चादिभिर्योगो भवति तदा निषेधोऽयम् । यदा चादि-युक्तेन[1] केनचित्पदेन युष्मदस्मदोः पदं[2] युज्यते, तदा न निषेध इति दर्शयति तेन ग्रामश्च ते स्वम् । नगरं च ते स्वम् । अत्र ते-मयौ न निषिध्येते । नह्यत्र युष्मदस्मदोः पदं च शब्देन युक्तं किं तर्हि ग्रामनगरे तयोस्समुच्चीयमानत्वात् । च शब्दयुक्ताभ्यां तु युष्मदस्मत्पदं युक्तमिति निषेधो न भवति । युष्माकम-स्माकमिति सामाकम्, युष्मभ्यम्, अस्मभ्यम् । भ्यस्भ्यम् । युष्मान् अस्मान् ।

**आन्शसः २।३।६**

युवयोरावयोरिति । एत्वमस्थानिनीत्येत्वम्, युवाभ्याम् आवाभ्यामिति । आत्वं व्यञ्जनादावित्यात्वम्, युवाम् आवामिति । अमो चाम् । च वा ह अह एवेत्यादि । एतच्च चादिभिरिति कर्तव्ये योग-ग्रहणात् अभीष्टचादियोगपरि-ग्रहार्थाल्लभ्यते । नान्यैरिति नो प्रभृतिभिः । दर्शनार्थे धातुभिरित्यादि दर्शनं ज्ञानमर्थो येषां धातूनामीक्षिप्रभृतीनां तैः पदस्य योगे वस्नसादयो नेष्यन्ते एतच्च च-शब्दाद्विषयान्तरेऽपि निषेधार्थात् लभते । यद्येवम्, यत्र दर्शनार्थैः धातुभिः पदान्तरं युक्तं तेन च युष्मदस्मत्पदं तत्र युक्तयुक्ते कथं प्रतिषेधः । ग्रामस्तव स्वमीक्षते, ग्रामो मम स्वमीक्षत इति । अत्र हि ज्ञानार्थेन[3] ईक्षिणा संयुक्तम् । तेन युष्मदस्मदोः पदमुच्यते, नेत्यस्य स्वातन्त्र्येणाभिसम्बन्धात् । युक्तयुक्तेऽपि प्रतिषेधो विज्ञास्यते ।

---

१. योगेन (भं०)

२. पादो (भं०)

३. ज्ञानार्थेनाक्षिणा (?)

**एषां विभक्तावन्तलोपः २।३।७**[1]

एषां ग्रहणेन युष्मदस्मदी त्वन्मदी च परामृश्येते, त्वन्मदोरेव ह्यानन्तर्या-दनुवृत्तिस्स्यात्। विभक्त्यधिकार इत्यादि। तस्मात्परा विभक्तय इत्यतो विभक्तिग्रहणादिह विभक्तिप्रस्तावे यत्पुनर्विभक्तिग्रहणं क्रियते तच्च श्रूयमाण-विभक्तिप्रतिपत्त्यर्थं, तेन समासविषये विभक्तौ लुप्तायां यत्र प्रत्ययलोपपरि-भाषया विभक्तिसत्ता तत्रान्तलोपो न भवति। नन्वसति विभक्तिग्रहणे षष्ठी-चतुर्थीद्वितीयानामनुवृत्तिस्स्यात्। ततश्च विभक्त्यन्तरे लोपो न प्राप्नोति। नायं दोषः। विशेषादिष्टपरिभाषया विभक्तिग्रहणस्यैवानुवृत्तेः। यद्येवम्, त्वत्तो मत्तो युष्मत्तो अस्मत्तो इत्यत्रापि प्राप्नोति, भवति ह्ययं तस्प्रत्ययो विभक्तिः विभक्तिसंज्ञा विज्ञेया इति वचनात्, नैतत् अस्ति। तसादीनां हि विभक्तिसंज्ञा सर्वनाम कार्य एवेति वक्ष्यते न चायमन्तलोपः सर्वनामकार्यम् असर्वनामत्वेऽपि अतित्वदित्यादौ तस्य दर्शनात्। अतिक्रान्तात् त्वाम् अतित्वत्, अतिमदिति। ङसेरत्पञ्चम्यद्वित्वे इति अदादेशः नात्रोत्तरपदं सर्वनाम, कुतः, अप्राधान्यात्। अप्रधानत्वञ्चातिक्रान्तार्थस्य प्राधान्यात्। अप्राधान्येन च सर्वादीनामसर्वनामत्वमित्युक्तं प्राक् तस्मात् त्वत्त इत्यादिविभक्तिपरत्वं नास्तीत्यन्तलोपो न भवति। अन्तग्रहणं विस्पष्टार्थमिति परिभाषातोऽन्तत्वाव-बोधे सत्यवैस्पष्ट्यं स्यादित्यर्थः। त्यदाद्यत्वेन सिद्धत्वात् योगारम्भो द्विपर्यन्ताः त्यदादय इत्यस्यार्थस्य ज्ञापनार्थः। तेन भवानित्यादौ त्यदादित्वं न भवति।

**युवावौ द्विवाचिनो २।३।८**[2]

इह केचिद् द्विवाचिष्विति पठन्ति। तत्रैव पाठं परिहृत्य कस्माद् द्विवा-चिनोरिति पठन्तीति पृच्छति। अथेत्यादि। नैवं शक्यम् इत्युत्तरयति। कथं न शक्यमित्याह—इह हीत्यादि। यदि द्विवाचिष्वित्येव पठ्येत ततो बहुवचनान्त-मेतत् युष्मदस्मदी परिहृत्य प्रत्ययविशेषणे स्यात् ततश्च युवामतिक्रान्तैरति-युवाभिः[3] अत्यावाभिरित्यादौ युवावौ न भवेताम्, विभक्तेर्द्विवाचिन्याः परस्या-सम्भवात्। कस्य पुनरत्र प्रयोगद्वये द्विवाचित्वं येनात्र युवावौ प्रवृत्तावित्याह—अत्र हीत्यादि (युवामतिक्रान्तैरावामतिक्रान्तैरिति वाक्यावस्थायां यत् युष्म-दर्थस्य द्वित्वमगम्यते। तेनात्र युष्मदोर्द्विवचाचित्वात्। ततोऽत्र प्रयोगद्वये

१. २।३।६ (दु० वृ०)
२. २।३।७ (दु० वृ०)
३. न्यूनपाठः (भं०)

युवावौ भवतः विभक्तिस्तु न द्वित्वार्थमभिवर्तते। बह्वर्थवाचिनीत्वात्तस्याः तस्माद् द्विवाचिनोरित्ययमाचार्यस्य पाठः। किमेवं सतीष्टं सिध्यतीत्याह—तस्मादित्यादि। यस्माद् द्विवाचिनोरित्येवं पाठः तस्माद् युष्मदस्मदोरेतद्विशेषणं जायते। तेन द्वयोर्द्विवाचित्वे सति सर्वत्रैकत्व-द्वित्व-बहुत्वाभिधायिन्यपि प्रत्ययपरतो युवावौ भवतः। अतिक्रान्तो युवामतियुवामत्यावाम्। अतिक्रान्तं युवामतियुवामत्यावाम्। अतिक्रान्तान् युवान् अतियुवान् अत्यावान् अतिक्रान्तेन युवामतियुवया, अत्यावया, अतिक्रान्ताभ्यां युवामतियुवाभ्याम् अत्यावाभ्याम्। अतिक्रान्तेभ्यः युवाम् अतियुवभ्यम् अतिआवभ्यम्। अतिक्रान्ताद्युवाम् अतियुवत्, अत्यावत् अतिक्रान्ताभ्याम्[1] युवामतियुवाभ्याम् अत्यावाभ्याम्। अतिक्रान्तेभ्यो युवामतियुवत् अत्यावत्। अतिक्रान्तयो युवामतियुवयोरत्यावयोः अतिक्रान्तानां[2] युवामतियुवयाम् अत्यावयाम्। अतिक्रान्ते युवामतियुवयि अत्यावयि। अतिक्रान्तयोः युवामतियुवयोः अत्यावयोः (अतिक्रान्तेषु युवामतियुवयोरत्यावयोः[3] अतिक्रान्तानां युवामतियुवायाम् अत्यावयाम्। अतिक्रान्ते युवामतियुवयि अत्यावयि। अतिक्रान्तयोः युवामतियुवयो अत्यावयोः) अतिक्रान्तेषु युवामतियुवासु अत्यावसु। किं सर्वत्र युवावौ भवतः, न इत्याह—त्वमहम्, यूयं वयम्, तुभ्यम् मह्यम्। तव मम इत्येतानादेशान्वर्जयित्वेति। सिप्रभृतौ विभक्तिविशेषे विधीयमानाः त्वमहमादयो बाधकाः भवन्तीति बाधकविषयत्वात् युवाभ्यामेषां विषयो वर्जितः[4] इत्यर्थः। विभक्तावित्येव युवयोः पुत्रो युष्मत्पुत्रः। एवमस्मत्पुत्र इति। तु-शब्दो विशेषद्योतनार्थोऽनुवर्तते तेन युवावाद्यादेशेषु सञ्जातेषु पश्चाद् अक्-प्रत्ययः। युवकामावकामिति।

**अमौ चाम् २।३।९**[5]

अमाविति लुप्तषष्ठी-द्विर्वचनम्। त्वाम्मामिति। त्वन्मदोरेकत्व इति युष्मदस्मदोः त्वन्मदी, एषां विभक्तावन्तलोपः ततश्च प्रथमाद्विर्वचनस्यौकारस्य द्वितीयाद्विर्वचनस्यैव स्यादिति। अमा साहचर्यादिति शेषः। ततश्च प्रथमाद्विर्वचने आम्-भावो न प्राप्नोतीत्याह—व्याप्तेर्न्यायादित्यादि। आम्भा-

---

१. न्यूनपाठः (भं०)

२. न्यूनपाठः (भं०)

३. प्रमादात् पुनर्टङ्कितः।

४. वर्ज्येत् (भं०)

५. २।३।८ (दु० वृ०)

वेन प्रथमा-द्विर्वचनमपि लक्ष्ये व्याप्तमिति लक्ष्यमूलत्वाद् व्याकरणस्य, तदपि गृह्यते तन्त्रेण वा न्यायेन द्वौ ओकारौ निर्दिष्टौ, च-शब्दाद्वा प्रथमाद्विर्वचनमपि ग्रहीष्यते ।

**आन्शसः २।३।१०**[1]

आनो नकारस्य लक्षणाप्रवृत्तिः स्वरूपभङ्गभयात् युष्मानस्मानित्यनयोः रूपयोरन्तलोपे कृते शसि[2] च सस्य नः इत्यनेनैव सिद्धिरस्तीति अपार्थको योगारम्भ इति यो मन्यते तं प्रत्याह—शसि सस्य च न इत्यनेनैव सिद्धिरिति कुतो हेतोरित्याह - युष्मान्कुलानीत्यादि । असत्यारम्भे यदा युष्मदस्मदोर्नपुंसकाप्रवृत्तिरत्वं तदा जश्शसोश्शिः इति ताभ्यां परस्य विशेषेणोच्यमानशिभावः प्राप्नोति ततस्तस्य निवृत्त्यर्थोऽयमारम्भस्स्यात्, नैतत्, नित्यत्वाच्छिभावस्य प्रवृत्तेः । स हि कृतेऽप्येत्वे प्राप्नोत्यकृतेऽपि । एत्वं तु नित्यं तस्य शिभावे सत्यप्रवृत्तेः । अथापि नित्यं शिभावं बाधित्वा प्रकृत्याश्रयेणान्तरङ्गत्वात् एत्वप्रवृत्तिरुच्यते । तर्ह्येत्वेऽपि प्रसक्ते शिभावो नपुंसकाद्विधीयमानो न निराकर्तुं शक्यत इति तत्प्राप्तिलक्षण एवासत्यारम्भे दोषः उक्त इति शिभावनिवृत्त्यर्थ आरम्भः । ननु युष्मदस्मदोः स्त्रियां पुंसि नपुंसके च विशेषादर्शनादलिङ्गत्वं स्मर्यते, यथा चाहुः—अलिङ्गे[3] युष्मदस्मदी । इत्येवञ्च कथं ताभ्यामुत्तरस्य शसोः नपुंसकविषयो विधीयमानः शिभावः प्राप्नुयात् तदाहुः—लिङ्गविशेषादर्शनादलिङ्गत्वमनयोर्लिङ्गसामान्ये तु नपुंसकेन योगः केन विनिवार्यते, द्रव्यवचनत्वाद् द्रव्यस्य च लिङ्गसम्बन्धात् । अत पूर्वाचार्यैरन्यत्र नपुंसकादेशेभ्यो युष्मदस्मदोर्विभक्त्यादेशविप्रतिषेधेनेति अभिधाय युवां ब्राह्मणकुले इत्यादौ नपुंसकनिबन्धनम् औकारस्यैत्वं बाधित्वा परत्वादामादेशो व्याख्यातः, तच्चैतदसति नपुंसकत्वयोगेन घटते । तस्मादस्त्येव सत्यारम्भे शिभावस्य प्राप्तिः । ननु युष्मानित्यादि रूपं शसो नकार एवादेशे कृते घोषवन्निमित्ते च दीर्घत्वे सति सिद्धमिति किमाकारविधानेन, नैतत्, यस्मिन्विधिस्तदादाविति वचनाद् घोषवदादौ दीर्घत्वमुच्यमानं कथं घोषवन्मात्रे स्यात् आदिवद्भावाद् भविष्यतीति चेत्, तर्ह्येवंविधो घोषवदादिर्गौण इति गौणत्वाशङ्कापि स्यादित्यकारो विधीयते । अन्निति कर्तव्ये दीर्घोच्चारणमकारलोपबाधनार्थम् । अकारोच्चारणं त्वादेशनिवृत्त्यर्थमित्यपि कश्चित् सम्भावयेत् ।

---

१. २।३।६ आम्शसः (दु० वृ०)

२. न्यूनपाठः (भं०)

३. अलिङ्गी (वा०)

त्वमहं सौ सविभक्त्योः २।३।११[1]

त्वमहमिति लुप्तप्रथमाद्विर्वचनम् । एवमुत्तरत्रापि वाच्यम् । सविभक्त्यो-रित्यत्र नुरागमो न भवति, भाषितपुंस्कं पुंवद्वेति वचनात् श्रूयमाणविभक्ति-प्रतिपत्त्यर्थेन विभक्तिग्रहेणेहाभिसम्बध्यमानेन सिर्विशेष्यते सौ विभक्ताविति । तथा च त्वं प्रधानं यस्य सः त्वत्प्रधानः मत्प्रधान इत्यत्राश्रूयमाणाविमौ त्वमहमौ न भवतः । एवमुत्तरत्रापि ज्ञेयम् । अन्ये तु—श्रूयमाणविभक्तिके मुख्ये विषये वचनं चरितार्थं विषयान्तरं नावगाहत इति मन्वानः किं किं विभक्तिग्रहणानु-वृत्त्येति व्याचक्षते । सिनेति कर्तव्ये सविभक्तिग्रहणं वैचित्र्यार्थम् । उत्तरत्रापि जसीत्यादिः करिष्यते ।

अत्पञ्चम्यद्वित्वे २।३।१२[2]

अद्वित्व इत्यनेन श्रूयमाणा पञ्चमी विशेष्यते न त्वनुवर्तमाने युष्मदस्मदी तेन तयोः द्व्यर्थाभिधायित्वेऽपि अदादेशः । अतिक्रान्तात् युवामतियुवदत्याव-दिति । ननु तकार एवादेशः क्रियतां स च क्वचित्पूर्वापरो सर्वाविति सर्वादेशो विज्ञास्यते । तत्किमकारोच्चारणेन, सत्यम्, बहुत्वविषये धुट्येत्वाशङ्का स्यात् । ङसिभ्यसोरदिति कृते प्रकरणक्रमेण सविभक्तिकयोः युष्मदस्मदोरयमादेश इति कश्चित् सम्भावयेत् ।

भ्यस् भ्यम् २।३।१३[3]

चतुर्थी बहुवचनमित्यन्यस्य भ्यसोऽदादेशेनावष्टब्धत्वादिति भावः । अथादादेशविषयस्यैव भ्यसः पाक्षिकोऽयमादेशः कस्मान्न भवति, न भवति । विभक्त्युच्चारणक्रमप्रत्यासत्त्या चतुर्थीबहुवचनस्यैव पूर्वं बुद्धौ परिस्फुरतो भ्यसादेशेन सम्बन्धात् । युष्मभ्यमित्यादि धुट्येत्वप्रवृत्तेरुक्तः तद्विधौ परिहारः ।

सामाकम् २।३।१४[4]

अर्हं प्रत्ययनिर्देशादिति । अर्हेऽर्थे यो लोप्य[5] इति य-प्रत्ययेन निर्देशः तस्माल्लोपार्हस्य युक्तशब्दस्यापि लोपः । अथ किमर्थं सामिति सकार उपा-दीयते, नहि युष्मदस्मद्भ्यां कृतान्तलोपाभ्यां पर आम्प्रत्ययः सकारागमं

---

१. २।३।१० (दु० वृ०)
२. २।३।१४ भ्यसभ्यम् पाठः।
३. २।३।१५ (दु० वृ०)
४. २।३।१६ (दु० वृ०)
५. लोप्या इत्यर्हं (मं०)

व्यभिचरति । अतो व्यभिचारादामाकमित्यत्रापि कृते आगमस्तद्ग्रहणेन गृह्यन्ते इति वचनात् स सकारागमस्यैवामः आकमादेशो विज्ञास्यत इति किं सकारोपादानेन, प्रिययुष्माकमित्यादावपि[1] प्राप्नोति इति चेत्, न। भविष्यति, प्रत्यासत्तेः युष्मदस्मद्गत एव बहुत्वे य आम्प्रत्ययः तस्यैव स्थानित्वं विज्ञास्यते। प्रिययुष्मायामित्यादावित्यत्र चान्यपदार्थगत बहुत्वावग्रहेणायमाम्प्रत्यय इत्यत्र न भविष्यतीत्याकलय्य पूर्वपक्षयति—ननु चेत्यादि। उच्यत इत्यादिना परिहरति। अयं भावः। सागमस्याकमादेशः। सत्यम्। लभ्यते, किन्तु तस्य स्थानिवद्भावादाम्ग्रहणेन ग्रहणमस्तीति पुनरपि सकारागमो यावत्सम्भवः तावद्विधिरिति वचनात्प्राप्नोति, स प्राप्नुवन्सामिति विशेषणोपादानान्निवृत्त्यर्थं वर्त्यते। कथम् उच्यते—आदेशप्रवृत्तेः पूर्वं स्थान्यवस्थायां य आम्प्रत्ययः तस्य सागमस्याकमादेशार्थं पूर्वोक्तयानीत्यनेनेदं विशेषणोपादानम्। आदेशात् किं तर्हि उत्तरकालं यः सकारागमः प्राप्नोतीति सः स्थानिसहभावेनोपादीयमानस्सन् स्थानिविनिवृत्तौ भाव्यपि निवर्तते। विफलं हि अन्यथा सामिति विशेषणं स्यात्। तस्मादाकमादेशे कृते पुनः स्वरागमो भवन्नपि माश्रावीति सामिति क्रियते। ननु कृतेऽपि आगमे पुनस्तत्प्रवृत्तावतिप्रसङ्गः, नैष दोषः, तेषां द्वौ द्वाविति ज्ञापकात् श्रूयमाणागमे आयि परे पुनरागमस्याप्रवृत्तेः। आकमो दीर्घोच्चारणमकारलोपनिवृत्त्यर्थम्। नासावकारोच्चारणसामर्थ्यात् भविष्यतीति चेत्, न। धुट्येत्वनिवृत्त्यर्थमकारोच्चारणं स्यात्। अकारलोपस्तु भवेदेव, एत्वविधावेत्वपरिहारानुसरणे तु प्रतिपत्तिगौरवं स्यात्।

**एत्वमस्थानिनि २।३।१५**[2]

स्थितिस्स्थानमिति भावेऽर्थे युट्, आदेशस्य स्थानं विद्यते यत्र स स्थानीति। तदस्यास्तीति सप्तम्यर्थे पीतिकरणादिन्प्रत्ययः। अथादेशस्येत्येतत् कुतः, आ आदेशसम्बन्धेनैव शब्दस्य स्थानित्वव्यपदेशप्रवृत्तेः। अविद्यमानस्स्थानी यस्येति बहुव्रीहिः। कस्य च विद्यमानः स्थानी यस्यादेश इत्येष व्यपदेशो न सम्भवति। यथा, टा प्रत्ययस्यान्यस्य वा यस्य पुनरादेशव्यपदेशसम्भवः। तस्यावश्यं स्थानिना भवितव्यम्। तेन स्थानिनीत्यस्याकृतादेश इत्यर्थो जायते। त्वया मयेति त्वन्मदोरेकत्व इति त्वन्मदी अकारस्यानेनैत्वं त्वत् मत् इत्यादि आदेशस्यात्र स्थानी विद्यत इति न भवति विभक्तावप्युच्यमानमेत्वं स्थानिद्भावात् स्यात्। त्व प्रत्ययनिर्देशोऽसन्देहार्थः।

---

१. प्रिययुष्मायामित्यादावपि (?)

२. २।३।१७ (दु० वृ०)

**आत्वं व्यञ्जनादौ २।३।१६**[1]

एत्वस्य बाध इति पूर्वसूत्रेण प्राप्तस्य युष्मभ्यमस्मभ्यमिति भ्यस्भ्यम् । त्व-प्रत्ययनिर्देशः आकारस्योत्तरत्र यथा श्रुतरूपप्रतिपत्त्यर्थः । तेनाष्टनो नकारस्यान्तरतम्यात्सानुनासिकमात्वं न भवति । यस्मिन्विधिस्तदादौ तत्कार्यमित्यादिग्रहणे लब्धे तदुपादानं विस्पष्टार्थम्, श्रूयमाणव्यञ्जनादिविभक्तिपरिग्रहार्थं तु न भवति विभक्तिग्रहणानुवृत्तेरेव लुप्तायां व्यञ्जनादौ विभक्तावात्वनिवृत्तेस्सिद्धत्वात् । युष्माभिः कृतं युष्मत्कृतं, अस्माभिः कृतं अस्मत्कृतमिति ।

**रैः २।३।१७**[2]

लुप्तषष्ठीकमेतत्, रायमतिक्रान्ताभ्यामतिराभ्यां कुलाभ्यामित्यत्र कृतेऽपि नपुंसकह्रस्वत्वे आत्वं भवति, एकदेशविकृतस्यानन्यत्वात् । यद्येवम्, रायमतिक्रान्तेनातिरिणा कुलेनेत्यत्रापि नामिनः स्वर इति न्वागमे कृते प्राप्नोति सन्निपातपरिभाषया न भविष्यति । कथं हि नामिनिमित्तं व्यञ्जनादित्वं नामिनमात्वे कृते विहन्यात् । रायमतिक्रान्तं कुलमतिरीत्यत्र तु सौ लुप्तेऽपि विरामव्यञ्जनादावुक्तमिति वचनात्प्राप्तमप्यात्वं न भवति साक्षाद् व्यञ्जनादेः विभक्तेरभावात् ।

**अष्टन् सर्वासु २।३।१८**[3]

अष्टानामिति संख्यायाः ष्णान्तायाः इति नुः, अनेन नस्यात्वं सर्वग्रहणं सर्वासु शब्दव्यक्तिपरासु । यथादर्शनमात्वार्थम् । तेनाष्टसु कपालेषु संस्कृतमष्टाकपालं हविः । अष्टावक्र इत्यादि सिद्धम् । नन्वसति सर्वग्रहणे व्यञ्जनादिग्रहणमभिसम्बध्यते तथा च प्रिया अष्टौ ययोस्तौ प्रियाष्टावित्यादौ स्वरादावित्यात्वम् न प्राप्नोति । नैतत् अस्ति, उत्तरसूत्रेणाष्टनः कृतात्वपरयोः जश्शसोरौत्वविधानात् ज्ञापकात् स्वरादावप्यात्वं भविष्यति ।

**औतस्माज्जस्शसोः २।३।१९**[4]

जस्शसोरौकारादेशो भवतीति क्वचित्पूर्वापरौ सर्वाविति सर्वयोः । अष्टौ

---

१. २।३।१८ (दु० वृ०)
२. २।३।१९ (दु० वृ०)
३. २।३।२० (दु० वृ०)
४. २।३।२१ (दु० वृ०)

तिष्ठन्ति अष्टौ पश्य इति । अष्टन् जस् शस् पूर्वेणात्वम् (अनेन[1] जस्शसोरौत्वं) नन्वानन्तर्यादनुवर्तत एवाष्टन्शब्दः इति किं तत्परामर्शार्थेन तस्माद् ग्रहणे-नेत्याह—तस्माद् ग्रहणेनेत्यादि । विशिष्टस्य कृतात्वस्याष्टनः परामर्शार्थं तस्माद् ग्रहणमित्यर्थः । एतद्विघटयितुमाह—नन्वित्यादि । नानित्यमात्व-विधानादष्टनः कृताकारत्वमव्यभिचारीत्यनुवर्तमानोऽसौ विशिष्ट एवानु-वर्तिष्यत इति नार्थः । एतदर्थेन तस्माद् ग्रहणेनेति भावः, उच्यत इत्यादिना परिहरति । ज्ञापनार्थं तस्माद् ग्रहणमेतदनेन ज्ञास्यते[2] यथा विकल्पेनाष्टन आत्वं भवतीति नित्ये ह्यात्वे सति तस्माद् ग्रहणमपार्थकं स्यात् । एवं च कृतात्वात् तस्मादष्टन औत्वं यथा स्यात् । अष्ट तिष्ठन्तीत्यादावकृतात्वान्मा भूदिति तस्माद् ग्रहणं विकल्पेनात्व-ज्ञापनार्तिक सिद्धमित्याह– तेनेत्यादि । नन्वसति तस्माद् ग्रहणे प्रतिलब्धस्थानिभावस्याष्टन एवौत्वं विज्ञायेत । ततश्च तस्माद् ग्रहणं तस्मादष्टन उत्तरयोर्जस्शसोरौत्वं प्रवृत्त्यर्थं भवत् कथमष्टनो विकल्पेनात्वं ज्ञापयेत् । एवं मन्यते—वर्णपाठक्रमप्रत्यासत्त्या औकार एव विधातव्ये यत्परमौकारं विदधाति ततो ज्ञायते औ-जस्शसोरित्यपि श्रूयमाणे जस्शसोरेवाष्टनः परयोरौत्वं भवतीति । तथा चातिरिच्यमानं तस्माद् ग्रहण-मात्वविकल्पज्ञापनायैव सम्पद्यते ।

**अर्वणस्तृसावनञः २।३।२०**[3]

अथेत्यादि अनुषङ्गलोपः, अर्वद्भ्यामित्यादौ धुटां तृतीय इति दत्वम् । अविभक्तावपीष्यत इति विभक्तावित्यस्यानपेक्षणात् ।

**सौ च मघवन् मघवा वा २।३।२१**[4]

मघवन्निति । उकारान्तोऽयमादेशः तत्रास्यान्त्वसन्तस्येति दीर्घो न भवति । तद्विधावुदनुबन्धविशिष्टस्यान्ते तदुपादानात् । अस्य चादेशस्यानुद-बन्धत्वात् । तेन संयोगान्तलोपे कृते मघवन्नित्यस्य कनिन्-प्रत्ययान्तस्य मघवन्नित्यमादेशो निर्दिश्यते प्रत्ययान्तरेऽपि परत इति विभक्तिग्रहणापेक्ष-यैतदुक्तं मघवता मघवद्भ्यामित्यादौ पूर्ववदनुषङ्गलोपः, तृतीयश्च माघवत-

1. न्यूनपाठः (भं०)
2. ज्ञाप्यते (भं०)
3. २।३।२२ (दु० वृ०)
4. २।३।२३ (दु० वृ०)

मिति, तस्येदमित्यण्, माघवत्यमिति यण्प्रत्ययः। मघोन इत्यादि श्वयुवेत्युत्वम्।

**जरा जरस्स्वरे वा २।३।२२**[1]

जॄष् वयो हानौ। जीर्यतेऽनया इति जरा, षानुबन्धत्वादङ्। अतएव निर्देशात् गुणः स्वरे परे इति सामान्याभिधानेऽपि विभक्तिस्वर इति[2] मन्तव्यम्, तेन जराया इदं जरामित्यणि परे न भवति। जरयेति। टौसो रे॥ अतिजरांसीति। जरामतिक्रान्तानीति जराशब्दस्य स्वरो ह्रस्व इति ह्रस्वः, जसः शि भावः अनेन जरस्भावः। अतिजराणीति। घुटि चासम्बुद्धाविति दीर्घः। इह तु जरायाः समीपमुपजरसमित्यकारे समासान्ते कृते नित्यं जरस्भावः, वा शब्दस्य व्यवस्थितविभाषाविज्ञानात् वा ग्रहणमिहैव विकल्पो नोत्तरत्रेत्यवधारणार्थम्।

**त्रिचतुरोः स्त्रियां तिसृचतसृ विभक्तौ २।३।२३**[3]

त्रिश्च चत्वारश्चेति द्वन्द्वः शब्दप्रधानत्वान्निर्देशस्य षष्ठीद्विर्वचनम्, तिसृचतसृ इति समाहारे द्वन्द्वः। द्वन्द्वैकत्वमिति नपुंसकत्वमिति नपुंसकत्वम्। नपुंसकात्स्यमोरिति सिलोपः त्रिचतुरित्येतयोः स्त्रियां वर्तमानयोरित्येतेन स्त्रियामिति एतत् त्रिचतुरोर्विशेषणमिति दर्शयति तेन तयोः स्त्रीवृत्तित्वे सत्यन्यपदार्थस्य पुंनपुंसकवृत्तित्वेऽपि सर्वत्र तिसृचतसृ-आदेशौ भवतः। प्रियास्तिस्रो ब्राह्मण्यो यस्येति प्रियतिस्रः, प्रियचतस्रः ब्राह्मण्यः। प्रियास्तिस्रो ब्राह्मण्योऽस्य प्रियतिसृ प्रियचतसृकुलमिति। अत्र नित्यत्वात् सिलोपः प्राप्तोऽपि न भवत्यन्तरङ्गत्वात् तिसृ-चतसृभावस्य प्रवृत्तेः। ककारस्तु समासान्तो न भवति, समासापेक्षिण्यन्तरङ्गे समासान्ते कर्तव्ये विभक्त्याश्रयस्य बहिरङ्गस्य तिसृभावस्य सिद्धत्वात् तिस्रः चतस्रः इति जस्शसोरन्यतरः। तौ रं स्वरे इति रत्वं त्रयः चत्वार इत्यादि त्रिचतुरोरत्र स्त्रीवृत्तित्वं नास्ति इत्यादेशाभावः। एवं प्रियाः त्रयो भावाः अस्य ब्राह्मण्याः प्रियत्रिः प्रियत्री प्रियत्रय इति। प्रियाणि वा त्रीणि यस्याः (सा[4] प्रियत्रिः प्रियत्री प्रियत्रयः) इत्यत्रापि न

---

१. २।३।२४ (दु० वृ०)

२. एव (भं०)

३. २।३।२५ (दु० वृ०)

४. न्यूनपाठः (वा०)

भवति, अन्यपदार्थो ह्यत्र स्त्रीवृत्तित्रिचतुःशब्दौ तु पुंसि नपुंसके च वर्तेते। विभक्ताविति किमिति, विभक्त्यधिकारात् विभक्तिग्रहणं लभ्यत इति भावः अविभक्तावपि क्वचित् कार्यस्येष्यमाणत्वात्तत्रापि प्राप्नोतीत्यभिप्रायेण प्रत्युदाहरति तृतीयाचतुर्थीति ज्ञापकद्वारेण त्वादेशभावगतो गुर्वी प्रतिपत्तिः स्यात्।

**तौ रं स्वरे २।३।२४**[1]

स्वरे परतो रत्वसिद्धिं मन्यमानं प्रत्याह—ङिघुटोररादेशः प्राप्त इति अर्ङौ घुटि चेत्यनेन शस्याग्निवद्भावः प्राप्त इति अग्निवच्छसीत्यनेन ते बाध्यन्ते इति बाधकबाधनार्थत्वादस्य योगस्येति शेषः। तिसृचतसृग्रहणेऽनुवर्तमाने तौ ग्रहणं त्रिचतुरोः स्थानित्वनिवृत्त्यर्थम्, चतुरोऽन्त्यस्य रेफादेशप्रयोजनं नास्तीति चेत् मा भूदन्त्यस्य, अन्त्याभावपरिभाषयात्वन्तसदेशस्य प्राप्नोति। इह तु तिस्रोऽतिक्रान्ते कुले चतस्रो अतिक्रान्ते कुले अतितिसृणी अतिचतसृणीति रत्वं न भवति। आगमादेशपरिभाषया नामिनः स्वर इति पूर्वं नुरागमस्य प्रवृत्तेः।

**न नामि दीर्घम् २।३।२५**[2]

न-युक्त आम् नाम् इति। स पुनर्नकारः आमि च नुरित्यनेन विहितः। लोप्य इति अर्हं-प्रत्ययनिर्देशात् युक्तशब्दस्य लोपः। [3]नन्वव्यभिचारादामः सनकारस्य निमित्तभावो विज्ञास्यत इति किं नामीति नकारोपादानेन, अस्त्येतत्। किन्त्वनुपात्ते तस्मिन्नामि दीर्घमिति निर्देशे सति सिद्धस्यैव दीर्घस्य नियामकमिदं वचनं स्यात्। नाप्येव तिसृचतस्रोः। दीर्घो नान्यत्रेति। ततश्च तिस्रोऽतिक्रान्ताण्यतितिसृणीत्यादौ दीर्घो न भवेदिति नकारोपादानम्। आमि न दीर्घमिति क्रियतामिति चेत् किमेवं सति कृतं स्यात्। अर्धमात्रापरिहार-जनितो लाघवमिति चेदेवं सूक्ष्मेक्षिकया स्याताम्, यदीत्यादौ किं वाच्यमन्य-पदार्थो बहुव्रीहिरित्येवावगतत्वात् [4]इत्यवधारणमेव ज्यायः। दीर्घस्यैव प्राप्तस्य निषेधो विज्ञास्यत इति दीर्घग्रहणं तिसृचतसृभावस्य प्राकरणिकस्य नामि निषेधाशङ्का निवृत्त्यर्थम्।

---

१. २।३।२६ (दु० वृ०)
२. २।३।२७ (दु० वृ०)
३. नन्वभिधानादामः (भं०)
४. इत्यवधीरणमेवात्र (भं०)

**नॄ वा २।३।२६**[1]

दीर्घमामि सनाविति प्राप्तो दीर्घो विकल्प्यते। ननु नित्ये विधौ विज्ञायमाने विफलोऽयमारम्भस्स्यात्। निषेधोऽपि नानुवर्तिष्यते। नॄ चेति पूर्वत्रैवाकरणादित्यर्थाद्वेति लब्धमिति किं वा ग्रहणेन, नैतत्, नुर्नाम्येव दीर्घ इति नियमोऽपि सम्भाव्येत, ततश्च नॄन्यतिक्रान्तानि अतिनॄनि कुलानीत्यत्र दीर्घत्वं न भवेदिति वा ग्रहणम्।

**त्यदादीनाम विभक्तौ २।३।२७**[2]

एषां त्यदादीनामिति। द्विपर्यन्तानाम्, कुत एषां विभक्तावन्तलोपारम्भात्। अन्यथा हि त्यदाद्यत्वे सिद्धत्वादनारम्भणोयो अन्तः[3] लोपः स्यात्। अन्त्यस्येति वर्णान्त्यस्य विधिरिति वचनात् स्यः सः यः एष इति तस्य चेति सत्वम्, तच्छब्देन समानार्थो अयम्। त्यच्छब्दस्तथा च भगवतो वाल्मीकेः प्रयोगः "न मे दुःखं प्रिया दूरे, न मे दुःखं हृतेति सा। एतदेवानुसोचामि वयस्तस्यातिवर्तते[4]॥" इति। भवन्तौ भवन्त इति भवन्तुशब्दः त्यादिर्न भवति। द्वि-शब्दात् परं पठितत्वात्। यद्येवम्, त्यमतिक्रान्तः अतित्यत् अतित्यदौ अतित्यद इत्यादौ कस्मान्न भवति, न भवति। उपसर्जनीभूतानां त्यदादीनामसर्वनामत्वात्। त्यदादयश्चैते सर्वनाम(गणान्तः[5]पातिनो) गृह्यन्ते तेषामेव बुद्धौ परिस्फुरणात्। यत्र तूपसर्जनीभूताः एते न भवन्ति तत्र त्यदाद्यत्वं भवति। परमसः परमतौ परमते इति पुनर्विभक्तिग्रहणमित्यादि। नन्वसति विभक्तिग्रहणे नामीत्येतदभिसम्बध्येत, न सम्वध्येत, येन क्रियत इत्यादिनिर्देशात्। उत्तराण्यपि कार्याणीत्यादि। तेषां विधौ श्रूयमाणविभक्तिप्रतिपत्त्यर्थस्य विभक्तिग्रहणस्यानुवृत्तेरिति भावः।

**किं कः २।३।२८**[6]

विभक्तावित्येव। कस्येदं, किमीयं, ईयस्तुहित इति तु शब्दादीयप्रत्ययः। साक्-प्रत्ययस्यापि किमं कत्वं तन्मध्यपतितस्तद्ग्रहणेन गृह्यत इति वचनात्।

---

१. २।३।२८ (दु० वृ०)
२. २।३।२९ (दु० वृ०)
३. योगारम्भः (भं०)
४. वयोस्त्यस्यास्ति (वा०)
५. गणमध्यान्तर्वर्तिनो (भं०)
६. किमः कः २।३।३० (दु० वृ०)

**दोऽद्वेर्मः २।३।२९**[1]

त्यदादीनां दकारस्येति । न यस्य कस्यचिद् दकारस्य किन्तु अनन्त्यस्य, कुतः, अद्वेरिति पर्युदासाश्रयणात् । अद्वेरिति चायं नञा निर्देशः, यच्चार्चितं द्वयोरिति मत्वा करणादिदमेव द्विशब्दस्य मत्वाभावे ज्ञापकं भविष्यतीत्यद्वेरिति किमनेन निषेधेनेति, चेत्, न । अोऽस्व्यतिरेकेण द्विर्वचनान्तरेऽपि मत्वप्रसङ्गात् । तस्मादद्वेरिति पर्युदासाश्रयणात् अनन्त्यदकारस्य मत्वं विज्ञायते । यद्यद्वेरिति पर्युदासः तर्हि द्विशब्द दकारं वर्जयित्वेति कथमिदं वाक्यभेदेन व्याख्यातम्, द्विशब्ददकारसदृशस्य त्यदादीनां दकारस्येत्येकवाक्यतया व्याख्यानमुचितं स्यात्, अस्त्येतत्, वस्तुमात्रकथनपरत्वेन व्याख्यानाददोषः । इमौ इमे इमम्, इमान् इति इदम् औ जस् अम् शस् । त्यदाद्यत्वम्, अकारे लोपम् । जस्सर्व ईम्, शसि सस्य च नः । अनेन मत्वम्, द्वौ द्वाभ्यामिति । त्यदाद्यत्वम्, अकारो दीर्घमिति दीर्घः ।

**सौ सः २।३।३०**[2]

असाविति अदस्, सावौ सिलोपश्चेत्यौत्वम्, सेश्च लोपः ।

**तस्य च २।३।३१**[3]

योगविभागः । वैचित्र्यार्थः ।

**इदमियमयं पुंसि २।३।३२**[4]

इदमिति । से व्यञ्जनाच्चेति सि-लोपः । रूपमात्रविवक्षायां त्यदाद्यत्वाभावः । त्रिचतुरोः स्त्रियामित्यतः स्त्रियामिति वर्तत इति । इयमादेशस्य स्त्रीविषये प्रवृत्त्यर्थम्, मण्डूकप्लुतिन्यायेन[5] स्त्रीग्रहणमनुवर्तते, अन्यथा हि इयमयमादेशौ द्वावपि पुंस्येव भवेतामिति भावः । तेनेदमियमयमित्यत्र वाक्ये स्त्रीग्रहणानुवृत्त्या इदं शब्दस्य स्त्रियां विषये सौ परे इयमादेशो भवतीत्यर्थो जायते । अयं पुंसीत्यत्र तु वाक्ये इदमो चेक्षणादिदं शब्दस्य पुंसि विषये सौ परे अयमादेशो भवतीत्यर्थो घटते, नपुंसके त्वियमयमोरप्रवृत्तेरिदं शब्द एवाव-

---

१. २।३।३१ (दु० वृ०)

२. २।।३२ (दु० वृ०)

३. २।३।३३ (दु० वृ०)

४. २।३।३४ (दु० वृ०)

५. प्लुत्या न्यायेन (मं०)

तिष्ठत इतीदं वचनमिति नपुंसकात्स्यमोरिति सि-लोपः न च तदुक्तमिति निषेधात् त्यदाद्यत्वाभावः।

**अद्व्यञ्जनेऽनकः २।३।३३**[1]

अनक इति बहुव्रीहावपि स्वरेऽक्षरविपर्ययः। तत्र हि तत्पुरुषग्रहणं समासस्योपलक्षणमिति व्याख्यास्यते। अकारादेशो भवतीति सर्वस्य नत्वन्त्यस्य। एषां विभक्ताविति निर्देशात्। अन्त्यस्य त्यदाद्यत्वेन सिद्धत्वात् वचनानर्थक्यभयात्। एवं सर्वस्य भविष्यति, नैतत्, त्यदाद्यत्वेन सिद्धावप्यनक इति निषेधकरणाय वचनमर्थवत् स्यात्। तथा च इमकैरित्यत्राक्प्रत्ययसह तस्येदमः अन्त्यस्य त्यदाद्यत्वम् व्याहन्यते अथवा त्यदाद्यत्वेन सिद्धत्वादनेनान्त्यस्यात्वं मा भूत्, अन्त्यवद्भावपरिभाषया त्वन्त्यस्य सदेशस्य दकाराकारस्य प्राप्नोति। किमत्वेन तस्य प्रयोजनमिति। अकारे लोपमित्यस्य विधेर्विनिवृत्तिः। तस्मादेषामित्ययमेव निर्देशः सर्वादेशत्वहेतुः। आभ्यामिति। अकारो दीर्घमिति दीर्घः। इदं वानिति। इदं विद्यते यस्येति, तदस्यास्तीति वन्तु-प्रत्ययः। अन्त्वसन्तस्येति दीर्घः। इमकैरिति। अव्ययसर्वनाम्न इत्यक्प्रत्ययः, भिस् त्यदाद्यत्वम्, दोऽद्वेर्मः। नन्विदमोऽत्वमुच्यमानमक्प्रत्ययसहितस्य शब्दान्तरत्वात् न प्राप्नोतीति नार्थोऽनक इति प्रतिषेधेनेत्याह—तन्मध्यपतित इत्यादि। अस्याश्च परिभाषाया अस्तित्वे निषेधकरणमेवेदं ज्ञापकम्, अन्वादेशे त्वनक इति निषेधो नञानिर्दिष्टस्यानित्यत्वान्न भवति इति। इमकाभ्यां छात्राभ्यां रात्रिरधीता अथो[2] आभ्यामहरप्यधीतमिति (इदकम्[3] आभ्याम् अत्वम्, अकारो दीर्घमिति दीर्घः। अदिति तपरकरणम् व्यञ्जने निषेधाशङ्कानिवृत्त्यर्थम्।

**टौ सोरनः २।३।३४**[4]

अन्वादेशविषय इत्युक्तम्, तत्र को नामायमन्वादेशः इत्याह—यत्रैकस्येत्यादि। एकस्य कस्यचिद् देवदत्तादेर्वेदाध्यापनादिकं विधाय यदा पुनरन्यद् व्याकरणाध्यापनादिकमुपदिश्यते तदासावन्वादेशः इत्युच्यते। तेनात्र एनादेशो

---

१. २।३।३५ (दु० वृ०)
२. अथ (मं०)
३. इदम् भ्याम् (मं०)
४. २।३।३७ (दु० वृ०)

न भवति। अयं दण्डो हरानेनेति। दण्डनिर्देशमात्रं[1] कृत्वा हरानेनेति (विधानस्यैकत्वात्) टा[2] इत्युपलक्षणपरत्वेनोक्तम्। आभ्यां छात्राभ्यां रात्रिरधीता अथो एनाभ्यामहरप्यधीतमिति षष्ठी-सप्तम्योर्द्विवचनं परिगृह्यते, व्याप्तेर्न्यायात्।

**तस्माद्भिर्भिसः २।३।३५**[3]

एभीरितीदम्, भिस्, त्यदाद्यत्वम्, अद् व्यञ्जनेऽनकः, भिसोर्भिभावः। घुटित्वे त्वै रूपविशेषलक्षणस्य कार्यस्यादर्शनात् भिसोभिस्वचने किं प्रयोजनमित्याह—भिसोभिस्वचनमित्यादि। भिसः श्रवणं यथा स्यादात्वे कृते तस्यैस्भावो मा भूत् इति स एव भिसादेशो विधीयते, भिरयमदेशो रेफान्तः। रेफस्तु विधानसामर्थ्यात् विसर्गं न प्रतिपद्यत इति तु न व्याख्यायते। नानिष्टार्थशास्त्रप्रक्लृप्तिरिति वचनात्। तस्माद् ग्रहणं वैचित्र्यार्थम्। ननु कृताकारमिदं परामृष्टुं तस्माद् ग्रहणं कृतमिति कस्मान्न व्याख्यायते, इदमेव हि तस्माद् ग्रहणमत्वं विकल्पेन संसूचयेत् तथा च इमैरित्यत्रात्वाभावपक्षे भिसादेशो[4] न भवति। नैतत्, नित्यमत्वस्य स्मरणादिमैरित्यस्य चासाधुत्वात्।

**अदसश्च २।३।३६**[5]

अमीभिरित्यत्र अदस्, भिस्, त्यदाद्यत्वम्, भिसो भिर्-भावः, अदसः पदे मः, घुटि बहुत्वे त्वे ए, बहुत्वे त्वीत्येकारस्येत्वम्। अमुकैरिति। अदस्, अज्ञातैरमीभिरित्यक्प्रत्ययः, पूर्ववन्मत्वम्। उत्वम्मादित्युत्वम्। चकारेणानक इत्यनुकृष्यते, उत्तरत्र तस्यानुवृत्तिर्माभूदिति चानुकृष्टमुत्तरत्र नानुवर्तत इत्याहुः।

**सावौ सि लोपश्च २।३।३७**[6]

अन्त्यस्यौत्वं भवतीति। त्यदाद्यत्वं बाधित्वेति शेषः। असाविति। सौ स

---

१. न्यूनपाठः (वा०)
२. न्यूनपाठः (भं०)
३. २।३।३८ (दु० वृ०)
४. भिरादेशो (वा०)
५. २।३।३९ (दु० वृ०)
६. २।३।४० (दु० वृ०)

इति दस्य मत्वं असकाविति पूर्ववदक्प्रत्ययः। साविति किम्, विभक्तिमात्रे मा भूत्, सि-लोपवचनं तु अन्वाचीयमानमपि स्यात्। अथौत्वं सेः कस्मान्न विधीयते। एवमस्य साविति सिध्यत्येवेति किं सिलोपवचनेन, नैवं शक्यम्। हे असाविति। अत्र हि सेरौत्वे कृते त्यदाद्यत्वे च सति ह्रस्वान्तलक्षणस्सम्बुद्धि-लोपः प्रसज्येत्, यद्वात्रैव प्रयोगे स्त्रीत्वविवक्षायामाम्प्रत्यये सञ्जाते सम्बुद्धौ चाकारस्येत्वं स्यात्। अथवा औरीमिति औकारस्येत्वम्, असकावित्यत्र च के प्रत्यय इतीत्वं भवेत्। तदेते दोषाः मा भूवन्निति सि-लोपः चेति कर्तव्यम्, न कर्तव्यम्। सत्यौत्वे स्थानिवद्भावेनैव व्यञ्जनाच्चेति सिलोपस्य सिद्धत्वात्। एवं तर्हि एतदेव सि-लोप वचनं ज्ञापयति वर्णाश्रये विधौ नास्ति स्थानिवद्भावः इति तेन द्यौरित्यत्र औ सावित्यौत्वे कृते स्थानिवद्भावस्याभावात् सि-लोपो न भवति। ननु लोपविधेर्बलवत्वादौत्वात् पूर्वं सिद्धस्सिलोपः, भवेदेतदेवं यदि लोपस्वरादेशपरिभाषा न स्यात्।

**उत्वम्मात् २।३।३८**[1]

वर्णस्य उत्वं भवतीति। वर्णाधिकारात्। उक्तं हि पूर्वं वर्णसमाम्ना-यस्योत्तरत्रानुवृत्त्यर्थं तत्र ग्रहणमिति। अमुम्, अमू अमूनीति, अदस् अम्, औ, शस्, त्यदाद्यत्वम्, अकारे लोपम्, शसि सस्य च न इति दीर्घे नत्वे, अदसः पदे मः, अनेनात्वम्, स्थानान्तरतमपरिभाषया द्विमात्रस्य द्विमात्र उकारः। ननु विधीयमानः स्वरः सवर्णं न गृह्णातीति कथमूकारः स्यात्। उसिति कर्तव्ये त्व-प्रत्ययनिर्देशाद् भविष्यति। अमुष्मै इत्यादि। अदस्, ङे, ङसि, ङस् ङि, अन्यत्पूर्ववत्। अमुकाभ्यामिति। अदस्, अव्ययसर्वनाम्न इत्यक्, भ्याम्, त्यादाद्यत्वम्। अकारो दीर्घमिति दीर्घः।

**ए बहुत्वे त्वी २।३।३९**[2]

बहुत्वविषयस्यैकारस्येति सति यः [3]बहुवचने न (सञ्जातः तस्येत्यर्थः, अमी अमीभ्यः अमीषामिति, अदस्, जस्, भ्यस्, आम्, त्यदादीत्यादि मादित्येव, अमुकेभ्यस्तुशब्दो वैचित्र्यार्थः अपां भेदः शब्दमात्रेऽस्य कार्यत्वेन विवक्षित-त्वादेव वचननिर्देशे न्याय्ये) बहुवचननिर्देशो अप्शब्दस्य प्रयोगभेदेन बहुत्वा-

१. २।३।४१ (दु० वृ०)
२. २।३।४२ (दु० वृ०)
३. न्यूनपाठः (वा०)

विष्टत्वात्। तथा च अद्भिः कृतम्, अद्भ्यो देहि, अद्भ्य आगत इति सर्वत्र दत्वं दृश्यते, अभार इति नायं विभक्तिभकार इति दत्वाभावः। व्यञ्जनान्तस्य यत्सुभोरित्यनेनापि न भवति। सुभोः युगपदुक्तस्य कार्यस्य तेनास्य विधानात्।

**विरामव्यञ्जनादिष्वनडुन्नहिवन्सीनां च २।३।४०[1]**

विरतिर्विरामः भावे घञ्, विरमतेऽनेन वा विरामः, व्यञ्जनान्ताच्चेति करणे घञ्, तत्र पूर्वस्यां व्युत्पत्तौ वर्णोच्चारणाभावो विरामः। अपरस्यां तु येनान्येन वर्णेन विरम्यते सः वर्णो विरामः। अनड्वाहशब्दः, अनसि डश्चेति विण्प्रत्ययान्तः। उपानह्, इत्यस्यैकदेशानुकरणभूतो नह्-शब्दः शन्तृङ्ङादेशस्य वन्सोः क्वन्सोश्च वन्सि-ग्रहणेन ग्रहणम्। विरामे व्यञ्जनादौ च सतीति कालभावयोरित्यनेनैषा विरामव्यञ्जनादिष्विति सप्तमी। तत्रैकाऽप्येषा सप्तमी यथायोगं विभज्यते। विरामादिविषये व्यञ्जनादौ च परभूते इति। नहि विरामस्याभावस्यानडुह् तदादिशब्दसम्बन्धिनो वा वर्णान्त्यस्य परत्वं सम्भवति अतो विराम इति विषयसप्तमी, व्यञ्जनादेस्तु प्रत्ययस्य परत्वं सम्भवतीति व्यञ्जनादाविति पर-सप्तमी, अतएवोभयरूपोऽप्येषः सप्तम्यर्थः सामान्यशब्देन सतीत्यनेन निर्दिष्टः। विरामविषये सति व्यञ्जनादौ च परभूते सति स्वनडुत् इति शोभना अनड्हो यत्र नगरे तत्स्वनडुत् इति। यदा अभावो विरामः तदा विरामविषये दत्वं विज्ञायमानमनडुदादीनां वर्णान्त्यस्य विधिरिति वचनादन्त्यस्य भवति। यदाप्यन्त्यो वर्णो विरामः तदा विरामविषये दत्वं प्रवर्तमानमनडुदादीनामन्त्य एव वर्णो प्रवर्तते। तस्यैव विरामविषयत्वात्। अनडुद्भ्याम्, अनडुत्स्विति। अनडुहश्चेत्युत्वम्, उपानदित्यादि। णह् बन्धने उपपूर्वः, उपनह्यतीति क्विप् ह्रस्वस्य दीर्घतेति। उपसर्गस्य दीर्घः। अनेन हस्य दत्वम्। सुविद्वदिति। विरामव्यञ्जनादावित्यनुषङ्गलोपः, अनेन सस्य दः। विद्वद्भ्यः, विद्वांल्लिखति, अनुषङ्गश्चाक्रुञ्चेरित्यनुषङ्गलोपः। अनड्वानित्यत्र सोऽनुरिति न्वागमे कृते संयोगान्तलोपेन हकारे लुप्ते नकारस्यानेन दत्वं कस्मान्न भवति, आह—नुकारागमविधानसामर्थ्यादिति। यद्येवम् अनडुहस्तत्रेति[2] दत्वमपि न स्यात्, यं विधिं प्रत्युपदेशोऽनर्थकः सः विधिर्बाध्यते यस्य तु विधेर्निमित्तमेव नासौ विधिस्तेन बाध्यते। नुकारागमविधानसामर्थ्यादिति च सन्निहितनुकारागमापेक्षया परिहार उक्तः। अन्यथा

---

१. २।३।४३ (दु० वृ०)

२. अनड्वांस्तत्र (भं०)

संयोगान्तलोपस्यालुप्तवद्भावादेवानड्वानित्यत्र दत्वं न प्रवर्तयिष्यते, नकारस्यानन्त्यत्वादन्त्यस्य च वर्णान्त्यपरिभाषया[1] दत्वविज्ञानात्। तथा च विद्वान्, पेचिवान्[2] इत्यादौ नकारस्य न भवति, ननु तस्य मा भूत्, सकारस्य तर्हि कस्मान्न भवति, लुप्तत्वादिति चेत्, न, यस्मिन्प्राप्ते यो विधिरारभ्यते सः तस्य बाधको भवतीति संयोगान्तलोपं बाधित्वा विशेषविधानेन दत्वमेव स्यात्। अत्रोच्यते, नृ वेत्यतो वेत्यपेक्षते तस्य व्यवस्थितविभाषात्वान्न भविष्यति, विद्वांसाविति। सान्तमहतोरिति दीर्घः। ननु विभक्त्यधिकाराद्विभक्तिव्यञ्जने दत्वं विज्ञायमानं सुभोरेव सम्भवत्यतः[3] स्भ-ग्रहणमेव कर्तव्यम् किं व्यञ्नग्रहणेनेत्याह — स्भ-ग्रहणमित्यादि। अविभक्तिसम्बन्धिन्यपि व्यञ्जने यथा स्यादिति व्यञ्जनग्रहणम्। तमादित्वात् इति। आख्याताच्च तमादयः। (२।६।४०) इति वचनात्। वेत्यन्तः व्यञ्जनं वर्तते, नृ वेत्यतः। एवमुत्तरत्रेति तद्धितयकारं विना सामान्यव्यञ्जननिमित्तक उत्तरत्र सर्वो विधिरित्यर्थः।

**स्रसिध्वसोश्च २।३।४२[4]**

स्रस्-ध्वस् इत्येतयोरिति। स्रन्सुध्वन्सु अवस्रन्सन इत्येतयोर्लुप्तानुषङ्गयोरित्यनिदनुबन्धनामित्यादिना योगविभागो वैचित्र्यार्थः।

**हशषच्छान्ते जादीनां डः २।३।४३[5]**

यजेः स्वपिवचीति सम्प्रसारणे कृते इजिति रूपमिति। एतेन रेज [6]गतिकुत्सनयोः इत्ययमत्र सन्दिग्धश्रावि प्रत्ययो न गृह्यत इति दर्शयति। यद्येवम्, कृतसम्प्रसारणस्य युजेः परिग्रहादुपयुज्यत इत्युपयट् इत्यत्र विडन्तस्य तस्य डत्वं न प्राप्नोति, सत्यम्, चानुवृत्तेर्भविष्यति। अन्तशब्दः प्रत्येकमभिसम्बध्यत इत्यन्ते प्रयुज्यमानत्वादिति भावः। इजादयो लक्ष्यमूलत्वाद् व्याकरणस्य परिव्राट्छब्दपर्यन्ताः वृत्तौ उपदर्शितार्थाः परिगृह्यन्ते। मधुलिट् पाश इति। तमादित्वात् पाशप्रत्ययः। सुविडित्यादि। नन्वेवमादौ छशोश्चेति शस्य षत्वे कृते षान्तत्वादेव डत्वं भविष्यतीति किं शकारोपादानेन। अत्रोच्यते — छशोश्चेति

---

१. वर्णान्त्यस्यविधिरिति वचनात् (भं०)

२. पपिवान् (वा०)

३. सम्भाव्यते (भं०)

४. २।३।४५ (दु० वृ०)

५. २।३।४६ (दु० वृ०)

६. गतिकम्पनयोः (?)

यत्षत्वं तदाख्यातप्रकरणे विहितम् । तत्र प्रत्यासत्तेराख्यातप्रकरणविहित-प्रत्ययविषय एव पदान्ते धुटि च तद्विधीयते, एवं च सति स्यादिपदान्तविषये स्यादिधुटि च छशोश्चेत्यनेन शस्य षत्वं नास्तीति सुविडित्यादि सिद्ध्यतीति तत्सिद्धये शकार उपादीयते । तथा च छग्रहणं कृतम्, अन्यथा तस्यापि छशोश्चेति षत्वे कृते षान्तत्वादेव शब्दप्राडित्यादौ डत्वं भविष्यतीति विफलं छकारोपादानं स्यात् । नन्वेवमप्यतिरिच्यते छ-ग्रहणं च्छ्वोश्शूडावित्यादिना क्विपि छस्य षत्वे उपजाते सति शग्रहणेनैव सिद्धत्वात् । अस्त्येतत् । लाक्षणिकस्तु तदा शकार इत्येवमाचार्यो मन्यते । षडिति षष् जस्कतेश्चेति लुक्, अनेन डत्वम् । ननु षकारस्य विरामविषये ऋटुरषाः मूर्धन्या इति स्थान-सावर्ण्यात् वा विराम इत्यनेन प्रथमतृतीयाभ्यां धत्वडत्वाभ्यां भवितव्यम् । अघोषेऽपि । अघोषे प्रथम इति प्रथमेन घोषवत्यपि धुटां तृतीय इति तृतीयेन । तथा च सुविडित्यादि सिध्यतीति किं षकारोपादानेन, अस्त्येतत्, ते एवं विधय एव प्रपञ्च्यन्ते । अप्रसारणे चेति । प्रसारण सम्प्रसारणमाहुः, तत्तु प्रच्छेः ग्रहिज्यावयीति प्राप्तं, शब्दप्राडित्यादौ च कृतद्विर्भावस्य ककारस्य डत्वं[1] तथा भूतस्यैव तस्य सूत्रे उपादानात् । कृत[2]द्विर्भावोपादानसामर्थ्याच्च वर्णान्त्यपरिभाषया नान्त्यस्य ककारस्य डत्वं विज्ञायते । अनर्थके वा वर्णान्त्य-परिभाषाया नास्त्युरस्थानम् । नानर्थके वर्णान्त्यविधिरिति वचनात् । अनर्थ-कश्चायं कृतडिर्भावश्छकारः । विराट् विराड्भ्याम् विराट्त्वम्[3], राजृ दीप्तौ विराजत इति क्विप्, भ्राज्, विभ्राट् विभ्राड्भ्याम्, विभ्राट्त्वं, भ्राजृ दीप्तौ, विभ्राजत इति क्विप् । भ्रस्ज, धानाभ्रज् धानाभृड्भ्याम्, धानाभृट्त्वम् । भ्रस्ज पाके धानाभृज्जतीति क्विप् । स्कोः संयोगाद्योरन्ते चेति सि-लोपः । व्रश्च, मूलवृट्, मूलवृड्भ्याम्, मूलवृट्त्वम्, ओव्रश्चू छेदने । मूलानि वृश्चतीति क्विप्, संयोगान्तलोपः । परिव्राज् परिव्राड्भ्याम् परिव्राट्त्वम् । व्रज् गतौ परिपूर्वः, परिव्रजतोति क्विप् । कृत्ययुटोऽन्यत्रापीति वचनात् दीर्घः । करोतीति करणम् इति वृद्धिः परौ व्रजे षः पदान्त इत्येतत्तु दीर्घविधायकं लक्षणं यथा-कथंचित् स्वलक्षणसम्भवे सति नाद्रियते । वर्णग्रहणे तदन्तविधिरित्यन्त्यग्रहणे लब्धेऽन्तग्रहणमादिशब्दस्य हकारादिभिः प्रत्येकं सम्बन्धनिरासार्थम् ।

---

१. विधेन (पाठभेदः वा०)

२. कृतडिर्भावो (वा०)

३. विराड्त्वम् (भं०)

**दादेर्हस्य गः २।३।४४**[1]

धात्ववयवस्य दादेर्हकारान्तस्येति। एतेन ह-चतुर्थान्तस्येति। अतो धातुग्रहणानुवृत्त्या धातोरवयवस्य दकारादेर्हकारान्तस्य गत्वं भवतीति दर्शयति। तेन दामलिडित्यादौ दामलिह् इत्यस्य दादेर्हकारान्तस्यापि धात्वनवयवत्वाद् गत्वं न भवति। हकारान्तस्येति हकारेण धात्ववयवस्य विशेषणादेवमुक्तम्। गोधुगित्यादि। अत्र गोधुगित्यस्य क्विबन्तस्य धातोर्यो दकारादिर्हकारान्तो दुह् इत्ययमवयवः तस्यान्त्यस्य गत्वम्।

**चवर्गदृगादीनां च २।३।४५**[2]

दृगादिर्येषां ते दृगादय इत्येतेनादिशब्दोऽयमन्ते प्रयुज्यमानोऽपि व्याख्यानात् दृशिनैव सम्बध्यते न तु चवर्गेणापीति दर्शयति। विरामव्यञ्जनादिविषयाभावात् दृगादीनां चेति निर्देशे कथं गत्वमित्याह—व्यञ्जनान्तस्येति। दृगित्यादि। दृशिः क्विबन्तः। स्पृश् घृतस्पृग्भ्याम् घृतस्पृक्त्वम्, घृतं स्पृशतीति क्विप्। ऋत्विगादयः पञ्च ऋत्विगादिसूत्रेण सिद्धसाधुत्वात्। ऋत्विक् ऋत्विग्भ्याम्, ऋत्विक्त्वमित्यादि च सर्वेषामुदाहरणम्।

**मुहादीनाम् वा २।३।४६**[3]

अन्येषां त्वप्राप्तमिति, अदादित्वात्। एवं च चोभयत्र प्राप्ते अप्राप्ते च विकल्पोऽयम्। उन्मुगित्यादि पदान्ते धुटामित्युदो दस्य तत्वम्। पञ्चमे पञ्चमानिति पञ्चमः। उन्मुडित्यादि। हशषेति पक्षे डः। शत्रुध्रुगित्यादि। शत्रवे द्रुह्यतीति[4] क्विप्।

**हचतुर्थान्तस्य धातोस्तृतीयादेरादिचतुर्थत्वमकृतवत् २।३।४७**[5]

धात्ववयवस्य हकारान्तस्येत्यादि। एतेन पदत्रयमेतन्न, सामानाधिकरण्येन सम्बध्यते, किं तर्हि धातोरवयवो यो तृतीयादेर्हचतुर्थान्तस्यादेश्चतुर्थमिति वैयधिकरण्येन दर्शयति तथा गर्दभमाचष्ट इन्कारितं चेति गदर्भशब्दात्, इनि

---

१. २।३।४७ (दु० वृ०)
२. २।३।४८ (दु० वृ०)
३. २।३।४९ (दु० वृ०)
४. ध्रुह्यतीति न्यूनपाठः (वा०)
५. २।३।५० (दु० वृ०)

कृते तदन्तात् क्विप्, अर्धट्[1] अर्धड्भ्यामित्यादावपि । गर्दभ इत्यस्य क्विबन्तस्य धातोर्योऽवयवः तृतीयादिश्चतुर्थो दभ्-शब्दस्तस्याप्यादिर्चतुर्थत्वं प्रवर्तते । सामानाधिकरण्येन सम्बन्धे सति गर्दभो गकारस्य चतुर्थत्वं स्यात् दामलिडित्यत्र तत्केन वार्यते तस्माद् धातोरवयवस्य तृतीयादेर्हचतुर्थान्तस्येत्ययमत्र व्याख्याक्रमः। स्ववर्गादिति । न परवर्गात् कुत इत्याह—प्रत्यासत्तेरिति । अकृतवद्भवतीति । कृतस्य चाकृतत्वं वचनशतेनाप्यशक्यमभिधातुमित्यकृतधर्मापत्तिरत्रातिदिश्यते तेन किं सिद्धं भवतीत्याह— तेनेत्यादि । गोधुगित्यादि । गोपूर्वात् दुहेः क्विप् । अत्र गोधुह् इत्यस्य क्विबन्तस्य धातोर्यो दुह् इत्ययं तृतीयादिर्हकारान्तो अवयवः तस्यादिर्यो दकारः तस्य चतुर्थो धः । एवं च काष्ठधुगित्यादावपि योज्यम् । निधुडित्यादि हशषेति डः । अर्थभुद्भ्याम् इति घुटां तृतीय इति दत्वम्, एवं विधब्भ्यामित्यत्रापि । सुगण् इत्यादि । गण संख्याने, अदन्तः, चुरादेश्चेतीन्, अस्य च लोपः तस्य स्वरादेशपरिभाषयास्थानिवद्भावादुपधादीर्घाभावः । ततः क्विप् कारितलोपः, अन्तग्रहणं विस्पष्टार्थम् । धात्ववयवस्येति किं, दामलिडित्यादि । दामलिह् इत्ययं शब्दो भवति तृतीयादिः हकारान्तश्च । न च धातोरवयव इति नात्र चतुर्थत्वं प्रवर्तते अथ किमर्थमकृतवदिति क्रियते । यावता गोधुगित्यादौ यदि कृतेऽपि चतुर्थत्वे गत्वं न स्यात्, ततो दादेर्हस्य ग इति योऽस्य सूत्रस्यारम्भः सः विषयाभावाद्विफलः स्यात् । अतो मा भूत् तस्य वैफल्यमिति तद्बलादेव कृतेऽपि चतुर्थत्वे दकाराश्रयं हकारस्य गत्वं प्रवर्तिष्यत इति नार्थो कृतवद्ग्रहणेनेति मन्यमानः पूर्वपक्षयति, नन्वित्यादिना । असत्येत्यादिना परिहरति । अयमर्थः । यथा हि दादेर्हस्य ग इति सूत्रारम्भबलात्कृतेऽपि चतुर्थत्वे गत्वं भवति । एवं च तद्बलाद् दादेर्धातोरादिचतुर्थत्वमेव न भवेत्, ततो गोधुगित्यादि प्रयोगजातकृतचतुर्थत्वं यथा स्यात् । तन्मा भूदेष दोष इत्यकृतवद्ग्रहणं कर्तव्यम् ।

**सजुषाशिषो रः २।३।४८[2]**

जुषी प्रीतौ[3] सहपूर्वः सहजुषतीति क्विप् सह-शब्दस्य निर्देशबलात् सभावः । आङः शासु इच्छायाम् । आङ्पूर्वः आशासनम् आशीः, कृत्ययुटोऽन्यत्रापीति भावे क्विप्, अतएव ज्ञापकादित्वम् । शासिवसीति षत्वम् । सजुश्च आशीश्च ते सजुषाशिषे । अत्र घोषवत् स्वर पर इति कृते रेफे रोरे लोपमिति

१. न्यूनपाठः (वा०)
२. २।३।५१ (दु० वृ०)
३. प्रीतिसेवनयोः (भं०)

रेफलोपः। पूर्वस्वरस्य च दीर्घो न भवति, तस्य नित्यदीर्घत्वाद्रेफो भवतीति। एतेन यण् परोक्षाशीष्विति निर्देशाद्रेफो द्रादेशो न त्वाकार इति दर्शयति। सजुरित्यादि रेफादेशः, इरूरोरीरूरौ, आशीःशब्दस्य आङ् उपसर्गो न प्रधानमिति कुतः शब्दान्तर-पूर्वस्यापि शासे रेफादेशदर्शनात् किमर्थः तर्ह्याङुपात्त[1] इति चेत्, केवलाच्छासेः क्विपोऽसम्भवात्। एवं चावश्यं कस्मिंश्चिच्छब्दे शासेः पूर्वमुपदेशे[2] कामचारादाङ्उपात्तः नत्वस्यास्ति प्रधानभावः। तेनेत्यादि। तेनाङो प्रधानभावेनेत्यर्थः। मित्रशीः, आर्यशीरिति क्विपो लोपात्पूर्वं शासेरिदुपधाया इतीत्वम्, शासिवसीति षः अनेन रत्वम्। पूर्ववदीरादेशः। अथ शिष्लृ विशरण इत्यस्याङ्पूर्वस्य क्विपि यदाशिष इति रूपं तस्यापि रत्वं कस्मान्न भवति, न भवति क्विपोऽत्र विषये सन्दिग्धत्वात्। अथवा सजुषधातुना आत्मनेपदिना क्विबन्तेन साहचर्यादाशीश्शब्दोऽपि तथाभूत एव गृह्यते यः आङ्शास्वित्यनेनात्मनेपदिना धातुना व्युत्पादितः (स[3] परिह्रियत इत्याशिषि शिडित्यादौ रत्वाभावः चवर्गदृगादीनां चेत्यतः चकारः) अत्रानुवर्तते। तेनेहापि रत्वं भवति। पिपठीः, पिपठीर्भ्याम्, पठेः सनि (द्विर्वचनेऽभ्यास-[4]) कार्ये इटि च कृते पिपठिष इति यद्रूपं ततः क्विप्, अस्य च लोपः, अनेन षस्य रत्वम्। पूर्ववदीरादेशः। नन्वत्रातो लोपस्य स्थानिवद्भावाद्विरामव्यञ्जनादिविषयत्वमसदिति कथं रत्वं स्यात्। भविष्यति, क्वौ लुप्ते न स्थानिवदिति स्थानिवत्वनिषेधात्।

**इरूरोरीरूरौ २।३।४९[5]**

ईश्च ऊश्च तौ ईरूरौ, कृत्ययुटोऽन्यत्रापीति क्विबिति कर्तरि कृदिति वचनात्कर्तर्युच्यमानः क्विब्भावो न प्राप्नोति इत्येवमुक्तम्। गृणाति धूर्वति इति। कर्तर्येवात्र क्विबिति। अपरे मन्यन्ते। सर्पिर्भ्याम्, धनुर्भ्याम् इति। नेमाविरूरौ सम्बन्धिनौ, सर्पिष् धनुष् इत्येतयोरधातुत्वात्। गिर् धुर् इत्येतौ धातू क्विबन्तो धातुत्वं न जहाति लिङ्गत्वं च प्रतिपद्यत इति स्मरणात् दीर्घ इति कर्तव्ये ईरूरोर्वचनं यिन्नाय्योरपि तौ यथा स्यातामिति। गिरमिच्छत्या-

१. तर्ह्युपादत्ते (भं०)
२. पूर्वमुपादातव्ये (भं०)
३. यस्त्वन्यः आशिष इत्ययं शब्दः विशेषणार्थे परस्मैपदिनाशिषिणा।
(पाठभेदः भं०)
४. द्विरुक्तावभ्यास (भं०)
५. २।३।५२ (दु० वृ०)

त्मनः गीर्यति, गीरिवाचरति, गीर्यते एवं घूर्यति, घूर्यते। न लोपश्चेति वा नियमाद्धि न स्याताम्।

**अह्नः सः २।३।५०**[1]

अहरिति सौ लुप्ते सत्वम्। सस्य विसर्गः। अहनी अहानीति, औरीम् जस्शसोः शिः शौ घुटि चासम्बुद्धाविति दीर्घः। लिङ्गग्रहणाद् धातोर्न भवति। अहन्, वृत्रहन् इति हन्तेः ह्यस्तनी दि, अद्धात्वादिः, अन्विकरणः अदादेर्लुक्, व्यञ्जनादिश्योरिति दि-लोपः।

**संयोगान्तस्य लोपः २।३।५१**[2]

महान् विद्वान् प्रशानिति सान्तमहतोरिति दीर्घः। पुंभिः पुंस्विति पुंसोऽशब्दलोपः, वेति वर्तत इति मुहादीनां वेत्यतः, सा च व्यवस्थितविभाषेति ([3]तेनासर्व-विषयो) विकल्प इति भावः। ऊर्क् ऊर्क्ष्यामिति च चुरादित्वा-दूर्जेरिन्। ऊर्जनमिति क्विप् कारितलोपः। तथेति व्यवस्थितविभाषात्वम् अत्र प्रकारः शिड्वर्जित इति शिट्शषसहा शिडिति शादय इति वचनात्। तद्रहित इत्यर्थः। अघोषे परेऽपीति न भवतीत्यनुषज्यते। पुंस्कोकिल इत्यादयस्त्रय एते कर्मधारयः।

**पुंसोऽशब्दलोपः २।३।५२**[4]

सकारस्य विसर्गः तस्य च ककारे परतो अनव्ययविसृष्ट इति सत्वम्। एवं पुंस्फलमित्यत्रापि।

**संयोगादेर्धुटः २।३।५३**[5]

संयोगान्तलोपे प्राप्ते वचनम्। यूपतदिति। यूपं तक्षतीति। क्विप् तदा-देर्धुट इति कर्तव्ये तच्छब्देन पूर्वत्र लब्धोपसर्जनभावस्यापि संयोगग्रहणस्य बुद्ध्या प्रविभज्य प्रत्यवमर्शः सिद्धे यत्पुनः संयोगग्रहणं तत् क्वचिदादेर्धुटो लोपो मा भूदित्येवमर्थम्। तेन मांसंपिपगित्यत्रापि धुटो लोपो न भवति। पूर्वेण संयोगान्तलोप एव प्रवर्तते।

---

१. २।३।५३ (दु० वृ०)
२. २।३।५४ (दु० वृ०)
३. तेनायं विषयो (भं०)
४. एतत् सूत्रं दुर्गवृत्तौ शिष्यहितायां वृत्ताविति उभयत्र नोल्लिखितम्।
५. २।३।५५ (दु० वृ०)

**लिङ्गान्तनकारस्य २।३।५४**[1]

लिङ्गप्रकरण इत्यादि। लिङ्गाधिकाराल्लिङ्गग्रहणस्य प्रकरणे प्रस्तावेऽपि यत्पुनरिह लिङ्गग्रहणं तदुत्तरत्र क्वचिद् धातोरपि कार्यं यथा स्यादित्येवमर्थम्, अन्यथा लिङ्गप्रकरणत्वाल्लिङ्गस्यैवोत्तरत्र कार्यं स्यात्, धातोस्तु न भवेत्। पुनर्लिङ्गग्रहणाद् धातोरपि भवति। तेन मज्जति भृज्जतीत्यादिसिद्धमिति, किं पुनरत्र सिद्धम्, धुटां तृतीय इति सकारस्य तृतीयो दः। नकारेण लिङ्गस्य विशेषणात् तदन्तत्वे लब्धे पुनः अन्तग्रहणं विस्पष्टार्थम्। विशेषणविशेष्यभावं प्रति हि कामचाराल्लिङ्गेनापि नकारो विशेष्यते तथा च सति लिङ्गस्य यो नकारो यत्र तत्रस्थः तस्यापि लोपाशङ्कायामवैस्पष्ट्यं स्यात्।

**न संबुद्धौ २।३।५५**[2]

ननु हे राजन्नित्यादौ सौ लुप्तेऽपि प्रत्ययलक्षणेन विभक्तिवर्जमिति लिङ्गसंज्ञानिषेधप्रवृत्तेः लिङ्गान्तनकारस्य लोपः उच्यमानः सम्बुद्धौ नैव प्राप्नोतीत्यपार्थकमिदं वचनम्, अस्त्येतत्, अस्मादेव तु वचनात् ज्ञायते प्रत्ययलक्षणे विभक्तिवर्जमित्येव निषेधो लिङ्गसंज्ञायाः न भवति इति, तेन राजपुरुष इत्यादौ न लोपः सिद्धो भवतीति।

**न संयोगान्तलोपोऽलुप्तवत् २।३।५६**[3]

दीर्घो न भवतीति [4]अलुप्तवद्भावादनकारात्। इत्थं राजभिः राजस्वित्यत्र ऐसः एत्वस्य चाभावः। गोमानिति। अन्त्वसन्तस्येति दीर्घः। न लोपाभाव इति नकारस्यालिङ्गान्तत्वात्। यद्येवम्, हस्त्यश्वम् दण्डिषु इत्यादौ यत्वषत्वे न सिध्यत इत्याशङ्क्याह—सन्धिकार्ये षत्वे[5] चेत्यादि। यदयं स्वामीश्वराधिपतीत्यत्र (स्वामीशब्दस्येश्वर[6]शब्दे परतः समानदीर्घत्वं शास्ति, तच्छीलतद्धर्म इत्यत्र तत्साधुकारिष्वित्यत्र च तत्कारिशब्दादुत्तरस्य सप्तमीबहुवचनस्य षत्वं, ततो ज्ञायते सन्धिकार्ये षत्वे च कर्तव्ये नास्त्यलुप्तवद्भाव इति। ननु

---

१. २।३।५६ (दु० वृ०)
२. २।३।५७ (दु० वृ०)
३. २।३।५८ (दु० वृ०)
४. अलुप्तवद्भावादनुकारान्तत्वात् एवं (वा०)
५. यत्वे (वा०)
६. न्यूनपाठः (वा०)

विभक्तिप्रकरणत्वाद् विभक्तिनिमित्ते कार्येष्वलुप्तवद्भावो विज्ञास्यते, न च सन्धिकार्यं षत्वं च विभक्तिनिमित्तं कार्यम्, अतः तद्भविषयत्येवेति किमत्र ज्ञापकाश्रयणेन, अस्त्येतत्, किन्तु विभक्त्यधिकारस्य क्वचित् क्वचिद्विच्छिन्नत्वादविभक्तिनिमित्तेऽपि सन्धिकार्यादौ स्यादलुप्तवद्भावाशङ्केति ज्ञापकाश्रयणं ज्यायः। अलुप्तवद्भावश्रवणान्न संयोगान्तयोरित्यपि कृते तयोर्लोपोऽवगम्यत एव इति लोपग्रहणं सूत्रस्य वाचकत्वप्रतिपत्त्यर्थम्। परार्थे शब्दप्रयोगमन्तरेणापि वतिमतिदेशावगमाद्वतिकरणं विस्पष्टार्थम्।

**इसुस्दोषां घोषवति रः २।३।५७**[1]

घोषवति पर इति अविभक्तिसम्बन्धिन्यपि इति मन्तव्यम्। विभक्त्यधिकारस्यानपेक्षणात्, तथा च सर्पिर्मधुरम्, धनुर्मूलम्, दोर्मूलम् इत्याद्यपि सिद्धम्। ननु सकारस्य विसर्गे कृते तस्य च रेफे सति सर्पिर्भ्यामित्याद्यपि सिध्यतीति किं योगारम्भेणेत्याह—षत्वस्य बाध इति विसर्गस्यावकाशः, गीः वृक्षः षत्वस्यावकाशः, अग्निषु वायोषु सर्पिर्भ्यामित्यादौ तूभयप्रसङ्गे विसर्गं बाधित्वा परत्वात् षत्वं स्यादिति तद्बाधनार्थो योगारम्भः। न च बह्वपेक्षत्वेन बहिरङ्गं षत्वं बाधित्वा रेफसकार(मात्रापेक्षत्वेन[2]) अन्तरङ्गत्वाद्विसर्ग एव भविष्यतीति शक्यं वक्तुम्, विसर्गस्यापि घोषवन्तमघोषं विरामविषये चापेक्षमाणस्य सतो बहिरङ्गत्वात्।

**धुटां तृतीयः २।३।५८**[3]

अग्निमद्भ्याम्, ज्ञानभुद्भ्याम्[4] इति, मथ विलोडने, बुध अवगमने। अग्निं मथ्नाति, ज्ञानं बुध्यतीति क्विप् हचतुर्थान्तस्येति बस्य भः, अनेन तृतीयो दः, लृतुलसाः दन्त्या इति तु-शब्देन पूर्वाचार्यप्रसिद्ध्या तवर्ग उच्यते। लृश्च तुश्च सश्च ते लृतुलसाः ते दन्त्याः। दन्ते भवाः दन्त्याः दन्तस्थाना इति यावत्। तेनैषां स्थानितुल्यत्वात् सस्य तृतीयो क्रियमाणे तृतीयो दकारः प्रवर्तते। पयस्वीत्यादौ तु न भवति। वा-शब्दस्य व्यवस्थितविभाषावाचिनोऽभिसम्बन्धात् पयो विद्यते यस्य, तदस्यास्तीति विन्प्रत्ययः।

---

१. २।३।५६ (दु० वृ०)
२. मुण्ड-पेक्षत्वेन (वा०)
३. २।३।६० (दु० वृ०)
४. ज्ञानभुद्भ्याम् (मं०)

**अघोषे प्रथमः २।३।५९**[1]

अग्निमत्सु ज्ञानभुत्स्वति मथिबुधी क्विबन्तौ पूर्ववद् भत्वम्। प्रियपुंस्क इत्यादौ सकारस्य प्रथमस्तकारो न भवति। भाषितं पुंस्कमिति निर्देशात्।

**वा विरामे २।३।६०**[2]

विराम अवसाने वर्तमानानामिति विरामव्यपदेशभाजामन्तभूताना-मित्यर्थः। तृतीयग्रहणानुवृत्त्या, पक्षे तृतीय इति तेन प्रथमाभावपक्षे धुटः स्वरूपेणावतिष्ठन्त इति भावः।

**रेफसोर्विसर्जनीयः २।३।६१**[3]

रेफश्च सश्चेति द्वन्द्वः, यथादर्शनमिति प्रयोगानुसारेण गीर्धूरिति गॄ निगरणे धुर्वी हिंसायाम्। गृणातीति क्विप्, ऋदन्तस्येर्गुण इतीरादेशः व्यञ्जनाच्चेति सि-लोपः। इरूरोरीरूरौ। पयः यमः इति नपुंसकात् स्वमोरिति सि-लोपः व्यवस्थितविकल्पानुवृत्तेरिह न भवति। गीर्षु धूर्षु। नन्वत्रास्तु विसर्गः। रत्वं तस्य भविष्यति। भवेदेतदेवम् यदि घोषवत् स्वर पर इति नियमो न स्यात्। इह नृकुट्यां भवो नार्कुटः इत्येवमादेरणिष्यत इत्यणि कृते आदिवृद्धौ च सञ्जातायां रेफस्य विसर्गो न भवति। अन्तरङ्गे विसर्गे कर्तव्ये बाह्यतद्धितापेक्षिण्याः बहिरङ्गायाः वृद्धेरसिद्धत्वे सति रेफाभावात्। श्रेयानित्यादावपि सकारस्य न भवति, संयोगान्तलोपस्य बलीयस्त्वात्।

**विरामव्यञ्जनादावुक्तं नपुंसकात्स्यमोर्लोपेऽपि २।३।६२**[4]

विरामव्यञ्जनादाविति बहुव्रीहिगर्भो द्वन्द्वः। उक्तमिति वचेः क्तप्रत्यये स्वपिवचीत्यादिना सम्प्रसारणमित्यनेन कार्यमात्रं निर्दिश्यते, तेन कार्यमात्रं विधीयमानं नपुंसकविधिभाक्, कार्यमात्रस्य विशेषणविशेष्यभावेन विरामव्यञ्जनादाविति स्यमोर्लोप इति सत्सप्तमी स्यमोर्विशेषणमवधित्वेन नपुंसकादित्यपि शब्दः कार्यव्यभिचारार्थः। सूत्रार्थस्तु वृत्तावेवोक्तः। लोपे कृते सति भवतीति कस्येत्याह—नपुंसकस्यैवेति। तस्यैव प्रकृतत्वेनावस्थितत्वात्।

---

१. २।३।६१ (दु० वृ०)
२. २।३।६२ (दु० वृ०)
३. २।३।६३ (दु० वृ०)
४. २।३।६६ (दु० वृ०)

अन्यस्य चाश्रूयमाणत्वादिति भावः। सुद्यु इति। अत्र दिव्-शब्दस्य द्युभ्यामित्यादौ दिव उद्व्यञ्जन इत्युत्वम्। यद् व्यञ्जनादावुक्तं तल्लुप्तयोरपि स्यमोरप्राप्तमप्यस्माद् वचनाद् भवति। सुपथीति पथि-शब्दस्य व्यञ्जने चैषां निरिति नलोपः। पथिभ्यामित्यादौ व्यञ्जनादावुक्तः। स्यमोर्लोपेऽप्यत्र भवति, विरामव्यञ्जनादाविति किम्, शोभनाः विद्वान्सो यत्र कुले सुविद्वत्, अघुट्स्वरादौ सेट्कस्येत्यघुट् स्वरादौ सेट्कस्योत्वमुक्तम् तत् स्यमोर्लोपे सति न भवति। विरामव्यञ्जनग्रहणस्य प्रयोजनं न विद्मः। विरामविषये हि यत् कार्यमुक्तं तत् स्यमोर्लोपे सति केन विनिवारितम्, यदनेन विधीयते। यद्वा विरामव्यञ्जनादौ यौगपद्येन यदुक्तं तद्व्यञ्जनादावप्युक्तमिति व्यञ्जनादिग्रहणादेव तस्य विधानं भविष्यतीति किं विरामग्रहणेन, विभक्तिप्रकरणाद्विभक्तिव्यञ्जने विधिरयमिति मन्यमानः यश्चोदयेत्। नन्वपास्य व्यञ्जनग्रहणं स्भ इति विभक्तिव्यञ्जनपरिग्रहणार्थं स्भ-ग्रहणं कस्मान्न क्रियते इति तं प्रत्याह—स्भ-ग्रहणमित्यादि व्यञ्जनशब्दं स्वरूपेणोपादाय यत्कार्यमुक्तम्, यथा दिवउद्व्यञ्जन इत्याद्युक्तं तस्य स्यमोर्लोपे सति विधानं यथा स्यादित्येवमर्थं व्यञ्जनग्रहणं क्रियते, तेन यद् तद् इत्यत्र त्यदाद्यत्वम् व्यञ्जनशब्दम् अनुच्चार्य विधीयमानं न भवति यत्क्रियते तत् कर्मेति ज्ञापकं सि-लोपविषय एव त्यदाद्यत्वाभावं विदध्यात्। अमो लोपे तु त्यदाद्यत्वं स्यादेव। एतत् कुलमित्यत्र तु वाच्यं किमिति ज्ञापकालम्भनं न ज्यायः। यद्येवमित्यादि। यदि व्यञ्जनशब्देन (¹उच्चारितस्य कार्यस्य प्रतिपत्त्यर्थं व्यञ्जनग्रहणं तदा इदं कुलमित्यत्र अद्व्यञ्जनेऽनक् इतीदमोऽकारादेशो व्यञ्जन)शब्दोच्चारणेन विधीयमानः प्राप्नोति, स कस्मान्न भवतीत्याह—सत्यमित्यादिना गतार्थम्।

"इति भट्टोग्रभूतिकृते शिष्यहितान्यासे शिष्यालोकाभिधाने नामप्रकरणे युष्मत्-पादस्तृतीयः।"

## चतुर्थः पादः

**अव्ययीभावादकारान्ताद्विभक्तीनाममपञ्चम्याः २।४।१**

अव्यय-शब्दोऽव्ययसंज्ञासूत्रे-सुविस्तारं² कृतव्युत्पत्तिः। भाव-शब्दोऽपि भवतीति भाव इति। भवतेर्णप्रत्ययान्तः। ण-प्रत्ययस्तु ज्वलादिर्दुनीभ्यो ण

१. न्यूनपाठः (भं०)
२. सुविस्तरम् (भं०)

इत्यत्र वक्ष्यमाणे भवतेरनुपसर्गे वा णो वक्तव्य इति वचनेन। अनव्ययमव्ययं भवतीत्यव्ययीभावः। तमादित्वादव्ययशब्दात् च्विप्रत्ययः, अतएव निर्देशात् च्वेर्लोपः, ईत्वं चावर्णस्य, विभक्तीनां स्थानेऽमादेशो भवतीति। ननु चोपकुम्भादव्ययीभावः पूर्वपदार्थप्रधानः, पूर्वपदार्थस्य चासत्त्वभूतत्वात्क्रियासम्बन्धो नोपपद्यते, तदनुपपत्तेः च कर्मादिभावोऽव्ययीभावस्य न सम्भवतीति तत् कथं कर्मादिकारकविषयाः विभक्तयः स्युः। सत्यम्, अस्त्येतत्। किन्तु यद्यपि पूर्वपदार्थः सामीप्यादिलक्षण उपकुम्भमानयेत्यादिवाक्ये आनयनादिक्रिया साक्षान्न सम्बध्यते, तथापि कुम्भाद्यपेक्षया यः समीपः तस्य क्रियया सम्बन्धात् तद्द्वारेण सामीप्याद्यपि क्रियया सम्बध्यत इत्येवमुपकुम्भादेः कर्मादिभावोऽस्त्येवेति सन्त्यव्ययीभावात् कर्मादौ विभक्तयः। सनपुंसकलिङ्गस्स्यादिति वा नपुंसकलिङ्गताविधानात् ज्ञापकादव्ययीभावस्यावसितं सत्त्ववाचित्वमिति क्रियया तस्य सम्बन्धो युज्यत एवेति पञ्चमीविभक्तिं वर्जयित्वेति भिन्नवाक्यताप्रदर्शनेनापञ्चम्या इति प्रसज्यप्रतिषेधोऽयं न तु पर्युदास इति दर्शयति तथा च विभक्तिग्रहणं क्रियते, पर्युदासे हि विभक्तिग्रहणमपार्थकं स्यात्। अव्ययीभावस्याव्ययत्वात्सेरव्ययाच्चेति लुकि प्राप्ते वचनम्। समीपं कुम्भस्य उपकुम्भमिति पूर्वं वाच्यमित्यादिना अव्ययीभावसमासः। तिष्ठति पश्य देहिस्वमित्येतदुपन्यासः[1] प्रथमा-द्वितीया-चतुर्थी-षष्ठीनां प्रदर्शनार्थः। तासामम्भावः, अकारलोपम्, यद्येवममोऽकारकरणमपार्थकं स्यात्, नैतत् असति हि अकारकरणे घोषवन्निमित्तमकारो दीर्घमिति दीर्घत्वमाशङ्क्येत। राजपुरुष इति तत्पुरुषोऽयं न त्वव्ययीभावः। समीपं वध्वा उपवधु इति भवत्ययमव्ययीभावः नत्वकारान्तः, सः नपुंसकलिङ्गस्स्यादिति नपुंसकत्वात् स्वरो ह्रस्व इति ह्रस्वः। अकारेणाव्ययीभावस्य विशेषणात् ([2]अकारान्तोऽयमिति तदन्तग्रहणे) लब्धे पुनरन्तग्रहणं लाक्षणिकाकारान्तत्वार्थम्, तेन समीपं शरदामुपशारदमित्यादावकारे समासान्तेऽप्यम्भावः सिद्धो भवति। उपकुम्भतेति। तात्वौ भावे इति ता-प्रत्ययः।

**वा तृतीयासप्तम्योः २।४।२**

प्राप्तविकल्प इति पूर्वसूत्रेण नित्यं प्राप्तत्वात्, यद्येवम्, पृथगारम्भसामर्थ्याद्विकल्पो विज्ञास्यते तत् किं वा ग्रहणेन, असदेतत्। पृथगारम्भो हि

---

१. स्वमित्येषामुपन्यासः (वा०)

२. अकारान्तादिति तदन्तत्वे (वा०)

पूर्वयोगे विकल्पं विदध्यात्, अयं तु विधिर्नित्यो विज्ञायेत[1] अनव्ययीभावार्थो वेति वा ग्रहणं ज्यायः ।

**अन्यस्माल्लुक् २।४।३**

अन्यस्मादनकारान्तादव्ययीभावादिति । एतेन विशेष्यत्वाल्लब्धप्रधानभावोऽव्ययीभावोऽन्यग्रहणेन विशेष्यत इति दर्शयति, यदि पुनः विशेषणमकारान्तादित्येतद् विशेष्यते ततोऽन्यस्मादकारान्तादिति व्याख्यायमाने राजपुरुषादेरपि लुकं प्रत्यवधित्वं विज्ञायते । विभक्तीनां लुग्भवतीति । नत्वनन्तरयोतृतीयासप्तम्योरेव, कुतः, विभक्तिग्रहणस्यानपेक्षणात् । उपवधु कृतमिति कृतशब्दः तृतीयायाः लुक्प्रदर्शनार्थः । उपवध्वाः[2] स्वमिति स्वशब्दोऽपि षष्ठ्याः । अधिस्त्रीति । स्वरो ह्रस्व इति ह्रस्वः । अनेन सेर्लुक् । अन्यस्मादिति किमिति, उत्तरत्र लुग्ग्रहणं कियतामनकारान्तत्वादव्ययीभावादव्ययत्वादेवोत्तरसूत्रेण लुग्भविष्यतीति किमनेन योगारम्भेणेति मन्यमानस्यैष प्रश्नः, इतरोऽप्यनकारान्तादेवाव्ययीभावाद्विभक्तीनां लुग्यथास्यादकारान्तात् मा भूदिति नियमार्थोऽस्य योगस्यारम्भः इत्यभिप्रायेण प्रत्युदाहरति उपकुम्भेन उपकुम्भ इति ।

**अव्ययाच्च २।४।४**

अव्ययात्परमासां विभक्तीनामिति । नन्वेकत्वादिष्वर्थेषु विभक्तयः स्मर्यन्ते, न च तैरव्ययस्यास्ति योगः, अलिङ्गसंख्यमव्ययमिति वचनात् । ततश्चाव्ययात्परा विभक्तयो नैव सन्तीति किमर्थमिदमुच्यते, अस्त्येतत् । अस्मादेव तु लुग्विधानारम्भाद्विज्ञायते सन्त्यव्ययाद्विभक्तय इति । तेन तासां श्रवण-निवृत्तये वचनम् । ननु रूपविशेषलक्षणकस्य फलस्य विभक्त्युत्पत्तावप्यनुपलभ्यमानत्वात् किं विभक्तिभिरुत्पन्नाभिः प्रयोजनमिति पृच्छति, यदि तासामित्यादि । पद-संज्ञा यथा स्यादित्युत्तरयति । केवलानां चादीनामसञ्जातायां विभक्तौ पदसंज्ञा न स्यादिति तत्सिद्धये तेभ्यो विभक्तय उत्पद्यन्त इति[3] भावः । किं पुनः सत्यां पदसंज्ञायां फलमित्याह—सत्यां तस्यामित्यादि । ग्रामश्च ते स्वमित्यादि । युष्मदस्मद्, ङस्, तवममावादेशौ तयोः[4] उपपदात्

१. विज्ञायते (भं०)
२. उपवधु (भं०)
३. इत्यर्थः (भं०)
४. तयोः पदात् (वा०)

च शब्दात् परयोः त्वन्मदोरेकत्व इत्यादिना ते मे इत्येतावादेशौ। यद्येवम्, पदत्वसिद्धये प्रथमैकवचनमेवास्तु किं वचनान्तरोत्पत्त्या, अतो विभक्तीनामित्ययुक्तो बहुत्वनिर्देशः, सत्यम्, प्रकृतिभेदेन यद् भिन्नं प्रथमैकवचनं तद्भेदादेष बहुत्वनिर्देशः।

**रूढानां बहुत्वे स्त्रियामपत्यप्रत्ययस्य २।४।५**

रूहेः गत्यर्थाकर्मकेत्यादिना कर्तरि क्तः प्रत्ययः, हो ढ इत्यादिना ढत्वादिकार्यं, पतनं पत्, कृत्ययुट इति क्विप्, नपत् अपत् अपतिसाधु अपत्यम्। तत्र साधौ च य इति यः। प्रत्ययशब्दः इणो घ प्रत्ययान्ताः ये शब्दा इत्यादि। एतेन जनपदसमानशब्दात् क्षत्रियवाचिनो रूढशब्देनेह परिगृह्यन्त इति दर्शयति। तथा च पाञ्चालस्य विप्रस्य[1] अपत्यानि बहूनि पाञ्चाला इत्यत्र लुक् च न भवति अपत्य-प्रत्ययस्य बहुत्व उत्पन्नस्येति। एतेन बहुत्व इत्येतत् सन्निहितस्यापत्यप्रत्ययस्य विशेषणम्, न तु बहुत्वाभिधायिनो बहुवचनस्यायं निमित्तभाव इति दर्शयति। यदि हि एवं भवेत् तत आङ्ग्य इत्यादावपत्यप्रत्ययस्य स्त्रीप्रत्ययेन व्यवहितत्वाद् बहुत्वविषयं बहुवचनं परं न सम्भवतीति प्राप्त्यभावादस्त्रियामिति निषेधं न कुर्यात्। तस्मादपत्यबहुत्वे य उत्पन्नः प्रत्ययस्तस्यालुगित्यपत्यप्रत्ययः बहुत्व इत्यनेन विशेष्यते। स्त्रीविषयं वर्जयित्वेत्येतेन व्याख्यानात्। अस्त्रियामयं निषेधो न तु विधिरिति दर्शयति। वृद्धेरभाव इति वृद्धिरादौ सणीत्यनेन प्राप्तायाः वङ्गः कलिङ्ग इति अनपत्यप्रत्ययेऽप्यणो लुक्, पुरोरपत्यानि बहूनि पौरव इति पुरुशब्दोऽयं राजविशेषाभिधायी। जनपदेन समानशब्दो न भवतीत्यपत्यार्थं[2] विहितस्याणो लुग्न भवति। प्रियवाङ्ग इत्यादावपि न भवति, प्रत्ययस्यात्रैकत्वविषये उत्पन्नत्वात्। बहुत्वार्थावगतिस्तु अन्यपदार्थत्वात्। ननु चायमपत्यस्येति[3] क्रियताम्, अपत्यशब्देन चाण्णन्तेनापत्यार्थे भावः प्रत्ययः च[4] व्यपदेक्ष्यत इति किं प्रत्ययग्रहणेन, अस्त्येतत्, उत्तरत्र क्वचिल्लुगभावार्थं प्रत्ययग्रहणम्, तेन "गोपवनं शिस्नुः विन्दुः भाजनः, अश्वावतारः श्यामाकः श्यामपर्ण" इत्येतेभ्यो विदाद्यनुवृत्तेभ्योऽप्यणो लुग्न भवति। गोपवनस्यापत्यानि बहूनि गौपवना इत्यादौ[5]।

१. न्यूनपाठः (भं०)
२. भवतीत्याह (भं०)
३. चापत्यस्येति (भं०)
४. एव (भं०)
५. इत्यादीनि (भं०)

**गर्गयस्कविदादीनां च २।४।६**

द्वन्द्वगर्भो बहुव्रीहिरित्येतेनादिशब्दस्य प्रत्येकं सम्बन्धं दर्शयति । यदि पुनः बहुव्रीहिगर्भो द्वन्द्वः स्यादादिशब्दस्य विदशब्देनैव सम्बन्धः स्यात्, एवं तु न विज्ञायते, विदादिगर्गयस्कानामित्येवमकरणात् । तमेव प्रत्येकमभिसम्बन्धं दर्शयितुमाह—गर्गादीनां यस्कादीनां विदादीनां चेति आरूढार्थं वचनम् । तेन पूर्वेण सिद्धे सत्ययमारम्भ इति भावः। अणो लुगिति वाणपत्यय इत्यनेन विहितस्य, अन्येभ्यस्तु यस्कादिगणपठितेभ्यः कम्बलहारादिति अणो लुक् । ([1]विश्रिप्रभृतिभ्योऽप्येण एवं यस्कादिभ्यो यथा प्रत्ययप्रयोगेनोत्पन्नस्यापत्य-प्रत्ययस्य लुग्बोधकः अणो लुगिति) अपत्यार्थविहितस्य चकारोऽनुक्तसमुच्च-यार्थः । ([2]एकत्वद्वित्वे चोत्पन्नस्य तत्पुरुषे समासे लुक्प्रवर्तते इति) तेन गर्गस्य गार्ग्ययोः कुलमिति विगृह्य गार्ग्यकुलं गर्गकुलमित्यादावपि षष्ठीतत्पुरुष एकत्वे द्वित्वे च ण्यस्य वा लुग्भवति । एवं च वैदस्य वैदयोर्वा कुलं वैदकुलम् । विदकुलमित्यादावप्यणः, अन्ये तु यत् गार्ग्यस्य गार्ग्ययोर्वा कुलं तत् गर्गस्यापि कुलं भवत्येवेति व्याचक्षते, एवं च गर्गकुल-शब्दे गर्गशब्द एव षष्ठ्यन्तः सम-स्यते न तु गार्ग्यशब्दः । तत्किमेवमर्थेन समुच्चयकथनेन, तत्तु पूर्वसूत्रापेक्षया गर्गादिविषयमित्याहुः । तन्न चतुरस्रम् इत्यपरे[3] मन्यन्ते । यतो यद् गर्गस्य गार्ग्ययोर्वा कुलं तद् गर्गस्यापि कुलं भवत्येवेति केनापह्नुतं विशेषविवक्षायां त्वेकत्वद्वित्वविषये गर्गकुलमित्येतदिष्यमाणं न प्राप्नोतीति तत्संसिद्धये समुच्चयकथनमेव ज्यायः ।

**भृग्वत्र्यङ्गिरस्कुत्सवसिष्ठगोतमेभ्यश्च २।४।७**

इदमप्यारूढार्थं वचनम् । भार्गव इति, उवर्णस्त्वोत्वमापाद्य इत्योत्वम्, पूर्ववदणिति—तस्येदमित्यनेन ।

**यतोऽपैति भयमादत्ते वा तदपादानम् २।४।८**

भीतिः भयम्, इति अच्[4]प्रत्ययः । अप आदीयते यस्मादित्यपादानम् । कृत्ययुट इति युट्, अप एतीति द्वे पदे इति, तत्र अप इति प्रथमान्तम्, एतीत्या-

१. न्यूनपाठः (भं०)
२. न्यूनपाठः (भं०)
३. इत्यन्ये (भं०)
४. अल् (भं०)

ख्यातपदम्, पूर्ववदवर्णस्य लोप इण एकारे निषिद्ध इति न भवति। तथा आदत्ते इति द्वे पद इति सम्बध्यते। आदत्ते इति डुदाञ् दाने, आङ् पूर्वः, ततः सेरव्ययाच्चेति सिलोपः, ते अन्-विकरणः, जुहोत्यादेश्चेति लुक्, जुहोत्यादीनां सार्वधातुक इति द्विर्वचनम्, ह्रस्वः। अभ्यस्तानामाकारस्येत्यालोपः। अघोषेष्वशिडामिति दस्य तत्वम्। तदिति संज्ञी, अपादानमिति संज्ञा, शिष्टं संज्ञिनोर्विशेषणं, इत्थमवयवार्थ उत्तरत्र बोद्धव्यः। समुदायार्थं व्याख्यातुमाह – अपैति इत्यादिना। विश्लेषं प्राप्नोतीत्यपक्रामतीत्यर्थः। यतो भयमिति। भयमाकुलीभावः। ग्रामादागच्छतीति ग्रामस्यापादानसंज्ञायां शेषात् कर्मेत्यादिना अपादाने पञ्चमी, ग्रामादागमिष्यतीत्येतेनापैतीति वर्तमाननिर्देशो अत्र न विवक्षितोऽपायमात्रस्य विवक्षितत्वादिति दर्शयति। तेन भविष्यत्यपायभूते चासौ संज्ञा भवति यथा च वर्तमाननिर्देशस्याविवक्षा, तथैकत्वसंख्याया अपि। तेन ग्रामादागतावित्याद्यपि भवति। एवमुत्तरत्राप्यविवक्षा संख्याकालयोः। इह च न केवलं कार्यसम्प्राप्तिपूर्वकोऽपायो गृह्यते, यावत् बुद्धिसंसर्गपूर्वकोऽपि इत्यभिप्रायेणोदाहरति—अधर्मान्निवर्तत इत्यत्र ह्यपायो बुद्धिसंसर्गपूर्वकः। तथाहि य एष मनुष्य इष्टानिष्टयोगं भाविनमभिसमीक्ष्य[1] प्रवर्तते सः पूर्वं स्तेयादिकमधर्मप्रकारं बुद्धौ[2] तावत्परिगृह्णाति ततोऽधर्मस्य दुःखहेतुतां पश्यंस्ततो बुद्धिं निवर्तयति, एवं चात्रापायो विद्यत एव गौणमुख्यपरिभाषा चेह प्रकरणे लक्ष्यानुरोधान्नाश्रीयते। एवमधर्माज्जुगुप्सते, अध्ययनाद्विरमति[3], अध्ययनात् पराजयते, आलस्योपहतो दुःखमेतदध्ययनमिति मत्वा ततः पराजयते न्यूनीभवतीत्यर्थः। उपाध्यायादन्तरत्वे मा माम् उपाध्यायोऽद्राक्षीदिति निलीयत इत्यर्थः। उपाध्यायादधीते, उपाध्यायात् शृणोति, उपाध्यायमुखान्निष्क्रामतः शब्दान्नादत्ते इत्यर्थः। यद्येवम्, उपाध्याये शब्दानां सम्भवो न स्यात्। नैतत्। नदीस्रोतोवत्तेषां सन्ततं प्रतीतेर्मूलदेशादपसर्पणं नास्त्येव। नटस्य शृणोतीत्यादावपि तर्ह्यपादानसंज्ञा प्राप्नोति, न भविष्यति, क्रियाश्रुतावपि कारकत्वपरिहारेण सम्बन्धस्यात्र विवक्षितत्वात्। यथा च "अनुचकार भगवतो नारायणस्य" "न माषाणामश्नीयात्" इत्यादौ। एवं शृङ्गाच्छरो जायते, शरः शृङ्गादपक्रामतीत्यर्थः। ननु चापायो विश्लेषः, स च द्वयमपेक्षते, यतो विश्लेषः यच्च विश्लिष्यति। एवं च शिरो यदि संस्तुतोऽभूतप्रादुर्भावलक्षणं जन्म तस्य

---

१. समीक्ष (पाठभेदः वा०)

२. बुद्ध्या (भं०)

३. अधर्माद्विरमति (भं०)

नोपपद्यते। अथासंस्तुतोऽपि जनिक्रियायाः कर्ता न कश्चिदिति जायमानस्यैवा-सम्भवात्। कथमुभयकर्तृकोऽपायो भवेद् येन शृङ्गादेरपादानसंज्ञा स्यात्। सत्यम्। किन्तु बहिरसत्यपि बुद्धिस्थेऽर्थे शब्दः प्रयुज्यते। एवं च बुद्धिसत्ता-समाविष्टं वस्तु बहिरसदपि बाह्यादभेदेनावसीयमानं जायत इत्यनेन निर्दि-श्यते। तथा च निर्वर्त्यस्यापि कर्मणो घटादेर्बहिरसतोऽपि बुद्धिसत्तासमा-विष्टस्य सतः कारकत्वमुपपद्यते। एवं हिमवतो गङ्गा प्रभवति निस्सरती-त्यर्थः। सन्तत्या तु सरित्स्रोतसो मूलदेशान्नास्ति विच्छेदः। बलाहकाद्विद्योतते विद्युत् बलाहकान्निष्क्रम्य तेजो विद्योतत इत्यर्थः। कथमेतत्, उच्यते—इह यदा मेघाद् व्यतिरिक्तं तेजो विवक्ष्यते निस्सरणगर्भे च, विद्योतने विद्युति-र्वर्तते तदा भेदस्य विवक्षितत्वाद् बलाहकादिति प्रयोगः। यदा पुनः बलाह-कान्तःपातित्वेन तेजो विवक्षितं भवति तदा तद् बलाहकान्नान्यदिति कृत्वा बलाहको विद्योतत इति प्रयुज्यत[1] एव, यदापि तेजसो बलाहकस्य च भेद-विवक्षा निष्क्रमणञ्च तेजसो बलाहकान्न[2] विवक्ष्यते तदाधिकरणतया[3] बलाह-कस्य निर्देशाद् बलाहके विद्योतत इति। एवं कुसूलात्पचतीत्यादौ आदानार्थे[4] पाके पचेर्वृत्तिः कुसूलादादाय पचतीत्यर्थावगमात्। कुसूलादिति पञ्चमीप्रयोगः एवं माथुराः पाटलिपुत्रेभ्य आढ्यतराः विभागक्रियामपेक्ष्यैतदपादानम्, यो हि माथुराणां पाटलिपुत्रकाणां च केनचिद् धर्मयोगेन साम्यमवगत्य पुनराढ्यतर-त्वेनासाधारणेन धर्मेण तेषां विभागमवगच्छति स एवं वाक्यं प्रयुङ्क्ते। तदुक्तम्, पाञ्चालेभ्यः कुरवः आढ्यतराः इत्युदाहरणम् बुद्धावभिसन्धाय भर्तृहरिणा-न्यत्र बुद्ध्या समीहतैकत्वान्पाञ्चालान्कुरुभिः सह यदा विभजते वक्ता तदा अपायः प्रवर्तते। वृक्षस्य पर्णं पततीत्यत्र तु वृक्षस्य विशेषणत्वमात्रं विवक्षितुं न तु अवधित्वविवक्षेत्यत्रापादानसंज्ञा न भवति। चौरेभ्यो बिभेतीति चुरे-रिन्नन्तात् चोरयतीति पचाद्यच्, चोर एव चौरः, वाणपत्ये इत्यतो वा शब्दाद् बहुलार्थाद् स्वार्थेऽण् प्रत्ययः। यथा रक्ष एव राक्षसः, वणिगेव वाणिज इति। उपाध्यायाद् विद्यामादत्ते इति। उपाधिपूर्वादिङ्, उपेत्यधीयते यस्मादिती-ङाभ्याञ्चेति घञ्। अत्र हीत्यादि। ततश्च ग्रामस्यापायेनायुक्तत्वादपादान-संज्ञा न सिध्यतीति भावः। सत्यमित्यादि। अयमर्थः, ग्रामान्नागच्छतीत्यादौ प्रतिषेधविषये प्रदर्शनार्थमपायविवक्षापूर्विका पूर्वमपादानसंज्ञा प्रवर्तते ततश्च

---

१. प्रसज्यत (भं०)

२. न्यूनपाठः (भं०)

३. तदधिकरणाद् (भं०)

४. आदानाङ्गे (वा०)

प्रतिषेधस्य विषयभूतायां तस्यां पूर्वं प्रदर्शितायां पश्चात् प्रतिषेधेन सम्बन्धः क्रियते। तेनापादानसंज्ञापूर्वकः प्रतिषेधः न सम्बद्धः इत्यदोषः। एवमुपाध्याय गां न ददातीत्यादावपि वाच्यम्। आदत्ते ग्रहणं प्रपञ्चार्थमित्युक्तम्। अन्ये तु भयमादत्ते इति भयग्रहणसम्बद्धमेतदादत्ते ग्रहणं कृतम्, न त्वनेन पृथगपादान-संज्ञा क्रियत[1] इत्याहुः। तदसारम्, यतो भयं तदपादानमित्येतावतैवार्थस्याव-गतत्वाद् भयग्रहणसम्बन्धेनादत्ते ग्रहणस्यानुपयुज्यमानत्वात्। तथा भयग्रहणम-पीति प्रपञ्चार्थमित्यनुषज्यते। अत्रैव कारणमाह—तथा हीत्यादि। बुद्धि-संसर्गपूर्वकोऽपायो अत्रास्तीति मन्यते। तथा हि य एष मनुष्यः प्रेक्षापूर्वकारि-त्वेन क्वचित् प्रवर्तते स निरूपयति, यदि मां चौरा पश्येयुः ततो ध्रुवं वध-बन्धनादिकं कुर्युरिति बुद्ध्या तान्प्राप्नोति, प्राप्य च तेभ्यो निवर्तत इति स्फुट एवात्रापायः। गुरुसंज्ञाकरणमवधिभूतस्यैव ग्रामादेः संज्ञाप्रतिपत्त्यर्थम्। इतरथा हि योऽपैति सोऽप्यविशेषादपादानसंज्ञः स्यात्। नहि यतो—अपैतीत्यत्र यच्छब्देन वाच्येऽर्थेऽस्ति विशेषः। यदवधिरेवापादानसंज्ञो न त्वपैति क्रिया कर्तेति। तस्मादपैति क्रियाकर्तुः संज्ञा मा भूदवधेरेव यथा स्यादिति गुर्वी संज्ञा क्रियते।

**ईप्सितं च रक्षार्थानाम् २।४।९**

अभिप्रेतवचनमिह व्युत्पन्न ईप्सितशब्दः। रक्षणं रक्षा, गुरोश्च निष्ठाया-मिति अकारप्रत्ययः, श्रुतानुमिताध्याहारैरित्यादि। इह सर्वत्र त्रिभिः प्रकारैः सूत्रार्थः कल्प्यते। क्वचिच्छ्रुतेन यथेह ईप्सितशब्देन, क्वचिदनुमितेन यथा-त्रैवापादानशब्देन, स हि पूर्वसूत्रे कृतकृत्यत्वादिहानुवर्तयितुं न पार्यते, तत्सदृशं तु यदनुमितमुत्तरत्रानुरोधादपादानमिह शब्दान्तरं तदिह सम्बध्यते, तेनापादानमित्येतदनुमितम्। क्वचित्तु, अध्याहृतेन, यथा अत्रैव भवति शब्देना-पादानसंज्ञा भवतीति। एवं श्रुतेनानुमितेनाध्याहृतेन च शब्देन सर्वत्र सूत्रार्थस्य कल्पनादिह सप्तम्यन्तः प्रयोगशब्दः सूत्रार्थबलादध्याह्रियते। अन्यथा रक्षा-र्थानामितीयं षष्ठी किमपेक्ष्य स्यात्। प्रयोगशब्दाध्याहारात्किं सिद्धं भवती-त्याह—तेनेत्यादि। यवेभ्यो गाः रक्षतीत्यादि। अत्र यवानामात्मीयत्वेनेप्सित-त्वादपादानसंज्ञा। यत्रापि परकीयाः यवा आत्मीयास्तु गावस्तत्रापि यवा ईप्सिता एव, तेषु गोभिः भक्ष्यमाणेषु गोस्वामिना राजभयोत्पादात्। यद्येवम्, गवामपीप्सितत्वादपादानसंज्ञा स्यात्, न भविष्यति, यवेषु[2] सावकाशायाः

१. विधीयते (भं०)

२. सवेषु (भं०)

तस्याः परत्वात्कर्मसंज्ञया बाध्यमानत्वात् । यतोऽपैतीत्यनेन सिद्धत्वादित्यस्य हेतोः दृढीकरणार्थमाह—अस्तीत्यादि ।

**यस्मै दित्सा रोचते धारयते वा तत्सम्प्रदानम् २।४।१०**

दातुमिच्छा दित्सा । ददातेर्धातोर्वा कर्मण इति सन्, द्विर्वा[1] सनिमीमेत्यादिना स्वरस्येत्वम् । अभ्यासस्य च लोपः । सस्य से सार्वधातुके त इति सस्य तः । शन्सु प्रत्ययादः अस्य च लोपः स्त्रियामादाप्, धृङ् अनवस्थाने ध्रियमानं प्रयुङ्क्ते, धातोश्च हेतावितीन्, सम्यक्[2] प्रदीयते यस्मै इति कृत्य युट इति युट्, यस्मै दित्सा दातुमिच्छेति यं विप्रादिकमुद्दिश्य दातुः दातुमिच्छा सोऽत्र यच्छब्देन निर्दिश्यते । ननु इच्छाशब्दे वाच्येऽर्थे विशेषो नावभाषते, ततो यथायं विप्रादिकमुद्दिश्य दातुः वितरितुमिच्छा प्रवर्तते, तस्याः विप्रादेः सम्प्रदानसंज्ञा (भवत्येव[3] यस्य दानविषये इच्छा दातुस्तस्य सता प्राप्नोति । अत्रोच्यते, सम्प्रदानमिति पूर्वाचार्यसंज्ञा) श्रवणान्न भविष्यति, तेन गवादिलक्षणेन कर्मणाभिसम्बध्यमानस्य विप्रादेरेवायं संज्ञा न तु दित्सावतः । यस्मै रोचत इति । पूर्ववन्मोदकादिना तर्प्यमाणस्य देवदत्तादेरनेन संज्ञा, न तु अभिलाष्यमाणस्य मोदकादेः । एवं यस्मै धारयते इत्यनेनाप्युत्तमर्णस्य संज्ञा न त्वधमर्णस्य । दित्सेति । ददात्यर्थो गृह्यते, तेन गुरवे ताम्बूलं वितरतीत्यत्रापि भवति । रोचते इत्यत्रापि रुच्यर्थाश्रयणाद् देवदत्ताय स्वदत इत्याद्यपि सिध्यति । दित्सेति किमिति । ददातीति कर्तव्ये दित्सेति किमर्थः सना निर्देशः इति भावः । दातुम् इच्छायां सत्यां यथा स्यात् । सत्यपि दाने तदिच्छायामसत्यां माभूदित्याकूतेन प्रत्युदाहरति । राज्ञो दण्डं ददाति । यद्येवम्, रजकस्य वस्त्रं ददातीत्यादावपि कस्मान्न भवतीत्याह—विशिष्टे विषये इत्यादि। तमेव विषयविशेषं प्रदर्शयितुमाह—तेनेत्यादि । दित्सेति । ददातेरर्थोपादानम् । तेन यत्र दाने दीयमानेन वस्तुनाभिसम्बध्यमानस्य परस्य स्वाम्य ममेदमित्यध्यवसायः उत्पद्यते । तत्रेयं संज्ञा प्रवर्तते । न च रजकस्य वस्त्रविषये स्वामित्वापादानमस्ति इति तस्य संज्ञा न भवति । देवताभ्यो बलिं ददाति पितृभ्यो जलं ददातीत्यादौ तु यद्यपि स्वाम्यत्वापादानमशक्यं कर्तुं देवतानामतीन्द्रियविषयत्वात्, पितृणां च नितान्तमसन्निधानात् । तथाप्यशक्येऽपि स्वामित्वापादाने संज्ञाः प्रवर्तन्त एव, कुतः यस्मिन्दाने शक्याधानमशक्याधानं वा परस्य स्वाम्यभिसम्बन्धीयते तद्

१. द्विर्वचनम् (भं०)
२. सम् (भं०)
३. न्यूनपाठः (वा०)

दानमित्येवं तूपादानलक्षणार्थाङ्गीकारेणास्याः पूर्वाचार्यसंज्ञाया इष्यमाणत्वात्। वा शब्दोऽनेकार्थत्वान्निपातानाम् अन्यत्रापि संज्ञा समुच्चिनोति, तेन श्लाघह्नुङ्स्थाशप् इत्येतेषां प्रयोगे बोधयितुमभिप्रेतस्य सम्प्रदानसंज्ञा भवति। चैत्राय श्लाघते। चैत्रं श्लाघमानः तां श्लाघां तामेव बोधयितुमिच्छतीत्यर्थः। बोधयितुमनभिप्रेतस्य तु न भवति। चैत्रं श्लाघत इति। एवं चैत्राय ह्नुते, चैत्राय तिष्ठते, चैत्राय शपते, तथा क्रुधद्रुहेर्ष्यासूयार्थानां प्रयोगे यं प्रति कोपः तत्रापि[1] भवति। चैत्राय क्रुध्यति, चैत्राय द्रुह्यति, चैत्रायेर्ष्यति, चैत्रायासूयति। अथेर्ष्यासूययोः को भेदः, उच्यते—गुणान्प्रति द्वेषः ईर्ष्या इति। दोषोद्घोषणमसूया। चौरं द्वेष्टि, औषधं द्वेष्टि इत्यादौ द्विषिरनभिनन्दने वर्तते। तेन कोपविवक्षा नास्तीति संज्ञा न भवति। पूर्वाचार्यसंज्ञाप्रसिद्धिवशेन च वा शब्दस्य संज्ञा समुच्चयार्थत्वात्। सोपसर्गयोः क्रुधद्रोहयोः प्रयोगे सम्प्रदानसंज्ञाविषये कर्मसंज्ञा स्मर्यते। चैत्रमभिक्रुध्यति, चैत्रमभिद्रुह्यति। राधीक्ष्योः प्रयोगे यत्सम्बन्धेन शुभाशुभं पृच्छते तत् सम्प्रदानम्। चैत्राय राध्यति, चैत्रायेक्षते। ([2]नैमित्तिकश्चैत्रस्य दैवमालोचयतीत्यर्थः) एवं चैत्राय गां प्रतिशृणोति। चैत्राय गामाशृणोति। प्रत्याङ्भ्यां परः शृणोतिरभ्युपगमे वर्तते। ननु चैत्राय श्लाघत इत्यादि सर्वं तादर्थ्यचतुर्थ्यैव सिद्धम्, असदेतत्। एवमुच्यमाने हि यस्मै दित्सेति वचनम्, अपार्थकम् स्यात्। अस्त्वेवमिति चेत्, कथं दाशगोघ्नौ सम्प्रदान इत्यादि व्यवहारो घटते, राज्ञो दण्डं ददातीत्यादावपि चतुर्थी स्यात् तादर्थ्यस्य विद्यमानत्वात्। श्लाघादिप्रयोगे च बोधयितुमनभिप्रेतस्यापि केन तादर्थी चतुर्थी न भवेत्, सोपसर्गयोश्च क्रुधद्रुहोः प्रयोगे तादर्थ्यमव्याहतमेवेति तत्रापि चतुर्थी स्यात्। न च सूत्रकारमते तादर्थ्यचतुर्थीविधायकं लक्षणमस्ति, यूपाय दार्वित्यादौ तर्हि का गतिरिति चेत्, शेषाः कर्मेत्यादौ चानुवृत्त्या सम्प्रदानादन्यत्रापि चतुर्थी समुच्चयन।देवमादौ यथाप्रयोगं चतुर्थी विज्ञास्यते। श्लाघादिप्रयोगेऽप्येवं भविष्यतीति चेत्, न। बोधयितुमनभिप्रेतादपि चतुर्थीप्रसङ्गात्, तस्माद्वा ग्रहणमेव पूर्वाचार्यसंज्ञाविशेषप्रदर्शकत्वेन व्याख्येयम्।

**य आधारः तदधिकरणम् २।४।११**

निपातनाद् घञ्, धृङ् अनवस्थाने इत्यस्मात् दध्नि घृतमिति अस्थिदधि इत्यन्नादेशः। अवमसंयोगादित्यकारलोपः। एतद् व्यापकमधिकरणम्, दध्नौ घृतं व्याप्यावस्थानात्। पर्यङ्के शेत इति। एतच्चौपश्लेषिकम्, आधेयेन सह

१. तस्यापि (मं०)
२. नैमित्तिचैत्रस्यादेवमालोचयति इत्यर्थः (वा०)

संयोगलक्षणस्य उपश्लेषस्य सम्भवात् । दध्नस्तु घृतेन सह समवायेऽपि देश-विभागाभावादुपश्लेषस्य व्यवहारो न घटते इत्यौपश्लेषिकाद् व्यापकं पृथगेव । जले मत्स्या इति वैषयिकमेतत् । विषयो नान्यत्र भावः । यदा चक्षुरादीनां रूपादयो विषया इति । एवं गुरौ वसति, गङ्गायां घोष इत्यादि । यदि आधारस्याधिकरणसंज्ञा तर्हि क्रियां प्रत्याधारयोः कर्तृकर्मणोरप्यधिकरणसंज्ञा प्राप्नोति । देवदत्तः तु स्वपिति तण्डुलान् पचतीति कर्तृकर्मसंज्ञयोरनवकाशयो-रयं विषयस्ततो न भविष्यतीति चेत्, न । यत्र कर्तृकर्मसमवेते क्रिये तत्र यथा-क्रमं तयोः सावकाशात् । यथा कुसूलं भिनत्ति, ग्रामं गच्छतीति, नह्यत्र भेत्तरि देवदत्ते ग्रामे वा कर्मणि काचित्क्रिया समवेता येनात्राप्यधिकरणसंज्ञा कर्तृकर्म-संज्ञयोर्बाधिका स्यात् । अत्रोच्यते यत्र क्रियाधारभूते कर्तृकर्मणी तत्र कर्तृकर्म-संज्ञाभ्यामधिकरण संज्ञा बाध्यते. परत्वात् तस्यास्त्ववकाशः, यत्र क्रियाधारभूते कर्तृकर्मणी वद्धास्पदे यथा कटे देवदत्त आस्ते स्थाल्यामोदनं पचतीति । एवं च देवदत्तः स्वपिति, तण्डुलान्पचतीत्यत्र क्रियाधारत्वमनुप्राप्तयोरपि कर्तृकर्मणो-रधिकरणसंज्ञा बाधिता सती न प्रवर्तते । यत्राप्याधाराधेय भाव इति । वन्ध्यासुतो यातीत्यादिव्यवहारोऽन्यथानुपपत्त्या बुद्धिव्यवस्थापितस्यार्थस्य क्रियाधारकरूपत्वोपगमात् । बौद्धेऽप्याधाराधेयभावेऽधिकरणसंज्ञानिबन्धनं भव-तीति भावः । गौणमुख्यन्यायश्च कारकप्रकरणे नाश्रीयते तथा च गङ्गायां घोष इत्यादौ यदा देशधर्म आधारत्वं श्रोतस्युपचर्यते तदा गौणस्याप्याधारस्याधि-करण संज्ञा प्रवर्तते । अतएव गौणमुख्यभेदभिन्नस्य सर्वस्याधारस्य परिग्रहार्थो यत्तदोः निर्देशः । अन्यथा आधारोऽधिकरणमित्येवं ब्रूयात् ।

**येन क्रियते तत्करणम् २।४।१२**

येन क्रियते तत्करणसंज्ञं भवतीति । यद्येवं कर्त्रापि क्रियत इति तदपि करणं स्यात् । नैतत्, इह हि पूर्वाचार्यसंज्ञापरिग्रहात् कर्तृपरतन्त्रस्य क्रियां प्रति प्रत्यासन्नव्यापारतया[1] विवक्ष्यमाणस्येयं करणसंज्ञा विज्ञास्यते । यथा काष्ठैरोदनं पचतीत्यत्र काष्ठानाम् । तेषां हि प्रज्वलनजनितोष्णस्पर्शानुप्रवेश-लक्षणः यो व्यापारः तदनन्तरमेव क्रियासिद्धिरिति तेषां करणत्वम् । दार्व्या पचतीत्यादावपि दार्व्यादीनां पाकेन द्रव्येण सहोपकारविशेषात्मिका प्रत्यासत्ति-रिति तेषामपि करणभावः । उपकारविशेषलक्षणमपि हि प्रत्यासत्तिरित्युच्यते एवं लोके यथा—अयमस्य प्रभोः[2] प्रत्यासन्न इति । एवं च साधन-सामग्री

१. व्यापारस्य (भं०)

२. विभोः (भं०)

समवधानेऽपि यस्य यस्योपयोगातिशयाद् व्यापारप्रत्यासत्तिर्विवक्ष्यते, तत्सर्वमेव करणम्। तथा बहूनामपि व्यापारातिशयविवक्षायां करणत्वमुपपद्यते। अश्वेन यथा दीपिकया यातीति। अतएव विवक्षानिबन्धनत्वात् कारकभावस्य, स्थाल्यां पचतीत्यधिकरणमपि करणमिति व्यपदिशन्ति। स्थाल्यास्तून्नततर-कपालावयवत्वाद् व्यापारप्रत्यासत्तेर्विवक्षितत्वात्। न चेत्थं करणसंज्ञानिबन्धनं निमित्तं कर्तुरन्यस्य वा कारकस्य विद्यते। कर्त्रादिव्यापारादेवानन्तरं क्रियाया अनिष्पत्तेरिति न कर्त्रादयः करणव्यपदेशभाजः। दात्रेण लुनातीति। एतेन क्रियासामान्यवाचिना करोतेर्निर्देशात् क्रियाविशेषाभिधायी लुनातीति धातु-प्रयोगविषयेऽपि संज्ञेयमिति दर्शयति। यदा त्वित्यादि। पुरुषव्यापारपरतन्त्राः दात्रादयः कारणव्यपदेशभाजः यदा पुनस्तेषां क्रियां प्रति स्वातन्त्र्यं विवक्ष्यते तदा दात्रं लुनातीति करणसंज्ञा न भवति। स्वातन्त्र्यस्य स्वतः कर्तृसंज्ञाप्रव-र्तते। वेति वर्तते। स दीव्यति प्रयोगकरणसंज्ञा विषये कर्मसंज्ञां समुच्चिनोति, अक्षान्दीव्यति अक्षैर्दीव्यति, न च कर्मविवक्षात्रोपपद्यते, दिवः[1] क्रीडार्थस्या-कर्मकत्वात्। न चानुपपद्यमानं कर्म विवक्षितुं शक्यते, शेते इत्यादेरपि विवक्षायां सकर्मकत्वात् ग्रामं शेते इति प्रयोगप्रसङ्गात्। वेतनादिस्वीकरणे तु सम्प्रदान-संज्ञापि शताय परिक्रीतः, शतेन परिक्रीतः।

**यत्क्रियते तत् कर्म २।४।१३**

यत्क्रियते तत् कर्मसंज्ञः भवतीति। करोतेः क्रियासामान्यवाचित्वात् (यदपि[2] पठ्यते) यद्वा दृश्यते तत्सर्वं क्रियमाणत्वात् कर्मेति मन्तव्यम्। कटं करोतीति। तथाविधं वस्तु करोति यस्य निष्पन्नस्य सतः कट इति व्यपदेशो भवतीत्यर्थः। ओदनं पचतीत्यत्रौदनलक्षणस्य विकारविशेषस्य प्रतिपत्त्यर्थम्। ओदनार्थास्तण्डुला ओदनशब्देनोच्यन्ते। तत्र विक्लित्त्युपसर्जने विक्लेदनेऽत्र पचिः वर्तते। तेन विक्लिद्य तण्डुलान् विक्लेदयति इत्यर्थावगमात् ओदन-विक्लेदनक्रियायां कर्म भवतीति कर्मणि द्वितीया भवति। ननु पच्यते ओदनः स्वयमेवेति पचेः विक्लित्तिरेव [3]प्रधानभूतेत्यर्थः। यत्तु विक्लेदनं तदङ्गभूत-त्वादप्रधानभूतम्। प्रधानाप्रधानसन्निधौ च प्रधानशक्तेरुल्लासादोदनस्य विक्लित्तावप्तकर्तृभावस्यासति कर्मत्वे कथं कर्मणि द्वितीया स्यात्।

---

१. दिवेः (भं०)
२. यदपदिश्यते (भं०)
३. प्रधानभूतोर्थः (वा०)

अस्त्येतत्[1], यत्तु यद्यपि पचेर्विक्लित्तिरर्थः प्रधानं तथापि पचतिशब्दापेक्षया पचिः विक्लित्त्युपसर्जने विक्लदने वर्तते। एवं शाब्दव्यापारमपेक्ष्य विक्लेदनमेव प्रधानम्, ओदनं पचतीत्यत्र सञ्जातमिति भवति। तत्र ओदनस्य कर्मत्वात्कर्मणि द्वितीया। अधिपूर्वाणामित्यादि। शीङ् स्वप्ने ष्ठा गतिनिवृत्तौ, आस् उपवेशने इत्येतेषामधिशब्दपूर्वाणां प्रयोगे आधारस्याधिकरणसंज्ञां बाधित्वा कर्मसंज्ञा वक्तव्या। न चैतदपूर्वं वक्तव्यम्। वेत्यस्यैवानुवर्तमानस्य संज्ञान्तरसमुच्चयार्थत्वेनावगतत्वात्। उपलक्षणपरत्वेन चैतदुक्तम्। तथा च अभिनिपूर्वस्यापि विशेः प्रयोगे आधारस्य कर्मत्वमिष्यते। ग्राममभिनिविशते। लक्ष्यानुरोधेन च कर्मसंज्ञासमुच्चयात्[2] कल्याणेऽभिनिवेश इत्याद्यपि भवति। एवमुपान्वध्याङ्पूर्वस्यापि वसतेः प्रयोगे आधारः कर्मसंज्ञः। ग्राममुपवसतीत्यादि भोजननिवृत्तिवाचिनि तूपवसतावधिकरणसंज्ञैव स्मर्यते। अकर्मकस्य धातोः प्रयोग इति यस्मिन्धातौ प्रयुज्यमाने सति किमित्याकाङ्क्षा कर्मविषया नोपजायते। सः सामान्येनाकर्मको धातुरुच्यते यथा—आस्यादिः। नह्यास्ते स्वपितीति वा प्रयुज्यमाने सति किमिति प्रश्नो भवति। तस्य धातोरकर्मकस्य प्रयोगे कालभावाध्वदेशानां कर्मसंज्ञाभिधातव्या तत्रेयत्तापरिच्छिन्ना क्रिया क्रियान्तरस्य परिच्छेदिका। कालः मासमास्ते इति परिच्छिन्नपरिमाणो मासः। आसनादिक्रियान्तरस्य परिच्छेदकः काल इति व्यपदिश्यते। भावो धात्वर्थ इति क्रियात्मकः। गोदोहमास्ते इति। यावता कालेन गौः दुह्यते तावन्तं कालमास्त इत्यर्थः। क्रोशमास्त इति। यावत् क्रोशः तावदयं सार्थमध्वगत आस्ते। अध्वशब्देन चेह परिमाणवतोऽध्वविशेषस्य क्रोशादेरेव द्वितीया स्मर्यते। तेन अध्वशब्दान्न भवति। कुरून् स्वपितीति शसोऽकार इत्यादिना पूर्वस्वरो नत्वं च। खट्वादिशयितः कश्चिन्नीयमानः कुरुमण्डलं यावत् स्वपीतीत्यर्थः। सूत्रोपात्तमेव च कालादीनां कर्मत्वमुक्तं यतो मासमास्त इत्यादावस्त्यादयो धातवः सकर्मक[3]व्यापारादिलक्षणधात्वर्थाङ्गाः आसनादावर्थे वर्तन्ते। तथा ह्ययम् अत्रार्थः। मासमासनक्रियया व्याप्नोतीत्येवं चास्यादीनामिह विषये सकर्मकत्वात्सिद्धत्वात् कर्मण्येव द्वितीया। एवं च सति सकर्मकधातुप्रयोगेऽपि कालादयः कर्मत्वं भजन्त इति। मासं पचतीत्याद्यपि सिद्धं भवति। यत्तु, एषामास्यादीनामकर्मकत्वाभिधानं तदासनादिमात्रवृत्तीनां सतामनङ्गीकृतसकर्मकव्यापारादिलक्षणधात्वर्थानामवगन्तव्यम्।

१. सत्यम् (भं०)
२. समुच्चयनात् (भं०)
३. व्यापनादि (वा०)

क्रियाविशेषणं चेति कर्मसंज्ञा वक्तव्येति सम्बध्यते, तेषां कर्मत्वं सूत्रसिद्धमेव, कुतः, क्रियायाः साध्यत्वात् तद्विशेषणस्यापि कर्मत्वायोगात् ।

**यः करोति सः कर्ता २।४।१४**

यः करोति सः कर्तृसंज्ञो भवतीति पूर्वाचार्यसंज्ञापरिग्रहात् स्वतन्त्रो भूत्वा क्रियासिद्धौ यः व्याप्रियते सः कर्तृसंज्ञो भवतीत्यर्थः। नन्वनेकसाधनसाध्यायां क्रियायां साधनानां परस्परापेक्षत्वात् कस्य स्वातन्त्र्यं यः स्वतन्त्रः सः कर्तेति व्यपदिश्यते। अन्ततः करणं सर्वत्रापेक्षणीयम्। तथा हि असिः च्छिनत्तीत्यत्र तैक्ष्ण्येनेत्यपेक्ष्य तैक्ष्ण्यं [1]च्छिनत्तीत्यत्राप्यात्मने इति। चैत्र आस्त इत्यत्रापि (वृत्तेः[2] इति) स्वतन्त्रस्य कर्तृसंज्ञायां स्थाली पचतीति स्थाल्यादीनामत्यन्तपराधीनवृत्तीनां स्वातन्त्र्यानुपपत्तेः कर्तृसंज्ञा न प्राप्नोतीति। अत्रोच्यते—इह विवक्षापराधीनवृत्तित्वात् कारकभावस्य स्वातन्त्र्येण विवक्षितो योऽर्थः तस्य कर्तृसंज्ञा। तत्र यद्यप्यनेकसाधनसाध्या सर्वा क्रिया, तथापि शब्दव्यापारापेक्ष्यैकसाधनसाध्यापि क्रिया भवति। नह्यसिः च्छिनत्तीत्यादौ शाब्दे व्यापारे अस्यादीनां स्वातन्त्र्यं प्रतिसाधनान्तरं विवक्षितम्, तेन विद्यमानाया अपि साधनान्तरापेक्षायाः अनुसञ्जनात् अस्यादीनामव्याहतमेव कर्तृत्वम्। इत्थं स्थाल्यादयोऽपि तण्डुलग्रहणधारणलक्षणे स्वव्यापारे अनुभूतस्वातन्त्र्य एवेति तेऽपि कर्तारः। तथा वृक्षः पततीत्यादौ पातादिव्यापारे वृक्षादयः। रुद्रेण कृतमिति। कर्तरि चेति तृतीया।

**कारयति यः सः हेतुश्च २।४।१५**

यः कर्तारं कारयतीति। ननु यथा कर्तृसन्निधौ करणादीनां नास्ति स्वातन्त्र्यम्, एवं प्रयोजकव्यापारसन्निधावपि प्रयोज्यस्य पारतन्त्र्यं नास्ति। स्वातन्त्र्यमिति। कथं स्वतन्त्रता व्यपदेशे निबन्धनस्तस्य कर्तृव्यपदेशो येन यः कर्तारं कारयतीत्युच्यते। अस्त्येतत्। किन्तु प्रयोजकव्यापारसन्निधावपि प्रयोज्यस्य करणादिसाधनविनियोगादिना स्वव्यापारे स्वातन्त्र्यमस्त्येव। चशब्दात् कर्तृसंज्ञा चेति। तेनेङ्यजादेरिति कर्तरि विधीयमानं परस्मैपदं सिद्धम्।

**तेषां परमुभयप्राप्तौ २।४।१६**

उभाववयवौ यस्येति। तसादित्वादुभशब्दाद्यः प्रत्ययः। परिभाषेयम्।

---

१. छिनत्ति (वा०)

२. वृत्यति (वा०) भ० ग्रन्थेऽपि नोपलभ्यतेऽयमंशः।

परं कारकं परिभाष्यमाणम् उभयप्राप्ताविति सति सप्तमी। तेषामिति। निर्धारणे षष्ठी। समुदायार्थस्तु वृत्तावुक्तः। उभयोः प्राप्तिः उभयप्राप्तिरिति। ननु समासे उभयशब्दः श्रूयते, तत्कथं शब्दान्तरेणोभशब्देन विग्रहः क्रियत इत्याह—यद्यपीत्यादि। समासे तावदुभयशब्द एव स्मर्यमाणप्रयोगो न तूभशब्दः। उभयप्राप्तावित्यस्य च कारकद्वयप्राप्तावित्ययमर्थः। तं च द्वित्वलक्षणमर्थं प्रतिपादयितुमुभशब्देनैव द्वित्वार्थाभिधायिना विग्रहो न्याय्यः। स्यादेतत्, उभयशब्देनैव द्वित्वार्थाभिधायिना विग्रहः क्रियताम्, किमुभशब्दापेक्षयेत्याह—द्वित्वविषय इत्यादि। कथं पुनर्द्वित्वविषय उभशब्दस्य प्रयोगो न सम्भवतीत्याह—उभयशब्दो हीत्यादि। उभयो मणिः, उभये देवमनुष्याः इत्येकत्वबहुत्वे चोभयशब्देन द्वित्वलक्षणार्थाभिधायकेन विग्रहः कर्तुं न शक्यते, स्यान्मतम्, उभ इत्ययं शब्दो न द्वित्वमाह—तत्कथमनेनापि विग्रह इत्याशङ्क्याह—द्वित्वे तूभशब्द इति। तु-शब्दः उभयशब्दस्य विशेषं द्योतयति। उभयशब्द एकत्वबहुत्वयोः प्रयुज्यते। द्वित्वे पुनरुभशब्द एव समर्थो वक्तुमिति तेनैव विग्रहः। यथा शोभनलक्षणमर्थं प्रतिपादयितुं सुसखीत्यत्र शोभनशब्देन। कथं पुनर्वाक्यकाले प्रयुज्यमानस्योभशब्दस्य सम्बन्धिनं द्वित्वलक्षणमर्थम् उभयशब्दो वक्तुं समर्थः। उभाववयवौ यस्येति व्युत्पत्त्योभयशब्दोऽयमवयविनि सङ्घे वर्तते। उभ इत्ययं तु नैवमिति कथमुभशब्दप्रतिपाद्यमर्थमुभयशब्दोऽभिदध्यात्। सत्यम्। किन्तु यावतावुभाववयवौ तावेव समुदितो सङ्घो भवति इत्यभेदव्यवहारोऽपि लोके सङ्घसङ्घिनोर्दृश्यते, तेन सङ्घधर्मेणोभयत्वेन द्वावेवात्र प्रतिपादितौ भवत [1]इत्यदूरविप्रकर्षेण शक्तो वोभयशब्द उभशब्दार्थं द्वित्वमभिधातुम्। उभयस्य प्राप्तिः उभयप्राप्तिः। यद्यप्येवं विग्रहः सम्भवति तथा ([2]उभयोः उभयशब्दयोः) विशेषः परिज्ञानार्थमुभयोः प्राप्तिरुभयप्राप्तिरिति विगृह्यते। एवं सति यद्यपीत्यादिना वृत्तिग्रन्थेन विषयविशेष उभयोभयशब्दयोः परिज्ञातो भवति। तेषामपादानादीनां कारकाणां मध्यादिति। ननु करोतीति कारकम्। कारकशब्दोऽयं कर्तृपर्यायः। कर्ता च स्वतन्त्रः उच्यते। न चापादानादीनां कर्तृपरतन्त्राणां क्वापि व्यापारे स्वातन्त्र्यकर्तृत्वमस्ति यन्निबन्धन एषां कारकव्यपदेशः स्यात्। उच्यते—अस्त्येव, तेषां निजव्यापारः, तदनुष्ठानद्वारेण तानि कर्तृव्यपदेशं भजन्ते। निजव्यापाराभिनिवर्तनद्वारेण च प्रधानक्रियायामुपयुज्यन्ते। अकिञ्चित्-

१. अस्पष्टोऽयमंशः।

२. उभयोभय (वा०)

करस्य पारतन्त्र्ययोगात् । कः पुनरेषां निजो व्यापारः उच्यते—अपादानस्य तावदवधित्वेनावस्थानमस्ति व्यापारः । यदि हि ग्रामादिरवधित्वेन नावतिष्ठते देवदत्तादीनामपायं प्रति कर्तृत्वमेव न स्यात् । सम्प्रदानस्यापि प्रेरणादिलक्षणः, त्रिविधं हि तत्, प्रेरकम्, अनुमन्तृ, कर्तुश्च निराकर्तृ । यथा—विप्राय गां ददाति, उपाध्याय गां ददाति, देवेभ्यो बलिं प्रयच्छतीति । अधिकरणस्यापि स्थाल्यादेः तण्डुलादिग्रहणधारणलक्षणः, करणस्यापि काष्ठादेर्ज्वलनादिक्रियालक्षणः, कर्मणोऽपि घटादेर्निर्वृत्तस्य सङ्कल्पविषयतापत्तिलक्षणः सङ्कल्पविषयतामनापद्यमानस्य घटादेः क्रियमाणत्वेनानभिसम्बन्धात् । विकार्यस्यापि काष्ठादेः विकारं प्रति प्रकृतिभावगमनम् । आदित्यं पश्यतीत्यादावपि आदित्यादेः प्राप्यस्य कर्मणो दर्शनादिविषयोपगमनलक्षणः । कर्तुरपीन्धनादिविनियोगलक्षणः । एवमेषामपादानादीनां निजव्यापारविषयः सम्भवति । कर्तृत्वमिति युज्यते कारकव्यपदेशः । कर्तृसंज्ञा तर्हि तेषां प्राप्नोति, न भविष्यति । प्रधानकर्तृव्यापारापेक्षया तेषां व्यापारस्य न्यक्कृतत्वात् । व्याप्यते हि प्रधानकर्तरि नाप्रधानानि सनिबन्धनं कार्यमारभन्ते "प्रभुसन्निधाविवामात्याः" तस्मात् ग्रामादागच्छतीत्यादौ ग्रामादेः स्वव्यापारं प्रति कर्तृत्वेऽपि न कर्तृसंज्ञाप्रसङ्गः । यत्परं कारकं[1] तदेव भवतीति । एतेनानियमेन प्राप्ते नियमार्था परिभाषेयमिति दर्शयति[2] । कः पुनरत्र नियमः प्राप्नोति, उच्यते—व्यक्तौ पदार्थे विषयान्तरे लब्धावकाशयोरपि संज्ञयोः स्पर्धाविषये[3] संज्ञाविधायकस्य लक्षणस्याप्रवृत्तौ सत्यां लक्षणानर्थक्यप्रसङ्गात् । पर्यायेण संज्ञाद्वयं प्राप्नोतीत्येष प्राप्नोत्यनियमः । पूर्वोक्तपरोक्तपरिभाषयेत्यादि । तस्याः पूर्वोक्तपरोक्तपरिभाषायाः एवायं प्रपञ्चः । अन्ये तु ब्रुवते क्वचित्परापरविधानेन[4] पूर्वोक्तविधिः प्रवर्तते इत्येतदनेन योगारम्भेण ज्ञास्यत इति । तेन अध्यैयाताम्[5] इत्यादौ परामपि स्वरादिलक्षणां वृद्धिं बाधित्वा पूर्वमियमादेशः प्रवर्तते । इङ्, अधिपूर्वः ह्यस्तनी, आताम्, अन्विकरणः अदादेर्लुगिति लुक्, स्वराविवर्णोवर्णान्तस्य धातोरियुवाविति इय्-स्वरादीनां वृद्धिरादेरिति ऐकारः ।

**प्रथमाविभक्तिर्लिङ्गार्थवचने २।४।१७**

लिङ्गस्यार्थो लिङ्गार्थ इति । यदव्यभिचारितया लिङ्गात् प्रतीयते सः

---

१. कार्यम् (भं०)
२. न्यूनपाठः (भं०)
३. सामान्य (भं०)
४. परविधिर्बाधनेन (भं०)
५. अध्यायताम् (वा०)

सर्वो जात्यादिकोऽर्थो लिङ्गार्थ इत्युच्यते प्रथमा विभक्तिर्भवतीति । का पुनरसत्यां प्रथमायां प्राप्ता विभक्तिः, उच्यते— कर्तरि तृतीया । वृक्षादयो ह्यस्तिक्रियायां कर्तारः । क्रियापदश्रवणे ह्यस्तिक्रियानुषज्यते, तथा चाहुः—यत्रान्यत् क्रियापदं न श्रूयते तत्रास्तिर्भवन्तीपरः प्रयोक्तव्या इति । भवन्तीति वर्तमाना या आख्या । ननु प्रथमादयः शब्दाः स्यादीनां संज्ञात्वेन प्रसिद्धाः, ते च स्यादयः, तस्मात्परा विभक्तय इत्यनेनैव सिद्धाः, तत्किमर्थमिदं प्रकरणमारभ्यत इत्याह— तस्मात् परा इत्यादि । सत्यम्, सिद्धाः किन्तु विवक्ष्यमाणमिदं प्रकरणं तेषामेव स्यादीनामर्थं कथनार्थमारभ्यते । लिङ्गार्थे प्रथमा, कर्मणि द्वतीया, इत्यादिना प्रकारेण, यद्येवम्, इदमेव प्रकरणं स्यादीनां विधायकमस्तु,- किंत स्मात्परा इत्यनेन, असिदेतत्, एवं हि सति लिङ्गसंज्ञाविधायकात् सूत्रादनन्तरमुत्तरत्र लिङ्गाधिकारार्थं तदिति सूत्रं कर्तव्यं स्यात् । पञ्चादौ घुडित्यत्र चावश्यकं पञ्चादावित्येतद् भवेत्, ततश्च स्यादयः पञ्चप्रत्ययाः साक्षात् पठितव्याः स्युः । अकारो दीर्घमित्यादौ यद्विभक्तिप्रकरणमिदमिति प्रतिपत्तये विभक्तिग्रहणं कर्तव्यमापतति । प्रथमादिविभक्तीनां च लिङ्गं प्रकृतिरित्यावेदयितुमिह सूत्रे लिङ्गादिति वक्तव्यं स्यात्, न लोपविधौ हि लिङ्गग्रहणाद् धातोरपि परे प्रथमादय आशङ्क्येरनिति । तस्मात् परा इत्याद्यपि कर्तव्यमेव । वृक्ष इत्यादि । अत्र वृक्षादेरर्थस्यैकत्वादेकत्वेऽर्थे प्रथमैकवचनम्, द्विवचनबहुवचने तु द्वित्वबहुत्वयोः । कुत एतत्, एकोऽर्थ उच्यते येन तदेकवचनमित्यादिना क्रमेणैकवचनादि संज्ञानामनर्थकत्वात् । यद्येवम्, अव्ययानामसंख्यत्वादेकत्वादयो न सन्तीति तेभ्यः प्रथमा न प्राप्नोति । अव्ययाच्चेति इत्यस्य सूत्रारम्भसामर्थ्याद्भविष्यति । सम्पन्नो यवा इत्यादौ त्वेकवचनं जातिप्राधान्यस्य[1] विवक्षितत्वात् । एका च जातिः व्यक्तिप्राधान्यत्वे विवक्षिते सम्पन्नाः यवा इति बहुवचनम् । वयं तु ब्रूम इत्यादौ त्वेकत्वेपि बहुवचनं मनोवागात्मादिगतं बहुत्वमाश्रित्य प्रयुज्यते । लिङ्गाधिकाराल्लिङ्ग्यस्यैवार्थे वचने प्रथमा भविष्यतीति लिङ्गग्रहणं क्वचिद् व्यभिचारिण्यपि लिङ्गार्थे यथा स्यात् इति । तथा चोदाहरति । कुमारीकुण्डं द्रोणः आढकमिति । एवं कुमारः, कुण्डी कुण्डः तटी तटः तटम्, आढक इत्याद्युदाहार्यम् । कुमार्यादौ हि स्त्रीत्वे लिङ्गार्थो न भवति । विनापि तेन कुमारो देवदत्त इति कुमारशब्दस्य प्रयोगदर्शनाद् व्यभिचारित्वात् स्त्रीत्वस्य पुंनपुंसके चापि कुण्डादौ नियमेन विभक्त्यैव प्रतिपाद्येन हि तया विना किं कुण्डशब्दः पुंवृत्तिरुताहो नपुंसकवृत्तिरिति सन्देहो विनिवर्तते । जीवति च भर्तरि परेण जाते वर्तमानः पुल्लिङ्गः कुण्डशब्द इत्यस्त्येव सन्देहः

१. प्राधान्ये त्वविवक्षितत्वात् (वा०)

द्रोणादिभ्योऽपि परिमाणवृत्तिभ्यः सिद्धा प्रथमा, यदा तु ते द्रोणादिपरिमाण-प्रसङ्गे[1] व्रीह्यादौ वर्तन्ते तदा सा न सिध्यतीति लिङ्गग्रहणाद् भवति। अथ वचनग्रहणं किमर्थम्, न लिङ्गार्थ (इत्येवोच्यते[2] सत्सप्तमी चैषा विज्ञास्यते लिङ्गार्थे सतीति यत्र च लिङ्गार्थस्सन्) तत्रासाववश्यमुच्यत एवेति किं वचन-ग्रहणेनेत्याहुः—लिङ्गार्थ इति कर्तव्य इत्यादि। एकत्वादिष्वर्थेषु प्रथमाया एकवचनादीनि विधीयन्ते यत्र ते अर्था एकादिभिः प्रकृतिभिरुक्ता तत्र तानि न प्राप्नुवन्ति, उक्तार्थानामप्रयोग इति कृत्वा तस्मात् तत्रापि विषये तेषां वचन-मभिधानं यथा स्यादिति वचनग्रहणम्। द्वाविति, औ त्यदाद्यत्वम्, प्रथमायाः विभक्तित्वव्यभिचारात् किं (भक्तिग्रहणेनेत्याह[3]—विभक्तिग्रहणमित्यादि। प्रथमादीनां) विभक्तिव्यपदेशोऽप्यस्तीति। एतावन्मात्रमस्त्येव प्रयोजनम्। विभक्तिग्रहणस्य दृढप्रयोजनाभावात् तेन तथा प्रयोजनवदित्युच्यते। इतरथा कथमाचार्यः प्रयोजनशून्यं पदमभिदध्यात्।

**आमन्त्रणे च २।४।१८**

मत्रि गुप्तपरिभाषण इत्यस्मात् कृतनकारागमात् चुरादीन्नन्तादामन्त्रित-मामन्त्रणमिति युट्। आमन्त्रणेऽर्थे इति। आभिमुख्यकरणमामन्त्रणम्, तत्र वाच्य इत्यर्थः। हे शङ्कर इत्यादि। ह्रस्वनदीत्यादिना सिलोपः। आमन्त्र-णस्य लिङ्गार्थतां मन्यमानः पूर्वेण सिद्धिरस्तीति मन्वानः पूर्वपक्षयति। नन्वि-त्यादि। असदित्यादिना परिहारमाह—आमन्त्रणं हि क्रियारूपत्वाल्लिङ्गार्थे नान्तर्भवति। ततश्च तेनाधिको लिङ्गार्थे हे शङ्कर इत्यादौ प्रतीयमानः कथं पूर्वेण प्रथमां विदध्यादिति तद्विधानार्थो योगारम्भः। शुद्धस्येति। प्रतीयमाना-धिकामन्त्रणार्थशून्यस्येत्यर्थः। अथ यत्र शन्तृङ्ङानश्भ्यामामन्त्रणमभिहितं तत्र कथं प्रथमा, हे पचन्, हे पचमानेति, उच्यते, पूर्वेण भविष्यति।

**शेषात्कर्मकरणसम्प्रदानापादानस्वाम्यधिकरणेषु २।४।१९**

शिष असर्वोपयोग अस्मात् चौरादिकात्। आधृषाद्वेति विकल्पिते प्रत्य-याच्छिष्यते शेष्यत इति वा विगृहीते कर्मणि यथा(रूपं[4] घञणौ) भवतः, विभक्तिसामानाधिकरण्यात् स्त्रियामादाप्, लिङ्गस्याशिष्यत्वाल्लोकत एव

१. प्रसृते (भं०)
२. न्यूनपाठः (वा०)
३. न्यूनपाठः (वा०)
४. क्रमं घनलौ (भं०)

क्वचित्कर्मादिषवाद्यन्तस्याप्यभिधेयवल्लिङ्गता दृश्यते। यथा निवरा कन्येति। अन्ये तु शते धार्यमाणे अशीतौ दत्तायां विंशतिः शेष इत्यादि प्रयोगदर्शनाच्छेषशब्दस्यात्र द्वितीयादिशब्दवाच्याः प्रत्ययाः एव प्रतिपाद्या इति शेषशब्दः पुंवृत्ति इत्येव प्रयुक्त इत्याह—स्वमस्यास्तीति स्व-शब्दामन्त्वादित्वादामिन्प्रत्ययः येषां शब्दानामिति यैर्योगे षष्ठी दृश्यते, समूहविकारावयवादिशब्दैस्तेषामित्यर्थः। इह कर्मादयोऽर्थाः विभक्तीनां वाच्यत्वेन निर्दिश्यन्ते, षष्ठ्या च न वाच्याः स्वाम्यादयः। नहि देवदत्तस्येत्युक्ते स्वाम्यादयोऽर्थाः प्रतीयन्ते। किन्तर्हि सम्बन्धमात्रम्। तेन स्वाम्यादिसम्बन्धे सति षष्ठी विज्ञायते। एवं च स्वाम्यादिशब्दानन्तरं योगशब्द सप्तम्यन्तमुदाहृत्य स्वाम्यादिशब्दयोगे सतीति व्याख्यायते। इत्यनेनाभिप्रायेणाह—स्वाम्यादिशब्दयोग इत्यादि। सम्बन्धग्रहणमेव तु न कृतं, वैचित्र्यात्। विभक्तिप्रकरणेऽस्मिन्प्रथमायाः उपयुक्तत्वादन्या द्वितीयाद्याः विभक्तयः शेषशब्दवाच्या इत्याह—शेषाः द्वितीयाद्याः विभक्तय इति कर्मणि द्वितीयेत्यादिना कर्मादिभिः सह द्वितीयादीनां यथासङ्ख्यमुपदर्शयति। अभिहिते कर्मणि द्वितीया न भवतीत्यत्र कारणमाह—उक्तार्थानामित्यादि। अर्थावगमाय शब्दः प्रयुज्यते। यत्र च कर्मलक्षणोऽर्थः पदान्तरादवगम्यते तत्र तदवगत्यर्थं किं द्वितीयाप्रयोगो नेति भावः। क्रियते कट इति। यणाशिषोर्ये इति इकारागमः। अत्रात्मनेपदेनाभिहितं कर्मेति। आत्मनेपदानीत्यादिना कर्मण्यात्मनेपदस्य विधानात्। कृतः कट इति। निष्ठेति क्तप्रत्ययः। अत्रापि क्तप्रत्ययेनेति। अभिहितं कर्मेति सम्बध्यते। कुतः, भावकर्मणोः कृत्यक्तखलर्थाः इत्यत्र कर्मणि, अत्र क्तप्रत्ययस्य प्रवृत्तेः करणे तृतीयेति। यद्येवम्, दात्रेण लुनातीत्यादौ (काष्ठेन[1] करणस्याभिहितत्वात्) तृतीया प्राप्नोति, उच्यते—दात्रादयोऽमी रूढिशब्दाः न्यग्भाव[2]करणादिशक्तिकं वस्तुमात्रं प्रतिपादयति। दात्र्यनेनेत्यादि कर्तृ[3]क्रिया केवलमेषां व्युत्पत्त्यर्थमुपादीयते। तत्रावश्यं करणादिशक्तीनामुद्भवं प्रतिपादयितुं दात्रादयो विभक्तीरर्थयन्ते तथा चासने आस्ते इत्यासनशब्दादधिकरणयुडन्तादपि सप्तमी सिद्धा। दातृ लवने, करणमित्यादौ तु तृतीयादयो न भवन्ति यतो यदा दात्रादीनां क्रियां प्रति व्यापारादेशो विवक्ष्यते। तदा करणभावः कारकव्यवहारस्य क्रियानिमित्तत्वात्। (अन्यथा अत्र) योग्यतामात्रे विवक्षिते प्रथमैव

१. ष्ठ्वेन कर्मणास्याभिहितत्वात् (वा०)
२. न्यग्भूत (मं०)
३. धातु (मं०)
४. अन्यदाऽत्र (वा०)

प्रवर्तते। तथा च करणतृतीया (सिद्धौ[1] सत्यां) हेत्वर्थ इति वचनमारभ्यते। उभयसर्व इत्येतयोरित्यादि। सम्बन्धषष्ठी बाध्यते। हा धिक्शब्दप्रयोगेऽपि इति द्वितीया वक्तव्येत्यपेक्षते। तत्र हाशब्दः शोकार्थः, धिक्शब्दश्च निन्दार्थ इति तयोर्योगे षष्ठी प्राप्नोति। हा शब्दयोगेऽपि प्रथमा दृश्यते इति। आमन्त्रणविषयेऽन्तरङ्गत्वात्सम्बुद्धिः प्रवर्तते इति भावः। अभितः परित इत्यादि। षष्ठ्यपवादो द्वितीया भवतीति शेषः। अतिपरिभ्यामुभयार्थे सर्वार्थे च तसिति वक्तव्यात् अभिमुख्यवृत्तिरप्यभितः शब्दो निपातोऽस्तीति सोऽपि इह गृह्यते इति। एतेषां प्रयोगेऽपि इत्यपि शब्दात् प्रतिशब्दयोगेऽपि कार्य-विघ्नं[2] न "कार्यव्यग्रं न प्रतिभाति किञ्चित्"। षष्ठ्याः बाधः। पक्षे सापि भवति। प्रतिशब्दोऽत्र क्रियाविशेषकः उपसर्गो न तु कर्मप्रवचनीयः। अन्त-रान्तरेणेत्येतयोः प्रयोगेऽपीति षष्ठ्यपवादो द्वितीयेति शेषः। तत्रान्तरेण शब्दे-नास्त्रीप्रत्ययान्तेन साहचर्यादन्तरा शब्दोऽप्यस्त्रीप्रत्ययान्त एव निपातो गृह्यते। न त्वाप्प्रत्ययान्तः। तेन च साहचर्यान्तरेण शब्दस्यापि निपातस्यैव ग्रहणं न तु तृतीयान्तस्य ग्रहणम्, अन्तर्शब्दश्चायं मध्यमाधेयप्रधानमाचष्टे। अन्तरेण शब्दस्तु तच्च विनार्थञ्च। त्वां च मां चेति युष्मदस्मदोः त्वन्मदोरेकत्वे त्वन्मदौ अमो चाम्। घटात्तु द्वितीया न भवति। उपपदविभक्तेर्कारक-विभक्तिर्बलीयसीत्यस्ति क्रियाकर्तुः घटात्प्रथमायाः बलीयस्त्वात्। प्रकृत्या-दीनां सन्निवेशेन पाठसमत्वाय[3] यश्चोदयेत्, अथ के पुनः ते प्रकृत्यादय इति तं प्रत्याह—येभ्यश्शब्देभ्य इत्यादि। कर्तृकरणाभ्यां विनेति कर्तृकरणयोस्तृतीया स्मर्यते। न च प्रकृत्या दर्शनीय इत्यादौ ते स्तः, तयोः क्रियापेक्षित्वात्, क्रिया-याश्चात्र प्रवृत्तेः[4] सम्बन्धमात्रं ह्यत्र षष्ठ्यानिमित्तं प्रतीयते। अतो विना कर्तृ-करणे येभ्यः तृतीया दृश्यते ते प्रकृत्यादयः। अन्ये त्वाहुः—प्रतीयत एवात्र क्रिया, तथा हि प्रकृत्या दर्शनीय इत्यत्र प्रकृत्या स्वभावेन कृतो दर्शनीयो न तु वस्त्रालङ्कारादिनेत्यर्थोऽवगम्यते। प्रतीयमानापि च क्रिया कारकाणां निमित्तं भवत्येव। यथा—प्रविश पिण्डीमित्यत्र भक्षणक्रिया पिण्डीलक्षणस्य कर्मणः। अत्र प्रविश गृहं पिण्डीं भक्षयेत्यर्थोऽवगम्यते। एकः चकारोऽर्थभेदस्य प्रतीते-स्तदपेक्षया प्रकृत्येति सिद्धा कर्तरि करणे वा तृतीयेति नापूर्वत्वेनैतद् वक्तव्यम्।

१. सिद्धावसत्याम् (वा०)
२. व्यग्रम् (वा०)
३. पाठसमत्वा (वा०)
४. प्रतीतेः (भं०)

एवं च प्रायेण याज्ञिक इत्यत्रापि एतत् तत्र देशे विद्याप्रचारस्य बाहुल्यात् येन कारणभूतेनासौ याज्ञिकः ततः करण एवैषा तृतीया। गोत्रेण गार्ग्य इत्यत्र ज्ञाने भवने वा गोत्रस्य करणभावः। पृथग्विनानानाभिरित्यादि। असहायार्थवृत्तीनां पृथगादीनां भेदेनोपादानं पर्यायनिवृत्त्यर्थम्, तेन हिरुग्देवदत्तस्येत्यादौ न भवति। पृथग्देवदत्तमित्यादि क्रियापदस्याश्रवणाद् द्वितीयादीनामप्राप्ति मन्यते। शपेर्धातोरित्यादि बोधयितुमभिप्रेतो योऽर्थः तस्मादेवेयं चतुर्थी स्मर्यते। देवदत्ताय शपत इत्यादि। वाचा शरीरस्पर्शने च शपिरयं रुचादिः। रुद्राय स्पृहयति। इति स्पृहेरदन्तत्वात् चुरादित्वादिन्। अस्य च लोपः। रुद्रं स्पृहयतीत्यपि विवक्षावशाद् भवत्येव। तादर्थ्ये इति। तस्मै इदं तदर्थं तदर्थस्य भावः तादर्थ्यम्। तच्छब्देन चतुर्थ्यन्तस्य यूपादेरर्थो निर्दिश्यते। यूपाय दार्विति। अथ दारुशब्दाद् हेत्वर्थे इति तृतीया कस्मान्न भवति, हेतुहेतुमद्भावस्य चतुर्थ्यावगमितत्वात्। एवमेधेभ्यः[1] व्रजति, भिक्षाभ्यो व्रजति स्वागतमतिथये इत्याद्यपि मन्तव्यम्। क्त्वान्तस्येत्यादि। क्त्वाप्रत्ययादेशो अन्तो यस्येत्यर्थः। पञ्चमी वक्तव्ये द्वितीया सप्तम्योरपवादः। अर्हप्रत्ययनिर्देशादिति। तत्र साधौ च य इति च शब्दादर्हेऽर्थे योऽयं प्रत्ययः तस्य निर्देशादित्यर्थः। आरुह्योपविश्योरिति क्त्वान्तानुबन्धकरणाभ्यामिदं[2] षष्ठी, द्विर्वचनम्, लोप इति। लक्षणद्वारेण एतदुक्तम्। वस्तुतस्तु गम्यमानार्थत्वादनयोरप्रयोग एव लोपः। निमित्तादित्यादि। क्रियाफलमिह निमित्तत्वेन विवक्षितं तेन यत्क्रियायाः प्रयोजकं यदर्थं क्रियारम्भः ततो हेतुतृतीयां तादर्थ्यचतुर्थीं बाधित्वा सप्तमी वक्तव्या, कर्मण यदि निमित्तस्य संयोगस्स्यात्, तथा च वेतनेन धान्यस्य संयोगात्। चर्मणि द्वीपिनं हन्ति इत्यत्र द्वीपिहनननिमित्तं चर्म, तस्य च द्वीपिना कर्मणा संयोगः सम्बन्धः। निमित्त प्रयोग इति। निमित्तार्थस्य शब्दस्य प्रयोग इत्यर्थः। तथा चाह—निमित्तेत्यत्रार्थो गृह्यते अर्थपरत्वान्निर्देशस्य तेन तस्यार्थस्य यो वाचकच्छब्दस्तस्य सर्वस्य सङ्ग्रहात् कारणप्रयोजनादिशब्दसम्बन्धेऽपि सिध्यति। सर्वं चेदं वक्तव्यजातं पूर्वसूत्राच्चकारानुवृत्त्यैवावगतमिति नापूर्वत्वेन वक्तव्यम्, दिङ्मात्रप्रदर्शनञ्चैतत्। तथा चोपर्यध्यधमां कृतद्विर्वचनानां प्रयोगेऽपि द्वितीया भवति। उपर्युपरि ग्रामम्, अध्यधि ग्रामम्, अधोधो ग्रामम्, द्विश्च पदमिति योगविभागादुपर्यादीनां द्विर्वचनम्, दूरान्तिकार्थेभ्योऽपि, दूरं ग्रामस्य, अन्तिकं ग्रामस्य। तृतीयापञ्चमीसप्तम्योऽपि। दूरेण ग्रामस्य, दूरात् ग्रामस्य, दूरे ग्रामस्य। एवम् अन्तिकादप्युदाहार्यम्। द्रव्य-

१. एवं देवेभ्यः (मं०)
२. करणानामिदम् (मं)

वृत्तिभ्यस्तु दूरादिभ्यो यथायथं विभक्तयः। दूरो ग्रामः, दूराय पथे देहीति। दूरान्तिकार्थैरपि योगे षष्ठीपञ्चम्यौ। दूरं ग्रामस्य, दूरं ग्रामादित्यादि। सम्पूर्वस्य जानातेः प्रयोगे कर्मणि विकल्पेन तृतीया। पित्रा सञ्जानीते, पितरं सञ्जानीते। एवं श्राद्धाय निगल्यते[1], निन्दतीत्यर्थः। युद्धाय सन्नह्यते, युद्धे निश्चयं करोतीत्यर्थ.। पत्ये शेते, पतिमुपसृत्य शेत इत्यर्थः। एवं प्रश्नाख्यानयोः पञ्चमी, कुतो भवान्? स्रुघ्नात्। क्रियाया अनुपादानान्नात्रापादानमस्ति, प्रतीयमानं (गमिक्रिया[2]पेक्षं वैतदपादानम्)। ये तु प्रश्नाख्यानयोः पञ्चमी-वक्तव्येत्याचक्षते तान्प्रति। कस्यायमश्वो? देवदत्तस्य, इत्यत्रापि स्यात्। एवमधिकप्रभृतिशब्दप्रयोगेऽपि। तस्मादधिकम्, ततः प्रभृति। अधिकशब्द-प्रयोगेऽपि सप्तम्यपि स्मर्यते, यस्मिन्नधिकमिति। कारकयोः मध्ये यौ काला-ध्वानौ ताभ्यां पञ्चमी। अद्य भुक्त्वा देवदत्तो द्व्यहे भोक्ता द्व्यहाद्वा भोक्ता।

इहस्थोऽयं धानुष्कः क्रोशाल्लक्ष्यं विध्यति। सप्तम्यपि दृश्यते। पूर्वोदाह-रणे कर्तृभोक्त्र्योर्मध्ये कालः, अपरोदाहरणेऽपि कर्तृकर्मणोर्मध्ये क्रोशः। एवं जानातेः ज्ञानार्थस्य प्रयोगे करणे षष्ठी, सर्पिषो जानीते प्रवर्तते इत्यर्थः। प्रवृत्तिवचनो ह्यत्र जानातिः। ज्ञानार्थस्येति किं, स्वरेण पुत्रं जानाति। तथा कृत्वोऽर्थप्रत्ययप्रयोगे कालवाचिनोऽधिकरणे पञ्चकृत्वोऽह्नो भुङ्क्ते, वारगणने-ऽर्थे, तसादित्वात् कृत्वम्, एवं द्विरह्नो भुङ्क्ते। अत्रापि तसादित्वात्सु-प्रत्ययः, अधिकरणत्वविवक्षायां च पञ्चकृत्वोऽह्न्यधीत इत्याद्यपि भवति। एवं क्तप्रत्य-यान्तो यः इन्नन्तः तस्य प्रयोगे कर्मणि सप्तमी। अधीती व्याकरणे। अधीत-मनेनेति तसादित्वादिनिः। अत्र व्याकरणस्य कर्मत्वाद् द्वितीया प्राप्नोति। अधिकरणविवक्ष्यैतत् सिध्यतीति[3] चेत् कर्मविवक्षायां द्वितीयापि स्यात्। ननु[4] च निष्ठायाः कर्मणोऽभिहितत्वात् द्वितीयात्र न प्राप्नोति, नैष दोषः, निष्ठायाः हि सामान्यकर्माभिहितं न विशेषं कर्म। कटादिको ह्यभिसम्बन्धोऽयं कारयते-रुत्पद्यमाना निष्ठा कटादिशब्दवाच्यकर्माचक्षीत यथा कृतपूर्वी कटमिति। यद्येवम्, मासमधीती-व्याकरण इति कालादिकर्मणः सप्तम्यपि स्यात्। अधीती[5] व्याकरण इत्यत्र यद्यपि कर्मण्येव क्तः विहितः तथापि तद्धिते उत्पन्ने

१. निर्गर्हते (भं०)
२. गतिक्रियापेक्षं चैतदपादानम् (भं०)
३. सेत्स्यतीति (भं०)
४. न्यूनपाठः (भं०)
५. न्यूनपाठः (भं०)

अधीतव्याकरणयोरभिसम्बन्धो निवर्तते। अस्ति च धात्वर्थस्य व्याकरणेन सम्बन्ध इति द्वितीया न भविष्यति, कालादिलक्षणस्य कर्मणो बहिरङ्गत्वादिह ग्रहणात्।

**पर्यपाङ्योगे पञ्चमी २।४।२०**

परिस्रुघ्नाद् वृष्टो देवः इति वर्जनमत्रार्थः। एवमपकान्यकुब्जादित्यत्रापि। आकुरुक्षेत्रादित्यत्रापि। मर्यादाभिविधिरिति। विना तेनेति मर्यादा, सह तेनेत्यभिविधिः। ननु पर्यपाङ्भिरिति क्रियताम्, योगशब्दाध्याहारेण च पर्यपाङ्भिर्योग इत्यर्थो विज्ञास्यते तत्किम् योगग्रहणेनेत्याह—पर्यपाङ्भिरिति कर्तव्य इत्यादि। पर्यादीनां कर्मप्रवचनीयसंज्ञकानां योगे पञ्चमी यथा स्यात् इति विशिष्टयोगप्रतिपत्त्यर्थं योगग्रहणं क्रियते। केषां पुनर्योगे मा भूदित्याह—उपसर्गाणां मा भूदिति परिभ्रमणमित्यादि। अत्रोपसर्गाः पर्यादयः। कथमेतत् ज्ञायत इत्याह क्रियायोगे सतीत्यादि। उपसर्ग इति पूर्वाचार्यसंज्ञा परिग्रहात्, पर्यादीनां क्रियायोगे सत्युपसर्गत्वम्। परिभ्रमणमित्यादौ च भ्रमणादिक्रियायोगादुपसर्गाः पर्यादयो न कर्मप्रवचनीयाः इति तैर्योगे पञ्चमी न भवति। यद्येवम्, वृक्षं परि विद्योतत इत्यत्र परिणा कर्मप्रवचनीययोगे पञ्चमी कस्मान्न भवतीति पृच्छति, इह कस्मान्न भवतीत्यादि। उच्यत इत्यादिना परिहरति। वर्जनेऽर्थे इति। वर्जन एवार्थ इत्यर्थः। तेनेति अपशब्देन वर्जनस्य ग्रहणमिति वर्जनार्थस्यैवेत्यर्थः। लक्षणमर्थं द्योतयतीति। वृक्षं प्राप्य विद्युत् विद्योतत इति प्राप्तिक्रियाजनितं लक्ष्यलक्षणसम्बन्धं द्योतयतीति भावः।

**दिगितरर्तेऽन्यैश्च २।४।२१**

दिक्च, इतरश्च, अन्यश्च, ऋते चेति विग्रहः। दिगिति गत्वं व्यञ्जनान्तस्य यत्सुभोरिति वचनादितरशब्दादवर्णस्य ऋवर्णे अर्, अवयवार्थावसरे योगशब्दाध्याहारेण दिगितरर्तेन्यैर्योग इति पञ्चमी[1] व्याख्यायते, एवमुत्तरयोगयोरपि दिक्शब्दैर्योग इत्येतेन व्याख्यानादिति दिगित्यत्र दिग्वृत्तयः पूर्वादिशब्दाः दिग्ग्रहणेन गृह्यन्त इति दर्शयति। यद्येवम्, इयमस्याः पूर्वा दिगित्यत्रैव पञ्चमी प्राप्नोति यत्र पूर्वादयो दिशि वर्तन्ते। देशकालवृत्तिभ्यस्तु योगे कथं पञ्चमी। पूर्वो ग्रामाद् देशः, पूर्वो ग्रीष्माद्वसन्तः इति। सत्यम्, चानुवृत्तेर्भविष्यति। इतरो देवदत्तात् पण्डितः इति क्रियायां गुणे वा निर्दिश्यमानस्यैकस्य यो द्वितीयः प्रतियोगी स इतरशब्देनोच्यते। ऋते शम्भोरिति। ऋते

1. सप्तमी (वा०)

इत्ययं शब्दो वर्जनेऽर्थे वर्तते, अन्य इत्यत्रार्थो गृह्यत इति। तेनान्यस्यार्थस्य वाचकैरर्थान्तरादिशब्दैरपि योगे पञ्चमी भवति। च-शब्दात् क्वचित् दिक्-शब्दयोगे षष्ठीप्रवृत्त्यर्थः। तेन पुरो ग्रामस्य, पुरस्ताद् ग्रामस्य, पुरतो ग्रामस्य, दक्षिणतो ग्रामस्य, उत्तरतो ग्रामस्य इत्यादयः।

**द्वितीयैनेन २।४।२२**

एनेन एन-प्रत्ययान्तेनेति। एन-प्रत्ययस्य केवलस्यासम्भवात् दक्षिणेन ग्रामं वसतीति, पुरो ग्रामस्य इत्यादिवत् षष्ठ्यपि प्राप्नोतीति सा बाध्यते। यद्येवम्, दक्षिणेन ग्रामस्येत्यादि कथमित्याह—षष्ठ्यपीष्यत इति। चानुवृत्तेरिति भावः।

**गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि २।४।२३**

चेष्टनं चेष्टा, गुरोश्च निष्ठायामित्यकारप्रत्ययः। यत्कर्म तत्र कर्मणीति कर्मशक्तियुक्ते लिङ्गे इत्यर्थः। चेष्टा कायपरिस्पन्दः इति शरीरव्यापारः। कायपरिस्पन्द एतेन परिस्पन्दवचनेऽत्र चेष्टाशब्दोऽत्र गृह्यते न तु क्रियामात्रवचन इति दर्शयति। एतच्च चेष्टाग्रहणाल्लभ्यते। क्रियामात्रवचने हि चेष्टाशब्दे परिगृह्यमाणे चेष्टाग्रहणं व्यावर्त्याभावादपार्थकं स्यात्। सर्वस्य धातोः क्रियावचनार्थत्वात्। वाराणसीमित्यम्शसोरादिलोप इत्यकारलोपः। अध्वानमिति घुटि चासम्बुद्धाविति दीर्घः, अध्वनीत्यत्रार्थो गृह्यत इति निर्देशस्यार्थपरत्वात्। पन्थानमित्यनन्तो घुटीत्यन्नादेशः। पूर्ववद् दीर्घः। उत्पथेनेत्यादि। अयं भावः ([1]अध्वनीत्ययं निर्देशो) मुख्ये ध्वनिः प्रवर्तते। यत्र लोके अध्वव्यपदेशो रूढः। यदा तूत्पथेन पथा अतिक्रमितुमिष्यते तदा निषेधस्याप्रवृत्तेः अध्वने गच्छतीत्ययमपि प्रयोगो भवति। अपिशब्दादध्वानं गच्छतीत्यपि गतिकर्मणीति कर्तव्ये अर्थग्रहणं पादविहरणात्मिकायाः विशिष्टायाः गतेः परिग्रहार्थम्। तेनेह न भवति, स्त्रियं गच्छतीति। अत्र हि स्त्रीशब्दप्रत्यासत्त्या गमिर्मैथुनमर्थं प्रतिपादयति न तु पादविहरणात्मिकां गतिम्। अजां नयति ग्राममित्यत्रापि न भवति, नयतेर्गत्यर्थत्वात्। प्रतीयते ह्यत्र गतिः, नत्वसौ नयतेरर्थस्तस्य प्रापणवाचित्वात्। ननु चतुर्थी वेति क्रियताम्, चतुर्थ्याञ्च विकल्पितायामर्थात्कर्मणि द्वितीयैव भविष्यतीति किं द्वितीयाग्रहणेनेत्याह—चतुर्थी वेति कर्तव्य इत्यादि बाधकं पुनः षष्ठ्याः कृतीत्येवं विशेषणविधानात्।

---

१. अनध्वनीत्ययं निषेधो (भं०)

**मन्यकर्मणि चानादरेऽप्राणिनि २।४।२५**

मन्य इति रूपमकारान्तः मन्यमानं प्रत्याह—मन्यते इत्यस्येज्यादि। मन्यतेः कर्म मन्यकर्म इति। अस्वपदेन विग्रहं प्रतिदर्शयति। तस्मिन्कर्मणीति कर्मशक्तियुक्ते लिङ्ग इत्यर्थः। तृणमपि त्वां न मन्य इत्यादि। एतेन निषेधमुच्चारयंस्तृणादेरपि निकृष्टत्वं यदा प्रतिपादयिषितुं भवति तदा द्वितीयाचतुर्थ्यौ भवतः। न तु समत्वविवक्षायामिति दर्शयति। अथ युष्मदस्मदोरपि मन्यतेः कर्मत्वाच्चतुर्थी कस्मान्न भवति, गम्यते हि ततोऽपि चतुर्थ्यामनादर इत्याह—च शब्दोऽत्रेत्यादि। पूर्वसूत्रात्समासस्थं कर्मग्रहणमिहानुवर्तयितुमशक्यमिति पुनः कर्मग्रहणम्। न त्वां काकं मन्य इति प्राणित्वादत्र चतुर्थ्याः अभावः। यद्येवम्, न त्वां शुनं[1] मन्ये, न त्वां शुने मन्ये इति न सिध्यति, उच्यते—प्राणिनिषेधः अयम् नावादिषु स्मर्यते। यत्र च द्वितीयाचतुर्थ्यौ नेष्येते ते नावादयः। न त्वां नावम्मन्ये, न त्वामन्नं मन्ये, अनावादाविति न कृतम्, वैचित्र्यात्।

**नमः स्वस्तिस्वाहास्वधालंवषड्योगे चतुर्थी २।४।२६**

नमस्स्वस्तीत्यादि। द्वन्द्वगर्भः तृतीयातत्पुरुषः। चतुर्थी भवतीति सम्बन्धषष्ठ्या अपवादः। तेन वारणार्थस्यापि न भवतीति (ननु[2] अलङ्कुरुते कन्या इत्यत्र भूषणार्थस्यापि न भवतीति) कस्मान्नोच्यते, एवं मन्यते—उपपदविभक्तेर्कारकविभक्तिर्बलीयसीत्येवमत्र द्वितीयैव भविष्यति। अलं रोदनेनेति तु नेयं तृतीयाकारकविभक्तिः क्रियापदस्याश्रवणात् रोदनस्याकारकत्वात्। उपपदविभक्तेरित्यादि क्रियाकारकयोः सम्बन्धस्य अन्तरङ्गत्वात् अन्तरङ्गकर्मादिकारकविषया विभक्तिर्बलीयसी भवति। उपपदार्थेन तु क्रियाकारकसम्बन्ध इति उपपदनमस् शब्दादिनिमित्ता विभक्तिर्बहिरङ्गा भवति। एवञ्चान्तरङ्गैव "नारायणं नमस्कृत्य" इत्यादौ कर्मणि कारके द्वितीया प्रवर्तते।

**तुमर्थाच्च भाववाचिनः २।४।२७[3]**

तुमा समानार्थस्तुमर्थः इत्यत्रार्थशब्दोऽत्र विषयवचनः। यथेन्द्रियाणीन्द्रियार्थेषु इत्यत्र। तेन तुमा समानार्थः तुमातुल्यविषयो यो घञादिः प्रत्ययः सः तुमर्थ इत्युच्यते। अर्ह-प्रत्ययनिर्देशात् समानस्य लोप इति लक्षणद्वारेणै-

---

१. श्वानम् (वा० + भं०)

२. न्यूनपाठः (भं०)

३. २।४।२८ (दु० वृ०)

तदुक्तम्, गम्यमानार्थत्वात् तु समानशब्दो वृत्तौ न प्रयुज्यत एव। भाववाचिनश्चेत्यनेन विहित इत्यनेनैव विहितस्य घञादेः प्रत्ययस्य तुमा तुल्यविषयत्वात्। तदन्तादिति केवलस्य भाववाचिनोऽसम्भवादिति भावः। पाकाय व्रजतीति क्रियायां क्रियार्थायामुपपदे भाववाचिनश्चेति घञ्, नन्वेतत् तादर्थ्यचतुर्थ्यैव सिद्धम्। न सिध्यति, तादर्थ्यविहितेन प्रत्ययेन तादर्थ्यस्योक्तत्वाच्चतुर्थ्यभावप्रसङ्गात्। तथाभिहितेऽपि तादर्थ्ये तादर्थ्यचतुर्थी क्रियते। वह्निपाचको व्रजतीति अत्रापि प्राप्नुयात्, अत्रापि हि क्रियार्थोपपदे वुणो विधानात् तादर्थ्यमस्त्येव, करणाय व्रजतीति पूर्ववत् युट्। पाकः, त्यागः, भावे घञ्। भवत्ययं भाववाची न तु तुमातुल्यविषयः। कारको व्रजतीति। भवत्ययं वुण्प्रत्ययः तुमातुल्यविषयः। वुण्तुमावित्यनेन विधानात्। न तु भाववाची, किं तर्हि, कर्तृवाची, कर्तरि कृदिति वचनात्। करिष्यामीति व्रजतीत्यत्रार्थे वुणः [1]प्रवृत्तिः।

**तृतीया सहयोगे २।४।२८**[2]

सहेन योगः सहयोग इति। सहेन सहार्थेनेत्यर्थः। तदाह— सहार्थेन योग इति क्रियागुणद्रव्यसम्बन्धे सति सहयोगो भवतीति सम्बन्धषष्ठी प्राप्नोति सा बाध्यते। तमेव क्रियादिसम्बन्धं क्रमेणोदाहरति। पुत्रेण सहागत इत्यादि। न उभयोरपि पितापुत्रयोः क्रियादिसम्बन्धः प्रतीयते, ततश्च सहयोगे उच्यमाना तृतीयापि तृशब्दादपि कस्मान्न भवतीत्याह—अप्रधानादित्यादि। एवं मन्यते। षष्ठ्यापवादे इयं तृतीया, षष्ठी च सम्बन्धस्योभयाधिष्ठानेऽपि राज्ञः पुरुष इत्यादौ पुरुषावच्छेदकत्वेनोपादीयमानाल्लब्ध - अप्रधानभावाद् राजशब्दादेव स्मरन्ति। न त्वच्छेद्यत्वेन प्रधानात् पुरुषात्। द्विष्ठत्वेऽपि च सम्बन्धस्य द्वाभ्यां षष्ठी न भवति। गुणादेवोत्पन्नायाः षष्ठ्या उभयगतस्यापि सम्बन्धस्याभिहितत्वात्। यद्येवम्, पुरुषस्य राजेति न स्यात्। भवति यदा तत्पुरुषस्य गुणभावो राज्ञश्च विशेष्यत्वं विवक्ष्यते। राज्ञः पुरुषस्येति तु प्रयोगो वाह्य[3]गृहाद्यपेक्षणात्। एवं च षष्ठीविषये तृतीयाविधानाद् अर्थात् पुत्रादेवेयं तृतीया भवति। न तु पितुः प्रधानात्। कथं तस्य प्राधान्यमिति चेच्छब्देन तद्विषयतयैव स्वशक्तिबलात् क्रियासम्बन्धस्य प्रतीतेः। एवं च कृत्वा

---

१. प्रवृत्तेः (मं०)

२. २।४।२८ (दु० वृ०)

३. गुणाद्यपेक्षणात् (मं०)

पुत्रेण सहागत इत्येकत्वेन निर्देश उपपन्नः। सह इत्यत्र यतोऽर्थः गृह्यते तेनेति। यस्मादत्र सहशब्देन सहार्थो गृह्यते, तेन हेतुना पुत्रेण साकमित्यादावपि पर्यायप्रयोगे तृतीया भवति। सहार्थप्रतिपादकं शब्दमन्तरेणापि च भवति। तथा च तस्य तेन समास इति सह नेति कर्तव्ये योगग्रहणं ग्रन्थाधिक्यादर्थाधिक्यं भवतीति शब्दान्तरप्रयोगे विभक्त्यन्तरप्रवृत्त्यर्थम्। तेनाशीर्विषये आयुष्यमद्रकुशलसुखार्थहित-इत्येतैर्योगे चतुर्थी भवति। आयुष्यं च देवदत्ताय भूयात्। षष्ठी बाध्यते, चानुवृत्तेः, पक्षे सापि भवति। अर्थग्रहणादायुष्यादिपर्यायप्रयोगेऽपि षष्ठी चतुर्थ्यौ भवतः। चिरजीवितं देवदत्ताय, चिरं जीवितं देवदत्तस्येति वा। एवं मद्रादिप्रयोगेऽपि उदाहार्यम्। तुल्यार्थैरिति। तुल्यलक्षणोऽर्थो येषां ते तुल्यार्थाः।

हेत्वर्थे २।४।२९[1]

फलसाधनयोग्यः पदार्थो हेतुरिति। ऐतेन शास्त्रीयस्य हेतोरिहाग्रहणमिति दर्शयति। एतच्चात एव योगारम्भादवसीयते। शास्त्रीये हि हेतौ गृह्यमाणे सति कर्तरि चेत्यनेनैव सिद्धत्वादपार्थको योगारम्भः स्यात्। हेतौ तृतीया भवतीति हेतुवाचिनि लिङ्ग इत्यर्थः। विद्यया यशः इति। टौ सो रे इत्येत्वम्। अत्र यशो लक्षणं फलमुपजनयन्ती अपि विद्या तदुपजनने योग्यतया हेतुरिति व्यपदिश्यते। हेताविति न कृतं वैचित्र्यादिति। हेतौ वक्ष्यमाणां पञ्चमीं विधाय विचित्रप्रयोगसंसिद्धये अर्थग्रहणं कृतमिति भावः। तेनाग्निरत्र धूमादित्यादि यथा दर्शनं सिद्धम्।

कुत्सितेऽङ्गे [2]२।४।३०

कुत्सावक्षेपणे चुरादिः। कुत्स्यत इति क्तप्रत्ययः। इट्, निष्ठेटीन इतीनो लोपः। निन्दितेऽङ्ग इति निन्दिताङ्गवाचिनि लिङ्ग इत्यर्थः। एवमुत्तरत्रापि सप्तम्यर्थो व्याख्येयः। अक्ष्णा काण इत्यत्र सर्वत्र काणादिपदसन्निधानादक्षिप्रभृतेः कुत्सितत्वं गम्यते। अस्थिदधीत्यन्नादेशः। अवमसंयोगादित्यकारलोपः। ननु काणशब्दादेव काणगुणयुक्तो देवदत्तः प्रतीयत इति किमक्षिशब्दस्य प्रयोगेण, अस्त्येतत्, किन्तु लौकिके व्यवहारे शब्दप्रयोगं प्रति गुरुलघुचिन्ता [3]नाद्रीयते। अन्यथा शाखादिसत्यर्थे प्रतिपाद्ये वृक्षतरुप्रभृतीनामेव प्रयोगः स्यात्, न तु पादपादिशब्दानाम्। अथाक्षिकाणं देवदत्तस्येत्य-

---

१. २।४।३० (दु०वृ०)
२. २।४।३१ (दु० वृ०)
३. नाश्रीयते (वा०)

अपि कस्मान्न भवतीत्याह—**अप्रधानादित्यादि**।

उपपदविभक्तेः कारकविभक्तिः बलीयसीत्यस्ति पदाध्याहारादक्षिशब्दादत्र कर्तुः कारकविभक्तिः प्रथमा प्रवर्तते न तूपपदविभक्तिस्तृतीयेत्यर्थः। ननु नेयमुपपदविभक्तिः, नह्यत्र सूत्रे किञ्चिच्छब्दरूपमुपपदत्वेनोपात्तं यद्योगे तृतीयेयं भवति। उपपदविभक्तिरित्युपदिश्यते, अस्त्येतत्, किन्तु यद्यपि नोपात्तं तथाप्यर्थात् प्रतीयत एव। नह्यक्ष्णा काणः इत्यादावसमीपवर्तिनि काणादिपदे कुत्सितत्वमक्ष्यादीनामवगम्यते। इत्थं च भवतीयमप्युपपदविभक्तिः। अक्षि-काणं देवदत्तस्येति। काणत्वगुणयोगादभेदोपचारादक्षिशब्देनोच्यते। अत्र ह्यक्षिप्रधानमिति देवदत्तावच्छिन्नस्य अक्ष्णः काणगुणयुक्तस्य शब्देन प्रति-पादनात्।

**विशेषणे** [1]२।४।३१

[2]विशेष्यते येन तद्विशेषणमिति। ज्ञापकपदार्थो टादिरित्यर्थः। अथ कमण्डलुपाणिस्नातक इत्यत्र विशेषणात् कमण्डलोस्तृतीया कस्मान्न भवति, वाक्यकालश्रूयमाणायां प्रथमायां लुप्तायां प्रत्ययलक्षणेन विभक्तिवर्जमिति-लिङ्गसंज्ञानिषेधादलिङ्गत्वान्न भवतीति चेत्, तत्र न सम्बुद्धावित्यारम्भात् प्रत्ययलक्षणेन तस्य निषेधस्य अप्रवृत्तेः। अस्तु तृतीया, तत्स्था लोप्या विभक्तय इत्यादिना लोप्स्यत इति चेत्, कथं समासादुत्तरकालभाविनी विभक्तिर्लुप्यते। एवं तर्हि समासपदानामन्यपदार्थाभिधायित्वादविभागमापन्नस्य विशेषणस्य कमण्डलोः तृतीयाविधिं प्रत्यवक्रष्टुमशक्यत्वान्न भवति। यद्येवम्, नील-मुत्पलमित्यत्र नीलशब्दो विशेषणमिति ततः तृतीया कस्मान्न भवति, न भवति, अर्थान्तरावगमप्रसङ्गात्।

**कालभावयोः सप्तमी** [3]२।४।३२

कालः। किल विल क्षपे चुरादाविन्नन्तः। अत इन्नन्तात्कलयति भूता-नीति पचाद्यच्। काले भावे चेति। कः पुनः कालः, उच्यते—सूर्यादिकर्तृका प्रसिद्धपरिमाणा क्रिया अहरादिशब्दव्यपदेश्या। क्रियान्तरपरिच्छेदकः कालः। पुष्यतीति। पुष् विकासे [4]दैवादिकः। देवदत्ते गते यज्ञदत्तो भुङ्क्त इति

१. २।४।३२ (दु० वृ०)
२. विशिष्यते (भं०)
३. २।४।३४ (दु० वृ०)
४. दिवादि (भं०)

देवदत्तगमनस्य सत्तायामित्यर्थः। एवमग्निहोत्रे हूयमाने गतः इत्यत्राप्यग्निहोत्रे हवने सतीत्यर्थो मन्तव्यः। इह कस्मान्न भवति, शरदिति। भवति हि शरच्छब्दः कालवाची, प्रथमायाः विषयोऽयम्, ततो न भवतीति चेत्, न। कालादन्यत्रासौ सावकाशः। इह सप्तम्या बाध्येतेत्याह— कालभावाभ्यामित्यादि। अयमर्थः। इह विशेषण इति वर्तते, तेन कालभावाभ्यां यदान्यत्किञ्चिद् ज्ञाप्यते तदा—ताभ्यां सप्तमी भवति। यथा मूलोदाहरणे। तत्र हि शरदा सप्तच्छदो विकासो ज्ञाप्यते। देवदत्तगमनेनापि यज्ञदत्तभोजनम्। शरदित्यत्र तु न किञ्चिच्छरदा ज्ञाप्यते इति न भवति। चानुवृत्तेर्भावे विशेषणेऽनादरावगतौ सत्यां षष्ठ्यपि भवति। रुदतः प्राव्राजीत्, रुदति प्राव्राजीत्। रुदन्तमनादृत्य प्रव्रजित इत्यर्थः। सम्बन्धविवक्षात्र दुर्घटैव। अर्थादुपपदान्निमित्तात् बाधशास्त्रे सप्तमी सा भाव एव मन्तव्या। आधारत्वविवक्षायां भावशब्देनैव कालेऽपि सप्तम्याः सिद्धत्वात् कालग्रहणं प्रपञ्चार्थम्।

**स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च** [1]२।४।३३

गोः स्वामी व्रजतीति व्रजिक्रियायां गवां कर्मत्वात् तन्निबन्धना कारकादिविभक्तिः द्वितीयैव प्रवर्तते न तूपपदविभक्ती षष्ठीसप्तम्यौ। अथवा ग्रहणमेव कस्मान्न क्रियते, सप्तम्यभावे च सम्बन्धषष्ठ्यस्त्येवेति किं षष्ठीग्रहणेन, सत्यम्, उत्तरार्थं तु। अन्यथा ह्युत्तरत्र समुदायैकदेशस्य पृथक्करणं विश्लेषो भवतीति सप्तम्यभावपक्षे पञ्चम्यपि स्यात्। षष्ठ्येव यथा स्यादिति षष्ठीग्रहणम्।

**निर्धारणे च** [2]१।४।३४

स्वार्थं इन्निति, स्वार्थः प्रकृत्यर्थः। तत्रेन्प्रत्ययः, न तु हेतौ, हेत्वर्थस्याभावात्। तदभावस्तु पृथक्क्रियमाणतामात्रस्य विवक्षितत्वात् दृश्यते च स्वार्थे इन्प्रत्ययः। यथा रामो राज्यमकारयत्। अकुपितमभिसारणेऽनुनेतुमित्यादौ षष्ठीसप्तम्यावनुवर्तेते इति। ननु पूर्वत्र चानुकृष्टा सप्तमी चानुकृष्टं चोत्तरत्र नानुवर्तेत इति कथं सप्तम्या इहानुवृत्तिस्स्यात्। सत्यम्। चकारकरणाद्भविष्यति। पुरुषाणां क्षत्रियश्शूर इत्यत्र पुरुषसमुदायात् शूरत्वेन गुणेन क्षत्रियावयवो निर्धार्यत इति निर्धारणवृत्तेः पुरुषशब्दात् षष्ठीसप्तम्यौ भवतः।

---

१. २।४।३५ (दु० वृ०)
२. २।४।३६ (दु० वृ०)

अवयवसम्बन्धविवक्षायामाधारत्वविवक्षायां च वृक्षस्य शाखा वृक्षशाखेतिवत् षष्ठीसप्तम्योस्सिद्धत्वात् योगारम्भस्समुदायादेकदेशस्य प्रकर्षविवक्षायां तयोः प्रवृत्त्यर्थः ।

**षष्ठी हेतुप्रयोगे [1]२।४।३५**

प्रयुक्तिः प्रयोगः । हेतुशब्दस्य प्रयोग इति शब्दस्येति कुतः प्रयोगस्योच्चारणशब्दधर्मत्वात् । विद्यायाः हेतोः वसतीति हेतुशब्दात् षष्ठी विद्या सामानाधिकरण्यात् । ननु हेत्वर्थ इत्यनेन हेतुत्वमात्रे द्योत्ये तृतीया विहिता । इह च हेतावित्यपि क्रियमाणे हेतुशब्दप्रयोग एव षष्ठी विज्ञास्यत इति किं प्रयोगग्रहणेन, सत्यम्, विस्पष्टार्थं तु ।

**स्मृत्यर्थकर्मणि [2]२।४।३६**

पितुः स्मरति, इति स्मृ चिन्तायाम् । मातुर्ध्यायतीति ध्यै चिन्तायां वेति वक्तव्यम् इति, ननूत्तरत्र नित्यग्रहणमिह विकल्पं बोधयतीति किं वक्तव्येन, नैतत्, उत्तरत्र हि यन्नित्यग्रहणं तत् हिंसार्थानामित्यत्र वैकल्पिकं बोधयेत्, अनन्तरं नित्यशब्दश्रवणात् । द्विसूत्र्यां तु विकल्प[3] बोधयतीति विचित्रमेतत्[4] । अथ कृत्यप्रत्ययप्रयोगे कर्मणि नित्यम् । अन्यत्र तु कर्मणि विकल्पः, ततः त्रिसूत्रीस्थेऽपि कर्मणि विकल्पो लभ्यत इति, तन्न, हिंसार्थानामित्यत्रैवानन्तरसूत्रे यत्कर्म तत्रैव नित्यग्रहणं विकल्पादेकत्वेनोपक्षीयमाणं सदन्यत्र सूत्रद्वयस्थे कर्मणि कथं विकल्पं बोधयेत् । कारणाभावात्, हेतुप्रयोगे च षष्ठ्याऽपि विकल्पो भवेदविशेषात् इति वक्तव्यमेव ज्यायः । तच्चैतदपूर्वत्वेन न वक्तव्यम् । स्मृतिकर्मणीति कर्तव्ये अर्थग्रहणस्यैव पक्षेऽर्थ्यमानद्वितीयाविभक्तिपरिग्रहार्थत्वात् । पितरं स्मरतीति घुटि चेत्यर्, यदि स्मृत्यर्थानां कर्मणि षष्ठी भवति । तत्कथं पिता स्मर्यत इति प्रयोगः । आत्मनेपदेन कर्मण उक्तत्वात् । यदा च कर्मरूपतामविवक्षितत्वसम्बन्धसामान्यविवक्षा तदा पितुः स्मर्यत इत्यपि भवत्येव । तथा च सर्पिषो दयते, सर्पिषमीष्टे, सर्पिषो नाथते, शतस्य पणते, सहस्रस्य व्यवहरते इत्यादयो दृश्यन्ते । एवं सतोऽप्यविवक्षा यथा, अनुदरा कन्या इति ।

---

१. २।४।३७ (दु० वृ०)
२. २।४।३८ (दु० वृ०)
३ वै विकल्पम् (भं०)
४. चित्र्यमेतत् (वा०)

**करोतेः प्रतियत्ने [1]२।४।३७**

सतो ([2]गुणान्तरोत्पादनमिति। प्रकृतत्वादन्यो) गुणो गुणान्तरम् एधोदकस्येति। समाहारे द्वन्द्वः वेति वक्तव्यमिति नापूर्वत्वेन कुतः कृञ इति कर्तव्ये श्तिपो अधिकस्य निर्देशेनाधिकविशेषद्योतनार्थेन द्वितीयाया अपि परिग्रहात् सम्बन्धसामान्यविवक्षायां [3]सिद्धैव षष्ठी, आरम्भस्तस्या एव प्रपञ्चार्थः।

**हिंसार्थानामज्वरे [4]२।४।३८**

हिसि हिंसायाम्। हिंसनं हिंसा। गुरोश्च निष्ठायामित्यकारः। रुजति तुदतीति तुदादेरनीति गुणाभावः। "एति जीवन्तमानन्दः" इति इणिरयं गत्यर्थो न तु हिंसार्थः। ज्वरयतीति ज्वरो रोगे हेताविन्, उपधादीर्घः। सानुबन्धानां ह्रस्वः। सम्पूर्वस्येत्यादि [5]एतच्चाज्वरेः इतीकारस्याधिकस्य निर्देशाल्लभ्यते। सन्तापयतीति। तप सन्तापे हेताविन्। हिंसार्थानामित्यादि। घञादिभिः प्रत्ययैः प्रतिपाद्यस्सिद्धरूपो भावः। सः यदा हिंसार्थानां धातूनां कर्ता भवति तदा षष्ठी प्रवर्तते, यथा—मूलोदाहरणयोः। तत्र ह्येकत्र रोगकर्ता, अपरत्रापि तोदः, रुजितुदी च भावघञन्तौ। वायुः पुरुषं हिनस्ति इत्यत्र तु न भवति कर्तुर्वायोर्भावार्थानभिधायित्वात्। कृपावाजीत्यादिना कर्तर्युण् प्रत्ययान्तो अयं वायुशब्दो न घञाद्यन्तः। अयं च विशेषो अर्थग्रहणाल्लभ्यते अन्यथा हि हिंसायामित्येव कुर्यात्। हिंसायां यो धातुस्तस्य यत्कर्मेति चार्थो विज्ञास्यते।

**कर्तृकर्मणोः कृति नित्यम् [6]२।४।३९**

क्रियाविशेषणत्वाद् द्वितीयान्तम् इति षष्ठी भवतीति। भवति क्रियायाः नित्यमिति विशेषणं क्रियायाश्च साध्यत्वे सति कर्मकत्वात् तद्विशेषणमपि कर्म भवति। तेन नित्य-शब्दात् कर्मणि द्वितीया, नपुंसकं चैतदिति, तेनाकाराद् असम्बुद्धौ मुश्चेति मुरागमः। असुश्च लोपः। कृत्प्रत्ययान्त इति केवलस्य कृतोऽसत्वात्। आसिका अग्रग्रामिकेति, भावे वुञ्, भवदर्थस्यात्र कर्तत्वात् कर्ता

---

१. २।४।३६ (दु० वृ०)
२. गुणान्तरो नापादानमिति प्रकृतादन्यः (वा०)
३. षष्ठी सिद्धा (मं०)
४. २।४।४० (दु० वृ०)
५. एतद्वा ज्वरे (मं०)
६. २।४।४१ (दु० वृ०)

रक्षितेति कर्तरि तृच्। अत्र वुण्, भुवनी कर्मणी। अश्वेनेति करणे तृतीया कृत् प्रत्ययान्तस्येति, तव्य, अनीय, क्यप्, घ्यण् एते कृत्प्रत्ययाः। तवै प्रत्ययस्तु छन्दोविषयः। ते तव्यादयः कृत्प्रत्ययाः अन्ताः यस्य तथोक्ताः, गम्य इति। शकिसहीति य प्रत्ययः कर्तरि चेति न कृतमुत्तरत्र कर्मणोऽप्यनुवृत्तिर्यथा स्यात् इति। अन्यथा चानुकृष्टं कर्मग्रहणमुत्तरत्र नानुवर्तते। यद्येवम्, चकारः एवोत्तरत्रानुवर्तिष्यते। सकर्मण्यपि निषेधं समुच्चेष्यति। एवं तर्ह्युभयोः कर्तृ-कर्मणोर्यत्र कृत्-प्राप्तिः तस्मिन्कृति प्रयुज्यमाने सति कर्मण्येव षष्ठी यथा स्यात्। कर्तरि माभूदिति नियमार्थं कर्मग्रहणम्। तेनाश्चर्यो गवां दोहो गोपालकेनेत्यत्र कर्ता अगोपालकात् षष्ठी न भवति। यद्येवम्, [1]आश्चर्यमोदनस्य नाम पाको ब्राह्मणानां च प्रादुर्भाव इत्यत्र ब्राह्मणात् कर्तुः षष्ठी न प्राप्नोति, नैतत्, यत्र कर्तृकर्मणोरेव कृत्प्रत्ययविषयत्वेन प्राप्तिः तत्रायं नियमः। इह तु पाके ओदनस्य प्राप्तिः प्रादुर्भावे च ब्राह्मणानामित्यविषयोऽयं नियमस्य। इह तर्हि-चिकीर्षा विष्णुमित्रस्य कटस्य, भेदिका देवदत्तस्य काष्ठानामिति विष्णुमित्र-देवदत्ताभ्यां कर्तृभ्यां नियमात् षष्ठी न प्राप्नोति। भविष्यति चानुवृत्तेः अकारयोः प्रयोगे कर्तर्यपि षष्ठी समुच्चयार्थत्वात्। तथा च क्वचिद्विकल्पः कर्तरि दृश्यते। शब्दानामनुशासनमाचार्येण आचार्यस्येति वा। कृतीति किम्, तद्धिते मा भूत् कृतपूर्वी कटमिति। कृतं पूर्वमनेनेति तसादित्वादिनि प्रत्ययः। अत्र कटात् कर्मणः तद्धितस्य प्रयोगे षष्ठी प्राप्नोति सा कृद्ग्रहणान्न भवति। कृतमिति च निष्ठायाः कर्मसामान्यमभिहितमिति कर्मविशेषमभिधातुं कटाद् द्वितीयैव प्रवर्तते। नित्यग्रहणं पूर्वत्र विकल्पप्रतिपत्त्यर्थम्। यदि पुनः पूर्वत्रैव वेति क्रियते, किं स्यात्, इहापि वेत्यस्यानुवृत्तिः आशङ्क्यते।

**न निष्ठादिषु** [2]२।४।४०

आदिशब्दोऽत्र प्रकारे तेन येषु प्रत्ययेषु प्रयुज्यमानेषु सत्सु कर्तृकर्मणोः षष्ठी नेष्यते ते निष्ठादयः तानेव निष्ठा। क्वन्सुकान इत्यादिना दर्शयति। भुक्तः भुक्तवानिति। भुज्यते स्म, भुङ्क्ते स्म इति क्तक्तवन्तु, अन्त्वसन्त-स्येति दीर्घः। ([3]पचिवानिति सान्तमहतोरिति दीर्घः) अन्यत्पूर्ववदिति। एत्वादिकार्यम्। ईषदाढ्यं भवं भवतेति सुखेन अनाढ्येनाढ्येन भूयत इति विग्रहः। ह्रस्वारुषोरिति मागमः, ईषत्स्थानं भवतेति सुखेन स्थीयत इति यु-

१. आश्चर्यमिदमोदनस्य (भं०)

२. २।४।४२ (दु०)

३. न्यूनपाठः (वा०)

प्रत्ययः। कटं कारको व्रजतीति, करिष्यामीति वुण्। शतं दायीति। इन्हन्पूषेति दीर्घः। एवं ग्रामं गमीत्यपि मन्तव्यम्। वर्तमानकाल इत्यादि। कथं पुनरेतल्लभ्यते, नञानिर्दिष्टस्यानित्यत्वात्। तथा चाधिकरणवाचिनोऽपि क्तप्रत्ययस्य प्रयोगे निषेधो नेष्यते इदमेषामासितम्, इदमेषां शयितमिति। गत्यर्थाकर्मकेत्यादिना च शब्दादधिकरणे क्तः, एवं नपुंसके भावेऽप्यनिषेध। छात्रस्य हसितम्, दास्याः कामुकः, श्रयुकमगमेत्युकञ् वुण्प्रत्ययो भविष्यत्काल विहितो गृह्यत इति न तु वुण्तृचावित्यनेन विहितः वुण्तुमाविति तु वुण् भविष्यत्काले विधीयते तद्विधौ हि भविष्यति गम्यादयः इत्यतो भविष्यतीत्यनुवर्तते। यवानां लावक इति वुण्तृचाविति वुण्, द्विषः, शन्तृङि तु विकल्पः। चौरस्य द्विषन्, चौरं द्विषन्।

**षडो णो ने २।४।४१**[1]

षड् इति कृतडत्वम्, षष् इत्ययं शब्दो निर्दिश्यते। षष्णामिति षत्वम्, आम्, संख्यायाः ष्णान्ताया इति नुः, हशषच्छेति डत्वमनेन डस्य णः। तवर्गचटेति नस्य णत्वम्। षड्भिरधिका नवतिः षण्णवतिः इति। लोप्यः इत्यर्हप्रत्ययनिर्देशादधिकशब्दो लुप्यते। नवतिनगर्योर्नकारे णत्वं चानुवृत्तेः। अत्र हि विभक्तिग्रहणानुवृत्त्या विभक्तिनकारे परे णत्वम् विज्ञायते तथा च षण्णयनमित्यत्र णत्वं नेष्यते।

**मनोरनुस्वारो धुटि २।४।४२**[2]

मश्च नश्चेति द्वन्द्वः, पदान्ते सिद्धत्वादिति मोऽनुस्वारं व्यञ्जन इत्यनेनापदान्तेऽयं विधिः। आक्रम्यते, आङ्पूर्वः क्रमिः, ज्योतिरुद्गमनेऽर्थे रुचादिः। स्नुक्रमिभ्यां च परस्मै इति नियमादितीडभावः। सर्पींषि इत्यादि। शि, नुः; सान्तमहतोरिति दीर्घः। मनोरिति व्युत्क्रमपाठादनुस्वरस्यापि क्वचिद् व्युत्क्रमणं भवतीति प्रशान्भ्यामित्यादि सिद्धम्।

**वर्ग्ये वर्गान्तः २।४।४३**[3]

मकारनकारयोरिति। यद्येवम्, चङ्क्रम्यत इत्यादावनुस्वारस्य वर्गान्तो न सिध्यति। वर्ग इति कर्तव्ये य-प्रत्ययनिर्देशादधिकात् सेत्स्यति वर्गस्थश्च-

---

१. २४।४३ (दु० वृ०)
२. २।४।४४ (दु० वृ०)
३. २।४।४५ (दु० वृ०)

वर्गस्तत्स्थाद्वर्गशब्देनाभिधायिष्यते, पूर्वेणानुस्वारः प्राप्त इति मनोरनुस्वार इत्यनेन मोऽनुस्वारो यस्मिन् प्राप्ते यो विधिरारभ्यते स तस्य बाधको भवतीत्यनेन वर्गान्तेन बाध्यते। शान्तः शान्तवानिति शास्यति स्मेति कर्तरि क्तः, नडीङ्श्वीडीतीडभावः। इह वर्ग्यविशेषार्थं धुटीत्यनुवर्तते, तेनेह न भवति, हन्मि हन्म इति।

**तवर्गश्चटवर्गयोगे चटवर्गौ २।४।४४**[1]

चटयोर्वर्गौ चटवर्गौ इत्यन्ते प्रयुज्यमाने वर्गशब्दः चकारेणापि सम्बध्यते। अन्यथा टवर्ग च-योग इत्यसन्देहार्थं कुर्याच्चेति घोषवत्योश्चेतीडभावः। णत्वविधेर्वनन्तग्रहणं तवर्गविशेषणार्थमपेक्ष्यते। तेनेह न भवति, प्रशाञ्चिनोति प्रशाण्टीकते। ताविति कर्तव्ये तच्छब्देन सर्वनाम्ना च टवर्गाविव परामृष्टौ भविष्यत इति भावः। गुरुसूत्रकरणादिति वर्गग्रहणाद्धि संज्ञापूर्वकस्य विधेरनित्यत्वं भवति। लक्ष्यानुरोधेन चानित्यत्वस्मरणादपदान्ताभ्यां चटवर्गाभ्यां यो योगः तत्रैव योगोऽयं विधिरिति मधुलिट्तेत्यादावपदान्तविषये न भवति। प्रत्ययलक्षणेन चान्तर्वर्तिनीं विभक्तिमाश्रित्य पदान्तविषयत्वमत्र मधुलिट्तेत्यादि ता त्वौ भाव इति ता त्वौ तसादित्वात् तरतमौ च-टवर्गाभ्यामिति कर्तव्ये योगग्रहणं विस्पष्टार्थम्।

**नामिकरपरः प्रत्ययविकारागमस्थः सिः षं नु विसर्जनीयषान्तरोऽपि २।४।४५**[2]

तैरन्तरं यस्येति बहुव्रीहिरित्यन्तरं व्यवधानमित्यर्थः। विकारस्थ इति विकारावस्थाव्यवस्थित इत्यर्थ एवमागमस्थः, नामिकराणां प्रत्ययविकाराणां च यथासंख्यसम्बन्धो न भवति। तेषां परमिति। षत्वकरणात् वाक्षु त्वक्षिवति चवर्गदृगिति गत्वम्। अघोषे प्रथम इति कः। गीर्षु, धूर्ष्विति। इरूरोरीरूरौ एते प्रत्ययसकारा इति प्रयोगभेदाद् बहुत्वनिर्देशः। एष इत्येतत् सि सौ सः। येषां तेषामिति। सुरामि सर्वतः। नन्वित्यादि चोद्यमुच्यत इत्यादिना परिहरति। अयमत्रार्थः। विसर्जनीयविधौ वा विराम इति तौ वेति वर्तते तेन यथा गीर्षु सर्जूष्वित्यादौ रेफस्य विकल्पेन विसर्जनीयप्रवृत्तिः। तथा सर्पिषोऽपि सकारस्य यत्र यदा प्रवृत्तिपक्षः तदा विसर्जनीयव्यवधाने सति सर्पिष्षिति रूपम्। अप्रवृत्तौ तु सस्य षत्वे कृते तद्व्यवधाने उपजाते सति षत्वं न सिध्यति। ष-ग्रहणं कर्तव्यम्। असाविति अदसस्सावौ सिलोपश्चेत्यौत्वसि-

१. २।४।४६ (दु० वृ०)
२. २।४।४७ (दु० वृ०)

लोपौ । उत्तरसूत्रादनन्त्य इति वर्तते । तेन सकारो विशेष्यते । तेनाग्निस्तत्रे-त्यादौ न भवति । सात्प्रत्ययस्य षत्वं नेष्यत प्रतिषेधविषयोपलक्षणपरमेतत् । तेन पदादिसकारस्यापि क्वचिन्न भवति । दधि सिञ्चतीत्यादौ न भवति ।

**रषृवर्णेभ्यो नो णमनन्त्यः स्वरहयवकवर्गपवर्गान्तरोऽपि २।४।४७**[1]

द्वन्द्वगर्भो बहुव्रीहिरिति स्वरहयवकवर्गपवर्गाणां द्वन्द्वे कृतेऽन्तरशब्देन बहुव्रीहिरित्यर्थः । इत्येतैर्व्यवहितोऽपीति । स्वरादिव्यवधाने सति रष्-ऋवर्णेभ्यः परो नकारो णत्वं न प्राप्नुयादित्येवमुक्तम्, पुष्णामित्यवमसंयोगादित्यकार-लोपः षाणत्वमिति तवर्गषटवर्गादित्यनेनैव सिद्धमिति षग्रहणं पुरुषेणेत्यादौ षाणत्वार्थम् । तिसृणामिति त्रिचतुरोरित्यादिना त्रिशब्दस्य तिसृभावः । ननु च ऋवर्णे र-श्रुतिर्विद्यते, ततश्च र-ग्रहणेनैव सिद्धत्वार्थम् किमृवर्णेन, नैतत्, वर्णाधिकाराद्, र-इति वर्णो गृहीतः । न च ऋकारे र-श्रुतिर्वर्णत्वेनेष्यते । पृथक्प्रयत्ननिर्वृत्तस्य वर्णत्वेनेष्यमाणत्वात् । पितॄन्, गिरीनिति अग्निवच्छसी-त्यग्निवद्भावाच्छसोऽकार इत्यादिना पूर्वं स्वरो नत्वं च नञा निर्दिष्टस्या-नित्यत्वात् । क्वचिदन्त्यनकारस्यापि णत्वम् । हे प्राण्, हे पराणिति । प्र परा पूर्वादन चेत्यस्मात् क्विप् । नृनमस्यापत्यं नार्नमनि इत्यत्र न भवति । बाह्यं तद्धितमपेक्ष्य बहिरङ्गायाः वृद्धेरसिद्धत्वे सति रेफाभावात् रषृवर्णानकारश्च यदेरयाद्यपि शब्दस्यात्र बहुलार्थत्वादिति भावः । तथा च समानपदेऽपि क्वचि-न्नेष्यते । प्रवेपनं प्राध्ययनम्, प्राध्यना प्रभवानां प्रनष्ट इत्यादौ विसर्जनीय-जिह्वामूलीयेत्यादि स्वरादिव्यवधाने णत्वमुच्यमानं विसर्जनीयादिव्यवधानेन प्राप्नोतीत्येवमुक्तम् । ननु विसर्जनीयस्तावत्स्वरनिमित्तकात्स्वर इति शक्यते व्यपदेष्टुम् । जिह्वामूलीयोपध्मानीयावपि विसर्जनस्थानिकत्वाद्विसर्जनीयावेव तेन यद्विसर्जनीयादिव्यवधानं तत्स्वरादिव्यवधानमेवेति स्वरव्यवधानादेव सिद्धं णत्वमिति किमिष्टकथनेन, नैतत्, प्रेन्वनमित्यादावपि ह्रीकारस्स्वरनिमित्तक-त्वात् वकारः स्वर इति तेनापि व्यवधाने णत्वं स्यात् । गौणश्चायं विषयः इतीष्टिरेव ज्यायसी । इवि जिवीत्यस्मात्पूर्वकृतनकारागमाद् युट् । यद्येवम्, बृंहणमित्यादावनुस्वारव्यवधाने णत्वं न सिध्यति । स्थूलपरिबृंहेण इति निर्दे-शात् सेत्स्यति ।

---

१. २।४।४८ (दु० वृ०)

**नदाद्यञ्च्वाह्व्यन्स्यन्तृसखिनान्तेभ्यो ई २।४।४७**[1]

ततो द्वन्द्व इति। नदादयश्च, अंश्च आश्च सखा च नान्तश्च इत्येवं रूपः। विदुषीति। विद् ज्ञाने वर्तमाने शन्तृङ्, अन्विलुक्, वेत्तुश्शन्तुर्वन्सुः पेचुषीति पचेः क्वन्सुकानाविति क्वन्सुः। परोक्षवदतिदेशात् द्विर्वचनम्, अस्यैकव्यञ्जनमध्ये इत्येत्वाभ्यासलोपौ। अन्तीर्धमेकस्वरेतीट्, गोमती धनवती। गावो धनानि च विद्यन्ते यस्या इति मन्तुः। दण्डिनी पद्मिनी इति। तदस्यास्तीति इन्, नदादिराकृतिगण इति। आदिशब्दोऽत्र प्रकारे, प्रकारश्च सादृश्यम्। तेनाकृत्या सादृश्येनोपलक्षितो यो गणस्सः आकृतिगणः। अतो येभ्यः शब्देभ्य ई-प्रत्ययो दृश्यते ते सर्वे नदादयः। यद्येवमिति। यद्याकृतिगणो नदादिरित्यर्थः। कथं नोपादेय इत्याह—सिद्धो हीत्यस्यायं प्रपञ्चार्थ इति नदादय एव अनेन प्रकारेण प्रपञ्च्यन्त इत्यर्थः। पूर्वकमिदं च सूत्रमपुराणमित्याहुः। शक्यत एव हि नदाञ्च्वाहिभ्यो गौरादित्वादीप्रत्ययो विधातुम्।

**ईकारे स्त्रीकृतेऽलोप्यः २।४।४८**[2]

लोपनीयो लोप्यः। शकिसहीति यः। युवतिरिति विभक्तिकार्ये एव कर्तव्ये नलोपस्य अलुप्तवद्भावो विज्ञायते। तेन लोपे सत्यप्यकारलोपः स्यात्। कुण्ड इति। ननु स्त्रियामित्यनुवृत्तेरत्र न भविष्यति। अस्त्येतत्, निरनुबन्धकग्रहणे न [3]सानुबन्धकस्य ग्रहणमिति तु वचनादादेशस्वापीकारस्य ग्रहणमाशङ्क्येत, पदे तुल्याधिकरणे इति ज्ञापकान्नैवमाशङ्किष्यत इति चेदेतच्छब्दविषयमेव एतद्[4] ज्ञापकं स्यात्। स्त्रियामिति कर्तव्ये कृतग्रहणं प्रकारान्तरेणापि कृत ईकारे यथा स्यादिति कुम्भकारी। अण्येकादितीकारः।

**स्वरो ह्रस्वो नपुंसके २।४।४९**[5]

लिङ्गस्य योऽन्त्यस्वर इति। वर्णान्त्यस्य विधिरिति वचनादैकारस्य इः, औकारस्य उः। कुतः, सन्ध्यक्षराणां ह्रस्वादेशे इदुताविति वचनात्। गौरिति। गोरौ घुटीत्यौत्वम्। कथं पद्मेभ्यः, एत्वस्य बहिरङ्गस्यासिद्धत्वात्। विभज्यत

---

१. नदाद्यञ्चिवाह्व्यन्स्यन्तृसखिनान्तेभ्य ई २।४।५० (दु० वृ०)
२. ईकारे स्त्रीकृते लोप्यः २।४।५१ (दु० वृ०)
३. सामान्यस्य ग्रहणमिति (भं०)
४. न्यूनपाठः (वा०)
५. २।४।५२ (दु० वृ०)

इति पृथक्क्रियते। पञ्चखट्व इति, पञ्चभिः खट्वाभिः क्रीत इति क्रीतार्थकस्येणो द्विगोर्लुगनपत्य इति लोकोपचाराल्लुक्। स्वरो ह्रस्व इति ह्रस्वः। निष्कौशाम्बिरिति। निष्क्रान्तः कौशाम्ब्याः इति तत्पुरुषः। निरो रेफस्य विसर्गः तस्यानव्ययविसृष्ट इति तु-शब्दात् षत्वम्। यत्तु नपुंसक इति सूत्रं तत्स्वरो ह्रस्व इत्यस्य विधेरसकलविषयत्वज्ञापनार्थम्। तेन गोर[1]प्रधानस्यानन्त्यस्य न ह्रस्व इति। सुगो गोकुलमित्यादौ न भवति। यथा चात्र तथेहापि। अतिश्रीः अतितन्त्रीः अतिलक्ष्मीः इति। ईयसो बहुव्रीहावपि। बहुश्रेयसी। ननु ह्रस्वेन सम्बन्धिशब्दत्वाद् दीर्घस्य स्थाने भवितव्यम्। दीर्घश्च स्वर एवेत्यर्थात्। स्वर इति लब्धमिति किं स्वरग्रहणेनेत्याह—स्वरग्रहणमित्यादि। विशिष्टस्यान्तदेशवर्तिनः स्वरस्य ह्रस्वो यथा स्यादिति स्वरग्रहणम्। तेन शोभना वाग्यस्य कुलस्य तत् सुवाक्कुलमित्यत्र स्वरो ह्रस्वो न भवति। वर्णान्त्यपरिभाषयेत्यादिना परमतमाशङ्क्य विसृष्टार्थमित्यनेन परिहरति।

कारकपादश्चतुर्थः।

## पञ्चमः पादः

**नाम्नां समासो युक्तार्थः २।५।१**

नाम्नः संज्ञा पूर्वाचार्याः लिङ्गस्य विभक्त्यन्तस्य कृतवन्त इति। तथा चाहुः—

अष्टौ यत्र प्रयुज्यन्ते नानार्थेषु विभक्तयः।
तन्नाम कवयः प्राहुः भेदे वचनलिङ्गयोः॥

इत्यामन्त्रणविभक्तिसहिताः प्रथमाद्याः यत्र अष्टौ विभक्तयो नानाविधेषु कर्त्रादिषु प्रयुज्यन्ते तल्लिङ्गवचनभेदे सति नामेत्याचार्याः व्यपदिशन्ति। लिङ्गवचनभेदः स्त्रीपुंनपुंसकानामेकवचनबहुवचनानां च नानात्वं तेन लिङ्गसङ्ख्यायुक्तं नामेत्यलिङ्गसंख्यानामव्ययानामनामत्वमेव। कर्मधारयसमासे [2]वृत्तिपदानामर्थान्तरानभिधायित्वमतोऽन्तरङ्गत्वाद् युक्तार्थ इत्ययं कर्मधारय

---

१. गोरप्रधानस्यान्त्यस्य ह्रस्व (भं०)
२. वृत्तिपदानामर्थान्तराभिधायित्वम् (वा०)

इति प्रदर्शयन्नाह—युक्ताश्चासावर्थः युक्तार्थः इति। [1]नाम्नां यो युक्तार्थ इत्येतेन युक्तार्थ इत्येतदपेक्ष्य नाम्नामितीयं षष्ठीति दर्शयति। समाससंज्ञा भवतीति ([2]सः युक्तः संसृष्टोऽर्थस्समाससंज्ञ इत्यर्थः। संज्ञानिबन्धनं च कार्यमर्थस्य न सम्भवतीति) सामर्थ्यात् तद्वाचिनो राजपुरुषादिशब्दस्येयं संज्ञा विज्ञायते। यद्येवम्, राज्ञः पुरुष इति वाक्यस्याप्यसौ प्राप्नोति। अस्ति ह्यत्रापि परस्परापेक्षत्वाद् युक्तार्थत्वम्। अत्र हि राजा पुरुषमपेक्षते ममायमिति पुरुषोऽपि राजानमस्याहमित्येवमाशङ्क्य परिहारमाह—एकरूपतामापन्नोऽर्थ इत्यादि। सत्यम्, अस्ति राज्ञः पुरुषो राजपुरुष इत्युभयत्रापि युक्तार्थत्वम्। तथापि प्रयुक्तार्थग्रहणसामर्थ्यात् तथाविधमिह युक्तार्थत्वमाश्रीयते। यत्र द्वयोर्नाम्नोरेकार्थत्वमुपजायते यथा राजपुरुष इत्यत्र। अत्र हि राजविशिष्टं पुरुषमभिधातुं प्रयुज्यमानो राजशब्दो राजावच्छिन्ने पुरुषे सङ्क्रान्त इति पुरुषपदार्थादविभक्तं तत्रैवोपलीनं स्वार्थमभिधत्ते, पुरुषशब्दोऽपि राजावच्छिन्नं निजमर्थमभिदधानः पुरुषमात्राद्विलक्षणार्थविषयसञ्जात इत्युभयोरपि पूर्वपदोत्तरपदयोर्विशिष्ट पुरुषाभिधायित्वादेकार्थत्वमुपजातम्। ननु विशिष्टपुरुषाभिधायित्वं राज्ञः पुरुष इत्यत्राप्यस्ति। एवं च सति वक्तव्यः तथाविधः कश्चिदेकार्थ्यकारितो विशेषो येन वाक्ये समाससंज्ञायाः प्रवृत्तिर्न भवेत्। एष उच्यते। इह राज्ञः पुरुष इति वाक्येऽपि संख्याविशेषावच्छिन्नो राजार्थः प्रतीयते। राजपुरुष इत्यत्र राजशब्दः पुरुषविशेषमभिधातुं पुरुषार्थे सङ्क्रान्त इति पांसूदकवदविभागमापन्नत्वात् कथमसौ संख्याविशेषावच्छिन्नं [3]भिन्नार्थमभिदध्यात्। तथा वाक्ये राजशब्दो विशेषणभावापन्नमुद्भूतसम्बन्धमर्थमभिधत्ते। तेन सम्बन्धाभिधायिनो ततो विभक्तिरुत्पद्यते। वाक्यादन्यत्र तु पृथगर्थतायाः निवृत्तत्वाधिष्ठानस्सम्बन्धो वृत्तावेवान्तर्भूत इति नोत्पद्यते विभक्तिः। एवं प्रकार एव च विभक्त्यनुत्पादः तत्स्था लोप्या इति वचनेन प्रत्ययलक्षणसंसिद्धये आख्यायते। अन्यथा त्वन्नयनमित्यादौ पदान्ते धुडामिति प्रथमात्वं न स्यात्। किं च वाक्ये पदार्थानां भिन्नत्वाद् भेदनिबन्धनं समुच्चयं द्योतयितुं च शब्दः प्रयुज्यते। राज्ञश्च पुरुषो राजपुरुषश्चेति वाक्यादन्यत्र तु भेदरूपताया निवृत्तेः। द्योत्योऽर्थो नास्तीति द्योतकोऽपि च शब्दो विनिवर्तते। तदेवं संख्याविशेषाप्रतीतिः विभक्तिः अश्रवणं च शब्दविनिवृत्तिरित्येव ऐकार्थ्यकारितो

---

१. नाम्नः (भं०)

२. न्यूनपाठः (भं०)

३. निजमर्थमभिदध्यात् (भं०)

विशेषः। एवंविधं चैकार्थ्यं राज्ञः पुरुष इत्यत्र वाक्ये सत्यपि युक्तार्थत्वे नोपजायत इति न तस्यास्ति समाससंज्ञायाः प्रसङ्गः। नीलोत्पलम्, राजपुरुष इत्यत्रार्थान्तरव्यावृत्त्या पूर्वपदोत्तरपदयोर्युक्तार्थत्वम्। तथा हि नीलो गुणो भ्रमरादिभ्यो व्यावृत्तः उत्पलमपि श्वेतादेर्गुणात्। राजापि च स्वान्तराद् व्यावृत्तः। पुरुषोऽपि स्वाम्यन्तरात्। नाम्नामिति बहुत्वनिर्देशेऽपि द्वे नाम्ने उदाहृते। बहुत्वस्यातन्त्रत्वात्। नाम्नामिति किम्, देवदत्तः पचति। तुल्याधिकरणत्वात्सति कर्मधारये विभक्तिलोपः स्यात्। वस्त्रं नीलमित्यादि। तत्र नील-राजाशब्दौ वस्त्रभार्याभ्यां सम्बद्धावुत्पलपुरुषाभ्यामयुक्तार्थाविति नैवं प्रकारो विषयः समाससंज्ञायाः। यत्राप्युपसर्जनं विशेषणमपेक्षते तत्राप्ययुक्तार्थत्वमेव। यथा—ऋद्धस्य राज्ञः पुरुष इति। देवदत्तस्य गुरुकुलमित्यत्र देवदत्तमपेक्षमाणस्यापि गुरोः कुलेन सहायुक्तार्थत्वेऽपि समासः। सम्बन्धिशब्दानां सापेक्षाणामपि सतां परपदेनेति निर्देशात्समासत्वप्रवृत्तेः राजपुरुषोऽभिरूप इत्यत्र तर्हि प्रधानस्य विशेषणमपेक्षमाणस्य कथं समासः, वर्गप्रथम इति समासश्रवणात्। अत्र हि प्रधानं प्रथमशब्दः पदान्त इति विशेषणमपेक्षते। असूर्यम्पश्या राजदाराः, अश्राद्धभोजीत्यादौ तु नञो दृशिभुजिभ्यां सम्बन्धात् सूर्यश्रद्धाभ्यामयुक्तार्थत्वेऽपि समासः। अकर्तरि च कारके इति कारकग्रहणे नैवंविधे विषये समासस्येष्टत्वात्। एतच्च तत्रैव वक्ष्यामः।

**तत्स्था लोप्या विभक्तयः २।५।२**

तद्ग्रहणेन समासः परामृश्यत इति पूर्वसूत्रे तस्यैव विधीयमानत्वात् प्राधान्यम्। ननु समासे ऐकार्थ्यापत्तेर्विभक्तयो न सन्तीति कथं तत् परामर्शे सति सूत्रार्थसङ्गतिः स्यादित्याशङ्क्याह—समासार्थं च वाक्यमित्यादि। च शब्दोऽवधारणे। स च भिन्नक्रमः वाक्यशब्दादनन्तरं बोद्धव्यः। तेनायमत्रार्थः। नेह समासशब्देन समासः उच्यते वचनवैयर्थ्यप्रसङ्गात्, किन्तर्हि, समासार्थं यद्वाक्यं राज्ञः पुरुष इत्यादि यत्र विभक्तयश्श्रूयन्ते, तदेवोच्यते भवति च तादर्थ्यात् ताच्छब्द्यम्, क्व, यथेत्याह—तेनेत्यादि। समासार्थस्य वाक्यस्य परामर्शार्थेन तद्ग्रहणेन हेतुनेत्यर्थः। यद्येवम्, यत् समासार्थं वाक्यं न भवति। वसिष्ठस्यापत्यं वासिष्ठ इत्यादि। तत्र विभक्तेः लोपो न प्राप्नोति। तत्रेति कर्तव्ये स्थाग्रहणात् भविष्यति। अथ लोप्या इत्यर्हप्रत्ययनिर्देशः किमर्थः, न लोप इत्येवोच्यते। भावघञन्तस्य लोपशब्दस्य विभक्त इत्यनेनान्वयात्। लुप्यन्त इति लोपा इति कर्मघञन्तोऽसौ विज्ञास्यते तदर्थार्थकोऽर्हप्रत्ययनिर्देश इत्याह—लोप्या इत्यर्हप्रत्ययनिर्देशादित्यादि। अन्यस्यापीति। अविभक्ति-

स्वरूपस्य प्रयोग¹वशेन, न तु स्वमनीषिकयेत्यर्थः। पूरणप्रत्ययान्त इति। संख्यायाः पूरण इत्यादिना यो विहितः पूरणप्रत्ययस्तदर्थ इत्यर्थः। यद्येवम्, जनार्दनस्त्वात्मचतुर्थ इति। कथमयं प्रयोग इत्याह--जनार्दन इत्यादि। आत्मचतुर्थ इति बहुव्रीहावात्मशब्दोऽत्र प्रथमान्तः समस्यते। न तृतीयान्त इति भावः। दिङ्मात्रं चैतत् प्रदर्शितम्। तथा चान्यत्रापि तृतीया न लुप्यते। ओजस्, सहस्, अम्भस्, तपस्, अञ्जस्, इत्येतेभ्य परो यदा भवति तेनौजसाकृतमित्यादि सिद्धम्। एवं स्तोकान्तिकदूरार्थेभ्यः पञ्चमी न लुप्यते। स्तोकान्मुक्तः, अल्पान्मुक्तः, अन्तिकान्मुक्तः अभ्यासान्मुक्तः, दूरान्मुक्तः, विप्रकृष्टान्मुक्तः। आक्रोशे षष्ठी न लुप्यते। चौरस्य कुलम्, पुत्रे तु वा, दासीपुत्रः, दास्याः पुत्रः। ऋदन्तेभ्यो विद्यायोनिसम्बन्धवाचिभ्यो अपि लोपः। तस्याः होतुः पुत्रः, होतुरन्तेवासी, पितुः पुत्रः, पितुः अन्तेवासी। विद्यायोनिसम्बन्धवाचिन्येवोत्तरपदे लोपस्मरणादिह लोपो भवत्येव। ²होतृवचनम्, पितृगृहमिति। स्वसृपत्योस्तु वा। पितृष्वसा, पितुः ष्वसा, षत्वविकल्पो लुगभावपक्षे स्मर्यते। तेन पितुः स्वसेत्यपि भवति। एवं मातृस्वसा, मातुः स्वसा मातृष्वसेत्यपि मन्तव्यम्। दुहितृपतिः, दुहितुः पतिः। शयवासवासिषु सप्तमी वा लुप्यते। खशयः खे शयः, ग्रामवासः ग्रामे वासः। ग्रामवासी ग्रामे वासी। कालात्त्वत्र नित्यं लोपः। पूर्वाह्णे शयः। एवमात्मनेपदम्, परस्मैपदम्, मध्ये गुरुः, अन्ते गुरुः, स्तम्बेरमः, कर्णेजपः, सरसिजम्, प्रावृषिजः, शरदिजः, कालेजः, दिविजः, वाचो युक्तिरित्यादयः। समासविषयेऽप्यकृतविभक्तिलोपो मन्तव्यः।

**प्रकृतिश्च स्वरान्तस्य २।५।३**

अर्हप्रत्ययरहितं लोपग्रहणं चेत्यनुवर्तत इत्यपेक्षते। विभक्त्यदर्शने सति स्वरान्तस्य प्रकृतिरित्येतावान्सूत्रार्थः। तत्किमत्रार्हप्रत्ययापेक्षयेति भावः। सत्यां विभक्तौ यत्कार्यम् उक्तम् तदसत्यां सत्यां तस्यां कथं प्राप्नुयादिति यो मन्यते तं प्रत्याह—प्रत्ययलक्षणेनेत्यादिविभक्तिनिमित्तमिति वाक्यकाले श्रूयमाणायाः विभक्तिर्लुप्ता तद्धेतुकमित्यर्थः नान्यदिति। अविभक्तिनिमित्तं कुत इत्याह--स्वरान्तस्येत्यादि। यद्यविभक्तिनिमित्तमपि कार्यं प्रकृतिभावः बध्नीयात्। स्वरान्तस्येति किं, दृषदि लेखः दृषल्लेखः। दृषच्छब्दस्य यदि

१. शब्देन (भ०)
२. होतृवनम् (भ०)

प्रकृत्यभावस्स्यात् । ततः पदान्ते धुडामिति प्रथमो न स्यात् । यद्येवम्, पन्थानं गतः । पथि गत इत्यादौ व्यञ्जने चैषा निरिति न लोपो न प्राप्नोति । तद्विधावेषामिति बहुत्वनिर्देशात् भविष्यति ।

**व्यञ्जनान्तस्य यत्सुभोः २।५।४**

यदिति कार्यमात्रं निर्दिश्यते तद्विधीयमानं व्यञ्जनान्तलिङ्गं विधिभाक् । सुभोरिति कार्यमात्रस्य निमित्तभावेन विशेषणम् । विभक्तिलोप इति सत्-सप्तमी । यद्येवम्, अप्राप्तविध्यर्थमिति कार्याणां साङ्कर्येण प्रवृत्तिस्स्यात् । ततश्चानुडुहो दत्वमुक्तम् राजशब्दस्यापि भवेत्, नैष दोषः, प्रत्यासत्तेर्यस्य यत्कार्यमुक्तं तस्यैव तद् विज्ञास्यते । अतः अनुषङ्गलोपो दत्वं च भवतीति । ननु दत्वं विरामव्यञ्जनादिविषये उच्यमानमर्थशब्दे परतो प्राप्तमस्माद् वचनाद् भवतीति युक्तं वर्णयितुमनुषङ्गलोपस्सामान्यस्वरनिमित्तकोऽत्र कथं न प्राप्नुयात्, अस्त्येतत्, एवं तु मन्यते, तत्रानुषङ्गलोपस्यावकाशः यत्र समासो नास्ति । विदुषः विद्वद्भ्यामित्यस्य विधेरवकाशः । राजार्थ इति । विद्वदर्थ इत्यत्र ([1]त्वनुषङ्गलोपः तेनास्त्वनेन) वेति परत्वादनेनैव न्याय्यः, तथा च द्युगत इत्यादि उदाहृतमन्यथा त्वत्रापि सामान्यव्यञ्जननिमित्तकं दिव उत्वमस्तीति किमनेनोदाहृतेन । षषो डत्वमिति [2]षष इत्यनुकरणादेकवचनम् । अथ युष्माभिः कृतम् युष्मत्कृतमित्यादावात्वमपि कस्मान्न भवति । तदपि ह्यात्वं व्यञ्जनादावित्यनेन सुभोरुक्तमेव न भवति । तद्विधौ श्रूयमाणव्यञ्जनादि-विभक्तिप्रतिपत्त्यर्थस्य विभक्तिग्रहणस्यानुवृत्तिवैयर्थ्यप्रसङ्गात् । व्यञ्जनान्त-स्येति किम्, स्वरान्तस्य मा भूत् । चौरेभ्यः भयम्, चौरभयम्, रेफाकारस्य धुट्येत्वमुक्तं न भवति । ([3]स्वरयवरा परे यस्मात्) स्वरयवरपर इत्येत्वानु-करणे तु ज्ञापके आश्रीयमाणे गुर्वी प्रतिपत्तिस्स्यात् । सुभोर्युगपद् यदुक्तं तदिह विधीयत इति चकारस्यानुवर्तमानस्य यौगपद्यद्योतनफलत्वादिति भावः । यत्तु केवले भकारे तन्नेति, विधीयत इत्यपेक्षते । केवले सुकार इति तु नोक्तम्, यतो न तत्र केवले सुकारे परे किञ्चित् केनचिद्वचनेन कार्यमुक्तं यद्वार्येत । भकारे परे दत्वमुक्तं न भवतीति भकार एवोक्तम्, न तु सुकारेऽपीत्यर्थः । स्भोरिति न कृतम्, वैचित्र्यादिति । वृत्तबन्ध ([4]लक्षणस्य वैचित्र्यस्य दर्शनाय

---

१. तु तेनानुषङ्गलोपस्त्वनेन (मं०)

२. षष् (मं०)

३. स्वरयवरेभ्यः परतः (मं०)

४. लक्षणं प्रदर्शयितुं सुभोरिति (मं०)

स्भोरिति न) कृतमिति भावः। ननु स्भोरिति कृते प्रथमैकवचनविषयाप्याशङ्का स्यात् ततश्च तत्रोक्तस्य कार्यस्य समासे विधानाददः पुत्रम् इत्यत्र सावौ सि लोपश्चेत्यौत्वं स्यात्। नैतत्, औत्वस्य योगपद्येनानभिधानात्।

**पदे तुल्याधिकरणे विज्ञेयः कर्मधारयः २।५।५**

तुल उन्माने चुरादित्वादिन्, उपधानं गुणाभावः। संज्ञापूर्वको विधिरनित्य इति वचनात्। तथा च "प्रासादास्त्वां तुलयितुम्" इति महाकविप्रयोगः। [1]तत्र तुल्यते अनयेति ([2]विगृह्यतीर्विचिन्तीति) चकारस्यानुक्तसमुच्चयार्थत्वादङ् कारितलोपः। स्त्रियामादाप्, तुलया सम्मितं तुल्यम्, नावस्तार्य इत्यादिना ([3]य इवर्णलोप) विज्ञातव्यो विज्ञेयः स्वराद् यः आत्खनोरी चेतीत्वम्। गुणः, यत्र समासे स्वे पदे इत्यादि। समासे वाक्ये पदद्वयासम्भवात्, वाक्यावस्थापरिदृष्टं रूपमाश्रित्यैवमुक्तम्। तुल्याधिकरण इत्यस्यार्थं विवृण्वन् आह—तुल्याश्रय इति तुल्य आश्रयो ययोः पदयोस्ते तथोक्ते एतदेव व्यनक्ति, एकद्रव्यविषय इत्येकं समानमभिन्नद्रव्यं विषयो ययोरिति विग्रहः। नीलोत्पलमित्यत्र नीलशब्देन यदेव नीलगुणावच्छिन्नं द्रव्यमभिधीयत इति तदेवोत्पलजात्यवच्छिन्नमुत्पलशब्देनापि इत्यस्ति पदयोस्तुल्याधिकरणत्वम्। एवं स्नातानुलिप्त इति तुल्याधिकरणत्वादेवमादिसर्वं कर्मधारयसंज्ञमिति भावः। शब्दाभावादिति। प्रयुक्तानां शब्दानामिदमन्वाख्यायकं नाप्रयुक्तानामिति भावः। तथा च किमो निन्दायामेव समासः, किं राजा, किं सखेति। प्रश्ने तु न भवति को राजा कश्मीरेष्विति।

**संख्यापूर्वो द्विगुरिति २।५।६**

संख्या पूर्वा यस्येति अवयवावयविभावविवक्षायां षष्ठी निर्देशः। अवध्यवधिमद्भावविवक्षायां दिग्योगलक्षणा पञ्चमी स्यात्। सा ह्यवधित्वेनापेक्षायोगे सति स्मर्यते। स्वरो ह्रस्व इति पूर्वाशब्दस्य ह्रस्वः, संख्यापूर्वस्समास इति प्रकृतित्वात् कर्मधारयः, तद्धितानां येऽर्था इति तेभ्यो लौकिकेभ्यश्शब्देभ्यो हिताः लौकिकशब्दानुसारेण प्रवृत्तिमन्तो ये [4]अणादयः प्रत्ययाः ते तद्धिताः इति व्यपदिश्यन्ते, तेषां येऽर्थाः अपत्यादयस्तेष्वर्थेषु विषयभूतेष्वयं द्विगुः

---

१. ततस्तोल्यते (भं०)
२. विगृह्यतीषिचिन्तीति (वा०)
३. इवर्णावर्णलोपः (भं०)
४. उणादयः (वा०)

स्मर्यते नत्वभिधेयेष्वन्यथा पञ्चानामिति ([1]रित्यादाविण्) प्रत्ययो न स्यात् । अपत्यार्थस्य द्विगुनैवोक्तत्वात् । तथा च समाहारेऽर्थे इति भिन्नदेशानामेकस्यां क्रियायां गुणी ([2]वा बुद्ध्या) समीपीकरणं समाहारः ([3]उत्तरपदे चेति परस्मिन्पद इत्यर्थः । संस्कृतेऽर्थे एवमादेरणिष्यत इति अणिति । एवमादेरित्यादिशब्दस्यार्थन्तरोपसङ्ग्रहार्थत्वादिति भावः ।) समाहारे द्विगुरुच्यत इति शेषः । ननु समाहारः समूह उच्यते समूहश्च तद्धितार्थः तथा च तद्धितार्थत्वादेव समाहारेऽपि द्विगुस्सिद्ध इति किं समाहारेऽर्थे इत्यनेनोक्तेन, उच्यते--पञ्चानां कुमारीणां समूहः पञ्चकुमारीत्यत्र पृथक् समाहारशब्दाभिधानसामर्थ्यात् समूहार्थविहितस्याणोऽनुत्पत्तिरेवमाख्याता भवति । समूहार्थस्य [4]द्विगुनैव अभिधानात्, ([5]नन्नूत्पद्यतामणप्रत्ययः तस्य च) द्विगोर्लुगनपत्य इति लोकोपचाराल्लुग् भविष्यति, कामं तर्ह्यनेनैव हेतुना प्रत्ययस्याणो [6]लुकि कृते लुक्तद्धितलुकीति स्त्रीप्रत्ययोऽपि निवर्तते, तस्मादणोऽ[7]नुत्पत्तिरेव ज्यायसी सा च पृथक् समाहारशब्दाभिधाने सति सिध्यतीति । तथा समाहारेऽर्थे इति उक्तम् । पञ्चकुमारीत्यत्र स्वरो ह्रस्वः । पञ्चनदम्, पञ्चगवमिति । द्विगुत्वात् तथा द्विगोरिति वचनात् नपुंसकत्वम् । पञ्चगवमित्ययं द्विगुरिति । सति द्विगुव्यपदेशो द्विगोरुत्तरसूत्रेण तत्पुरुषत्वात् तत्पुरुष उच्यमानो गोशब्दादकारस्समासान्तस्सिद्धो भवतीति । इदं चाप्युत्तरपदे द्विगोरुदाहरणम् । पञ्चनावप्रिय इति पञ्चनावः प्रियः अस्येति पञ्चनौशब्दस्य द्विगुत्वादकारस्समासान्तः । नौशब्दाद्धिसमासान्तो द्विगावेव स्मर्यते । नावो द्विगुरिति वचनात् शिष्टस्तु बहुव्रीहिरिति पञ्चगवधन इत्ययं समूह[8] इति तद्धितार्थादिविषयात् । अन्यस्तु संख्यापूर्वोऽपि न द्विगुः पञ्चाम्राः इत्यादि ।

**विभक्तयो द्वितीयाद्या नाम्ना परपदेन तु समस्यन्ते समासो हि ज्ञेयस्तत्पुरुषस्य च २।५।७**

समस्यन्त इति द्वे पदे समाससंज्ञा । तत्पुरुष इति संज्ञा । शिष्टं

---

१. इन् (भं०)
२. गुणेनाबुद्धा (भं०)
३. न्यूनपाठः (भं०)
४. द्विगोरेव (भं०)
५. अनूत्पद्यत इति अणप्रत्ययस्य (भं०)
६. लोपे (भं०)
७. अनुवृत्तिरेव (भं०)
८. समुदायः (वा०)

समाससंज्ञा[1] विशेषणम्। एवमुत्तरत्र आदौ भव आद्य इति यदुगवादित इति योगविभागाद् यत्। द्वितीयादिविभक्त्यन्ताश्शब्दा इति, केवलानां द्वितीयादिविभक्तीनामसम्भवात् तदन्तत्वं लभ्यते। परपदेन नाम्नेति परपदेत्यादि पदमपि सम्भवतीति तन्निरासाय नाम्नेति विशेषणमुपादीयते। नाम्नामित्यनुवृत्तेः तन्निरासः सिद्ध इति चेत्, एवं तर्ह्यनुवृत्तिरबुधबोधनाय नामग्रहणेनाख्यायते। धर्माश्रित इति। श्रयतेस्म इति। श्रयतेः गत्यर्थाकर्मकेति कर्तरि क्तः, गत्यर्थो हि श्रयतिः तथा च श्रयतीत्युक्ते प्राप्नोतीति गम्यते. प्राप्तिश्च गतिरुच्यते। महाकष्टं श्रितः, परं श्रित इत्यत्र तु समासो न भवत्यनभिधानात्। सापेक्षत्वाच्चेहापि न भवति। महत्कष्टं श्रितः महाकष्टश्रित इति महाकष्टशब्दस्य श्रितशब्देन सह समासे कृते भवति। यूपाय दारु यूपदार्विति तादर्थ्ये एषा चतुर्थी। एवं ब्राह्मणायेदं, ब्राह्मणार्थं पयः। एवं ब्राह्मणार्थः सूपः। ब्राह्मणार्था समित्। नित्यः समासोऽत्रार्थशब्देन स्मर्यते न तु वाक्यम्। कुतः, चतुर्थ्या अर्थशब्दस्य च तुल्यार्थत्वात् युगपत्प्रयोगासम्भवात्। यच्चेदं पयः प्रभृत्यनुप्रयुज्यमानं तद्वशादभिधेयव्यवस्थायां सत्यां तद्वशेनैव लिङ्गसम्बन्धात् सर्वलिङ्गता बोद्धव्या। तत्पुरुषत्वाद्धि परवल्ललिङ्गता प्राप्ता, वक्ष्यति हि सनपुंसकलिङ्गः स्यादित्यत्र द्वन्द्वस्य तत्पुरुषस्य च यत् [2]परं लिङ्गं तदिष्यत इति। अक्षशौण्ड इति। समासान्तभूतां प्रसक्तिक्रियामपेक्ष्याक्षेष्वित्यधिकरणे सप्तमी। अक्ष्णा काणः, रन्धनाय स्थाली, प्रासादात्पतित इत्यादौ समासो न भवत्यनभिधानात्। एवं पूरणप्रत्ययान्तेनापि षष्ठ्यन्तं न समस्यते। छात्राणां पञ्चमः, समुदायसमुदायिभावलक्षणे सम्बन्धे एषा षष्ठी। गुणेनापि बलाकायाश्शौक्ल्यम्। सति त्वभिधाने क्वचित् तेनापि समासः। वीणाशब्दः, पुत्रस्पर्शः, कपित्थरसः, कन्यारूपम्, चन्दनगन्धः, प्रतिपत्तिलाघवम्, यत्नगौरवम्, गोविंशतिः, खारीशतमित्यादौ। तथा शन्तृङा समानाधिकरणेन च, चौरस्य द्विषन्, राज्ञः पाटलिपुत्रकस्येति। एवं मतिबुद्धिपूजार्थेभ्यो यः क्तप्रत्ययः तदन्तेनापि। राज्ञां मतः, राज्ञां बुद्धः, राज्ञां पूजितः। अधिकरणक्तान्तेनापि। इदमेषामासितम्। कर्तृषष्ठ्यन्तमकेन। भवतः आसिका। कर्तरि यौ तृजकौ ताभ्यामपि। भुवनस्य भोक्ता, सक्तूनां पायकः। विप्रस्योच्चैरित्यादौ त्वसमासः। ओदनाद् व्यपेक्षायां सत्यां [3]सापेक्षत्वात्, तव्य-

१. २।५।८ (दु० वृ०)

२. परस्य (भं०)

३. समासापेक्षित्वात् (भं०)

प्रत्ययेन तु वा। विप्रेण कर्तव्यम्, विप्रकर्तव्यम्, प्राप्तजीविकः, इति। प्राप्त इति, गत्यर्थाकर्मकेति कर्तरि क्तः। अतिखट्व इति। अत्रापि स्वरो ह्रस्व इति ह्रस्वः। दिङ्मात्रं चैतदुदाहृतम्, अन्यदप्येवंजातीयं उदाहार्यम्। आपन्नो जीविकामापन्नजीविकः। अवक्रुष्टं कोकिलया अवकोकिलम्, परिग्लानोऽध्ययनाय पर्यध्ययनः। राजा दन्तानां राजदन्त इत्यादि। न च जीविकां प्राप्त इत्यादिविग्रहे कृते परपदस्य पूर्वनिपातश्शक्यो विज्ञातुम्, लक्षणाभावात्। द्वितीयाद्यभावेऽपि क्वचिद् दृश्यते समास इति। तु शब्दादिति विशेषः। स्वयं [1]धौताविति। स्वयमित्यस्याव्ययस्य क्तान्तेन सह तत्पुरुषस्समर्यते। समासत्वाच्चैकपद्यं भवति। [2]धौताविति धावु गतिशुद्ध्योः, क्तप्रत्ययः। नडीङ्श्वीतीडभावः। च्छ्वोशूठो पञ्चमे चेत्यूठ्, अवर्णादूठो वृद्धिरित्यौकारः। मासिभुक्तमिति। मासीत्यस्याव्ययस्याह शब्दपर्यायस्य क्तान्तेनैव तत्पुरुषः। एवं तत्रेत्यस्यापि। तत्र भुक्तम्, एवं खाट्कृत्य, प्रकृत्यर्थमूरीकृत्य, न ब्राह्मणः अब्राह्मणः, न एकम् अनेकम्, इत्यादयः तत्पुरुषाः मन्तव्याः। तत्पुरुष इति पूर्वाचार्यसंज्ञेयमुत्तरपदार्थप्राधान्यं तत्पुरुषस्य द्योतयति। तथा च सर्वस्मै इत्यादावुपसर्जनलक्षणस्य प्रतिषेधस्याप्रवृत्तेः स्मायादयस्सिद्धाः भवन्ति (पूर्व-[3]पदार्थस्तु तत्पुरुषे क्वचिदेव प्रधानम्।) यथा निष्कौशाम्बिरित्यादौ।

**स्यातां यदि पदे द्वे तु यदि वा स्युर्बहून्यपि तान्यन्यस्य**
**पदस्यार्थे बहुव्रीहिः [4]२।५।८**

स्यातां स्युरित्यस्तेरादेरित्यकारलोपः। समास इति वर्तते। समस्यन्त इति च पदे द्वे इत्यत्र च समस्यन्त इत्येतद्वचनपरिणामेन सम्बध्यते। तदेतदाह—यत्र समास इत्यादि। एकीक्रियन्ते एकार्थमापद्यन्ते अन्यस्य पदार्थे वर्तमानानीति स्वार्थं विशेषणीकृत्यान्यपदार्थमभिधातुं प्रवृत्तानीत्यर्थः। दण्डैश्च दण्डैश्चेत्यादि करणे एषा तृतीया। समासान्तगते इतीकारः समासान्त इति कर्मव्यतिहार इति शेषः। स हि कर्मव्यतिहारे यो बहुव्रीहिः तत्र स्मर्यते। अव्ययञ्चैतदिति। दण्डादण्डि इत्यादीनां प्रयोगे विभक्त्यन्तस्य लिङ्गस्य चादर्शनादव्ययत्वम्। सपुत्र इत्यादि। सपरस्वराया इति ज्ञापकात् सभावः।

---

१. (धातोरिति) अशुद्धपाठः (भं०)
२. धाताविति (भं०)
३. क्वचिद्विकल्पस्तत्पुरुषः (भं०)
४. २।५।६ (दु० वृ०)

उपदशा इति । [1]सति समासान्त इति समासान्ते सति नस्य तु क्वचिदिति न-लोपः । इवर्णावर्णलोपः, हलैश्च मुसलैश्च यद् युद्धं, वृष्टे देवे गतो यः, पञ्चभिः भुक्तं यस्य, पञ्च भुक्तवन्तो यस्येत्यादौ तु बहुव्रीहिर्न भवति, अन-भिधानात् । वार्थेऽपि बहुव्रीहिः वक्तव्यः इति । ([2]अन्यपदार्थे उच्यमाने) वार्थेन प्राप्नोतीति भावः । एवं द्वित्रा इति द्वौ वा त्रयो वेति विग्रहः । न तु विकल्प इति । यदि हि विकल्पो वार्थः स्यात् ततो यदा द्वौ भवतः ततः द्वित्राः इति बहु-वचनं न भवेत् । तस्मात्संशयो वार्थः । स चानियतां संख्यां विमृशतीति विरुद्धा-नेकधर्मविषये विमर्शे बहुत्वसद्भावाद् बहुवचनमुपपद्यते । ननु चेत्यादि । चोद्यम्, सत्यमित्यादिना परिहरति—निपातत्वेऽप्यस्तिशब्दस्य नामत्वोप-चारात् नामत्वमुपचारस्य तन्निमित्तान्निपातादस्ति शब्दाद्विभक्त्युत्पत्तिः ।

**विदिक्तथा [3]२।५।६**

विशब्दाद् दिशेः ऋत्विगादिसूत्रेण कर्मणि क्विप्, चवर्गदृगिति गत्वम्, लुप्तसप्तम्येकवचनमिति । आदिलोप इत्यादिना यो दिग्वाचिनां समासः इति पूर्वादिशब्दानां तेषामेव हि दिग्वाच्या भवति । नान्येषामिति भावः । दक्षिण-पूर्वेत्यादि । स्वरो ह्रस्व इत्युत्तरपदस्य कृते ह्रस्वे पुनर्विदिशो वाच्यत्वादाप्-प्रत्ययः । योगविभागादिति अतुल्याधिकरणत्वात् पुंवद्भावो न सिध्यतीत्येव-मुक्तम् । ऐन्द्रयाश्चेत्यादि । इन्द्रस्येयम्, कुबेरस्येयमिति तस्येदमित्यण्, वृद्धि-रादौ सणीत्यादिवृद्धिः । अण्येकादितीकारः । अनभिधानादिति । ऐन्द्रीप्रभृतीनां यौगिकानां शब्दानां कृतसमासानां प्रयोगादर्शनादित्यर्थः । विदिशोऽन्यपदार्थ-त्वात् पूर्वेण सिद्धिं मन्यमानः पूर्वपक्षयति । नन्वित्यादि । उच्यत इत्यादिना [4]परिहरति । अयमर्थः दिशां वेत्यनेन यत्सार्वनामिकं कार्यं विकल्पेन बहुव्रीहा-विष्यते तदेतत् सूत्रविहित एव दिगभिधेये बहुव्रीहौ यथा स्यात् । पूर्वसूत्रविहिते मा भूत् । किं च स्यादिति । यदि पूर्वसूत्रविहितेऽपि स्यात् । किं दूषणं स्या-दित्यर्थः । [5]पूर्वैर्वेत्यादिना तद् दूषणमाह—विकल्पेनेत्यादि । ततश्च सर्व-नाम्नस्तु समव इत्यादिना ह्रस्वमुकारागमयोः विहितयोः । पक्षे पूर्वोत्तरस्यै

---

१. न्यूनपाठः (मं०)
२. अन्यपदार्थः प्रयुज्यमानः (मं०)
३. २।५।१० (दु० वृ०)
४. परिहारमाह (मं०)
५. पूर्वेणेत्यादिना (मं०)

सन्धायै इत्यपि रूपं भवेत्। एतद् दूषणपरिहाराय दिशां वेत्यत्र विदिग्वाच्यस्य बहुव्रीहेः परिग्रहार्थो योगोऽयमारभ्यते।

**द्वन्द्वः समुच्चयो नाम्नो बहूनां वापि यो भवेत्** [1]२।५।१०

समुच्चयनं समुच्चयः। स्वरान्तत्वादल्, यत्र समास इति वस्तु-व्याख्यान-मेतत्। अयं त्वत्र यथा - श्रुतपदव्याख्याक्रमः। द्वयोः नाम्नोः बहूनां वा नाम्नां यः समुच्चयः सः द्वन्द्वसंज्ञ इति समुच्चयार्थवृत्तिश्च समास एवात्र समुच्चयशब्देनोक्तो यथा विकल्पार्थवृत्तिः वा शब्दो विकल्पशब्देन तेन समु-च्चयार्थवृत्तिः समासो द्वन्द्वसंज्ञक इत्यर्थः। तं चेति द्वन्द्वम्। कः पुनरितरेतर-योगः, को वा समाहारः इत्याह—यत्रेत्यादि। तेनोद्भूतावयवभेदो निर्देश इतरेतरयोग इति व्यवह्रियते यथा—देवदत्तयज्ञदत्तौ, धवखदिरपलाशाः इति। अतएवावयवभेदे उद्भूते सति द्वयोर्द्विवचनेन निर्देशे बहूनामपि बहुवचनेन। तिरोहितावयवभेदस्तु समुदीयप्रधानो निर्देशः समाहारः। यथा—बदरामलक-मिति। अतएव समुदायप्राधान्यादेकवचनेन निर्देशः। प्राणितूर्यसेनाङ्गाना-मित्यङ्गशब्दः प्रत्येकमभिसम्बध्यते। समाहार एवेति नत्वितरेतरयोगे। रथिकाश्वरोहमिति। रथिकाश्च ([2]अश्वाश्च आरोहाश्च) इति बहुत्वे सेना-ङ्गानां द्वन्द्वः समाहारे स्मर्यते। अन्यत्र रथिकाश्वरोहावित्येव भवति। जाति-वाचिनामप्राणिनां चेति सर्वत्र द्वन्द्वः समाहारे एव स्मर्यत [3]इत्यनुषज्यते बद-रामलकमिति बहुत्वे त्वत्र [4]निर्देशः। जातिप्राधान्यविवक्षायां च जातिवाचिनां च समाहारे द्वन्द्वः। व्यक्तिप्राधान्ये तु विवक्षिते बदरामलकानि तिष्ठन्तीत्येव भवतीति। क्षुद्रजन्तूनां चेति। अपचितपरिमाणाः जन्तवः क्षुद्रजन्तव इत्यु-च्यते। यूकालिक्षम्, दंशमशकमित्यादि। बहुत्वे त्वत्र द्वन्द्वः। शाश्वतिक इति सर्वकालभावी। वृक्षमृगेत्यादि। वृक्षादिवाचिनो ये तेषामुभयत्र द्वन्द्वः। मृगाणां तु पशूनामपि सतां पृथगुपादानं परस्परेण द्वन्द्वनिवृत्त्यर्थम्। प्लक्षन्यग्रोध-मित्यादि। [5]इह यत्रेतरेतरयोगे बहुवचनं श्रूयते तत्र बहुवचनान्तयोरेव विग्रहे सति समाहारद्वन्द्वो मन्तव्यः। अन्यत्र त्वेकवचनान्तयोः तथा च फलसेना-वनस्पतिमृगशकुनिक्षुद्रजन्तुधान्यतृणानां बहुवचनान्तानामेव समाहारे द्वन्द्वं —

१. २।५।११ (दु० वृ०)
२. अश्वारोहाश्चेति (मं०)
३. इत्यत्र युज्यते (मं०)
४. द्वन्द्वः (मं०)
५. आह (मं०)

स्मरन्ति । लक्ष्यानुसारेणेति प्रयोगानुस्मृत्येत्यर्थः । तथा च चरणानां द्वन्द्वोऽनुवादे गम्यमाने समाहार एव । चरणशब्दः शाखानिमित्तकः पुरुषेषु वर्तते । प्रतिष्ठप्रमाणान्तरावगतस्यार्थस्य शब्देन सङ्कीर्तनमनुवादः । उदगात्कठकालापं प्रत्यष्ठात्कठकौथुमम् । उदयप्रतिष्ठे प्रमाणान्तरादवगते शब्देनात्र पुनरनूद्यते । अत्र [1]चैकत्वमद्यतनीयपरोक्षयोः स्थाणोः प्रयोगे स्मर्यते । तेनेह न भवति, अनिर्दिष्टाः कठकालापाः, [2]उद्यन्ति कठकालापाः इति । एवमनिरवसितेषु शूद्रवाचिनां शब्दानां द्वन्द्वसमाहार एव, निरवसनं बहिष्करणम्, कुतः, पात्रात् । ([3]यैर्भुक्ते सति पात्रं संस्कारेणापि न शुद्ध्यति ते निरवसिताः) रजकतन्तुवायकम् । निरवसितानां त्वितरेतरयोगे चण्डालमृतपाः । एवं गवाश्वम्, मांसशोणितम्, दासीदासम् इत्यादिद्वन्द्व-समाहार एव । दासीदासमित्यत्र त्वेकशेषः पुंसो न भवति, गवाश्वादिगणे तथाविधस्यैव [4]पाठक्रमात् । गवाश्वमिति गोशब्दस्य वक्तव्यादवादेशोऽकारान्तः । तत्पक्षे च समाहारवृत्तित्वम् स्मर्यते इत्यन्यत्र गोऽश्वम्, गोऽश्वावित्येव भवति । दधिपय आदीनाम् त्वितरेतरयोग एव । दधिपयसी, सर्पिर्मधुनी, मधुसर्पिषी, [5]उलूखलमुसली, वाङ्मनसी इत्यादीनाम्, अन्येषां तु केषाञ्चिदुभयत्राद्रव्यवृत्तयो ये विप्रतिषिद्धार्थवाचिनः ([6]शीतोष्णे शीतोष्णम्) सुखदुःखम्, सुखदुःखे । अद्रव्यवृत्तय इति किम्, शीतोष्णे उदके, सुखदुःखाविमौ देशौ । एवमादि यथाप्रयोगमुन्नेयम् ।

**अल्पस्वरतरं तत्र पूर्वम्** [7]**२।५।११**

पूर्वं प्रयोक्तव्यमिति । प्रयुक्तिक्रियाविशेषणत्वात् । पूर्वमिति द्वितीयान्तं पूर्वं प्रयोक्तव्यमित्येतेन प्रयोगनियमार्थमिदमिति दर्शयति । तत्र पूर्वप्रयोगो नियम्यमानः अल्पस्वरतरं [8]पूर्वनियमभाक् । तत्रेति विषयनिर्देशः । प्रमादजाः प्रयोगा इति । पूर्वनिपातान्यथात्वं प्रमादः । ततो जातः प्रमादजः एतदुक्तं भवति । सर्वत्र द्वन्द्वे अल्पस्वरं पूर्वम् प्रयोक्तव्यम्, यत्र तु क्वचित्प्रमादः तत्र

१. परयोः (वा०)
२. न्यूनपाठः (भं०)
३. न्यूनपाठः (भं०)
४. पाठात् (भं०)
५. उलूखलमुसले (भं०)
६. शीतोष्णम्, शीतोष्णे (शुद्धपाठः)
७. २।५।१२ (दु० वृ०)
८. नाम (वा०)

लक्षणहेत्वोरिति निर्देशो हेतुः । लघ्वक्षरस्येति ह्रस्वसंज्ञकवर्णयुक्तस्य । कुशकाशमिति । कुशाश्च काशाश्चेति विग्रहः । यद्येवम्, व्रीहियवादावित्यादिना सिध्यति, जायापत्योरिति निर्देशात् सेत्स्यति । तरग्रहणं द्वित्वविषयोपसङ्ग्रहार्थम् । तेन बहूनामनियमः । शङ्खदुन्दुभिवीणाः, वीणाशङ्खदुन्दुभयः ।

**यच्चार्चितं द्वयोः [1]२।५।१२**

पूर्वप्रयोगे नियम्यमानाः । अर्चितं नाम नियमभाक् । द्वयोरिति निर्धारणषष्ठी । तत्रेति विषयनिर्देशः । यदर्चितं पूजितं नामेति । नाम्नोऽर्चितत्वम् ([2]अर्थधर्मस्य पूजितत्वस्य शब्द-उपचारात्) मातापितराविति मातुरर्चितत्वम् गर्भधारणपोषणाभ्याम् । तेन माता गरीयसीति [3]स्मरणात् । द्वयोरिति किमिति । नाम्नोरिति वर्तमाने द्वयोरित्यनेन किमाशयः, बहूनामित्यस्याप्यनुवृत्तिराशङ्क्येत इत्याकूतेन प्रत्युदाहरति । भीमार्जुनवासुदेवा इति । यत्र [4]चानल्पस्वरोऽर्चितश्च । तत्रार्चितस्य पूर्वनिपातः परत्वात्, युधिष्ठिरभीमौ [5]नैरुक्तिकहेतुकोत्थानायाः संख्याया इत्यत्र द्वन्द्व इत्युपलक्षणम् । तेन बहुव्रीहावप्येष पूर्वनिपातः । द्वित्राः, त्रिचतुराः । अग्निसंज्ञकस्येति द्वन्द्वे पूर्वनिपातो वक्तव्यः इति सर्वत्रापेक्ष्यते । स्वरादेरकारान्तस्येति कारवचनात् तत्कालपरिग्रहः । तेनाश्ववृक्षौ, वृक्षाश्वावित्यादावनियमः । बहुष्वपि अश्वरथेन्द्राः, इन्द्राश्वरथाः, इन्द्राग्नी इत्यादौ स्वरादेरकारान्तस्यैव पूर्वनिपातो न [6]त्वग्नेः । परत्वादग्नेरप्यल्पस्वरस्य [7]गवाग्नी । एवं स्वराद्यन्तादपि, वागिन्द्रौ । सर्वनाम्नः संख्याया इत्यादि । यत्र च सर्वनाम्नस्संख्यायाश्च स्पर्धा तत्र परत्वात्संख्यायाः पूर्वनिपातः । द्वावन्यौ यस्य सः द्व्यन्यः । सप्तम्यन्तस्य तु पूर्वनिपातः उक्तः । कथं तर्हि गडुकण्ठे यस्य सः गडुकण्ठः । गडुशिर इति । अपिशब्दानुवृत्तेः क्वचिद् व्यभिचारात् । सप्तम्यन्तस्य चेति । च शब्दात् ([8]निष्ठाया अपि

---

१. २।५।१३ (दु० वृ०)
२. अत्र धर्मशब्दारोपात् (भं०)
३. ग्रहणात् (भं०)
४. चाल्प (भं०)
५. नैरान्तिक (भं०)
६. तुं द्वयोः (भं०)
७. वागग्नी (भं०)
८. **निष्ठायामपि बहुव्रीहौ पूर्वनिपातः कार्यः । नन्वसौ (भं०)**

पूर्वनिपातो बहुव्रीह्यादौ । कृतकटः, ननु) विशेषणत्वात् सिद्धो निष्ठान्तस्य, अस्त्येतत्, कटे कृतं येनेति तु विग्रहे निष्ठान्तस्य विशेषणत्वं नास्त्येव । अपीत्यनुवृत्तेः क्वचिद् व्यभिचारः । यत्र जातिकालसुखादिभ्यः परो निष्ठान्तः [1]शाङ्र्गजग्धः समायातः, सुखयातः । प्रहरणार्थेभ्योऽपि निष्ठायाः [2]परनिपातः । अस्युद्यतः, तेभ्यः सप्तम्यन्तस्यापि, दण्डः पाणौ यस्य सः दण्डपाणिः । क्वचिद् यथा प्राप्तमपि उद्यतासिः । उद्यतगदः । क्वचिद्विकल्पः । आहिताग्निः, अग्न्याहितः । जातदन्तः दन्तजातः प्रमादजाः प्रयोगा इति पूर्ववदत्र व्याख्याक्रमः । अपि शब्दानुवृत्तिश्चास्य प्रमादस्य हेतुः ।

**पूर्वं वाच्यं भवेद् यस्य सोऽव्ययीभाव इष्यते [3]२।५।१३**

वाच्यमिति वचेर्ण्यणि । वचोऽशब्द इति कत्वाभावः । पूर्वं शब्दरूपं वाच्यं प्रधानं भवेदिति समासे तत्प्रतिपाद्यस्यार्थस्य वाच्यत्वे सति प्राधान्याद् अर्थद्वारेण तस्यापि प्राधान्यम् । अव्ययपूर्वपदश्च समासः । प्रायेणाव्ययीभावसंज्ञा [4]स्मर्यत इति । राजदन्तादीनाम् सत्यपि पूर्वपदार्थप्राधान्ये संज्ञा न भवति । गुरुसंज्ञाकरणाच्चानव्ययमव्ययं भवतीत्यन्वर्थसंज्ञाविज्ञानेनास्य समासस्याव्ययत्वं प्रदर्श्यते । तेन निष्कौशाम्बिरित्यादीनां समासानामव्ययपूर्वपदानामपि [5]समं लिङ्गसंख्यायोगित्वात्संज्ञाभावः । यस्तून्मत्तगङ्गं नामदेशः इत्यादावन्यपदार्थप्राधान्येऽपि क्वचिदव्ययीभावो दृश्यते । इष्यते ग्रहणात् समीपं कुम्भस्य उपकुम्भमिति समीपार्थस्यात्र प्राधान्यादव्ययीभावसंज्ञा अव्ययीभावादकारान्तादिति सर्वत्राम्भावः । समृद्धिर्मगधानां समागधमिति । अत्र मगधैर्विशेष्यमाणत्वात् समृद्धेः प्राधान्यम् । अत्ययः शीतानाम् अतिशीतमिति । अत्ययोऽतिक्रमो ध्वंस इत्यर्थः, पश्चाद् रथस्यानुरथमिति । पश्चादयोऽर्थोऽत्र प्रधानम् । यथाशक्तीति । सामर्थ्यानतिक्रमलक्षणोऽत्र यथाशब्दार्थं प्रधानम् । अन्यस्माल्लुगिति विभक्तेर्लुक् । यावच्छब्द इत्यादि । अवधारणमवश्यं भावः । तत्रार्थे यावच्छब्दो नाम्ना सह समस्यते । स च समासोऽव्ययीभावसंज्ञः । सौत्रश्चायं विषयोऽर्थविशेषावग्रहेण प्रदर्श्यते, अवधारणादन्यत्र तु न भवति, यावद् दत्तं तावद् भुक्तमिति । अत्र हि कियन्मया भुक्तमिति भोक्ता नावधारयति ।

---

१. शाङ्र्गरजग्धः सामयातः (वा०) शाङ्र्गरजग्धः समायातः (भं०)
२. पूर्वः (भं०)
३. २।५।१४ (दु० वृ०)
४. प्रयुज्यते (भं०)
५. सताम् (भं०)

अपपरीत्यादि। एतदपि पञ्चम्यन्तेन नाम्नेति विशेषं वक्तुमुच्यते। अपसाकेतम्, परिकुरुक्षेत्रम्, इत्यपपरिशब्दावत्र वर्जनार्थवृत्तिः। बहिर्ग्रामादिति बहिःशब्दयोगे पञ्चमी। [1]शेषः कर्मेत्यत्र चानुवृत्त्या प्राग्ग्रामम्, प्रत्यग्ग्राममिति। प्राक्प्रत्यग्शब्दावञ्चेः प्र-प्रति[2]पूर्वस्य क्विपि मन्तव्यौ। व्याप्तिमर्यादयोरित्यादि। प्रस्तुतेन वर्षादिना कस्यचित्सम्बन्धो व्याप्तिः, तेनासम्बन्धो मर्यादा। पारेमध्ये-शब्दावित्यादि। इष्यते ग्रहणादव्ययीभाव(सन्नियोगेन[3] यत्पार)मध्यशब्दयोरेकारान्तत्वं प्रयोगसमवायि दृश्यते तदनुकरणत्वेन पारेमध्ये-शब्दावित्युक्तम्। [4]पारं यमुनाया इति समासविषयादन्यत्र एत्वाभावादेवं विग्रहः। एवं [5]मध्यं यमुनाया मध्ये यमुनम्, षष्ठीसमासापवादः। पक्षे सोऽपि अपिशब्दानुवृत्तेर्भवति। यमुनापारम्, यमुनामध्यमिति। पूर्वपदमित्यादि। अल्पेऽर्थे यः प्रतिशब्दः तेन सहेति व्याख्येयम्। अत्राप्राप्त इत्यादि। उत्तरपदार्थप्राधान्यादप्राप्तिः न चेयमिष्टिरिष्यते ग्रहणस्यानुक्तविशेषसङ्ग्रहार्थत्वात्।

**स नपुंसकलिङ्गः स्यात् [6]२।५।१४**

उक्तान्युदाहरणानीति। उपकुम्भमित्यादीनि। यदि इदं सूत्रं नारभ्यते किं स्यादित्याह—अव्ययीभावस्येत्यादि। अव्ययं पूर्वपदमिति बाहुल्यादेतदुच्यते। उन्मत्तगङ्गम्, सूपप्रतीत्यादौ तु हि पूर्वपदमनव्ययमपि दृश्यते। तच्च प्रधानमिति। तथा चोक्तं पूर्वपदार्थप्रधानोऽव्ययीभाव इति। न च तस्य किञ्चिल्लिङ्गमस्तीति अव्ययस्य लिङ्गसंख्याशून्यत्वात्। द्वन्द्वस्य, तत्पुरुषस्य चेत्यादि। स्याद्ग्रहणलभ्योऽयं विशेषः। समाहारद्वन्द्वस्य नपुंसकत्वमुत्तरसूत्रेण विधास्यत इतीतरेतरयोगद्वन्द्वस्यायं विधिः। तत्पुरुषस्याप्युत्तरपदार्थप्रधानस्योत्तर[7]सम्बन्धि लिङ्गं प्राधान्येदेवाविचलमिति पूर्वपदार्थप्रधानोऽसौ गृह्यते। इमे [8]इमावित्यनुप्रयोगस्यापि स्त्रीत्वादिसम्बन्धो विशेषणत्वात्। अत्रार्धशब्दः

---

१. शेषात् (भं०)
२. पूर्वौ (भं०)
३. सन्नियोगे नियमात् पार (भं०)
४. पारे (भं०)
५. मध्ये (भं०)
६. २।५।१५ (दु० वृ०)
७. पद (भं०)
८. कुक्कुटमयूर्याविमे मयूरीकुक्कुटाविमौ (वृत्तिपाठः)

प्रधानमित्यर्धपिप्पलीत्यस्य पूर्वपदार्थप्राधान्यात् तदीयं नपुंसकमिति समप्रविभागवाचिनोऽर्धशब्दस्य नपुंसकत्वात् । यस्त्ववयववाची सः पुंल्लिङ्गः स्मर्यते । द्वन्द्वेऽपीत्यादि सकलपदार्थप्रधाने द्वन्द्वे द्वेऽपि पूर्वपदोत्तरपदे प्रधाने तत्र यदा ते भिन्नलिङ्गे भवतः तदा पर्यायेण द्वयोरपि सम्बन्धिलिङ्गं समासस्य प्राप्तमिति नियमेनोत्तरपदसम्बन्धि तत्क्रियते । अपिशब्दानुवृत्तेः कस्यचित्तत्पुरुषस्योत्तरपदसम्बन्धिलिङ्गं न भवति । प्राप्तो जीविकां प्राप्तजीविकः । आपन्नो जीविकाम् आपन्नजीविकः, अलं जीविकायै अलंजीविकः । निष्क्रान्तः कौशाम्ब्याः निष्कौशाम्बिरिति स्त्रीत्वं न भवति । इह च पूर्वाह्णः मध्याह्नः, अपराह्णः । नपुंसकं न भवति । सत्यकारे समासान्ते नस्य तु क्वचिदिति नलोपः प्राप्तः, क्वचिद्ग्रहणान्न भवति । लिङ्ग्रहणमन्यत्रापि नपुंसकार्थत्वम् । तेन संख्याव्ययादेः पथ्यन्तस्य तत्पुरुषे नपुंसकत्वं भवति । विगतः पन्थाः विपथः, न पन्थाः अपथम्, चतुर्णाम् पन्थाः चतुष्पथम् । अकारस्समासान्तः । व्यञ्जने चैषा निरिति न-लोपः । पथिशब्दगतं पुंस्त्वमत्र न भवति । ब्राह्मणसेनमित्यादौ स्वरो ह्रस्व इति ह्रस्वः । अमो नपुंसकादिक्रियाविशेषणानां कर्मत्वादम-उत्पत्तिः । नपुंसकत्वानभिधाने तु क्रियायाः लिङ्गाभावात् तदविशेषणेनैतद्धर्मेणैव भवितव्यम् ।

**द्वन्द्वैकत्वम्**[1] **२।५।१५**

द्वन्द्वस्य यदेकत्वं समाहार इति समाहार एव द्वन्द्वस्यैकत्वार्थावगमात् ।

**तथा द्विगोः**[2] **२।५।१६**

द्विगोः समासस्य नपुंसकत्वं भवतीति द्विगोः तत्पुरुषत्वात् । उत्तरपदसम्बन्धिलिङ्गम् प्राप्तं बाध्यते । पञ्चगवमित्यादि । पञ्चानां गवां नदीनां च समाहार इत्यकारस्समासान्तः । यस्त्वन्यत्र द्विगुरिति तद्धितार्थे, पञ्चकपाला इत्यादि संस्कृतेऽर्थेऽण् प्रत्ययः । तस्य द्विगोर्लुगनपत्य इति लोकोपचाराल्लुक् । अकारान्तोत्तरपद इत्यादि । अकारान्तमुत्तरपदं यस्य द्विगोः सः द्विगुः स्त्रियां भाष्यते । किं सर्वो द्विगुः, नेत्याह—पात्राद्यन्तं वर्जयित्वेति । के पुनः पात्रादयः । पात्रादिराकृतिगण इति तेन चतुर्युगमित्याद्यपि [3]वर्ज्यते । एतच्चैकत्व-

---

१. २।५।१६ (दु० वृ०)
२. २।५।१७ (दु० वृ०)
३. भवति (मं०)

मिति वर्तमाने तथा शब्दादनुक्तविशेषसङ्ग्रहार्थाल्लभ्यते, तथा चाप्प्रत्ययान्तो द्विगुः स्त्रियां विकल्पेन भाष्यते तेन पञ्चखट्वी पञ्चखट्वम् । पञ्चानां खट्वानां समाहार इति स्वरो ह्रस्वः, द्विगोरितीकारः । अन्नन्तोऽपि । पञ्चतक्षी पञ्चतक्षम् । न लोपो वक्तव्यः । कृते तस्मिन्नीप्रत्ययः ।

**पुंवद्भाषितपुंस्कानूङ् पूरण्यादिषु स्त्रियां तुल्याधिकरणे [1]२।५।१७**

पुमानिव पुंवदिति प्रथमान्तादयं वतिः भाषितपुंस्कानूङित्यस्योपमेयस्य प्रथमान्तत्वात् । भाषितः पुमान्येन तद्भाषितपुंस्कमिति । समासान्तगताना-मिति । ककारस्समासान्तः । अत्र च यद्वक्तव्यं तद्भाषितपुंस्कं पुंवद्वेत्यत्रै-वोक्तम् । भाषितपुंस्कानूङिति । शब्दरूपापेक्षया नपुंसकत्वम्, अतो नपुंसक-लक्षणः, ततः सिलोपः । पूर्यतेऽनयेति पूरणशब्दात् करणयुडन्तादीप्रत्ययः । येन प्राक् पुमान् भाषित इति ([2]भाषितशब्दस्यातीतकालाभिधायित्वात् पूर्वं येन पुमान्भाषित इति) लभ्यते, अधुना तर्ह्यसौ क्व वर्तत इत्याह — सम्प्रति च स्त्रियां वर्तत इत्येतेनानूङिति पर्युदासाश्रयणात् स्त्रीवृत्तेर्भाषितपुंस्कस्यायं विधि-रिति दर्शयति तेन ग्रामणिकुलम् दृष्टिरस्य ग्रामणिदृष्टिरित्यत्र ग्रामणीशब्दस्य भाषितपुंस्कस्यापि सतो नपुंसकवृत्तित्वात् पुंवद्भावो न भवति । यदि स्यात् नपुंसकह्रस्वत्वं न भवेत् । एवं स्वरूपभार्यः, कल्याणभार्य इति स्वरूपा भार्या यस्य, कल्याणी भार्या यस्येति विग्रहः । कल्याणीशब्दो बह्वादित्वादीप्रत्ययान्तः । ङकार इहार्थ इत्यसन्देहार्थमिदं सूत्रम् । इत्यत्रासति हि ङकारे भाषितपुंस्कान्वय-पूरण्यादिष्विति निर्देशे सन्देहस्स्यात् । अथोङ्निषेध उत्तरत्रैव कस्मान्न क्रियते, पूर्वपदस्य स्त्रीवृत्तित्वं कथं लभ्यत इति चेत्, स्त्रियामित्यस्या वृत्तेर्न लप्स्यते । अत्रोच्यते । कर्मधारये [3]पुंवद्भावो निषिद्धविषय आरभ्यमाणो ब्रह्म-बन्धू वृन्दारिकेत्यूङन्तस्यापि प्राप्नोतीहैवानूङिति कर्तव्यम् । कल्याणीपञ्चमा इत्यत्र पूरणप्रत्ययान्ते पञ्चमीशब्दे परतः पुंवद्भावो न भवति । यद्येवम्, कल्याणी पञ्चमी यस्य [4]सा कल्याणीपञ्चमीकः पक्ष इत्यत्रापि न प्राप्नोति । भविष्यति, प्रधानपूरणीविषये निषेधात् । अत्र च नास्ति पूरण्याः प्राधान्यं, कुतः, पक्षे अन्यपदार्थेऽवयवानामत्यन्ततिरोधानात् । कल्याणीपञ्चमा इत्यत्र तु प्रथमादिरात्रिवत्पञ्चम्यपि रात्रिस्समासस्य वा चेति सापि प्रधानमिति

१. २।५।१८ (दु० वृ०)
२. न्यूनपाठः (भं०)
३. निषेधम् (वा०)
४. सकल्याणपञ्चमीकः (भं०)

तत्रैव निषेधः। प्रियादिषु परेषु न भवतीति कथं तर्हि दृढभक्तिः, नञा निर्दिष्टस्यानित्यत्वात्। कल्याणीप्रमाणाः इति शब्दोऽजहत्स्वलिङ्ग एव कल्याणीशब्देन तुल्याधिकरणः। अन्यत्रापीति। अनुत्तरपदे दर्शनीयतरेत्यादि। इयमनयोरतिशयेन दर्शनीया, इयमासां दर्शनीयतमेति, तसादित्वात् तरतमौ। एवं कल्पपाशरूपाः। पट्वीति तदन्ताद् गुणवाचिन इतीकारः। तदेति। दादानीमाविति दा-प्रत्ययः। त्यदाद्यत्वमम्प्रत्ययः, पुंवद्भावः। कठीता कठीत्वमिति कठिशब्दाज्जातिवाचिनो जातेरयोपधादितीकारः बहुशो देहीति बह्वीशब्दात् बहुत्वादिभ्य इतीप्रत्ययान्तात्तसादित्वाच्छस्। एवमन्यत्रापि योगविभागात्पुंवद्भावः। हस्तिनीनां समूहो हास्तिकम्। भवत्याश्छात्राः भावत्काः, भवदीयाः। कुक्कुट्याः अण्डं कुक्कुटाण्डम्, काक्याः शावः काकशावः, मृग्याः क्षीरं मृगक्षीरम्। अथ द्रोणीभार्यः इत्यादौ कस्मान्न भवति, भवति ह्ययं द्रोणीशब्दः परिमाणविशेषवृत्तिः। भाषितपुंस्कः इत्याह—चेति वर्तत इत्यादि। अन्ये तु भाषितपुमान्यस्मिन्नर्थे प्रवृत्तिनिमितभूते जात्यादिक इत्यर्थस्यात्रान्यपदार्थत्वात्। तुल्ये प्रवृत्तिनिमित्ते यो भाषितपुंस्कः तस्य अयमतिदेश इति व्याचक्षते, यथा दर्शनीयशब्दस्य तस्य हि स्त्रीपुंसयोः [1]वर्तमानस्य तुल्यं दर्शनीयत्वं नाम प्रवृत्तौ निमित्तम्, नैवं द्रोणीशब्दस्य, तथा ह्ययं जातिविशेषोपादानेन स्त्रियां [2]गवादिन्यां वर्तते। परिमाणविशेषोपादानेन तु पुंसि। एवं भिन्नप्रवृत्तिनिमित्ते द्रोणीशब्दस्याभाषितपुंस्कत्वान्न भवति पुंवद्भावः। यद्येवम्, गर्भिणी भार्या यस्य स [3]गर्भिणीभार्यः। प्रसूतभार्यः। प्रजातभार्यः इत्यत्रापि न प्राप्नोति, भिन्नं तर्ह्यत्र प्रवृत्तौ निमित्तम्। तथा गर्भिणी स्त्रीति स्त्रीवृत्तेः गर्भिन्शब्दस्यानवयवः गर्भसम्बन्धो निमित्तं गर्भी। व्रीहिरिति ([4]पुंवृत्तेः पुनरवयवभूतस्य) गर्भसम्बन्धः। प्रसूतप्रजातशब्दयोरपि स्त्रीवृत्त्योः गर्भविमोचनं निमित्तम्। पुंवृत्त्योरपि गर्भाधानम्। [5]सत्यम्, गर्भसम्बन्धमात्रं तु प्रवृत्तिनिमित्तकेनाश्रितमितरेतरयोरप्यपत्यापत्यवत्सम्बन्धमात्रम्। अवान्तरभेदस्तु सन्नपि न विवक्ष्यते। अन्यथा दर्शनीयादीनां शब्दानां तुल्यप्रवृत्तिनिमित्तत्वं न स्यात्। तेषामपि स्त्रीपुंसयोर्वर्तमानानामन्यादृशस्य दर्शनीयत्वादेः प्रवृत्तिनिमित्तस्य विद्यमानत्वात्।

१. प्रवर्तमानस्य (भं०)
२. प्रवर्तते (भं०)
३. गर्भिणभार्यः (भं०)
४. पुंवृत्तिरप्यवयव (भं०)
५. सत्याम् (वा०)

**संज्ञापूरणीकोपधास्तु न [1]२।५।१८**

संज्ञायतेऽनयेति संज्ञा, करणे युटं बाधित्वा भीषिचिन्तीति च शब्दादङ्-प्रत्ययः। कोपधायाश्च स्त्रिया इत्यर्थधर्मं स्त्रीत्वं शब्दे आरोप्य कोपधाया इति स्त्रीत्वेन निर्देशः। पूर्वेण प्राप्त इति योगद्वयेन एको हि पुंवदिति योगो अपरश्च भाषितपुंस्केत्यादि। दत्ताभार्या इति संज्ञाशब्दानां भाषितपुंस्कत्वे स्वरूपमेवाप्रवृत्तौ निमित्तम्। पाचिका भार्येति। पचतीति वुणो युवुद्रामनाकान्ता इत्यकादेशः। अस्योपधाया इति दीर्घः। आप्प्रत्ययः, के प्रत्यये इतीत्वम्। वक्तव्यात् क-प्रत्ययः इति कुत्सनप्रावीण्ययोस्तसादित्वात्। एवं दत्तापाशा, पञ्चमीपाशा, पाचिकापाशेत्याद्यपि निषेधविषयः उदाहार्यः। प्राप्तो ह्यत्र पुंवद्भावः, पुंवदिति योगविभागात्। वुण्प्रत्ययादेशस्येत्यादि वुण्तृचावित्यादिना विहितो यो वुण्प्रत्ययः तदादेशस्य अकस्य यः ककारः तद्धितश्च च यः तस्येह प्रतिषेधविधौ ग्रहणं नान्यस्य ककारस्य। तेन क्व निषेधो भवतीत्याह – तेनेत्यादि। एतच्च नञा निर्दिष्टपरिभाषया लक्ष्यवशेन व्यवस्थितया लभ्यते। पाकभेकशब्दावौणादिकाविति पाकशब्दस्यार्भकः पृथक् पाकावयवमित्यत्रौणादिकसूत्रे क-प्रत्ययान्तस्य निपातितत्वात्। ([2]बिभेतेः कः प्रत्यय इति एकः इण् भी पाकः, भेकः पाकः काकः शल्कः अर्कः मर्कः इत्युणादिसिद्धं शल्यति, सन्दिभ्यः कन्नित्यनेन एकस्मादिति पाकशब्दात्) अन्यस्मादिति। भेकशब्दात् जातेः पुंवद्भावो नेष्यत इति योगद्वयेन प्राप्तः। तेन कठीपाशेत्याद्यप्युदाहार्यम्। एतच्चतुश्शब्दादन्यत्रापि निषेधाल्लभ्यते तथा च रक्तविकाराभ्यामन्यत्र यः तद्धितो वृद्धिनिमित्तं तदन्तस्यापि स्त्रीवृत्तेः पुंवद्भावो न भवति। स्रुघ्ने भवा स्रौघ्नी, अणन्तादितीकारः, सा भार्या यस्य स स्रौघ्नीभार्यः। एवं स्रौघ्नीपाशः। रक्तविकारविषये तु निषेधो न भवति। कषायेन रक्ता काषायी सा बृहतिका यस्य सः काषायबृहतिकः। लोहस्य विकारो लौही सा ईषा यस्य सः लौहीषः। एवमन्यत्रापि यथालक्ष्यं पुंवद्भावनिषेधो मन्तव्यः।

**कर्मधारयसंज्ञे तु पुंवद्भावो विधीयते [3]२।५।१९**

कर्मधारय इति संज्ञा यस्येति। इति शब्देन कर्मधारय शब्दोऽत्र स्वरूपप्रधानो निर्दिष्टः, नार्थप्रधान इति दर्शयति। पूर्वेण प्रतिषेधः प्राप्त इति। स

---

१. २।५।१९ (दु० वृ०)
२. न्यूनपाठः (भं०)
३. २।५।२० (दु० वृ०)

बाध्यत इति शेषः। प्रतिषेधस्य तर्हि को विषय इत्याह—तस्य त्वित्यादि। पूर्वसूत्राभिहितप्रतिषेधविषये सर्वत्र कर्मधारये पुंवद्भाव इष्यते, तु-शब्दात्। तेन कठवृन्दारिका, स्रौघ्नवृन्दारिका दीर्घकेशवृन्दारिका। अतएव केचित्संज्ञा-पूरणीकोपधाया इति न सम्बध्नन्ति। कस्य तर्ह्ययं पुंवद्भावः, भाषित-पुंस्कानूङः। तेन खट्वावृन्दारिका, ब्रह्मबन्धूवृन्दारिका। अपूरण्यादिष्वेतत्त्वत्र नापेक्ष्यते। तेन महती चासौ नवमी महानवमी, महाद्वादशीत्यादि सिद्धम्। विधीयते ग्रहणं जातीयदेशीययोरपि यथा स्यादिति दत्तजातीया दत्तदेशीया। प्रकारवचने तसादित्वाज्जातीयप्रत्ययः ईषदसमाप्तावपि देशीयप्रत्ययः। एवं सर्वत्र निषेधविषये जातीयदेशीययोः पुंवद्भावः। पञ्चमजातीया चेत्युदाहार्यम्।

**आकारो महता कार्यस्तुल्याधिकरणे पदे [1]२।५।२०**

महान्कायो यस्य स महाकाय इति बहुव्रीहिप्रदर्शनेन निवृत्तं कर्मधारयसंज्ञा इत्येतद् इति दर्शयति। तस्य तु निवृत्तिः तुल्याधिकरणग्रहणात्। अनुषङ्गलोपे कृते आत्वमिति। ननु नित्यत्वादात्वं स्यात् ततश्च कृते तस्मिन्कथमनुषङ्ग-लोपः स्यात्, एवं मन्यते। प्रतिपादितपूर्वमनुषङ्गविधावनुषङ्गसंज्ञानिमित्तस्य लोपस्य बलीयस्त्वम्। तेन पूर्वमनुषङ्गलोपः तत आत्वम्। अथेहात्वं कस्मान्न भवति। अमहान्महान्सम्पन्नः। महद्भूतश्चन्द्रमा इत्यस्ति ह्यत्र तुल्याधि-करणत्वम्। तथाहि यत्रैवार्थे च्व्यन्तो महच्छब्दो वर्तते तत्रैव भूतशब्दो अपि, अत आत्वं प्राप्नोति। सत्यम्, गौणार्थवृत्तित्वान्महदर्थस्य न भविष्यति। ननु च महत्त्वयुक्तः चन्द्रमा महान्, तदयुक्तम, महदर्थस्य गौणत्वम्। मैवम्, सर्वत्रैव हि च्व्यन्तेनार्थः आश्रितः, पूर्वावस्थोपचरितेऽन्तरावस्था उच्यते तस्मादिहापि चन्द्रमा आश्रितपूर्वावस्थो महच्छब्देनोच्यमान उपचरितमहत्त्वानुगतोत्तरावस्था उच्यते। यद्येवम्, अमहती महती सम्पन्ना सा महद्भूता ब्राह्मणीत्यत्र पुंवद्-भावोऽपि न प्राप्नोति। पुंवदिति योगविभागाद् भविष्यति। इह तर्हि गौर्वा-हीकः। गां वाहीकमानयेति गौणत्वात् गो([2]शब्दस्यौत्वात्वेन स्याताम्, भविष्यतः, तयो येभ्यो शब्दार्थो यत्नः कृतः) तत इह महत्या घासः महाघासः। एवं महाघामः, [3]महाकारः [4]महाविशिष्ट इति। पुंवदिति योगविभागान्महती-शब्दस्य कृतपुंवद्भावे भिन्नाधिकरणे पदे परतः कथमात्वमित्याह—कार्य-

१. २।५।२१ (दु०वृ०)
२. शब्दस्यात्वं त्वेन भविष्यति यस्त्वेतयोः विधौ द्यो शब्दार्थो तः कृतः(भं०)
३. महाकरः (भं०)
४. महाविप्रविष्टः (भं०)

ग्रहणादिति । दण्डादण्डि इतीकारः समासान्तः । एकादशेति । कतेश्च जस्शसोर्लुक्, द्वौ च दश च द्वादश । अष्टौ च दश च अष्टादश । द्वाभ्यामधिका विंशतिः द्वाविंशतिः, द्वाभ्यामधिका त्रिंशत् द्वात्रिंशत् । माता च पिता च मातापितरावित्यादीति । आदिग्रहणात् पितापुत्रौ [1]पोतापोतारौ, इन्द्रावरुणौ इत्यादयः ।

**नस्य तत्पुरुषे लोपः [2]२।५।२१**

नस्येति । न-शब्दादव्ययानुकरणी षष्ठी । अमशकमित्यव्ययीभावः । अपाप इति बहुव्रीहिः । यदि तत्पुरुषग्रहणं समासस्योपलक्षणार्थं तदा समासग्रहणमेव क्रियताम्, किं तत्पुरुषग्रहणेन, सत्यम्, उत्तरार्थं तु, कोः कदादेशः, तत्पुरुष एव यथा स्यात् ([3]क्रुष्टो राजेति) बहुव्रीहौ मा भूदित्युत्तरत्र च तत्पुरुषग्रहणे क्रियमाणे सति समास इत्यत्र कर्तव्यं स्यात् । ([4]ततश्चेद् गुरुभवतीति तत्पुरुष इत्यत्रैव) ज्यायः । कार्य इति वर्तते । तेनाख्यातेऽपि निन्दायां लोपः । अपचसि त्वं जालमः । अ मा नो नः, प्रतिषेधे इत्यकारस्य प्रतिषेधवाचिनः सम्भवे अपि नञोऽत्र विषये प्रयोगो मा भूदित्येवमुच्यते । तथा गमेः डप्रत्ययान्ते वा, न गच्छतीत्यगः । नगः वा । कथमगोवृषलश्शीते न, अप्राणिन्येवं विकल्पं स्मरन्ति ।

**स्वरेऽक्षरविपर्ययः [5]२।५।२२**

विपर्यय इति विपरिपूर्वादिणः स्वरान्तत्वाद् भावेऽल्प्रत्ययः । अक्षरं च अक्षरं च अक्षरे इति सरूपाणामेकशेषो इत्येकोऽक्षरशब्दोऽवशिष्यते । ये द्वे अक्षरे नकाराकाराविति । अव्युत्पन्नस्याक्षरशब्दस्य सकलवर्णविषयत्वेन रूढत्वात् । न विद्यते अश्वो यस्येति । एतेन तत्पुरुषग्रहणस्य समासोपलक्षणपरत्वे नानुवृत्तेर्बहुव्रीहावप्येष विधिरिति दर्शयति । अथान्स्वरः इति कस्मान्न [6]क्रियते अनेकवर्णत्वाच्चायमन्नादेशो नस्य सर्वस्यैव विज्ञास्येत इति किं गुरुसूत्र करणेनेत्याह—अन्स्वर इत्यादि ।

---

१. होतापितारौ (वा०)
२. २।५।२२ (दु० वृ०)
३. कुष्ट्वेति (मं०)
४. तच्च गुरु भवतीति तत्पुरुषग्रहणमेव (मं०)
५. २।५।२३ (दु० वृ०)
६. कृतम् (मं०)

**कोः कत् [1]२।५।२३**

कदश्वः कदन्नमिति कर्मधारयावेतौ तत्पुरुषावुभाविति तत्पुरुषसंज्ञो त्रिरथवदेत्यादिकार्यग्रहणानुवृत्तेः फलमेतत्। कत्त्रयः कद्रथः इति कर्मधारयावेतौ। अदिति न कृतम्, सर्वादेशो मा भूदिति।

**का त्वीषदर्थेऽक्षे [2]२।५।२४**

ईषल्लक्षणोऽर्थः ईषदर्थः। अनीषदर्थार्थमक्षग्रहणमिति ईषदर्थे सिद्धत्वात्। तेनाक्षे चेति पृथक् सूत्रमिदमनीषदर्थार्थम् जायते। अतएव तु-शब्दो भिन्नक्रमः सूत्रभेदं द्योतयति। ईषदम्लं काम्लमिति। एतेनेषदर्थवृत्तेः कु शब्दस्य स्वरादावपि परत्वात्कादेश एव भवतीति सूचयति। कुत्सितोऽक्षः काक्ष इति। अथवा कुत्सितमक्षि यस्य सः काक्षः। अकारः समासान्तः। आ इति न कृतम्। सर्वादेशाशङ्का मा भूदिति।

**पुरुषे तु विभाषया [3]२।५।२५**

विभाषणं विभाषेति। गुरोश्च निष्ठायामित्यकारः। टौसोरे इत्येत्वम्। विभाषया विकल्पेनेति विभाषाशब्दस्य विकल्पवाचित्वेन रूढत्वात्। अप्राप्तविभाषेयम्। ईषदर्थ इति हि निवृत्तमिति। तद्विवक्षायां तु पूर्वेण नित्यं कादेशः। नत्वनेन परत्वात् कुतः, पूर्वोक्तपरोक्तयोरिति परशब्दस्येष्टवाचित्वात्। तु-शब्दात् कुत्सितः पन्थाः कापथः। अकारः समासान्तः। कोः कत् कव क इत्येते आदेशा इत्यादि। एतच्च वेति कर्तव्ये विभाषा ग्रहणस्याधिकस्य करणाल्लभ्यते।

**याकारौ स्त्रीकृतौ ह्रस्वौ क्वचित् [4]२।५।२६**

रेवतिमित्रम् इत्यादि। रेवतीरोहिणीशब्दौ गौरादित्वादी-प्रत्ययान्तौ। गार्गीपुत्रः इति गर्गस्यापत्यं स्त्रीति गर्गशब्दाण्ण्य गर्गादेरिति ण्यः प्रत्ययः। ण्यदितीकारः। यस्यापत्यस्येति लोपः। तत्षष्ठीसमासः। मालाहस्तः इति बहुव्रीहिः। याकाराविति किम्, कद्रूपुत्रः, कद्रुशब्दात् पङ्गुकद्रु इत्यूङ्, स्त्री-

१. २।५।२४ (दु० वृ०)
२. २।५।२५ (दु० वृ०)
३. २।५।२६ (दु० वृ०)
४. २।५।२७ (दु० वृ०)

कृताविति किम्, लक्ष्मीपदः, लक्षेर्मुट् चेति लक्ष्मीशब्दः । [1]तत्र स्त्रियामिति नास्त्येव तु-शब्दानुवृत्तेः क्वचिद्विकल्पः । ग्रामणिपुत्रः, ग्रामणीपुत्रः । ब्रह्मबन्धुपुत्रः, ब्रह्मबन्धूपुत्रः ।

**ह्रस्वस्य दीर्घता [2]२।५।२७**

द्व्यङ्गुला कर्णं द्वे अङ्गुली प्रमाणमस्येत्याकारस्समासान्तः । ह्रस्वग्रहणं दीर्घस्य क्वचिदनित्यत्वार्थम् । तेन ऋषौ विश्वामित्रः । अन्यत्र तु विश्वमित्रः । प्रतिवोधः, प्रतीबोधः । एव प्रसादः प्रासादः, प्रकारः प्राकारः इत्यादि । यथा लक्ष्यमुन्नेयम् ।

**अनव्ययविसृष्टस्तु सकारकपवर्गयोः [3]२।५।२८**

अनव्ययशब्दः कृतव्युत्पत्तिः, विसृज्यते स्मेति क्तः । भृजादीनां षः, तवर्गश्चटवर्गयोगे टकारः, आकारपरस्येत्यादिः । क्वचिद् ग्रहणानुवृत्तेरेतल्लभ्यते । अनुत्तरपदस्थस्येति परपदयोः अनव्ययः स्थितः इत्यर्थः । अयस्कारः, अयःकरोतीति कर्मण्यण्, अयस्कंस इति । अयो युक्तः कंस इति विग्रहः । एवमयस्कुम्भः, अयस्पात्रमिति षष्ठीसमासः । अयस्कुशेति अयोरूपा कुशेति विग्रहः । कुम्भीप्रभृतिषु अपि लिङ्गग्रहणपरिभाषया सत्वम्, परमपयः पात्रमिति, परमं च तत्पय इति विग्रहे कृते पात्रशब्देन षष्ठीसमासे सति परमशब्दे पयः शब्दः विसर्जनीय उत्तरपदस्थ इत्युच्यते । आकारादपि परस्येति । क्वचिदिति वचनात् क्वचिन्न भवति, भासः करणं भाः करणम्, भास्कर इति भासं करोतीति । तदाद्यन्तानन्तकारेत्यादिना ट-प्रत्ययः । इस्-उस् इत्येतयोर्विसृष्टस्य चेति क्वचित्सत्वं स्मर्यते इति सम्बध्यते । क्वचिदिति वचनात् सर्पिः करोति, सर्पिः पिबतीत्याद्यपि भवति, अयुक्तार्थत्वे चेसुसोर्नेष्यते । तिष्ठतु सर्पिः, पिब त्वमुदकमिति । शिरस्पदमिति सप्तमीसमासः । पदे चेति । च-शब्दात् अधस्पदमित्यपि भवति । सुपो धातुवदयं तत्पुरुषः । एवमन्यत्रापीति । तेनाकारात्परस्य विसर्जनीयस्य कृकमिप्रभृतिभ्योऽन्यत्रापि सत्वं भवति । तमस्काण्डम्, मेदस्पिण्डः, अयस्काण्डमित्यादौ लक्ष्यानुसारेणेति न तु स्वमनीषिकयेत्यर्थः । तेनेह न भवति । गीः काम्यति । धूः काम्यति । क्वचिद्विकल्पः । तिरस्कर्ता,

१. अत्र च (भं०)
२. २।५।२८ (दु० वृ०)
३. २।५।२९ (दु० वृ०)

तिरःकर्ता इत्यादौ । निष्कृतम्, दुष्कृतम् इत्यादि । **निरो दुसश्च विसर्गः, तस्य सत्वम् । तस्यापि षत्वम् । दुष्पतिः, दुष्पुत्रः इति कर्मधारयावेतौ ।**

[1]पञ्चमः पादः ।

## षष्ठः पादः

**बाणपत्ये २।६।१**

अपत्यशब्दो रूढार्थानामित्यत्र कृतव्युत्पत्तिः । लिङ्गादिति षष्ठ्यन्तात्, कुतः, अपत्येनापत्यवत आक्षेपादपत्यापत्यवत्सम्बन्धे षष्ठीप्रवृत्तेः । ऋष्यन्धकेत्यादिः । ऋषयो वसिष्ठादयः । अन्धकादयो वंशाख्याः, वासिष्ठ इत्यादिः । तत्र वसिष्ठविश्वामित्रशब्दौ ऋषिवचनौ, श्वफल्कशब्दोऽन्धकवचनः, वसुदेवनकुलशब्दावपि वृष्णिकुरुवचनौ । विदादिभ्योऽपीति प्रत्ययमिमं स्मरन्ति इति सम्बध्यते । विदादिमध्ये च परस्त्री परशु चेति गणसूत्रं पठ्यते । तेन परस्त्रिया अपत्यं पारस्त्रः पारशवः । परस्त्रीशब्दः प्रत्ययमुत्पादयति । परआदेशमापद्यते । यामुनः, चैन्तितः इति यमुनाचिन्तिताशब्दाभ्यामण् । ननु अपत्यशब्दोऽयं नपुंसकलिङ्ग इति तत्र योऽत्र प्रत्ययः तदन्तस्यापि नपुंसकलिङ्गता प्राप्नोति सा कस्मान्न भवति । न भवति, अपत्यशब्देनेह प्रयोजनमात्रविवक्षितत्वात् । लिङ्गत्वं विवक्षितं स च प्रजनः सन्ततिः अपत्यम् प्रसव इति सर्वलिङ्गैरभिधीयमानो दृश्यते एवं च कृत्वा लुग्विधावस्त्रियामिति निषेधः ([2]उपपन्नः, अन्यथा त्वपत्यप्रत्ययान्तस्य नपुंसकत्वात् स्त्रियां लुकः प्राप्त्यभावादस्त्रियामिति निषेधः कस्मान्न) कर्तव्यः स्यात् । एकत्वमप्यत्र विवक्षितं तत्रैव बहुत्वग्रहणात् वा ग्रहणाद्वाक्यमपि भवति । यद्येवम्, प्रत्ययाभावपक्षे तस्यैवाभिधानं प्राप्नोति । वसिष्ठस्यापत्यमित्यादि । वसिष्ठापत्यमित्यादि समासस्तु न स्यात तद्धितोत्पत्त्या बाध्यमानत्वादस्त्येतत्, विभाषयेत्यस्यानुवृत्तेः सोऽपि भविष्यति । ऋद्धस्य वसिष्ठस्यापत्यमित्यादौ तु न भवति सापेक्षत्वात् । इत्थमन्यतोऽपि इत्यादि । एतेन ऋष्यन्धकेत्यादि यदुक्तं तत्पूर्वाचार्यप्रसिद्धप्रकृतिविशेषप्रदर्शनपरत्वेन । नन्वेतत् प्रकृतिपरिगणनं प्रकृत्यन्तरादप्यणो दर्शनादिति

---

१. शिष्यहितान्यासे शिष्यालोकाभिधाने नामप्रकरणे समासपादः पञ्चमः । (भं०)

२. न्यूनपाठः (भं०)

लक्षयति[1]। तथा च विकर्णादिभ्योऽप्यण् दृश्यते। वैकर्णः, शौङ्गः, छागलः, लक्ष्यानुसारेणेति वचनादिभ्यो वात्स भारद्वाजात्रेयेष्वेवापत्यविशेषेष्वण्प्रत्ययोऽन्यत्र त्विण्णेव भवति। एवं माण्डूक इत्याद्यप्युदाहार्यम्। इणेयणावप्यस्माद् भवतः, माण्डूकः माण्डूकिः माण्डूकेयः। संख्यासम्भद्रपूर्वायाः इति स्त्रीत्वेन निर्देशो जननीवाचिनो मातृशब्दस्य परिग्रहार्थः। तेन धान्यादीनां मातुर्ग्रहण न भवति। अणि पर इति। अपत्यार्थविहिते उरादेशो वक्तव्य इति निपातानामनेकार्थत्वाद्वा शब्दस्य बहुलार्थवृत्तित्वाद्वाच्य इत्यर्थः। तथा चापत्ये प्रत्ययान्तरमपि दृश्यते। स्त्रैणः, पौंस्नः, स्त्रीपुंसाभ्यां नण्स्नण् इत्येतौ भवतः। भवति हि समूहादिष्वप्यर्थेषु स्त्रीपुंसाभ्यामेताविष्येते। वत्यर्थे तु न भवतः, पुंवदिति ज्ञापकात्। कथं तर्हि स्त्रीवत् वा-शब्दाद् बहुलार्थात्, द्वैमातुर इति तद्धितविषये द्विगुः ततः प्रत्ययः। साम्मातुरः। भाद्रमातुरः। यथाक्रमं तत्पुरुषात् कर्मधारयाच्च प्रत्ययः। बहुलार्थाच्च वा-शब्दात् स्वार्थेऽपि यथाविधानमण् दृश्यते। प्रज्ञा एव प्राज्ञः, प्रजानातीति प्रज्ञ इत्युपसर्गे त्वातो डः। एवं प्रत्यक्ष एव प्रात्यक्षः। मन एव मानसम्, चोर एव चौरः, शत्रुरेव शात्रवः, मरुदेव मारुतः, रक्ष एव राक्षसः देवतैव दैवतम्, बन्धुरेव बान्धव इत्यादयः। कनीनादेश इष्यत इति बहुलार्थाद्वाशब्दात्, कन्याया अपत्यमिति। नन्वक्षतयोनिः कन्या सा कथमपत्येन युज्यते, अत्राहुः—विवाहपूर्वके पुरुषसम्बन्धे सति कन्यात्वं निवर्तते या तु विना विवाहसंस्कारं प्रमादात् पुंसा सह युज्यते न सा कन्यात्वं जहातीति। योगश्चायं तस्येदमित्यस्य प्रपञ्चः। तस्येदमित्यस्य विशेषा ह्येते। अपत्यं, समूहः, विकारो, निवासो अवयव इति।

**ण्यः गर्गादेः २।६।२**

वा-ग्रहणमनुवर्तत इति बहुलार्थवृत्तित्वेन इहोत्तरत्र चेति शेषः। अनुक्तविशेषसङ्ग्रहार्थं हि तदुत्तरत्राप्युपयुज्यते। एवं पौत्रप्रभृतीत्यादिः। पौत्रप्रभृतिशब्दो बहुव्रीहिः। प्रभृतिशब्दो आद्यर्थे वर्तते तेनापत्य इति सामान्येनोक्तावपि पौत्रादारभ्य यदपत्यं तत्रैवापत्ये ण्य-प्रत्ययः। येन त्वनन्तरमव्यवहितं यदपत्यं तत्राप्यत्रैव विशेषमाह। जमदग्निपराशरशब्दाभ्यां त्वित्यादिः तु-शब्दो गर्गादिभ्य एतयोर्विशेषद्योतनार्थः। कथं पुनः पौत्रादावपत्ये प्रत्ययमभिधायानन्तरापत्ये लभ्यते। बहुलार्थाद्वा शब्दात्, तथा चानन्तरापत्यविवक्षायामणण्याभ्यां दृश्यते। जामदग्नः, पाराशरः एवं मानवी प्रजा, मनुशब्दो हि गर्गादिः। अपत्यसन्ततेरित्यादि। अपत्यसन्तानस्य प्रवर्तयितृभ्यो लोके कुल-

१. दर्शयति (भं०)

व्यपदेशत्वेन प्रसिद्धेभ्यो गर्गादिभ्यो अयं ण्य-प्रत्यय इत्यर्थः। गर्गो नामकः कश्चिदिति अप्रसिद्ध इदानीन्तनः गार्गिरितीण्प्रत्ययः। अयं विशेष इति अपत्यसन्ततेरित्यादिकः। तेन कुञ्जो नाम कश्चित् तस्यापत्यं कौञ्जिः। बहुर्नाम कश्चित् तस्यापत्यं [1]बाहविः। अपत्यार्थ इति। अपत्यार्थप्रस्तावादपत्येऽर्थे इत्युक्तम्। अर्थान्तराभिधानेऽपि हि यथाभिधानं [2]द्योत्य इत्यादि प्रयुज्यत एव। पत्यन्तादप्यण् अपत्यादावर्थे दृश्यते। आश्वपतः, पाशुपत इत्यादौ। कथं दितेरपत्यं दैतेयः, उच्यते, नैष दितिशब्दादेयप्रत्ययः। किं तर्हि कृतोऽकारान्ताद् दितीशब्दात्। एवमपि लिङ्गग्रहणपरिभाषया दितीशब्दादपि ण्य-प्रत्ययः प्राप्नोति। नैतत् तस्याः परिभाषायाः अनित्यत्वादिहाग्रहणात्। अनित्यत्वं चास्याः स्वागमविधाबुक्तम्। ननु यथेत्यादि। अयं प्रश्नार्थः, इह पौत्रादावपत्ये गर्गादिभ्यो ण्य-प्रत्ययो विधीयते। ततो यथा गार्ग्य इत्यादि भवति यथा च गार्ग्यादिशब्देभ्यः कुञ्जादेराकृतिगणत्वदायनणं विधाय गार्ग्यायण इत्याद्यपि भवति। तथा पौत्राद्यर्थविवक्षायां प्रतिबन्धकाभावादायनणण्णन्तादिणि सति गार्ग्यायणिरित्याद्यपि प्राप्नोति। इण्णन्तादपि तथैवायनणि सञ्जाते गार्ग्यायणायण इत्याद्यपि रूपं भवेत्। एवं च पौत्र प्रभृत्यपत्यविवक्षायामायनणन्तात् पुनरिण् इण्णन्तादप्यायनण् इत्येवमपर्यवसितप्रत्ययमालाप्रवृत्तौ सत्यां प्रयोगपर्यवसानमेव न भवेदिति कथमत्र प्रत्ययानां व्यवस्था कर्तव्येति, उच्यते—इत्यादिना व्यवस्थामाह—अयमत्रार्थः। गर्गस्यापत्यं ([3]गार्ग्यः गार्ग्यस्यापत्यं गार्ग्यायणः) गार्ग्यायणस्यापत्यमित्यादिविग्रहे कृते पौत्रप्रभृत्यपत्यविवक्षायां वा-शब्दाद् बहुलार्थादिक एव प्रत्ययो भवति स च भवन् गर्गप्रभृतेरेवादिपुरुषाभिधायकाद् भवति न तु गार्गिगार्ग्यायणप्रभृतिभ्यः। तेभ्यो हि भवन्ननेकोऽसौ भवेत्। यद्येवम्, गार्ग्यप्रभृतेरायणन् न प्राप्नोतीत्याह—ण्य-प्रत्ययान्ताद् वा आयनण् भवतीत्येवेति कुञ्जादेराकृतिगणत्वस्मरणादिति भावः। तेनेत्यादिना प्रत्ययव्यवस्थामभिमतामुपसंहरति। यतः पौत्रप्रभृत्यपत्यविवक्षायामेक एव प्रत्ययः तेन हेतुना गार्ग्याणस्यापत्यमिति विग्रहे यो गर्गशब्दाद्विहितः प्रत्ययः स एव ण्य-प्रत्ययो भवति। एवं च गार्ग्यः गार्ग्यायणस्य वा यदपत्यं तद् गर्गस्यापत्यमिति सर्वत्र [4]गर्गशब्द एव प्रयोक्तव्यः। एवमुत्तरत्रापीति पौत्रप्रभृत्यपत्यविवक्षायामेक एव प्रत्ययो भवतीत्येव मार्गः उत्तरत्रापि

१. बाहवः (वा०)
२. दैन्यः (वा०)
३. गार्ग्यरपत्यम् (भं०)
४. गार्ग्य (भं०)

बोद्धव्यः। तेन कुञ्जादिभ्यः पौत्रादावपत्ये आयनण्णेव भवति, न तु तदन्तादिण्। इण्णन्तादप्यायनण्णिति। ननु यद् गार्ग्यायणस्यापत्यं तत्कथं गर्गस्यापत्यं स्यादित्युत्पादयितुरेवापत्ययोगं मन्यमानस्यैष प्रश्नः, एवं च गार्ग्यायणस्यापत्यस्य गर्गानपत्यतया गार्ग्यव्यपदेशो न सिध्यतीति भावः। उच्यत इत्यादिना परिहारमाह—उत्पादयितृवदपत्यसन्ततेः प्रवर्तयिता आदिपुरुषोऽप्यपत्येन सम्बध्यते इत्यादिपुरुषस्यापि हि तदपत्यं भवत्येव, कुतः, इत्याह—न पतन्तीत्यादिः। अपतनादपत्यमुच्यते, अतो योऽपि गार्ग्यायणापत्यत्वेन विवक्षितः सः अपि मूलप्रकृतेः गर्गस्यापत्यं भवत्येवेति युज्यते गार्ग्यायणापत्यस्य गार्ग्यापत्यस्य वा गार्ग्य इति व्यपदेशः।

**कुञ्जादेरायनण् स्मृतः २।६।३**

स्मृतग्रहणस्याधिक्यादकर्तव्यतां यो मन्यते तं प्रत्याह—स्मृतग्रहणमित्यादि। स्वार्थ इति प्रकृत्यर्थेन त्वपत्यर्थः। असाविति ण्य-प्रत्ययः। नन्वादिभ्योऽप्यायनयण्णन्तेभ्य इति नेष्यत इत्यपेक्षते स्मृतग्रहणलभ्यश्चायं प्रकारः पूर्वाचार्याभिहितप्रयोगविषयत्वेनायनण् न स्मर्यमानत्वात् पौत्रादावित्यनुक्तविशेषसङ्ग्रहार्थो वा शब्दो बहुलार्थः सर्वत्र हेतुत्वेन योज्यः। स्मृतग्रहणं तु तस्यैव द्योतनार्थम्। तत्रेति। अनन्तरापत्ये कौञ्जिरितीण्प्रत्ययः ण्य-प्रत्ययान्तं कुञ्जादिगणमध्ये पठन्तीति कुञ्जादेराकृतिगणत्वात्।

**स्त्र्यत्र्यादेरेयण् २।६।४**

सौपर्णेयो वैनतेयः इति सुपर्णी-विनता-शब्दाभ्यामेयण्प्रत्ययः। सुपर्णी-शब्दः पाकाद्यन्ताद् इतीप्रत्ययान्तः स्त्रीग्रहणेन स्त्रीप्रत्ययान्ताश्शब्दा इह गृह्यन्त इत्येतेनाकद्रवा इति निषेधारम्भात् स्वरूपं न गृह्यते इति दर्शयति। न स्त्रीवाचिन इति। नापि स्त्र्यर्थवाचिनश्शब्दाः गृह्यन्ते, तद्ग्रहणेन सत्याशीरादिभ्योऽपि ([1]अस्त्रीप्रत्ययान्तेभ्य एयण् प्रसज्येत) यद्येवम्, कृतिप्रभृतिभ्योऽपि स्त्रीप्रत्ययान्तेभ्य एयण् प्राप्नोतीत्याशङ्क्याह—प्रत्यासन्नाच्चेत्यादि। च-शब्दोऽवधारणे प्रत्यासन्न एवेत्यर्थः। इत्याद्या अत्र्यादयः इति। एवं प्रकारा अत्र्यादयः। अत्र्यादेराकृतिगणत्वात्। तथा च पितृस्वसुरपत्यं पैतृष्वसेयः, इवर्णावर्णाविति व्युत्क्रमपाठादृकारलोपः एवं ([2]भुवोऽपत्यं भौवेयः) वा

---

१. स्त्र्यर्थवृत्तेभ्य एयण् प्रसज्यते (मं०)

२. भ्रुवोऽपत्यं भ्रौवेयः (मं०)

शब्दाद्बहुलार्थात्कार्यान्तरद्योतनफलाद्वकारागमः। तथा च क्वचित् स्त्रीप्रत्ययान्तादपि न भवति। कुञ्चाया अपत्यं क्रौञ्चः, कुञ्चाशब्दोऽजादिः। एवं वडवाया वृषे वाच्ये वडवाया अयं वृषो वाडवेयः, अपत्ये त्वण्णेव भवति। वाडवः सौभागिनेयः दौर्भागिनेयः इति क्वचित् पूर्वपदोत्तरपदयोर्युगपद् वृद्धिरिष्यत इत्युभयपदवृद्धिः।

**इण्णतः २।६।५**

अतोऽकारान्तादित्येतेन। अत सातत्यगमन इत्ययं क्विबन्तः धातुरिह न गृह्यते इति दर्शयति। कौरव्यासुरीत्यासुरिशब्दस्येण्णन्तस्य निर्देशाद् [1]इति दर्शयति। यद्येवम्, अस्यापत्यमिः अत्रानकारान्तत्वान्न प्राप्नोति। अन्तवद्भावाद्भविष्यति। दाक्षिरित्यादि। वेत्यनुवृत्तेः वाक्यमपि भवति। इणभावे त्वण्प्रत्ययो न भवत्यनभिधानात्। इण्प्रत्ययान्तादायनणं स्मरन्तीति कुञ्जादेराकृतिगणत्वात्, दाक्षायण इति। दाक्षिशब्दादिण्णन्तादायनण्, आदिति कर्तव्ये तपरकरणमाकारनिवृत्त्यर्थम्। कीलालपो अपत्यं कैलालपः। अणि कृते इवर्णावर्णावित्याकारलोपः, इह तु "प्रदीयतां दाशरथाय मैथिलीम्" इति दशरथशब्दात्तस्येदमित्यत्रार्थेऽण्प्रत्ययः। अपत्यविवक्षायां तु इणैव भवितव्यम्। यदि तर्हि जातिवाचिभ्य इण् नेष्यते, कथं कुतश्चरति मायूरिरित्यादौ प्रयोगे मयूरकपिञ्जलशब्दाभ्यां जातिशब्दाभ्यामिण्णित्याह—कुतश्चरतीत्यादिः। वा-शब्दाद् बहुलार्थादेवमादिः सेत्स्यतीत्यर्थः।

**बह्वादेश्च विधीयते २।६।६**

बाहविरित्यादि। उवर्णस्त्वोत्वमापाद्य इत्योत्वम्। इह येऽनकारान्ताः पठ्यन्ते ([2]तेषां प्रत्ययविध्यर्थः पाठः येऽप्यकारान्तास्तेषां बाधकबाधनार्थः। अजीगर्तयुधिष्ठिरप्रद्युम्नार्जुनप्रभृतयो हि पठ्यन्ते) तेषामण्प्रत्ययः प्राप्तः स बाध्यते। सुधातृशब्दस्येत्यादि। उपलक्षणपरत्वेन तदुक्तम्। तेनेदमपि सिद्धम्। व्यासस्यापत्यं वैयासकिः, [3]नैषादकिः।

**रागान्नक्षत्रयोगान् समूहान् सास्य देवता २।६।७**

(रागान्नक्षत्रयोगाच्च समूहात्सास्यदेवता तद्वत्यधीते तस्येदमेवादेरणिष्यते।)

---

१. न्यूनपाठः (वा०)

२. न्यूनपाठः (मं०)

३. नैषादिकः (मं०)

रज्यते येन सः राग इति व्यञ्जनान्ताच्चेति घञ् रञ्जेर्भावकरणयोरिति पञ्चमलोपः इह समूहग्रहणेनैवमादिग्रहणेन च समूहेऽर्थे, एवमादौ चार्थे प्रत्ययो विधित्सितः। ततश्च समूहादेरर्थस्य भावेऽण् प्रत्ययस्य भाव इत्येवमर्थ-[1]व्याख्याने सत्यर्थत्वेन अभिमतात् कालभावयोरित्यादिना सप्तमी न्याय्या तत्कथं समूहादेवमादेरिति चेत्यादि। सप्तम्याः स्थाने प्रसङ्गे प्राप्तौ सत्यां हेताविति विचित्रत्वान्निर्देशस्य [2]पञ्चम्या कृते हेतुत्वं चार्थेनापि व्यवस्थितस्य समूहादेर्युक्तमेवेति सामर्थ्यात् समूहादावर्थे सत्यण्प्रत्यय इत्ययमत्रार्थो जायते। तेन रक्तमित्यत्रार्थे इति येन रज्यते कुङ्कुमादिना सः तेनेति निर्दिश्यते। अयं चात्रार्थो अध्याह्रियत इति शब्दशक्तिस्वाभाव्याद्रागविशेषवाचिनश्शब्दात्तेन रक्तमित्यत्रैवार्थेऽण्प्रत्ययस्य दर्शनादिति भावः। नक्षत्रयोगादण् भवतीति पुष्यादिसम्बन्धादण्प्रत्ययस्य कर्तुमशक्यत्वान्नक्षत्रयोगादित्येषा पूर्ववद्धेतौ पञ्चमी, तेन नक्षत्रयोगादण् भवतीति अत्र नक्षत्रयोगे सत्यण् भवतीत्ययमर्थो जायते। कस्य पुनः नक्षत्रेण योगे सति, प्रत्यय इत्यर्थकथनद्वारेण कालस्य नक्षत्रेण योगे सति प्रत्यय इत्याह—नक्षत्रेणेत्यादि। एतेन पुष्येण युक्तश्चन्द्रमा इत्यत्र न भवति। ननु कालविशेषमवधारयितुं लोके पौषमहः पौषी रात्रि-रित्यादि प्रयुज्यते। एवं च कालविशेषावधारणहेतुरिह योगोऽभिप्रेतः। सः च तयोरेव भवति। ययोस्सन्निकर्षापकर्षौ स्तः। यथा पुष्यचन्द्रमसोः। न च नित्यस्य विभोश्च कालस्य नित्येन नक्षत्रेण सन्निकर्षोऽस्त्यपकर्षो वा येन तयो-स्सम्बन्धवाचो युक्तिरन्विता स्यात्। अत्रोच्यते—नामी पुष्यादयोऽभिव्ति-यानीत्यामुख्येऽर्थे वर्तमानाण्प्रत्ययमुत्पादयन्ति, किन्तर्हि, पुष्यादिसमीपस्थे चन्द्रमसि वर्तमानः। एवं च पुष्यादिसमीपस्थेन चन्द्रमसा कालस्योपपद्यते योगः। तदवस्थस्य चन्द्रमसः [3]कादाचित्कत्वात्। तेन पुष्येण युक्तः काल इत्यस्यायमर्थः पुष्ययुक्तेन चन्द्रमसा युक्तः काल इति। ननु नक्षत्रेण युक्तः काल इत्यत्रार्थे प्रत्ययः क्रियमाणः प्रकृतिविशेषानुपादानात् लिङ्गमात्रात् प्रसज्येत इत्याह—नक्षत्रयोगादिति। यद्यपीत्यादि कुतो विना वचनं नक्षत्रा-दयं प्रत्ययो लभ्यत इत्याह—नदीत्यादि। अन्यस्मादित्यनक्षत्रात् ([4]यद्येवम्, उक्तेन न्यायेन पौषमास इत्यादिकालनियमः कुतः, उच्यते—नात्र कालनियमः, किन्तर्हि, सास्मिन् पौर्णमासीति पूर्वाचार्यवचनादण्प्रत्ययः) कथमित्यादि।

---

१. व्याख्याते (मं०)

२. पञ्चम्यो (मं०)

३. कदाचित्कत्वात् (मं०)

४. न्यूनपाठः (मं०)

तेन रक्तमित्यस्यासम्भवात् प्रश्नः, उपमानादयं प्रयोग इति गौर्वाहीकः इत्यादि प्रयोगवत्। लाक्षारोचनेनेत्यादिः। रागादित्यणि प्राप्ते इकणो विधानम्। शकल-कर्दमाभ्यां तु बाहुलकादणपि भवति। शाकलं कार्दमम्। वक्तव्यादिति। तिष्यपुष्ययोः अणि परे य-लोपो वक्तव्य इत्यस्मात्। यदेत्यादि। अत्र च वा शब्दहेतुः। कालसामान्यस्य इति। यत्र अहरादिलक्षणो विशेषो नावभासते तत्कालसामान्यम्। तेनाणो लुकि सति अद्य पुष्यः, अद्य तिष्यः इत्याद्येव भवति। एतच्च पुष्येण युक्तः काल इति कालनक्षत्रयोः भेदविवक्षया प्रत्यय-श्रवणे प्राप्ते उक्तम्। यदा तु तयोरभेदविवक्षा तदा प्रत्ययाभावात् पुष्यादिभ्य प्रत्ययस्योत्पत्तिरेव नास्तीति किं लुक्वचनेन। हांसमित्यादि समूहेऽर्थेऽणन्तः-स्वभावान्नपुंसकार्थवृत्तिः। राजकमिति। [1]पूर्ववन्न लोपः। राजन्यकं, मानुष्यकमिति। राजन्यमनुष्यशब्दाभ्यां जातौ प्रत्ययार्थे स्मृत[2]यप्रत्यया-भ्यामकः प्रत्ययः। एवं यथाभिधानमपत्यप्रत्ययान्ताद् वृद्धशब्दाच्चाकण् वक्तव्यः। उपगता गावो यस्य उपगुः तस्यापत्यानि औपगवाः तेषां समूहः औपगवकम्। एवं वार्धकम्। यण् चेति च-शब्दात् अकणिकणावपि भवतः। कैदारकम्, कैदारिकम्। कावचिकम्, कावचकमिति। नस्य तु क्वचिदिति न लोपः। इवर्णावर्णलोपः। धेनुशब्दात् कण् वक्तव्य इति नञ्पूर्वात् तु नेष्यते। बाहुलकात्, आधैनुकम्, आधेनवम्। अण्प्रत्ययः। अचित्तवाचिन इति। न विद्यते चित्तं यस्य तथाविधार्थवाचिन इत्यर्थः। क्वचित्त्वणपि तस्माद् भवति। अह्नां समूह आह्नम्। हस्तिनाम् समूहो हास्तिकमिति। लिङ्गग्रहणपरिभाषया हस्तिनीनां समूहो हास्तिकम्। पुंवदिति योगविभागात् पुंवद्भावः। वात्येति। स्वभावात्स्त्रीवृत्तिः। पशूनां समूहः, पाशवम्। बाहुल-कादोत्वाभावः। तथा केशाश्वाभ्यां यणीयौ वा, [3]कैश्यम्, आश्वीयम्। पक्षे केशशब्दात् अचित्तवाचिन इकण्, कैशिकम्। अश्वशब्दात्त्वण्, आश्वम्। एवं खलगोरथेभ्य इन्, ञ, त्र, कड्य, य-प्रत्ययश्च। खलिनी गोत्रा, रथ—कड्या, खल्या, गव्या, रथ्या। समूहेऽण्विधिः। तस्येदमित्यस्य प्रपञ्चः। ऋतुवायुशब्दाभ्यामित्युपलक्षणे एते। अनेन पितृ-उषस् इत्येताभ्यामपि यः, पित्र्यः, उषस्यः। अण्सन्नियोगेन कार्यान्तरमपि। कः प्रजापतिः, स देवता अस्य, स कायः तद्वेत्ति तदधीते इत्यधीत इत्यत्र तदित्यस्याभिसम्बन्धात् तदधीते

१. पूर्ववदन् लोपः (भं०)
२. य प्रत्ययाभ्यामकण् (भं०)
३. कैशम (भं०)

इति पृथगयमर्थनिर्देशः। तेन योऽधीते न च वेत्ति तत्रापि भवति। अर्थावबोधश्चात्र वेदनमभिप्रेतम्। न तु स्वरूपमात्रवेदनम्। अन्यथा यो यदधीते तदवश्यमेव सः स्वरूपतो वेत्ति इति किं तदधीत इत्यनेन कृतं स्यात्। तथैवेति। एतयोरर्थयोरित्येषोऽत्र प्रकारार्थः क्वचिच्चाध्येतृवेदित्रोरणो लुक्। द्वौ वेदौ वेत्ति अधीते वा द्विवेदः, त्रिवेदः, चतुर्वेदः, सर्ववेदः, सर्वतन्त्रः। क्वचिदकणपि। अग्निष्टोमिकः, वाजपेयिकः, राजसूयिकः, ऐतिहासिकः, पौराणिकः, लाक्षिकः, लाक्षणिकः, क्वचिदिकप्रत्ययः, शतपथिकः। तस्येदमिति सम्बन्धमात्रमत्र विवक्षितम्। लिङ्गसंख्यादिकं तु नान्तरीयकत्वात् शब्दोपात्तमपि न विवक्ष्यते। तेनास्येदम्, तस्यैतत्, इत्यादावपि सर्वत्र प्रत्ययः। तस्यानन्तरं तस्य समीपमित्यादौ त्विदमर्थविशेषेऽनन्तरादौ प्रत्ययो न भवत्यनभिधानात्। रथात्तु य-प्रत्यय इष्यते। रथस्येदं रथ्यम्, रथाङ्गमेवोच्यते। पत्रपूर्वात्त्वणेव। पत्रं वाहनम्, आश्वरथम्। हलसीराभ्यामिकण्। हालिकम्, सैरिकम्। युष्माकमयं युष्मदीयः अस्मदीयः। इदमर्थे ईयः ईनणपि। यौष्माकीनः। आस्माकीनः। अणपि यौष्माकः, आस्माकः। युष्मदस्मदोर्युष्माकास्माकौ बाहुलकात्। एवं तवायं तावकीनः, ममायं मामकीनः। एवं तावकः मामकः। निवसन्ति यस्मिन् सः निवास इति व्यञ्जनान्ताच्चेत्यधिकरणे घञ्। तत्र भव इत्यत्रार्थे प्रत्ययान्तरमपि। आहेयम् ग्रैवेयम्। ग्रीवाया अणपि। ग्रैवम्। तत आगत इत्यत्रार्थे प्रत्ययान्तरमपि। शुल्कशालाया आगतम्, शौल्कशालिकम्। एवमापणिकम्, औपाध्यायकम्। शैष्यकम्, आचार्यकम्, पैतामहकम्, पैतकम्, मातृकम्, मातुलकम्। भ्रातृकम्। स्वसृकम्। [1]पितृकम्। इकण् अकण् य इत्येते प्रत्ययाः अन्यत्राप्यर्थे इति। ततः प्रभवतीत्यस्मिन्नर्थे हि भवतः। प्रभवति हैमवती गङ्गा। तेन कृते ग्रन्थे। वररुचिना कृतो ग्रन्थः वाररुचः। एवं क्षुद्रभिः कृतं क्षौद्रम्। भ्रामरम्। तत्र संस्कृतः भक्ष्यः। किलोश्यां संस्कृतो [2]भक्ष्यः कैलोशः। प्रत्ययान्तरस्थमपि। शूले संस्कृतं शूल्यं मांसम्। एवमुखायां संस्कृतम् उख्यं दाधिकम्। [3]औदश्वितकम्। क्षौरेयम्। इकण् कण् एयण् एते प्रत्ययाः। एवं चक्षुषा गृह्यते चाक्षुषं रूपम्। श्रवणेन गृह्यते श्रावणः शब्दः इत्यादि यथा प्रयोगमुन्नेयम्।

---

१. पित्र्यकम् (वा०)

२. भक्षाः (भं०)

३. ओदनं श्वितकम् (वा०)

**तेन दीव्यति संसृष्टं तरतीकण् चरत्यपि पण्याच्छिल्पान्नियोगाच्च क्रीतादे-रायुधादपि २।६।८**

आयुध्यतेऽनेनेत्यायुधमिति युधेराङ्पूर्वात् घञर्थे [1]कः, नियुज्यते यस्मिन् सः नियोगः इत्येतेनाधिकरणसाधनोऽयं नियोगशब्दो [2]द्वाराधिकेऽर्थे वर्तत इति दर्शयति। तेनेत्येतत् पदमिति। नन्वानन्तर्याद्दीव्यतीत्यनेनैव तेनेत्यस्याभि-सम्बन्धो न्याय्यः, न तु संसृष्टादिभिः। अस्त्येतत्, किन्तु तैरवश्यं किञ्चि-त्साधनमपेक्षितव्यम्, तन्न युक्तम्, यत्सूत्रोपात्तेनैव बुद्धौ परिस्फुरता तेनेत्यनेन तेषां सम्बन्धो न श्रूयते। न साधनान्तरेणेति क्रीतादेरिति पञ्चमीत्यादिपूर्व-वद् व्याख्येयम्। पण्यादिति। पणितव्यः, पण्यो गन्धादिरुच्यते। तस्मात् प्रत्ययः कस्मिन्नर्थे इत्याह—तदस्य पण्यमित्यत्रार्थे इति क्तः, शब्दशक्तिस्वा-भाव्यात्। गान्धिकादिशब्देन हि गन्धादिः यस्य पण्यं स एवोच्यते। शिल्पा-दिति। यद्यभ्यासपूर्वकं क्रियासु कौशलं शिल्पमिति। ततः प्रत्ययः कर्तुमशक्यः तत्राप्यर्थात् शिल्पस्य विषयभूतो यो मृदङ्गवादनादिर्यद्विषयं तच्छिल्पम्। तद्वृत्तेर्मृदङ्गादिशब्दात् प्रत्ययो विज्ञायते, क्वार्थ इत्याह—तदस्य शिल्पमित्य-त्रार्थे शब्दशक्तिस्वाभाव्यं चात्र हेतुः। अक्षैर्दीव्यति इत्याक्षिक इत्यक्षैरिति करणे तृतीया। तेनेत्यस्य [3]करणीतृतीयान्तत्वात्। कर्तृतृतीयान्तत्वं त्वेतन्न भवति, दीव्यतीत्यादि व्याख्यातेनैव कर्तुरभिहितत्वात्। हेतुतृतीयान्तमपि न भवति, अक्षादीनां देवनादिक्रियायाः प्रति व्यापृतत्वावगमात्। अनाश्रित-व्यापारश्चार्थो हेतुरुच्यते। यथोक्तमनाश्रित्य व्यापारो योग्यता[4]पात्रयुक्तो द्रव्यगुणक्रियाविशेषोऽर्थो हेतुरिति। इह च तेन दीव्यतीत्यादौ संख्याकालौ न विवक्ष्येते, तेन संख्यान्तरे कालान्तरेऽपि प्रत्ययः। यद्येवम्, एकपदोपात्तस्य कर्तुरप्यविवक्षा स्यात्। नैवम्। एवं हि सति क्रियामात्रमवश्यमेवोपादान-सामर्थ्याद्विवक्षणीयमिति तद्विवक्षार्थं युडादिना भावार्थाभिधायिना निर्देशं कृत्वा देवन इत्यादि निर्देशं कुर्यात्। दिवतीत्यादि तु न निर्दिशेत्, तस्माद् दीव्यती-त्यादिनिर्देशाज्ज्ञायते परस्मैपदवाच्यः कर्ता अत्र विवक्षित इत्याक्षिकादिकश्च शब्दः तद्धितान्तो दीव्यतीत्यादौ क्रियामात्रप्रधाने अप्यर्थे व्युत्पादितः कर्तृ-प्रधानः शब्दशक्तिबलात्। दध्ना संसृष्टमिति। संसृष्टमेकीभूतं लवणादिकणिति

---

१. क प्रत्ययः (भं०)

२. दूरादिके (भं०)

३. करण (भं०)

४. मात्र (?)

संसृष्टार्थविहितस्य लक्षणेन संसृष्टमिति लवणाख्येन द्रव्येणेत्यर्थः। चूर्णिन्य इति। ऋन्नेभ्यस्त्वी, जस्। वेणुभारेण तरतीति। तरति प्लवत इत्यर्थः। अनिमज्जनं ह्यत्र तरतेरर्थः। अथाभिभवार्थवृत्तिः कस्मान्न गृह्यते। यथा तरति मृत्युमिति। उच्यते—यदि सः गृह्यते, ततोऽभिभूयमानलक्षणेन कर्मणा तरतेः सकर्मकत्वात्कर्मापेक्षायां सत्यां प्रकृत्यर्थेन सह तरत्यर्थस्यानन्वयः प्रसज्येत। मृदङ्गवादनं शिल्पमस्येति। नन्वेवं विग्रहे सति मृदङ्गवादनशब्दादेव प्रत्ययः प्राप्नोति न तु मृदङ्गशब्दादिति चोद्यमाशङ्क्याह—तद्धितान्त इत्यादि। अत्र वादयतीति वादन इति वादनशब्दो वादयितरि पुरुषे प्रवर्तते। एतेन च शब्दशक्तिस्वाभाव्यात् मृदङ्गवादनवृत्तेर्मृदङ्गशब्दादयं प्रत्ययः, न तु मृदङ्गवादनशब्दादिति दर्शयति। अन्येन च विग्रहोऽन्यस्माच्च प्रत्ययो दृश्यत एव। यथा ([1]अवेत्सां ममाविकमिति)। अथ देवदत्तेन क्रीतमित्यत्रापि प्रत्ययः कस्मान्न भवतीत्याह—प्रत्ययोऽयमित्यादिः स्मर्यत इत्यनेन कर्तुरनभिधानात् प्रत्ययाभावमाह—तथा च मूल्यादेव करणात् प्रत्ययोऽयमिष्यते न तु पणिना क्रीतमित्यादौ पण्यादेरपि करणात्। एवं प्रस्थाभ्यां क्रीतं प्रस्थैः क्रीतमिति द्विर्वचनबहुवचनान्तादपि प्रत्ययो न भवति। प्रत्ययाद् द्वित्वबहुत्वानवगमात् प्रकरणात् तदवगमेऽपि प्रत्ययो भवति नो वेत्यत्र ([2]तत्त्वविदः प्रमाणम्। मुद्गैः क्रीतं मौद्गिकमित्यत्र) बहुवचनान्तेऽपि प्रत्ययः। मुद्गादिशब्दानां तद्धितवृत्तौ बहुत्वावगमात्। नह्येकया मुद्गव्यक्त्या क्रयस्सम्भवति। आदिग्रहणादिति क्रीतादेरित्यस्मादर्थान्तरेऽपीत्युक्ते क्वान्यत्रार्थ इति प्रश्नावसरे आह—तदस्य परिमाणमित्यत्रार्थ इति प्रास्थिको राशिरिति। एवं वर्षशतं परिमाणमस्य वर्षशतिकः, वर्षसाहस्रिकः। तेन खनतीत्यत्रार्थे इत्येतत् पदद्वयं सर्वत्र सम्बध्यते। वेतनेन जीवति वैतनिकः इति। एवं धानुर्दण्डिकः, धानुष्कः दाण्डिकः, नान्य इत्यनभिधानात्। धर्मेण चरतीति पुनः पुनः धर्ममासेवत इत्यर्थः। एवं साधर्मिकः। तेन वर्तत इत्यत्रार्थे इति वर्तते चेष्टते इत्यर्थः। सर्वधुरा-शब्दात् तथैवेति। वहत्यर्थः प्रकारार्थः। सर्वधुरीणः इति सर्वा चासौ धूश्चेति, अकारस्समासान्तः तत आप्प्रत्ययः। अस्तिनास्तिशब्दाभ्यां निपाताभ्यामिति, न त्वाख्यातप्रत्ययान्ताभ्याम्। कुतः, लिङ्गप्रकरणत्वात्। अथ सामान्याभिधानेऽप्यस्ति। परलोक इति। सति रम्येत्येष विशेषः। कुतो लभ्यते, तेन सति सत्तामात्रे प्रत्ययस्स्यादित्याशङ्क्याह—परलोककर्तृके

१. अपठनीयः।

२. न्यूनपाठः (भं०)

प्रकृत्यर्थे प्रयोगावेतौ स्मर्येते इति प्रकृत्योरस्तिनास्तिशब्दयोः भावाभाव-लक्षणोऽर्थः। तत्र परलोको यदा कर्ता भवति तदा अस्तिनास्तिशब्दाभ्यां प्रत्यय इत्यर्थः। इत्थमादिग्रहणात् तेन जयति, अक्षैर्जयति आक्षिकः, तेन संस्कृतम्। दध्ना संस्कृतं दाधिकम्। सतः उत्कर्षाधानं संस्कारः। अणपि क्वचित्। कुलत्थैः संस्कृतं कौलत्थं, अक्षद्यूतेन निवृत्तमाक्षद्यूतिकम् वैरम्। दध्नोपसिक्तं दाधिकम्। एवं घातिकं। प्रतिलोमं वर्तते प्रातिलोमिकः एव-मानुलोमिकः, प्रातिकूलिकः, आनुकूलिकः। प्रतिलोमादिभ्यः क्रियाविशेषण-त्वात् द्वितीया। समाजं रक्षति सामाजिकः, संशयं प्राप्तः सांशयिकः। योजनं गच्छति यौजनिकः, क्रोशशतं गच्छति क्रौशशतिकः, यौजनशतिकः। तदस्य शीलम्। अपूपभक्षणं शीलमस्य आपूपिकः, मौदकिकः। एवमावसथे वसति, आवसथिकः। हलं वहति हालिकम्। सैरिक इत्यादय.। क्वचित् स्वार्थेऽपि। विनय एव वैनयिकः, समय एव सामयिकः, औपयिकः। पा-शब्दस्य ह्रस्वं बाहुलकात्। अकस्मादेवाकस्मिकम्। एवमात्ययिक इत्येवमादयः। धनुरायुध-मस्य धानुष्कः, इति धनुस् इत्यस्यानव्ययविसृष्ट इति सत्वम्। शक्तियष्टीभ्यामीकण्वक्तव्य इत्यपिशब्दात् तथा च तीयप्रत्ययान्ताद् विद्या[1]विनयाद् अन्यत्र स्वार्थेऽपीकण् दृश्यते विकल्पेनैतत् ([2]द्वैतीयीकम्, तात्रीयीकम् द्वितीयम्, तृतीयम्) यकम्, द्वैतीय तात्रीय किं ता तात्तीयं द्वितीयं तृतीयं विद्याविषये द्वितीया विद्येत्येव भवति।

**नावस्तार्ये विषाद्वध्ये तुलया सम्मितेऽपि च तत्र साधौ यः २।६।६**

तार्ये इति तरतेः, तरितुं शक्य इति शक्येऽर्थे [3]ण्यः प्रत्ययः। वध्य-शब्दोऽर्हेऽर्थे यः प्रत्ययान्तः। सम्मित इति। द्यतिस्यतीत्वम्। य इति स्वरूपेणार्थे-नार्थवत्वात् प्रथमा। इत्थं सर्वत्रैवं प्रकारे विषये प्रथमा, तुला-शब्दात् सम्मिते परिच्छि-नेऽर्थे इति फलव्याख्यानमेतत्। तुलया सम्मितेऽर्थे हि प्रत्ययः क्रिय-माणः तुला-शब्दादेव विज्ञायते। तेनान्यस्मात् लिङ्गात् तत्र साधुरित्यत्रार्थ इत्येतेन साध्वर्थे तुला शब्दोऽनन्तरोऽपि न प्रकृतिरिति दर्शयति। एतच्च तुला-शब्दान् साध्वर्थस्यानवगमाल्लभ्यते। नावा तार्यमित्यादि। नौविषशब्दाभ्यां करणतृतीयान्ताभ्यां यः प्रत्ययः। प्रत्ययार्थसामर्थ्यलभ्यत्वात् तृतीयान्तत्वस्य नाव्यमिति कार्याववावावित्यवादेशः। तुलया सम्मितं तुल्यमिति शब्द[4]व्युत्पत्तये

---

१. विषयात् (भं०)
२. न्यूनपाठः (वा०)
३. ण्यण् (भं०)
४. व्युत्पत्त्या (भं०)

केवलमत्र त्वलोपादीयते । सदृशपर्यायस्त्वयं तुल्यशब्दः । सभायां साधुः सभ्य इति । प्रवीणो योग्यो वा साधुः । तत्र प्रावीण्यं चित्तवतां धर्मो योग्यत्वं पुनः सामर्थ्यं सर्वत्र भक्ताण्णः प्रत्ययो इति साधौ चेति च-शब्दात्, तथा च प्रत्ययान्तरमपि, प्रतिजने साधुः प्रातिजनीनः । जनं जनं प्रतिजनम्, अव्ययीभावः । एवं सार्वजनीनः महाजनीनः, पर्षदि साधुः पार्षदः, य प्रत्ययोऽपि पार्षद्यः । कथायां साधुः काथिकः, एवं [1]जानवादिकः, गौणिकः, साङ्ग्रामिकः, औपवासिकः । पाथेयमिति । व्यञ्जने चेषां निरिति न लोपः । दण्ड्यः इति दण्डमर्हतीत्यर्थः । एवं मधुपर्क्यः, अर्घ्यः, एभ्यः अर्हार्थादर्थान्तरेऽपि । य-प्रत्यय इष्यते स्वर्गः प्रयोजनमस्य स्वर्ग्यः, यशस्यः, आयुष्यः । कालः प्राप्तोऽस्य काल्यः । तरसा निर्जितः तरस्यः । अणपि औरसः, धर्मशब्दात् प्राप्ये चार्थ इति । ननु धर्मेण यत्प्राप्यं तद्धर्मादनपेतं भवति । एवं चानपेत इत्येव प्राप्येऽपि सिद्धो य-प्रत्ययः । नैतत् । धर्माद्धि तदनपेतमुच्यते यदनपेतं धर्मात्, यथा धर्म्यो राजा, धर्म्या बुद्धिरिति । धर्मेण प्राप्यं तु यत्फलं तद्धर्म्यम्, तच्च फलं धर्मादनपेत्यैव धर्मोत्पत्तिसमनन्तरं देशकालसहकारि [2]बाहुल्यात् फलस्यादर्शनात् । अतोऽनपेतार्थेनासिद्धत्वात् प्राप्ये चार्थ इति पृथगुक्तम् । हृदादेशो वक्तव्यः इति बाहुलकात् ।

**ईयस्तुहिते २।६।१०**

हिनोतिस्मेति । हि गतावित्यस्मात् गत्यर्थाकर्मकेति क्तः, दधातेर्वा, धीयतेस्मेति क्तप्रत्यये कृते हिरादेशः । शरीरावयवादिति शरीरावयववाचिनो लिङ्गात् । ऐतिकायनीयः । इतिकस्यापत्यमित्यायनण्प्रत्ययः । तस्येदमित्यत्रार्थेऽपीति लिङ्गसम्बन्धवाचिनो ये स्वरा इत्यादि सर्वमपेक्ष्यते । एवं पूर्वोक्तान्युदाहरणानि । माहिष्मतीय इत्यादीनि कण् ईय् इत्येताविष्यत इति शन्तृङ्ङन्तात् [3]अणेव । भवत इदं भावतम्, भवदीयम्, अन्तर्वर्तिनीं विभक्तिं प्रत्ययलक्षणेनाश्रित्य [4]पदत्वात्तीयः, भ्रात्रीयः इति । व्य-प्रत्ययोऽपीष्यते । भ्रातुरपत्यं भ्रातृव्यः । शत्रुपर्यायस्त्वपर एव भ्रातृव्यशब्दः । एवमन्यतोऽपि यथादर्शनमीयप्रत्ययः । एवमन्तस्थायां भवः अन्तस्थीयः । मुखतो भवः मुखतीयः । पार्श्वतीयः । अन्त्यस्वरादिलोपः बाहुलकात् । एवं कवर्गीयः चवर्गीयः

---

१. जानपदिकः (भं०)

२. वैकल्यात् (वा०)

३. अणपि (भं०)

४. पदत्वादी (?)

पवर्गीयः इति। एवं सर्वस्मै हितं सर्वीयम्। अणपि सार्वम्। पुरुषाय हितं पौरुषेयम्। बाहुलकात् एयः प्रत्ययः। वधविकारसमूहः, तेन कृतेष्वपि पौरुषेयो वधः। विकारस्समूहो ग्रन्थो वा। आत्मनीनमिति। नस्य तु क्वचिदिति क्वचिद् ग्रहणान्नलोपाभावः। एवमन्यतोऽपीनप्रत्ययः। विश्वे च ते जनाः विश्वजनाः। तेभ्यो हितं विश्वजनीनम्, एवं पञ्चजनीनम्, सार्वजनीनम्। सार्वजनिकमित्यपीष्यते।

**यदुगवादितः २।६।११**

उगवादित इत्यसर्वनाम्नोऽपि पञ्चम्यन्तात्तस् इष्यत इति तस्-प्रत्ययः। शङ्कव्यम्, परशव्यम् इति। उवर्णस्त्वोत्वमापाद्यः, कार्याववावावित्यवादेशः। एवं वधव्यमित्यत्रापि। यदित्येको योगः कर्तव्यः इति तेनानुगवादिभ्योऽपि यद् भवतीति भावः। दिश्यमिति गत्वमत्र न भवति, यकारे तद्धिते तस्याभिष्यमाणत्वात्। तथा च विरामव्यञ्जनादिष्वित्यत्रोक्तम्। एवमुत्तरत्रापि यकारे तद्धिते न भवतीति इत्याद्युदाहार्यमिति। आदिग्रहणेन पथ्यं, पक्ष्यं, [1]आद्यम् इत्यादयः। सम्बन्धिशब्दादिति। जाया जनकत्वेन लोके प्रसिद्धा। एतच्च बाहुलकाल्लभ्यते। श्वाशुरिरितीण् प्रत्ययः। शुन्शब्दो गवादिषु पठ्यते। तस्य बाहुलकात् शूनं शून्यमिति च रूपे भवतः। एवमूधसोऽप्यूधन्य इति। ऊधस्शब्दो हि गवादिषु पठ्यते। सस्य तु नत्वम्, बाहुलकात्।

**उपमाने वतिः २।६।१२**

उपमीयते येन तदुपमानमिति करणे युट्। तत्पुनः प्रसिद्धं यत्सादृश्यात्परस्य परिच्छेदायोपादीयते। ततो वतिप्रत्ययो भवतीति। स च भवन् सर्वविभक्त्यन्ताद् भवति। उपमानोपमेयभावस्य सर्वस्य विभक्त्यर्थविषयत्वात्। विभक्त्यर्थविशेषावसायस्तूपमेयाद् बोद्धव्यः। [2]तथा चाहुः—उपमाने यः संशयः स उपमेयाद् व्यावर्तत इति सादृश्यमात्रे च प्रत्ययविधानात् क्रियागुणद्रव्यतुल्यत्वेऽपि सर्वत्र वति-प्रत्ययः। ब्राह्मण इवाधीते ब्राह्मणवदिति ब्राह्मणशब्दोऽत्र ब्राह्मणार्थसहचरितायामध्ययनादिक्रियायां वर्तमानप्रत्ययमुत्पादयति। अन्यथा क्षत्रियाध्ययनस्य कथं ब्राह्मणेन तुल्यता स्यात्। एवं देवदत्तवत् स्थूलः, देवदत्तवद् गोमान् इत्यादि गुणद्रव्यतुल्यत्वमुदाहार्यम्।

---

१. गव्यम् (भं०)

२. तथा च वदत्युपमाने यस्तूपमेयाद् बोद्धव्यः तथा च वदति (भं०)

**ता त्वौ भावे २।६।१३**

भावेऽर्थे लिङ्गात् ता-त्वौ भवत इति तत्र भावशब्दोऽयमभिप्रायार्थवृत्तिरिह न गृह्यते। देवदत्तस्याभिप्राय ईश्वराराधने इत्यत्रापि देवदत्तशब्दात् प्रत्ययप्रसङ्गात्। पदार्थवृत्तिरप्यस्ति सोऽपि न गृह्यते तस्मिन् हि गृह्यमाणे सति शुक्लता शुक्लत्वमिति शुक्लादिभ्यो गुणवृत्तिभ्यो भावप्रत्ययोपजाते सति गुणपदार्थस्यैवाभिधानं प्राप्नोति न गुणमात्रस्य तस्य चाभिधानमिष्यते। एवं च पदार्थवृत्तौ भावशब्दे गृह्यमाणे प्रकृत्यर्थात् प्रत्ययार्थस्य [1]तेनावभासनात् स्वार्थ एव ता-त्वौ भवेताम्। न चैवं ता-त्वप्रत्ययान्तादर्थान्तरावगमात् सत्तावृत्तिरपि नायं भावशब्दः। एवं हि सति गोत्वादिशब्दानां सह सामान्यरूपा-सत्तार्थत्वेनावतिष्ठते न तु विशिष्टा गोत्वादिजातिः। अथ मतम्, अच्छ-स्वभावापि सह सामान्यरूपा सत्ता गोत्वादिभेदोपहिता रागा सती विशिष्ट-गोत्वादिजातिविषया विज्ञास्यत इत्येवमप्यभावत्वं शून्यत्वमित्यादावभावादि-शब्दानां सत्तासमवायविरहात् प्रत्ययेन भवेत्, तस्माच्छब्दप्रवृत्तिनिमित्तमिह भावशब्दस्यार्थः। तच्चानेकप्रकारम्। तथाहि जातिशब्दानां जातिः प्रवृत्तौ निमित्तम्। गोत्वमिति गुणशब्दानामपि गुणः शुक्लत्वमिति। क्रियाशब्दा-नामपि क्रियावाचकत्वमिति। यदृच्छाशब्दानामपि डित्थादीनां संज्ञासंज्ञि-सम्बन्धः। डित्थत्वमिति। कौमाराद्यवस्थाभेदप्रकल्पितभेदानां तेषां सर्वा-वस्थानुयायिनी वा जातिप्रवृत्तौ निमित्तम्। तच्च शब्दप्रवृत्तिनिमित्तभूतं गोत्वादिवस्तुगतमपि शब्दप्रवृत्तावुपायभूतमिति कृत्वा शब्दसम्बन्धित्वेन कथ्यते ततस्तत्र वाच्यः भावप्रत्ययः। गोता गोत्वमित्यत्र यदा गोशब्दो जात्यवच्छिन्ने द्रव्ये वर्तते तदा जातेः प्रवृत्तिनिमित्तत्वात् तस्यां भावप्रत्ययः। जातिप्रवृत्ते तु-शब्दस्वरूपे प्रवृत्तिनिमित्तान्तरस्याभावात्। रूपादिभ्योऽपि गुण-मात्रवृत्तिभ्यो गुणसामान्ये शुक्लादिभ्योऽपि तथाविधेभ्यस्तत्रैव शुक्लस्य गुणस्य भावः शुक्लता शुक्लत्वमिति शुक्लगुणजातिरित्यर्थः। गुणगुणिनोर-भेदोपचारात्। गुणवृत्तिभ्यस्तु तेभ्यो गुणे शुक्लस्य पटस्य भावः शुक्लता शुक्ल-त्वमिति शुक्लो गुण इत्यर्थः। अणुमहद्दीर्घादिभ्योऽपि परमाणुवृत्तिभ्य परि-माणमात्रे समासकृत् तद्धितेभ्यः सम्बन्धे राजपुरुषादिशब्देभ्यो हि जायमानो भावप्रत्ययः स्वस्वाम्यादिसम्बन्धमवगमयति। ततः स एव तेषां प्रवृत्ति-निमित्तम्, राजपुरुषता राजपुरुषत्वम्। पाचकता पाचकत्वमिति क्रियाकारक-सम्बन्धः। औपगवता औपगवत्वमित्यपत्यापत्यवत् सम्बन्धः कुम्भकारादिभ्यो

---

१. भेदानवभासात् (भं०)

रूढिशब्देभ्यो जातिविशेषावच्छिन्नद्रव्यवृत्तिभ्यो जातौ भावप्रत्ययः। ननु कुम्भकरणक्रियाश्रयेण कुम्भकारादिशब्दानां प्रवृत्तेः क्रियैव तेषां प्रवृत्तौ निमित्तं स्यात्। अस्त्येतत्, किन्त्वेमादयः कृत्प्रत्ययान्ताः संज्ञाप्रायाः रूढिरूपतयैवार्थमवगमयन्ति। तथा च अकुर्वत्यपि कुम्भं कुम्भकारमानयेत्युक्ते तज्जातीयमेवानयति। तस्माज्जातावेवात्र भावप्रत्ययः। सतां भावः सत्ता सत्त्वमिति [1]सत्पदार्थविषयायां नित्यसमवायिन्यां शब्दप्रवृत्तिनिमित्तभूतायां सत्तालक्षणायाः जातावेव हस्त्यादिभ्योऽपि स्वजातावेव धवखदिरत्वमिति जातिसमुदाये अत्वमित्यादावपि विविधव्यक्त्युदीरितानेकाकारं व्यक्तिसमवेते अत्वसामान्ये। गोभावो गोता गोत्वमिति। वाहीकस्य भावो वाहीकत्वमिति वाहीकगतेषु जात्यादिषु गुणेषु देवदत्तादिभ्यः कौमाराद्यवस्थाभेदभिन्नद्रव्यसमवायिनि सामान्ये चन्द्राकाशाभावादिशब्देभ्योऽपि अवस्थाभेदात् प्रदेशभेदात् सम्बन्धिभेदाच्च यो भेदः [2]तत्समवायिनि सामान्ये युगपदित्यस्य भावो यौगपद्यम्। नानेत्यस्य भावो नानात्वमिति। एककालतायां पृथग्भावे च। एवमन्यत्रापि विशेषसमवायिनि सामान्ये भावप्रत्ययः तदर्थमत्र राद्धान्ताः सर्वेऽमी शब्दाः स्वाभिधेये वाचकत्वेन प्रवर्तमानास्सन्तः स्वप्रवृत्तावश्यं किञ्चिन्निबन्धनमपेक्ष्यन्ते। तदेव च भावप्रत्ययान्तात् [3]प्रतीयते। देवात्स्वार्थ इत्यादि स्वार्थः प्रकृत्यर्थः इति।

**यण्च प्रकीर्तितः २।६।१४**

कृतेश्चुरादित्वादित्यत एव ज्ञापकादीकारादेशः, क्त-प्रत्ययः, इट्, निष्ठेटीनः यण्च भवतीति चकारात् ता-त्वौ च। ननु तौ पूर्वेणैव सिद्धौ, सत्यम्। किन्त्वयं प्रत्ययोऽभिधानवशात् गुणवचनादन्यतोऽपि ब्राह्मणादेः प्रायेणेष्यते। तत्रानेन यणा तत इष्यमाणेन ता-त्वयोर्बाधो मा भूदिति चकारेण तौ समुच्चयेते। सूत्रार्थानङ्गत्वात् प्रकीर्तित ग्रहणमनर्थकमिति यो मन्यते तं प्रत्याह—प्रकीर्तितग्रहणमित्यादि। कर्मणीति कर्मशब्दोऽत्र क्रियावाची न तु साधनकर्मवचनः ब्राह्मणादिशब्दानां द्रव्यवचनानां साधनकर्मणा सम्बन्धानुपपत्तेः। यथा दर्शनमिति। दर्शनं प्रयोगव्यवस्थालक्षणमनतिक्रम्येत्यर्थः। तथा च पौरुषमिति केवलात् पुरुषशब्दात् अण्प्रत्ययः, न तु समासस्थात्। अपुरुषता अपुरुषत्वमिति। लाघवमित्यादौ उवर्णास्त्वित्यौत्वम्। एवं सुहृत् सौहार्दम्, दुहृत् दौहार्दम्। सुहृदयदुर्हृदयशब्दयोः मित्रामित्रार्थे सुहृद्दुर्हृदित्येतौ निपात-

१. सन्तृ (भं०)
२. तत्समवायिनि (?)
३. प्रतीयात् (भं०) डानु (वा०)

यन्ति । सुभ्रातृ सौभ्रात्रम्, दुर्भ्रातृ दौर्भ्रात्रम् । श्रौत्रमित्यादयोऽणन्ताः बोद्धव्याः । श्रोत्रियस्यात्रियशब्दो लुप्यते बाहुलकात् । इमन्प्रत्ययो दृश्यत इति । अपि शब्दादणपि । पार्थवं मार्दवं लाघवं गौरवं, पृथुतेत्येवं ता-त्वावपि भवतः । प्रकीर्तितग्रहणात् प्रत्ययान्तरमपि । स्तेनस्य भावः कर्म वा स्तेयम् । न लोपो बाहुलकात् । स्तैन्यमपीष्यते । सख्युः भावः कर्म वा सख्यम् । एवं दूत्यम्, वणिज्याय प्रत्ययः । कपेर्भावः कर्म वा कापेयम्, एयण् । रामणीयकम् । साहायकम् । अकण्-प्रत्ययः । स्वार्थेऽपि क्वचित् । यण् च प्रकीर्तितग्रहणादेव चत्वार एव वर्णाः चातुर्वर्ण्यम् । एवं चातुराश्रम्यम् । चातुरूप्यम् । त्रैलोक्यम् । त्रैरूप्यमित्यादौ ।

**तदस्यास्तीति मन्त्वादयः २।६।१५**

आदौ भव आद्य इति यदुगवादित इति योगविभागात् मन्तु-वन्तु-विन्-इन् इत्याद्याः भवन्तीति । प्रयोगवशेन मन्त्वादीनां बहुप्रकारत्वादिति भावः । अवर्णान्तादवर्णोपधादित्यादि । अवर्णग्रहणेन जातिपक्षसमाश्रयणादकाराकारौ गृह्येते किं [1]शिडन्तात्सर्वस्मान्नेत्याह—शिडन्तवर्जितादिति यवादीन्वर्जयित्वेति । यवाः [2]कुसि कुन्सि कुञ्चा द्राक्षा इत्येवमादयः ये यवादयः प्रयोगतो परिदृष्टवन्तु-प्रत्ययाः तान् परिहृत्येत्यर्थः । सुगणवानिति । गण संख्याने चुरादित्वादिन् । अस्य च लोपः । शोभनं गणयति इति क्विप्, कारितलोपः । प्रशान्वानिति । शसेः प्रपूर्वात् प्रशास्तीति क्विप् । पञ्चमोपधेति दीर्घः । मोनो धातोरिति मस्य नत्वम् । आयुष्मानिति मन्तुः, अनव्ययविसृष्टस्त्विति सत्वम्, षत्वम् । [3]स्रग्धीति । चवर्गेति गः, एभ्यो वन्तुरपि दृश्यते इति वानुवृत्तेः । इन्प्रत्ययस्त्वेकस्वरात्कृतो जातौ नेष्यते । स्ववान्, कारकवान्, व्याघ्रवान् । सत्यभिधाने तु क्वचिदिष्यते । [4]कार्यी तण्डुलीति शब्दादित्यादि । अस्येति षष्ठ्यर्थे विधीयमाना मन्त्वादयोऽस्मिन्निति सप्तम्यर्थे न प्राप्नुवन्तीत्यधिकविषयसमुच्चयार्थादिति शब्दाद् भवन्ति । शालयो विद्यन्ते यस्मिन्निति सप्तम्यर्थोऽत्र कोष्ठागारादिः विवक्षितो यत्र षष्ठ्यर्थो न सम्भवति । [5]अथेह कस्मान्न भवति—चित्रा गावो यस्य सः चित्रगुरिति । न भवति, अस्त्यर्थस्य बहुव्रीहिणैवोक्तत्वात् । यद्येवम्, चित्रगोमानिति न सिध्यति ।

१. धात्वन्त्यात्सन्नेष्यत इत्याह (भं०)
२. कृमिकुन्सि (भं०)
३. स्रग्वीति (?)
४. कारी (भं०)
५. अत्र हि (भं०)

अन्यपदार्थेन तद्वत्तायाः प्रतिपादनात् सेत्स्यति । चित्रा गावोऽस्य सन्तीत्यत्र तु न भवति, गोपदस्य विशेषणमपेक्षमाणस्य सतः [1]प्रत्ययार्थेन सहानन्वयात् । इहैते मन्त्वादयः ([2]भूमिनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः ।) भूमादिषु भवन्तीति केचिन्मन्यन्ते । भूम्नि बहुत्वे तावत्, गावोऽस्य सन्तीति गोमान् । निन्दायाम् कुष्ठी, प्रशंसायाम् रूपवती कन्या, नित्ययोगे क्षीरिणो वृक्षाः, अतिशये उदरिणी कन्या, संसर्गे दण्डी, संसक्तदण्ड उच्यते । अन्ये त्वाहुः—सत्यपि भूमादिपरिग्रहे विशिष्टमेव बहुत्वमभिधानवशादाश्रयणीयम् । अन्यथा त्रिप्रभृतिष्वपि बहुत्वस्याविवक्षितत्वात् तत्रापि मन्त्वादयो भवेयुः, तद्वरमनाश्रयणमेव भूमादीनां ज्यायः । यत्र त्वेका गौरस्तीत्यादौ नेष्यते । तत्रानभिधानमेव शरणम् । गुणवाचिभ्यो मन्त्वादयो ([3]नेष्यन्त इति । यद्येवम्, रूपवतीकन्या, गन्धवती पृथिवीत्यादौ रूपादिभ्योऽपि गुणेभ्यो मन्त्वादयो) न प्राप्नुवन्तीत्याह—ये गुणाः गुणमात्र इत्यादि । गुणमात्रे वर्तन्ते, स्वात्मन्येवावतिष्ठन्त इत्यर्थः । ननु सर्वस्य गुणस्य स्वात्मन्यवस्थानं न सम्भवति, द्रव्याश्रयत्वात् इति कथं गुणमात्रे ये गुणा वर्तन्त इत्युक्तम्, सत्यम् । शब्दव्यापारापेक्षयैतदुक्तम् । तथाहि केचिद् गुणाश्शब्देन द्रव्यनिष्कृष्टा एव प्रत्यायन्ते न तु द्रव्यस्योपरञ्जनकत्वेन । यथा कन्यायाः रूपमिति । अत्र हि सर्वदा वैयधिकरण्यमेव गुणगुणिनोः न तु सामानाधिकरण्यम् । नहि भवति रूपं कन्येति । अपरे तु गुणाः शुक्लादयः कदाचिद् द्रव्यान्निष्कृष्टाश्शब्दैरुच्यन्ते यथा—पटस्य शुक्लो गुण इति । कदाचिदनिष्कृष्टाः द्रव्यमनुरञ्जयन्ते । यथा पटः शुक्लः इति । तत्र ये गुणाः गुणमात्रेण गुणवति चाभेदोपचाराद् द्रव्ये वर्तन्ते शुक्लादयस्तेभ्यो गुणवाचिभ्यो मन्त्वादयो नेष्यन्त इत्यत्र प्रतिषेधग्रहणेन गृह्यन्ते न तु सर्वदा ये गुणमात्रवृत्तयो द्रव्येण सह वैयधिकरण्यमापन्नाः रूपादयः । तेन तेषां प्रतिषेधे गुणग्रहणेनाग्रहणान्मन्त्वादयो भवन्त्येव । एतच्च वा-शब्दाद् बहुलार्थादवगम्यते, तथा च मन्त्वादिप्रत्ययान्तान्मन्त्वादयः सरूपाः नेष्यन्ते । तेन गोमन्तोऽस्य सन्तीति पुनर्मन्तुर्न भवति । विरूपास्तु भवन्त्येव, दण्डो विद्यन्ते येषां ते दण्डिन , ते विद्यन्ते यस्यां शालायां सा दण्डिमती । इन्नन्तादपि मन्तुः ।

ननु सम्भवे व्यभिचारे च विशेषणविशेष्यभावो युक्तः । यथा— नीलोत्पलयोः । न च तच्छब्दवाच्योऽर्थोऽस्तीत्येतद्विशेषणं व्यभिचरति । यथोक्तम्

---

१. प्रत्ययात् (भं०)

२. न्यूनपाठः वा )

३. प्रमादादङ्कितम् ।

[1]न पदार्थः सत्तां व्यभिचरतीति । [2]अतो बुद्धिसत्तायाः एव सर्वशब्दप्रवृत्तौ कारणत्वात् । तदस्यास्तीति एतद्विशेषणमर्थादवाप्यत एवेति किमर्थमस्ति-[3]ग्रहणेन, उच्यते—विशिष्टायां सत्तायां वर्तमानकालावच्छिन्नायां यथा स्यात् । भूतभविष्यसत्तायां मा भूदित्येवमर्थमस्तिग्रहणम् । तेनेह न भवति । गावो स्यासन्, गावोऽस्य भवितार इति गोमानासीत्, गोमान्भवितेति [4]प्रयोग-योस्तु साधुत्वं धातुसम्बन्ध इत्यनेनैव तत्रैव [5]वक्ष्यते । प्रज्ञारजश्शब्दाभ्या-मित्यादि-मन्त्वादय एवामी प्रकृतिविशेषावग्रहेणैवमुच्यन्ते इति मन्तव्यम् । रजोऽस्ति यस्याः सा रजस्वलेति । रजोऽस्मिन्पथि विद्यत इत्यत्र न भवत्य-नभिधानात् । तपस्सहस्राभ्यामिति प्रदर्शनमात्रमेतत् । अन्यतोऽपि यथाभि-धानमणो दर्शनात् । तथा च ज्योत्स्नास्मिन्निति ज्यौत्स्नः पक्षः । एवं तामिस्रः । वक्तव्य विषय इति । प्रज्ञारजश्शब्दाभ्यामित्यादिना कथिते यथा-प्राप्तग्रहणेनावर्णान्तादवर्णोपधादित्यादिविशेषपरिहारेण मन्त्वादय एष्टव्य इति दर्शयति । तेन प्रज्ञावान् तपस्वी सहस्रीत्याद्यपि भवति । सुखादिभ्य-स्त्विन्नेव दृश्यते इति । तेन सुखवानित्यादिः न भवति । जातावर्थे—इति विशिष्टायां जातावित्यर्थः । पद्मकमल-इत्यादि प्रदर्शनमात्रमेव । उत्पलिनी, बिसनी, मृणालिनीत्यादेरपि दर्शनात् । देशविशेषवाच्य इति समुदायेन विशिष्ट-देशाभिधाने सतीत्यर्थः । याञ्चावाचिनोऽर्थशब्दादिति । अर्थनमर्थः इत्यर्थ-यतेश्चुरादीन्नन्तादलि सति योऽस्त्यर्थशब्दः क्रियापदार्थकः तस्मादिन्प्रत्ययो भवतीत्यर्थः । अर्थीति । याञ्चावानित्यर्थः । अर्थवानिति द्रव्यवाचिनोऽयम-त्रार्थशब्दः, न तु याञ्चा वचन इति । वन्तुप्रत्यय एवास्माद् भवति । एव-मादयोऽन्येऽपि प्रत्ययाः इत्यादि । तेन प्राण्यङ्गवाचिनो तदन्ताल्ल-प्रत्ययः । चूडालः, अन्यतोऽपि चुडुलः । मांसलः, यूकालः, मक्षिकालः, सूर्कालः, वत्सलः, अंसलः, फेनलः, इल्-प्रत्ययोऽपि अमुतः फेनिलः । लोमानि सन्त्यस्य लोमशः, ऊषोस्मिन्नस्ति ऊषरं क्षेत्रम् । कृषीरस्यास्तीति कृषिवलः । बाहुलकाद् दीर्घः । ऊर्जा अस्यास्तीत्यूर्जस्वी, ऊर्जस्वलः । अमागमः पूर्ववत् । फलमस्यास्तीति फलिनः, बर्हिणः । यथादर्शनम् अर्थान्तरेऽपि मन्त्वादयः । हिमं न सहते हिमिलः, वलं न सहते [6]वलूलः । एवं वातूलः । वातसमूहोऽपि वातूलः । ऊर्णा

---

१. न्यूनपाठः (भं०)
२. यथा (भं०)
३. ग्रहणम् (वा०)
४. प्रत्ययोस्तु (वा०)
५. वक्ष्यति (भं०)
६. वलूरः (भं०)

यस्यास्तीत्यूर्णायुः। स्वमस्यास्तीति स्वामी, स्वशब्दादामिन् प्रत्ययः। वातो ऽस्यास्तीति वातकी, अतिसारकी, पिशाचकी, किन् प्रत्ययः। एवम् अहंयुः शुभंयुः। अहं शब्दोऽत्राहङ्कारवृत्तिः। शुभंशब्दोऽत्र शुभार्थे वर्तते।

**संख्यायाः पूरणे डमौ २।६।१६**

एकादश संख्या येन पूर्यते सः एकादश इति। कुतः, उच्यते—संख्याया इतीयं पूरणशब्दापेक्षया कर्मणि षष्ठी तेन संख्यायाः पूरणे डमौ प्रत्ययौ भवतः। अर्थात् संख्याया एवेत्यस्यार्थस्य घटनात् दशस्ववस्थितेषु [1]येनोपजाते-नैकादश संख्या सम्पद्यते। स एवैकादशशब्दव्यपदेश्यो भवति। तेन पञ्चा-नामुष्ट्रिकाणां पूरणो घटः इत्यत्र म-प्रत्ययो न भवति। ह्युष्ट्रिकाणां द्रव्यान्त-रेण यदतिरिक्तीकरणं तत्पञ्चत्वसंख्यायाः पूरणं भवति। नह्यत्र घट उप-जाते सति पञ्चत्वसंख्या सम्पद्यते। किं तर्हि, अवाप्तपञ्चत्वसंख्यानामुष्ट्रि-काणां द्रव्यान्तरेणातिरिक्तता क्रियते। नान्तायास्संख्याया इत्यादि। बाहु-लकादेष विषयविभागः। शेषाया इति। या संख्यादिः तस्याः।

**द्वेस्तीयः २।६।१७**

द्विशब्दादित्येतेन शब्दमात्रविवक्षा तात्पर्यात् सर्वनामकार्यं त्यदाद्यत्वं द्विशब्दस्य न कृतमिति दर्शयति। एवमुत्तरत्राप्येवं प्रकारेषु निर्देशेषु त्यदाद्य-त्वाभावो मन्तव्यः, ज्ञापकात्सिद्धावपि योगाविभागारम्भो ड-प्रत्ययबाधनार्थः।

**त्रेस्तृ च २।६।१८**

त्रेरिति शब्दमात्रविवक्षायामेकत्वनिर्देशः, त्रेश्च तृ-आदेशः इति न तु प्रत्ययः। प्रत्ययत्वविज्ञाने सति पूरणार्थाप्रतीतेरिति भावः।

**अन्तस्थो डेर्षोः २।६।१९**

र च षश्चेति विग्रहः। षकारो विधीयमानः रेफषकारान्तसंख्याविधि-भाक्। अन्त इति षकारस्य विशेषणम्, ड इति निमित्तं संख्याया इत्येवेति। सा च रेफषकाराभ्यां प्रत्येकमभिसम्बध्यते। तदाह—रेफान्तायाः षकारा-न्तायाश्च संख्याया इति। थकारागमो भवतीति, कथं पुनः आगमशब्दं विना थकारागमत्वं शक्यमवगन्तुमित्याह—अन्तशब्द इत्यादि। अन्तशब्द-स्यात्र विशिष्टदेशावयववाचित्वेन प्रसिद्धत्वादिति भावः। चतुर्थः षष्ठ इति रेफषकारयोरत्र विसर्गरुत्वे न भवतः लिङ्गस्य रेफषकारान्तत्वात् कृते

1. येनापजायत एकादश (भं०)

थकारागमेऽन्त्यस्वरादिलोपेनाकार लोप इति थकारागमस्य सस्वरत्वात्। तथा च कतिपयथ इत्यादि सिद्धं भवति। अथ थकारागमात् पूर्वमन्त्यस्वरादिलोपो लोपविधेर्बलवत्वात्कस्मान्न भवति इत्याह—प्राक्तु थकारागमादित्यादि। रेफषकारयोरभावात् योगारम्भस्य वैफल्यं स्यादित्यर्थः। तत्र चागमादेशपरिभाषाप्रवृत्तिलक्षणे सत्यपि परिहारे प्रत्यासन्नतया योगारम्भवैफल्यलक्षणः परिहारः उक्तः। न च क्रियतामन्त्यस्वरादिलोपो योगारम्भसामर्थ्यात्। भूतपूर्वौ रेफषकारावाश्रित्य थकारागमो विज्ञास्यत इति शक्यते वक्तुम्। नानिष्टार्थशास्त्रप्रक्लृप्तिरिति वचनात्। षष्ठी चतुर्थीति ज्ञापकं स्त्रीत्वविषय एव षष्ठ्यादिशब्दसाधुत्वं गमयेन्न तु विषयान्तरज्ञापकेन सिद्धावसत्यां योगारम्भः।

**कतिपयात् कतेः २।६।२०**

द्वे पञ्चम्यौ वैचित्र्यात्।

**विंशत्यादेस्तमट् २।६।२१**

एकेनाधिका विंशतिरेकविंशतिरिति लोप्या इत्यर्हे-प्रत्ययनिर्देशादधिकशब्दस्य लोपः। ड-प्रत्ययो भवतीति संख्यायाः पूरण इत्यनेन।

**नित्यं शतादेः २।६।२२**

ननु यश्शतादिस्सः षष्ठ्यादिरिति षष्ठ्याद्यतत्परादित्यनेनैव शतादेरपि [1]उपसिद्ध इति नार्थोऽनेन योगेनेति पूर्वपक्षयति। नन्वित्यादिना मासार्धमासेत्यादि एतच्च पूर्वत्र वा इति कर्तव्ये योगारम्भसामर्थ्याच्चेह नित्यविधिविज्ञाने सिद्धे सति यन्नित्यग्रहणमधिकं ततो लभ्यते।

**षष्ठ्याद्यतत्परात् २।६।२३**

षष्ठ्यादेः संख्याशब्दात् इति नवत्यन्तात्। एकषष्ठितम इत्येकेनाधिका षष्ठिरिति विग्रहः।

**विभक्तिसंज्ञा विज्ञेया वक्ष्यन्तेऽतः परस्तु ये।**
**अद्व्यादेस्सर्वनाम्ना किं बहोश्च पराः स्मृताः॥ २।६।२४**

अत इत्येतदस्तेषु त्वेतदकारतामिति। अत्वं परमिति वचिक्रियाविशेषणत्वाद् द्वितीयान्तम्। विभक्तिरिति संज्ञा येषामिति विभक्तिरित्येषशब्दः संज्ञा येषामित्यर्थः। किं बहोरिति समाहारे द्वन्द्व इति। यद्येवम्, द्वन्द्वैकत्वमिति

1. तमट्-सिद्धः (?)

नपुंसकत्वान्नामिन इति नुरागमस्स्यात्, न भविष्यति । अनित्यमागमशासनमिति वचनात् ये तसादयः प्रत्ययाः वक्ष्यन्त इति प्राक्तसादिसंकीर्तनात् किं बहोश्च परा भवन्तीति । ननु किं-शब्दस्य सर्वनामत्वादेव सिद्धमिति किं तस्य पृथगुपादानेनेत्याह—अद्व्यादेरिति प्रतिषेधः प्राप्तः इत्यादि । त्यादीनां यत्परं तच्छिष्यत इति पूर्वाचार्यवचनेन भवांश्च कश्च काविति किमः शेषो यथा स्यात् । भवच्छब्दस्य तवच्छब्दस्य मा भूदिति द्व्यादिकत्वं किमोऽवश्यमभ्युपगन्तव्यम् । एवं च द्व्यादिलक्षणं प्रतिषेधं प्राप्तं बाधितुं सर्वनामापि किंशब्दः पृथगुपादीयते । सत्यां विभक्तिसंज्ञायां त्यदाद्यत्वमिति तद्विभक्तौ कार्यं त्यदादीनामविभक्ताविति वचनात् । कुतः । कुत इति तहो कुरिति कुरादेशः । इह संख्याग्रहणानुवृत्त्या बहुशब्दः संख्यावचनो गृह्यते । न वैपुल्यवचनः । तेनेह त्रतसौ न भवतः । बहोः सूपेः, बहोस्सूपादिति । द्वाभ्यां द्वयोरिति त्यदाद्यत्वम् । अकारो दीर्घमिति दीर्घः । सर्वनामकार्य एवेत्यादि सर्वनाम्नः परे तसादयः क्रियमाणाः सन्निधानात् कार्ये एव कर्तव्ये विभक्तिसंज्ञां लभन्ते, न लिङ्गकार्येऽपि । तेन किं सिद्धं भवति इत्याह—तेनेत्यादि । तस्मिन्काले, कस्मिन्काले इति विगृहीते तदो दा दानीमाविति दा-प्रत्ययः, किम अपि । किं सर्वेत्यादिना । अत्राकारो दीर्घमिति दीर्घो न भवति, दा-प्रत्ययस्याविभक्तिकत्वात् । अविभक्तित्वं तु दीर्घस्य लिङ्गकार्यत्वात् । यत्तु सर्वनामकार्यं मत्वा कादेशलक्षणं तद्भवत्येव ।

**तत्रेदमिः २।६।२५**

इदमिति लुप्तषष्ठीकम् । क्वचित्पूर्वपराविति सर्वस्येत्यन्त्यादेशशङ्कां निरस्यति ।

**रथोरेतत् २।६।२६**

एतदिति लुप्तप्रथमाद्विवचनम् । रेफादौ थकारादौ चेति यस्मिन्विधिस्तदादाविति वचनात् तदादित्वं लभ्यते ।

**तेषु त्वेतदकारताम् २।६।२७**

तु-शब्दस्थाः प्रत्यये निषेधद्योतनार्थः । तेनेह न भवति । एतेन प्रकारेण च तथा तेष्विति द्वितकारपाठे तु प्रमाणं नास्ति, येन तकारादिषु तेषु विभक्तिसंज्ञकेषु अकारादेश इति व्याख्या युक्तिमती स्यात् ।

**पञ्चम्यास्तस् २।६।२८**

तसोः विसर्गाभावः स्वरूपभङ्गभयात् । अद्व्यादेः सर्वनाम्न इत्यादि-

प्रकृतिनिर्देश उक्तोऽप्यबुधबोधनाय स्मर्यते । तस्प्रत्ययो भवतीत्येतेन तसादयोऽमीप्रत्ययाः न तु विभक्त्यादेशः इति दर्शयति । कथं पुनरेतदवगम्यते, तसादीनां विभक्तिसंज्ञारम्भात् । विभक्त्यादेशत्वे हि तेषां विज्ञायमाने सति स्थानिवद्भावेनैव त्यदाद्यत्वादिकार्ये संसिद्धे विभक्तिविधानं सफलं स्यात् । एवमस्त्विति चेत् तर्हि कुतः, कुत्र तेषु तत्रेत्यादौ यथाक्रममोत्वमेत्वं च प्रसज्येते, ततः प्रत्ययत्वमेव तसादीनां ज्यायः, अमुतः इति अदसः पदे मः, उत्वं मात् । युष्मदस्मद्भ्यां तस्वक्तव्यः इति द्व्यादित्वान्न सिध्यतीति नञा निर्दिष्टपरिभाषया वाच्य इत्यर्थः । अत्पञ्चम्यद्वित्व इति ङसिभ्यामोरदादेशं कृत्वा त्वत् मत् युष्मत् अस्मदिति विगृहीतवान् । त्वत्तः मत्त इति त्वन्मदोरेकत्व इति त्वन्मदी । असर्वनाम्नोऽपीत्यादि । अत्र च प्रयोगतश्चेति निर्देशो हेतुः । ओहाङ्-रुहीत्येतयोरिति । ओहाङ् त्यागे, रुहबीजजन्मनि इत्यनयोः प्रयोगे तु न भवति, अनभिधानादिति भावः । ([1]सार्थाद्धीयते इति सार्थस्यापादानस्यापि) सतो [2]दैवतं त्यजतः । कर्तृत्वमस्तीति कर्त्रपेक्षया देवदत्ते कर्मणि जहातेरात्मनेपदम् । यण् । दामा गायतीतीत्वम् । मन्त्रो हीनः स्वरतो वर्णतो वेत्यत्र तु तस्प्रत्ययो बाहुलकात् । स्वरादिशब्दात्तृतीयान्तान्मन्तव्यः । हीन इति च जहातेरिहापगमनार्थत्वात् गत्यर्थलक्षणो गत्यर्थाकर्मकेति क्तः । यस्मादन्यस्मादित्यादि । एतेनाद्व्यादेराकृतिगणत्वं बोधयति । सर्वार्थ इत्यादि । तेन परिषिञ्चति, अभियातीत्यादौ न भवति ।

**किमः कुहेति [3]२।६।२६**

कुहेति तहोः कुरिति कुभावः । छन्दसीति वेदविषये, तेन भाषायां कुहेति प्रयोगाभावः ।

**अत्क्व च [4]२।६।३०**

अत्प्रत्ययो भवतीति त्रप्रत्ययापवादः पक्षे सोऽपि भवति बाहुलकात् ।

**काले किं सर्वयदेकान्येभ्यः एव दा [5]२।६।३१**

कदेति किं कः, एवकारो वैचित्र्यार्थ इति निपातानामनेकार्थत्वाद्विशेषा-

---

१. सामर्थ्याद्धीयत इति सामर्थ्यापादानस्यापि (भं०)
२. देवदत्तं (भं०)
३. २।६।३१ (दु० वृ०)
४. २।६।३२ (दु० वृ०)
५. २।६।३४ (दु० वृ०)

न्तरसमुच्चयलक्षणेन विचित्रेणार्थेन सार्थक इत्यर्थः। तदेव विशेषान्तरमाह—सर्वशब्दस्येत्यादि।

**इदमोर्ह्यधुनादादानीमौ [1]२।६।३२**

सर्वनाम्नो यथा दर्शनमित्यादि दर्शनं प्रयोगानुभवतः, तमनतिक्रम्य इत्यर्थः। तेनाद्यतन एव कालविशेषे हि प्रत्ययो न कालसामान्ये।

**सद्य आद्या निपात्यन्ते [2]२।६।३३**

निपात्यन्त इति द्वे पदे, पतेरिन्नन्तस्य कर्मणि यणि कारितलोपः, साधुत्वेन कथ्यन्त इति लक्षणेनासङ्ग्रहात्। समानशब्दस्य द्यस्प्रत्ययो निपात्यत इति कालविशेषे यत्र निमित्तनिमित्तिनोः नैरन्तर्यं प्रतिपादयिषितं तत्र यथा सद्यः शूलहरमौषधमित्यस्मिन्नहनीति वाक्यमिति। अहः शब्दोऽत्राहोरात्रवृत्तिः। यथा त्र्यहमुपोष्य भुङ्क्त इति।

**पुरस्तादादयश्च २।६।३४**

पूर्व-अवर इत्येतेभ्य इत्यादि यथासंख्यसम्बन्धोऽत्र न भवत्यनित्यत्वाद्यथासंख्यपरिभाषायाः। अनित्यत्वं चास्य स्वपिवचीत्यादौ वक्ष्यति। दिगादिवृत्तित्वं सप्तम्यादि[3]विभक्त्यन्तं चात्र निपातनाल्लभ्यते। सर्वमन्यत्पूर्ववदिति दिगादिवृत्तित्वं सप्तम्यादिविभक्त्यन्तसम्बन्धः पुराद्यादेशविधानं चेत्यर्थः। एवमूर्ध्वायाः दिश आगतः, उपर्यागतः, उपरिष्टादागत इत्यादि मन्तव्यम्। उत्तराधरदक्षिणशब्देभ्य एव प्रत्ययो निपात्यत इति सप्तम्यन्तेभ्यः पञ्चम्यन्तेभ्यः प्रथमान्तेभ्यश्च निपातसामर्थ्यात्। एवमुत्तरस्यां दिशि, उत्तरात्, उत्तरस्याः दिशि उत्तरात्, ([4]उत्तरादिक् उत्तरात्) अधरात्, दक्षिणात्। आत्प्रत्ययः। अपरस्यां दिशि पश्चात्। अपरशब्दस्य पश्चादेशः। आच्च प्रत्ययः। दक्षिणस्यां दिशि दक्षिणतः, उत्तरतः। अतस्प्रत्ययः। एवं परतः, अवरतः, पुरस्तात्, अवरस्तादित्यादयः। योगश्चायं पृथक्पठ्यमानो [5]न पुराण इव दृश्यते।

---

१. २।६।३६ (दु० वृ०)
२. २।६।३७ (दु० वृ०)
३. वृत्तित्वम् (वा०)
४. न्यूनपाठः (वा०)
५. न्यूनपाठः (मं०)

**प्रकार वचने तु था [1]२।६।३५**

प्रकारस्य वचन इति सामान्यस्य मनुष्यत्वादेरवच्छेदको विशेषोऽध्ययनादिप्रकार उच्यते, तस्याभिधान इत्यर्थः। वचनग्रहणं तु सप्तम्यादिविशेषपरिहारेण प्रकारमात्रोक्तो यथा स्यादित्येवमर्थम्। तेनेह सप्तम्या काल इति वचनापेक्ष्यते। संख्याया धा प्रत्ययो वक्तव्य इति तु शब्दात्।

**आख्याताच्च तमादयः [2]२।६।३६**

आख्याताच्चेत्यन्तान्नीतलिङ्गलक्षणप्रकृतिको निर्देश इति प्रथमं लिङ्गस्यावधित्वं प्रदर्शयन्नाह—लिङ्गादिति। आख्याताच्चेति। आख्यातशब्देन त्यादय उच्यन्ते। पटिष्ठ इत्यादि। इवर्णावर्णाविति व्युत्क्रमपाठात् पटुलघुशब्दयोरुकारलोपः। अतिशयेऽर्थ इति लिङ्गस्यैतद्विशेषणम्। तच्च वा शब्दस्य बहुलार्थस्यार्थविशेषावस्थापकत्वाल्लभ्यते। प्रकृतिविशेषावग्रहोऽप्यत एव हेतोः। तथा चाह—इष्ठेयन्सौ त्वित्यादि प्रशस्य-अन्तिक-अल्प-इत्येतेभ्यश्चेति। अगुणवाचित्वादेषां पृथगुपादानम्। च शब्दादन्येभ्योऽपि यथादर्शनमिति तेन विन्नन्तवन्त्वन्ताभ्यां वृद्धवाढयुवन्नित्येतेभ्योऽपि भवतः। श्रेष्ठ इत्यादि। इवर्णावर्णावित्यकारलोपः। एकस्वरस्य नेष्यते। ज्येष्ठो ज्यायानिति रूपे वृद्धशब्दस्य मन्तव्ये तस्य तु ज्याभावो वृद्धस्य चेति लोकोपचारात्। अयमेषां बाढमधीते, साधिष्ठमधीते, अयमनयोः साधीयोऽधीते। अन्तिकबाढयोरित्यादिना बाढशब्दस्य साधादेशः। अयमेषामतिशयेन युवा। कनिष्ठोऽयमनयोः कनीयान्। युवाल्पयोरित्यादिना युवशब्दस्य कन्-आदेशः। स च वातेन यविष्ठः, यवीयान्। बाहुलकाद्वनो लोपः, उकारस्योत्वम्। अयमेषां स्रग्वी, स्रजिष्ठः। अयमनयोः स्रजीयान्। अयमेषां त्वग्वान्, त्वचिष्ठः। अयमनयोः त्वचीयान्। विनो वन्तोश्च लोपो बाहुलकात्। निमित्ताभाव परिभाषया गत्वनिवृत्तिः खल्वपीति। खलु-शब्दः इदानीमर्थेऽपि समुच्चये। तरां तमामित्येतौ भवत इति क्रियागुणप्रकर्षवृत्तित्वाभिधानवशात् किंतमामित्यादि, संशयरूपस्यात्मगुणस्य ज्ञानस्यात्र प्रकर्षः। पूर्वाह्णेतरामित्यादि। शक्तिरूपोऽत्र गुणो विभक्त्यर्थः प्रकृष्यते। उच्चैस्तमामित्यादि। इदमेषामनयोर्वा अतिशयेनोच्चैरित्यधिकरणशक्तेः प्रकर्षः। द्रव्यप्रकर्षे तु न स्मर्यते उच्चैस्तमः, उच्चैस्तरः। क्रियागुणविषयः प्रकर्षो यदा द्रव्य उपचर्यते तदा द्रव्यस्यापि प्रकर्षो भवत्येव। यथा जातेः प्रसिद्धावाह—दोहादिनिमित्तकः। गोतर गोत-

---

१. २।६।३८ (दु० वृ०)
२. २।६।४० (दु० वृ०)

मेति। ईषदसमाप्तौ सत्यामित्यादि प्रकृत्यर्थविशेषणमेतत्। लिङ्गादिति। आख्यातादपीति मन्तव्यम्। ईषदसमाप्तः। पटुरिति। स्तोकेनासम्पूर्णमस्य पाटवमित्यर्थः। प्रशंसायामर्थे रूप इष्यत इति। लिङ्गादाख्याताच्च प्रशस्तं पचति पचतिरूपम्, एवं पचतोरूपम्, पचन्तिरूपम्। ननु रूपप्रत्ययोऽयं प्रशंसाविशिष्टे प्रकृत्यर्थे विधीयमानत्वात् स्वार्थिकः। स्वार्थिकश्च प्रत्ययः प्रायेण प्रकृत्यर्थगतां संख्यामुपाददत इति प्रकृत्यर्थस्य द्वित्वबहुत्वयोगात् रूपप्रत्ययान्तादपि द्विर्वचनबहुवचने प्राप्नुतः, ते कस्मान्न भवतः। उच्यते—एकत्वं संख्यावच्छिन्ना क्रियैवाख्याते प्रधानमिति तत्प्राधान्याद्रूपप्रत्ययान्तस्य कुतो द्वित्वबहुत्वाभ्यां योगः। यद्येवम्, पचतः पचन्तीति [1]प्रकृतिभावे द्विर्वचनबहुवचने [2]न स्याताम्। पचिक्रियाकर्तृभेदात् तदपेक्ष्यते। भविष्यतः। रूपप्रत्ययान्तादपि तथैव स्यातामिति चेत्, न। आख्यातप्रत्ययेनैव कर्तृभेदस्य उक्तत्वात् तेन भविष्यतः। एकत्वस्याप्युपयुक्तत्वादेकवचनमपि ततो न स्यादिति चेत्, न केवला प्रकृतिस्तु प्रयोक्तव्येत्यतस्समयात्तद् भविष्यति। द्विवचनबहुवचनेऽपि प्राप्नुयातामिति चेत्, न, प्राथम्यादेकवचनप्रवृत्त्यैव केवलं प्रकृतिप्रयोगनिवारणात्। यदि तर्हि क्रियाप्रधानमाख्यातम्। एवं सति क्रियायाः अलिङ्गत्वाद्रूपप्रत्ययान्तस्य कुतो नपुंसकत्वं स्यात्। स नपुंसकलिङ्गस्स्यादिति, अत्र लिङ्गग्रहणाद् भविष्यति। भूतपूर्वेऽर्थे इति। भूतः पूर्वं भूतपूर्वः। असहार्थवाचिन एकशब्दादिति। न तु संख्याद्यर्थवाचिनः। केशैः प्राख्यात इति। प्राख्यातः प्रसिद्धः। [3]कुत्सायां पाशप्रत्यय इष्यत इति। स चेष्यमाणः प्रत्यासत्तेः शब्दप्रवृत्तिनिमित्तकुत्सायामेव नान्यत्र। चेन चौरे तार्किके सम्यग्ग्रन्थस्य वेत्तरि प्रत्ययो न भवति। तारकादिभ्यः इत-प्रत्यय इष्यत इति तारकादिषु मध्ये बुभुक्षापिपासाशब्दौ पठ्येते तयोः किमर्थः पाठो यावता निष्ठायामिति कृते यथेष्टं सिध्यत्येव, सत्यम्। [4]सिध्यतीति प्रवर्तमाने तु प्रयोगासिद्धौ युक्तोऽनयोः पाठः। गर्भ-शब्दोऽत्र पठ्यते। तस्मादप्राणिन्येव प्रत्ययः। गर्भिताश्शालयः, प्राणिनि तु गर्भिणी गौः। प्रमाणेऽर्थे इति, यल्लिङ्गं वर्तते तत इति शेषः। प्रमाणशब्दाच्च ये प्रसिद्धाः तेभ्यः प्रत्ययो न भवत्यनभिधानात्। दिष्टिः प्रमाणमस्येति दिष्टिः, वितस्तिः। अणप्रत्ययश्चेष्यत इति च-शब्दाद् दा-धादयोऽपि त्रयः, द्विगोस्तु न भवत्यनभिधानात्। द्विपुरुषमुदकं द्विहस्त्युदकम्। इकारादेशश्चेति। इदमः ([5]कियानित्यत्रानुबन्धे-

1. प्रकृतिभागे (वा० + भं०)
2. न्यूनपाठः (भं०)
3. निन्दायाम् (भं०)
4. सिध्यत्यतीते (भं०)
5. कियानितीऽनुबन्धेऽन्त्यस्वरादेर्लोपः (भं०)

ऽन्त्यस्वरादिलोपः) चतुष्टयमिति । चत्वारः, इत्यस्य विसर्गः । ते थे वा समः षत्वम्, द्वित्रिभ्यामिति अवयववृत्तिभ्याम् । उभशब्दादिति । अवयववृत्तेः संख्या प्रश्नेऽर्थे किं शब्दादिति संख्याविषयो यः प्रश्नः तत्रार्थे यः किंशब्दः, ततः इत्यर्थः । बह्वल्पार्थाच्चेति कारकाभिधायिन एवाभिधानवशात् । तथा च बहूनां स्वामी, अल्पानां स्वामीति । अकारकान्न भवति । अल्पशो ददाति । सुतजन्मादावित्यादावपि यत्र मङ्गलं न गम्यते तत्र न भवति । संख्याया एकवचनान्ताच्चेति । कारकाभिधायिन एव, तेन द्वयोर्द्वयोस्स्वामीत्यादौ न भवति । घटं घटं ददातीत्यादौ घटादेर्जातिशब्दान्न भवत्यनभिधानात् । अभूततद्भाव इति कारणस्य विकाररूपेणाभूतस्य विकारात्मना भावोऽभूततद्भावः । तेन कारणस्याविवक्षायां न भवति । शुक्लं [1]करोतीति कारणाद्विकारस्याभेदविवक्षायामपि नेष्यते । मृदो घटं [2]करोतीति । अदेवगृहो देवगृहो सम्पद्यत इत्यत्र पूर्ववन्न भवति । अदस् मनस् चक्षुस् चेतस् राजस् इत्येतेषां च्विप्रत्यय-[3]सम्प्रयोगेन सलोपः बाहुलकात् । ([4]अनरुः अरुः करोति अरूकरोति) एवमुन्मनीकरोति, तच्चक्षूकरोति, विचेतीकरोति, विरहीकरोति, विरजीकरोति । [5]एवमरुभवतीत्याद्यप्युदाहार्यम् । बाहुलकाद् दीर्घमीत्वं च । कात्स्न्र्ये गम्यमान इति । कृत्स्नमशेषमुच्यते । तस्य भावः कात्स्न्र्यम् । तत्र सात्प्रत्यय इष्यते, [6]सः च वातेन च्विरपि भवति, अभूततद्भावेऽर्थे कृभ्वस्तीनां प्रयोग [7]इत्यत्रापेक्ष्यते । तदधीन इति । तदायत्ते तत्स्वामिक इत्यर्थः । कृभ्वस्तिप्रयोग इत्यत्रापि सम्बध्यते । अन्येऽपि बोद्धव्या इति । तेनासन्नारूढार्थवृत्तिभ्यामुपाधिभ्यां त्यकन्प्रत्ययः बाहुलकात् । बाहुलकाच्च नियतविषयमासन्नारूढं गृह्यते । तेन [8]पर्वतस्यासन्नमुपत्यकात्यं तस्यैवारूढमधित्यका, के प्रत्यय इतीत्वं न भवति तद्विधौ वानुवृत्तेः । एवं पन्थानं गच्छति पथिकः, व्यञ्जने चैषा निरिति न लोपः । पन्थानं नित्यं गच्छतीत्यत्र तु विग्रहे अण्-प्रत्ययः पान्थः । अध्वानमलंगच्छति [9]अध्वन्यः अध्वनीनः । अमेहक्वकुतस्ततस्तत्रात्रेभ्यः त्य-प्रत्ययः ।

---

१. कारतीति (वा०)
२. कारतीति (वा०)
३. सन्नियोगेन (भं०)
४. अननः अनः करोति अरूकरोति (वा०)
५. एवमरू (भं०)
६. स इत्यस्य स्थाने न इति पाठः (भं०)
७. अन्यत्रापीष्यते (भं०)
८. त्य इत्यनर्थकं प्रतिभाति ।
९. अध्वनीः (भं०)

[1]अमाभावः अमात्यः। अमा-शब्दः समीपवचनः। एवमिह भव इहत्यः, क्वत्यः, कुतस्त्यः, ततस्त्यः, तत्रत्यः, अत्रत्यः। दक्षिणापश्चात्पुरस्-इत्येतेभ्यः त्यण्। दक्षिणाशब्दः पुरस्तादादयश्च त्यप्रत्ययान्तो अव्ययसंज्ञः। तत्र भवः दाक्षिणात्यः, एवं पाश्चात्त्यः, पौरस्त्यः इत्यादयः।

**समासान्तगतानां वा राजादीनामदन्तता [2]२।६।३७**

राजादीनां शब्दानामिति। आदिशब्दः प्रकारे। तेन ये शब्दाः समासान्तभाजः ते राजादयः। अदन्तता भवतीत्यस्यार्थं विवृण्वन्नाह—अकारः प्रत्ययोऽन्तो वा भवतीत्यर्थ इति, अन्तशब्दोऽयमवयववचनः। यथा वस्त्रान्तो वसनान्त इति। तेनायमकारप्रत्ययः समासावयवभूतानां राजादीनामवयवो विज्ञायते। समासादुत्तरकालमकारस्य भवतोऽपि तदवयवत्वमन्तग्रहणसामर्थ्यात्। तेन शरदः समीपमुपशरदम्। आत्मन्यधि अध्यात्ममित्यादौ कृतेऽपि समासान्तेऽव्ययीभावादकारान्तादित्यम्भावस्सिद्धो [3]भवति। इह च द्वे धुरौ [4]समाहृते द्विधुरीत्यादौ कृतेऽपि समासान्ते द्विगोरिति [5]स्त्रीप्रत्ययः सिद्धः। महाराज इति। अकारो महतः कार्य इत्यात्वम्। परमाह इति अह्नो नस्य तु क्वचिदिति न लोपः। पुंल्लिङ्गता च वक्तव्येति। रात्राह्नाहाः पुंसीति लोकोपचाराद्वाच्य इत्यर्थः। तत्पुरुष एवाकारं स्मरन्तीति महाराज परमाहयोरपि तत्पुरुषावुभाविति तत्पुरुषसंज्ञास्त्येव। तेनेह न भवति। इति वा शब्दस्य व्यवस्थितं विज्ञानात्। तथा च मद्राणां राज्ञी मद्रराज्ञीत्यादावपि न भवति, लिङ्गग्रहणपरिभाषातो ह्यत्रापि प्राप्नोति। गोशब्दादपि तत्पुरुष एवेत्यकारं स्मरन्तीति सर्वत्रानुसज्यते। पंचगवमिति संख्यापूर्वत्वात् द्विगुरयं न तत्पुरुष इति मन्वानं प्रत्याह—तत्पुरुषावुभावित्यादि। यद्येवम्, पञ्चभिर्गोभिः क्रीतः पञ्चगुरित्यत्रापि समासान्तः प्राप्नोति। सत्यम्, वा शब्दात्तु न भविष्यति। संख्याव्ययादेरङ्गुलिशब्दस्येति तत्पुरुष एवेति सम्बध्यते। तथा च पञ्चाङ्गुलिरनङ्गुलिरित्यत्र बहुव्रीहौ न भवति। अहस्सर्वाभ्यां च रात्रेरिति च शब्दात्पूर्वरात्रः, अपररात्रः, पुण्यरात्र इति। संख्याव्ययाभ्यामिति द्वे रात्री समाहृते द्विरात्रम्, त्रिरात्रम्, अतिक्रान्तो रात्रिमतिरात्रः। भवति नपुंसकयोगः संख्यापूर्वस्य रात्रिशब्दस्येति द्विरात्रमित्यादेर्नपुंसकत्वम्। तेनेह न भवतीति।

---

१. अमाभव (भं०)
१. २।६।४१ (दु० वृ०)
३. अपि (भं०)
४. सहते (भं०)
५. ई (भं०)

इतरेतरयोगे कुतः वा शब्दस्य व्यवस्थितविभाषावाचित्वात् । द्वित्रिभ्यामिति शब्दमात्रविवक्षायां द्वित्रिनिर्देशः, तेनेह न भवतीति । अत्रापिपूर्वक एव हेतुः । वाङ्मनस इति । चवर्गादृगिति गत्वम् । पदान्ते धुटामिति प्रथमः तस्य पञ्चमः, औरीम्, उवादेशो वक्तव्य इति । विभक्तिस्वर उच्यमानोऽत्र न प्राप्नोतीति भावः । दाराश्च गवाश्चेति दारगवमिति गोशब्दात् तत्पुरुष एवाकारः समासान्त इत्युक्तम् । तत्कथम् अत्र द्वन्द्वेऽप्यसौ भवतीति [1]मन्वानं प्रत्याह—दारपूर्वादपीत्यादि । अत्र चादन्ततेति भावः प्रत्ययनिर्देशो हेतुः । नक्तं च दिवा च नक्तंदिवमिति । ननु नक्तंदिवाशब्दयोः अव्यययोराधेयपरतन्त्रयोस्सतो[2]न्मितोः युक्तार्थत्वं न सम्भवति, इति कथमत्र समासः । द्वन्द्वविधावपि शब्दाद् भविष्यति । अहनि च दिवा च अर्हदिवमिति । नन्वर्हदिवाशब्दौ पर्यायौ तत्रैकेनैवार्थस्योक्तत्वादपरस्य प्रयोगो न प्राप्नोति । तत् कथमनयोर्द्वन्द्व इति परस्य प्रश्नमाशङ्क्य वीप्सायामयं पूर्ववदपि-शब्दात् द्वन्द्व इत्यभिप्रायेणाह—अहन्यहनीत्यर्थ इति वीप्सायां चोक्तार्थोऽपि-शब्दः प्रयुज्यत एव वीप्साद्योतनार्थत्वात् । पुरुषस्यायुः, पुरुषायुषमिति विग्रहविशेषेण नायं द्वन्द्वविधिरिति दर्शयति । एवं ऋच् पुर् अप् धुर् इत्येतेभ्योऽप्यकारः समासान्तः । अर्धम् ऋचः अर्धर्चः, नान्द्याः पूः नान्दीपुरम् । द्विधागता, सङ्गताः, अन्तर्गता आपोऽत्रेति द्वीपम्, समीपम्, अन्तरीपम्, ईत्वमनोऽकारस्य बाहुलकात्, राज्यस्य धूः, राज्यधुरा, राजधुरा इह त्वक्षस्य धूः अक्षधूः, दृढधूः, अक्ष इत्यत्र न भवति बाहुलकात् । एवमनुगतं लोमान्यस्यानुलोमम्, प्रतिलोमम् । धेनुश्चानड्वांश्च धेन्वनडुहौ, ऋक्च साम च ऋक्सामे, ऋग्यजुषम् । जातश्चासौ उक्षः जातोक्षः । एवं महोक्षः, वृद्धोक्षः । गोष्ठे श्वः गोष्ठश्वः । ग्रामस्य तक्षः ग्रामतक्षः । अतिक्रान्तः श्वानमतिश्वः, अस् समासान्तो वक्तव्य इति । अदन्ततेति भावः । प्रत्ययनिर्देशात् अप्रजाः इति अस् समासान्तः, इवर्णावर्णलोपः, दुष्प्रजा इति । अनव्यय विसृष्ट इति तु-शब्दात् सत्वम् । एवममेधा इति । अविद्यमाना मेधास्येति विग्रहः । नञ्दुःसुभ्योऽन्यतोऽपि यथाविधानं दृश्यते । तथा च प्रयोगः "श्रोत्रियस्येव ते राजन्मन्दकस्याल्पमेधस" इति । हस्त्यादिवर्जितादुपमानादित्यादि । हस्तिन्, दासी, गणिका, कुसूल इत्येवमादयो ये हस्त्यादयः तद्वर्जितं यदुपमानं ततः परस्य पादशब्दस्य बहुव्रीहावन्तलोप इष्यते, भावप्रत्ययस्य विशेषान्तरसङ्ग्रहार्थत्वात् संख्यासुशब्दाभ्यां च परस्येति । पादशब्दस्येत्यादि सम्बध्यते । एवं ताभ्यां परस्यादन्तशब्दस्य

---

१. इति यो मन्यते तम् (मं०)

२. सतोन्मितोः (वा०)

बहुव्रीहावकार लोपः। वयसि गम्यमाने द्विदन् सुदन्। इह तु विकल्पः, कुड्मलाग्रदन्, शुद्धदन्, शुभ्रदन्, वृषदन्, वराहदन्, अहिदन्, मूषकदन्। पक्षे कुड्मलाग्रदन्त इत्यादयः उदाहार्याः। उपमानात् स्वसुरतिभ्यां चेत्यादि। बहुव्रीहाविति सर्वत्रापेक्ष्यते च-शब्दादुद्गतो गन्धो यस्य स उद्गन्धिः, पूतिगन्धिः। अल्पाख्यायामपि। सूपोऽल्पोऽस्मिन्सूपगन्धि भोजनम्, गन्धवती पृथिवीत्यादौ यो गुणवचनो गन्धशब्दो दृष्टः तस्येह ग्रहणं स्मर्यते। यस्तु गन्धानि विक्रीणीत इति द्रव्यवचनस्तस्य न भवति। शोभनो गन्धो यस्य सः सुगन्ध आपणिकः। नद्य इति नदीसंज्ञकात् क्वचिदृकारान्तादपि क-प्रत्ययो न भवति। जीवभर्तुरिति ज्ञापकात्। तेन पूजाविषये शोभनो भ्राता यस्य सः सुभ्रातेति सिद्धम्। अनद्या अनृकारान्ताच्च विकल्पेनेति क-प्रत्यय इष्यत इत्यपेक्ष्यते। बह्व्यो मालाः यस्य सः बहुमालाकः। बहुमाल इति। मालाशब्दस्य स्वरो ह्रस्व इति ह्रस्वः। बहुमालाक इत्यपि भवति। संज्ञापूर्वकस्य विधेरनित्यत्वात् व्यवस्थितविज्ञानाच्च, अनद्या अनृकारान्ताच्च क्वचिन्नित्यमेव। व्यूढमुरो यस्य सः व्यूढोरस्कः। न विद्यते अर्थो यस्य सोऽनर्थकश्शब्दः, प्रियसर्पिष्कः, प्रियलक्ष्मीकः। क्वचिदिति वचनादेकवचनान्तादेव लक्ष्मीशब्दान्नित्यं क-प्रत्ययो न द्विवचनबहुवचनान्तात्। तेन ततो विकल्प एव भवति। एवमिन्नन्ताद् बहुव्रीहेः स्त्रियां नित्यम्। बहवो दण्डिनो यस्यां सा बहुदण्डिका शाला। ईयन्स्प्रत्ययान्तात् तु बहुव्रीहेर्न भवति। बहवश्श्रेयांसो यस्य सः बहुश्रेयान्, बह्व्यश्श्रेयस्यो यस्य सः बहुश्रेयसी। एवं स्वाङ्गे यौ नाडीतन्त्रीशब्दौ तदन्तादपि बहुव्रीहिः। बहुनाडिकायः, बहुतन्त्रीग्रीवा, तन्त्रीशब्दो धमनीवृत्तिः ([1]स्वाङ्ग इति किम् बहुनाडीकस्स्तम्भः। बहुतन्त्रीका वीणा। एवमन्येऽपीत्यादि। तेन केवलात् पूर्वपदात् परो यो धर्मशब्दः ततो बहुव्रीहावन् समासान्तः, प्रियधर्मा) इह तु न भवति, परमः स्वो धर्मस्येति। एवं कर्मव्यतिहारे बहुव्रीहाविकारस्समासान्तः। केशाकेशि। अव्ययमेतत्, अकारो महतः कार्य इति कार्यग्रहणात् आत्वम्, एवं जायान्तस्य बहुव्रीहेर्निशब्दः समासान्तः। प्रिया जाया यस्य सः प्रियजानिः। याशब्दस्य लोपो बाहुलकात्, भावप्रत्ययनिर्देशादन्त्यादपि। [2]शार्ङ्गधन्वा, धनुषोऽन्त्यस्य अन्नादेशः। संज्ञायां तु वा शतधन्वा, शतधनुः। एवमाद्यमन्यदुन्नेयम्। क्वचित् समासान्तो न भवति इति। क्वचिदिति वचनात् तु क्वचिद् भवत्येव। शोभनं मन्थ्यस्य सुमन्थः, सुसक्थः, अतिसक्थः, शोभनमक्ष्यस्य स्वक्षः, अत्यक्षः, सुसखा, अतिसखेति। सख्युश्चेत्यन्नादेशः।

---

१. न्यूनपाठः (भं०)

२. गाण्डीव (भं०)

क्षेपेऽर्थ इति। क्षेपो निन्दा तत्पूर्वस्येति, किम्शब्दपूर्वस्य। क्षेप इति किम्, कस्य राजा किंराजः, किंसखा। प्रश्नेऽत्र किंशब्दः। नञ्तत्पुरुषेऽपीति न भवति। समासान्त इति शेषः। तत्पुरुष इति किम्, अनृचो माणवकः, अधुरं शकटम्। अविद्यमाना ऋचोऽस्येति विग्रहः। अकारस्समासान्तः। पथस्तु नञ्तत्पुरुषे विकल्पः। न पन्थाः अपथम्, अत्रापि अकारस्समासान्तः। अघुट्स्वरे लोपं व्यञ्जने चैषा निरिति न लोपः। स नपुंसक इति लिङ्गग्रहणान्नपुंसकत्वम्। पक्षे अपन्था, पन्थि मन्थि इत्यात्वम्। पुनर्वा ग्रहणमिहैव विकल्पो नोत्तरत्रेत्यवधारणार्थम्।

**डानुबन्धेऽन्त्यस्वरादेर्लोपः** [1]२।६।३८

सप्तमी पञ्चम्यन्ते जनेर्ड इत्येतेन व्याप्तेर्न्यायात् प्रकरणान्तरविहितोऽप्यत्रानुबन्धः प्रत्ययो गृह्यत इति दर्शयति। डानुबन्धकरणसामर्थ्यादिति तु हेतोः नोक्तः। श्रवणार्थस्यापि डकारस्य सम्भाव्यमानत्वात्। यथा ञमन्ताड्ड इति उवर्णादावश्यक इति ज्ञापकादत्रानुबन्धेऽपि क्वचिदन्त्यस्वरादिलोपः। तेनावश्यं भव आवश्यकम्। प्रकीर्तितग्रहणादकन्। एवं सायंप्रातर्भवस्सायंप्रातिकः। पौनःपुनिकः, बाह्य इत्यादयः।

**इवर्णावर्णौ स्वरे प्रत्यये ये च** [2]२।६।३९

इवर्णस्यावर्णस्य च लोपो भवतीति वस्तुव्याख्यानमेतत्। इदं त्वत्र यथाश्रुतविभक्त्यर्थद्वारेण व्याख्यानम्। इवर्णावर्णौ लुप्येते इति ([3]लोपशब्दस्तु भावसाधनोऽप्यनुवर्तमान इह लुप्यत इति) लोप इति कर्मसाधनो विज्ञायते। प्रथमान्तयोस्स्थानिनोः भावसाधनेन तेनानन्वयात्। आत्रेयः नादेय इति स्त्र्यत्र्यादेरेयण्। दाक्षिरितीणन्तः, बालेयः इति पूर्ववदेयण्, गार्ग्य इति ण्यगर्गादेः। तुल्यमिति। नावस्तार्ये इत्यादिना यः प्रत्ययः, वर्णसमाम्नाय पूर्वमवर्णस्य सन्निवेशादवर्णेवर्णाविति पाठो न्याय्यः। तत्किमर्थोऽयमिवर्णावर्णाविति व्युत्क्रमपाठ इत्याह—इवर्णावर्णाविति व्युत्क्रमपाठादित्यादि। पटिष्ठः पटीयानिति। तमादित्वाष्ठेयन्सौ प्रत्ययौ। अत्रेकारस्य लोपः। पैतृष्वसेय इत्यादि पूर्ववदेयण्, अत्रापि ऋकारलोपः। एकस्वरस्यावर्णलोपो नेष्यत इति पूर्वसूत्रादपीत्यनुवृत्तेः। श्रेष्ठः, ज्येष्ठः, श्रेयानिति प्रशस्यशब्दात् तसादित्वा-

---

१. २।६।४२ (दु० वृ०)
२. २।६।४४ (दु० वृ०)
३. न्यूनपाठः (भं०)

दिष्ठेयन्सौ ([1]प्रशस्य ज्य चेति लोकोपचारात् प्रशस्यशब्दस्य श्रज्यादेशौ) प्रत्ययग्रहणं किम्, सुदाक्षि एतत् सुदाक्षियत्।

**नस्य तु क्वचित्** [2]२।६।४०

राज्यमिति। यण् च प्रकीर्तित इति यण्, इह तु न भवति क्वचिद् ग्रहणात्। सामन्यः, वेमन्यः। तत्र साधौ च यः।

**उवर्णस्त्वोत्वमापाद्यः** [3]२।६।४१

आपाद्य इति पदेऽर्हे त्विन्नन्तात्स्वराद्यः, तत्रोवर्ण ओत्वमापाद्यत इत्यापत्तिक्रियायामोकारः। कर्म भवतीत्योत्वमिति द्वितीयान्तम्। न च य-प्रत्ययेनाभिहितं कर्मेति शक्यते [4]कर्तुम्। तेनोवर्णगतस्यैव कर्मणोऽभिहितत्वात्। आपादनक्रियायां ह्युवर्णः कर्म भवति। तथा ह्ययमत्रार्थः। उवर्ण ओत्वम् ([5]आपाद्य इति) कृत्यप्रत्ययेनौत्वगतं कर्म नाभिहितमिति तत्र कर्मण्योत्वमिति द्वितीया। औपगव इति वाणपत्य इत्यण्। वध्व्य इति। यदुगवादित इति यत्। स्वयम्भूशब्दस्येत्यादि। क्वचिद् ग्रहणानुवृत्तेः क्वचिन्नेष्यत इति भावः। स्वायम्भुव इति पूर्ववदण्। उवादेशविधौ चानुवृत्तेः अत्राविभक्तिस्वरेऽप्युवादेशः तद्धितप्रकरणविहित एव स्वरादौ ओत्वं विज्ञायते, तेनेह न भवति, पट्वी, तदन्ताद् गुणवाचिन इतीकारः।

**एयेऽकद्र्वास्तु लुप्यते** [6]२।६।४२

अकद्र्वा इति नञो निर्देशो व्याख्यानात्। काद्रवेय इति। पूर्वेणोत्वम्।

**वृद्धिरादौ सणे** [7]२।६।४३

स्वर इति वर्तत इति स्थानि-निर्देशार्थमिवर्णावित्यतः तच्चार्थवशात् षष्ठ्यन्तं ज्ञायत इति सप्तमीनिर्दिष्टस्य तस्य स्थानित्वं प्रत्ययोगित्वादिति भावः। वृद्धिर्भवतीति। आन्तरतम्यादवर्णस्याकारः इवर्णस्यैकारः उवर्णस्यौकारः,

---

१. न्यूनपाठः (भं०)
२. २।६।४५ (दु० वृ०)
३. २।६।४६ (दु० वृ०)
४. वक्तुम् (भं०)
५. आदेशमापादयितव्य एवं चेति (भं०)
६. २।६।४७ (दु० वृ०)
७. २।६।४९ (दु० वृ०)

ऋवर्णस्यार् । आक्षिक इति । तेन दीव्यतीतीकण् । वैनतेय इति स्त्र्यत्र्यादे-रेयण् । गोपुच्छिक इति । तेन तरतीत्यत्रार्थे इकण् । [1]कर्मण्यणिञ्जि यण् च प्रकीर्तितः नन्वाक्षिरिति कथं वृद्धिसंशब्दनेनाकारो विहितः यावता नायं [2]वृद्धिसंज्ञकः, वृद्धिसंज्ञा ह्यारुत्तरे चेत्यनेनारः एदोद्भ्यां चोत्तरयोः ऐदौतोः विधीयते । न त्वाकारस्य । तत्केन प्रकारेण आकारो वृद्धिसंब्दनेन विधातुं शक्यत इति पूर्वपक्षयति ! ननु चेत्यादि । उच्यत इत्यादिना परिहरति आपत्य-स्येति निर्देशात् ज्ञापकात् आकारोऽपि वृद्धिसंज्ञकः, अन्यथा कथमपत्यशब्द-मणिपरे वृद्धिशब्दोच्चारणेन कृतात्वं निर्देशात् योऽस्यापत्यस्य संहितासाम्ये-ऽपि कृतात्व एवायं निर्देश इति मन्तव्यमन्यथा त्वपत्यशब्देन कीदृशं यस्ये-त्यस्य कार्यिणस्सामानाधिकरण्यं स्यात् । अपत्यार्थविहितत्वाद् ऋकारोऽप्य-पत्यशब्देन व्यपदेक्ष्यत इति चेत्, तर्हि ज्ञापकदिगियं, इदं त्वत्र स्फुटं ज्ञापकम्, षडाद्यः सार्वधातुकमिति । ऐहलौकिकम्, पारलौकिकमिति क्रीतादिरित्यादि ग्रहणादिकण्प्रत्ययः ।

**न य्वोः पदाद्योः वृद्धिरागमः** [3]२।६।४४

नकारः प्रतिषेधवाची । वृद्धिप्रतिपद्यमानस्स्वरप्रतिषेधभाक् । स्वरस्य विशेषणं य्वोः, य्वोः विशेषणं पदाद्योः । सणीति निमित्तमित्येकोऽवयवार्थः, य्वावागमिनौ । वृद्धिरागमः इत्यपरः सूत्रस्थ आदिशब्दः समीपवाचीति । न तु स्वरविशेषणभूतो योऽनुवर्तमान इति भावः । समीपवाची चायमादिशब्दो दृश्यते । यथा दधिभोजनम् । अर्थसिद्धेरादिरिति । समीपभूताविति समीपत्वं प्राप्तौ । भू प्राप्तावित्यस्य हि चौरादिकस्याधृषाद्वेति विकल्पितेन्प्रत्ययस्यायं भूतशब्दः । वृद्धिरागमो भवतीत्येतदुक्तम् । तत्रारोऽपि वृद्धिशब्देन प्रसङ्गं य्वोर्वा ऐदौतोरव्यवस्थाया प्राप्तिम् [4]मन्वानं प्रत्याह—आन्तरतम्यादित्यादिना व्यवस्थाया आगमस्यास्तिप्रसङ्गः । यत आन्तरतम्यात् सदृश आगमो भवति । तेन इचुयशास्तालव्याः इति तालुस्थानस्य यकारस्य ए ऐ कण्ठतालव्याविति ([5]तालुस्थान एव ऐकार आगमो भवति, वकारो दन्त्यौष्ठ्य इति वकारस्यापि दन्त्यौष्ठ्यस्य ओ औ कण्ठचोष्ठचाविति ।) ओष्ठ्यभागेनान्तरतम्यात् ओष्ठ्य-

---

१. कर्मण्यमिति (वा०)
२. वृद्धिसंज्ञकाः (भं०)
३. २।६।५० (दु० वृ०)
४. यो मन्यते तम् (भं०)
५. न्यूनपाठः (वा०)

स्थान एवौकारागमः। तेनान्तरतम आरागमो न भवति। [1]अव्यवस्था या चैदौतोः अण्प्रत्ययः इति भावेऽर्थे। एवमादेरित्यादिग्रहणात्। अत्रेत्यादिना [2]सूत्रार्थमुदाहरणेषु योजयति। अन्तर्वर्तिनीं विभक्तिमिति। ङि-प्रत्ययः, सा च विभक्तिः तत्स्था लोप्या इति स्थाग्रहणाल्लुप्तापि सती प्रत्ययलक्षणेन पदत्वहेतुर्भवत्येव। एवं च वैयसन इत्यत्र यदसन इत्यण् पूर्वपदं तस्य पदस्यादिः समीपभूतो यो यकारस्तत् सम्बन्धिनोऽकारस्य वृद्धिराकारो न भवति। एवं व्याकरणमधीते वैयाकरण इति तदधीते इत्यत्राऽर्थे अण्-प्रत्ययः। अत्रावर्णं सर्वमुखस्थानमित्येकीयमते आङ्शब्दसम्बन्धिन आकारस्य वृद्धिप्रसङ्ग ऐदौतोरपि वृद्ध्योः प्राप्तौ सत्यां वृद्धिनिषेधः क्रियते। सति तस्मिन्नागमिका वृद्धिरैकारः। सौवश्विरिति। अत्राप्यन्तर्वर्तिनीं षष्ठीं प्रत्ययलक्षणेनाश्रित्य यदश्व इति पदं तस्यादिर्यो वकारः तत्सम्बन्धिनः स्वरस्याकारस्याकारो वृद्धिर्न भवति। नार्थिरिति। अत्र प्रत्ययलक्षणेनान्तर्वर्तिनीं षष्ठीमाश्रित्य यदर्थ इति पदं तस्यात्रादौ रेफः न तु य्वोरिति रेफाकारस्य वृद्धिर्निषिध्यते। पदाद्योरिति किम्, यतो यां यात इणः शन्तृङि परत इणश्चेति कृते यत्वे तस्येदमित्यण्। नायं यकारः पदसमीपवर्तीति वृद्धिरत्र न निषिध्यते। नन्वागमिका वृद्धिर्नित्या विशेषविहिता चेति, सैवादिवृद्धिं बाधिष्यते। तत्किं तस्य निषेधकरणेन, असदेतत्, अनारभ्यमाणे हि निषेधे दाध्यश्विः साध्वश्विरित्यादावपि य्वोरागमिकावृद्धिः विशेषाभावात् प्रसज्येत। निषेधारम्भे तु सत्यादिवृद्धिनिषेधसन्नियोगेन विधीयमाना वृद्धिरागमिका आदिवृद्धिनिषेधस्याप्रवृत्तिविषये दाध्यश्विरित्यादौ न प्रवर्तत एव। नहि दाध्यश्विरित्यादिवृद्धिनिषेधस्य विषयः। य्वोः स्वरस्यानादित्वादिति निषेधकरणमेव ज्यायः। नन्वागमिकायामित्यादि। अयमर्थः। इह वैयसनं सौवश्विरित्यागमिकायां वृद्धौ कृतायां यावेतावैकारौकारौ तयोर्यथाक्रममायावावादेशौ प्राप्नुतः। स्वरस्यापि परत्वाच्च का तयोः प्राप्तिरिति चेत्, न। स्वरादेशपरिभाषया यत्ववत्वयोस्स्थानिवद्भावात् स्वरस्यैकारस्योकारस्य च य आदेशः। परममनश्वशब्दसम्बन्धिनमकारं निमित्तमाश्रित्योपजातः सः पूर्वस्यैकारस्यौकारस्य च विधौ कार्ये आयावादेशलक्षणे कर्तव्ये स्थानिवद् भवति। एवं च सति प्राप्नुयाताम् आयावाविति कस्मान्न भवतः। उच्यत इत्यादिना [3]परिहरति। अत्राप्ययमर्थः। स्वरादेशपरिभाषया योऽयं पूर्वस्य विधौ कर्तव्ये स्थानिवद्भावेनासावविशेषेण यः कश्चित्पूर्वः तस्य पूर्वस्य विधौ कर्तव्ये

१. अव्यवस्थो या (वा०)
२. सूत्रमुदाहरणेषु (भं०)
३. परिहारमाह (भं०)

इति । किं तर्हि, विशेषेणानादिष्टात् । अकृतादेशात् स्वराद्यः पूर्वस्तस्य पूर्वस्य विधौ कर्तव्ये स्थानिवद्भाव इति । यथा स्पृहयतीत्यत्र । अत्र हि योऽसावस्य च लोप इत्यकारस्य लोपः कृतः सः पूर्वस्य ऋकारस्य उपधागुणे कर्तव्ये स्थानिवद् भवति । सः च ऋकारो कृतलोपलक्षणादेशात्स्वरादकारात्पूर्वो भवतीति युक्तः तस्य पूर्वस्योपधागुणे कर्तव्येऽकारलोपस्य स्थानिवद्भावः । वैयसनमित्यादौ तु यावसावैदौतौ यकारवकाराभ्यां पूर्वो न तौ, अकृतादेशात्स्वरादिकारादुकाराच्च पूर्वो य्वोरिति वचनादिकारोकारावस्थायामैदौतोरसञ्जातत्वात् । तस्माद् येनादिष्टपरिभाषया विशेषेण स्थानिवद्भावस्मरणात् । कृतादेशात्स्वरात्पूर्वयोरैदौतोरायावादेशलक्षणे कार्ये कर्तव्ये नास्ति प्रसङ्गः स्थानिवद्भाव परिभाषया इति कथमायावौ भवेताम् ।

[1]तद्धितपादः षष्ठः ।

## सप्तमः पादः (स्त्रीप्रत्ययपादः)

### स्त्रियाम् २।७।१

अधिकारोऽयमिति । कुतो विधेयस्यानिर्देशात् साकाङ्क्षत्वे सति पारार्थ्यात् स्त्रियां वर्तमानाल्लिङ्गादित्येतेन स्त्रीत्वयुक्तद्रव्यवाचिनो लिङ्गादाबादयः प्रत्ययाः स्वार्थमात्रे भवन्तीति प्रकृत्यर्थस्येदं स्त्रियामिति विशेषणम् । न तु स्त्रीत्वम् । अत्र प्रत्ययार्थं इति दर्शयति । प्रत्ययार्थे हि सति स्त्रीत्वस्य प्रत्ययवाच्यस्यैकत्वसंख्यावच्छिन्नत्वात् । कुमार्यौ कुमार्य इत्यादौ द्विवचनबहुवचने न स्याताम् । यद्यपि स्त्रीत्वस्याश्रयभूतं यद् द्रव्यं तद्भेदात् द्विवचनबहुवचनसमर्थयितुं शक्यते, तथापि तत्समर्थनद्वारेण यत्प्रतिपत्तिगौरवं तदपरिहार्यम् । वेति प्रकृत्यर्थविशेषणपक्ष एव ज्यायान् ।

### अजाद्यन्तादाप् २।७।२

अदन्तादकारान्ताल्लिङ्गादित्येतेन यस्मै दित्सेति आप्प्रत्ययनिर्देशाददन्तग्रहणेन शरत्प्रभृतयोऽत्रादन्ताः न गृह्यन्त इति दर्शयति । पकारो वैचित्र्यादिति पूर्वाचार्यप्रसिद्धिप्रदर्शनमात्रमत्र वैचित्र्यम् । नन्वजादयोऽकारान्ता इति ततश्चादन्तग्रहणेनैव तेभ्यो आप्प्रत्ययः सिद्ध इति भावः । असदेतदिति

१. भट्टोग्रभूतिकृते शिष्यहितान्यासे शिष्यलोकाभिधाने नामप्रकरणे षष्ठः पादः । (भं०)

परिहारमाह—ये तावदिति तावच्छब्दः क्रमद्योतनार्थः। अनकारान्ता इति क्रुञ्च इत्यादयः क्विबन्ता अकारान्तास्तर्ह्यज-एडक इत्यादयः किमर्थं पठ्यन्त इत्याह—ये त्वकारान्त इति बाधकबाधनार्थमित्याप्प्रत्ययस्य बाधको विशेषलक्षणो विहितो य ई-प्रत्ययः तस्य बाधननिवृत्त्यर्थः प्रयोजनं यस्य पृथगुपादानस्य तत् तथोक्तम्। तान्येव विशेषलक्षणानि प्रदर्शयितुमाह—तत्रेत्यादि। अजादीनामित्यादिग्रहणेनाश्वचटक इत्यादयो गृह्यन्ते। त्रिफलाशब्दो द्विगोरिति ईकारः प्राप्त [1]इति सर्वत्रानुषज्यते। दंष्ट्राशब्दो हि दंशेः नीदाप्शसित्यादिना ष्ट्रन्प्रत्ययान्तत्वात् षानुबन्धप्रत्ययान्तः। बालवत्सादिभ्यः। आदिशब्दः पाकहोतृ-इत्यादीनामन्येषां प्रथमवयोवाचिनां परिग्रहार्थः। ज्येष्ठकनिष्ठमध्यमेभ्यः पुंयोगात्तेन चेदाख्येत्यनेनेति पुरुषशब्दसम्बन्धाद्धेतोर्ज्येष्ठादिशब्दानां स्त्रीवृत्तित्वात् एवमन्येभ्योऽपि सफलं सत् पुष्पादिभ्यो जातिगणपरिपठितेभ्यः पाकाद्यन्तादित्यादिना ([2]ई-प्रत्ययस्य प्राप्तिः पूर्वापहाणापरापहाणाभ्यामपि युडन्ताभ्यां षडनुबन्धादित्यादिना) तदेवमजादिग्रहणं बाधकबाधनार्थम्। जातिवाचिनश्शूद्रशब्दादित्यादि। शूद्रा चामहत्पूर्वाजातिरिति यदजादिगणमध्ये सूत्रं पठ्यते तदर्थाभिधानमेतत्। महतोऽर्थप्रधानस्यात्वस्मरणात्, अमहत्पूर्वादिति शब्दप्राधान्ये सत्यात्वाभावः। जातेरयोपधादितीकारः प्राप्त इति सम्बध्यत इति शेषः। कुतो जातिवाचिन इति विशेषणोपादानात् तेन यः पुंयोगलक्षण ई-प्रत्ययः सः भवत्येव। तथा च प्रत्युदाहरति शूद्रस्य भार्या शूद्रीति। अमहत्पूर्वादिति किमिति, केवलात् शूद्रशब्दादुच्यमान आप्प्रत्योऽमहत्पूर्वात् कथं प्राप्नोति इति मन्यमानस्यैष प्रश्नः। तदन्तविधिना प्राप्तिं मन्वानं प्रत्युदाहरति। महाशूद्रीति महाशूद्रशब्दोऽयमाभीरजातिमाचष्ट इति समुदाय एवमयमाभीरजाति[3]वाचिनः। नन्वत्रावयवार्थोऽस्ति, गोःखुरवत् ततोऽस्माज्जातेरयोपधादिति ई-प्रत्ययः। यद्येवम्, महाशूद्रेत्याप्प्रत्ययो न प्राप्नोति, उच्यते—महाशूद्रशब्दसमुदायो यदा जातिमाचष्टे तदा निषेध आप्प्रत्ययस्य। यदा तु महत्त्वविशिष्ट शूद्रा प्रतिपादयिषिता भवति तदाप्प्रत्ययो भवत्येव। यदि तदन्तविधिना महत्पूर्वा प्राप्तिरुच्यते तर्हि अजादीनामपि तदन्तविधिविज्ञानात्। पञ्चानामजानां समाहारः पञ्चाजीत्यादावप्याप्प्रत्ययः प्राप्नोति। प्रत्यासत्तेरजादिगते स्त्रीत्वे विधानमिदम्। इह तु समाहारगतं स्त्रीत्वमित्याप्-प्रत्ययो न भविष्यति। एवं च महाशूद्रयां शूद्रार्थगतस्य स्त्री-

---

१. इत्यनुसर्वत्राषज्यते (बा०)
२. न्यूनपाठः (भं०)
३. वचनः (भं०)

त्वस्याभावात् महत्पूर्वात् प्राप्त्यसम्भव इत्यमहत्पूर्वादिति कर्तव्यं वा न वेति सूरयः प्रमाणम् ।

**ऋन्नेभ्यस्त्वी २।७।३**

ऋतश्च नश्च ते ऋन्ना इति प्रयोगभेदेन ऋकारनकारबहुत्वादेक विग्रहः ।

**वनो र च २।७।४**

वन्निति वनिपः क्वनिपश्च ग्रहणम्, वनिस्तु धातुरश्राविप्रत्ययान्तः । सन्दिग्धसत्ताक इति न तस्येह ग्रहणम् । ऋन्नेभ्य इति सिद्धे योगारम्भो रेफादेशार्थः । पीवरी धीवरी । पिबतेः दधातेश्च मनिनादिसूत्रेण क्वनिप्, दामागायतीतीत्वम् । ई-प्रत्यये सत्यनेनान्त्यस्य रेफादेशः । शुनो निष्क्रान्तान्निश्शुनी, मघोनी । युवानमतिक्रान्ता अतियूनीत्यत्र [1]वत्वं न भवति । [2]वनो स्यानर्थकत्वात् । श्वन्शब्दो ह्ययं पञ्चपाद्यां ([3]शुन्युक्षन्नित्यत्र) सूत्रे श्वयतेः कनिनि इकारलोपे च सति निपात्यते । मघवन् शब्दोऽपि तत्रैव महेर्धातोः कनिनि घत्वे अवुगागमे च, युवन्नित्येतदपि कनिन्युवृषितक्षीत्यादौ यौतेः कनिन्युवादेशौ च साध्येते । यद्येवम्, सहयुद्ध्वा ब्राह्मणीत्यादावपि प्राप्नोति । सार्थको ह्यत्र वन्शब्दः । सहराज्ञो युध इति क्वनिपो विधानात्, सत्यम् । पादो वेति अतो वत्यपेक्षते तस्य व्यवस्थितविभाषात्वान्न भविष्यति ।

**न संख्यायाः २।७।५**

तिसृचतसृ इति त्रिचतुरोरिति जसि शसि वा तिसृचतसृभावः । ई-प्रत्यये निषिद्धे तौ रं स्वरे इति रत्वम् । ननु विभक्तिनैरन्तर्ये ([4]णोपजायमानः तिसृचतसृभावः ई-प्रत्यये विहिते कथं विभक्ति नैरन्तर्यम्) विहन्यादिति प्राप्तिरेवात्र स्त्री-प्रत्ययस्य नास्तीति किमनेनोदाहृतेन, नैतत् व्यभिचारित्वादेवंविधस्य व्यवहारस्य । तथा च या सा इत्यत्र विभक्तिनिमित्तमपि त्यदाद्यत्वमाप्प्रत्ययं विधाय विभक्तिप्रत्यासत्तिं विहन्त्येव । पञ्च ब्राह्मण्य इत्यादि । कतेश्च जस्शसोर्लुगिति जस्शसोर्लुक् । लिङ्गान्तनकारलोपः, तस्यालुप्तवद्भावादनन्तत्वादाप् प्रत्ययोऽपि न भवति । यद्यपि च संख्याशब्दानां द्रव्यस्य भेदमात्र—

१. रत्वम् (मं०)
२. वनोरस्यानर्थकत्वात् (मं०)
३. श्वन्नुक्षन्नित्यत्र (मं०)
४. न्यूनपाठः (वा०)

प्रतिपादनप्रसिद्धव्यापाराणां स्त्रीत्वं नास्ति तथापि तेषां कैश्चिद् गुणवचनत्वमभ्युपगम्यते। एवं च गुणवचनानां शब्दानामाश्रयतो लिङ्गवचनानि भवन्ति। संख्याशब्दानामपि शुक्लादिशब्दानामिव स्त्रीत्वेन योगात् स्त्रीप्रत्ययः प्राप्तो निषिध्यते।

**मनः २।७।६**

दामा दामानाविति मनिनादिसूत्रेण ददातेर्मनिन्प्रत्ययः। सीमा सीमानाविति सीमन्शब्दोऽव्युत्पन्नः। यद्येवम्, अनर्थकस्तदेकदेशो मन्शब्द इति तस्येह ग्रहणं प्राप्नोति, नैष दोषः, अनित्यत्वादर्थवद्ग्रहणपरिभाषाया अनित्यत्वञ्चास्याः प्रकृतिभावविधावन्तग्रहणादुक्तम्।

**अनश्च बहुव्रीहेः २।७।७**

अन इत्यत्रावमसंयोगादित्यकारलोपो न कृतः, स्वरूपभङ्गप्रसङ्गात्[1]। तत्पुरुषोऽयमिति विभक्तयो द्वितीयाद्या इत्यादिना उक्तं हि तत्र क्वचिद् द्वितीयाद्यन्तं परपदं पूर्वपदेन समस्यत इति।

**तयोस्तु डा २।७।८**

तयोरित्यानन्तर्यलक्षणे सम्बन्धषष्ठी, दामे दामा इति द्विवचनबहुवचनयोरुपन्यासे डा-प्रत्ययाभिव्यक्त्यर्थः। दामा इत्येकवचनोदाहरणे हि डा-प्रत्ययप्रतिषेधयोः विशेषो न स्यात्। वन्नन्तस्य बहुव्रीहेरित्यादि। अन्यथा त्वनश्च बहुव्रीहेरिति निषेधादी-प्रत्ययो रेफादेशश्च न भवेतामिति बहुधीवरीति न प्रसिद्ध्येत्।

**उदृकारानुबन्धात्त्वी २।७।९**

उकारानुबन्धप्रत्ययान्ताल्लिङ्गादिति। अथ प्रत्ययग्रहणं कुतो धातुरपि ह्युकारानुबन्धोऽस्ति ततश्च ततोऽपि स्त्रीप्रत्ययस्स्यात्। उखास्रत् पर्णध्वत्। ब्राह्मणीति। नैतदस्ति। धातोरुकारः, इड्विकल्पविधौ चरितार्थ इत्यर्थात्प्रत्ययसम्बन्ध्येवाकारो गृह्यते। गोमतीति। गावो विद्यन्तेऽस्या इति तदस्यास्तीति मन्तुः उकार इहार्थः। भवन्तु शब्द इत्यादि। भवन्तु शब्दो मातीति भासिति भा-शब्दाद् वन्तुप्रत्ययः, भातेर्वात्र वन्तुः।

---

१. संयोगादित्यनो (भं०)

**पादो वा २।७।१०**

लुप्ताकार इति । हस्त्यादिवर्जितादुपमानादित्यादिना वचनेन । पाच्छब्दादिति पाच्छब्दान्ताद् द्विपदी त्रिपदीति संख्याश्वशब्दाभ्यां च परस्येति पादस्यान्तलोपः । तु शब्दोऽनुवर्तते । मन्त्र ऋचि वाच्यायां पादान्तादाप्प्रत्ययो समुच्चिनोति, तेन द्वौ पादावस्याः सा द्विपदा ऋक् ।

**अनुपसर्जनात् २।७।११**

उपसृज्यते अप्रधानीक्रियते इत्युपसर्जनम् । कृत्य युट इति कर्मणि युट् । अधिकारोऽयमिति । आपादपरिसमाप्तेरनुपसर्जनादप्रधानादिति । ननु प्रधाने कार्यसम्प्रत्ययात् प्रधानादेव भविष्यतीति किमनेन वचनेन, अस्त्येतत्, व्यभिचरति पुनरयं न्यायः । प्रियस्येत्यादावप्रधाने विषयेऽप्यन्नादिकार्यदर्शनादित्यत्र प्रधानादपि प्राप्तौ सत्यामनुपसर्जनादिति वचनमिदमारभ्यते । उपसर्जनमप्रधानमिति लोकतः । लोके ह्यप्रधानमेवोपसर्जनमुच्यते । तद्यथा वयमत्र गृहे ग्रामे वोपसर्जनीभूता इति ।

**नारी २।७।१२**

नृ-शब्दस्य ई-प्रत्यये कृते इति ऋन्नेभ्यस्त्वीत्यनेन ।

**यूनस्तिः २।७।१३**

यून इति श्वयुवमघोनां चेति व-शब्दस्योत्वम् । युवतिरिति । अत्र मनुष्यजातेरिति पुनस्त्वी-प्रत्ययो नाशङ्कनीयः । युव-शब्दस्य मनुष्यजातिवाचित्वाभावात् विशिष्टवयोवचनो ह्ययं शब्दो यौवनावस्थाविशिष्टायामेव वर्तते । बहुयुवेति । तयोस्तु डा इति डा-प्रत्ययः । केवलाद् युवशब्दात् प्रत्ययः उच्यमानस्तदन्तविधिनात्रापि प्रसज्येत ।

**अणेयेकात् २।७।१४**

वासिष्ठीति । वाणपत्य इत्यणि [1]कृते ई प्रत्ययः । कुम्भकारी । अत्रापि कर्मण्यणित्यणि कृते प्रकरणान्तरविहितोऽप्यण् न गृह्यते व्याप्तेर्न्यायात् । वैनतेयीति स्त्र्यत्र्यादेरेयण् आन्वीक्षिकीति । तेन दीव्यतीत्यत्रार्थे इकण् ।

**ण्यत् २।७।१५**

गार्गी वात्सीति । गर्गवत्सशब्दाभ्यां ण्य गर्गादेरिति ण्यप्रत्ययः । अणे-

---

१. परे (भं०)

थेकाण्ण्यादित्येकयोगे कर्तव्ये किमर्थो योगविभाग इत्याह—योगविभाग इत्यादि ।

**प्राचामायन चागमः २।७।१६**

प्रपूर्वस्याञ्चतेः प्राञ्चतीति क्विपि । अनुषङ्गलोपः । आयनिति लुप्त-प्रथमैकवचनम् । आयनः आगमो विधीयमानः ण्यादित्यवधिनिर्देशः । तद्विशेषणं स्त्रियामिति प्राचामिति मतापेक्षया षष्ठी । आयन आगमो भवतीति । अभक्त इति शेषः । तथा ह्यस्यागमनस्य न पूर्व आगमी । ण्यादिति पञ्चमी-निर्देशात्, [1]नापि पर ई-प्रत्ययः । आगमसम्बन्धयोग्ययोः ततः षष्ठी सप्तम्योर-श्रवणात् । पञ्चम्या निर्दिष्टे परस्य चेति वचनेन ण्यादितीयं पञ्चमी ई-प्रत्य-यस्य षष्ठीं [2]कल्पयतीति चेदेवमपि क्वावकाश ईकारस्य [3]अयमागम इति सन्देहः स्यात्, तस्मान्मध्यपाती अयमागमो [4]भक्तो विज्ञायते । प्राचां प्राग्देश-वर्तिनामिति । प्राक्छब्दोऽयमाचार्याणामत्र विभक्त्यन्त एवाभिधायक [5]इत्याहुः । यदि पुनः प्रादिदेशे [6]भव इति प्राक्छब्दात् पुरस्तादादयश्चेत्यस्तातिः क्रियते ततोऽस्यैवं रूपस्याव्ययत्वस्मरणात् विभक्तेरश्रवणं स्यात् ।

**कौरव्यासुरिमण्डूकात् २।७।१७**

कौरव्यशब्दो ण्य-प्रत्ययान्तः । आसुरिशब्द इणत इतीणन्तः । मण्डूक-शब्दो अणन्तः । पूर्ववदत्रोत्तरत्र चावयवार्थः । कौरव्यायणीति । ण्यप्रत्यये सत्युवर्णस्त्वोत्वमित्योत्वम् । कार्यावावावित्यवादेशः । ण्यादितीकारः । आसु-रायणीति । आसुरिशब्दात् इणत इतीकारः । अत्र च कृते आयनागमे इवर्णा-वर्णावित्यतद्धितेऽपि स्वरे इवर्णो लुप्यते, तद्विधौ वा शब्दस्य बहुलार्थस्यानुवृत्तेः माण्डूकायनीति । अणेयेकादितीकारः । कौरव्यशब्दस्य पृथगुपादानादिति प्राचामित्यस्यानुवृत्तौ हि कौरव्यशब्दस्य पूर्वेणैव सिद्धत्वादिहोपादानमनर्थकं स्यादिति भावः ।

---

१. नामि (वा०)
२. विकल्पयिष्यतीति (भं०)
३. येनागमः (भं०)
४. भवतीति (भं०)
५. इत्यर्थः (भं०)
६. भावः (ब्रा०)

**वतण्डी च २।७।१८**

अयं शब्दो निपात्यत इति। यद्येवम्, वातण्डीति ([1]न सिध्यति) ([2]अप-त्यार्थविवक्षायामपि कृते सेत्स्यति) प्राचामायने चेति च-शब्दाद्वातण्ड्यायिनी-त्यपि भवति।

**वयसि प्रथमे २।७।१९**

यल्लिङ्गमकारान्तं प्रथमे वयसि वर्तत इति। यद्येवम्, उत्ताना शेत इत्युत्तान-शया, लोहितौ पादौ यस्य सा [3]लोहितपादिकेत्यत्रापि प्राप्नोति। गम्यते ह्यत्र प्रथमं वयः, सत्यम्, गम्यते प्रकरणवशात्। [4]न तु बहिरङ्गमिति प्रत्ययाभावः। वधूटीति। [5]ननु वधूटशब्दः प्राप्तयौवनं स्त्रियमाचष्टे, यौवनं च द्वितीयं वयः। तथा च "पिता रक्षति कौमारे, भर्ता रक्षति यौवने। पुत्रस्तु स्थविरे भावे, न स्त्री स्वातन्त्र्यमर्हति।" इति। एवं नायं वधूटशब्दः प्रथमवयोवृत्तिरिति कथमस्मादीप्रत्ययः, उच्यते—उपचयापचयलक्षणे द्वे वयसीति केषाञ्चि-न्मतम्। तथा चाहुः—वर्धते यावदनेन वर्धितव्यमतः परमपायेन युज्यत इति। एवं च तेषां मते द्वितीये वयसि यौवनं नान्तर्भवतीति प्रथमवयोवृत्तिरेवायं वधूटशब्दः पूर्वत्र तु दर्शने चानुवृत्तिलक्षणपरिहारोऽत्र वाच्यः। वृद्धशब्देन सह कर्मधारय इति सः च पश्चादुपजायमानो बहिरङ्गत्वात् अन्तरङ्गां कुमार्याः स्त्रीप्रत्ययसम्बन्धं न बाधत इति भावः।

**द्विगोः २।७।२०**

व्यवस्थित[6]विभाषावृत्तेरपि परिमाणान्ताद् द्विगोः तद्धितलुकि न भवति। पञ्चभिरश्वैः क्रीता पञ्चाश्वा दशाश्वा। परिमाणान्तात् तु भवत्येव। द्व्या-ढकी, त्र्याढकी।

**षडनुबन्धात्त्वी २।७।२१**

तावनुबन्धौ यस्य प्रत्ययस्येति। [7]यस्य प्रत्ययस्येत्येतत् कुतो धातुरपि हि

१. निषिध्यति (भं०)
२. न्यूनपाठः (भं०)
३. लोहितपादिका (वा०)
४. तत्तु (भं०)
५. नहि (भं०)
६. विभाषानुवृत्तिरपि (भं०)
७. अथ (भं०)

त्रपुष् धेट् इत्यादि षडनुबन्धोऽस्ति । तत्सोऽपि कस्मादन्यपदार्थत्वेन न विज्ञायते, उच्यते—धातुषकारस्तावदङ्प्रत्ययविधौ चरितार्थ इति प्रत्ययषकार एवेह गृह्यते । तत्साहचर्याच्च धकारोऽपि प्रत्ययसम्बन्ध्येव । यद्येवम्, स्तनन्धयीति धातुटकारनिमित्तमीकारो न प्राप्नोति । गौरादेराकृतिगणत्वाद् भविष्यति । किमर्थस्तर्हि धेटष्धकार इति चेत् धेड्दृशीत्यादौ विशेषणार्थः । असति हि टकारे धेटस्सन्ध्यक्षरान्तत्वादात्वे कृते सति धा इति निर्देशः स्यात् । ततश्च धाञोऽपि ग्रहणं भवेत्, धे इति पठ्यताम्, ततोऽयमदोष इति चेत् प्रष्टव्यप्रयोजनस्तर्ह्यत्र गणकार एव ।

**गौरादेः २।७।२२**

वक्तव्याद् यलोपः इतीकारे परे मत्स्यस्य यलोपः इत्यस्मात् । आकृतिगणोऽयम् इति । तेन ऊरुप्रमाणमस्य ऊरुद्वयसी, ऊरुदघ्नी, ऊरुमात्री, तरुणी तलुनी गवयी हयी पुरुयी सुकार्यी मनुयी चिती यथाकामीत्यादयः ।

**बहुव्रीह्यूधसोऽन च २।७।२३** (वृत्तावेवायं पाठः न तु न्यासे)

**वा संयोगोपधात् स्वाङ्गात् २।७।२४**

संयोगोपधा यस्येति । नन्वन्त्यात् पूर्ववर्णस्योपधा-संज्ञा विहिता तत्कथं वर्णसमुदायात् सा [1]संयोगानामुपधा संज्ञा स्यात्, अस्त्येतत्, उपधाग्रहणं त्विह देशविशेषोपलक्षणार्थम् । तेनान्त्याद् वर्णाद् यत्र पूर्वं संयोगः तत्र विकल्पो न भवतीति । ततो नञा समास इति । कुत एतत्, उत्तरत्र कण्ठादीनां संयोगोपधानां विकल्पारम्भात् । एवं शशिमुखेति । शशीव मुखमस्या इत्येवमत्रापि विग्रहः । वा शब्दोऽयं व्यवस्थितविभाषावाची । तेनाप्रधानात् स्वाङ्गाद्विधिरयमिति । शिखेत्यादौ न भवति । अङ्गगात्रान्तादित्यादि संयोगोपधत्वादप्राप्तौ ई-प्रत्ययो विकल्प्यते । अथ स्वाङ्गं किमुच्यते इति । किं स्वमङ्गं स्वाङ्गमिहान्वर्थं गृह्यते, ([2]अद्रवं मूर्तिमत्स्वाङ्गं प्राणिस्थमविकारजम् । अतस्थं तत्र दृष्टं च तेन चेत्तत्तथा युतम् ।।) [3]अथाद्रवं मूर्तिमदिति पारिभाषिकमिति उभयथा दर्शनाद् विशेषं जिज्ञासोरयं प्रश्नः, इदानीमिष्टसिद्धये पारिभाषिकं स्वाङ्गं गृह्यत इत्याह—अद्रवमित्यादि । प्राणिस्थं स्वाङ्गमिति । प्राणो नाम वायुः यो मुखनासिकया च बहिः निर्गच्छति सोऽस्ति यस्य यः प्राणी, तत्र

१. संयोगो नामोपधा (वा०)
२. न्यूनपाठः (भं०)
३. अथाद्रव्यम् (वा०)

यत्तिष्ठति तत् प्राणिस्थम्, तेन बहुकफा इत्यत्र प्रत्ययो न भवतीति कफस्य द्रवात्मकत्वात् । नत्वन्यदिति । अप्राणिस्थम् । वातादीनामिति वात-पित्त-रक्त श्लेष्माणां वैषम्यमिति संक्षोभः ततो जातं विकारजमिति सप्तमी पञ्चम्यन्ते-र्जनेर्डः । अपरेण श्लोकार्धेनेति । अतस्थं तत्र दृष्टञ्चेत्यादिनाङ्गसमुदायः स्वाङ्ग-ग्रहणेन न गृह्यते । पुरुषसमुदाय इव पुरुषग्रहणेन, तेनेह न भवति [1]कल्याणि-पाणिपदा ।

**अनश्चाल्लोपि कर्णतः २।७।२५**

अन्नन्ताल्लिङ्गादलोपिन इति योग्यतया लिङ्गस्यैतद्विशेषणं सञ्जातम्, ई-प्रत्ययाल्लोपित्वस्यासम्भवात् । सुपर्वा इति । शोभनानि पर्वाण्यस्या इति विग्रहः । अत्रावमसंयोगादिति निषेधादल्लोपित्वं नास्ति ।

**नासिकोदरकण्ठान्त्रजङ्घादन्तौष्ठशृङ्गतः २।७।२६**

इत्येतदन्तादिति नासिकादिभिः लिङ्गस्यैतद्विशेषणात्तदन्तविधिः नासिको-दरयोः क्रोडादिबहुस्वरादिति निषेधः प्राप्त इति बहुस्वरत्वात् । सोऽनेन बाध्यते ([2]अत्र सविद्यमाननञ्पूर्वान्नेत्ययमपि निषेधः कस्मान्न बाध्यते) ततश्च सनासिकेत्यादावपि विकल्पः स्यात् । युक्तश्चास्यैव निषेधस्य बाधः । अनन्तरत्वात् न तु बहुस्वरलक्षणस्य व्यवहितस्य कण्ठादीनां च संयोगोपध-निषेधवद् वक्ष्यमाणमस्यानन्तरं निषेधं बाधित्वा विकल्पः स्यात् । अत्रोच्यते—कण्ठादीनां तावद्विकल्पो मध्येऽपवादाः पूर्वान्विधीन्बाधन्ते नोत्तरानिति संयो-गोपधलक्षणमेव निषेधं बाधते, नोत्तरं विद्यमानलक्षणम् । नासिकोदरयोरपि-विकल्पो व्यवस्थितविभाषारूपत्वाद् बहुस्वरलक्षणस्यैव निषेधकस्य बाधको न तु सविद्यमानलक्षणस्य । तेन सनासिकोदरेत्यादौ निषेध एव प्रवर्तते न त्वयं विकल्पः, एवं मणिपुच्छीत्यादि । मणिपुच्छोऽस्याः, विषं पुच्छोऽस्याः, शरः पुच्छोऽस्याः इति विग्रहः ।

**सविद्यमाननञ्पूर्वान्नः २।७।२७**

सह-शब्दस्य ज्ञापकसिद्धो यः [3]सकारः तदनुकरणोऽयं सः शब्दः । वा संयोगोपधादित्यनेन विकल्पः प्राप्त इति सः बाध्यत इति शेषः । एवं सनासि-

१. कल्याणपादा (भं०)
२. न्यूनपाठः (वा०)
३. भावः (भं०)

केत्यादि। एतेन नासिकालक्षणोऽपि विकल्पो अनेन निषेधेन बाध्यत इति दर्शयति। नन्वानन्तर्यादस्यैव विकल्पस्य बाधो युक्तो न तु वा संयोगोपधादित्यस्य, अस्त्येतत्, पूर्वग्रहणात्त्वधिकात् पूर्वोऽपि विकल्पो बाध्यते।

**[1]क्रीडादि बहुस्वरात् २।७।२८**

आकृतिगणोऽयमिति तेन सुभगा दुर्भगेत्यादौ अपि न भवति। यद्येवमिति। यद्याकृतिगणोऽयं क्रीडादिराकृतिगणोऽयं क्रीडादिरित्यर्थः प्रपञ्चार्थमिति। क्रीडादिरनेन प्रकारेण प्रपञ्च्यत इत्यर्थः।

**अन्तर्वतो नु गर्भिण्याम् २।७।२९**

गर्भोऽस्त्यस्या इति। तदस्यास्तीतीन्प्रत्ययः, ऋन्नेभ्यस्त्वीतीकारः, नुरागमो विधीयमानः अन्तर्वत इत्यवधिः तस्य विशेषणं, गर्भिण्यां स्त्रियामिति नुरागमो न भवतीति प्रकृतिप्रत्यययोरनुपघातको पूर्वो वर्णो मध्यपाती भवन्नुकारोऽयमागम इति व्यपदिश्यते। ननूकारेण चिह्नेन आगम उदनुबन्ध इत्यस्याः परिभाषाया उपस्थानादन्तर्वर्तत इति चैतस्यां षष्ठ्यां व्याख्यायमानायामन्तर्वच्छब्दस्यैवान्त्यात्स्वरादयं परो नकारागमः कस्मान्न विज्ञायत इत्याशङ्क्याह—उकार उच्चारणार्थ इत्युच्चारणमात्रफलोदयमुकारो न तु कार्यार्थो येनास्य कार्यार्थमुच्चारितस्य सतोऽनुबन्धव्यपदेशे सत्यागम उदनुबन्ध इत्यस्या उपस्थानं स्यात्। अप्रमाणकमेतद् इति चेत्, अविच्छिन्नाचार्योपदेश एवात्र प्रमाणम्। अन्तर्वत्नी गर्भिणीति। ननु कथमत्रान्तश्शब्दाद्वन्तुप्रत्ययः, यावता तदस्यास्तीत्यादिना तच्छब्दवाच्यस्यार्थस्यास्तिना सामानाधिकरण्ये सत्यसौ विधीयते। यथा गोमानिति। अत्र हि गावः सन्त्यस्येति गवां सत्तयाभिसम्बन्धः। अन्तर्वत्नीत्यत्र तु अन्तर्विद्यते यस्या इति विगृहीते सति नान्तश्शब्दस्य सत्तयाभिसम्बन्धः। किन्तर्हि, अधिकरणशक्तिप्रधानादस्माद् यदाधेयं प्रतीयते तस्य। एवं च कथमन्तश्शब्दाद्वन्तुरित्याह—अन्तश्शब्दादधिकरणप्रधानाद्वन्तुप्रत्ययो निर्देशबलादिति। स च गर्भिण्यामेव स्त्रियां नत्वन्यत्र। तथा च प्रत्युदाहरति—अन्तरस्यां शालायां विद्यत इति।

**पतिवज्जीवति भर्तरि २।७।३०**

पतिवदिति लुप्तपञ्चमीकम्, निर्देशबलाच्चानुषङ्गलोपः। पूर्ववदवयवार्थोऽत्र मन्तव्यः। जीवति भर्ता यस्य सा जीवभर्तेति। एतेन जीवतीति

---

१. क्रीडादि (भं०)

जीव इति जीवशब्दोऽयं नाम्युपधालक्षणः क-प्रत्ययान्तत्वात् कर्तृसाधन इति दर्शयति। अस्वपदेन च विग्रहः। मन्यकर्मणीतिवत्। पतिवत्नीति पूर्ववदीकारः। ननु [1]मन्त्वादिप्रत्ययविधाववर्णादवर्णोपधादित्यादिना ग्रन्थेन वन्तुर्विशेषणोक्तः तत्कथमसौ पतिशब्दादिवर्णान्ताद् भवतीत्याह – पतिशब्दादित्यादि। पतिमती मथुरेति। अत्र जीवभर्तृका स्त्री न वाच्या। तेन वन्तुप्रत्ययो न भवति। नापि नुरागमः। भर्ता चात्र योऽग्निसाक्षिकेण पाणिग्रहणेन सम्बन्धी सः गृह्यते न तु यस्स्वामी।

**पत्युर्नश्च २।७।३१**

तस्य च नकारादेश इति वर्णान्त्यस्य विधिरित्यन्त्यस्य, पत्नीति शब्दशक्तिस्वाभाव्यात् यस्या इति शास्त्रोक्तेन विधिना संस्कार उपजातः सैवमुच्यते। तथा चाह—ऊढायां स्त्रियामयं विधिरिति। ऊढा कृतविवाहेत्यर्थः। ग्रामस्य पतिरयमिति पतिशब्दः अत्र स्वामी-वाची।

**समानादेर्गणात् परो यः २।७।३२**

समानादेर्गणात् परो यः पतिशब्द इति। अथ समानशब्दादिर्यः पतिशब्दः इति कस्मान्न विज्ञायते। नैवं शक्यम्, एवं हि सत्यसन्देहार्थमादिग्रहणमकृत्वा समानादित्येव ब्रूयात्। अत एव संज्ञापि न गृह्यते। क्व पुनस्स्याद् यद्यसौ गृह्येत, अः पतिरस्याः ([2]इः पतिरस्या) इत्यादौ। तस्मात्समानादेरिति गणेऽत्रान्यपदार्थः ([3]न तु समानसंज्ञो वर्णः)। योगविभागादिति। समानस्य स इति य एको योगो विभज्यते तेनेत्यर्थः। योगविभागश्च तत्रावश्यं कर्तव्यः। समानरूपं यस्य सः सरूपः सस्थानः सवयः सवर्णः इत्यादिसिद्ध्यर्थः।

**वान्यपूर्वोपसर्जनात् २।७।३३**

अन्य-पूर्व-ग्रहणं विस्पष्टार्थम्। समानादेरित्यस्यानुवृत्तौ हि पूर्वो योगो निर्विषयः स्यात्। अनुपसर्जनं तस्य विषय इति चेत्, न। समानादेः परस्य पतिशब्दस्यानुपसर्जनस्य स्त्रियां प्रवृत्त्यसम्भवात्।

**कामुका मैथुनेच्छायाम् २।७।३४**

मिथुनस्य कर्म मैथुनम्। प्रकीर्तितग्रहणात् अन्, इच्छाशब्द इच्छेत्यत्र निपातयिष्यते।

---

१. अमन्त्वादि (भं०)
२. न्यूनपाठः (वा०)
३. न्यूनपाठः (भं०)

**नागात्स्थौल्ये २।७।३५**

नागीति । स्थौल्यग्रहणावच्छिन्नं स्त्रीत्वविशिष्टं द्रव्यमेवाभिधीयते । नागेति संज्ञेयं कस्याश्चित् ।

**अकृते स्थूलात् २।७।३६**

स्थूलीति । अन्यत्र स्थूलम् ।

**गौणादावपने २।७।३७**

आवपन्त्यस्मिन्धान्यादीनीत्यावपनम् । अधिकरणे युट्, गौणेति नाम कस्याश्चित् ।

**पिण्डादन्ने २।७।३८**

अद्यते स्मेत्यदेः क्तः । जग्धादेशस्याभावोऽत एव ज्ञापकात् ।

**आमन्त्रे तु कुण्डतः २।७।३९**

कुण्डेति । कुडि दाहे, कुण्डनं कुण्डेति, गुरोश्च निष्ठायामित्यकारः । तु-शब्दात् काली-शब्दो वर्णेऽर्थे साधुः । ([1]कुलीशब्दोऽयोविकारे) ।

**घटाच्छिल्पिकृते २।७।४०**

घटेति । घट चेष्टायाम्, षडनुबन्धभिदादिभ्य इत्यङ् । षानुबन्धो ह्ययं घटादयो षित इति स्मरणात् ।

**कुम्भात् २।७।४१**

योगविभागो वैचित्र्यार्थः ।

**असितादेश्च वर्णतः २।७।४२**

सितादिगणवर्जितादिति । सितादिगणः प्रयोगतोऽनुमन्तव्यः । यतो वर्णवाचिनोऽपि ई-प्रत्ययो न दृश्यते, सः सर्वः सितादिः । तेन कृष्णा, कपिला श्वेता इत्यादयो सितादयः ।

**तोपधातो नकारश्च वा २।७।४३**

त इति षष्ठी प्रथमा वा प्रकृतेति । प्रकृतशब्दोऽयं प्रस्तुतपर्यायो न वर्णवाची । अत्र नित्यमी प्रत्यय इति पूर्वसूत्रेण, नत्वनेनैव विकल्पितः ।

---

१. कुलीशब्दो व्ययो विकारे (भं०)

**उदन्ताद् गुणवाचिनः २।७।४४**

गुणवाचिनो गुणस्य प्रतिपादकादिति। यद्यपि च यो गुणवाची तस्य स्त्रियां वृत्तिर्न सम्भवति। तथापि च सामर्थ्यात् यो गुणमभिधाय तद्वति द्रव्ये वर्तते स इह गुणवाचीत्युच्यते। तपरकरणमसन्देहार्थमिति। असति हि [1]तस्मिन्वृत्तावुच्यमाने किमिदं वकारस्य ग्रहणमथोकारस्येति सन्देहस्स्यादिति तन्निवृत्तये तपरकरणम्। अथ तत्कालार्थं कस्मान्न भवति। गुणवाचिनः तूदन्तस्यामन्त्वात्। नन्विदमस्ति। पटुमिच्छत्यात्मन इति यिन्। [2]नाम्यन्तानां यणायीति दीर्घः, क्विप्, य्वोर्व्यञ्जने ये इति य-लोपः। पटू इति। नैतत्। अस्य क्विबन्ततया क्रियाशब्दत्वे सति गुणवाचित्वाभावात्। पूर्वस्यामवस्थायामयं गुणवाचीत्यसति तपरत्वे स्यादत्र प्राप्तिरिति चेत् [3]सति न, मुख्ये परस्मिन्गुणवाचिनि सति गौणे, गौणस्यैवंविधस्य गुणवाचिनो गृहीतुमशक्यत्वात्। तस्मादसन्देहार्थमेव तपरकरणम्। आखुरियमिति जातिवाच्ययं शब्दो न गुणवाची। [4]खरुशब्दात् गुणवाचिन इत्यपेक्षते। एतच्च वा शब्दस्य व्यवस्थितविभाषावाचिनो विजृम्भितम्।

**बह्वादिभ्यः २।७।४५**

वैपुल्यगुणवाचिनो बहुशब्दस्य पूर्वेण सिद्धत्वादिह पाठे प्रयोजनं न विद्मः, इकारान्तालिलङ्गादीकारो वेष्यत इति कृति हृति ([5]अकरणिः अहरणिः) इत्येवं प्रकारे तु विषये न भवति। व्यवस्थितविकल्पानुवृत्तेः।

**भुवो नित्यम् २।७।४६**

भूशब्दस्य ग्रहणमिति विभुप्रभृतेर्य एकदेशः तस्य। अत्र च हेतुरुदन्तग्रहणानुवृत्तिः। यद्येवम्, भुव इत्यत्र निर्देशे भूशब्दस्य पञ्चम्या परतो ङसिङसोरलोपश्चेत्यग्निकार्यम् औत्वं प्राप्नोति तत्कस्मान्न भवतीत्याह— अग्निकार्यं न भवतीत्यादि। भू-इत्येतदन्तादिति। भू-शब्दस्य केवलस्यासम्भवात् तदन्तत्वप्रतिपत्तिः। ([6]विद्वीपत्वीति विप्रशब्दस्य पूर्वस्य भवतेः भुवो

१. तस्मिन्वन्तादित्युच्यमाने (वा०)
२. नाम्यन्तानां यिनायीति (वा०)
३. न्यूनपाठः (भं०)
४. संयोगोपधाच्चेति (भं०)
५. अरणिसुहरणि (भं०)
६. विद्वी प्रद्वीति विप्रशब्दपूर्वाद् भवतेः भुवो डुर्विप्रशंप्रेष्विति डः (भं०)

भुविरयं संप्रेष्विन्नित्र) प्रत्यय:। अन्त्यस्वरादिलोप:। स्वयम्भूरयमिति स्वयं भवतीति क्विप्।

**पुंयोगात्तेन चेदाख्या २।७।४७**

पुंयोगादित्यत्र पुंशब्दस्यान्तर्वर्तिनीं विभक्तिं प्रत्ययलक्षणेनाश्रित्य पदान्तवृत्तेर्मकारस्य मोऽनुस्वारं व्यञ्जने इत्यनुस्वार:। हेतौ चैषा पञ्चमी हेत्वर्थ इत्यर्थग्रहणात्। आख्यानमाख्येति। आतश्चोपसर्ग इत्याङ्प्रत्यय:, ई-प्रत्ययो विधीयमान: लिङ्गविधिभाक्। लिङ्गस्य विशेषणं स्त्रियामिति पुंयोगादिति तत्र हेतुनिर्देश:। तेन चेदाख्येति चेच्छब्दो यद्यर्थेऽव्ययमवयवार्थ:, समुदायार्थस्तु वृत्तावुक्त:, तेन चेच्छब्देनेति यत: शब्दादी-प्रत्ययो विधीयते। तेनेत्यर्थ:। गणकीति। गण संख्याने। चुरादिरदन्त:। निन्दहिंसेति वुञ्। अत्रेत्यादिना।[1]अत्रार्थमुदाहरणेषु योजयति। गोपालकादीनामित्यादि। अत्र च हेतु: व्यवस्थितविकल्पानुवृत्ति:। सूर्याद् देवतायामर्थ [2]इतीकारो नेष्यत इति सम्बध्यते। योगविभागाद् य-लोप: इत्यनपत्ययकारत्वादप्राप्त:, सूर्यशब्दो हि सूर्यरुच्येत्यादौ कृत्प्रत्ययान्तो निपातयिष्यत ईकारे कृत इत्यनेनैव सूत्रेणानुरागमो वक्तव्य इति पूर्वसूत्राच्चानुवृत्ति:। तथा च यवाद् दोषे ई-प्रत्यय: आनुरागमश्च दृश्यते। दुष्टो यवो यवानी, यवनाल्लिप्याम्। यवनानामियं लिपिर्यवनानीति।

**क्रीतात्करणपूर्वात् २।७।४८**

वस्त्रक्रीतीत्यादि। इवर्णावर्णावित्यकारलोप:। वाक्ये तु नेष्यत इति व्यवस्थितविकल्पानुवृत्ते:।

**पूतक्रतुमनोरै च २।७।४९**

समाहारे द्वन्द्व इति। नोरागमस्य त्वभावो नित्यत्वमागमशासनमिति वचनात्। तयोश्चैकारादेश इवर्णान्त्यस्य विधयो भवन्तीति अन्त्यस्य मनोरौकारादेशो वेष्यत इति शब्दात् कार्यान्तरसमुच्चयार्थात्। ननु च शब्दो वाक्यभेदद्योतनफल: कथं कार्यान्तरे समुच्चिनुयात्। नैतत्, विनापि हि चशब्दं वाक्यभेदो द्योतत एव। यथा धातोरेकस्वरादित्यादौ। एवं च समुच्चेतव्याभावात् च-शब्द औकारादेशमेवात्र समुच्चिनोति। तद्विषयस्तु विकल्पो व्यवस्थितविकल्पानुवृत्त्यैव लभ्यते इति नापूर्वत्वेन वक्तव्य:। अथ विकल्प्यते, औकारादेशे पक्षे किं भवतीत्याह—पक्षे मनुरिति। नन्वौकाराभावपक्षे ऐकारादेशस्याभ्यनुज्ञानं प्राप्तमिति कथं पक्षे मनुरित्युदाहृतम्, एवं मन्यते यदि

---

१. अत्रेत्यादिना सूत्रार्थ: (भं०)

२. इतीप्रत्ययो (भं०)

विकल्प ऐत्वमनुजानीयाद्वाग्रहणमफलं स्यात्। ऐत्वौत्वयोरुभयोर्विधानात्। उभयोरपि पाक्षिक्या: प्रवृत्तेः सिद्धत्वात्। तस्माद्वा ग्रहणम् औत्त्वाभावपक्षे स्त्रीप्रत्ययशून्यमेव प्रयोगं समुच्चिनोति इति पक्षे मनुरित्युदाहृतम्। पूतक्रतु-मनुशब्दौ यदेत्यादि। पुंयोगादित्यस्यानुवृत्तेरेवं व्याख्यायते। एवमुत्तरसूत्रेष्व-पीति पुंयोगादित्यस्याभिसम्बन्धादेवं रूप उत्तरसूत्रेऽपि व्याख्याक्रमो बोद्धव्य इत्यर्थः।

**कुसिताग्निवृषाकपेः २।७।५०** (वृत्तावेवेदं सूत्रं न तु न्यासे)

**दुहितुः पुत्रो वा ब्रह्मसूतभोजोऽग्रराजतः २।७।५१**

दुहितृशब्दादी-प्रत्ययो वा भवतीति न संख्याया इत्यनेनेति योगभेदेन तस्य प्रतिषेधाभिधानादप्राप्तौ सत्यां पक्षे विधानं क्रियते। शैलपुत्रीत्यादयस्तु प्रयोगाः पुत्रीशब्देन गौरादित्वाद्विहिता स्त्रीप्रत्ययेन सह समासे कृते सेत्स्यन्ति। यद्येवम्, पुत्रीदुहितृशब्दयोर्विद्यमानत्वात् प्रयोगद्वयं सिद्धमित्यपार्थको योगा-रम्भः, सत्यम्, न्यायावगत एव त्वयमर्थः। एवं सूत्रकृता प्रदर्शितः।

**जातेरयोपधादस्त्रीतः २।७।५२**

जायेते अनया भिन्नेष्वभिन्नाभिधानप्रत्ययाविति जातिः। करणयुटं बाधित्वा कृत्ययुट् इति, जनेः क्ति-प्रत्ययः। धुटिखनिसनीत्यात्वम्। जाति-रित्युच्यते। केयं जातिर्नाम। तथाहि यदि जननेन प्राप्यते या सा जातिरिति [1]जातिलक्षणमङ्गीक्रियते तर्हि जन्मवतामेव जातित्वमभ्युपगतं स्यात् नाजन्मिनां नित्यानां परमाण्वादीनामिति। नैतत्, जातिलक्षणम्। अथ जायेते अनया भिन्नेष्वभिन्नावभिधानप्रत्ययाविति जातिरित्येतत् तस्य लक्ष-णम्। एवमपि जातिपदार्थवादिपक्षे देवदत्तवाच्यस्याप्यर्थस्य जातित्वं प्राप्नोति। अवस्थाभेदप्रकल्पितभेदस्य तस्याभिन्नाभिधानप्रत्ययहेतुत्वात्। एवं [2]व्यावृत्याभावात् जातेरिति विशेषणोपादानमपार्थकं स्यादिति लोकप्रसिद्धं जातेः लक्षणमाह—आकृतिग्रहणेत्यादि। आकृतिशब्देनेहाकारः संस्थानविशेष उच्यते न तु जातिः, तस्या एव लक्ष्यत्वात्। जातेर्जातिग्रहणेनेति विशेषणा-नन्वयात्। गृह्यतेऽनेनेति ग्रहणमिति पूर्वं करणसामान्ये ग्रहणशब्दो युडन्तः। [3]संस्थियते। तत्राकृतिशब्दसमवधाने स्त्रीत्वप्रतिपत्ति[4]र्भवन्त्यपि बहिरङ्गत्वादी-

---

१. जातिलक्षणमाश्रीयते (वा०)
२. व्यावर्त्याभावात् (भं०)
३. संस्क्रियते (भं०)
४. भवत्यपि (बा०)

प्रत्ययनिमित्तं न भवतीत्याकृतिग्रहणं यस्या इति विग्रहः। तेनाकृत्या संस्थानेन या गृह्यते सा जातिः अवयवसन्निवेशविशेषव्यङ्ग्येत्यर्थः। तदेतल्लक्षणं गोत्वादिजातेः। गोत्वादयो हि विषाणादिमदाकृतिव्यङ्ग्यत्वादाकृतिग्रहणाद् भवन्ति। ब्राह्मणत्वादिजातेस्त्वसङ्ग्रहः। ब्राह्मणक्षत्रियादीनां संस्थानस्य सदृशत्वादिति द्वितीयं लक्षणमाह—[1](लिङ्गानामित्यलिङ्गानामिति) कर्मणि षष्ठी। सर्वशब्दस्य च लिङ्गापेक्षत्वेऽपि गमकत्वात् सत्युपपदसमासे भजेर्विण्प्रत्ययः। यान्यपि लिङ्गानि सर्वाणि न भजते सापि जातिः, यथा ब्राह्मणत्वादिः। सा हि ब्राह्मणः ब्राह्मणीति स्त्रीपुंसावेव भजते न तु नपुंसकम्। तदादेस्तु सर्वलिङ्गत्वेऽप्याकृतिग्रहणाज्जातित्वोपपत्तिः। [2]सकृदित्यादि। सा च जातिरियं गौरित्येकत्रापि पिण्डे सकृदुपदिष्टा सती निर्गृहीतुं निश्चेतुं पिण्डान्तरेऽपि शक्यः। एकत्वान्नित्यत्वात् प्रत्येकं परिसमाप्तत्वाच्च एकत्वादेव हि पिण्डान्तरे निश्चीयते ([3]नित्यत्वमप्यत्र निबन्धनमनित्यत्वे तु पिण्डात्, विनाशे अपि पिण्डान्तरेण निश्चीयते।) प्रत्येकं च सा यदि परिसमाप्ता न भवेत् सर्वात्मना पिण्डान्तरेण ग्रहणमेव न भवेत्तस्याः सकृदाख्यातनिर्ग्राह्येत्यनेन चाद्यलक्षणद्वयशेषभूतेन देवदत्तः देवदत्तेत्यत्रासर्वलिङ्गत्वेऽपि न जातित्वम्। देवदत्तस्य संज्ञारूपतया नियतपिण्डसमवेतत्वात् सकलव्यक्तिसाधारण्यानुपपत्तेः पिण्डान्तरे देवदत्त इत्यसम्प्रत्ययात्। अथास्ति तत्रापि सम्प्रत्ययः। एवमपि वाचकशब्दमात्र सादृश्यादस्तु, न तु देवदत्तत्वं नाम किञ्चिदनेकव्यक्त्यनुगतमस्ति यत्पिण्डान्तरेण निर्गृह्यते ततो देवदत्तेत्यत्राजातित्वादी-प्रत्ययाभावः। तृतीयं लक्षणमाह—गोत्रञ्चेत्यादि। चरणशब्दाः शाखाध्यायिषु वर्तन्ते तैः क्रियासम्बन्धप्रवृत्तौ कठादिशब्दैः सह गोत्रमपत्यप्रत्ययान्तं च जातिः। पूर्वेण लक्षणद्वयेनाव्याप्तिः नाडायनादीनामसंस्थानव्यङ्ग्यत्वात् सर्वलिङ्गभाक्त्वाच्च जातिवाचियल्लिङ्गमिति लिङ्गमेव जातिरभिधानेऽभिधेयोपचारात्। तथा स्त्रियामेव यन्न वर्तत इत्येतेन स्त्रियां प्रत्यये विधीयमाने ([4]अस्त्रीत इत्यनेन) विरोध इति दर्शयति। यतः स्त्रियामन्यत्र च यस्य वृत्तिर्दृष्टा तद् यदा स्त्रियां वर्तते तदा तस्मादनेन प्रत्ययः। यत्तु सर्वदा स्त्रियामेव वर्तते तत्रास्त्रीत इति वचनान्निषेधः। कुक्कुटीति। एतदाकृतिग्रहणायाः जातेरुदाहरणम्। ब्राह्मणीत्यसर्वलिङ्गभाजः। नाडायनी, कठीति। एतेऽपि गोत्रचरणलक्षणायाः। मुण्डेति। मुण्डगुणभेदात्। स्त्रियां मुण्डव्यपदेश इति गुणशब्दोऽयं भवति, न तु

१. लिङ्गानां च न सर्वभागिति (भं०)
२. सकृदाख्यातनिर्ग्राह्येति (भं०)
३. न्यूनपाठः (भं०)
४. अस्त्रीति नानेन (भं०)

जातिशब्दः। बलाकेति पक्षिविशेषवृत्तिरयं जातिशब्दो नित्यं स्त्रियामेव वर्तते इती-प्रत्ययाभावः। अनुपसर्जनादित्येव बहुकुक्कुटा [1]पूः।

**पाकाद्यन्तात्तथैव च २।७।५३**

अस्त्रीत इति प्रतिषेधः प्राप्त इत्योदनपाकादीनां नित्यस्त्रीविषयत्वात्। ओदनपाकीत्यादि। ओदनस्यैव पाकोऽस्या इति [2]विग्रहव्युत्पत्तिमात्रं चैतत्, समुदाय एव त्वोदनपाकादयः [3]कस्याञ्चिज्जातौ वर्तन्ते।

**इतः २।७।५४**

इष्टिं वशात्तसिति। अ सर्वनाम्नोऽपि पञ्चम्यन्तात् तसिष्यत इति। [4]येयं तस्प्रत्ययविधाविष्टस्तत्सामर्थ्यादित्यर्थः। उत्तरसूत्रस्यायं विषय [5]इत्यपुराणोऽयं योग इत्याहुः। दाक्षिप्रभृतीनां जातित्वं गोत्रं च चरणैस्सहेति गोत्रप्रत्ययान्तत्वात्।

**मनुष्यजातेः ई २।७।५५**

अवंन्ती कुन्तीति। अवंन्तिकुन्तिशब्दाभ्यामपत्येऽर्थे ण्यः। तस्य गर्गयस्कविदादीनां चेति च-शब्दाल्लुक् तत ई-प्रत्ययः। दारदिति। दरदोऽपत्यं स्त्रीत्यणः पूर्ववल्लुक्। पुनः जातिग्रहणं योपधादपि यथा स्यादिति। तदा ([6]उदमेयस्यापत्यमौदमेयी) इण्णन्तादीकारः।

**ऊङुतः २।७।५६**

ङकार इत्यादिपुंवद्भावभाषित([7]पुंस्कादनूङ्) पूरण्यादिष्विति निर्देशे सन्देहस्स्यात्। कुरुरिति। कुरोरपत्यं स्त्रीति ण्य-प्रत्ययः, ण्यस्य पूर्ववल्लुक्। ऊङ् प्रत्ययः। ब्रह्मबन्धूरिति। ब्रह्मबधुरस्या इति विग्रहः। ब्राह्मणजातौ गुणहीनायां कस्याश्चिदयं शब्दो वर्तते। ककारस्तु समासान्तोऽत्र न भवति। जीवभर्तरीति ज्ञापकाद् अनित्यत्वात् समासान्तस्य। ऊङिति दीर्घनिर्देशो वैचित्र्यार्थः। ततोऽपि तपरकरणमपि तत्कालार्थं तु तन्न भवति। मनुष्य-

---

१. नगरी (भं०)
२. विग्रहः व्युत्पत्तिमात्रम् (?)
३. कस्याश्चिज्जातौ (भं०)
४. यूयम् (वा०)
५. पुराणोऽयम् (भं०)
६. दमेयस्यापत्यं दमेयी (भं०)
७. पुंस्केत्यत्रायं ङकारो विशेषणार्थः, असति तर्हि तस्मिन्भाषितपुंस्कात्व (भं०)

जातिवाचिन ऊकारान्तस्यासम्भवात्। कथम् [1]अधु: ब्राह्मणी, अयोपधादिति वर्तते।

पङ्गु कद्रुतः २।७।५७ (वृत्तावेवेदं सूत्रं न तु न्यासे)

[2]**सफलक्षणवामादेरूरोः २।७।५८**

सफोरूरिति संश्लिष्टो ऊरुरित्यर्थः। सह संहित सहितादेरित्यादि। एतच्चसफलक्षणवामादिति कर्तव्ये आदिग्रहणाल्लभ्यते। सहोरूरिति। सहेते इति। सहावच्प्रत्यय महानुरू यस्येति विग्रहः। अव्ययं वा सह शब्दो विद्यमानार्थवृत्तिः। तेन विद्यमाना ऊरुः यस्याः इति विग्रहः। संहितोरुः, संहितोरुरिति। संहितशब्दो सन्धीयते स्म इति सम्पूर्वस्य धाञः क्तप्रत्यये परे दधातेर्हिरिति सहितशब्देऽपि विद्यमानं हितमस्येति विग्रहः। नन्वयं सम्-शब्दस्य हितशब्दे परे मकारलोपः, एवं हि सत्येकदेशविकृतस्यानन्यत्वात् संहितशब्देनैव सहितशब्दाद्भविष्यतीति पृथक् सहितग्रहणमपार्थकं स्यात्।

**औपम्यसंहितात्** २।७।५९ (वृत्तावेवेदं सूत्रं न तु न्यासे)

**बाह्वन्ताच्च संज्ञायाम् २।७।६०**

ननु केवलो बाहुशब्दः संज्ञाशब्दो न भवतीति संज्ञाग्रहणादेव तदन्तत्वमवाप्यते इति किमन्तग्रहणेन, असदेतत्, इदानीमपि हि कस्याञ्चिद् योषिति संज्ञात्वेन विनियुज्यमानं बाहुशब्दं को निवारयेदिति केवलात् ततः संज्ञाभूतान्माभूत्। तदन्ताद् यथा स्यादिति समुदायस्य संज्ञात्वं प्रतिपत्त्यर्थमन्तग्रहणम्।

**वलोपश्श्वश्रुनस्य च २।७।६१**

वयोर्लोपः वलोप इति श्रूयमाणस्यैव वकारस्य लोपः कस्मान्न विज्ञास्यते, उच्यते—संज्ञाग्रहणानुवृत्त्या संज्ञायामयं लोपः, न च श्रूयमाणवकारलोपे सति संज्ञा गम्यत इत्युकाराकारयोरयं लोपो विज्ञायते।

([3]शिष्यहितान्यासे स्त्रीप्रत्ययपादः)

---

१. अध्वर्युः (भं०)

२. सहलक्ष्मणवामादेरुरो (शि० हि० वृ०)

३. भट्टोग्रभूतिकृते शिष्यहितान्यासे शिष्यालोकाभिधाने नामप्रकरणे सप्तमः पादः (भं०)

# आख्यातप्रकरणम्

## प्रथमः पादः

**अथ परस्मै पदानि ३।१।१**

[1]परार्थानि पदानीति तादर्थ्यचतुर्थ्यन्तस्य परशब्दस्य पदशब्देन कृते समासे तत्स्था लोप्या इत्यादिना विभक्तिलोपो न भवति तद्विधौ वा तृतीयासप्तम्योरित्यतो वा शब्दस्य व्यवस्थितविभाषावाचिनोऽभिसम्बन्धात्। वक्ष्यमाणेत्यादि बहुत्वापेक्षया चायं बहुत्वनिर्देशः। परस्मैपदानीत्येवंरूपा त्वियं संज्ञा न भवति। यतः आवर्तिन्यः संज्ञाः भवन्ति। न च परस्मै इति परस्मैशब्देन पदानीत्ययं शब्दः क्वचिदावर्तते, किन्तर्हि परस्मैपदशब्दः। यद्येवमाशिषि च परस्मै इति परस्मै-शब्देन व्यवहारो न सिध्यति। सत्यभामा भामेत्यादिवदेकदेशेन समुदायस्य ग्रहणात् सेत्स्यति। अधिकारोऽयम् इति संज्ञात्वेनेति शेषः। वर्तमाना ति तस् अन्तीत्यादिषूपतिष्ठत इति [2]तत्रैवोपस्थाने सति त्यादीनि परस्मैपदसंज्ञानि भवन्तीति विशिष्टवाक्यार्थोत्थानादाकाङ्क्षा विनिवृत्तेः [3]अधिकारार्थत्वेनोपयुज्यमानोऽयमथ शब्द इति यो मन्यते तं प्रत्याह—अथ शब्दो मङ्गलार्थ इति। अगर्हिताभीष्टार्थसिद्धिर्मङ्गलम् तदर्थः प्रयोजनं यस्यार्थशब्दस्य अथ शब्दस्य स तथोक्तः स्यादिपद संस्कृतमनन्तरं त्यादिपदस्यावसरो वर्तते इत्यानन्तर्यार्थत्वप्रतिपादनम्। पुनरस्याथ-शब्दस्य फलशून्यमेवेति किं तेन।

**नव पराण्यात्मने ३।१।२**

पराणीत्यत्र कृते नुकारागमे परत्वनित्यत्वाभ्यां कृतेऽपि णत्वे घुटिचासम्बुद्धाविति च-शब्दादुपधादीर्घः। सर्वत्रात्मन इत्यादि व्यवहारादात्मन इत्येतावती संज्ञेयमिति यस्य भ्रमस्तं प्रत्याह—आत्मने पदानीति। आत्मने पदानि भावकर्मणोरित्यादिव्यवहारादात्मनेपदशब्दोऽयमित्याह—संज्ञात्वेनाधिक्रियते, स च प्राधान्यात् प्रधानविभक्त्या प्रथमया निर्दिष्ट इत्यर्थः।

---

१. परार्थं पदानि परस्मै पदानीति (भं०)
२. तत्रैवास्योपस्थाने (भं०)
३. अधिकाराङ्गत्वेनानुपयुज्यमानो (भं०)

कस्मात्तर्हि पदानीत्येतन्नाश्रीयत[1] इत्याह—आदिलोप इत्यादि। पूर्वसूत्रात्तु पदानीत्येतदशक्यमनुवर्तयितुम्, तस्य संज्ञापदैकदेशस्य पृथग्रूपतयाबुद्धावपरिस्फुरत इहाकृष्टुमशक्यत्वात्। यद्येवं सर्वत्र आत्मन इत्यादौ कथमात्मने शब्देन व्यवहारः, उच्यत, तत्रापि पदानीत्युपात्तं तत्तु पूर्ववल्लुप्यते। अयमप्यधिकार इति नवशब्दस्य संख्याशब्दस्य संख्येयनिष्ठत्वात्। संख्येयस्य च संज्ञिन कस्यचिदनुपादानात्साकाङ्क्षत्वे गति पारार्थ्यादधिकारोऽयमिति भावः। तेन नवेति पराणि इति आत्मने पदानि इति चैतत्त्रयमुत्तरत्राप्यधिक्रियते।

**त्रीणि त्रीणि प्रथममध्यमोत्तमाः ३।१।३**

त्रीणीत्यस्य परस्य स्थाने द्विश्च पदमिति वचनाद्वीप्साविषये त्रीणि त्रीणीत्ययं शब्दः आदिश्यत इति स्थानिवद्भावात्त्रीण्येकमेवेदं पदम्। अन्ये तु सत्यपि [2]स्थानिवत्वे स्वगतमादेशस्य भेदमाश्रित्य पदद्वयमेतदित्याहुः। वचनापेक्षया चैष नपुंसकेन निर्देशः, मध्ये भवः मध्यमः, तमादित्वान्म-प्रत्ययः, उत्तम इत्युच्छब्दात् तद्गतार्थवाचिनस्तमादित्वात्तमप्रत्ययः। परस्मैपदानामात्मनेपदानां चेति। नन्वानन्तर्यादात्मनेपदग्रहणस्यैवानुवृत्तिः न्याय्या, अस्त्येतत्। इच्-प्रत्ययविधौ तु प्रथमग्रहणे कृते यदात्मनेग्रहणं करोति ततो विज्ञायते प्रथमादिसंज्ञाविधौ परस्मैपदग्रहणमप्यनुवर्तत इति प्रथममध्यमोत्तमसंज्ञानामित्यादि। कथं पुनरेषां प्रथमादिव्यपदेशभाजां पुरुषसंज्ञा बोद्धुं शक्यत इत्याह।

**युगपद्वचने परः पुरुषाणाम् ३।१।४**

युगपद्वचन इति तत्पुरुष इति विभक्तयो द्वितीयाद्या इत्यादिना प्रथमान्तयोरप्ययं तत्पुरुषः। यत उक्तं द्वितीयाद्यभावेऽपि क्वचिद्, दृश्यते [3]समास इति। परिभाषेयमिति। तत्र परः पुरुषः परिभाष्यमाणः धातुः परिभाषणभाक्। युगपद्वचन इति सत्सप्तमी। पुरुषाणामिति निर्धारणषष्ठी। परिभाषास्वरूपं प्रदर्शयितुमाह—पुरुषाणामित्यादि। युगपद्वचनइत्यस्यार्थं व्यक्तीकर्तुमाह – तुल्यकालाभिधान इति। धातोः परो भवतीति। अथ धातोरित्येतत्कुतः, उच्यते—परिभाषेयम्, स च यत्र किञ्चित्कार्यं विधीयते [4]तत्रानियमनिवारणायोपतिष्ठते यथा शेषात्कर्तरि परस्मैपदम्। आत्मने पदानि भावकर्मणोरित्यादिषु। अत्र च धातोरेकस्वरादित्यतो धातोरित्यपेक्षते। एवं च विधि-

१. न श्रूयत (भं०)
२. स्थानिवद्भावे (भं०)
३. समासान्त (वा०)
४. तत्र नियमनिर्धारणायोपतिष्ठते (भं०)

प्रदेशे परिभाषाया व्यापारादर्थादिह धातोरित्येतल्लभ्यते। इदानीं परस्मैपदादिविधौ याद्दश्यनियमे प्राप्ते वचनेनानेन नियमः क्रियते। तं नियमं प्रदर्शयितुमाह—एकस्मिन्धात्वर्थ इत्यादि। एतेनैकधात्वर्थविषयतया साधनत्रयोपनिपाते सत्यनियमस्य प्राप्तिं दर्शयति। अत्रेत्यादि। स च त्वं च अहं च पचाम इत्यत्रोदाहरणानाम् युष्मदस्मदां [1]त्रयाणां पाकार्थं प्रति साधनत्वेनावस्थितानां प्रयोगे नाम्नि प्रयुज्यमानेऽपीत्यादि सूत्रत्रयारम्भसामर्थ्यात् पर्यायेण सर्वे प्रथममध्यमोत्तमाः प्राप्नुवन्ति। तेषामित्थं प्राप्तौ सत्यामेतत्सूत्रारम्भात् परः पुरुषः उत्तम एव प्रवर्तते। एतच्च व्यक्तौ पदार्थे उक्तम्। तत्र हि यद्यपि स पचति, त्वं पचसि, अहं पचामीत्यत्राविरोधिनि निजे विषये प्रथमादयः सावकाशाः, तथापि विरोधिविषये तेषां प्रवृत्त्यभावे सति नाम्नि प्रयुज्यमानेऽपीत्यादिलक्षणानर्थक्यप्रसङ्गात् पर्यायः प्राप्नोति। यतो व्यक्तौ पदार्थे प्रति लक्ष्यं लक्षणं प्रवर्तते। एवं च यस्मिन्नेव लक्ष्ये लक्षणं न प्रवर्तते तल्लक्ष्यविषये तस्य लक्षणस्यानर्थक्यं प्रसज्येत इति लक्षणानर्थक्यभयादेव प्रतिव्यक्तिलक्षणप्रवृत्त्या विरोधिविषयेऽपि पर्यायेण सर्वेषां प्रथमादीनामस्ति प्राप्तिः, जातौ तु पदार्थे प्रवृत्तिरेवैतेषां न भवेत् स्वविषये चरितार्थत्वाच्च न लक्षणानर्थक्याप्रसङ्गः। तदेवं पर्याये प्रवृत्त्यभावे वा प्राप्ते परिभाषार्थं वचनमिदमारभ्यते। यद्येवं पुरुषाणामिति बहुवचननिर्देशाद् द्वयोस्तुल्यकालप्राप्तौ परो न सिध्यतीत्याह—पुरुषाणामिति बहुवचननिर्देशमप्रधानमिति द्वित्वम्। यथैककर्तृकयोरित्यत्र। तेन किं सिद्धं भवतीत्याह—तेनेत्यादि। प्रथमाद्यनुवृत्तौ पुरुषग्रहणं प्रथमादीनां पुरुषसंज्ञास्तित्वप्रतिपत्त्यर्थम्। अन्ये तु किमेषां फलशून्यया [2]गुरुसंज्ञयेति मन्यमानाः प्रपञ्चे [3]गुरुलघुत्वमचिन्तनीयमिति समाधानमाहुः [4]प्रपञ्चार्थो ह्ययं योगः। तथा चाह पूर्वोक्तपरोक्तपरिभाषयेत्यादि।

**नाम्नि प्रयुज्यमानेऽपि प्रथमः ३।१।५**

प्र-पूर्वाद् युजेर्वर्तमाने शन्तृङ्ङानशावित्यानश्। सार्वधातुके यण्, आन्सोऽन्त इति अनः मागमः। धातोः प्रथमो भवतीति। कुत एतत्, उच्यते—शेषात् कर्तरि परस्मैपदम्। आत्मनेपदानि भावकर्मणोरित्यादिना प्रथमपुरुषस्य सिद्धत्वाद् वचनमिदमारभ्यमाणं नियमार्थं विज्ञायते, नियमश्च यादृश एव विषये विधानं तादृश एव विषये प्रवर्तते। प्रथमपुरुषस्य च धातोर्विधान-

---

१. त्रयाणामेकार्थम् (मं०)

२. पुरुष (मं०)

३. लाघव (मं०)

४. न्यूनपाठः (मं०)

मित्यर्थान्नियमविधावपि धातुप्रकृतिर्लभ्यते । प्रत्ययस्य चायं नियमो नास्त्येव । प्रथम इति । ननूपपदे नाम्नि प्रथम एवेति कुतः, नाम्न्युपपदे देवदत्तेन कुर्वता इत्यादौ शन्तृङ्ङादिप्रत्ययाभावप्रसङ्गात् । एवमुत्तरयोगावपि पुरुषनियमार्था-वेव कथं पुनर्नाम्न्येव प्रथम इत्यभिहिते सति प्रत्ययनियमश्शक्यो विज्ञातुम् । उच्यते, यत एवकारकरणं ततोऽन्यत्रावधारणं भवतीति नाम्नीत्यत एवकारः परश्श्रूयमाणः प्रथमपुरुषं नाम्नि प्रतिबध्नातीति प्रत्ययस्यैवायं नियमो विज्ञा-यते । नाम तु प्रत्ययेन प्रतिबद्धमिति तत्रोपपदे प्रत्ययान्तराणि प्रवर्तन्त एव । अन्ये तु तुल्यजातीयविषयव्यावृत्तिकारित्वान्नियमानां नाम्नि प्रथम एवेत्युप-पदनियमेऽपि मध्यमोत्तमयोरेव व्यावृत्तिर्विज्ञास्यते न तु शन्तृङ्ङादेः [1]प्रत्य-यस्येत्युपपदनियमोऽप्यदुष्ट इत्याहुः । अपरे तु प्रत्ययस्य विधीयमानत्वात्प्राधा-न्यमिति तन्नियम एव युक्त आश्रयितुमिति मन्यन्ते । अपि-शब्दे प्रयुज्यमाने इति गतार्थत्वात् अनु[2]च्चार्यमाणे । ननु वक्ष्यमाणेन योगद्वयेन मध्यमोत्तम-योर्यथाक्रमं युष्मदस्मद्विषये नियतत्वात् अर्थात् प्रथमपुरुषो नाम्न्येव भविष्यती-त्यपार्थको योगारम्भः, नैतत्, अनारम्भे सत्युत्तरत्र प्रत्ययनियमपक्षे युष्मदस्म-दोरनियतत्वाद् यथा तयोः प्रत्ययान्तरं प्रवर्तते । एवं प्रथमोऽपि प्रवर्तते, तस्ये-त्थं प्राप्तप्रवृत्तेः प्रथमस्य नाम्नि नैयत्यमापादयितुमयं योग आरभ्यते । ननु प्रग्रहणं किमर्थमिति प्रशब्दान्विताद् युजेः उच्चारणलक्षणोऽर्थो यः प्रतीयते स युज्यमानशब्देन प्रत्येष्यते, कुतः, कारकशक्तियुक्तं हि विभक्त्यन्तं लिङ्गं तस्य धातुना युज्यमानतायां चेत्प्रत्ययः तदा सामर्थ्यलभ्यमेव तस्योच्चारणम्, अनु-च्चार्यमाणस्य सम्बन्धायोगादिति नार्थः प्रग्रहणेनेति भावः । अत्रोच्यत इत्या-दिना परिहारमाह—नाम्नो धातुना सह या प्रयुज्यमानता तस्याः यः प्रकर्षा-तिशयः तस्य प्रतिपत्त्यर्थं ग्रहणं क्रियते । कः पुनः युज्यमानतायाः प्रकर्ष इत्याह—तेनेत्यादि । विभक्त्यन्तेन धातुना सामानाधिकरण्येनैककारकतया सम्बध्यमाने नाम्न्युपपदे प्रथमपुरुष इत्यसौ युज्यमानतायाः प्रकर्षः । यथा—स पचतीत्यत्र । अत्र हि द्वयोरपि नामधात्वर्थयोर्द्वयोरपि कर्तृनिष्ठत्वात्सामाना-धिकरण्यमेव । देवदत्तेन पूज्यमेत्वमित्यत्र तु नाम्नो धात्वर्थेन नास्ति सामाना-धिकरण्यम् । कथं नास्तीत्याह—अत्रेत्यादि । देवदत्तस्यात्र कर्तृत्वं कर्तरि चेति ततः कर्तरि तृतीयाविधानात् धात्वर्थस्य तु कर्मविषयत्वमात्मने पदानि भाव-कर्मणोरिति कर्मण्यात्मने पदप्रवृत्तेः । तेनात्र कारकभेदावगमे प्रथमपुरुषो मा [3]भूदित्येवमर्थं प्रग्रहणम् । नन्वयं युष्मच्छब्दसामानाधिकरण्यात् परत्वा-

---

१. अधिकपाठः (भं०)

२. इतोऽग्रे भ्रष्टपाठो प्रतीयते (ननु पूर्वम्)

३. भूदित्येतदर्थम् (भं०)

मध्यमस्य विषयः [1]तत्कथमेवात्र प्रथमपुरुषस्य प्राप्तिः। एवं मन्यते, तेषां परमिति योगारम्भाज्जायते, पूर्वोक्तपरोक्तपरिभाषा सव्यभिचारेति। एवं च प्रथमपुरुषोऽप्यत्राशङ्क्यत इति तुल्यकारकविषयप्रतिपत्त्यर्थं प्रग्रहणं कर्तव्यमेव। न कर्तव्यम्, कालभावयोस्सप्तमीत्यनेन हि भावविहितया नाम्नीत्यनयैव सप्तम्यैव योगे लब्धे यद् युज्यमानग्रहणं कृतं तान्येव विशिष्टयोग प्रतिपत्त्यर्थत्वान्नामधात्वर्थयोरेवकारविषयतया प्रथमपुरुषो विज्ञास्यत इत्येवं तर्ह्यस्यैवार्थस्य द्योतनार्थं प्रग्रहणम्।

**युष्मदि मध्यमः ३।१।६**

युष्मासमभ्यां मदिगित्यत्र यस्सिद्धो युष्मच्छब्दस्तदनुकरणभूत इह युष्मच्छब्दो निर्दिश्यते। ततोऽनुकार्येणार्थेनार्थवत्वात्सप्तमी। यद्येवं तस्यां परतो [2]युष्मदोरेकत्व इत्यनेन लक्षणेन त्वदादेशः। तस्य च एत्वमस्थानिनीत्येवं कस्मान्न भवतीत्याह—युष्मदीत्यत्रेत्यादि। अनुकार्यप्रतिपादनपरो योऽयमत्र युष्मदीति निर्देशः ततो हेतोस्त्वदादेशादेर्लक्षणस्याभावः। लक्षणप्रवृत्तौ हि सत्यामनुकरणरूपविनाशः प्रसज्येत तथा च वैसादृश्यादनुकार्यप्रत्यायनं न भवेत्। यद्यपि च त्वयीत्यपि कृते युष्मदर्थावसायोऽस्त्येव तथाप्येवं कृते सत्येकत्वविषय एवायं मध्यम इति कस्यचिदाशङ्का स्यादिति तन्निवृत्तये लक्षणाभावः। एवमुत्तरसूत्रेऽपि इति लक्षणाभाव इति शेषः। तत्रापि ह्येतल्लक्षणप्रवृत्त्या तवमयीति रूपं प्रसज्येत, युष्मदि प्रयुज्यमान इति पूर्ववत्सिद्धौ सत्यां मध्यमः[3] नियमार्थत्वादस्य योगस्य युष्मद्येव प्रयुज्यमान इति मन्तव्यम्। एवमुत्तरत्रापि येन विधिस्तदन्तस्येति तदन्तविधिविज्ञानादिहापि भवति परम त्वं पचसि इति। यद्येवं त्वामतिक्रान्तः अतित्वम् पचतीत्यत्रापि प्राप्नोति, नैतत्, युष्मदर्थेन हि यत्र धातोस्समानाधिकरणं तत्र मध्यमः। अतित्वामित्यत्र युष्मदर्थोपसर्जनभूतेनातिक्रान्तार्थेन सामानाधिकरण्यमिति तस्य नासौ विषयः। अत्वं त्वं सम्पद्यते त्वद्भवतीत्यत्र तु च्व्यन्ते युष्मद्युपपदे न भवति। अत्वयि त्वच्छब्दप्रयोगाद् युष्मदो गौणार्थत्वात्। यद्येवं त्वदादेशोऽपि न प्राप्नोति, नैतत्, गौणमुख्यव्यवहारे ह्ययमर्थविषयः अर्थाश्रय एव कार्ये कर्तव्ये प्रवर्तते। मध्यमप्रवृत्तिलक्षणं चेदं कार्यमर्थाश्रयं युष्मदि सामानाधिकरण्य इत्येवं विधानात्। सामानाधिकरण्यं चार्थनिमित्तमिति मध्यमस्याप्रवृत्तौ युक्तो गौणार्थत्वादिति परिहारः। त्वदादेशस्तु शब्दमात्राश्रयत्व इति कर्तव्ये गौणमुख्यन्यायो

---

१. तत्केवात्र (वा०+भं०)

२. युष्मदः त्वन्मदोरेकत्वे (भं०)

३. अधिकपाठः (भं०)

नावतरति। तेनासौ भवत्येव। यद्यपि चासावेकत्ववचनादर्थाश्रयोऽपि तथापि तस्यैकत्व इति लक्षणस्यार्थस्यात्र गौणमुख्यव्यवहारसम्भवाद् गौणमुख्यपरिभाषा त्वदादेशविधौ नाश्रीयत इति शब्दमात्राश्रयत्वं त्वदादेशस्य वर्ण्यते। भवान्करोतीत्यादौ तु मध्यमो न भवति युष्मदर्थाभावात्। सम्बोधनविषयो हि युष्मदर्थः। न च भवच्छब्दप्रयोगे सम्बोधनं प्रतीयते या त्वनयोः पर्यायत्वप्रतिपत्तिस्सा विषयैक्यात्। यत्र सम्बोधनविषयत्वं तत्र भवत्येव मध्यमः। यथा भवति भिक्षां देहीति। विषयान्तरे युष्मदर्थाभावान्न भवति, यथा [1]भवति भिक्षां ददातु भवान्करोतीत्यादौ।

**अदाब्दाधौ दाः** [2]३।१।७

दाप् लवने दैप् शोधन इत्यनयोः यत्सामान्यं दाबिति रूपं तदिह गृह्यत इति। ननु कथमेतत्, यावता दैपो दाबिति रूपमात्वं विना न घटते, तच्च तस्य न प्राप्नोतीत्यसन्ध्यक्षरान्तत्वात्, सत्यम्, अनुबन्धानां तु कार्यार्थमासञ्जनमिति तेषां प्रयोगाननुपातित्वात्। व्येञो अनव्ययतेरित्यात्वनिषेधारम्भाच्चानुबन्धकृतमसन्ध्यक्षरान्तत्वं नाश्रीयते, तेन दैपस्सन्ध्यक्षरान्तत्वादात्वे प्रवृत्ते दाबिति रूपं भवत्येव। सामान्यमिति चानेनैतद् दर्शयति। दाब्दैपोः यद् दाबिति रूपमात्रमुभयानुगतं तद् गृह्यत इति। एवं च कृत्वा दैपो दाबिति [3]रूपस्तु लाक्षणिकत्वात्कथं निषेधे ग्रहणमिति। न चोदनीयमेतत्, नहि दाबिति रूपमात्रपरिग्रहे सति लक्षणप्रतिपदोक्तपरिभाषोपतिष्ठते। इदं लाक्षणिकम् इदं प्रतिपदोक्तमिति विशेषावभासे सति अस्या उपस्थानात्। यद् वा दैपः पानुबन्धकरणसामर्थ्यादनुपस्थानमस्याः स्यात्। तस्य हि पानुबन्धोऽदाबित्यत्र निषेधे दापिदैपोरपि परिग्रहो यथा स्यादिति क्रियते। यदि चास्या उपस्थानं स्यात् ततो दैपोः दाब्रूपतया लाक्षणिकत्वाददाबित्यत्र निषेधे ग्रहणम्। सन्ध्यक्षरान्तानामकारा इत्यात्वे कृते यत्सामान्यमित्येतेन चतुःसंख्यावच्छिन्न दा-रूपधातुगतस्य चेति रूपसामान्यपरिग्रहात्पूर्ववदनुपस्थानं लक्षणप्रतिपदोक्तपरिभाषाया इति दर्शयति। तथा च दोदेङावपि दा-रूपो गृह्यते। एकानुबन्धकग्रहणे न द्व्यनुबन्धकस्येत्येतदपि नोपतिष्ठते। रूपसामान्य-परिग्रहादेवेहापि दाञोऽपि ग्रहणम्। धा-इति यद्रूपमिति सामान्यमिति शेषः। तद् धा-ग्रहणेन गृह्यत इति सम्बध्यते। ईत्वं स्यादिति। दामा गायतीत्यादिना अदाबित्यत्र विशेषणार्थ इति पकारेण विशेषणेनादाबित्यत्र निषेधे

---

१. भवती (भं०)
२. ३।१।८ (दु० वृ०)
३. रूपस्य (भं०)

दाब्दैपोः परिग्रहो यथा स्यादित्येतदर्थः तयो पकार आसक्तः इत्यर्थः ।

**क्रियाभावो धातु.** [1]३।१।८

भवतेरिन्नन्तादिति सत्तार्थस्य भवतेरकर्मकत्वात्क्रियालक्षणेन कर्मणा सम्बन्धो नोपपद्यत इति कर्मोपपदलक्षणस्ततो प्रत्ययो न प्राप्नोतीत्यतो इन्नन्तादित्युक्तम् । इन्नन्ताः हि धातवो प्रयोज्येन कर्मणा सकर्मकतां प्रतिपद्यन्ते [2]यथा—शेते देवदत्तः, शाययति देवदत्तम्, यद्येवं यो भावयतीत्यस्यार्थः स करोतीत्यस्यार्थ इति कृत्वा क्रियायाः कर्ता क्रियाभाव-[3]शब्देनाभिधेय इति आशङ्क्याह—यश्शब्दः क्रियां [4]भावयति प्रतिपादयतीत्येतेन भावयतिरिह प्रतिपादने वर्तते इति दर्शयति । तेन यश्शब्दः क्रियां भावयति प्रतिपादयतीति प्रतिपत्तृबुद्धावुपस्थापयति ([5]क्रियाविशेषप्रतीतिमुपजनयति स धातुसंज्ञ इत्यर्थः । का पुनरियं क्रिया नाम इत्याह—क्रियत इति) क्रियेति साध्यमानावस्था पूर्वापरीभूतावयवैकफलमुद्दिश्य प्रवर्तमानै[6]कत्वेनाध्यवसितो व्यापारात्[7]साक्षात्प्रवाहः क्रियेत्यर्थः । यद्येवं घण्टाया ध्वनिरिति सिद्धस्वभावोऽपि ध्वनिः घण्टा ध्वनतीत्याख्यातेन कथं साध्यतया प्रत्याय्यते, उच्यते, यथा साध्यरूपामपि क्रियां कृदन्तश्शब्दः सिद्धस्वभावामाचष्टे तथैव सिद्धरूपस्यापि साध्यरूपतया प्रतीतिर्भविष्यति । शब्दव्यापाराधीनो ह्ययं क्रियाद्रव्यप्रविवेकः न वस्त्वर्थनिबन्धनः । एवं च क्वचिच्छब्दस्साध्यरूपस्यापि सिद्धरूपतामाचष्टे । यथा पाकः पाक इति, तथा चात्र सिद्धवस्तुविषये द्विवचनबहुवचने प्रवर्तेते । क्वचिच्च स एव शब्दः सिद्धस्वभावमपि पूर्वापरीभूतावयवत्वसमाश्रयणेन साध्यरूपतया प्रत्यायतीति कोऽत्र भ्रमः । गडि वदनैकदेशे, खर्दंदन्तशूक इत्यादीनां तु द्रव्य[8]वृत्तीनामभिधीयते क्रियावाचित्वेऽपि धातुत्वं गणपाठसामर्थ्यात् तच्च गण्डादिशब्दसिद्धये एव सत्यां धातुसंज्ञायां त्यादय इति । नन्ववगते क्रियावाचित्वे धातुसंज्ञा स्यात्, न च पचतीत्यादौ केवलात् पच्छब्दादिमात्रः कश्चिदर्थोऽवगम्यते, अस्त्येतत्, अन्वयव्यतिरेकाभ्यां तु क्रियावचनाः पचादयः ।

---

१. ३।१।६ (दु० वृ०)

२. तथा (भं०)

३. शब्देनाभिधीयते (भं०)

४. न्यूनपाठः (भं०)

५. कोष्ठांकितः न्यूनपाठः (भं०)

६. एकत्वेनावस्थितो (भं०)

७. साक्षण (वा०+भं०)

८. अभिधीयते इति न्यूनपाठः (भं०)

तथा च पचति पच्यत इति कर्तृभेदेऽप्यवगम्यमाने पक्तिमात्रमनुगतमेव प्रतीयते। अतो बुध्यामहे कारकभेदात्रगतावपि यत्पक्तिमात्रानुगमनं स नूनं पचतेऽर्थ इति। ननु साध्यमानोऽर्थः क्रिया। न च तस्याः साध्यत्वं प्रत्ययेन साधनाभिधायिना विना प्रतीयते। तत्कथं पचतीत्यादौ केवलात्प्रकृतिमात्रात् क्रियावाचित्वप्रतीतिः स्यात्, सत्यम्। लौकिकी मा भूत्, शास्त्रीया त्वस्त्येव अन्वयव्यतिरेकसमधिगम्या। न च बाधिता प्रतीतिरपह्नोतुं शक्यते, तस्मादन्वयव्यतिरेकाभ्यामवगतक्रियावचनत्वात् पचादयो धातुसंज्ञाः। [1]अथवा धातुरिति पूर्वाचार्यसंज्ञां प्रति कोऽभिनिवेश इत्याह—पूर्वाचार्यसंज्ञाङ्गीकरणमित्यादि। तेन किं सिद्धं भवतीत्याह—तेनेत्यादि। प्रभुशब्दस्य सोपसर्गस्य समुदायस्य धातूपसर्गारब्धस्य विशिष्टसत्ता लक्षणार्थाभिधायित्वात् क्रियावाचित्वात् प्राप्ता धातुसंज्ञा पूर्वाचार्यसंज्ञाङ्गीकरणान्न भवति। प्रभृतेः पाठाभावात् प्रशब्दः प्रागकारागमः स्यादिति प्रभूशब्दस्य धातुत्वाद् धात्वादिसंशब्दनेन च अकारागमस्य प्रवृत्तेः। यद्येवं स्तुन्भुप्रभृतीनां सौत्राणां पाठाभावाद् धातुसंज्ञा न सिध्यतीत्याह—सौत्राणामित्यादि। स्तन्भु स्तुन्भु स्कन्भु स्कुन्भु स्तुन्भ्यः चेत्यादौ पूर्वाचार्यसूत्रे ये भवन्ति ते सौत्राः एवमादेरणिष्यत इति भावेऽर्थेऽण्-प्रत्ययः। तेषां धातुसंज्ञा वक्तव्या। न चेदमपूर्वाभिधानमपि शब्दानुवृत्तेरेव सिद्धत्वात्। ननु तेषामधातुत्वे सति धातुविहिते क्त्वा-प्रत्यये परस्मिन्निड्-विकल्पप्रवृत्त्यर्थम्, उद्-अनुबन्धकरणमपार्थकं स्यात्। ततस्तत्करणबलादेवैषां धातुत्वं भविष्यति, सत्यम्। क्त्वा-प्रत्यये एव धात्वर्थमित्थं विज्ञायते। प्रत्ययान्तरधातुविहितमेभ्यो न भवेत्। अथापि भवेदेवमपि जु-प्रभृतीनां सौत्राणां केन संज्ञा स्यादित्यपि शब्दानुवृत्तिरेव ज्यायसी। पूर्वाचार्यसंज्ञापरिग्रहादेव क्रियाभावग्रहणं लब्धम्। अक्रियावाचिनां पूर्वाचार्यैरनङ्गीकृतत्वाद् धातुसंज्ञाया इति किं क्रियाभावग्रहणेनेत्यभिप्रायेणाह—क्रियाभाव इति किमिति। द्रव्यार्थवृत्तीनां भू-प्रभृतीनामप्यविशेषात् धातुसंज्ञा समाशङ्क्यत इति आकूतेन प्रत्युदाहरति भूर्वेति, भू-शब्दो भूमिवाचीत्यादिना अक्रियावाचित्वं भूर्वाशब्दयोर्दर्शयति।

**काले [2]३।१।९**

कृतव्युत्पत्तिरभिहितार्थश्च कालशब्दः, कालभावयोः सप्तमीत्यत्र अधिकारोऽयमित्यधिक्रियते प्रस्तूयत इत्यधिकारः। किं पुनरत्राधिक्रियते, काले शब्दः। यद्येवं प्रधानविभक्त्या प्रथमयासौ निर्देष्टव्यः न तु सप्तम्या। नहि तत्र

१. धातुत्वम् (भं०)
२. ३।१।१० (दु०वृ०)

किञ्चिदधिक्रियते, अस्त्येतत्, किं तु सेनातीत इत्यादौ अधिकारो प्रस्थानवाक्ये यदतीत इति पदं सप्तम्यन्तं कालशब्दस्य विशेष्यत्वेनाभिमतं विद्यते तद्धर्मापत्त्या काले इत्ययं सप्तम्या निर्देशः। अन्यथा कालातीतशब्दयोः प्रथमासप्तम्यन्तयोः विशेषणविशेष्यभावोऽधिकारबलादुपपाद्यमानो मृदुमतीनां प्रतिपत्तिगौरवविधायी स्यात्। अथ यदीदं नारभ्येत किं स्यात्, उच्यते—सेनातीते इत्यादौ यदतीत इत्युपात्तं तत्प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूत इति प्रत्ययवाच्यस्य कर्त्रादेः साधनस्य प्राधान्याद्विशेषणं विज्ञायते। ततश्च यत्र साधनमतीतं भविष्यच्च तत्रैवातीतादिविहितः प्रत्ययः प्राप्नोति। रामो वनमगच्छत्, उत्पत्स्यमानोऽस्य पुत्रो राजा भविष्यतीति। देवदत्तोऽयं वनमगमत्, गमिष्यति वेत्यादौ न स्यात्। वर्तमानकालावच्छिन्नत्वात् साधनस्य। योगारम्भे तु सत्यतीतादिना कालोऽभिसम्बध्यते। कालश्च परिच्छेदहेतुः। तेन च योगः सिद्धस्वभावं साधनं विहाय धात्वर्थस्यैव सम्भवति। तस्य साध्यस्वरूपत्वात्। तेन साधनमतीतमस्तु [1]भविष्यद्वा सर्वथा धात्वर्थो यत्रातीतो भविष्यच्च तत्रातीतकालादिविहितप्रत्ययः प्रवर्तते, तेन धात्वर्थानुयायित्वमतीतादेर्यथा स्यात् [2]साधनानुयायित्वं मा भूदिति वचनमिदमारभ्यते। ननु न साधनस्य अतीताद्यवच्छेदः स्वतोऽस्ति तस्य सिद्धस्वभावस्य सर्वतो निराशंसस्य कालेनावच्छेत्तुमशक्यत्वात्। क्रियाद्वारकस्तस्यातीतादिना परामर्शः। तथा च घटोऽभूद् भविष्यति वेति घटगतभवति क्रियैव कालेन भिद्यते न घटः। एवं चातीतादिविशेषणं साधनमपास्य धात्वर्थस्यैव भविष्यति। तथा च कृत्प्रकरणे नास्ति कालाधिकारः, क्रियते चेत् तर्हि क्रियतां यत्र प्रधानं धात्वर्थः। प्रत्ययार्थः इह तु क्रियाप्रधानत्वादाख्यातस्य कथं प्रधानं धात्वर्थमपहायातीतादिना साधनस्य सम्बन्धः स्यात् इति सर्वथा धात्वर्थ एवातीतादिना विशिष्टे प्रत्ययः सेत्स्यतीति किमनेन योगेन। सत्यम्। अयमेव त्वर्थो मृदुमतीननुग्रहीतुं योगारम्भेण प्रतिपाद्यते।

**सम्प्रति वर्तमाना [3]३।१।१०**

वृत्तेर्वर्तमाने शन्तृङ्ङानशावित्यानश्, अन्विकरणः, गुणः, आत्मोऽन्त [4]आन इति मागमः। संप्रतिकाले वर्तमाने काले इति सम्प्रतीत्यस्य वर्तमानकालार्थवृत्तित्वादवधारणं चात्र बोद्धव्यम्। संप्रत्येव काल इति। शेषात्कर्तरीत्यादिना

---

१. भविष्यत्वात् (वा०)
२. अननुयायित्वम् (भं०)
३. ३।१।११ (दु०वृ०)
४. अधिकः पाठः (भं०)

हि सिद्धावपि वर्तमानादयोऽत्र प्रकरणे काले नियम्यन्ते अतएव धातोर्वर्तमाना भवतीति धातोः प्रकृतत्वमाह--सिद्धे सत्यारम्भस्य नियमार्थत्वात् । सिद्धश्च वर्तमानाया धातोरेव नान्यतः । अथ वर्तमाने काले धातोरिति कथं वाचो युक्तिः धातुः हि शब्दः न च शब्दस्य काले वृत्तिस्सम्भवति तस्य साध्यमर्थं प्रति परिच्छेदकादित्वात् । अर्थद्वारेण तु धातोर्वर्तमाने काले वृत्तिः । तेन वर्तमाने काले साध्ये धात्वर्थे यो धातुः प्रवर्तत इत्येवं व्याख्यायते । ननु धात्वर्थः क्रिया सा च साध्यरूपत्वादसती, न चासतोऽर्थस्य [1]वर्तमानत्वे योगो उपपद्यते । सदवस्थस्य वस्तुना वर्तमानत्वयोगात् । एवं क्रियायाः वर्तमानत्वेन योगाद् तद्द्वारेणापि कथं वर्तमाने काले धातोः वृत्तिर्भवेत् । नैतत्, द्रव्यात्मिका हि सत्ता मा भूत् । क्रियायाः साध्यत्वेन तु तस्याः सतीत्वं को[2]ऽपह्नुवीत, नहि पदार्थानामेकरूपमेव सत्वं, सर्वस्य स्वेन रूपेण सत्त्वात् । तथा च नीरूपोऽप्यभावो विज्ञानप्रतिभासिना रूपेण रूपमवलम्बत एव । अन्यथा ह्ययमव्यवहार्य एव स्यात् । अवश्यं च साध्यमानत्वे क्रियायाः सत्त्वमभ्युपेयम्, अन्यथा हेतुरहितदेवदत्तस्य देशान्तरव्याप्तिलक्षणा फलोत्पत्तिरेव न भवेत् । तस्याः हि फलोत्पत्तेर्निमित्तान्तरासम्भवाद् गतिक्रियैव निमित्तं तदालम्बनाच्चायमबाधितो गच्छतीति व्यपदेशः । तस्माद् व्यापारमन्तरेण कारकसन्निधानमात्रादनुपपद्यमानं फललक्षणं लिङ्गमनुमापकं क्रियायाः तदावलम्बनं च वर्तमानत्वमभ्युपगन्तव्यम्, अन्यथा भूतभविष्यतोरपि कालयोरनुपपत्तिः स्यात् तयोर्वर्तमानापेक्षत्वात् । किं च सति वर्तमानत्वाभ्युपगमे भावानामसत्वमेव स्यात् । यतो भूतभविष्यतोस्तावत्कालयोस्तेन सन्त्येव, यदि चान्तरालेऽपि तेन भवेयुः । ततस्तेषामसत्वमेव प्रसज्येत । अतस्तेषामवश्यमणीयसी [3]क्रियावलम्बमाना वर्तमानावस्थाभ्युपेयेति साध्यमानरूपेण क्रिया विद्यत एव तस्याश्च वर्तमानत्वेनोपपद्यते योगः । यद्येवं तिष्ठन्ति पर्वताः वहन्ति नद्यः इत्यादौ वर्तमाना न प्राप्नोति स्थानादेः सर्वदाभावात् साध्यत्वानुपपत्तेः अक्रियारूपत्वात् क्रियाधर्मस्य वर्तमानत्वस्याप्यभावात् । नैतत्, प्रबन्धाव्युपरतिलक्षणं हि वर्तमानं कालमाहुः । न च स्थानादिक्रिया कदाचिदुपरतेऽप्यस्ति तस्याः वर्तमानत्वम् । अस्थुः स्थास्यन्ति वा पर्वताः, अवाक्षुः वक्ष्यन्ति वा नद्यः इति भूतभविष्यद्व्यपदेशस्तर्हि न सिध्यति । अतीतानागतभूपालसत्तालक्षणोपाधिभेदात्सेत्स्यति ।

---

१. क्रियायां वर्तमानेन (भं०)

२. अपह्नुवते (भं०)

३. क्रियालम्बना (भं०)

**स्मेनातीते** [1]३।१।११

अतीतकालद्योतकः स्मच्छब्दोऽव्ययम्, शब्दपरत्वान्निर्देशस्य विभक्तेर्लुगभावः। अत्येति स्मेति गत्यर्थाकर्मकेति अतिशब्दस्य पूर्वादिणः कर्तरि क्तः, योगशब्दः सप्तम्यन्तः अध्याह्रियत इति सूत्रार्थबलात्। अन्यथा स्मेनातीत्येतदवाचकं स्यादिति भावः। धातोः अतीते काले वर्तमाना भवतीति विधिः, अयं नियमः पूर्वेण वर्तमानाया वर्तमाने नियतत्वादतीते प्राप्त्यभावात् ह्यस्तन्यद्यतनीपरोक्षाणां बाध इति। नन्वतीतमात्रविहिताया: अद्यतन्याः एव बाधो युक्तो। नत्वतीतविशेषविहितयोः ह्यस्तनीपरोक्षयोः। अस्त्येतत्, अपि शब्दस्त्वत्र वर्तते स स्मशब्दयोगे ह्यस्तनीपरोक्षविषये वर्तमानं समुच्चेष्यति। पृष्टप्रतिवचने गम्यमाने इति पूर्वः प्रश्नः? पृष्टम् इति, नपुंसके भावे क्तः इति पृष्टे पूर्वकं प्रतिवचनम् ([2]ननु प्रश्नपूर्वकमेव प्रतिवचनं) भवतीति किं पृष्टग्रहणेन, नैतत्, अनेकार्थो हि प्रतिवचनशब्दः। तथा ह्ययमस्त्यव्ययीभावः वचनं वचनं प्रति प्रतिवचनमित्यस्ति वचनाभिमुख्यवृत्तिः। तथा च विरुद्धमपि वचनं प्रतिवचनमुच्यते, स साधनवृत्तिरप्यस्ति। तदेवमनेकार्थत्वसम्भवे सति प्रश्नपूर्वकं यत्प्रतिवचनं तस्य परिग्रहार्थं पृष्टग्रहणम्। तत्र अकार्षीः कटं देवदत्त इत्येष प्रश्नः। ननु करोमीत्येतत्प्रतिवचनम्। अपीत्यपेक्षते। तेन [3]ननु शब्दे चोपपदे पृष्टप्रतिवचने विकल्पः, अकार्षीः कटं देवदत्तः। न करोमि, नाकार्षम्, अहं नु करोमि, अहं न्वकार्षम्। योगश्चायं प्रयोगतश्चेत्यस्य प्रपञ्चः।

**भूतकरणवत्यश्च** [4]३।१।१२

भूते करणं विधानं भूतकरणमित्येवमयं यदि भूतकरणशब्दोऽव्युत्पन्नः इह गृह्यते ततो यासां विभक्तीनां भूते विधानमस्ति ता भूते विधीयन्ते इत्ययमर्थोऽभिहितः स्यात्। एवं चाभिधेयमाने सति वचनमिदमपार्थकं स्यादित्याशङ्कयाह—व्युत्पन्न एवायं भूतकरणशब्दः। पूर्वाचार्यप्रसिद्धयाकारागमस्य वाचक इत्याह—अद्धात्वादिरित्यादि। अद्यतन्य इति तु न कृतमपूर्वमकारागमस्य पूर्वाचार्यसंज्ञां प्रदर्शयितुम्। तत्प्रदर्शने तु फलं वैचित्र्यमेव। भूतकरणवत्यो विभक्तयो ह्यस्तन्यद्यतनी क्रियातिपत्तय इति कुतः तास्वेव परास्वकारागमस्य सम्भवात्। यद्येवं भविष्यद्विवक्षायां क्रियातिपत्तिर्न प्राप्नोति।

---

१. ३।१।१२ (दु० वृ०)

२. न्यूनपाठः (वा०)

३. न-शब्दे नु-शब्दे (भं०)

४. ३।१।१४ (दु० पा०)

दक्षिणेन [1]चेदयास्यन्न शकटं [2]पर्याभविष्यत्, यदि कमलकमाह्वास्यन्न शकटं पर्याभविष्यदित्युच्यते । च शब्दोऽत्र पठ्यते, स भविष्यति यथादर्शनं क्रियातिपत्तिः समुच्चेष्यति । तथा च भविष्यन्त्यप्यत्र भवति । दक्षिणेन चेद् यास्यति न शकटं पर्याभविष्यतीति । सप्तम्यपि, दक्षिणेन चेद् यायान्न शकटं [3]पर्याभविष्यति ।

**भविष्यति भविष्यन्त्याशीश्श्वस्तन्यः** [4]३।१।१३

[5]भवतेश्शन्तृङ्ङानशावित्यादिना स्येन सहितः शन्तृ-प्रत्ययः, इट्, गुणः, भविष्यन्तीत्यत्र तु शन्तृ-प्रत्ययान्तादृकारेति ई-प्रत्ययः । आशासनमाशीः, क्तयुट् इति भावे क्विप् । अतएव ज्ञापकादित्वम् । शासिवसि इति षः । श्वो भवः श्वस्तनः, तमादित्वात्तन-प्रत्ययः । तत्र विहिता विभक्तिः श्वस्तनीति नदादित्वादी-प्रत्ययः । ननु भविष्यन्त्यादयो भविष्यत्येव काले विज्ञास्यन्ते । तथा हि भविष्यन्तीत्येषा संज्ञा गुरुसंज्ञात्वादन्वर्था सती स्यतिप्रभृतीनां भविष्यत्कालविषयत्वमेवावगमयति । आशीरित्येषाप्यन्वर्थसंज्ञा । तेनानाप्तस्य प्रियस्य प्राप्तुमिच्छा आशीरित्येषामित्येवमाशीरर्थावबोधनाद् [6]स्यादयो भविष्यत् कालमेवावगाहन्ते । एवं श्वो भवः श्वस्तन इति व्युत्पत्त्या श्वस्तनी संज्ञाप्यर्थानुगमनेन त्यादीनां प्रत्ययानां भविष्यत्येव विधानं बोधयतीति नार्थोऽनेन योगेन । नैतत् । गुरुसंज्ञानामपि कासाञ्चिदर्थानुगमनस्य भग्नशक्तित्वदर्शनात् । तथा च सर्वो धातुप्रयोजकमस्येत्यर्थानुगतायामपि गुर्व्यां सार्वधातुकसंज्ञायां न सार्वधातुभ्यः त्यदादयो भवन्ति । घृतं घृणा घर्म इत्यादौ तेषामदर्शनात् । अदर्शनं तु केषाञ्चित् धातूनां नियतप्रत्ययविषयत्वात् । तस्माच्छब्दव्युत्पत्तिमात्रफलमपि भविष्यन्त्यर्थादीनामर्थानुगमनं भवेदिति न संज्ञानामन्वर्थत्वं स्यतिप्रभृतीनां भविष्यत्कालतामवगमयति इति योगारम्भः ।

**तासां स्वसंज्ञाभिः कालविशेषः** [7]३।१।१४

कालसामान्ये विभक्तयो मा भूवन्निति नियमार्था परिभाषेयमारभ्यते ।

---

१. चेद् यास्यति न (भं०)
२. पर्याभविष्यतीति सप्तमी अपि दक्षिणेन चेद् यायान्न (भं०)
३. पर्याभवेदिति (भं०)
४. ३।१।१५ (दु०वृ०)
५. शन्त्राना (भं०)
६. यादयो (भं०), यदादयो (वा०)
७. ३।१।१६ (दु० वृ०)

तत्र कालविशेषं परिभाष्यमाणाः ता अडादयोविभक्तयः परिभाषणभाजः। स्वसंज्ञाभिरिति। हेतौ तृतीया पुंवद्भाषितपुंस्केति स्वा-शब्दस्य पुंवद्भाव इति न तु कर्मधारयसंज्ञक इत्यादिना तत्र हि संज्ञा[1]पूरणीकोपधा इति वर्तते तासामित्यनेन सर्वनामपदेनान्तरे प्रक्रान्तानां बुद्धौ परिस्फुरन्तीनां भविष्यन्त्यादीनामेव तिसृणां विभक्तीनामिहाभिसम्बन्धं प्राप्नोति, न तु परोक्षादीनामिति [2]मन्यमानं प्रत्याह – तासामिति परोक्षादयोऽनुकृष्यन्ते इति आदिग्रहणात् भूतकरणवती प्रभृतयोऽनुकृष्यन्ते न त्वनन्तराः तिस्र एवेति तिस्र एव भविष्यन्त्यादयो नानुकृष्यन्ते, किं तर्हि, परोक्षादयोऽपीत्यर्थः। कुत एव तदवगतमित्याह—तद् ग्रहणं ह्यनार्थकं स्यादिति आनन्तर्यादेव भविष्यन्त्यादीनामनुवृत्तिसिद्धे तद् ग्रहणमपगतप्रयोजनं भवेदिति तदुपादानात्परोक्षादयोऽत्र श्वस्तनीपर्यन्ताः सर्वा एवानुकृष्यन्ते। ननु स्वसंज्ञाभिरिति बहुवचननिर्देशादेव भविष्यन्त्यादीनामनुवृत्त्यभावस्सिद्धः, तासामेव ह्यनुवृत्तौ स्वसंज्ञाभ्यामिति द्वित्वं [3]निर्दिशेत्। नहि भविष्यत्कालस्य भविष्यन्ती संज्ञागतोऽस्ति विशेषः तस्मात् स्वसंज्ञाभिरितीदमेव बहुत्वं परोक्षादीनामनुवृत्तिकारित्वेनावस्थितमिति किमनेन तद्ग्रहणस्य हेतुत्वोपन्यासेन, एवं चेदसफलमतिरिच्यते तद् ग्रहणम्, अस्त्येतत्, अयमेव त्वर्थस्तद् ग्रहणेन प्रतन्यते, परोक्षाद्यनुवृत्तौ सत्यां यत्फलं सम्पद्यते तद् दर्शयितुमाह—तासामडादीनामित्यादि। तत्रैकेनादिशब्देन तसतुसुस् इत्यादयः प्रत्ययाः। ये परोक्षेत्यादिकया त्रिसूत्र्या विहितास्ते गृह्यन्ते। अपरेणापि ह्यस्तन्यादिसंज्ञाः। अतीतादेरित्यादिग्रहणेन भविष्यतो ग्रहणम्, कालस्यातीतादेर्विशेषो भवतीत्ययमेवार्थं वितत्य प्रदर्शयितुमाह—परोक्षादीनां संज्ञानामित्यादि। परोक्षत्वादिका इत्यादिग्रहणं ह्यस्तनी क्रियातिपतनादिविशेषपरिग्रहार्थम्। न तु कालसामान्य इति परोक्षत्वादिना विशेषेण रहिते अतीतभविष्यन्मात्र इत्यर्थः। यदि तासामिति वचनेन विभक्तयोऽनुवर्तन्ते वर्तमानापि कस्मान्नानुवर्तत इत्याह—वर्तमाना तु नेहानुवर्तत इतीहेत्यनेनेहैतस्यानुवृत्तिर्नतूत्तरत्रेति दर्शयति। कथमिहानुवृत्तिरतस्येत्याह—वर्तमानस्य कालस्येत्यादिकालस्य [4]विशेषोऽनेनाधीयते। विशेषश्च स्वरूपातिरिक्तो धर्मः उच्यते यथा—परोक्षत्वमतीतस्य। न च वर्तमाना विभक्तिसम्बन्धि यद्वर्तमानत्वं स वर्तमानस्य कालस्य विशेषः। साध्यरूपदशायां वर्तते इत्येवंरूपस्य तस्य वर्तमानत्वस्य वर्तमानशब्दार्थ-

---

१. पूर्वकोपधा (भं०)

२. यो मन्यते तं (भं०)

३. निर्देशेन (भं०)

४. अनेन विशेषः आधीयते (भं०)

निरूपणया वर्तमान एव काले सम्भवात्। अतो न वर्तमानत्वं वर्तमानस्य विशेष इति प्रयोजनाभावाद्वर्तमानान्न न सम्बध्यते, तेन प्रबन्धाव्युपरतिरूपे वर्तमाने सर्वत्र वर्तमाना भवतीति मांसं न भक्षयति, इह शिशवः क्रीडन्ति, तिष्ठन्ति पर्वता इत्यादि सिद्धम्। नन्वतीतसामान्ये परोक्षेऽपीत्यर्थः। किं पुनः परोक्षत्वमुच्यत इत्याह—अक्षेभ्य इन्द्रियेभ्यः परं परोक्षमिति अक्षशब्दस्येन्द्रियवचनत्वात्। तेनेन्द्रियगोचरे धात्वर्थे वर्तमानाद्धातोः परोक्षा भवति। ननु सर्वः क्रियात्मको धात्वर्थस्साध्यमानः सत्त्वात् सिद्धवस्तुविषयाणामिन्द्रियाणां नैव गोचर इति सर्वस्य धात्वर्थस्य परोक्षत्वात्किमस्यातीतकालविशेषणस्य परोक्षाग्रहणस्य [1]व्यावृत्तं स्यात्—उच्यते, साधनस्य प्रत्यक्षत्वादनिष्पन्नेऽपि धात्वर्थे यो लोकस्य प्रत्यक्षत्वाभिमानः तदत्र [2]व्यावृत्तम्। तेन यत्र क्रियायाः साधनं परोक्षं तत्र परोक्षा नान्यत्र। नन्वशक्तस्य साधनत्वाच्छक्तेरेव सर्वत्र साधनाभावः सा च कार्यानुमेयेति कथं साधनस्यापि शक्तिरूपस्य प्रत्यक्षत्वं स्यात्? ब्रूमः, शक्तिशक्तिमतोर्भेदमविवक्षितत्वात् शक्तेराश्रयभूतं यद् द्रव्यं तदेवात्र साधनशब्देनोच्यते, तत्र [3]प्रत्यक्षे [4]सत्यसत्यामपि अतीतकालावगतौ परोक्षा न प्रवर्तते। न केवलमिन्द्रियाणामगोचरं परोक्षम्, यावत् मनसो सान्निध्यात् आत्मसंसाधितोऽपि यो धात्वर्थस्सोऽपि परोक्ष एवेत्याह—यदपीत्यादि। सुप्तोऽहं किल विललापेति, सुप्तेन त्वया किमपि विलपितमित्यन्येन बोधितो जनः एवं वाक्यं प्रयुङ्क्ते। अत्यन्तापह्नवे परोक्षा वक्तव्येति। अत्यन्तापह्नवः सुप्रसिद्धार्थोऽपलापः। तत्र साधनस्य [5]प्रत्यक्षत्वान्न सिध्यतीत्यपि शब्दानुवृत्तेरभिधातव्येत्यर्थः। बुभुज इति सर्वत्रात्मन इति गुणाभावः। ह्यस्तनेऽतीते ह्यस्तनीति। अतीतशब्दोऽतिक्रान्तवचनः। [6]तौ नह्यस्य धात्वर्थस्यातिक्रान्तता जाता तद्वृत्तेर्धातोर्ह्यस्तनी भवति। ह्यो भवः कालः ह्यस्तनः तत्सहचरिता विभक्तिरपि ह्यस्तनी। अद्य ह्यो तु क्षुहीत्यादौ तु ह्यस्तनसम्बन्धेऽप्यद्यतन्येव भवति परत्वात्। नत्वतीतविशेष ([7]इति। अद्य यदतीतं सोऽतीतविशेषः)। एतच्च संज्ञाभिरिति कर्तव्ये स्वग्रहणस्य पूर्वाचार्याभिहित स्वकालप्रतिपत्त्यर्थत्वाल्लभ्यते। पूर्वाचार्याः हि भूतमात्रेऽद्यतनीं स्मरन्ति,

---

१. व्यावर्त्यम् (भं०)
२. प्रकृतम् (भं०)
३. परोक्षे (भं०)
४. सत्यामप्यतीत (भं०)
५. परोक्षत्वान्न (भं०)
६. तेन ह्यो यस्य (भं०)
७. न्यूनपाठः (वा०)

यद्येवं ([1]ह्यो गेयो साम घोषान्) अपाम पय इति ह्यस्तनेऽतीतेऽद्यतनी न प्राप्नोति, गमेः पुषादित्वात् अण्, अस्य वमोर्दीर्घ इति दीर्घः। अपामेति सिच इणुस्थादेत्यादिना लुक्। अत्रोच्यते—अतीतमात्रविवक्षायामद्यतन्यां सत्यां ह्यश्शब्देन सम्बन्धो भविष्यति। यत्र हि तेन नास्ति सम्बन्धे ह्यस्तनविशिष्ट-श्चायमतीतः कालो विवक्ष्यते। तत्र कथमद्यतनी अमुत्रावात्समिति सुप्त्वा हि प्रतिबुद्धस्यापरस्मिन् दिने एष शब्दप्रयोगः। नैतत्, सकलमतिक्रान्तयामिनी यामत्रयं जागरितवतो न्याय्यः तत्स्थाने क्व भवानुषित इत्यनेन पृष्टस्याद्यतन-कालाभिमानिन एवं शब्दः प्रयोगात्। इत्थं च अत्र अद्यतन्येव न्याय्या। मुहूर्त-मात्रं सुप्तस्तु यः प्रयोक्ता तदपेक्षया अमुत्रावात्समिति ह्यस्तन्येव भवति। अवात्समिति वसेरद्यतनी परस्मैपदोक्तमेकवचनं सिच्, अस्य च दीर्घः, सस्य ये सार्वधातुके तः, अतिपत्तिः अनिष्पत्तिः अतिपूर्वस्य पतेरनिष्पन्नार्थत्वात्। अभोक्ष्यत भवानित्यादि। अतीतकालविषयमेतद्वचनम्, ये तु भविष्यत्काल-विषयमिति व्याचक्षते तान्प्रति प्रयोगोऽयं भूतकरणवत्यश्चेति च शब्दात्। किं पुनस्तेषामेवं व्याचक्षाणानामतीते क्रियातिपत्तेरुदाहरणम्। दृष्टो मया भवतः पुत्रोऽन्नार्थी [2]चङ्क्रम्यमाणः अपरश्च ब्राह्मणार्थी। तत्र यदि स तेन दृष्टो-ऽभविष्यत्ततोऽभोक्ष्यत न तु दृष्टवान् अन्येन यथा हि गतस्सः इत्येतत्। विशे-षस्य कस्यचिदभावादिति संज्ञागतस्येति शेषः। भविष्यत्वं संज्ञागतं भविष्यतः कालस्य सुगतं स्वरूपमिति नासौ तस्य विशेषः, तेन भविष्यत्सामान्य एव भविष्यन्ती प्रवर्तन्ते। आशीर्युक्त इति। आशासन ([3]सम्बन्धे किमेवाशासनम्) अप्राप्तस्य प्रियस्य प्राप्तुमिच्छा श्वस्तने काले भविष्यती श्वस्तनी। यद्येवं कथं श्वो गमिष्यतीत्यत्र श्वस्तनी विषये भविष्यन्तीत्याह—श्वो गमिष्यतीत्यत्रेत्यादि पदसंस्कारपक्षाश्रयणेन भविष्यत्सामान्येन पूर्वं गमिष्यतीति इत्येतत् पदं संस्क्रियते पश्चाद्विशेषावगतिद्योतनार्थं श्वश्शब्देन सम्बन्धो भविष्यति. स च बहिरङ्गत्वादन्तरङ्गसंस्कारं न बाधते। नाम्नि प्रयुज्यमानेऽपीत्यादिलक्षणा-रम्भाद् वाक्यसंस्कारपक्षोऽप्यादृतः। ततस्तत्र किं प्रतिसमाधानमिति चेत्, प्रयोगतश्चेति वचनम्। अतएव परिदेवनविषये यत्र भविष्यत्सामान्यावगमः तत्राविरुद्धः श्वस्तन्याः प्रयोगः। यथेयं नु कदा गन्ता यैवं पादौ निदधाति। अयं नु कदाध्येता य एवमनभियुक्तः इति।

---

१. ह्योगसामघोषान् (वा०)

२. चापकृष्यमाणः (वा०)

३. सम्बुद्धेः किं पुनराशासनम् (भं०)

**प्रयोगतश्च** [1]३।१।१५

प्रयोज्यत इति प्रयोगः। अकर्तरि च कारक इति कर्मणि घञ्। तदन्ताद-सर्वनाम्नोऽपि पञ्चम्यन्तात् तसिष्यत इति तस्, तत्र कालविशेषो विधीयमानो वर्तमानादयो विधिभाजः। प्रयोगत इति हेतुनिर्देशः। अर्थवशादिति प्रयोजन-सामर्थ्यात् कर्मधारयेण कालविशेष इत्यनेन प्रयोजनमित्यर्थः। ननु पूर्वमसौ तत्पुरुषः कथमिहानुवृत्तिमात्रादेव कर्मधारयः शक्यो विज्ञातुम्? उच्यते—भवेदेवं यदि तदनुवर्तते ([2]न तु तदनुवर्तते) पूर्वत्रैव तस्य कृतकृत्यत्वात् तत्सदृशं तु शब्दान्तरमनुवर्तते। तच्च येन रूपेणेह सम्बन्धयोग्यं भवति तद्रूपमाश्रयति। काललक्षण एव च विशेषो वर्तमानादीनामनेन विधीयते, न तु कालस्य विशेष इति कर्मधारय एवात्र कालविशेष इति वर्तते। वर्तमानाप्यत्र सम्बध्यते, पूर्वत्र प्रयोजनाभावादनभिसम्बन्धः तस्याः। अभूत् इह तु अस्त्येव तदभि-सम्बन्धः प्रयोजनकालान्तरेऽपि विधानं यथा स्यादिति, तेन वर्तमानाप्यत्र सम्बध्यते इति न केवलमन्यविभक्तय [3]इत्येतदपि शब्दार्थप्रयोगः। शिष्ट प्रयोग इति भगवद्व्यासादयः शब्दानां प्रयोक्तारः शिष्टाः तेषां यः प्रयोगः सः प्रयोगः न तु प्रयोगमात्रमित्यर्थः। विशिष्टः कालो भवतीत्येतेन कालविशेषस्य शब्दस्य कर्मधारयः व्यनक्ति। एतदेव वितत्य प्रदर्शयितुमाह—कालान्तरे-ऽपीत्यादि। वर्तमानादिलक्षणात् कालादन्यत्रापि काले शिष्टप्रयोगानुसारेण वर्तमानादयो भवन्तीत्यर्थः। एवं च तासां काललक्षण एव विशेषो विधीयत इति कर्मधारयार्थो व्याख्यातः। यावत्पुराशब्दावत्र निपातावित्यभ्युत्पन्नाविति शेषः। निपातसंज्ञा त्वनयोः पूर्वाचार्यप्रसिद्धेः। यदा न निपातितावित्यादि। एष च विशेषः प्रयोगस्य हेतुत्वाभिधानाल्लभ्यते। नह्यत्र निपाताभ्यां यावत्पुरा-शब्दाभ्यां योगे विशिष्टव्यवहारे भविष्यत्कालविषयतया वर्तमाना या प्रवृत्ति-रस्ति, स्वकाल इति, भविष्यत्काले भविष्यन्त्येवेति न तु वर्तमानेत्यर्थः। यावद् दास्यति तावद् भोक्ष्यति इति यत्परिमाणस्य तत्परिमाणस्येति तसादि-त्वाद् वन्तुः प्रत्ययः। आत्वञ्चान्त्यस्य। अनया पुरा व्रजिष्यतीति। अनयेति स्त्रीत्वनिर्देशः, पुराशब्दोऽयं करणतृतीयान्तो न तु निपात इति प्रदर्शयितुम् पॄ पालनपूरणयोः, क्विब्भ्राजीति क्विप्, उरोष्ठ्योपधस्येत्युरादेशः। कदा भुङ्क्त इति किं सर्वेत्यादिना किमो दा प्रत्ययः, किं कः, कर्हि भुङ्क्ते, सर्व-नाम्नो हि यथादर्शनं प्रत्ययो वक्तव्य इति किमो र्हि प्रत्ययः। कदा कर्हि योगे

१. ३।१।१७ (दु०वृ०)
२. अधिकः पाठः (भं०)
३. एवेत्येषोऽपि (भं०)

इत्यनेन च विकल्पस्य विषयमात्रप्रदर्शनं कृतम्। शब्दान्तरयोगेऽपि हि भविष्यत्काले वर्तमाना विकल्पेन दृश्यते। यत्र लिप्सायां गम्यमानायां किमो विभक्त्यन्तस्य डतरडतमान्तस्य च प्रयोगः। किं भवन्तो भोजयन्ति, पक्षे भोजयिष्यन्ति भोजयितार इति च भविष्यन्ती श्वस्तन्यावपि भवतः। एवं कतरो भिक्षां ददाति दास्यति दाता वा, कतमो भिक्षां ददाति दास्यति दाता वा। लिप्सायामिति किम्? को वाराणसीं गमिष्यति। एवं लिप्स्यमानात् सिद्धावपि गम्यमानायां यो भक्तं दास्यति ददाति दाता वा सः स्वर्गलोकं यास्यति याति याता वा। इत्थमन्योऽप्येवंप्रकारो विकल्प विषय उदाहार्यः।

**पञ्चम्यनुमतौ** [1]३।१।१६

शेषात्कर्तरीत्यादिना सिद्धायां पञ्चम्यामारम्भस्तस्याः अर्थादेशनार्थः। तत्रानुमतिरर्थः आदिश्यमानः पञ्चमी विभक्तिरर्थादेशनभाक्। यद्येवमनुमतेरर्थस्य विधीयमानत्वात् प्राधान्यमित्यनुमतिः पञ्चम्या इति सूत्रनिर्देशो न्याय्यः। सत्यम्, यस्यास्तु पञ्चम्या अनुमतिरर्थः तस्मिन्नर्थेऽवश्यं तस्याः प्रवृत्तिरिति फलद्वारेणायमनुमताविति सप्तम्या निर्देशः। अभ्युपगमः इत्यङ्गीकरणम्। जीवताद् भवानित्यादि तु हि इत्येतावाशिष्युत्तरसूत्रेण।

**समर्थनाशिषोश्च** [2]३।१।१७

सं पूर्वादर्थ याञ्चायामित्यस्मात् चुरादीन्नन्ताद् ईषिश्रन्थासि इति युः प्रत्ययः समर्थनायामाशिषि च धातोरित्येतेन समर्थना आशीश्च [3]धातोः विशेषणमिति दर्शयति। तेन समर्थनाधिके धात्वर्थे आशीर्विशिष्टे च यो धातुः वर्तते तत इयं पञ्चमी भवतीति। सिद्धावपि सत्यां विशेषविधानार्थमिदमारभ्यते। अध्यवसाय इति निश्चयः। केचिदित्यादि। एतच्च शब्दस्य विभक्त्यन्तरसमुच्चयार्थत्वाल्लभ्यते। नन्वाशीः प्रार्थनाविशेषः प्रार्थने च अस्त्वेवोत्तरसूत्रेण पञ्चमी तत्किमत्राशीः ग्रहणेन, सत्यम्, आशीर्विभक्त्या तु पञ्चम्याः बाधः स्यात्।

**विध्यादिषु सप्तमी च** [4]३।१।१८

विध्यादिषु सत्स्वति। एतेन विध्यादिष्वेत्येषा सप्तमी कालभावयो-

---

१. ३।१।१८ (दु० वृ०)

२. ३।१।१९ (दु० वृ०)

३. धात्वर्थस्य (भं०)

४. ३।१।२० (दु० वृ०)

रित्यादिना भावे सत्तायां विहितेति दर्शयति। [1]केन पुनः रूपेण विध्यादीनामिह विज्ञायते प्रत्ययार्थविशेषणता लक्षणेन आत्मनेपदानि भावकर्मणोरित्यादिना हि ये भावकर्मकर्तारः प्रत्ययानामर्थाः तेषामयं विध्यादिरर्थो विशेषणम्। तेन विध्यादिषु सत्स्वित्यत्र विध्यादिविशिष्टेषु कर्त्रादिषु सत्स्वित्यर्थो जायते। अथ प्रकृत्यर्थत्वं विध्यादीनां कस्मान्न भवति, न भवति, विदधाति निमन्त्रयतीत्यादावपि प्रत्ययप्रसङ्गात्। नापि प्रत्ययार्थत्वं विदध्यादित्यादौ प्रकृतिभिरेव विध्यादीनामर्थानभिधानात् प्रत्ययोत्पादप्रसङ्गात्। तस्मात् प्रत्ययार्थविशेषणत्वमेव ज्यायः। शास्त्रान्तरप्रसिद्धा इति तदुक्तं विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङिति। विधिरज्ञातस्य ज्ञापनमिति। अग्निहोत्रं जुहुयादित्यादिना वाक्ये यदज्ञातस्यार्थस्य ज्ञापनं तत् विधिः। यद्येवमाख्यायिकादिवर्णनमपि विध्यर्थो भवेत् तत्राप्यज्ञातज्ञापनस्य विद्यमानत्वादित्याशङ्क्याह—प्रेषणं वेति भृत्यादेः कस्याञ्चित् क्रियायां प्रवर्तनमित्यर्थः। एतेनाप्रवर्तन-प्रवर्तनमात्रं विधिशब्दस्यार्थ इति दर्शयति। तदुक्तम्, विधेर्लक्षणमेतावदप्रवृत्तप्रवर्तनम्। अतिप्रसङ्गदोषस्तु न, अज्ञातज्ञापनं विधिरित्येवं प्रेषणस्यापि विध्यर्थत्वात् तत्रापि सप्तमीपञ्चम्यौ यथा दर्शनं भवत इति प्रैषे तेन वक्तव्ये एव निमन्त्रणादीनां च विध्यर्थविशेषत्वात् परिग्रहो सिद्धे सत्यादिग्रहणं विस्पष्टार्थमेवेत्याहुः कव्यहव्योद्देशेनेति देवपित्राधिकरणेन चानुवृत्त्या अतिसर्गप्राप्तकालयोरपि यथादर्शनं सप्तमीपञ्चम्यौ भवतः। अतिसर्गः कामचारः निमित्तभूतस्य कालस्यावसरः प्राप्तकाल इति कटं करोतु भवानित्याद्युदाहार्यम्।

**क्रियासमभिहारे सर्वकालेषु मध्यमैकवचनं पञ्चम्याः [2]३।१।१६**

क्रियासमभिहारः पौनःपुन्यमिति। ननु समाहारो नाम विप्रकीर्णानामेकत्र समुदायभावापत्तिः, स च सूत्रस्यानेकस्यैककालस्य च धर्मो यथोत्पलादेः। न च क्रियाणामुत्पलविलीनानामसौ सम्भवति। तासां सहावस्थानासम्भवात्। एकेन धातुनानेकस्याः क्रियायाः युगपदनभिधानात्। अथापि समाहारः सादृश्यात्। पौनःपुन्यं समभिहारः उच्यते। तदेतदपि न सम्भवति क्रियायाः। तथा हि यद्येकस्यां पाकक्रियायामभिनिवृत्तायां पुनः पाकः क्रियैवारभ्यते, तत्किमेतावता प्रथमाभिनिवृत्तायाः पुनः पुनः प्रादुर्भावो येन पौनःपुन्यवाचो युक्तिरन्विता स्यात्। वैलक्षण्यमात्रमपरपाकक्रियारम्भेन तु पुनरर्थः कश्चित्। सत्यम्। किन्तु स्वभावविलक्षणानामपि पाकादिक्रियाणां तुल्य-

१. केनामुना (भं०)
२. ३।१।२१ (दु० वृ०)

जातीयत्वेनैक्यमध्यवसायो भिन्नजातीयक्रियान्तराव्यवधानेन देशकालभेदापेक्षया यत्सातत्येनानुष्ठानं समभिहारः, तच्च क्रियाणां सम्भवत्येव। समभिहारसादृश्याच्च तदुपचारेण समभिहार इत्युच्यते मुख्यस्याभिहितस्य समाहारस्यासम्भवात्। तेन यथैव द्रव्याणां समभिहारो भवति तथैव क्रियाणामपि क्रियान्तराव्यवहितानां यदभिनिवर्तनं समभिहार इव समभिहार इति युज्यते, क्रियासमभिहारः पौनःपुन्यं भृशार्थत्वं वेति। अधिश्रयणादिलक्षणानामवयवक्रियाणां प्रधानं पाकादिक्रियोपकारिकाणां यत्कात्स्र्येनानुष्ठानं सा भृशार्थता। स च क्रियासमभिहारः, क्रियासमभिहारे वर्तमानाद्धातोरित्येतेनान्तरङ्गत्वात् प्रकृत्यर्थविशेषणं समभिहार इति दर्शयति। मध्यमैकवचनं भवतीति। ननु तत्प्राथम्यादेकत्वविषये प्रथमपुरुषविषय एव स्यात्। वचनान्तरविषये पुरुषान्तरविषये च न प्राप्नोति। लुनीहि लुनीहि इत्येवं लुनासि, युवां लुनीथ, यूयं लुनीध्वं, अहं लुनामीत्यादिषु लुनीहीति न भवति, उच्यते—सर्वकाल इति द्वन्द्वेनायं निर्देशः। तेन सर्वत्रैकत्वादौ पुरुषान्तरे च तत्सेत्स्यति। कालग्रहणं चेदानीमतिरिच्यमाणं सद्विस्पष्टार्थमेव। सर्वेषु कालेषु वर्तमानेऽतीते भविष्यति चेद् यथा तु वृत्तिग्रन्थः एवं वर्ण्यते सर्वेष्वैकत्वादिषु सर्वेषु पुरुषेषु कालेषु वर्तमानादिष्विति णं चाभीक्ष्ण्ये इत्यादि। द्विश्च पदमिति सामान्येन द्वित्वविधिना अर्थवचनात् क्रियासमभिहाराभिव्यक्तौ लुनीहीत्यादेर्द्विर्वचनमिति भावः। ननु समभिहारविशिष्टार्थाभिधायिनो धातोर्मध्यमैकवचनं विधीयते। ततश्च तेनैव क्रियासमभिहारो गमित इति तदवगमाय कथं लुनीहि लुनीहीत्यादौ द्विर्वचनमिति स्यात्। अस्त्येतत्, किन्तु क्रियासमभिहारस्यार्थाभिव्यक्तिर्न धातुना क्रियते, किं तर्हि, द्विर्वचनसहितेन मध्यमैकवचनेन। ननु प्रकृत्यर्थविशेषणं क्रियासमभिहारः। सति चैवं प्रति [1]प्रत्ययस्याप्ययमर्थः। तस्यार्थान्तरानिर्देशादनिर्दिष्टार्थत्वाच्च स्वार्थ एवोत्पत्तेरिति क्रियासमभिहारो मध्यमैकवचनश्रवणादेवावगम्यत एवेति का तस्य द्विर्वचनं प्रत्यपेक्षा? उच्यते—भवेदेवं यदि मध्यमैकवचनक्रियासमभिहारे विधीयते। न चैवं कर्मादिषु तस्य विधानात् तेन क्रियासमभिहारो हि स्यात् तात्पर्याद्विना द्विर्वचनं नावगम्यते। तदवगमाय अस्त्वेतद् द्विर्वचनं प्रत्यपेक्षा। अधीष्व अधीष्वेति सर्वेषामात्मनेति गुणाभावः। अधीयत इति। अन्ते आत्मने चानकारादिति न लोपः। अध्यैतेति स्वरादीनां वृद्धिरादेः हि स्वान्ते च प्रत्यस्तमितसंख्यादिति, [2]विशेषायामभिव्यक्त्यामनुप्रयोक्तव्यः तेन लुनीहि लुनीहीत्यत्र लुनाति [3]समाना-

१. प्रत्ययस्याप्यसावर्थः (मं०)
२. विशेषाभिव्यक्तौ प्रयोक्तव्यः (भं०)
३. अस्पष्ट।

नार्थाच्छिर्वतिनानुप्रयुज्यते । यदा तु समुच्चीयमानक्रियावचनाद्धातोश्चानुवृत्त्या विकल्पेन मध्यमैकवचनप्रवृत्तौ सत्यां सक्तुपिब धानाः खादय पयः पिबेत्यादिः प्रयुज्यते तदाभ्यवहरतीत्यादिसामान्यवाच्ययं शब्दरूपमनुप्रयुज्यते । हिस्वा-विति न कृतं प्रत्ययान्तराशङ्का तयोर्मा भूदिति । किं च स्यात् परस्मैपदात्मने-पदव्यवस्था न प्रकल्प्येते । हिस्वोर्विषयेत्यादि । यत्र विषये हिस्वौ विहितौ तत्र तध्वमावप्येष्टव्यौ [1]तेन पञ्चम्या हि स्वाविति कर्तव्ये गुरुसूत्रकरणा-ल्लभ्यते । ननु लुनीहीत्यादयः प्रयोगाः प्रेरणाविवक्षायामेव सिद्धा इत्यपार्थको योगारम्भः नापार्थकः । धात्वर्थातिशय विवक्षायामसिद्धत्वात् ।

**मा-योगेऽद्यतनी [2]३।१।२०**

मा-शब्दः प्रतिषेधवाची तथा चाहुः—अमानोनः प्रतिषेधः इति प्रति-षेधश्च वर्तमाना भविष्यत्विषय इति नातीतविषयः अतिक्रान्तवस्तु वैफल्यात् । वर्तमानकालविहिताः प्रत्ययाः प्राप्ता इति ते बाध्यन्ते इति शेषः । मा इति लुप्तसप्तमीके निर्देशे कर्तव्ये योगशब्दाध्याहारेण च सूत्रार्थावगतौ सिद्धायां किं योगग्रहणेनेत्याह—योगग्रहणमित्यादि । द्वितीयान्तस्य मा शब्दस्येत्यादि । अस्मदो द्वितीयैकवचने परतः त्वन्मदोरेकत्व इति मदादेश कृतेऽन्त्यलोपे च विहिते असौ चाम इत्यमादेशे च सञ्जाते यो द्वितीयान्तो मां-शब्दस्तस्य यो मादेशः त्वामा तु द्वितीयायामित्यनेन विहितः तेन धातोर्योगे सत्यद्यतनी न भवति । देवदत्तो मा अपच्यदिति न मा मा स्म योगे इत्यकारागमोऽत्र निषि-ध्यते । तत्रापि निषेधवाचिनो मा शब्दस्य परिग्रहात् मा भवतु मा-भविष्य-त्वादयस्त्वसाधवः इत्याहुः ।

**मा-स्म-योगे ह्यस्तनी च [3]३।१।२१**

मास्म-शब्देन योगे सतीत्येतेन यो मा-स्मेति निपातसमुदायोऽत्र गृह्यते इति दर्शयति । एतद् योग-ग्रहणस्य संयुक्त-मा-स्मशब्दपरिग्रहार्थत्वाल्लभ्यते ।

**वर्तमाना ति तस् अन्ति सि थस् थ मि वस् मस् ते आते अन्ते**
**से आथे ध्वे ए वहे महे [4]३।१।२२**

विभक्तिस्वरूपभ्रान्तिप्रसङ्गात् ति तस् अन्तीत्यादौ सन्धेरभावः । एवं

---

१. तौ च (भं०)
२. ३।१।२२ (दु० वृ०)
३. ३।१।२३ (दु० वृ०)
४. ३।१।२४ (दु० वृ०)

किञ्चिदधिक्रियते, अस्त्येतत्, किं तु सेनातीत इत्यादौ अधिकारो प्रस्थानवाक्ये यदतीत इति पदं सप्तम्यन्तं कालशब्दस्य विशेष्यत्वेनाभिमतं विद्यते तद्धर्मापत्त्या काले इत्ययं सप्तम्या निर्देशः। अन्यथा कालातीतशब्दयोः प्रथमासप्तम्यन्तयोः विशेषणविशेष्यभावोऽधिकारबलादुपपाद्यमानो मृदुमतीनां प्रतिपत्तिगौरवविधायी स्यात्। अथ यदीदं नारभ्येत किं स्यात्, उच्यते—सेनातीते इत्यादौ यदतीत इत्युपात्तं तत्प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूत इति प्रत्ययवाच्यस्य कर्त्रादेः साधनस्य प्राधान्याद्विशेषणं विज्ञायते। ततश्च यत्र साधनमतीतं भविष्यच्च तत्रैवातीतादिविहितः प्रत्ययः प्राप्नोति। रामो वनमगच्छत्, उत्पत्स्यमानोऽस्य पुत्रो राजा भविष्यतीति। देवदत्तोऽयं वनमगमत्, गमिष्यति वेत्यादौ न स्यात्। वर्तमानकालावच्छिन्नत्वात् साधनस्य। योगारम्भे तु सत्यतीतादिना कालोऽभिसम्बध्यते। कालश्च परिच्छेदहेतुः। तेन च योगः सिद्धस्वभावं साधनं विहाय धात्वर्थस्यैव सम्भवति। तस्य साध्यस्वरूपत्वात्। तेन साधनमतीतमस्तु [1]भविष्यद्वा सर्वथा धात्वर्थो यत्रातीतो भविष्यच्च तत्रातीतकालादिविहितप्रत्ययः प्रवर्तते, तेन धात्वर्थानुयायित्वमतीतादेर्यथा स्यात् [2]साधनानुयायित्वं मा भूदिति वचनमिदमारभ्यते। ननु न साधनस्य अतीताद्यवच्छेदः स्वतोऽस्ति तस्य सिद्धस्वभावस्य सर्वतो निराशंसस्य कालेनावच्छेत्तुमशक्यत्वात्। क्रियाद्वारकस्तस्यातीतादिना परामर्शः। तथा च घटोऽभूद् भविष्यति वेति घटगतभवति क्रियैव कालेन भिद्यते न घटः। एवं चातीतादिविशेषणं साधनमपास्य धात्वर्थस्यैव भविष्यति। तथा च कृत्प्रकरणे नास्ति कालाधिकारः, क्रियते चेत् तर्हि क्रियतां यत्र प्रधानं धात्वर्थः। प्रत्ययार्थः इह तु क्रियाप्रधानत्वादाख्यातस्य कथं प्रधानं धात्वर्थमपहायातीतादिना साधनस्य सम्बन्धः स्यात् इति सर्वथा धात्वर्थ एवातीतादिना विशिष्टे प्रत्ययः सेत्स्यतीति किमनेन योगेन। सत्यम्। अयमेव त्वर्थो मृदुमतीननुग्रहीतुं योगारम्भेण प्रतिपाद्यते।

**सम्प्रति वर्तमाना [3]३।१।१०**

वृत्तेर्वर्तमाने शन्तृङ्ङानशावित्यानश्, अन्विकरणः, गुणः, आत्मोऽन्त [4]आन इति मागमः। संप्रतिकाले वर्तमाने काले इति सम्प्रतीत्यस्य वर्तमानकालार्थवृत्तित्वादवधारणं चात्र बोद्धव्यम्। संप्रत्येव काल इति। शेषात्कर्तरीत्यादिना

१. भविष्यत्वात् (वा०)
२. अननुयायित्वम् (भं०)
३. ३।१।११ (दु०वृ०)
४. अधिकः पाठः (भं०)

हि सिद्धावपि वर्तमानादयोऽत्र प्रकरणे काले नियम्यन्ते अतएव धातोर्वर्तमाना भवतीति धातोः प्रकृतत्वमाह--सिद्धे सत्यारम्भस्य नियमार्थत्वात्। सिद्धश्च वर्तमानाया धातोरेव नान्यतः। अथ वर्तमाने काले धातोरिति कथं वाचो युक्तिः धातुः हि शब्दः न च शब्दस्य काले वृत्तिस्सम्भवति तस्य साध्यमर्थं प्रति परिच्छेदकादित्वात्। अर्थद्वारेण तु धातोर्वर्तमाने काले वृत्तिः। तेन वर्तमाने काले साध्ये धात्वर्थे यो धातुः प्रवर्तत इत्येवं व्याख्यायते। ननु धात्वर्थः क्रिया सा च साध्यरूपत्वादसती, न चासतोऽर्थस्य [1]वर्तमानत्वे योगो उपपद्यते। सदवस्थस्य वस्तुना वर्तमानत्वयोगात्। एवं क्रियायाः वर्तमानत्वेन योगाद् तद्द्वारेणापि कथं वर्तमाने काले धातोः वृत्तिर्भवेत्। नैतत्, द्रव्यात्मिका हि सत्ता मा भूत्। क्रियायाः साध्यत्वेन तु तस्याः सतीत्वं को[2]ऽपह्नुवीत, नहि पदार्थानामेकरूपमेव सत्वं, सर्वस्य स्वेन रूपेण सत्वात्। तथा च नीरूपोऽप्यभावो विज्ञानप्रतिभासिना रूपेण रूपमवलम्बत एव। अन्यथा ह्ययमव्यवहार्य एव स्यात्। अवश्यं च साध्यमानत्वे क्रियायाः सत्त्वमभ्युपेयम्, अन्यथा हेतुरहितदेवदत्तस्य देशान्तरव्याप्तिलक्षणा फलोत्पत्तिरेव न भवेत्। तस्याः हि फलोत्पत्तेर्निमित्तान्तरासम्भवाद् गतिक्रियैव निमित्तं तदालम्बनाच्चायमबाधितो गच्छतीति व्यपदेशः। तस्माद् व्यापारमन्तरेण कारकसन्निधानमात्रादनुपपद्यमानं फललक्षणं लिङ्गमनुमापकं क्रियायाः तदावलम्बनं च वर्तमानत्वमभ्युपगन्तव्यम्, अन्यथा भूतभविष्यतोरपि कालयोरनुपपत्तिः स्यात् तयोर्वर्तमानापेक्षत्वात्। किं च सति वर्तमानत्वाभ्युपगमे भावानामसत्वमेव स्यात्। यतो भूतभविष्यतोस्तावत्कालयोस्तेन सन्त्येव, यदि चान्तरालेऽपि तेन भवेयुः। ततस्तेषामसत्वमेव प्रसज्येत। अतस्तेषामवश्यमणीयसी [3]क्रियावलम्बमाना वर्तमानावस्थाभ्युपेयेति साध्यमानरूपेण क्रिया विद्यत एव तस्याश्च वर्तमानत्वेनोपपद्यते योगः। यद्येवं तिष्ठन्ति पर्वताः वहन्ति नद्यः इत्यादौ वर्तमाना न प्राप्नोति स्थानादेः सर्वदाभावात् साध्यत्वानुपपत्तेः अक्रियारूपत्वात् क्रियाधर्मस्य वर्तमानत्वस्याप्यभावात्। नैतत्, प्रबन्धाव्युपरतिलक्षणं हि वर्तमानं कालमाहुः। न च स्थानादिक्रिया कदाचिदुपरतेऽप्यस्ति तस्याः वर्तमानत्वम्। अस्थुः स्थास्यन्ति वा पर्वताः, अवाक्षुः वक्ष्यन्ति वा नद्यः इति भूतभविष्यद्व्यपदेशस्तर्हि न सिध्यति। अतीतानागतभूपालसत्तालक्षणोपाधिभेदात्सेत्स्यति।

१. क्रियायां वर्तमानेन (भं०)

२. अपह्नुवते (भं०)

३. क्रियालम्बना (भं०)

तत्र कालविशेषं परिभाष्यमाणाः ता अडादयोविभक्तयः परिभाषणभाजः। स्वसंज्ञाभिरिति। हेतौ तृतीया पुंवद्भाषितपुंस्केति स्वा-शब्दस्य पुंवद्भाव इति न तु कर्मधारयसंज्ञक इत्यादिना तत्र हि संज्ञा[1]पूरणीकोपधा इति वर्तते तासामित्यनेन सर्वनामपदेनान्तरे प्रक्रान्तानां बुद्धौ परिस्फुरन्तीनां भविष्यन्त्यादीनामेव तिसृणां विभक्तीनामिहाभिसम्बन्धं प्राप्नोति, न तु परोक्षादीनामिति [2]मन्यमानं प्रत्याह – तासामिति परोक्षादयोऽनुकृष्यन्ते इति आदिग्रहणात् भूतकरणवती प्रभृतयोऽनुकृष्यन्ते न त्वनन्तराः तिस्र एवेति तिस्र एव भविष्यन्त्यादयो नानुकृष्यन्ते, किं तर्हि, परोक्षादयोऽपीत्यर्थः। कुत एव तदवगतमित्याह— तद् ग्रहणं ह्यार्थकं स्यादिति आनन्तर्यादेव भविष्यन्त्यादीनामनुवृत्तिसिद्धे तद् ग्रहणमपगतप्रयोजनं भवेदिति तदुपादानात्परोक्षादयोऽत्र श्वस्तनीपर्यन्ताः सर्वा एवानुकृष्यन्ते। ननु स्वसंज्ञाभिरिति बहुवचननिर्देशादेव भविष्यन्त्यादीनामनुवृत्त्यभावसिद्धः, तासामेव ह्यनुवृत्तौ स्वसंज्ञाभ्यामिति द्वित्वं [3]निर्दिशेत्। नहि भविष्यत्कालस्य भविष्यन्ती संज्ञागतोऽस्ति विशेषः तस्मात् स्वसंज्ञाभिरितीदमेव बहुत्वं परोक्षादीनामनुवृत्तिकारित्वेनावस्थितमिति किमनेन तद्ग्रहणस्य हेतुत्वोपन्यासेन, एवं चेदसफलमतिरिच्यते तद् ग्रहणम्, अस्त्येतत्, अयमेव त्वर्थस्तद् ग्रहणेन प्रतन्यते, परोक्षाद्यनुवृत्तौ सत्यां यत्फलं सम्पद्यते तद् दर्शयितुमाह—तासामडादीनामित्यादि। तत्रैकेनादिशब्देन तसतुसुस् इत्यादयः प्रत्ययाः। ये परोक्षेत्यादिकया त्रिसूत्र्या विहितास्ते गृह्यन्ते। अपरेणापि ह्यस्तन्यादिसंज्ञाः। अतीतादेरित्यादिग्रहणेन भविष्यतो ग्रहणम्, कालस्यातीतादेर्विशेषो भवतीत्ययमेवार्थं वितत्य प्रदर्शयितुमाह—परोक्षादीनां संज्ञानामित्यादि। परोक्षत्वादिका इत्यादिग्रहणं ह्यस्तनी क्रियातिपतनादिविशेषपरिग्रहार्थम्। न तु कालसामान्य इति परोक्षत्वादिना विशेषेण रहिते अतीतभविष्यन्मात्र इत्यर्थः। यदि तासामिति बचनेन विभक्तयोऽनुवर्तन्ते वर्तमानापि कस्मान्नानुवर्तत इत्याह—वर्तमाना तु नेहानुवर्तत इतीहेत्यनेनेहैतस्यानुवृत्तिर्नेत्यत्रेति दर्शयति। कथमिहानुवृत्तिरस्येत्याह—वर्तमानस्य कालस्येत्यादि कालस्य [4]विशेषोऽनेनावधीयते। विशेषश्च स्वरूपातिरिक्तो धर्मः उच्यते यथा—परोक्षत्वमतीतस्य। न च वर्तमाना विभक्तिसम्बन्धि यद्वर्तमानत्वं स वर्तमानस्य कालस्य विशेषः। साध्यरूपदशायां वर्तते इत्येवंरूपस्य तस्य वर्तमानत्वस्य वर्तमानशब्दार्थ-

---

१. पूर्वकोपधा (भं०)

२. यो मन्यते तं (भं०)

३. निर्देशेन (भं०)

४. अनेन विशेषः आधीयते (भं०)

निरूपणया वर्तमान एव काले सम्भवात्। अतो न वर्तमानत्वं वर्तमानस्य विशेष इति प्रयोजनाभावाद्वर्तमानान्न न सम्बध्यते, तेन प्रबन्धाव्युपरतिरूपे वर्तमाने सर्वत्र वर्तमाना भवतीति मांसं न भक्षयति, इह शिशवः क्रीडन्ति, तिष्ठन्ति पर्वता इत्यादि सिद्धम्। नन्वतीतसामान्ये परोक्षेऽपीत्यर्थः। किं पुनः परोक्षत्वमुच्यत इत्याह—अक्षेभ्य इन्द्रियेभ्यः परं परोक्षमिति अक्षशब्दस्येन्द्रियवचनत्वात्। तेनेन्द्रियगोचरे धात्वर्थे वर्तमानाद्धातोः परोक्षा भवति। ननु सर्वः क्रियात्मको धात्वर्थस्साध्यमानः सत्त्वात् सिद्धवस्तुविषयाणामिन्द्रियाणां नैव गोचर इति सर्वस्य धात्वर्थस्य परोक्षत्वात्किमस्यातीतकालविशेषणस्य परोक्षाग्रहणस्य [1]व्यावृत्तं स्यात्—उच्यते, साधनस्य प्रत्यक्षत्वादनिष्पन्नेऽपि धात्वर्थे यो लोकस्य प्रत्यक्षत्वाभिमानः तदत्र [2]व्यावृत्तम्। तेन यत्र क्रियायाः साधनं परोक्षं तत्र परोक्षा नान्यत्र। नन्वशक्तस्य साधनत्वाच्छक्तेरेव सर्वत्र साधनाभावः सा च कार्यानुमेयेति कथं साधनस्यापि शक्तिरूपस्य प्रत्यक्षत्वं स्यात्? ब्रूमः, शक्तिशक्तिमतोर्भेदमविवक्षितत्वात् शक्तेराश्रयभूतं यद् द्रव्यं तदेवात्र साधनशब्देनोच्यते, तत्र [3]प्रत्यक्षे [4]सत्यसत्यामपि अतीतकालावगतौ परोक्षा न प्रवर्तते। न केवलमिन्द्रियाणामगोचरं परोक्षम्, यावत् मनसो सान्निध्यात् आत्मसंसाधितोऽपि यो धात्वर्थस्सोऽपि परोक्ष एवेत्याह—यदपीत्यादि। सुप्तोऽहं किल विललापेति, सुप्तेन त्वया किमपि विलपितमित्यन्येन बोधितो जनः एवं वाक्यं प्रयुङ्क्ते। अत्यन्तापह्नवे परोक्षा वक्तव्येति। अत्यन्तापह्नवः सुप्रसिद्धार्थोऽपलापः। तत्र साधनस्य [5]प्रत्यक्षत्वान्न सिध्यतीत्यपि शब्दानुवृत्तेरभिधातव्येत्यर्थः। बुभुज इति सर्वत्रात्मन इति गुणाभावः। ह्यस्तनेऽतीते ह्यस्तनीति। अतीतशब्दोऽतिक्रान्तवचनः। [6]तौ नह्यस्य धात्वर्थस्यातिक्रान्तता जाता तद्वृत्तेर्धातोर्ह्यस्तनी भवति। ह्यो भवः कालः ह्यस्तनः तत्सहचरिता विभक्तिरपि ह्यस्तनी। अद्य ह्यो तु क्षुहीत्यादौ तु ह्यस्तनसम्बन्धेऽप्यद्यतन्येव भवति परत्वात्। नत्वतीतविशेष ([7]इति। अद्य यदतीतं सोऽतीतविशेषः)। एतच्च संज्ञाभिरिति कर्तव्ये स्वग्रहणस्य पूर्वाचार्याभिहित स्वकालप्रतिपत्त्यर्थत्वाल्लभ्यते। पूर्वाचार्याः हि भूतमात्रेऽद्यतनीं स्मरन्ति,

१. व्यावर्त्यम् (भं०)
२. प्रकृतम् (भं०)
३. परोक्षे (भं०)
४. सत्यामप्यतीत (भं०)
५. परोक्षत्वान्न (भं०)
६. तेन ह्यो यस्य (भं०)
७. न्यूनपाठः (वा०)

यद्येवं (¹ह्यो गेयो साम घोषान्) अपाम पय इति ह्यस्तनेऽतीतेऽद्यतनी न प्राप्नोति, गमेः पुषादित्वात् अण्, अस्य वमोर्दीर्घ इति दीर्घः। अपामेति सिच इणुस्थादेत्यादिना लुक्। अत्रोच्यते—अतीतमात्रविवक्षायामद्यतन्यां सत्यां ह्यश्शब्देन सम्बन्धो भविष्यति। यत्र हि तेन नास्ति सम्बन्धे ह्यस्तनविशिष्टश्चायमतीतः कालो विवक्ष्यते। तत्र कथमद्यतनी अमुत्रावात्समिति सुप्त्वा हि प्रतिबुद्धस्यापरस्मिन् दिने एष शब्दप्रयोगः। नैतत्, सकलमतिक्रान्तयामिनी यामत्रयं जागरितवतो न्याय्यः तत्स्थाने क्व भवानुषित इत्यनेन पृष्टस्याद्यतनकालाभिमानिन एवं शब्दः प्रयोगात्। इत्थं च अत्र अद्यतन्येव न्याय्या। मुहूर्तमात्रं सुप्तस्तु यः प्रयोक्ता तदपेक्षया अमुत्रावात्समिति ह्यस्तन्येव भवति। अवात्समिति वसेरद्यतनी परस्मैपदोक्तमेकवचनं सिच्, अस्य च दीर्घः, सस्य ये सार्वधातुके तः, अतिपत्तिः अनिष्पत्तिः अतिपूर्वस्य पतेरनिष्पन्नार्थत्वात्। अभोक्ष्यत भवानित्यादि। अतीतकालविषयमेतद्वचनम्, ये तु भविष्यत्कालविषयमिति व्याचक्षते तान्प्रति प्रयोगोऽयं भूतकरणवत्यश्चेति च शब्दात्। किं पुनस्तेषामेवं व्याचक्षाणानामतीते क्रियातिपत्तेरुदाहरणम्। दृष्टो मया भवतः पुत्रोऽन्नार्थी ²चङ्क्रम्यमाणः अपरश्च ब्राह्मणार्थी। तत्र यदि स तेन दृष्टोऽभविष्यत्ततोऽभोक्ष्यत न तु दृष्टवान् अन्येन यथा हि गतस्सः इत्येतत्। विशेषस्य कस्यचिदभावादिति संज्ञागतस्येति शेषः। भविष्यत्वं संज्ञागतं भविष्यतः कालस्य सुगतं स्वरूपमिति नासौ तस्य विशेषः, तेन भविष्यत्सामान्य एव भविष्यन्ती प्रवर्तन्ते। आशीर्युक्त इति। आशासन (³सम्बन्धे किमेवाशासनम्) अप्राप्तस्य प्रियस्य प्राप्तुमिच्छा श्वस्तने काले भविष्यती श्वस्तनी। यद्येवं कथं श्वो गमिष्यतीत्यत्र श्वस्तनी विषये भविष्यन्तीत्याह—श्वो गमिष्यतीत्यत्रेत्यादि पदसंस्कारपक्षाश्रयणेन भविष्यत्सामान्येन पूर्वं गमिष्यतीति इत्येतत् पदं संस्क्रियते पश्चाद्विशेषावगतिद्योतनार्थं श्वश्शब्देन सम्बन्धो भविष्यति. स च बहिरङ्गत्वादन्तरङ्गसंस्कारं न बाधते। नाम्नि प्रयुज्यमानेऽपीत्यादिलक्षणारम्भाद् वाक्यसंस्कारपक्षोऽप्यादृतः। ततस्तत्र किं प्रतिसमाधानमिति चेत्, प्रयोगतश्चेति वचनम्। अतएव परिदेवनविषये यत्र भविष्यत्सामान्यावगमः तत्राविरुद्धः श्वस्तन्याः प्रयोगः। यथेयं नु कदा गन्ता यैवं पादौ निदधाति। अयं नु कदाध्येता य एवमनभियुक्तः इति।

---

१. ह्योगसामघोषान् (वा०)

२. चापकृष्यमाणः (वा०)

३. सम्बुद्धेः किं पुनराशासनम् (भं०)

**प्रयोगतश्च [1]३।१।१५**

प्रयोज्यत इति प्रयोगः। अकर्तरि च कारक इति कर्मणि घञ्। तदन्ताद-सर्वनाम्नोऽपि पञ्चम्यन्तात् तसिष्यत इति तस्, तत्र कालविशेषो विधीयमानो वर्तमानादयो विधिभाजः। प्रयोगत इति हेतुनिर्देशः। अर्थवशादिति प्रयोजन-सामर्थ्यात् कर्मधारयेण कालविशेष इत्यनेन प्रयोजनमित्यर्थः। ननु पूर्वमसौ तत्पुरुषः कथमिहानुवृत्तिमात्रादेव कर्मधारयः शक्यो विज्ञातुम्? उच्यते—भवेदेवं यदि तदनुवर्तते ([2]न तु तदनुवर्तते) पूर्वत्रैव तस्य कृतकृत्यत्वात् तत्सदृशं तु शब्दान्तरमनुवर्तते। तच्च येन रूपेणेह सम्बन्धयोग्यं भवति तद्रूपमाश्रयति। काललक्षण एव च विशेषो वर्तमानादीनामनेन विधीयते, न तु कालस्य विशेष इति कर्मधारय एवात्र कालविशेष इति वर्तते। वर्तमानाप्यत्र सम्बध्यते, पूर्वत्र प्रयोजनाभावादनभिसम्बन्धः तस्याः। अभूत् इह तु अस्त्येव तदभि-सम्बन्धः प्रयोजनकालान्तरेऽपि विधानं यथा स्यादिति, तेन वर्तमानाप्यत्र सम्बध्यते इति न केवलमन्यविभक्तय [3]इत्येतदपि शब्दार्थप्रयोगः। शिष्ट प्रयोग इति भगवद्व्यासादयः शब्दानां प्रयोक्तारः शिष्टाः तेषां यः प्रयोगः सः प्रयोगः न तु प्रयोगमात्रमित्यर्थः। विशिष्टः कालो भवतीत्येतेन कालविशेषस्य शब्दस्य कर्मधारयः व्यनक्ति। एतदेव वितत्य प्रदर्शयितुमाह—कालान्तरे-ऽपीत्यादि। वर्तमानादिलक्षणात् कालादन्यत्रापि काले शिष्टप्रयोगानुसारेण वर्तमानादयो भवन्तीत्यर्थः। एवं च तासां काललक्षण एव विशेषो विधीयत इति कर्मधारयार्थो व्याख्यातः। यावत्पुराशब्दावत्र निपाताविवत्यभ्युत्पन्नाविति शेषः। निपातसंज्ञा त्वनयोः पूर्वाचार्यप्रसिद्धेः। यदा न निपातिताविवत्यादि। एष च विशेषः प्रयोगस्य हेतुत्वाभिधानाल्लभ्यते। नह्यत्र निपाताभ्यां यावत्पुरा-शब्दाभ्यां योगे विशिष्टव्यवहारे भविष्यत्कालविषयतया वर्तमाना या प्रवृत्ति-रस्ति, श्वकाल इति, भविष्यत्काले भविष्यन्त्येवेति न तु वर्तमानेत्यर्थः। यावद् दास्यति तावद् भोक्ष्यति इति यत्परिमाणस्य तत्परिमाणस्येति तसादि-त्वाद् वतुः प्रत्ययः। आत्वञ्चान्त्यस्य। अनया पुरा व्रजिष्यतीति। अनयेति स्त्रीत्वनिर्देशः, पुराशब्दोऽयं करणतृतीयान्तो न तु निपात इति प्रदर्शयितुम् पॄ पालनपूरणयोः, क्विब्भ्राजीति क्विप्, उरोष्ठ्योपधस्येत्युरादेशः। कदा भुङ्क्त इति किं सर्वेत्यादिना किमो दा प्रत्ययः, किं कः, कर्हि भुङ्क्ते, सर्व-नाम्नो हि यथादर्शनं प्रत्ययो वक्तव्य इति किमो र्हि प्रत्ययः। कदा कर्हि योगे

---

१. ३।१।१७ (दु०वृ०)

२. अधिकः पाठः (भं०)

३. एवेत्येषोऽपि (भं०)

इत्यनेन च विकल्पस्य विषयमात्रप्रदर्शनं कृतम् । शब्दान्तरयोगेऽपि हि भविष्यत्काले वर्तमाना विकल्पेन दृश्यते । यत्र लिप्सायां गम्यमानायां किमो विभक्त्यन्तस्य डतरडतमान्तस्य च प्रयोगः । किं भवन्तो भोजयन्ति, पक्षे भोजयिष्यन्ति भोजयितार इति च भविष्यन्ती श्वस्तन्यावपि भवतः । एवं कतरो भिक्षां ददाति दास्यति दाता वा, कतमो भिक्षां ददाति दास्यति दाता वा । लिप्सायामिति किम् ? को वाराणसीं गमिष्यति । एवं लिप्स्यमानात् सिद्धावपि गम्यमानायां यो भक्तं दास्यति ददाति दाता वा सः स्वर्गलोकं यास्यति याति याता वा । इत्थमन्योऽप्येवंप्रकारो विकल्प विषय उदाहार्यः ।

**पञ्चम्यनुमतौ** [1]३।१।१६

शेषात्कर्तरीत्यादिना सिद्धायां पञ्चम्यामारम्भस्तस्याः अर्थादेशनार्थः । तत्रानुमतिरर्थः आदिश्यमानः पञ्चमी विभक्तिरर्थादेशनभाक् । यद्येवमनुमतेरर्थस्य विधीयमानत्वात् प्राधान्यमित्यनुमतिः पञ्चम्या इति सूत्रनिर्देशो न्याय्यः । सत्यम्, यस्यास्तु पञ्चम्या अनुमतिरर्थः तस्मिन्नर्थेऽवश्यं तस्याः प्रवृत्तिरिति फलद्वारेणायमनुमताविति सप्तम्या निर्देशः । अभ्युपगमः इत्यङ्गीकरणम् । जीवताद् भवानित्यादि तु हि इत्येतावाशिष्युत्तरसूत्रेण ।

**समर्थनाशिषोश्च** [2]३।१।१७

सं पूर्वादर्थ याञ्चायामित्यस्मात् चुरादीन्नन्ताद् ईषिश्रन्थासि इति युः प्रत्ययः समर्थनायामाशिषि च धातोरित्येतेन समर्थना आशीश्च [3]धातोः विशेषणमिति दर्शयति । तेन समर्थनाधिके धात्वर्थे आशीर्विशिष्टे च यो धातुः वर्तते तत इयं पञ्चमी भवतीति । सिद्धावपि सत्यां विशेषविधानार्थमिदमारभ्यते । अध्यवसाय इति निश्चयः । केचिदित्यादि । एतच्च शब्दस्य विभक्त्यन्तरसमुच्चयार्थत्वाल्लभ्यते । नन्वाशीः प्रार्थनाविशेषः प्रार्थने च अस्त्वेवोत्तरसूत्रेण पञ्चमी तत्किमत्राशीः ग्रहणेन, सत्यम्, आशीर्विभक्त्या तु पञ्चम्याः बाधः स्यात् ।

**विध्यादिषु सप्तमी च** [4]३।१।१८

विध्यादिषु सत्स्वति । एतेन विध्यादिष्वेत्येषा सप्तमी कालभावयो-

---

१. ३।१।१८ (दु० वृ०)

२. ३।१।१६ (दु० वृ०)

३. धात्वर्थस्य (भं०)

४. ३।१।२० (दु० वृ०)

रित्यादिना भावे सत्तायां विहितेति दर्शयति । [1]केन पुनः रूपेण विध्यादीनामिह विज्ञायते प्रत्ययार्थविशेषणता लक्षणेन आत्मनेपदानि भावकर्मणोरित्यादिना हि ये भावकर्मकर्तारः प्रत्ययानामर्थाः तेषामयं विध्यादिरर्थो विशेषणम् । तेन विध्यादिषु सत्स्वित्यत्र विध्यादिविशिष्टेषु कर्त्रादिषु सत्स्वित्यर्थो जायते । अथ प्रकृत्यर्थत्वं विध्यादीनां कस्मान्न भवति, न भवति, विदधाति निमन्त्रयतीत्यादावपि प्रत्ययप्रसङ्गात् । नापि प्रत्ययार्थत्वं विदध्यादित्यादौ प्रकृतिभिरेव विध्यादीनामर्थानभिधानात् प्रत्ययोत्पादप्रसङ्गात् । तस्मात् प्रत्ययार्थविशेषणत्वमेव ज्यायः । शास्त्रान्तरप्रसिद्धा इति तद्वक्तुं विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङिति । विधिरज्ञातस्य ज्ञापनमिति । अग्निहोत्रं जुहुयादित्यादिना वाक्ये यदज्ञातस्यार्थस्य ज्ञापनं तत् विधिः । यद्येवमाख्यायिकादिवर्णनमपि विध्यर्थो भवेत् तत्राप्यज्ञातज्ञापनस्य विद्यमानत्वादित्याशङ्क्याह—प्रेषणं वेति भृत्यादेः कस्याञ्चित् क्रियायां प्रवर्तनमित्यर्थः । एतेनाप्रवर्तन-प्रवर्तनमात्रं विधिशब्दस्यार्थ इति दर्शयति । तदुक्तम्, विधेर्लक्षणमेतावदप्रवृत्तप्रवर्तनम् । अतिप्रसङ्गदोषस्तु न, अज्ञातज्ञापनं विधिरित्येवं प्रेषणस्यापि विध्यर्थत्वात् तत्रापि सप्तमीपञ्चम्यौ यथा दर्शनं भवत इति प्रैषे तेन वक्तव्ये एव निमन्त्रणादीनां च विध्यर्थविशेषत्वात् परिग्रहो सिद्धे सत्यादिग्रहणं विस्पष्टार्थमेवेत्याहुः कव्यहव्योद्देशेनेति देवपित्राधिकरणेन चानुवृत्त्या अतिसर्गप्राप्तकालयोरपि यथादर्शनं सप्तमीपञ्चम्यौ भवतः । अतिसर्गः कामचारः निमित्तभूतस्य कालस्यावसरः प्राप्तकाल इति कटं करोतु भवानित्याद्युदाहार्यम् ।

**क्रियासमभिहारे सर्वकालेषु मध्यमैकवचनं पञ्चम्याः [2]३।१।१९**

क्रियासमभिहारः पौनःपुन्यमिति । ननु समाहारो नाम विप्रकीर्णानामेकत्र समुदायभावापत्तिः, स च सूत्रस्यानेकस्यैककालस्य च धर्मो यथोत्पलादेः । न च क्रियाणामुत्पलविलीनानामसौ सम्भवति । तासां सहावस्थानासम्भवात् । एकेन धातुनानेकस्याः क्रियायाः युगपदनभिधानात् । अथापि समाहारः सादृश्यात् । पौनःपुन्यं समभिहारः उच्यते । तदेतदपि न सम्भवति क्रियायाः । तथा हि यद्येकस्यां पाकक्रियायामभिनिवृत्तायां पुनः पाकः क्रियैवारभ्यते, तत्किमेतावता प्रथमाभिनिवृत्तायाः पुनः पुनः प्रादुर्भावो येन पौनःपुन्यवाचो युक्तिरन्विता स्यात् । वैलक्षण्यमात्रमपरपाकक्रियारम्भेन तु पुनरर्थः कश्चित् । सत्यम् । किन्तु स्वभावविलक्षणानामपि पाकादिक्रियाणां तुल्य-

---

१. केनामुना (भं०)

२. ३।१।२१ (दु० वृ०)

जातीयत्वेनैक्यमध्यवसायो भिन्नजातीयक्रियान्तराव्यवधानेन देशकालभेदापेक्षया यत्सातत्येनानुष्ठानं समभिहारः, तच्च क्रियाणां सम्भवत्येव । समभिहारसादृश्याच्च तदुपचारेण समभिहार इत्युच्यते मुख्यस्याभिहितस्य समाहारस्यासम्भवात् । तेन यथैव द्रव्याणां समभिहारो भवति तथैव क्रियाणामपि क्रियान्तराव्यवहितानां यदभिनिवर्तनं समभिहार इव समभिहार इति युज्यते, क्रियासमभिहारः पौनःपुन्यं भृशार्थत्वं वेति । अधिश्रयणादिलक्षणानामवयवक्रियाणां प्रधानं पाकादिक्रियोपकारिकाणां यत्कात्स्र्येनानुष्ठानं सा भृशार्थता । स च क्रियासमभिहारः, क्रियासमभिहारे वर्तमानाद्धातोरित्येतेनान्तरङ्गत्वात् प्रकृत्यर्थविशेषणं समभिहार इति दर्शयति । मध्यमैकवचनं भवतीति । ननु तत्प्राथम्यादेकत्वविषये प्रथमपुरुषविषय एव स्यात् । वचनान्तरविषये पुरुषान्तरविषये च न प्राप्नोति । लुनीहि लुनीहि इत्येवं लुनासि, युवां लुनीथ, यूयं लुनीध्वं, अहं लुनामीत्यादिषु लुनीहीति न भवति, उच्यते—सर्वकाल इति द्वन्द्वेनायं निर्देशः । तेन सर्वत्रैकत्वादौ पुरुषान्तरे च तत्सेत्स्यति । कालग्रहणं चेदानीमतिरिच्यमाणं सद्विस्पष्टार्थमेव । सर्वेषु कालेषु वर्तमानेऽतीते भविष्यति चेद् यथा तु वृत्तिग्रन्थः एवं वर्ण्यते सर्वेष्वैकत्वादिषु सर्वेषु पुरुषेषु कालेषु वर्तमानादिष्विति णं चाभीक्ष्ण्ये इत्यादि । द्विश्च पदमिति सामान्येन द्वित्वविधिना अर्थवचनात् क्रियासमभिहाराभिव्यक्तौ लुनीहीत्यादेर्द्विर्वचनमिति भावः । ननु समभिहारविशिष्टार्थाभिधायिनो धातोर्मध्यमैकवचनं विधीयते । ततश्च तेनैव क्रियासमभिहारो गमित इति तदवगमाय कथं लुनीहि लुनीहीत्यादौ द्विर्वचनमिति स्यात् । अस्त्येतत्, किन्तु क्रियासमभिहारस्यार्थाभिव्यक्तिर्न धातुना क्रियते, किं तर्हि, द्विर्वचनसहितेन मध्यमैकवचनेन । ननु प्रकृत्यर्थविशेषणं क्रियासमभिहारः । सति चैवं प्रति [1]प्रत्ययस्याप्ययमर्थः । तस्यार्थान्तरानिर्देशादनिर्दिष्टार्थत्वाच्च स्वार्थ एवोत्पत्तेरिति क्रियासमभिहारो मध्यमैकवचनश्रवणादेवावगम्यत एवेति का तस्य द्विर्वचनं प्रत्यपेक्षा ? उच्यते—भवेदेवं यदि मध्यमैकवचनक्रियासमभिहारे विधीयते । न चैवं कर्मादिषु तस्य विधानात् तेन क्रियासमभिहारो हि स्यात् तात्पर्याद्विना द्विर्वचनं नावगम्यते । तदवगमाय अस्त्वेतद् द्विर्वचनं प्रत्यपेक्षा । अधीष्व अधीष्वेति सर्वेषामात्मनेति गुणाभावः । अधीयत इति । अन्ते आत्मने चानकारादिति न लोपः । अध्यैतेति स्वरादीनां वृद्धिरादेः हि स्वान्ते च प्रत्यस्तमितसंख्यादिति, [2]विशेषायामभिव्यक्त्यामनुप्रयोक्तव्यः तेन लुनीहि लुनीहीत्यत्र लुनाति [3]समाना-

---

१. प्रत्ययस्याप्यसावर्थः (मं०)
२. विशेषाभिव्यक्तौ प्रयोक्तव्यः (मं०)
३. अस्पष्ट ।

नार्थाच्छिवर्तिनानुप्रयुज्यते । यदा तु समुच्चीयमानक्रियावचनाद्धातोश्चानुवृत्त्या विकल्पेन मध्यमैकवचनप्रवृत्तौ सत्यां सक्तुर्पिब धानाः खादय पयः पिबेत्यादिः प्रयुज्यते तदाभ्यवहरतीत्यादिसामान्यवाच्ययं शब्दरूपमनुप्रयुज्यते । हिस्वावििति न कृतं प्रत्ययान्तराशङ्का तयोर्मा भूदिति । किं च स्यात् परस्मैपदात्मनेपदव्यवस्था न प्रकल्प्येते । हिस्वोर्विषयेत्यादि । यत्र विषये हिस्वौ विहितौ तत्र तध्वमावप्येष्टव्यौ [1]तेन पञ्चम्या हि स्वाविति कर्तव्ये गुरुसूत्रकरणाल्लभ्यते । ननु लुनीहीत्यादयः प्रयोगाः प्रेरणाविवक्षायामेव सिद्धा इत्यपार्थको योगारम्भः नापार्थकः । धात्वर्थातिशय विवक्षायामसिद्धत्वात् ।

**मा-योगेऽद्यतनी [2]३।१।२०**

मा-शब्दः प्रतिषेधवाची तथा चाहुः—अमानोनः प्रतिषेधः इति प्रतिषेधश्च वर्तमाना भविष्यत्विषय इति नातीतविषयः अतिक्रान्तवस्तु वैफल्यात् । वर्तमानकालविहिताः प्रत्ययाः प्राप्ता इति ते बाध्यन्ते इति शेषः । मा इति लुप्तसप्तमीके निर्देशे कर्तव्ये योगशब्दाध्याहारेण च सूत्रार्थावगतौ सिद्धायां किं योगग्रहणेनेत्याह—योगग्रहणमित्यादि । द्वितीयान्तस्य मा शब्दस्येत्यादि । अस्मदो द्वितीयैकवचने परतः त्वन्मदोरेकत्व इति मदादेश कृतेऽन्त्यलोपे च विहिते असौ चाम इत्यमादेशे च सञ्जाते यो द्वितीयान्तो मां-शब्दस्तस्य यो मादेशः त्वामा तु द्वितीयायामित्यनेन विहितः तेन धातोर्योगे सत्यद्यतनी न भवति । देवदत्तो मा अपच्यदिति न मा मा स्म योगे इत्यकारागमोऽत्र निषिध्यते । तत्रापि निषेधवाचिनो मा शब्दस्य परिग्रहात् मा भवतु मा-भविष्यत्वादयस्त्वसाधवः इत्याहुः ।

**मा-स्म-योगे ह्यस्तनी च [3]३।१।२१**

मास्म-शब्देन योगे सतीत्येतेन यो मा-स्मेति निपातसमुदायोऽत्र गृह्यते इति दर्शयति । एतद् योग-ग्रहणस्य संयुक्त-मा-स्मशब्दपरिग्रहार्थत्वाल्लभ्यते ।

**वर्तमाना ति तस् अन्ति सि थस् थ मि वस् मस् ते आते अन्ते से आथे ध्वे ए वहे महे [4]३।१।२२**

विभक्तिस्वरूपभ्रान्तिप्रसङ्गात् ति तस् अन्तीत्यादौ सन्धेरभावः । एवं

---

१. तौ च (भं०)
२. ३।१।२२ (दु० वृ०)
३. ३।१।२३ (दु० वृ०)
४. ३।१।२४ (दु० वृ०)

**स्मेनातीते** [1]३।१।११

अतीतकालद्योतकः स्मच्छब्दोऽव्ययम्, शब्दपरत्वान्निर्देशस्य विभक्तेर्लुगभावः। अत्येति स्मेति गत्यर्थाकर्मकेति अतिशब्दस्य पूर्वादिणः कर्तरि क्तः, योगशब्दः सप्तम्यन्तः अध्याह्रियत इति सूत्रार्थबलात्। अन्यथा स्मेनातीत्येतदवाचकं स्यादिति भावः। धातोः अतीते काले वर्तमाना भवतीति विधिः, अयं नियमः पूर्वेण वर्तमानाया वर्तमाने नियतत्वादतीते प्राप्त्यभावात् ह्यस्तन्यद्यतनीपरोक्षाणां बाध इति। नन्वतीतमात्रविहिताया: अद्यतन्याः एव बाधो युक्तो। नत्वतीतविशेषविहितयोः ह्यस्तनीपरोक्षयोः। अस्त्येतत्, अपि शब्दस्त्वत्र वर्तते स स्मशब्दयोगे ह्यस्तनीपरोक्षविषये वर्तमानं समुच्चेष्यति। पृष्टप्रतिवचने गम्यमाने इति पूर्वः प्रश्नः? पृष्टम् इति, नपुंसके भावे क्तः इति पृष्टे पूर्वकं प्रतिवचनम् ([2]ननु प्रश्नपूर्वकमेव प्रतिवचनं) भवतीति किं पृष्टग्रहणेन, नैतत्, अनेकार्थो हि प्रतिवचनशब्दः। तथा ह्ययमस्त्यव्ययीभावः वचनं वचनं प्रति प्रतिवचनमित्यस्ति वचनाभिमुख्यवृत्तिः। तथा च विरुद्धमपि वचन प्रतिवचनमुच्यते, स साधनवृत्तिरप्यस्ति। तदेवमनेकार्थत्वसम्भवे सति प्रश्नपूर्वकं यत्प्रतिवचनं तस्य परिग्रहार्थं पृष्टग्रहणम्। तत्र अकार्षीः कटं देवदत्त इत्येष प्रश्नः। ननु करोमीत्येतत्प्रतिवचनम्। अपीत्यपेक्षते। तेन [3]ननु शब्दे चोपपदे पृष्टप्रतिवचने विकल्पः, अकार्षीः कटं देवदत्तः। न करोमि, नाकार्षम्, अहं नु करोमि, अहं न्वकार्षम्। योगश्चायं प्रयोगतश्चेत्यस्य प्रपञ्चः।

**भूतकरणवत्यश्च** [4]३।१।१२

भूते करणं विधानं भूतकरणमित्येवमयं यदि भूतकरणशब्दोऽव्युत्पन्नः इह गृह्यते ततो यासां विभक्तीनां भूते विधानमस्ति ता भूते विधीयन्ते इत्ययमर्थोऽभिहितः स्यात्। एवं चाभिधेयमाने सति वचनमिदमपार्थकं स्यादित्याशङ्क्याह—व्युत्पन्न एवायं भूतकरणशब्दः। पूर्वाचार्यप्रसिद्धयाकारागमस्य वाचक इत्याह—अद्यात्वादिरित्यादि। अद्यतन्य इति तु न कृतमपूर्वमकारागमस्य पूर्वाचार्यसंज्ञां प्रदर्शयितुम्। तत्प्रदर्शने तु फलं वैचित्र्यमेव। भूतकरणवत्यो विभक्तयो ह्यस्तन्यद्यतनी क्रियातिपत्तय इति कुतः तास्वेव परास्वकारागमस्य सम्भवात्। यद्येवं भविष्यद्विवक्षायां क्रियातिपत्तिर्न प्राप्नोति।

१. ३।१।१२ (दु० वृ०)
२. न्यूनपाठः (वा०)
३. न-शब्दे नु-शब्दे (भं०)
४. ३।१।१४ (दु० पा०)

दक्षिणेन [1]चेदयास्यन्न शकटं [2]पर्याभविष्यत्, यदि कमलकमाह्वास्यन्न शकटं पर्याभविष्यदित्युच्यते। च शब्दोऽत्र पठ्यते, स भविष्यति यथादर्शनं क्रियातिपत्तिः समुच्चेष्यति। तथा च भविष्यन्त्यप्यत्र भवति। दक्षिणेन चेद् यास्यति न शकटं पर्याभविष्यतीति। सप्तम्यपि, दक्षिणेन चेद् यायान्न शकटं [3]पर्याभविष्यति।

**भविष्यति भविष्यन्त्याशीःश्वस्तन्यः [4]३।१।१३**

[5]भवतेश्शन्तृङ्ङानशावित्यादिना स्येन सहितः शन्तृ-प्रत्ययः, इट्, गुणः, भविष्यन्तीत्यत्र तु शन्तृ-प्रत्ययान्तादृकारेति ई-प्रत्ययः। आशासनमाशीः, कृत्ययुट् इति भावे क्विप्। अतएव ज्ञापकादित्वम्। शासिवसि इति षः। श्वो भवः श्वस्तनः, तमादित्वात्तन-प्रत्ययः। तत्र विहिता विभक्तिः श्वस्तनीति नदादित्वादी-प्रत्ययः। ननु भविष्यन्त्यादयो भविष्यत्येव काले विज्ञास्यन्ते। तथा हि भविष्यन्तीत्येषा संज्ञा गुरुसंज्ञात्वादन्वर्था सती स्यतिप्रभृतीनां भविष्यत्कालविषयत्वमेवावगमयति। आशीरित्येषाप्यन्वर्थसंज्ञा। तेनानाप्तस्य प्रियस्य प्राप्तुमिच्छा आशीरित्येषामित्येवमाशीरर्थावबोधनाद् [6]स्यादयो भविष्यत् कालमेवावगाहन्ते। एवं श्वो भवः श्वस्तन इति व्युत्पत्त्या श्वस्तनी संज्ञाप्यर्थानुगमनेन त्यादीनां प्रत्ययानां भविष्यत्येव विधानं बोधयतीति नार्थोऽनेन योगेन। नैतत्। गुरुसंज्ञानामपि कासाञ्चिदर्थानुगमनस्य भग्नशक्तित्वदर्शनात्। तथा च सर्वो धातुप्रयोजकमस्येत्यर्थानुगतायामपि गुर्व्यां सार्वधातुकसंज्ञायां न सार्वधातुभ्यः त्यदादयो भवन्ति। घृतं घृणा घर्म इत्यादौ तेषामदर्शनात्। अदर्शनं तु केषाञ्चित् धातूनां नियतप्रत्ययविषयत्वात्। तस्माच्छब्दव्युत्पत्तिमात्रफलमपि भविष्यन्त्यर्थादीनामर्थानुगमनं भवेदिति न संज्ञानामन्वर्थत्वं स्यतिप्रभृतीनां भविष्यत्कालतामवगमयति इति योगारम्भः।

**तासां स्वसंज्ञाभिः कालविशेषः [7]३।१।१४**

कालसामान्ये विभक्तयो मा भूवन्निति नियमार्था परिभाषेयमारभ्यते।

---

१. चेद् यास्यति न (भं०)
२. पर्याभविष्यतीति सप्तमी अपि दक्षिणेन चेद् यायान्न (भं०)
३. पर्याभवेदिति (भं०)
४. ३।१।१५ (दु०वृ०)
५. शन्त्राना (भं०)
६. यादयो (भं०), यदादयो (वा०)
७. ३।१।१६ (दु० वृ०)

तत्र कालविशेषं परिभाष्यमाणाः ता अडादयोविभक्तयः परिभाषणभाजः। स्वसंज्ञाभिरिति। हेतौ तृतीया पुंवद्भाषितपुंस्केति स्वा-शब्दस्य पुंवद्भाव इति न तु कर्मधारयसंज्ञक इत्यादिना तत्र हि संज्ञा[1]पूरणीकोपधा इति वर्तते तासामित्यनेन सर्वनामपदेनान्तरे प्रक्रान्तानां बुद्धौ परिस्फुरन्तीनां भविष्यन्त्यादीनामेव तिसृणां विभक्तीनामिहाभिसम्बन्धं प्राप्नोति, न तु परोक्षादीनामिति [2]मन्यमानं प्रत्याह – तासामिति परोक्षादयोऽनुकृष्यन्ते इति आदिग्रहणात् भूतकरणवती प्रभृतयोऽनुकृष्यन्ते न त्वनन्तराः तिस्र एवेति तिस्र एव भविष्यन्त्यादयो नानुकृष्यन्ते, किं तर्हि, परोक्षादयोऽपीत्यर्थः। कुत एव तदवगतमित्याह—तद् ग्रहणं ह्यर्थकं स्यादिति आनन्तर्यादेव भविष्यन्त्यादीनामनुवृत्तिसिद्धे तद्ग्रहणमपगतप्रयोजनं भवेदिति तदुपादानात्परोक्षादयोऽत्र श्वस्तनीपर्यन्ताः सर्वा एवानुकृष्यन्ते। ननु स्वसंज्ञाभिरिति बहुवचननिर्देशादेव भविष्यन्त्यादीनामनुवृत्त्यभावस्सिद्धः, तासामेव ह्यनुवृत्तौ स्वसंज्ञाभ्यामिति द्वित्वं [3]निर्दिशेत्। नहि भविष्यत्कालस्य भविष्यन्ती संज्ञागतोऽस्ति विशेषः तस्मात् स्वसंज्ञाभिरितीदमेव बहुत्वं परोक्षादीनामनुवृत्तिकारित्वेनावस्थितमिति किमनेन तद्ग्रहणस्य हेतुत्वोपन्यासेन, एवं चेदसफलमतिरिच्यते तद् ग्रहणम्, अस्त्येतत्, अयमेव त्वर्थस्तद् ग्रहणेन प्रतन्यते, परोक्षाद्यनुवृत्तौ सत्यां यत्फलं सम्पद्यते तद् दर्शयितुमाह—तासामडादीनामित्यादि। तत्रैकेनादिशब्देन तसतुसुस् इत्यादयः प्रत्ययाः। ये परोक्षेत्यादिकया त्रिसूत्र्या विहितास्ते गृह्यन्ते। अपरेणापि ह्यस्तन्यादिसंज्ञाः। अतीतादेरित्यादिग्रहणेन भविष्यतो ग्रहणम्, कालस्यातीतादेर्विशेषो भवतीत्ययमेवार्थं वितत्य प्रदर्शयितुमाह—परोक्षादीनां संज्ञानामित्यादि। परोक्षत्वादिका इत्यादिग्रहणं ह्यस्तनी क्रियातिपतनादिविशेषपरिग्रहार्थम्। न तु कालसामान्य इति परोक्षत्वादिना विशेषेण रहिते अतीतभविष्यन्मात्र इत्यर्थः। यदि तासामिति वचनेन विभक्तयोऽनुवर्तन्ते वर्तमानापि कस्मान्नानुवर्तत इत्याह—वर्तमाना तु नेहानुवर्तत इतीहेत्यनेनेहैतस्यानुवृत्तिर्नवृत्तरत्रेति दर्शयति। कथमिहानुवृत्तिस्तस्येत्याह—वर्तमानस्य कालस्येत्यादि कालस्य [4]विशेषोऽनेनावधीयते। विशेषश्च स्वरूपातिरिक्तो धर्मः उच्यते यथा—परोक्षत्वमतीतस्य। न च वर्तमाना विभक्तिसम्बन्धि यद्वर्तमानत्वं स वर्तमानस्य कालस्य विशेषः। साध्यरूपदशायां वर्तते इत्येवंरूपस्य तस्य वर्तमानत्वस्य वर्तमानशब्दार्थ-

१. पूर्वकोपधा (भं०)
२. यो मन्यते तं (भं०)
३. निर्देशेन (भं०)
४. अनेन विशेषः आधीयते (भं०)

निरूपणया वर्तमान एव काले सम्भवात्। अतो न वर्तमानत्वं वर्तमानस्य विशेष इति प्रयोजनाभावाद्वर्तमानान्न न सम्बध्यते, तेन प्रबन्धाव्युपरतिरूपे वर्तमाने सर्वत्र वर्तमाना भवतीति मांसं न भक्षयति, इह शिशवः क्रीडन्ति, तिष्ठन्ति पर्वता इत्यादि सिद्धम्। नन्वतीतसामान्ये परोक्षेऽपीत्यर्थः। किं पुनः परोक्षत्वमुच्यत इत्याह—अक्षेभ्य इन्द्रियेभ्यः परं परोक्षमिति अक्षशब्दस्येन्द्रियवचनत्वात्। तेनेन्द्रियगोचरे धात्वर्थे वर्तमानाद्धातोः परोक्षा भवति। ननु सर्वः क्रियात्मको धात्वर्थस्साध्यमानः सत्त्वात् सिद्धवस्तुविषयाणामिन्द्रियाणां नैव गोचर इति सर्वस्य धात्वर्थस्य परोक्षत्वात्किमस्यातीतकालविशेषणस्य परोक्षाग्रहणस्य [1]व्यावृत्तं स्यात्—उच्यते, साधनस्य प्रत्यक्षत्वादनिष्पन्नेऽपि धात्वर्थे यो लोकस्य प्रत्यक्षत्वाभिमानः तदत्र [2]व्यावृत्तम्। तेन यत्र क्रियायाः साधनं परोक्षं तत्र परोक्षा नान्यत्र। नन्वशक्तस्य साधनत्वाच्छक्तेरेव सर्वत्र साधनाभावः सा च कार्यानुमेयेति कथं साधनस्यापि शक्तिरूपस्य प्रत्यक्षत्वं स्यात्? ब्रूमः, शक्तिशक्तिमतोर्भेदमविवक्षितत्वात् शक्तेराश्रयभूतं यद् द्रव्यं तदेवात्र साधनशब्देनोच्यते, तत्र [3]प्रत्यक्षे [4]सत्यसत्यामपि अतीतकालावगतौ परोक्षा न प्रवर्तते। न केवलमिन्द्रियाणामगोचरं परोक्षम्, यावत् मनसो सान्निध्यात् आत्मसंसाधितोऽपि यो धात्वर्थस्सोऽपि परोक्ष एवेत्याह—यदपीत्यादि। सुप्तोऽहं किल विललापेति, सुप्तेन त्वया किमपि विलपितमित्यन्येन बोधितो जनः एवं वाक्यं प्रयुङ्क्ते। अत्यन्तापह्नवे परोक्षा वक्तव्येति। अत्यन्तापह्नवः सुप्रसिद्धार्थोऽपलापः। तत्र साधनस्य [5]प्रत्यक्षत्वान्न सिध्यतीत्यपि शब्दानुवृत्तेरभिधातव्येत्यर्थः। बुभुज इति सर्वत्रात्मन इति गुणाभावः। ह्यस्तनेऽतीते ह्यस्तनीति। अतीतशब्दोऽतिक्रान्तवचनः। [6]तौ नह्यस्य धात्वर्थस्यातिक्रान्तता जाता तद्वृत्तेर्धातोर्ह्यस्तनी भवति। ह्यो भवः कालः ह्यस्तनः तत्सहचरिता विभक्तिरपि ह्यस्तनी। अद्य ह्यो तु क्षुहीत्यादौ तु ह्यस्तनसम्बन्धेऽप्यद्यतन्येव भवति परत्वात्। नत्वतीतविशेष ([7]इति। अद्य यदतीतं सोऽतीतविशेषः)। एतच्च संज्ञाभिरिति कर्तव्ये स्वग्रहणस्य पूर्वाचार्याभिहित स्वकालप्रतिपत्त्यर्थत्वाल्लभ्यते। पूर्वाचार्याः हि भूतमात्रेऽद्यतनीं स्मरन्ति,

१. व्यावर्त्यम् (भं०)
२. प्रकृतम् (भं०)
३. परोक्षे (भं०)
४. सत्यामप्यतीत (भं०)
५. परोक्षत्वान्न (भं०)
६. तेन ह्यो यस्य (भं०)
७. न्यूनपाठः (वा०)

यद्येवं (¹ह्यो गेयो साम घोषान्) अपाम पय इति ह्यस्तनेऽतीतेऽद्यतनी न प्राप्नोति, गमेः पुषादित्वात् अण्, अस्य वमोर्दीर्घ इति दीर्घः। अपामेति सिच इणुस्थादेत्यादिना लुक्। अत्रोच्यते—अतीतमात्रविवक्षायामद्यतन्यां सत्यां ह्यःशब्देन सम्बन्धो भविष्यति। यत्र हि तेन नास्ति सम्बन्धे ह्यस्तनविशिष्टश्चायमतीतः कालो विवक्ष्यते। तत्र कथमद्यतनी अमुत्रावात्समिति सुप्त्वा हि प्रतिबुद्धस्यापरस्मिन् दिने एष शब्दप्रयोगः। नैतत्, सकलमतिक्रान्तयाभिनी यामत्रयं जागरितवतो न्याय्यः तत्स्थाने क्व भवानुषित इत्यनेन पृष्टस्याद्यतनकालाभिमानिन एवं शब्दः प्रयोगात्। इत्थं च अत्र अद्यतन्येव न्याय्या। मुहूर्तमात्रं सुप्तस्तु यः प्रयोक्ता तदपेक्षया अमुत्रावात्समिति ह्यस्तन्येव भवति। अवात्समिति वसेरद्यतनी परस्मैपदोक्तमेकवचनं सिच्, अस्य च दीर्घः, सस्य ये सार्वधातुके तः, अतिपत्तिः अनिष्पत्तिः अतिपूर्वस्य पतेरनिष्पन्नार्थत्वात्। अभोक्ष्यत भवानित्यादि। अतीतकालविषयमेतद्वचनम्, ये तु भविष्यत्कालविषयमिति व्याचक्षते तान्प्रति प्रयोगोऽयं भूतकरणवत्यश्चेति च शब्दात्। किं पुनस्तेषामेवं व्याचक्षाणानामतीते क्रियातिपत्तेरुदाहरणम्। दृष्टो मया भवतः पुत्रोऽन्नार्थी ²चङ्क्रम्यमाणः अपरश्च ब्राह्मणार्थी। तत्र यदि स तेन दृष्टोऽभविष्यत्ततोऽभोक्ष्यत न तु दृष्टवान् अन्येन यथा हि गतस्सः इत्येतत्। विशेषस्य कस्यचिदभावादिति संज्ञागतस्येति शेषः। भविष्यत्वं संज्ञागतं भविष्यतः कालस्य सुगतं स्वरूपमिति नासौ तस्य विशेषः, तेन भविष्यत्सामान्य एव भविष्यन्ती प्रवर्तन्ते। आशीर्युक्त इति। आशासन (³सम्बन्धे किमेवाशासनम्) अप्राप्तस्य प्रियस्य प्राप्तुमिच्छा श्वस्तने काले भविष्यती श्वस्तनी। यद्येवं कथं श्वो गमिष्यतीत्यत्र श्वस्तनी विषये भविष्यन्तीत्याह—श्वो गमिष्यतीत्यत्रेत्यादि पदसंस्कारपक्षाश्रयणेन भविष्यत्सामान्येन पूर्वं गमिष्यतीति इत्येतत् पदं संस्क्रियते पश्चाद्विशेषावगतिद्योतनार्थं श्वश्शब्देन सम्बन्धो भविष्यति. स च बहिरङ्गत्वादन्तरङ्गसंस्कारं न बाधते। नाम्नि प्रयुज्यमानेऽपीत्यादिलक्षणारम्भाद् वाक्यसंस्कारपक्षोऽप्यादृतः। ततस्तत्र किं प्रतिसमाधानमिति चेत्, प्रयोगतश्चेति वचनम्। अतएव परिदेवनविषये यत्र भविष्यत्सामान्यावगमः तत्राविरुद्धः श्वस्तन्याः प्रयोगः। यथेयं नु कदा गन्ता यैवं पादौ निदधाति। अयं नु कदाध्येता य एवमनभियुक्तः इति।

---

१. ह्योगसामघोषान् (वा०)

२. चापकृष्यमाणः (वा०)

३. सम्बुद्धेः किं पुनराशासनम् (भं०)

**प्रयोगतश्च [1]३।१।१५**

प्रयोज्यत इति प्रयोगः। अकर्तरि च कारक इति कर्मणि घञ्। तदन्ताद-सर्वनाम्नोऽपि पञ्चम्यन्तात् तसिष्यत इति तस्, तत्र कालविशेषो विधीयमानो वर्तमानादयो विधिभाजः। प्रयोगत इति हेतुनिर्देशः। अर्थवशादिति प्रयोजन-सामर्थ्यात् कर्मधारयेण कालविशेष इत्यनेन प्रयोजनमित्यर्थः। ननु पूर्वमसौ तत्पुरुषः कथमिहानुवृत्तिमात्रादेव कर्मधारयः शक्यो विज्ञातुम्? उच्यते—भवेदेवं यदि तदनुवर्तते ([2]न तु तदनुवर्तते) पूर्वत्रैव तस्य कृतकृत्यत्वात् तत्सदृशं तु शब्दान्तरमनुवर्तते। तच्च येन रूपेणेह सम्बन्धयोग्यं भवति तद्रूपमाश्रयति। काललक्षण एव च विशेषो वर्तमानादीनामनेन विधीयते, न तु कालस्य विशेष इति कर्मधारय एवात्र कालविशेष इति वर्तते। वर्तमानाप्यत्र सम्बध्यते, पूर्वत्र प्रयोजनाभावादनभिसम्बन्धः तस्याः। अभूत् इह तु अस्त्येव तदभि-सम्बन्धः प्रयोजनकालान्तरेऽपि विधानं यथा स्यादिति, तेन वर्तमानाप्यत्र सम्बध्यते इति न केवलमन्यविभक्तय [3]इत्येतदपि शब्दार्थप्रयोगः। शिष्ट प्रयोग इति भगवद्व्यासादयः शब्दानां प्रयोक्तारः शिष्टाः तेषां यः प्रयोगः सः प्रयोगः न तु प्रयोगमात्रमित्यर्थः। विशिष्टः कालो भवतीत्येतेन कालविशेषस्य शब्दस्य कर्मधारयः व्यनक्ति। एतदेव वितत्य प्रदर्शयितुमाह—कालान्तरे-ऽपीत्यादि। वर्तमानादिलक्षणात् कालादन्यत्रापि काले शिष्टप्रयोगानुसारेण वर्तमानादयो भवन्तीत्यर्थः। एवं च तासां काललक्षण एव विशेषो विधीयत इति कर्मधारयार्थो व्याख्यातः। यावत्पुराशब्दावत्र निपातावित्यभ्युत्पन्नाविति शेषः। निपातसंज्ञा त्वनयोः पूर्वाचार्यप्रसिद्धेः। यदा न निपातितावित्यादि। एष च विशेषः प्रयोगस्य हेतुत्वाभिधानाल्लभ्यते। नह्यत्र निपाताभ्यां यावत्पुरा-शब्दाभ्यां योगे विशिष्टव्यवहारे भविष्यत्कालविषयतया वर्तमाना या प्रवृत्ति-रस्ति, श्वकाल इति, भविष्यत्काले भविष्यन्त्येवेति न तु वर्तमानेत्यर्थः। यावद् दास्यति तावद् भोक्ष्यति इति यत्परिमाणस्य तत्परिमाणस्येति तसादि-त्वाद् वन्तुः प्रत्ययः। आत्वञ्चान्त्यस्य। अनया पुरा व्रजिष्यतीति। अनयेति स्त्रीत्वनिर्देशः, पुराशब्दोऽयं करणतृतीयान्तो न तु निपात इति प्रदर्शयितुम् पॄ पालनपूरणयोः, क्विब्भ्राजीति क्विप्, उरोष्ठ्योपधस्येत्युरादेशः। कदा भुङ्क्त इति किं सर्वेत्यादिना किमो दा प्रत्ययः, किं कः, कर्हि भुङ्क्ते, सर्व-नाम्नो हि यथादर्शनं प्रत्ययो वक्तव्य इति किमो र्हि प्रत्ययः। कदा कर्हि योगे

---

१. ३।१।१७ (दु०वृ०)
२. अधिकः पाठः (भं०)
३. एवेत्येषोऽपि (भं०)

इत्यनेन च विकल्पस्य विषयमात्रप्रदर्शनं कृतम् । शब्दान्तरयोगेऽपि हि भविष्यत्काले वर्तमाना विकल्पेन दृश्यते । यत्र लिप्सायां गम्यमानायां किमो विभक्त्यन्तस्य डतरडतमान्तस्य च प्रयोगः । किं भवन्तो भोजयन्ति, पक्षे भोजयिष्यन्ति भोजयितार इति च भविष्यन्ती श्वस्तन्यावपि भवतः । एवं कतरो भिक्षां ददाति दास्यति दाता वा, कतमो भिक्षां ददाति दास्यति दाता वा । लिप्सायामिति किम् ? को वाराणसीं गमिष्यति । एवं लिप्स्यमानात् सिद्धावपि गम्यमानायां यो भक्तं दास्यति ददाति दाता वा सः स्वर्गलोकं यास्यति याति याता वा । इत्थमन्योऽप्येवंप्रकारो विकल्प विषय उदाहार्यः ।

**पञ्चम्यनुमतौ** [1]३।१।१६

शेषात्कर्तरीत्यादिना सिद्धायां पञ्चम्यामारम्भस्तस्याः अर्थादेशनार्थः । तत्रानुमतिरर्थः आदिश्यमानः पञ्चमी विभक्तिरर्थादेशनभाक् । यद्येवमनुमतेरर्थस्य विधीयमानत्वात् प्राधान्यमित्यनुमतिः पञ्चम्या इति सूत्रनिर्देशो न्याय्यः । सत्यम्, यस्यास्तु पञ्चम्या अनुमतिरर्थः तस्मिन्नर्थेऽवश्यं तस्याः प्रवृत्तिरिति फलद्वारेणायमनुमताविति सप्तम्या निर्देशः । अभ्युपगमः इत्यङ्गीकरणम् । जीवताद् भवानित्यादि तु हि इत्येतावाशिष्युत्तरसूत्रेण ।

**समर्थनाशिषोश्च** [2]३।१।१७

सं पूर्वादर्थ याञ्चायामित्यस्मात् चुरादीन्नन्ताद् ईषिश्रन्थासि इति युः प्रत्ययः समर्थनायामाशिषि च धातोरित्येतेन समर्थना आशीश्च [3]धातोः विशेषणमिति दर्शयति । तेन समर्थनाधिके धात्वर्थे आशीर्विशिष्टे च यो धातुः वर्तते तत इयं पञ्चमी भवतीति । सिद्धावपि सत्यां विशेषविधानार्थमिदमारभ्यते । अध्यवसाय इति निश्चयः । केचिदित्यादि । एतच्च शब्दस्य विभक्त्यन्तरसमुच्चयार्थत्वाल्लभ्यते । नन्वाशीः प्रार्थनाविशेषः प्रार्थने च अस्त्वेवोत्तरसूत्रेण पञ्चमी तत्किमत्राशीः ग्रहणेन, सत्यम्, आशीर्विभक्त्या तु पञ्चम्याः बाधः स्यात् ।

**विध्यादिषु सप्तमी च** [4]३।१।१८

विध्यादिषु सत्स्वति । एतेन विध्यादिष्वेत्येषा सप्तमी कालभावयो-

---

१. ३।१।१८ (दु० वृ०)
२. ३।१।१९ (दु० वृ०)
३. धात्वर्थस्य (मं०)
४. ३।१।२० (दु० वृ०)

रित्यादिना भावे सत्तायां विहितेति दर्शयति। [1]केन पुनः रूपेण विध्यादीनामिह विज्ञायते प्रत्ययार्थविशेषणता लक्षणेन आत्मनेपदानि भावकर्मणोरित्यादिना हि ये भावकर्मकर्तारः प्रत्ययानामर्थाः तेषामयं विध्यादिरर्थो विशेषणम्। तेन विध्यादिषु सत्स्वित्यत्र विध्यादिविशिष्टेषु कर्त्रादिषु सत्स्वित्यर्थो जायते। अथ प्रकृत्यर्थत्वं विध्यादीनां कस्मान्न भवति, न भवति, विदधाति निमन्त्रयतीत्यादावपि प्रत्ययप्रसङ्गात्। नापि प्रत्ययार्थत्वं विदध्यादित्यादौ प्रकृतिभिरेव विध्यादीनामर्थानभिधानात् प्रत्ययोत्पादप्रसङ्गात्। तस्मात् प्रत्ययार्थविशेषणत्वमेव ज्यायः। शास्त्रान्तरप्रसिद्धा इति तदुक्तं विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङिति। विधिरज्ञातस्य ज्ञापनमिति। अग्निहोत्रं जुहुयादित्यादिना वाक्ये यदज्ञातस्यार्थस्य ज्ञापनं तत् विधिः। यद्येवमाख्यायिकादिवर्णनमपि विध्यर्थो भवेत् तत्राप्यज्ञातज्ञापनस्य विद्यमानत्वादित्याशङ्क्याह—प्रेषणं वेति भृत्यादेः कस्याञ्चित् क्रियायां प्रवर्तनमित्यर्थः। एतेनाप्रवर्तन-प्रवर्तनमात्रं विधिशब्दस्यार्थं इति दर्शयति। तदुक्तम्, विधेर्लक्षणमेतावदप्रवृत्तप्रवर्तनम्। अतिप्रसङ्गदोषस्तु न, अज्ञातज्ञापनं विधिरित्येवं प्रेषणस्यापि विध्यर्थत्वात् तत्रापि सप्तमीपञ्चम्यौ यथा दर्शनं भवत इति प्रैषे तेन वक्तव्यो एव निमन्त्रणादीनां च विध्यर्थविशेषत्वात् परिग्रहो सिद्धे सत्यादिग्रहणं विस्पष्टार्थमेवेत्याहुः कव्यहव्योद्देशेनेति देवपित्राधिकरणेन चानुवृत्त्या अतिसर्गप्राप्तकालयोरपि यथादर्शनं सप्तमीपञ्चम्यौ भवतः। अतिसर्गः कामचारः निमित्तभूतस्य कालस्यावसरः प्राप्तकाल इति कटं करोतु भवानित्याद्युदाहार्यम्।

**क्रियासमभिहारे सर्वकालेषु मध्यमैकवचनं पञ्चम्याः [2]३।१।१९**

क्रियासमभिहारः पौनःपुन्यमिति। ननु समाहारो नाम विप्रकीर्णानामेकत्र समुदायभावापत्तिः, स च सूत्रस्यानेकस्यैककालस्य च धर्मो यथोत्पलादेः। न च क्रियाणामुत्पलविलीनानामसौ सम्भवति। तासां सहावस्थानासम्भवात्। एकेन धातुनानेकस्याः क्रियायाः युगपदनभिधानात्। अथापि समाहारः सादृश्यात्। पौनःपुन्यं समभिहारः उच्यते। तदेतदपि न सम्भवति क्रियायाः। तथा हि यद्येकस्यां पाकक्रियायामभिनिवृत्तायां पुनः पाकः क्रियैवारभ्यते, तत्किमेतावता प्रथमाभिनिवृत्तायाः पुनः पुनः प्रादुर्भावो येन पौनःपुन्यवाचो युक्तिरन्विता स्यात्। वैलक्षण्यमात्रमपरपाकक्रियारम्भेन तु पुनरर्थः कश्चित्। सत्यम्। किन्तु स्वभावविलक्षणानामपि पाकादिक्रियाणां तुल्य-

---

१. केनामुना (भं०)

२. ३।१।२१ (दु० वृ०)

जातीयत्वेनैक्यमध्यवसायो भिन्नजातीयक्रियान्तराव्यवधानेन देशकालभेदापेक्षया यत्सातत्येनानुष्ठानं समभिहारः, तच्च क्रियाणां सम्भवत्येव। समभिहारसादृश्याच्च तदुपचारेण समभिहार इत्युच्यते मुख्यस्याभिहितस्य समाहारस्यासम्भवात्। तेन यथैव द्रव्याणां समभिहारो भवति तथैव क्रियाणामपि क्रियान्तराव्यवहितानां यदभिनिवर्तनं समभिहार इव समभिहार इति युज्यते, क्रियासमभिहारः पौनःपुन्यं भृशार्थत्वं वेति। अधिश्रयणादिलक्षणानामवयवक्रियाणां प्रधानं पाकादिक्रियोपकारिकाणां यत्कार्त्स्न्येनानुष्ठानं सा भृशार्थता। स च क्रियासमभिहारः, क्रियासमभिहारे वर्तमानाद्धातोरित्येतेनान्तरङ्गत्वात् प्रकृत्यर्थविशेषणं समभिहार इति दर्शयति। मध्यमैकवचनं भवतीति। ननु तत्प्राथम्यादेकत्वविषये प्रथमपुरुषविषय एव स्यात्। वचनान्तरविषये पुरुषान्तरविषये च न प्राप्नोति। लुनीहि लुनीहि इत्येवं लुनासि, युवां लुनीथ, यूयं लुनीध्वं, अहं लुनामि इत्यादिषु लुनीहीति न भवति, उच्यते—सर्वकाल इति द्वन्द्वेनायं निर्देशः। तेन सर्वत्रैकत्वादौ पुरुषान्तरे च तत्सेत्स्यति। कालग्रहणं चेदानीमतिरिच्यमाणं सद्विस्पष्टार्थमेव। सर्वेषु कालेषु वर्तमानेऽतीते भविष्यति चेद् यथा तु वृत्तिग्रन्थः एवं वर्ण्यते सर्वेष्वेकत्वादिषु सर्वेषु पुरुषेषु कालेषु वर्तमानादिष्विति णं चाभीक्ष्ण्ये इत्यादि। द्विश्च पदमिति सामान्येन द्वित्वविधिना अर्थवचनात् क्रियासमभिहाराभिव्यक्तौ लुनीहीत्यादेर्द्विर्वचनमिति भावः। ननु समभिहारविशिष्टार्थाभिधायिनो धातोर्मध्यमैकवचनं विधीयते। ततश्च तेनैव क्रियासमभिहारो गमित इति तदवगमाय कथं लुनीहि लुनीहीत्यादौ द्विर्वचनमिति स्यात्। अस्त्येतत्, किन्तु क्रियासमभिहारस्यार्थाभिव्यक्तिर्न धातुना क्रियते, किं तर्हि, द्विर्वचनसहितेन मध्यमैकवचनेन। ननु प्रकृत्यर्थविशेषणं क्रियासमभिहारः। सति चैवं प्रति [1]प्रत्ययस्याप्ययमर्थः। तस्यार्थान्तरानिर्देशादनिर्दिष्टार्थत्वाच्च स्वार्थ एवोत्पत्तेरिति क्रियासमभिहारो मध्यमैकवचनश्रवणादेवावगम्यत एवेति का तस्य द्विर्वचनं प्रत्यपेक्षा? उच्यते—भवेदेवं यदि मध्यमैकवचनक्रियासमभिहारे विधीयते। न चैवं कर्मादिषु तस्य विधानात् तेन क्रियासमभिहारो हि स्यात् तात्पर्याद्विना द्विर्वचनं नावगम्यते। तदवगमाय अस्त्वेतद् द्विर्वचनं प्रत्यपेक्षा। अधीष्व अधीष्वेति सर्वेषामात्मनेति गुणाभावः। अधीयत इति। अन्ते आत्मने चानकारादिति न लोपः। अध्यैतेति स्वरादीनां वृद्धिरादेः हि स्वान्ते च प्रत्यस्तमितसंख्यादिति, [2]विशेषायामभिव्यक्त्यामनुप्रयोक्तव्यः तेन लुनीहि लुनीहीत्यत्र लुनाति [3]समाना-

१. प्रत्ययस्याप्यसावर्थः (भं०)
२. विशेषाभिव्यक्तौ प्रयोक्तव्यः (भं०)
३. अस्पष्ट।

नार्थाच्छिवर्तिनानुप्रयुज्यते । यदा तु समुच्चीयमानक्रियावचनाद्धातोश्चानुवृत्त्या विकल्पेन मध्यमैकवचनप्रवृत्तौ सत्यां सक्तुपिब धानाः खादय पयः पिबेत्यादिः प्रयुज्यते तदाभ्यवहरतीत्यादिसामान्यवाच्ययं शब्दरूपमनुप्रयुज्यते । हिस्वाविति न कृतं प्रत्ययान्तराशङ्का तयोर्मा भूदिति । किं च स्यात् परस्मैपदात्मनेपदव्यवस्था न प्रकल्प्येते । हिस्वोर्विषयेत्यादि । यत्र विषये हिस्वौ विहितौ तत्र तध्वमावप्येष्टव्यौ [1]तेन पञ्चम्या हि स्वाविति कर्तव्ये गुरुसूत्रकरणाल्लभ्यते । ननु लुनीहीत्यादयः प्रयोगाः प्रेरणाविवक्षायामेव सिद्धा इत्यपार्थको योगारम्भः नापार्थकः । धात्वर्थातिशय विवक्षायामसिद्धत्वात् ।

**मा-योगेऽद्यतनी [2]३।१।२०**

मा-शब्दः प्रतिषेधवाची तथा चाहुः—अमानोनः प्रतिषेधः इति प्रतिषेधश्च वर्तमाना भविष्यत्विषय इति नातीतविषयः अतिक्रान्तवस्तु वैफल्यात् । वर्तमानकालविहिताः प्रत्ययाः प्राप्ता इति ते बाध्यन्ते इति शेषः । मा इति लुप्तसप्तमीके निर्देशे कर्तव्ये योगशब्दाध्याहारेण च सूत्रार्थावगतौ सिद्धायां किं योगग्रहणेनेत्याह—योगग्रहणमित्यादि । द्वितीयान्तस्य मा शब्दस्येत्यादि । अस्मदो द्वितीयैकवचने परतः त्वन्मदोरेकत्व इति मदादेश कृतेऽन्तलोपे च विहिते असौ चाम इत्यमादेशे च सञ्जाते यो द्वितीयान्तो मां-शब्दस्तस्य यो मादेशः त्वामा तु द्वितीयायामित्यनेन विहितः तेन धातोर्योगे सत्यद्यतनी न भवति । देवदत्तो मा अपच्यदिति न मा मा स्म योगे इत्यकारागमोऽत्र निषिध्यते । तत्रापि निषेधवाचिनो मा शब्दस्य परिग्रहात् मा भवतु मा-भविष्यत्वादयस्त्वसाधवः इत्याहुः ।

**मा-स्म-योगे ह्यस्तनी च [3]३।१।२१**

मास्म-शब्देन योगे सतीत्येतेन यो मा-स्मेति निपातसमुदायोऽत्र गृह्यते इति दर्शयति । एतद् योग-ग्रहणस्य संयुक्त-मा-स्मशब्दपरिग्रहार्थत्वाल्लभ्यते ।

**वर्तमाना ति तस् अन्ति सि थस् थ मि वस् मस् ते आते अन्ते से आथे ध्वे ए वहे महे [4]३।१।२२**

विभक्तिस्वरूपभ्रान्तिप्रसङ्गात् ति तस् अन्तीत्यादौ सन्धेरभावः । एवं

---

१. तौ च (भं०)
२. ३।१।२२ (दु० वृ०)
३. ३।१।२३ (दु० वृ०)
४. ३।१।२४ (दु० वृ०)

सर्वत्रेति यत्, याताम् युस् इत्येतौ सर्वत्र द्वन्द्वं कृत्वा जस आदि लोप इति लोपः कर्तव्य इत्यर्थः। परस्मैपदात्मनेपदसंज्ञे इहोपतिष्ठेते इतीहेत्यनेन क्रियातिपत्तिपर्यन्ता विभक्तयोऽधिकारित्येन निर्दिश्यन्ते।

उपस्थानभूमिरेषा तयोस्संज्ञिनोरिति कृत्वा इहोपतिष्ठते। यद्येवम्, अष्टादशानां संख्यावच्छिन्नानां सर्वेषां त्यादीनामविशेषात्परस्मैपदसंज्ञा प्राप्नोतीत्याशङ्क्याह—नवपराणीत्यादि। आशिषि च परस्मै इति परस्मै-ग्रहणं च लिङ्गम्। सर्वेषां वचनानां परस्मैपदसंज्ञाया अप्रवृत्तेः संज्ञयोरुपस्थाने सति यत् सूत्रार्थद्वयं जायते तद् दर्शयितुमाह—तेनेत्यादि।

**स्य-संहितानि त्यादीनि भविष्यन्ती** [1]३।१।२३

([2]स्यति स्यतस् स्यन्ति स्यसि स्यथस् स्यथ स्यामि स्यावस् स्यामस् स्यते स्येते स्यन्ते स्यसे स्येथे स्यध्वे स्ये स्यावहे स्यामहे) स्यशब्देन योगः परत्रापि स्यादिति परदेशे अपि स्य-शब्दे सति संहितानीत्येतत्तु पदद्वयं क्रियते वैचित्र्यात्।

**षडाद्याः सार्वधातुकम्** [3]३।१।२४

षडाद्या इति डत्वं व्यञ्जनान्तस्य यत्सुभोरिति वचनात् आदौ भवा आद्या इति यदुगवादित इति योगविभागाद् यत्। षण्णामाद्या षडाद्या इति षष्ठी तत्पुरुषोऽयं न कर्मधारय इति दर्शयति, कर्मधारये हि सति परोक्षाया अपि सार्वधातुकत्वात् परोक्षायां च सर्वत्रात्मन इति च योगद्वयमपार्थकं स्यात्। सर्वेषामात्मन इति योगद्वयेनासिद्धत्वात्। नाप्ययं बहुव्रीहिः, तस्मिन्हि सति श्वस्तन्यादीनां चतसृणां विभक्तीनां सार्वधातुकत्वात् पञ्चम्युत्तमपुरुषे गुणनिषेधे प्राप्तेरभावादनुत्तमे पञ्चम्या इति विफलो निषेधारम्भस्स्यात्। यद्यपि पुनर्ह्यस्तनी-सूत्रादनन्तरं सार्वधातुकमिति [4]क्रियताम्, त्यादीनां संज्ञान्तरमिदमिति सम्भावना भवेत्, ह्यस्तनी-सार्वधातुक इत्यकरणान्न भविष्यतीति चेत्, तर्हि मधुरमतीनामवैस्पष्ट्य स्यादिति न्यासकरणमेव ज्यायः।

[5]भट्टोग्रभूतिकृतायां शिष्यहितान्यासे शिष्यालोकाभिधाने आख्यातप्रकरणे प्रथमः पादः [6]इति शिष्यहितान्यासे परस्मैपादः प्रथमः।

---

१. ३।१।३२ (दु० वृ०)
२. कोष्ठांकितोऽधिकपाठः (भं०)
३. ३।१।३४ (दु० वृ०)
४. क्रियेत् किं स्यात् (भं०,
५. पु० (भं०)
६. पु० (वा०)

## द्वितीयः पादः

**प्रत्ययः परः ३।२।१**

प्रति-पूर्वादिणः प्रतीयन्तेऽनेनार्थ इति पुंसि संज्ञायामिति घः, यथा चैवमादौ समान-दीर्घत्वं बाधित्वा गुणस्य प्रवृत्तिः। तथा अव्ययसंज्ञासूत्र एवोक्तम् परिभाषेयमिति। गुप्तिज्किद्भ्य इत्यादावियं पञ्चमी दिग्योगलक्षणा दिगितरर्तेऽन्यैश्चेत्यनेन। सा यथा परं दिक्छब्दमध्याहृत्य प्रवर्तते। ततश्च गुणादिभ्यः पूर्वेऽपि सनादय स्मृरित्येवं रूपस्यानियमस्य प्राप्तौ सत्यां पर एव स्युः पूर्वे मा भूवन्निति नियमार्था परिभाषेयमारभ्यते। अथाधिकारोऽयं कस्मान्न विज्ञायते, नैवं शक्यम्, अधिकारे ह्यस्मिन्नुत्तरत्रोपस्थानः [1]भाक्परत्वं पूर्वः प्रत्ययैस्सह न सम्बध्यते प्रत्यय-ग्रहणञ्चापार्थकं स्यात्। [2]परग्रहणस्य प्रथमान्तस्याधिकृतस्य प्रथमान्तैस्समानादिभिरेव प्रत्ययैरभिसम्बन्धस्य सिद्धत्वात्। परिभाषायां तु प्रत्ययग्रहणमशेषप्रत्ययपरिग्रहार्थं कर्तव्यमेव। लिङ्गवती चेयं परिभाषा। यत्र प्रत्ययत्वं लिङ्गमस्ति तत्रोपतिष्ठते विध्यङ्गशेषभूता विधिः। गुप्तिज्किद्भ्यस्सन्नित्यादि। तस्य यदङ्गं सन् तस्य शेषमूतः गुपादिभ्यस्सन् प्रत्ययः परो भवतीति विशिष्टवाक्यार्थयोजनाद्वारेण सर्वत्राङ्गभावं प्राप्तेत्यर्थः। परिभाषायां सत्यां योऽर्थो जायते तं दर्शयितुमाह—शास्त्रे यः प्रत्यय इत्यादिः। उक्त इति। अणादिः। वक्ष्यमाण इति सन्नादिः प्रकरणान्तरविहितः तव्यादिः, कुतः पुनः प्राक् प्रत्ययो भवतीति, आह—प्रकृतेरिति। प्रत्ययात् पूर्वं क्रियते प्रकृतिरिति तस्याः प्रत्ययः परत्वं प्रत्ययावधित्वं विज्ञायते। प्रत्ययशब्दस्यार्थममन्यमानं प्रत्याह—प्रतीयते ज्ञायत इत्यादि। यद्येवमन्वयव्यतिरेकाभ्यां प्रकृत्याप्यर्थः प्रतीयत इति व्यपदिश्यते, नैवम्, पङ्कजादिवन्नियतविषयत्वात् प्रत्ययव्यपदेशस्य स्वार्थिकानां, तर्हि प्रत्ययव्यपदेशो न सिध्यति। नहि तेषामन्यवव्यतिरेकाभ्यां कश्चिदर्थोऽवगम्यते, उच्यते—तेषामप्यनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीति स्वार्थ एवार्थः। ततस्तेऽपि प्रत्ययत्वेन व्यपदिश्यन्त एव। ननु प्रकृत्यर्थगतातिशयद्योतनाय प्रवृत्ता ये तसादयस्स्वार्थिकास्तेषामेव ([3]द्योतनार्थेनार्थवत्वात्प्रत्यय एवम्) उपवर्णितं स्यात्। [4]यवा एव यावक्यः, मृदेव मृत्तिका इत्यादौ तु ये कादयो न द्योत्येनार्थेनार्थवन्तः नापि वान्येन तेषां कथं प्रत्ययत्वम्। अत्राप्युच्यते, मा भूत्तेषामर्थप्रत्ययलक्षणं प्रत्ययत्वं प्रकृतिपरत्वोपलब्धि

---

१. ताक्षरत्वं पूर्वेणादि (भं०)

२. प्रत्यय (भं०)

३. अधिकः पाठः (वा०)

४. याच एव याचकः (भं०)

सादृश्यनिबन्धनं तद् भविष्यति । प्रत्ययत्वाभावे प्रकृतिपरत्वमेव कथमिति चेत्, तसादिविधौ बहुलार्थाच्च शब्दात् । तथा च बहु पटुरित्यादावीषद-समाप्तवृत्तेर्लिङ्गाद् बहु प्रत्ययः पूर्वं दृश्यते । ननु पञ्चम्या निर्दिष्टे परस्येति परिभाषातः सिद्धं सनादीनां परत्वमिति किमनेन योगेन, नैतत्, परस्येति हि षष्ठीनिर्देशात्षष्ठी[1]निर्देशस्य परस्य कार्ये कर्तव्ये एषा परिभाषोपतिष्ठते । प्रथमानिर्देशाच्च सनादयः । तत्कथं तेषां परिभाषायाः परत्वं सिध्येत्, षष्ठी-निर्दिष्टेषु च परत्वं न स्यादिति योगारम्भः ।

**गुप्तिज्किद्भ्यस्सन् ३।२।२**

गुपादिभ्योऽनुकार्येणार्थेनार्थवत्वात् विभक्तिमुपपाद्य द्वन्द्वः, सनस्स्वरूपे-णार्थेनार्थवत्वात् प्रथमादीर्घत्वाद्यभावस्तु स्वरूपभङ्गप्रसङ्गात् नकारस्सन्यवर्ण-स्येत्यर्थ इति सन्यवर्णस्येत्यत्रायं सनो नकारो विशेषणार्थः । असति हि तस्मिन् सन्यवर्णस्येति निर्देशः स्यात् । ततश्च सकारादौ प्रत्यये अभ्यासावर्णस्येत्वं विज्ञायमानं दधिष इत्यादावपि प्रसज्येत्, तस्मान्नकारः सन्यवर्णस्येत्यत्र विशेषणार्थः कर्तव्यः । जुगुप्सत इत्यादि पूर्ववत् सन्नन्तादित्यात्मनेपदम् । ननु गुपादिभ्यः प्राक्सनात्मनेपदं न दृश्यते । एवं तर्हि अनुदात्तानुबन्धेभ्यस्तेभ्यो रुचादित्वात् तद् भविष्यति । सना च व्यवधानमव्यवधानमेव, अनुदात्तानु-बन्धकरणसामर्थ्यात् । न च जुगुप्सायति इत्यादावात्मनेपदस्य प्रसङ्गः, सन्नन्त एवानुदात्तानुबन्धस्य कृतार्थत्वात् । अथ सन्-प्रत्ययो भवतीति कथमिदमुक्तं यावता यतोऽर्थः प्रतीयते स प्रत्ययः । न च सनः कश्चिदर्थः प्रतीयते तत्कथम-सौ प्रत्यय इति व्यपदिश्यते, न चानिर्दिष्टार्थत्वाद् गोपनादिप्रकृत्यर्थस्तस्यार्थ इति वक्तुं शक्यम्, गोपनादेरर्थस्य सन्नन्तादप्रतीतेरित्याशङ्क्याह—गुप्ति-ज्किद्भ्यो यथासंख्यमित्यादि । व्याधेः प्रतीकारो निवृत्तिः व्याधिप्रतीकारः मुख्यतया चिकित्सेत्यतो व्याधिप्रतीकारः प्रतीयत इति व्याधिप्रतीकारग्रहणम् । यस्त्वन्यत्र चिकित्स्यानि क्षेत्रे तृणानित्यादौ चिकित्सतेः प्रयोगः सदर्थाध्या-रोपात् संशयेऽपि च यः कितः सन्नन्तस्य प्रयोगस्स न केवलस्य किं तर्हि विपूर्वस्य, कथं पुनर्निन्दादिष्वर्थेषु निर्दिष्यमाणं संलभ्यते अर्थाभिधानस्य स्वाभाविकत्वात् । ननु प्रकृतिप्रत्ययसमुदायादवसीयमानो निन्दादिरर्थः कथं सनोऽर्थस्स्यात् ? उच्यते, तस्य विधीयमानत्वात् प्राधान्यात् समुदायार्थस्य तत्राध्यारोपात् । तेन सनो निन्दादिरर्थो विज्ञायते । एवं च ततोऽर्थोऽसौ प्रती-यत इति तस्यास्त्येव प्रत्ययव्यपदेशः । जुगुप्सानिन्दायामित्यादिना क्रमेण भू-धातुष्वेवामी जुगुप्सादयो न पठ्यन्ते प्रत्ययान्तत्वाभावात् । जुगुप्सांचक्रे

१. निर्दिष्टस्य (भं०)

इत्यादावाम्प्रत्ययस्य प्रवृत्तिप्रसङ्गात् जुगुप्सित इत्यादौ च द्विर्वचनं को विनिवारयेदिति योगारम्भ एव ज्यायान् । गुप्तिरित्यादि गोपनादिरत्रार्थः प्रतीयत इति सन्न भवति । ननु सनोऽकारस्यासार्वधातुकस्य च लोप इति लोपेन भवितव्यम् । सार्वधातुकेऽप्यनाविकरणेन । एवं चास्याकारस्योपदेशे फलं नोपलभ्यते इति किमनेन । अस्त्येतत्, किन्तु स्वरत्वात्सनः प्रतीषिषतीत्यत्र स्वरादेर्द्वितीयस्येति द्वितीयैकस्वरस्योच्यमानं द्विर्वचनं न स्यात् । तस्मात् तत्सिद्धये सनोऽकार उपदिश्यते । प्रतीषिषतीति प्रति पूर्वादिणस्सन्प्रत्ययः । दधिषे इति डुदाञ्, परोक्षा ये क्रादिनियमादिट्, द्विर्वचनम् इटि चेत्यालोपः ।

**मानवधदानशान्भ्यो पूर्वश्चाभ्यासलोपः ३।२।३**

मान विचारणेऽर्थे इष्यत इति अर्थाभिधानस्यास्वाभाविकत्वात् । शिष्टेभ्य इति । वधादिभ्यस्त्रिभ्यः । मीमांसते बीभत्सत इति रुचादित्वादात्मनेपदम् । दीदांसति मीमांसति । अत्रोभयपदं यजादित्वात् । [1]समाननं पूजनमत्रार्थः । मानयतीत्यादावपि पूजार्थवृत्तित्वान्न भवति माननं कुर्वाणं प्रयुङ्क्त इति हेताविन्, अवदान-निशानशब्दौ तु द्यतेः श्यतेश्च युटि भविष्यतः । इह मानादीनां धातूनामभ्यासस्य दीर्घत्वं विधीयत इति तद्विशेषविहितं मानादीनां योऽभ्यास इत्येवं विधानाद् ह्रस्वत्वमित्वं च सामान्यविहितमभ्यासमात्रविषयत्वेन प्रवृत्तेः विशेषविधिश्च सामान्यविधिर्बाधते । यथा दधि ब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्यायेति । एवं च मान्प्रभृतीनामभ्यासस्य दीर्घत्वं ह्रस्व इति ह्रस्वं सन्यवर्णस्येति चेत्वं बाधित्वा आकारस्यैव ह्रस्वत्वे त्वनिवृत्तिफलं प्राप्नोति । यस्य तु विधेरभ्यासस्य ह्रस्वत्वासम्भवः तस्य बाधित्वे त्वसकारस्यैव प्राप्नुयादिति पूर्वपक्षयति । नन्वित्यादिविशेषेणेति धातुविशेषोपादानेन परिहारमाह—अत्रोच्यत इत्यादि । दीर्घोऽनागमान्तस्येत्यनागमान्तग्रहणेनाभ्यासविषये नास्त्युपसर्गापवादभाव इत्यवसितम् । एवं च दीर्घत्वस्य ह्रस्वत्वे त्वनयोश्च बाध्यबाधकभावो नास्तीति पूर्वं ह्रस्वत्वे ततो दीर्घत्वम् । एवं च कृत्वा अपीपचदित्यादौ दीर्घो लघोरिति दीर्घः परत्वात् बलीयानपि सन्वदित्वं न बाधते, सन्वदित्वस्यावकाशः । अचिक्षणदिति दीर्घत्वस्यावकाशः । अदीदिवदिति । अपीपचदित्यादौ तूभयप्रसङ्गे परत्वदीर्घत्वमेव स्यात् । अभ्यासविषये उत्सर्गापवादभावो नास्ति, सति सन्वदित्वे दीर्घत्वं सिद्धं भवति ।

**धातोर्वा कर्मणस्तुमन्तादिच्छतिनैककर्तृकात् ३।२।४**

इच्छतिना सहैकर्तृकादित्येतेनेच्छतिनेत्येषा तिबन्तादिषेस्तृतीया तृतीया-

---

१. समाननमिति (मं०)

सहयोग इत्यनेन दर्शयति । समानकर्तृकात्तुमन्तात्कर्मणो धातोरिति विशेषण-त्रयोपादानेऽपि तुमन्तादित्येतद् धातोस्साक्षाद्विशेषणमेककर्तृकात्कर्मण इत्येतत्त्वर्थद्वारेण नास्ति सन्नुत्पत्तिनिमित्तत्वेनोपात्तस्य शब्दात्मकस्य धातोः कर्मत्वं सम्भवति । एक कर्तृकत्वमपि, दूरापेतमेव तस्य साध्यमानार्थविषयत्वात् । अर्थद्वारेण तु द्वयमप्येतद् घटते ([1]उच्यते––असत्त्वेऽयमर्थो) ननु कर्तृकत्वं धात्वर्थस्य घटताम् कर्मभावस्तु कथं तस्य क्रियात्मकत्वादसत्त्वरूपस्य सतो घटते (उच्यते––असत्त्व) [2]रूपोऽप्यर्थो बुद्धयोपसंह्रियमाण इदं तदिति सर्वनामप्रत्यासन्नयोग्यत्वात् सत्त्वभावम् (आपद्यते । एवं यथा––पश्य मृगो धावति, अत्र हि यद्यपि धावतीत्यनेन नासत्त्वभूतोऽर्थ उच्यते तथापि तस्य बुद्धया सत्त्वभावमापादितस्य पश्येत्येतदपेक्षं कर्मत्वं भवत्येव । यथा चात्र भोक्तुमिच्छतीत्यादावसत्त्वरूपस्यापि धात्वर्थस्येषिक्रियापेक्षया कर्मभावो भविष्यति । बुभुक्षत इति भुजेरभ्यवहारविषये पूर्ववत्सन्नन्तादित्यात्मनेपदम् । स्वरान्तानां सनीति ज्ञापकात् तुमो निवृत्तिरिति, अनिवृत्तौ धातोः स्वरान्तता नास्तीति स्वरान्तानां सनीति दीर्घविधानमसम्बद्धं स्यादिति भावः । गुणादिकार्यमित्यादिग्रहणेन कत्वं गृह्यते इहेच्छतेस्सन्निधानात् तदर्थे सन्विधीयते, ततस्तेनैवेच्छार्थो द्योतित इति पृथगिषेः प्रयोगो न भवति । ननु तुमन्तत्वमेककर्तृकत्वं च धातोरेव सम्भवति इति किं धातुग्रहणेन ? उच्यते––सोपसर्गस्य यत्र विशिष्टक्रियाभिधायिनस्तुमन्तत्वमेककर्तृकत्वं चेषिणोच्यते । तत्र ततस्सोपसर्गात्सन उत्पत्तिर्माभूदिति धातुग्रहणम् । किं च स्याद्, यदि सोपसर्गात्सन उत्पत्तिः स्यात् तदा इह प्रकर्तुमैच्छत् प्राचिकीर्षदित्यादौ सोपसर्गस्य सन्नन्तस्य धातुत्वात् धातोराद्यस्यैकस्वरस्य द्विर्वचनमुच्यमानं प्रशब्दस्य भवेत् । प्रशब्दाच्च प्रागकारागमः स्यात् । वा ग्रहणं तूत्तरार्थम् । इच्छार्थेष्वेककर्तृकेष्विति तुमिति योगारम्भादेव भोक्तुमिच्छतीत्यादौ वाक्यस्याभ्यनुज्ञानसिद्धेरिहार्थत्वाभावात् । गमनेनेच्छतीति धात्वर्थस्य करणत्वप्रदर्शनाय युट उपन्यासः तुमन्तत्वाभादित्यादिना पराभिप्रायमाशङ्क्यते । यदि पर एवं ब्रूयात् गमनेनेच्छतीत्येतत्कर्मग्रहणस्य कथं प्रत्युदाहरणं, यावता तुमन्तग्रहणेनैवात्र सिद्धा सनो व्यावृत्तिः तत्किं कर्मग्रहणेनेति, तत्राह––एवं तर्हीत्यादि । आत्मनः पुत्रेणेच्छतीत्यत्र करणान्नाम्नो यिन् मा भूदित्युत्तरार्थं कर्मग्रहणम् । नन्वसति तस्मिन् स्नातुमिच्छति जलमित्यत्र स्नातेः तुमन्तादकर्मणोऽपि प्रत्ययः स्यादितीहार्थतैव कर्मग्रहणेन न्याय्या । नैतत्, अयं हि सन्विधीयमानोऽर्थं प्रति साकाङ्क्ष इतीषिसन्निधानादिच्छायामर्थे विज्ञायते । सा चावश्यमिष्यमाणमपेक्षते । तुमप्रक्र-

१. कोष्ठांकितोऽधिकः पाठः (भं०)
२. कोष्ठांकितो न्यूनपाठः (भं०)

तेश्च सन्निधानात् तस्य एवेष्यमाणत्वे प्रत्ययो युक्तः न तु स्नातुमिच्छति जलमित्यत्र प्रकृतेरिष्यमाणत्वम्, किं तर्हि जलस्येत्यसत्यपि कर्मग्रहणे स्नातेः प्रत्ययो न प्रसङ्क्ष्यत इति तेनेहार्थं कर्मग्रहणम् । भोजनमिच्छतीति धात्वर्थस्य कर्मरूपत्वं प्रदर्शयितुं युट उपन्यासः । ग्रनु नात्र सन्प्रत्यय उपजायमान एककर्तृकत्वलक्षणविशेषमन्तर्भावयितुं शक्नोति । भोजनं किमात्मककर्तृकमिच्छत्यथ परकर्तृकमिति सन्देहात् । एवं च भोजनमिच्छतीति विग्रहावसर एव यत्रैककर्तृकत्वं नावसीयते तत्र सन्नुत्पत्तौ सत्यां कस्तस्यावसायः । एवं तर्हि प्रकरणादिवशाद् यदैककर्तृकत्वं निश्चितं भवति तदा भुजेः प्रत्ययः प्राप्नोतीति तन्निवृत्तये तुमन्तग्रहणम् । इषिणेति कर्तव्ये तिपा निर्देशः इष्यते इष्णातेश्च निवृत्त्यर्थः । एककर्तृकग्रहणं विस्पष्टार्थमिति । नन्वसति तस्मिन् देवदत्तस्य भोजनमिच्छति यज्ञदत्त इत्यत्र कर्मभेदेनापि स्यादित्याशङ्क्याह—देवदत्तस्य भोजनमित्यादि । ग्रनभिधानमत्र भुजेः प्रत्ययाभावहेतुः । ननु इच्छायामर्थे सन् विधीयमानः यत्रेच्छा प्रकृत्याभिहिता तत्र न प्राप्नोतीति । एषितुमिच्छति एषिषति इत्युच्यत इष्यर्थस्यैवात्रेष्यमाणत्वाद् भविष्यति । नितान्तमालस्योपहतो हि व्यापारविषयमिच्छामेवेच्छति । एवं चेच्छाविषयस्येच्छान्तस्य सम्भवात्त्रायमिषेस्सन्प्रत्ययः । यद्येवं चिकीर्षितुमिच्छति इत्यत्राप्यसौ प्राप्नोतीत्याह—इच्छासन्नान्तात्सन् नेष्यते । [1]इह वा शब्दस्य व्यवस्थितविभाषात्वात् । अन्यस्मात्तु सन्नन्तादिति । ग्रनिच्छासन्नन्तादाशङ्कायामित्यादि । इच्छायां विधीयमान ग्राशङ्कायां न प्राप्नोतीति [2]मन्तव्यः । आशङ्का सम्भावनाप्रयोक्तृधर्मः, तद्विशिष्टार्थाभिधायिनः धातोः स्वार्थे सन्वाच्यः । स तु तुम इति कर्तव्ये ग्रन्तग्रहणादधिकविषयोपसङ्ग्रहार्थाल्लभ्यते । ग्राशङ्का चात्र प्रकृतिविशेषणं न प्रत्ययार्थः । प्रत्ययार्थत्वे हि कूलो पिपतिषतीति कूलेन सह पिपतिषतीत्यस्य सामानाधिकरण्यं न स्यात् । नहि कूलमात्मनः पातं सम्भावयति, ग्रपितु प्रयोक्ता तस्य पातमाशङ्कते । कूलं पतिष्यति । कूलस्याचेतनत्वादिच्छा न सम्भवति । श्वा मुमूर्षति । अत्र शुनः सचेतनत्वेऽपि तिर्यक्त्वात् मर्तुमिच्छाभावः ननु चेतनावदुपचारात् कूलं पतितुमिच्छतीत्यादिवाक्यवदिच्छायामेवात्र प्रत्ययो विज्ञास्यते, ज्ञायेत एवं यदि गौणमतेरिच्छार्थत्वं न स्यात् ।

**नाम्नः आत्मेच्छायां यिन् ३ २।५**

यिन्निति स्वरूपभङ्गप्रसङ्गाद् दीर्घाभावः । नाम्नो लिङ्गादिति । यद्यपि विभक्त्यन्तं लिङ्गानामित्याचक्षते न लिङ्गमात्रं, तथाप्यविशेषादेवमुक्तम् । नहि

१. इति (वा०)
२. वक्तव्यः (वा०)

विभक्त्यन्ताल्लिङ्गात्केवलाद्वा यिन उत्पत्तौ कश्चिद्विशेषोऽस्ति । पुत्रीयतीत्यादिः । पुत्रम् इच्छत्यात्मन इति यिन्प्रत्ययः । आत्मशब्दस्तु यिन्युत्पन्ने न प्रसज्यते[1] यिन्नन्त एव तदर्थस्यान्तर्भावात् । तदन्ताच्च शेषात्कर्तरीति कर्तरि इत्यादयः । पुत्रीयति देवदत्त इति आत्मनेपदानि भावकर्मणोरिति भावेऽपि पुत्रीय्यते देवदत्तेनेति । न तु कर्मणि, कुतः पुत्रादिलक्षणस्य कर्मणो यिन्नन्त एवान्तर्भावात् बाह्यस्य कर्मणो सम्भवाज्जीवतिवदकर्मकत्वात् । ननु विशेषकर्मणि माणवकादौ विवक्षिते पुत्रीयति माणवकमिति सकर्मकत्वं सम्भवत्येव, तत्कथं कर्मण्यपि त्यादयो न स्युः, नैतत्, पुत्रीयति माणवकमिति ह्युक्ते इच्छार्थो नावगम्यते, किं तर्हि, आचारार्थः । कुतः यिन्नन्तस्य कर्मसम्बन्धे सति आचारप्रधानतया रूढत्वात् । एवं च आचारयिनोऽयं विषय इति, तेनेच्छायिन्नन्तकर्मसम्बन्धविषय [2]उपसार्यते इतीच्छा यिन्नन्तसमर्थादकर्ममेवेति कथं कर्माभावे सति कर्मणि त्यादयो भवेयुः । धातोर्मा भूदिति पूर्वत्र सनो विकल्पेन विधानात्तदभावपक्षे प्रकृताद् धातोर्यिन् प्रसज्येत एवं च सत्येकविषयतया सनो यिनश्च विधानं भवतीति पूर्वं[3] यद्वा ग्रहणं तत्पक्षे वाक्यस्य अभ्यनुज्ञानाय सम्पद्यते । तस्माद् धातुनिवृत्त्यर्थं नामग्रहणं कर्तव्यम्, न कर्तव्यम्, [4]उदोद्भ्यां परस्य यिनः स्वरवद्भावशासनाद्धातोर्यिनः प्रवृत्तेः । नहि धातोर्यिनि सति ओदौद्भ्यां परो यिन् सम्भवति । तयोरात्वेन परिहारात् । न चासति नामग्रहणे महान्तं घटमिच्छतीति नामसमुदायादस्ति यिनः प्रसङ्गः । वाक्यागमस्यार्थस्य महान्तं घटीयतीत्यतः प्रत्ययान्तादप्रतीतेः । एवं तर्हि ज्ञापकद्वारेण धातोर्यिनो निवृत्तौ [5]सत्यां प्रतिपत्तिगौरवं स्यादिति तत्परिहाराय नामग्रहणं कर्तव्यम् । आत्मनः पुत्रेणेच्छतीति । नन्विच्छायां यिन्प्रत्ययो विधीयमानः सकर्मकत्वादिषेरिष्यमाण एव विज्ञास्यते न करणादिति किं कर्मग्रहणानुवृत्त्या ? अस्त्येतत्, अविशेषाभिधाने तु करणादपि प्रत्यय. आशङ्क्येतेति तन्निवृत्तये कर्मग्रहणमनुवर्त्यमेव । स्वपुत्रेणेच्छति । किमिति कर्मापेक्षायां सापेक्षत्वादत्र प्रत्ययो न आशङ्क्ष्यत इति शक्यं वक्तुम्, प्रकरणादिवशान्निरपेक्षे ज्ञायमाने सति प्रत्ययोत्पत्तिप्रसङ्गात् । अस्ति ह्यत्रात्मेच्छेति कथम् उच्यते—आत्मन इच्छा आत्मेच्छा, आत्मेच्छाया इति आत्मग्रहणेन कर्तृषष्ठ्यन्तेनात्रेच्छा

---

१. प्रयुज्यते (भं०)
२. उपसर्यामर्थे (भं०)
३. पूर्वकम् (भं०)
४. ओदौद्भ्याम् (भं०)
५. साध्यायाम् (भं०)

सम्बन्ध्यते, एवं च यद्यसावेषितात्मनः [1]पुत्रमिच्छति तथापि परस्योभयथा आत्मन इच्छा सम्भवति। अतश्च राज्ञः पुत्रमिच्छतीत्यत्रापि राजसम्बन्धेनेष्यमाणत्वात्। इन्-प्रत्ययः प्राप्नोति, स कस्मान्न भवतीत्याशङ्क्य चोद्यपूर्वकं प्रतिसमाधानमाह—उच्यत इत्यादि। आत्मगुणत्वादिच्छायाः इच्छाग्रहणेनैवात्मग्रहणं लब्धमित्यात्मग्रहणं न कर्तव्यम्। तत्क्रियते पुत्रादिकमेवेषित्वात्मसंबंधेन यदेष्यते तदा यथा स्यात्, यदा तु परसम्बन्धेन [2]तदा मा भूदिति। तेन राज्ञः पुत्रमिच्छतीत्यत्र राजसम्बन्धेनेष्यमाणात्पुत्रात्प्रत्ययाभावः। अत एव केचिदात्मेत्यर्थः। लुप्तषष्ठीकं पदं कृत्वा आत्मनो यन्नाम ततः प्रत्यय इत्यात्मग्रहणेन नामग्रहणमभिसम्बध्नतो राज्ञः पुत्रमिच्छतीत्यत्र प्रत्ययाभावमाचक्षते। मान्ताव्ययाभ्यां नेष्यत इति वा-शब्दस्य व्यवस्थितविभाषावाचित्वात्। नमसः पूजायामित्याद्यभिधानशक्तिस्वाभाव्याल्लब्धमेतत्। नमस्यति त्रिनेत्रमिति चतुर्थी न भवति कारकविभक्तेर्द्वितीयायाः बलीयस्त्वात्। पूजाग्रहणादिह न भवति, नमस्करोतीति नमश्शब्दमुच्चारयतीत्यर्थः। वरिवसः परिचर्यायामिति। परिचर्या शुश्रूषा। ईत्वाभावोऽत्र वक्तव्य इति यिन्यत्रर्णस्येति प्राप्तमीत्वमिति वेत्यतः तद्विधौ वा एतस्यापेक्षणात् क्वचिन्न भवतीत्यर्थः। अमागमादिरित्यमागमो यस्य स तथाविधो यिन्वक्तव्यः।

**काम्यच ३।२।६**

काम्यप्रत्ययो वा भवतीति यिन्काम्ययोरेकविषयतया विधानादर्थात्पर्यायसिद्धः इति वा ग्रहणानुवृत्तेर्वाक्यमभ्यनुजानाति। यिन्काम्याविति कर्तव्ये योगविभाग उत्तरत्र यिनः एवानुवृत्त्यर्थः। इतरथा हि द्वावपि यिन्काम्यावनुवर्तेयातामिति। ननु योगविभाग उत्तरत्र काम्यप्रत्ययस्यानुवृत्तिविधायी स्यान्न यिनः। न च मण्डूकप्लुतन्यायोऽस्ति, तस्यानन्तरं काम्यश्रुत्या बाध्यमानत्वात्। सत्यम्। योगविभागे तु सति काम्य चेति चकारेण काम्यप्रत्ययस्यान्वाचीयमानता प्रतिपाद्यते। प्राधान्यं तु यिन एवेति तस्यानुवृत्तिरनन्तरकाम्यश्रुतावपि विज्ञायत इति योगविभाग उत्तरत्र यिनानुवृत्त्यर्थः।

**उपमानादाचारे ३।२।७**

उपमीयते येन तदुपमानमिति करणाधिकरणयोश्चेति करणे युट्। आचारशब्दः भावघञन्तः। उपमानात्कर्मण इति कर्मत्वमुपमानस्याचारक्रियापेक्षत्वस्याप्रत्ययार्थत्वात्। अपुत्रं पुत्रमिवाचरति पुत्रीयति। पुत्रशब्दादुपमानवाचिनः

१. पुत्रमिच्छत्यथापि (मं०)
२. न्यूनपाठः (वा०)

यिन् । ननूपमानमुपमेयमपेक्षते तत्कस्यात्रोपमेयत्वम्, अपुत्रस्य छात्रादेः स तर्हि छात्रादिः संजाते यिनि किं विभक्त्यन्तः प्रयुज्यताम् ? आचारक्रियासम्बन्धात् कर्मणि द्वितीयान्तः । न च यिन्नन्ते शब्दे कर्मान्तर्भूतमिति शक्यते वक्तुम्, उपमानकर्मण एव तत्रान्तर्भावात् । उपमेयकर्म त्वत्र नान्तर्भूतमिति तदपेक्षया छात्रादेरुपमेयाद् युज्यते द्वितीया । ननु पुत्रत्वेन छात्रादिरुपमेय आचर्यत इति कथमुपमेयकर्मणो यिन्नन्तेऽन्तर्भावो नास्तीति शक्यं वर्णयितुम् ? अस्त्येतत्, किन्तूपमेयसामान्यं तत्रान्तर्भूत नोपमेयविशेष इति तदभिधानाय छात्रादिपदं यत्प्रयुज्यते तस्य कर्मत्वमभिधातुं युक्तम् । पुत्रीयति छात्रमित्यादौ छात्रादेः द्वितीयान्तत्वम् । यद्येवमनेनैव न्यायेन क्रियते कटः इत्यत्र कर्मसामान्य आत्मनेपदेनाभिहितेऽपि कर्मविशेषो नाभिहित इति तमभिधातुं केन कटा द्वितीया न स्यात् । नैतत् समानम्, अत्र हि सामानाधिकरण्यनिर्देशात् क्रियत इति कर्मसामान्ये कर्मविशेषनिष्ठमेव प्रतीयते, एवं चाभिहितमात्मनेपदेनैव कटगतं कर्मेति कथं कटा द्वितीया स्यात् । यिन्नन्तं तु क्रियाभिधानं न छात्रादौ द्रव्ये वर्तितुमुत्सहत इति युक्ता, ततः कर्मणि द्वितीया । अधिकरणे यिन् वक्तव्य इति प्रसादीयति कुट्यामित्युपमेये सप्तमीश्रवणादुपमानमपि सप्तम्यन्तमेवेत्यप्राप्तोऽत्र यिन्प्रत्ययो वक्तव्य एव ।

**कर्तुः क्यङ् सलोपश्च ३।१।११**

सकारस्य च लोप इति कर्तृसम्बन्धिन सलोपविधौ कर्तृग्रहणं विभक्तिपरिणामेन षष्ठ्यन्तं विज्ञायते । च-शब्दोऽत्रान्वाचय इति न समुच्चये कुतः क्यङ्सलोपाविदयकरणात् । तेन किं सिद्धं भवतीत्याह—तेनेत्यादि सलोपानपेक्षया वाक्यभेदेन प्रधानतया विधीयमान क्यङ्प्रत्ययस्सलोपसम्भवे सति न व्याहन्यत इत्यर्थः । श्येनायत इति । अत्र श्येन इवाचरति काक इति विग्रहे कृते श्येन [1]उपमानादाङ्यिप्रत्ययान्ते शब्दे अन्तर्भूत इति उपमेयकर्तुः काकस्यानभिधानात्तदभिधानात् कर्तरि [2]क्यङन्तात्कर्तरि आत्मनेपदं भवति । ओजस्सरसोर्नित्यं स-लोप इष्यते । वाशब्दस्य व्यवस्थितविभाषावाचित्वात् । अश्वतीति । प्रत्ययलक्षणेन ते धातव इति क्विप्प्रत्ययान्तस्य धातुत्वाच्छेषात्कर्तरि परस्मैपदम् । अन्विकरणः, असन्ध्यक्षरलोपः । वकारलोपो वक्तव्य इति वेर्लोपोऽपृक्तस्येत्यनेन कस्मान्न क्रियते इत्याह—वेर्लोप इत्यादि । उपयिवेत्यत्रवकारस्याकृतो लोपो मा भूदिति कृद्ग्रहणं तत्र सम्बध्यते, एवञ्च वेर्वकारस्याकृतो लोपो न सिध्यतीति वक्तव्यात् क्रियते । अवगल्भ-क्लीब-होडेभ्योऽप्या-

---

१. उपमानकर्ता आयि (मं०)
२. तदभिधानात् कर्तर्यायिन्तात्कर्तरि (मं०)

सक्तात्मनेपदचिह्नेभ्यो विप्रत्ययं केचिदिच्छन्ति। अवगल्भते अवगल्भायते, विक्लीबते विक्लीबायते, विहोडते विहोडायते। अन्ये त्वाहुः—गल्भ धार्ष्ट्ये, क्लीब अधार्ष्ट्ये, होडृ अनादरे, इत्येतेषामात्मनेपदिनां धातूनामपगल्भत इत्यादिः भविष्यति। एभ्य एव तु गल्भादिभ्यो घञमुत्पाद्यायि-प्रत्यये कृते अपगल्भायत इत्याद्यपि भवति इति किं गल्भादिभ्यो वि प्रत्ययाभिधानेन अपगल्भ-विक्लीब-विहोडेति प्रत्ययान्तत्वात्वकार-प्रत्यय इष्यमाणः गुरोश्च निष्ठायां सेडित्येव भविष्यति। अपगल्भांचक्रे इत्यादौ आम् प्रत्ययो यः प्रत्ययान्तत्वादिष्यते सोऽप्याम्विधावतुग्रहणादधिकविषयोपसङ्ग्रहात्। अपगल्भ इत्यादावाचारक्रिया-वृत्तित्वं कथमिति चेत्, धातुनामनेकार्थत्वात्। ऊष्मायत इति नलोपश्चेति नलोपः। ऊष्म-वाष्पेत्यादि तु प्रकृतिमात्रप्रदर्शनमन्यतो ह्यपि यथादर्शनमायि-प्रत्ययोऽर्थान्तरे दृश्यते। रोमन्थः वर्तयते, रोमन्थायते गौः। तपश्चरति तप-स्यति इति नामि व्यञ्जनान्तादायेरित्यालोपः। परस्मैदत्वं वक्तव्यम्। एवं शब्दं करोति शब्दायते, वैरायते, कलहायते, सुदिनायते, दुर्दिनायते, सुखं वेद-यति सुखायते, एवं दुःखायते इत्यादि मन्तव्यम्। कण्वादिभ्यो यण् वक्तव्यः। कण्डूञ् मन्तु वल्गु सुख दुःख समर भिषक् कुपुरुष मगध इत्यादयः कण्ड्-वादयः। [1]कारनेण कारेति गुणप्रतिषेधार्थ इति। ननु धातुविकरणविषयो गुणः कथं कण्ड्वादीनां लिङ्गानां प्राप्नुयाद् येन तन्निषेधार्थं यणो णानुबन्धकरण-मर्थवत्स्यादित्याह—कण्ड्वादयो हीत्यादि। असत्येषां धातुग्रहणे किं यणो णका-रेण कृतं स्यादिति भावः। यदि धातवः कण्डूरिति न सिध्यति, वा ग्रहणानु-वृत्त्या यणि विकल्पितत्वादपि स्यादीनामनुत्पत्तेः। नैतत्, अत्र ह्युत्पद्यत एव यण्-प्रत्ययः। तदन्तात्कृत्ययुटोऽन्यत्रापीति भावे क्विपं विधाय अस्य च लोप इत्य-कारे लुप्ते य्वोर्व्यञ्जन इति य-लोपः क्रियते ततस्तस्याद्युत्पत्तौ कण्डूरिति सिद्धम्। [2]उपेयिवे इण् गतौ पूर्वम्[3] उप क्वन्सुकानाविति क्वन्सुः द्विर्वचनम्, दीर्घः इण इत्यभ्यासलोपः, अन्तीर्घमेकस्वर इतीट्, यणश्चेति यत्वं, उपेयि-वांसमाचष्टे इतीन्कारितं चेतीन्, इनि लिङ्गस्येत्यन्त्यस्य स्वरादिलोपः। अस्य वकारस्य कृत्संज्ञा नास्ति धात्वेकदेशत्वात्।

**इन्कारितं च धात्वर्थे ३।२।६**

धात्वर्थः क्रियेति तस्या एव धातावुच्चारिते प्रतीयमानत्वात्। स च धात्वर्थः क्वचित् कश्चिदवगन्तव्यः अर्थाभिधानस्य स्वाभाविकत्वात्। तथा च रूपं

---

१. णकारो न णकारे (शि० हि० वृ०)

२. उपेयिः कृदिति (भं०)

३. उपपूर्वः (भं०

पश्यति रूपयतीत्यत्र दर्शनं धात्वर्थः अर्थाभिधानस्य स्वाभाविकत्वात्। पाशा-न्मुञ्चति विपाशयतीत्यत्र विमोचनम्। एवं श्लोकैरुपस्तौत्युपश्लोकयतीत्यादा-वप्युपस्तवनादिः। तन्निवृत्तौ चेति भोजननिवृत्तिः। योगश्चायं प्रातिपदिकाद् धात्वर्थ इत्यस्यैव प्रपञ्चः इन्कारितग्रहणमुत्तरार्थं कर्तव्यमेव। अन्ये त्वाहुः— धात्वर्थे इनमुत्पाद्यानेन तस्य कारितसंज्ञा विधीयते, तथा चेन्नन्तस्य कारिता-न्तत्वात् दृषदमाख्यददृषमित्यादौ चरणादिकार्यं सिद्धं भवति।

**धातोश्च हेतौ ३।२।१०**

कारयते यस्स हेतुश्चेति शास्त्रीयस्य हेतोर्ग्रहणं न तु फलसाधनयोग्य-पदार्थो हेतुरिति लौकिकस्य कुतः कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्यय इति-वचनाद्धेतुसंज्ञाविधानसामर्थ्याच्च किं पुनः स्यात् यदि लौकिकस्य हेतोर्ग्रहणं स्यात्। अध्ययनेन वसतीत्यत्रापि प्रत्ययः स्यात्। ननु लौकिके हेतुग्रहणे सति हेतु सम्बन्धमात्रं यिन्-प्रत्ययेनाभिधातव्यम् तच्चाध्ययनशब्दादुत्पन्नाया हेतु-तृतीययैव द्योतितमिति कथं तत्रार्थे प्रत्ययः प्राप्नुयात्? असदेतत्, हेतुविशिष्ट-धात्वर्थवृत्तेर्हि धातोरयमिन्प्रत्यय आरभ्यमाणे हेतुतृतीयां वाधित्वा स्यात्। तस्यास्तर्हि कोऽवकाश इति चेत् यत्र द्रव्यगुणविषयहेतुतृतीया वा, धनेन कुलं, हिमेन शैत्यमिति क्रियाविषयहेतौ हेतुतृतीया बाधनेनेन्प्रत्यय एव स्यादिति हेतु नात्र लौकिको हेतुर्निगृह्यते, हेतावर्थेति व्यधिकरणे एते सप्तम्यौ धात्वर्थ इति चानुवर्तते, तेनायमर्थः हेतौ प्रयोजके धात्वर्थः। प्रेषणाध्येषणलक्षणः तत्रायं प्रत्यय इति। यदि पुनः समानाधिकरणे स्याताम्, ततो हेतु-कर्तरि विधीयमाने-नेन्प्रत्ययेनैव कर्तुरभिहितत्वात् तदन्तात् पुनः कर्तृप्रत्ययो न स्यात्। भृत्यादे-र्निकृष्टस्य क्वचिदर्थे प्रयोजनं प्रेषणम्, आराध्यस्यापि गुर्वादेस्सत्कारपूर्वकं व्या-पारणमध्येषणम्। एवं कारीषोऽध्यापयतीति। अथ कथमेतत् यावदत्राकुर्वन्तं यण् प्रयोजयन्ति स हेतुः। न चाचेतनस्य कारीषस्याध्यापनक्रियाविषयं प्रयो-जकत्व[1]मिति नह्यसावधीष्वेत्येवमधीयानः प्रयुङ्क्ते। एवं चाप्रयोजकत्वाद् अहेतुत्वात् कथमेतदुदाहर्तुं शक्यत इत्यनेनाभिप्रायेण प्रश्नयति–ननु इत्यादि। असदेतदित्यादिनोत्तरयति। अयमर्थः यः कर्तारं कारयति स हेतुः उच्यते। कारीषोऽपि निवाते[2] क्वचित् प्रदेशे प्रज्वलितः शीतजनितमुपद्रवमुपशमयन्नध्ये-तारं प्रजोयत्येवेत्यचेतनावतोऽपि चेतनावदुपचाराद्धेतुत्वमस्तीति युक्तं कारीषो-ऽध्यापयतीत्याद्युदाहर्तुम्।

---

१. अस्ति न च (भं०)
२. क्वापि (उभयप्रति)

चुरादेश्च ३।२।११

व्यञ्जनान्तस्य यत्सुभोरिति उरादेशोऽत्र प्राप्तो न भवति दाहार्थस्य चुरेण ग्रहणप्रसङ्गात् हेताविति निवृत्तमित्यत्र कारणमाह—पृथग्योगारम्भादिति। अन्यथा पूर्वेणैव सिद्धत्वादपार्थकोऽयं योगस्स्यात्। तेन स्वार्थ एव चुरादिभ्यः प्रत्ययो विज्ञायते स्थानिवद्भावादिति स्थानिवद् भावे हि [1]सत्युपादातुं विहितं भवतीति भावः।

इनि लिङ्गस्यानेकाक्षरस्यान्त्यस्वरादेर्लोपः ३।२।१२

न क्षरति न चलतीत्यादि। एतेनान्वर्थोऽक्षरशब्दोऽयं स्वरवृत्तिरिह गृह्यत इति दर्शयति, लिङ्गस्यावयवो योऽन्त्यस्वरादिरित्येतेनान्त्यस्वर औकारादिः यस्य लिङ्गस्येति दर्शयति। नेदमन्त्यस्वरादिग्रहणं लिङ्गस्य सामानाधिकरण्येन विशेषणमिति दर्शयति। एतच्चौकारादेरित्यकरणाल्लभ्यते, अनेकाक्षरग्रहणाच्च लिङ्गविशेषणे ह्यन्त्यस्वरादिग्रहणे सति औकारादेरेकाक्षरस्य लिङ्गस्याभावादनेकाक्षरग्रहणं व्यावृत्त्याभावादपार्थकं स्यात्। आद्यन्तवद्भावाद् भवतीति गौणमुख्यन्यायश्च क्वचिन्नाश्रीयते लक्ष्यानुरोधात्। तथा च द्वन्द्वश्चेति निर्देशः। त्वचं गृह्णाति त्वचयति। त्वच्शब्दोऽयमेकस्वरः योऽप्यकारान्तः तस्यापि लुप्तेऽन्त्यस्वर एतदेव रूपम्। वैचित्र्यार्थमिति। ननु श्वेतमाचष्टे श्वेतयति, अश्वतरमाचष्टे अश्वतरयति, गालोडितमाचष्टे गालोडयति, आह्वरकमाचष्टे आह्वरयतीत्यत्र अश्वतरेतकानामिनि परो लोपार्थमनेकाक्षरग्रहणं स्यात् कथं तद्वैचित्र्यार्थमिति? ब्रूमः—श्वेताश्वतरगालोडिताह्वरकाणामश्वतरेकलोपश्चेति गणकारवचनादेव श्वेतयतीत्यादयः सेत्स्यन्तीति नैतत् प्रयोजनमत्र घटते, परस्यान्तस्थादेरवयवस्येति ह्रस्वशब्दापेक्षयैतदुक्तं परस्य वकारादेः लोपो न तु पूर्वस्य रेफादेः इनि परे लोपो भवतीति। यद्येवं निमित्तान्तरे स्थविष्ठः स्थवीयानित्यादौ असौ न सिध्यति। तसादिप्रत्ययविधौ वाशब्दस्य बहुलार्थस्यानुवृत्तेः सेत्स्यति।

र-शब्द ऋतो लघोर्व्यञ्जनादेः ३।२।१३

अन्त्यस्वरादिलोप इति। ननु सिद्धोऽसौ पूर्वेण, न सिद्धयति यस्मिन्प्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति, इत्यनेन र-शब्देन तस्य बाध्यमानत्वाद्रेफः शब्देन व्यभिचरतीति किंशब्दग्रहणेनेत्याह—सस्वर इत्यादिरसवर्ण इत्यत्रास्वरो रेफो दृष्ट इतीहापि अस्वर एव स्यात्। सस्वरोऽपि यथा स्यादिति शब्दग्रहणम्। कृते हि तस्मिन् इत्ययं रेफाकारात्मकः शब्दः आदेशो भवतीति

---

1. सत्युपधात्वम् (?)

व्याख्या रेफस्य सस्वरता लभ्यते। पृथ्वादीनामेव र-शब्दः स्मर्यत इति तत्राहुः—

"पृथुं मृदुं भृशं चैव कृशं च दृढमेव च।
परिपूर्वं वृढं चैव [1]षडेतान् र-विधौ स्मरेत्॥" इति।

यद्येवम्, अपार्थकं लघुग्रहणम्, नापार्थकम्, प्रपञ्चेदं गुरुलाघवाचिन्त्यत्वात् प्रपञ्चार्थं चेदं बहुलमिष्ठवच्चेत्यतिदेशात् प्रथिष्ठादिवत् प्रथयतीत्यादीनामपि सिद्धत्वात्।

**धातोरेकस्वराद् य-शब्दश्चेक्रीयितं क्रियासमभिहारे ३।२।१४**

कृञोऽत्यर्थं करणमिति य-शब्दः ऋदन्त इतीकारागमः, रत्वम्, द्विर्वचनम्, अभ्यासकार्यम्, नपुंसके भावे क्तः, इट् अस्य च लोपः। एकः स्वरो यस्येत्यादि। एतेन यजिजपि[2]दन्शीवद् आचेक्रीयितान्तानामिति विशेषणादेकस्वरादिति बहुव्रीहिरयं न कर्मधारयः इति [3]सूचयन् दर्शयति--क्रियासमभिहारे वर्तमानादिति। एतेनान्तरङ्गत्वात् प्रकृत्यर्थविशेषणक्रियासमभिहार इति सूचयति। य-शब्दः प्रत्ययो भवतीति स्वार्थे अर्थान्तरस्यानिर्देशात्। स च चेक्रीयितसंज्ञेति वाक्यभेदेनानेन य-शब्दस्य चेक्रीयितसंज्ञां दर्शयति। विनापि च-शब्दं वाक्यभेदः सामर्थ्यादवगम्यते। एकवाक्यतया हि चेक्रीयितमिति दुर्योज्यं स्यात्। क्रियासमभिहारः पौनःपुन्यं भृशार्थत्वं वा, तदेव विग्रहद्वारेण प्रदर्शयितुमाह – पुनः पुनः यज इति, अत्यर्थं वेति। अथ यथा लुनीहि लुनीहीत्यादौ क्रियासमभिहारे द्विर्वचनं भवति, एवं च चेक्रीयितस्यापि यायज्यत इत्यादि। तत्कस्मान्न भवति क्रियासमभिहारवृत्तेर्धातोर्विधीयमानस्य चेक्रीयितस्य स्वयमेव तदभिव्यक्तौ समर्थत्वात्। मध्यमैकवचनं तु कर्मादिष्वर्थेषु विधीयमानं विना द्विर्वचनं क्रियासमभिहारं वक्तुं न समर्थमिति युक्तं तदन्तस्य द्विर्वचनम्। यायज्यत इत्यादि तर्हि न सिध्येत्, भृशार्थतायां यदा य-शब्दः तदा तत्र पौनःपुन्यविवक्षिते सति सेत्स्यति। धातोरिति किमिति भृशं प्रति सोपसर्गात् धातूपसर्गसमुदायात् क्रियासमभिहारवृत्तेर्न भवति। जागर्तीति। अन्विकरणः, अदादेर्लुक्, शुचिचिम्यां नेष्यत इत्यनभिधानात्। सूचिसूत्रिमूत्रीणामिन्नन्तानामनेकस्वरत्वादेषां सिद्धौ य-शब्दः। अस्त्येतत्। किन्तु पाचि-प्रभृतीनामप्येवं य-शब्दः स्यात्, तथा च पापच्यत इत्यनिष्टं भवेत्। न च निमित्ताभावपरिभाषया दीर्घत्वनिवृत्तिः

१. षडेव (वा०)
२. दन्शिवचां (भं०)
३. न्यूनपाठः (भं०)

शक्या विज्ञातुम्, पापच्यते इत्यादावपि तस्याः प्रसङ्गात्। तस्मादनामिड्विकरण इति पर्युदासाश्रयणात् प्रत्ययनिमित्तः कारितलोपः कथं प्रत्ययानपेक्षः स्यादिति सूच्यादीनामिति उन्नन्तानामनेकस्वरत्वाद् य-शब्दो न सिध्यति। शेषाणां च स्वरादित्वादिति न प्राप्नोतीत्यपेक्षते। नन्वर्तेः कथमप्राप्तो यावता धातोरेकस्वरादित्वादिति पदद्वयमध्ये ऋ-इत्ययमर्तिः लुप्तपञ्चमीकः कृतरत्व उपात्तस्य सूत्र एव प्रमाणकमेतदिति चेत्, व्याख्यानमेवात्र प्रमाणम्। एवं तर्हि मधुरमतिभिर्दुर्ज्ञानमेतत्। अत्राशिग्रहणेन प्राथम्यादशेः व्याप्त्यर्थस्य ग्रहणम्। निरनुबन्धकपरिभाषया भोजनार्थस्यापीत्यपरे। प्रोर्णुनूयत इति लाक्षणिकमूर्णोतेर्णत्वं न त्वौपदेशिकमिति कृते नु इत्यस्य द्विर्वचन-रेफ-सन्निधानापगमाण्णत्वे निवृत्ते नु शब्दोऽवतिष्ठते। कौटिल्य एवेति न क्रियासमभिहारे। यद्येवं जङ्गम इति न सिध्यति। नह्यत्र कौटिल्यं प्रतीयते, किं तर्हि, स्थावरः विपरीतोऽर्थः। एवं तर्हि यथा तैलपायिकादौ तैलपानामसदेव व्युत्पत्तिनिमित्ततया समाश्रीयते तद्वदत्र कौटिल्यमाश्रयिष्यते। भावगर्हायामेवेति न क्रियासमभिहारे, गर्हितं लुम्पतीति क्रियाविशेषणमेतत्। [1]निजेगिल्यत इत्यत्र नित्यत्वाल्लत्वम्, ततो नामिन र्वोरिति दीर्घो न भवति। ननु समभिहार इति क्रियतां तस्य च प्रकृतिविशेषणत्वादर्थात्क्रियाविषयतया लभ्यत इति किं क्रियाग्रहणेन? उच्यते—क्रियामात्रसमभिहारे यथा स्यादिति क्रियाग्रहणं कृतम्। अन्यथा प्रधाने कार्यसम्प्रत्ययात्प्रधानक्रिया पाकादिक्रिया विषय एव समभिहारे स्यात्। यत्र तु पाकादिक्रियोपकारकत्वादप्रधानभूतानामधिश्रयणादिक्रियाणां समभिहारस्तत्र न स्यात् क्रियाग्रहणेन क्रियामात्रपरिग्रहे सति सर्वत्र सिद्धं भवति।

**गुपूधूपविच्छिपणिपनेरायः ३।२।१५**

कृते समभिहारद्वन्द्वे नामिनस्स्वर इति स्वरागमस्याभावे नित्यमागमशासनमिति वचनात् एभ्य आय प्रत्ययो भवतीति अनिर्दिष्टार्थत्वात् स्वार्थे हि पणेरायप्रत्ययो विधीयते। स ततः स्तुत्यर्थादिव्यवहारादपि प्राप्नोति अविशेषादिति यो मन्यते तं प्रत्याह—स्तुत्यर्थेनेत्यादि। शतस्य पणत इति व्यवहारार्थोऽत्र पणिः शतं क्रयविक्रये नियुक्त इत्यर्थः। कर्मरूपत्वमविवक्षितत्वम् सम्बन्धसामान्यविवक्षायां षष्ठी। स्तुतिव्यवहारानन्तरं पणिः पठ्यमानः स्तुतिलक्षणमेवार्थमभिधत्ते न व्यवहारलक्षणमिति कुतोऽस्त्ययं विशेष इति पृच्छति अथेत्यादि। उच्यते इत्यादिनोत्तरयति। स्तुतिव्यवहारयोरिति निर्देशे कर्तव्ये यत् स्तुतौ चेति पृथग्निर्देशं करोति ततो ज्ञायते पणेरनन्तरं स्तुतिरेवार्थो न व्यवहारोऽर्थ इति। अथ पणत इत्यत्र पणेः कथमात्मनेपदम्? रुचादित्वात्।

---

१. निजेगल्यत (वा०)

रुचिना ह्ययं सदृशः अकारेणानुदात्तेनानुबन्धेनोपलक्षितत्वात्। यद्येवं, तेन पणायशब्दोऽपि कथं नोपलक्ष्यते, इत्थं च ततोऽप्यात्मनेपदं प्राप्नोति। ततश्च पणायतीति परस्मैपदं न सिध्यतीति मन्यमानः पूर्वपक्षयति। नन्वित्यादि। अनुदात्तेनेति नीचभागनिष्पन्नः स्वरोऽनुदात्त उच्यते। अकारेण पणाय शब्दोऽप्युपलक्ष्यत इत्यत्र हेतुमाह—अवयवे हीत्यादि। पणेरवयवे णकाराकारे यत्कृतं लिङ्गमात्मनेपदस्य चिह्नमुदात्तत्वं नाम तत्, यस्मात् समुदायस्य पण-शब्दस्यैव पणाय-शब्दस्यापि विशेषकं भवति तस्मात् पणेरिव पणायशब्दादात्मनेपदं प्राप्नोति। एतदेव दृष्टान्तेन दृढयितुमाह—तद् यथेत्यादि। समुदायस्येति सास्नाद्यवयवारब्धस्य। असदेतदित्यादिना समाधत्ते। अयमर्थः, नानेनाकारेण चिह्नेन पणाय इत्ययं समुदायश्शक्यः विशेषयितुम्। अवयवे हि कृतं चिह्नमव्यभिचारिणमेव पण इतीमं समुदायं विशिनष्टि। पणाय इतीमं समुदायं कथं विशिष्यात्, शतस्य पणत इत्यादावेवं रूपस्य समुदायस्य अव्यभिचारित्वात्। दृष्टान्तमपि प्रतिदृष्टान्तेनाराकर्तुमाह—तथा चेत्यादि। तस्माद्व्यभिचारिसमुदायाविशेषो ककारो न पणाय-शब्दं व्यभिचारेण व्यभिचारिणमुपलक्षयितुमलमिति न भवति ततः आत्मनेपदप्रसङ्गः। ऋतिस्सौत्र इति ऋतेरीयङित्यत्र पूर्वाचार्यः। सूत्रे भवस्सौत्रः स च स्वभावतो घृणायां वर्तते, कारितसंज्ञश्चेति। तेनाचीकमतेत्यादौ कारितान्तत्वात् यण् भवति। ह्रस्वः प्राप्त इति जनी-जृष-[1]क्रमुरञ्जोऽमन्ताच्च इति कमेरमन्तत्वात् मानुबन्धत्वात्। असार्वधातुके वा वक्तव्येति। विषय-सप्तम्येषा, न पर-सप्तमी। पर-सप्तम्यां हि स्त्रीविविक्षायां क्ति-प्रत्यये परे आय-प्रत्यये संजाते अस्य च लोप इत्यकारे लुप्ते य्वोर्व्यञ्जन इति य-लोपे च गोपातिरित्यनिष्टं भवेत्। विषय-सप्तम्यां त्वनुत्पन्न एव सार्वधातुके पूर्वमाय-प्रत्ययः ततः स्त्रीविवक्षायां क्तिप्रत्ययं बाधित्वा शन्सुप्रत्ययाद् इत्यप्रत्यये कृते गोपायतीति इष्टं सिध्यति। अतस्सार्वधातुक इति विषय-सप्तमीयम्।

**ते धातव ३।२।१६**

त इत्यनेन सन्नादयः प्रत्ययाः परामृश्यन्ते, ते च केवला न सम्भवन्तीत्यर्थः। आदन्ताः समुदायाः संज्ञित्वेन विज्ञास्यन्त इत्याह—तेन सन्नादिप्रत्ययान्ताः समुदाया इति धातुसंज्ञाः भवन्तीति धातुशब्दोऽयं स्वरूपप्रधानो नत्वस्य त्वादयो वाच्याः। अन्यथा सन्नाद्यन्तानां भूवादयः संज्ञाः स्युः। तच्चायुक्तम्। बह्वीनां संज्ञानां सन्नाद्यन्तविषयत्वेन प्रयोजनाभावात्। ननु सन्नाद्यन्तानां क्रियावाचित्वात् धातुसंज्ञा सिद्धा। न सिध्यति, धातुपाठ-

१. क्नुसुरञ्जोऽमन्ताच्च (वा०)

पठितानामेव क्रियावाचिनां धातुसंज्ञाप्रवृत्तेः। सन्नाद्यन्तानां च पाठाभावात्। क्रियाभावो धातुरित्यतोऽनन्तरं सन्नादिरिति न कृतं सन्नादीनामियत्ता परिच्छेदापरिज्ञानात्। एवं तर्हि क्रियाभावश्चेति क्रियताम्, नैवं शक्यम्, एवं हि क्रियमाणे सति सन्नादिप्रकृतीनामेव गुणादीनां सन्निहितत्वात् संज्ञा स्यात्।

**चकास्कासप्रत्ययान्तेभ्यः आम् परोक्षायाम् ३।२।१७**

चकासश्च कासश्च, अनव्ययविसृष्ट इति सत्वम् आभ्यां धातुभ्यामिति। ननु चकासिनैव कासोऽपि ग्रहणं सिद्धमिति किं धातुद्वयोपादानेन, नैतत्, चकास्तौ कासोऽनर्थकत्वात्, प्रत्ययान्तेभ्यश्चेति सन्नादिप्रत्ययान्तानामेव बुद्धिपरिस्फुरणात् प्रत्ययान्तग्रहणेन सन्नादिप्रत्ययान्ताः [1]गृह्यन्ते, अन्यप्रत्ययान्तेभ्यः परोक्षायामसम्भवाच्च परोक्षायाः व्यवहितत्वादिति द्विवर्चनात्पूर्वमामो नित्यत्वात्प्रवृत्तिरिति भावः ननु प्रकृतिकार्यत्वादन्तरङ्गं द्विर्वचनमिति तदेव पूर्वं स्यात्, नैतत्, अन्तरङ्गादपि द्विर्वचनविधेश्चकास्यादीन्प्रातिपद्येनोच्चार्य विधीयमानस्यामोर्बलीयस्त्वात्, तदुक्तम् तथा विधिः प्रातिपदो बलीयानित्यन्तग्रहणमन्यतोऽप्यामः प्रवृत्यर्थम्, [2]चकास्यांचकार, चुलुम्पाञ्चकारेत्यादि सिध्यति। नन्वेतच्चकास्तेरनेकस्वरोपलक्षणत्वात् सेत्स्यति, नैतत्, प्रत्ययोऽवध्यर्थमुपात्तस्य, तस्योपलक्षणत्वायोगात्, प्रत्ययान्तानां चानेकस्वरत्वात् प्रत्ययान्तग्रहणमनर्थकं स्यात्। न च कमु इत्यादय आचारवि-प्रत्ययान्ताः एकस्वराः केवलमेव प्रत्ययान्तग्रहणं प्रयोजयन्ति, लुप्त-वि-प्रत्ययानां शब्दानां प्रत्ययान्तग्रहणेनाभिधातुमशक्यत्वात्। तस्मात् प्रत्ययान्तग्रहणाच्च, न चकास्तेरनेकस्वरत्वोपलक्षणत्वं प्रसज्यते।

**नाम्यादेर्गुरुमतोऽनृच्छः [3]३।२।१८**

इह कस्मादित्यादि। इयेषेत्यत्र गुणे कृते य एकारस्तेन गुरुणा इषेर्गुरुमत्वादाम् प्राप्नोतीति मन्यते। प्रत्ययो सम्बन्धिना हीत्यादि। सन्निपातपरिभाषामियेषेत्यत्रोदाहरणे योजयति। गुणं प्रति प्रत्ययनैरन्तर्यं क्वोपयुज्यत इति चेत्, उपयुज्यत एव, प्रत्ययापेक्षत्वात् गुणस्य। तथा च तन्निषेधविधौ निमित्तमुपादत्ते। ननु गुरुमानिति नित्ययोगे मन्तुर्विज्ञास्यते, कुत इति चेत्, तन्निर्देशादेव। अन्यथा गुरोरिति कुर्यात्। एवमपि कृते सति गुरुमत्ता लभ्यत एव, यथा च गुरोश्च निष्ठायां सेट् इत्यत्र, एवं च नित्ययोगे, मन्तोर्विज्ञाना-

---

१. अवधार्यन्ते (बा० + भं०)
२. चकारस्याञ्चकार (वा०)
३. ३।२।१९ (दु० वृ०)

दिर्षेर्नित्यं गुरुणा योगो नास्तीति कथं ततः प्रत्ययप्राप्तिराशङ्क्यते नायं नित्ययोगो मन्तुः, किं तर्हि गुरुमत्ता सम्बन्धमात्रे। कुतः उच्छाञ्चकारेति। उच्छी विवासे इत्यस्यामो प्रवृत्तिप्रसङ्गात्। ऋच्छि-निषेधश्चापार्थकस्स्यात्। ऋच्छेर्नित्य गुरुणा अयोगात् किमर्थस्तर्हि मन्तुर्निर्देश इति चेत्, विस्पष्टार्थः। गुरोरिति हि कृते नाम्यादेर्गुरोरिति सामानाधिकरण्यनिर्देशान्यथानुपपत्त्या गुरुमत इति विज्ञायमाने सत्यवैस्पष्ट्यं स्यात्। तस्मादृच्छेराम् सन्निपातपरिभाषयैव निषिध्यते, अनृच्छ इति किमिति, परोक्षायामनन्तरायां ऋच्छ ऋत इति गुणविधानात् ज्ञापकात् ऋच्छेराम् न भविष्यतीति मन्यमानस्य प्रश्नः। वचनसामर्थ्यादामो व्यवधानेऽपि ऋच्छेर्गुणोऽस्त्विति मन्वानः प्रत्युदाहरति—आनर्च्छ इत्यादि।

**भासिदय्यविदरिद्राभ्यश्च**[1] ३।२।१६

उषविदजागृभ्यो वेत्यतो वेति सम्बध्यत इति सिंहावलोकितन्यायेन। सा च व्यवस्थितविभाषेति। तेन दरिद्रातेरेव विकल्पो नास्यादीनाम् इति भावः। ददरिद्राविति। आद्यस्यैकस्वरस्य च द्विः इत्याद्यस्य द्विर्वचनम्।

**उषविदजागृभ्यो वा** ३।२।२०

चानुवृत्तेः पञ्चम्यां विदेर्विकल्पः। विदांकरोतु, विदांकरवाणि। पक्षे तु वेत्तु वेदानि। एवं पञ्चम्यां विदेः प्रयोगान्तराणि मन्तव्यानि।

**भीह्रीभृहुवां सार्वधातुवच्च** ३।२।२१

आमिनोरभावो नित्यमागमशासनमिति वचनात्। उवादेशो निर्देशसामर्थ्यात्। सर्वे च ते धातवः, ततो भवेऽर्थे चरतीत्यर्थे शब्दात् कण्, सार्वधातुकमिव सार्वधातुकवद् इति प्रथमान्ताद्वतिरुपमेयस्यामः प्रथमान्तत्वात्। सार्वधातुके परे यदुक्तमित्यादि। यद्येवमात्मनेपदे सार्वधातुकगुणनिषेध उक्तः सोऽपि प्राप्नोति, न भवति सामान्यातिदेशे विशेषस्यानतिदेशात्। तेन सार्वधातुकसामान्ये उक्ते द्वित्वेऽतिदिश्यते। न तु सार्वधातुकविशेष उक्तो गुणनिषेधोऽपि स्त्रियां क्तिरित्यस्याप्याशङ्का स्यादिति वदिति नोक्तम्।

**आमः कृञनुप्रयुज्यते** ३।२।२२

अनुप्रयुज्यत इति त्रीणि पदानि, डुकृञ् धातुरनुप्रयुज्यमानः आमन्तश्शब्दोऽनुप्रयोगभाक्। कृञ्-धातुरनुप्रयुज्यत इति। अथेह कृञो धातुत्वं कथं ज्ञायत

१. दुर्गवृत्तौ सूत्रमिदं नोल्लिखितम्।

इत्याह—नानुबन्धकरणमित्यादिना चोभयपदार्थञ्चानुबन्धकरणं परोक्षाया विहितायां सत्यां कृञ्यनुप्रयुङ्क्ते सत्युभयपदस्य विधातुमशक्यत्वात्। धातुत्वप्रतिपत्तौ च द्विर्वचनादिकार्यं सिध्यति। नन्वनभिव्यक्तार्थेऽस्मिन्नामन्ते शब्देर्थाभिव्यक्त्यर्थमनुप्रयोगोऽवश्यं कर्त्तव्यः, स तु समानार्थस्य धातोर्न भविष्यति। उष दाहेति। कुतः, उक्तार्थत्वात्। नापि भिन्नार्थस्योषो पपाचेति भिन्नार्थेनामन्तवाच्यस्यार्थस्यानभिव्यक्तिरिति सामान्यवाचिन एव कृभ्वस्तयोऽनुप्रयोक्ष्यन्ते तत् किम् अनेनोत्तरेण च योगेन प्रयुक्तशब्दान्वाख्यायकत्वाच्च शास्त्रस्य परस्मैपदपरावेव कृभ्वस्त्यनुप्रयोक्ष्येते। अत्रोच्यते—विद्यतेरपि सामान्यवाचिनोऽनुप्रयोगः स्यादिति तन्निवृत्तये योगद्वयमिदमारभ्यते। विपर्ययनिवृत्त्यर्थं च चक्रे ईहामिति प्रयोगो मा भूत्, व्यवहितनिवृत्त्यर्थमपि, कारयां देवदत्तश्चकारेति मा भूत्। एतच्चानोः पश्चादर्थवृत्तित्वाल्लभ्यते। आमः कृञनु इत्येतावति कृतेऽप्यामन्तस्य कृञः पश्चात् प्रयुज्यमानतायां भवति शब्दाध्याहारादेवावगतायां यत् प्रयुज्यते ग्रहणं क्रियते तत् कारयामित्यादेः परोक्षाविभक्त्यन्तस्य पदस्य मध्यपातिनोऽपि कृञः परोक्षया सह शिष्टाप्रयोगप्रतिपत्त्यर्थम्। तेनामन्तादपि शब्दात्पराश्रीयमाणा परोक्षा विभक्तिः कृञापह्रियत इति चकारेत्यस्य पृथक्पदता सिद्धा भवति, आमन्तात्तु सेरव्ययाच्चेति लुक्क्रियते। आमन्तस्याव्ययत्वस्मरणात्। तदुक्तम्, "भट्टमखभूतिपादैः" आमन्तादर्थवत्त्वेन तु विभक्तिरुपजायते, श्रवणं विद्यते वास्या अव्ययलुग्विधानतः इति। एवं च कृत्वा कारयांचकारेत्यादौ आमो मकारस्य पदान्तवृत्तः वैकल्पिकः पवर्गपञ्चमः सिद्धो भवति।

**अस्भुवौ च ३।२।२३**

अस् च भू च अस्भुवौ। अनव्ययविसृष्ट इति सत्वम्। परस्मैपदमिति प्रथमैकवचनान्तम्। आत्मनेपदस्य च स्थाने परस्मैपदमादेश इति। एतेन परस्मै इति वाक्यान्तरमिदमात्मनेपदस्य परस्मैपदादेशविधायकं, नत्वयं परस्मैपदस्य निमित्तभाव इति दर्शयति। निमित्तभावे हि सति परस्मैपदिनामेव च चकासिप्रभृतीनामात्मनेपदिनामामन्तानामस्भुवावनुप्रयुज्येयाताम्। न त्वीक्षिप्रभृतीनामात्मनेपदिनामिति। कथं पुनः परस्मैपदमित्येतावित्युक्ते परस्मैपदमात्मनेपदस्य स्थाने भवतीत्येषोऽर्थो लभ्यते? उच्यते—परस्मैपदं च भवतीति। प्रथमान्तात् परस्मैपदग्रहणात् अस्भुवोरनुप्रयुक्तयोरसतो परस्मैपदस्य सत्ता विज्ञायते। तत्र ये तावत् परस्मैपदिनस्तेषामर्थलभ्यैव परस्मैपदसत्ता। ये त्वात्मनेपदिनस्तेषां परस्मैपदं भवतीति यावदुच्यते तावदवश्यमात्मनेपदमपमृद्य परस्मैपदेन भवितव्यम्। एवं चार्थादायात आत्मनेपदपरस्मैपदयोस्स्थान्यादेश-

भाव इति परस्मैपदमात्मनेपदस्यादेशो भवतीति ज्ञायते। यद्येवामात्मनेपदस्ये-त्येतत् स्थानित्वेन सूत्रे कस्मान्न निर्दिश्यत इत्याह—आत्मनेपदस्येत्येतत्विस्या-द्यवगतार्थत्वादप्रयुज्यमानतैव लोप इत्यर्थः। अतएवाह—व्याख्यानाच्चैतल्ल-भ्यत इति परस्मैपदश्रुतिमेवात्र व्याख्यानम्। यथा चैतत् तथोक्तमेव। ननु परस्मै चेति च शब्दो वाक्यभेदद्योतनफलो न निर्दिश्यते, तत् कथं परस्मै इति वाक्यान्तरमिदं स्यादित्याह—च-शब्द इत्यादि। असभुव्यामनन्तर श्रूय-माणोऽपि च-शब्दः पाठक्रमादर्थक्रमो बलीयानिति कृत्वा परस्मैपदशब्दानन्तरं बोद्धव्यः। तेन परस्मैपदं चादिश्यत इति वाक्यभेदो लभ्यते। यद्येवं परस्मैपदा-देशेन सह विधीयमानावस्भुवौ यत्र परस्मैपदिधातुविषये आत्मनेपदासम्भवात् परस्मैपदादेशो नास्ति। तत्र न स्यातामित्याह—स चान्वाचय इति। तेनेत्या-दिना च-शब्दस्यान्वाचयविषये यत्फलं सम्पद्यते तद् दर्शयति। अथ भावकर्मा-द्यर्थानपेक्षितया सामान्येन विधीयमानः परस्मैपदादेशः ईक्षामासे कन्या च्छात्रेणेत्यादावपि कस्मान्न भवतीत्याह—उषविदेत्यादि। अथ परस्मैपदेन कर्तृविहितेनान्तरतम्यात् कर्तृविहितमेवात्मनेपदं स्थानित्वेन गृह्यते तेन भाव-कर्मणोरात्मनेपदस्य न भवति।

**सिजद्यतन्याम् ३।२।२४**

सिच्प्रत्ययो भवत्यद्यतन्यां परत इति षिच् क्षरणे इत्ययमद्यतन्यां प्रयोक्त-व्य इत्ययं त्वत्रार्थो न भवति, इटश्चेटीत्यारम्भात्। इकारचकारावित्यादि। सकारमात्र इह प्रत्यय उपादीयमाने सिचि परस्मै इत्यत्र सिचि परस्मायिति निर्देशस्स्यात् ततश्चकारादौ परस्मैपदे स्वरान्तानां वृद्धिरिति व्याख्यायां चेष्यतीत्यादावपि वृद्धिः स्यादिति भावः।

**सणनिटश्शिडन्तान्नाम्युपधाददृशः ३।२।२५**

शिडन्तादित्यत्रान्तर्वर्तिनीं विभक्तिं प्रत्ययलक्षणेनाश्रित्य पदान्तत्वात् तृतीय.। अभैत्सीदिति व्यञ्जनान्तानामनिटामिति वृद्धिः। गुहेरिडभावपक्षे सण् वक्तव्य इति शिडिति कर्तव्येऽन्तग्रहणादिति शेषः। कथं पुनः गुहेस्स न प्राप्नोतीत्याह—अस्य हीत्यादि। वेट्त्वमस्तीति स्वरतिसूति इत्यादिना। ननु पाक्षिकेनेडभावेनास्त्यस्यानिड्व्यपदेशः। अस्तु, किन्तु पाक्षिक्यामीट्-प्रवृत्त्यां सेड्व्यपदेशोऽप्यस्य स्यात्। ततश्च सेटां क्तस्यादीनामेव गुहेरपि सेट्त्वात् सण् भवेत्। तस्मादशक्यं पाक्षिकेनेड्भावेन गुहेरनिट इति विशेषण-मुपादातुम्। श्लिषेरित्यादि। आलिङ्गनं प्रीतिपूर्वकः परिष्वङ्गः। तत्रार्थे यः श्लिषिः तस्मात् सण् वक्तव्यः। पुषादित्वादण् प्राप्त इति तेन सिद्धोऽपि श्लिषिः सण्विधीयत इति भावः यद्येवं समाश्लेषि कन्या देवदत्तेनेति सणा

बाधितत्वादिच्प्रत्ययोऽपि न स्यात्। उच्यते—पुरस्तादपवादा अनन्तरान्विधीन् बाधन्ते न परानिति सण एवानन्तरस्य बाधो नत्विच्प्रत्ययस्यापि। समाश्लिषज्जतु च काष्ठं चेति प्रत्यासत्तिमात्रमत्र विवक्षितं नत्वालिङ्गनम्। वक्तव्यादिति ऋकारोपधस्य धातोरकारागमो वा वक्तव्य इत्यस्मात् अद्यतन्यामात्मनेपदम्। दन्त्यादाविति। दन्ते भवो दन्त्यः तवर्ग उच्यते, लृतुलसाः दन्त्या इति वचनात्। स आदिर्यस्याद्यतान्यामात्मनेपदस्य तत्तथैवोक्तम्। नन्वदृश इति पर्युदासादनिट इत्यादि विशेषणत्रयं लब्धमिति किं तदुपादानेन, सत्यम्। किन्तु केन रूपेण दृशिना धातोः सदृशमिति विशेषो न विज्ञायते तथा च अदादित्वेन शान्तत्वेन च सादृश्यसम्भावनायां दहिदन्शयादिभ्योऽपि सण् प्रसज्येत।

**श्रिद्रुस्रुकमिकारितान्तेभ्यश्चण् कर्तरि ३।२।२६**

ततो द्वन्द्व इति न तु कर्मधारयः। कर्मधारये हि सति श्रिद्रुस्रुकमिभ्यो ये हि कारितान्ताः इत्ययमर्थः स्यात्। तथा च सत्यसन्देहार्थं श्रिद्रुस्रुकमीनामेव कारितान्तनिर्देशात् सन्वद्भावविधावलोपे समानस्य चेति न कुर्यात्। चण् पर इनि परतः श्रिद्रुस्रुकमीनां समानलोपासम्भवात्। तस्मात्तेषां कारितान्तशब्देन सह द्वन्द्व एव। अचकमतेति। कमेरनिट्, नान्यत् सार्वधातुके विषये तस्य विकल्पितत्वात्। अचीकमदित्याद्यपि। अत्र कमिप्रभृतीनामिन्नन्तानां चणि विहिते कारितलोपे च सति उपधाह्रस्वः क्रियताम्, द्विर्वचनं नेति समुधारणायां उभयोऽपि कृताकृतप्रसङ्गित्वान्नित्यो परत्वादुपधाह्रस्वः, ततो द्विर्वचनम्। यदि पुनः पूर्वं द्विर्वचने सत्युपधाह्रस्वः स्यात् ततोऽनादिष्टात्स्वरात् पूर्वोऽभ्यासस्स्यात्। ततश्च तस्य सन्वद्भावलक्षणे कार्ये कर्तव्ये योऽनादिष्टात्स्वरात् पूर्वः तस्य विधिं प्रति स्थानिवदिति वचनादुपधाह्रस्वत्वस्य स्थानिवद्भावो भवेत्। ततश्च लघ्न्यक्षर उच्यमानाभ्यासस्य सन्वद्भावो न स्यात्। न च वचनाद् भविष्यतीति वक्तुं शक्यम्, अशीशमदित्यादौ वन्निमित्ते सानुबन्धह्रस्वत्वे कृते यत्रादिष्टात्स्वरात्पूर्वोऽभ्यासस्तत्र वचनस्य सावकाशत्वात्। यदा तु पूर्वमुपधाह्रस्वत्वे कृते पश्चात् द्विर्वचनं क्रियते तदा नास्ति स्थानिवद्भावः। आदिष्टात् कृतादेशात् स्वरादभ्यासस्य पूर्वत्वात्। तस्मात् स्थानिवद्भावं निवर्तयितुमुपधाह्रस्वत्वे सति द्विर्वचनम्। एवं लघुनिमित्तकः सन्वद्भावस्सिद्धो भवति। ननु नित्ययोर्द्विर्वचनोपधाह्रस्वयोः परत्वादुपधाह्रस्वत्वमिति युक्तं वर्णयितुम्। यत्र पुनरनित्यमुपधाह्रस्वत्वं नित्यं द्विर्वचनं मा भवानटिटदित्यादौ तत्र नित्यत्वाद् द्विर्वचनं सत्युपधाह्रस्वो न सिध्यति। अत्रोच्यते—नित्यमप्यत्र द्विर्वचनमुपधाह्रस्वत्वेन बाध्यते। [1]ओणृ

1. वोणृ ऋदनुबन्ध (वा०)

ऋदनुबन्धकरणाज्ज्ञापकात् तद्धितस्य न शास्वृदनुबन्धानामित्यत्र ह्रस्वनिषेधार्थं क्रियते। यदि च नित्यत्वात् पूर्वं द्विर्वचनं स्यात् ततः औणिणदित्यत्रानुपधत्वादेवोपधाह्रस्वो न भविष्यतीति किं तन्निषेधार्थेन तदनुबन्धकरणेन, कृतं च ततो ज्ञायते नित्यमपि द्विर्वचनमुपधाह्रस्वत्वेन बाध्यते, तेन मा भवानटिटदित्यादौ पूर्वमुपधाह्रस्वः ततो द्विर्वचनम्। द्विवेटो वा चण् वक्तव्य इन्यन्तग्रहणं यथा दर्शनं धात्वन्तरोपसङ्ग्रहार्थत्वात्।

**अण् सुवचिख्यातिलिपिसिचिह्वः ३।२।२७**

समाहारे द्वन्द्व इति। यद्येवं तस्य द्वन्द्वैकत्वमिति नपुंसकात् स्वरो ह्रस्व इति ह्वाशब्दस्य ह्रस्वः प्राप्नोतीत्याह—स्वरो ह्रस्व इति निर्देशसामर्थ्यात्। अन्यथा ह्वादिति निर्देशः स्यादिति भावः। अण् भवतीति न पुनरणो धातौ ग्रहणे सति एभ्यश्चण् भवतीत्ययमर्थः योगविभागकरणादणि वचेरित्यादिव्यवहाराच्च पुनरिहोपादानमात्मनेपदार्थमिति पुषादिसूत्रेण परस्मैपदेऽणप्रत्ययो विधीयमानोऽस्यतेरात्मनेपदेन सिध्यते। तत्राप्यसौ प्राप्नुयादित्यस्यतेरिहोपादानम्। ननु परस्मैपदिनोऽस्य कथमात्मनेपदार्थं युज्यत इत्याशङ्क्याह—अस्यतेर्हीत्यादि। तथा चात्मनेपदविधावाहुः। उपसर्गादस्यत्यूह्योर्वा वचनमिति धातुनिर्देश इकारेण निर्देशं परिहृत्य किमर्थमसु इति अनुबन्धकरणमित्याह—असु इति अनुबन्धकरणादित्यादि ([1]नन्वस्भुवीत्यस्यास्तेर्भूरसार्वधातुक इत्यद्यतन्यां त्वादेशेन भवितव्यम्, तत्थमस्मादवाप्तत्वा)देशादणः प्राप्तिराशङ्क्यत इत्याह—यद्यपीत्यादि। ख्यातीति शितपानिर्देशः यथाश्रुतख्यारूपप्रतिपत्त्यर्थः तेनेह न भवति। अचख्यासीत् अत्यर्थमाख्यत् यः शब्दः वा चेक्रीयितस्य लुक्। अभ्यासकार्यम्। दि, सिच्, वमिरमीत्यादिना इट् सिडन्तश्च सिच् इतीट् इटश्चेटीति सिज्लोपः।

**पुषादिद्युताद्य्लृकारानुबन्धार्तिसर्तिशास्तिभ्यश्च परस्मै ३।२।२८**

पुषादिशब्दे व्यञ्जनान्तस्य यत्सुभोरिति डत्वं न भवति स्वरूपभङ्गप्रसङ्गात्। द्वयोर्ग्रहणमित्यविशेषात्। अतएव निर्देशादित्ययमर्थः। अर्तीतिविकरणशून्यो निर्देशः ऋमात्रपरिग्रहार्थः क्रियते। सति हि विकरणे ऋच्छतीति निर्देशस्स्यात्, ततश्च ऋगतिप्रापणयोरिति भौवादिकस्यैव ग्रहणं भवेत्, अथापि विकरणस्य लुक्क्रियते। एवमपि इयर्तिनिर्देशेन ऋसृ गताविति जौहोत्यादिक एव गृह्येत, विकरणाभावे तु ऋमात्रोपादानात् द्वयोरपि ग्रहणं सिध्यति इति तदर्थं विकरणो न कृतः। एवं सर्तीत्यत्र बोद्धव्यम्। ऋसृ-ग्रहणमेव तु न कृतं

---

१. कोष्ठांकितोंशः न्यूनपाठः (वा०)

वैचित्र्यात् । सिच् सणोर्बाध इति ये अनिट शिडन्ताः प्रथिप्रभृतयः तेभ्यः प्राप्तस्य सणो बाधः । अन्येभ्यस्तु सिच पुषादयो दैवादिकाः गृह्यन्ते इति ये पुष पुष्टौ, शुष शोषणे इत्येवं पठ्यन्ते न भौवादिका इति । ये पुष पुष्टौ श्रिष् श्लिषु प्लुष् दाहे इत्येवं पठ्यन्ते कुतो हेतोरित्याह—पृथक् पुषादिद्युतादिग्रहणादिति । यदि हि भौवादीनां पुषादीनां ग्रहणं स्यात् ततः पुषादित्वादेव द्युतादिभ्योऽप्यणःसिद्धत्वात् पृथक् द्युतादिग्रहणमनर्थकं स्यात् । हसे हसन इत्येतदनुबन्धकरणाच्च न भौवादिकाः पुषादयः गृह्यन्ते । तेषां हि ग्रहणे सति हसेरिदनुबन्धोऽपार्थकस्स्यात् । स हि तस्य सिचि दीर्घनिषेधार्थः क्रियते । यदि च भौवादिकानां पुषादीनां ग्रहणं स्यात् ततो हसेस्तन्मध्यपातिनोऽण्प्रवृत्त्या सिचो बाधनात् । तत्र परतो दीर्घनिषेधो विफलस्स्यात् प्राप्त्यभावात् । तस्मात् ततः एतदनुबन्धकरणान्न भौवादिकाः गृह्यन्ते पुषादयः, किन्तर्हि, दैवादिका एव । ते च गृधिपर्यन्ताः गृधेरनन्तरं हि समाप्तिचिह्नं वृदिति पठ्यते । अत्र ष्णिह् प्रीतावित्येतदन्तास्ते कस्मान्न गृह्यन्ते, नैतत्, अस्य वृत्करणस्य रथादिपरिसमाप्त्यर्थत्वात् । [1]अथ तत्पुरुषादिपरिसमाप्त्यर्थं गृह्यन्ताः रधादय इति कस्मान्न विज्ञायते ? नैवं शक्यम् । एवं तर्हि विज्ञायमाने सति शमादीनामिड्विकल्पार्थमुदनुबन्धकरणमपार्थकं स्यात्, रधादित्वादेव तेषामिट्विकल्पस्य सिद्धत्वात् । तस्मात्ष्णिहपर्यन्ता रधादयो [2]इह गृह्यन्ते । पुषादयः क्र्यादिपठिताः त्विह तेन गृह्यन्ते । तेषामेवासन्देहार्थं [3]विकरणस्यानुपादानात् सामान्येनापि न गृह्यन्ते, प्राथम्याद् दैवादिकानामेव परिग्रहात् । द्युतादयो कृपिपर्यन्ताः कृपेरनन्तरं वृत्करणात् । द्युतादिभ्यश्चात्मनेपदिभ्योऽपीत्यादि द्युतादय आत्मनेपदिनः, रुचादित्वात् । तथात्वेऽपि तेभ्योऽद्यतन्यः परस्मैपदमेव स्मर्यते । गणकृतमनित्यमित्यात्मनेपदस्यानित्यत्वात् । तृपिदृपिभ्यामण् वक्तव्य इति पुषादित्वान्नित्यं प्राप्तः । वृद्धिदीर्घावत्र वक्तव्याविति व्यञ्जनान्तानामनिटाम्, अस्य च दीर्घ इत्येताभ्यां योगाभ्यामनिड्विषयाभ्यामसिद्धत्वात्तयोः इरनुबन्धेभ्य इतीकाररेफावनुबन्धौ येषां ते, [4]तथोक्तः, इरनुबन्धेभ्य इत्यादि च विकल्पविषयोपलक्षणं, तेन ण्यन्भुस्तुन्भुश्रुच्म्लुचग्लुचभ्यो विकल्पः । अजरत् । नणकारेति गुणनिषेधो नास्ति । नञा निर्दिष्टस्यानित्यत्वात् । पक्षे अजारीत् । स्तन्भु सौत्रो धातुः । अस्तभत्, अस्तम्भीत्, अम्रुचत् अम्रोचीत् । अम्लुचत् अम्लोचीत् । अग्लुचत्, अग्लोचीत् । व्यत्यपुक्षते । व्यतिपूर्वात् पुषेः

---

१. अथैतत् (भं०)

२. न्यूनपाठः (वा०)

३. न्यूनपाठः (वा०)

४. ततः क्त (वा०)

कर्मव्यतिहारे आत्मनेपदम्, रुचादित्वात् ।

**इजात्मनेपदे प्रथमैकवचने ३।२।२९**

[1]इच्छेः यदिरिति कृते पदेरात्मनेपदित्वादात्मनेपदं प्रथमैकवचन एव त-शब्दे लब्धे यद् गुरुकरणं तद् दीपिजनिबुधिपूरितायिप्यायिभ्य इचो वा प्रवृत्त्यर्थम् । तेन अदीपि, अदीपिष्ट । अजनि अजनिष्टेत्यादि सिद्धम् । अजनीत्यत्र जनीवध्योश्चेत्युपधाह्रस्वः ।

**भावकर्मणोश्च ३।२।३०**

पदेरिति निवृत्तमिति पृथग्योगारम्भात् । अन्यथा पूर्वत्रैव भावकर्मणोश्चेति कुर्यात् । इह भावकर्मणोरिति ([2]एतदात्मनेपदे प्रथमैकवचनस्य विशेषणम्, तस्मादात्मनेपदानि भावकर्मणोरिति) भावकर्मणोर्विधानात् । स्वरान्तात् कर्म-कर्तरि इच् वक्तव्य इति विकल्पोऽयं कर्मवदतिदेशो न नित्यम्, इचः प्राप्त-त्वात् विकल्पविषयोपलक्षणं चैतत् । तेन दुहेरपि विकल्पः । अदोहि गौस्स्वय-मेव अदुग्धेति वा ।

**सार्वधातुके यण् ३।२।३१**

भावकर्मविहित इति पूर्ववत् सार्वधातुकस्यैतद्विशेषणम् । यण् प्रत्ययस्तु तदर्थाभिधाने एव सहायकं प्रतिपद्यते । आस्यते भवता इत्यादि भावे आत्मने-पदप्रथमैकवचनम् । नन्वेकवचनं सिद्धवस्तुविषय एकत्वे स्मर्यते । आख्यात-वाच्यश्च भावः पूर्वापरीभूतत्वेन सिद्धरूपः । तत्कथं तत्रैकवचनं स्यात्, उच्यते—नात्र द्वित्वादिप्रतिपक्षभूतएकत्व एकवचनं कृतम्, किं तर्हि भेदप्रत्य-यस्तूभयं रूपम्, यदेकत्वम् । तत्र अस्ति च भेदाभावलक्षणमेकत्वम् । भाव इति । तत्रैकत्वे सति एकवचनं भावेऽप्यविरुद्धमेव । अन्ये त्वेकवचनं तूत्सर्गतः करिष्यत इति व्याचक्षाणाः वाचनिकमेवात्रैकवचनमिति मन्यन्ते । तत्तूत्सर्ग-त्वादपि द्वित्वादपि द्वित्वादिविषये नात्रगाहते द्विर्वचनबहुवचनाभ्यां [3]वाच्य-मानत्वात् ।

यद्येवं पाकौ पाका इति द्विवचनबहुवचनेऽपि भावे न स्याताम् । उच्यते—कृदभिहिते भावे स्वभावात् सिद्धरूपत्वात् संख्यासम्बन्धो न विरुध्यते । तेन तत्र द्वित्वबहुत्वयोः द्विवचनबहुवचने भविष्यतः, आख्यातवाच्यस्तर्हि द्वित्व-

---

१. इच् ते पदेरिति (भं०)

२. कोष्ठांकितो न्यूनपाठः (वा०)

३. बाध्यमानत्वात् (भं०)

बहुत्वाभ्यां न युज्यते। पचतः पचन्तीति ([1]साधनगतेनात्र द्वित्वादिना भावस्य योग इत्यदोषः। अनेनैव तर्हि न्यायेन भवद्भ्यामास्यते, भवद्भिरास्यत इत्यादावपि द्वित्वादिना योगः स्यात्, नैतत्, (साधनगतेन हि द्वित्वादिना तत्र सम्बन्धो यत्र क्रियाकारयोरेक([2]पदोपात्तत्वं, यथा पचतः पचन्ति, पच्येते पच्यन्ते इति। यत्रैक)पदोपादानं भवद्भ्यामास्यत इत्यादौ न तत्र द्वित्वादिना भावो युज्यते, पदान्तरवाच्यत्वात् कर्तृभेदस्येति साधनभेदेऽपि तत्र भावस्यैकत्वमेव। उष्ट्रासिका आस्यन्त इत्यत्र बहुवचनं कर्मबहुत्वात् कर्मणि हीदमात्मनेपदम्। अकर्मकस्याप्यासेः प्रयोगे कर्मसंज्ञाविधौ भावस्य पूर्वं कर्मत्वाभिधानात्। तथा च उष्ट्रासिकामास्त इति द्वितीया अपि दृश्यते।

**अन्विकरणः कर्तरि ३।२।३२**

अन्नित्यत्र स्वरूपभङ्गप्रसङ्गाल्लक्षणाभावः। विकरोतीति विकरणः। नन्द्यादेराकृतिगणत्वाद् युः।

**दिवादेर्यन् ३।२।३३**

[3]भ्रादिभ्राशीत्यादि। उभयत्र विकल्पोऽयम्। अनवस्थानार्थस्य भ्रमेः क्रमेः क्लमेस्त्रसेरसेश्च दैवादिकत्वान्नित्यं प्राप्तत्वात्। अन्येषां त्वप्राप्तत्वात्। भ्रमु अनवस्थाने भ्रमु चलने वेति रूपसामान्यनिर्देशाद् द्वयं गृह्यते। भ्राम्यतीत्यस्य रूपस्य सिद्धयर्थं भ्रमेरुपादानम्। अन्यथा भ्रमति भ्राम्यतीति रूपद्वयं भौवादिकदैवादिकयोरेव भ्रम्योस्सिद्धमिति भ्रमेर्ग्रहणमपार्थकं स्यात्। यनि तु वक्तव्य इति परस्मा इत्यत्र ह्यस्तनीत्यनुवर्तते, स एव संपूर्व इति सम-शब्दोपसर्गपूर्वः समिस्तु धातुर्न गृह्यते पुनर्यनि ग्रहणस्यानर्थक्यप्रसङ्गात्। अन्योपसर्गपूर्वस्य तु नित्यं यन्निति दैवादिकत्वात्।

**नुस्स्वादेः ३।२।३४**

स्वादेरिति। षुञिरभिषवार्थो गृह्यते आप्नोतेरिति निर्देशात् तक्षो तनूकरण इत्यादि। अतनोस्तनोकरणं तनूकरणमिति तमादित्वात् शिः। तत्रत्याद् बाहुलकाद् दीर्घः। अनेकार्थत्वात् धातूनामिति। एतच्च क्तः गुद क्रोडायामेवेत्येवकारकरणात् लभ्यते। अर्थान्तर इति निर्भर्त्सने। यथा—संतक्षति वाग्भिरित्यत्र।

---

१. कोष्ठांकितोऽशः न्यूनपाठः (भं०)
२. कोष्ठांकितोंऽशः न्यूनपाठः (वा०)
३. भ्रासृ भ्लासृ (?)

**श्रुवः शृ च ३।१।७५**

शृ इति लुप्तप्रथमैकवचनम् । श्रुवश्च शृ आदेश इति श्रुव इति पञ्चम्यन्तमप्यादेशसम्बन्धे षष्ठ्यन्ततया विपरिणम्यते, आनन्तर्यलक्षणे वा सम्बन्धे प्रत्ययविधावपि षष्ठ्येवायं विज्ञायते ।

**स्वरादृधादेः परो न दीर्घः ३।१।७६**

न-शब्दः प्रत्ययो भवतीति । ननु येन अर्थः प्रतीयते स प्रत्यय इति व्यपदिश्यते । न च न-शब्देन कञ्चनार्थमवगमयन्ति तत्कथमसौ प्रत्यय इति व्यपदिश्यते ? उच्यते—धातु-सार्वधातुकाभ्यां यदर्थाभिधानं तत्र न-शब्दः सहायभावं प्रतिपद्यते, तेनार्थावगमं प्रति तस्यास्त्येव कारणभावः इत्यसावपि प्रत्ययः अनोर्बाध इति सहायकस्य न-शब्देनैव कृतत्वादनो प्रवृत्तिरेव बाध इत्यर्थः । अन्यथा तु भिन्नप्रदेशो न-शब्दः कथमनं बाधते । पर इति किं, पूर्वो मा भूत् । नन्वेवं सति विकरणात्परो नास्त्यनुषङ्ग इति न शब्दाच्च विकरणादित्येतत् अघटमानं स्यात् । नैतत्, अव्यवधाने हि परशब्दस्य प्रयोगो दृश्यते, यथा—बाल्यात्परं वृद्धत्वमिति । एवं च स्वरात्पूर्वस्मिन्नपि न-शब्दे क्रियमाणे ततः परत्वमनुषङ्गस्य शक्यते समर्थयितुमिति पूर्वनिवृत्त्यर्थं परग्रहणं कर्त्तव्यम् । नकारस्य शब्दत्वाव्यभिचारात् किं शब्दग्रहणेनेत्याह—शब्दग्रहणं वैचित्र्यार्थमिति सस्वरत्व-प्रतिपत्त्यर्थम् तु नकारस्य न भवति रुधादेर्विकरणान्तलोप इत्यन्त लोपारम्भात् ।

**तनादेरुः ३।१।७७**

ज्ञापकात् परस्य न इति । ननु सतीत्यादिप्रयोगदर्शनान्नुकारान्तोऽयं षण इति धातुः नकारस्य तु षादिति णत्वं कृतमपगते च षत्वे निमित्ताभावपरिभाषया एव णस्य नत्वं भविष्यतीति किमत्र ज्ञापकोपन्यासेन ? नैतत् षणु दाने इति हि षकारः तावद् धातुषु साक्षात्पठ्यते तत्रायं षत्वनिमित्तो निसर्गसिद्धो [1]योति नास्ति विशेषे प्रमाणम् । सनेत्यादौ च ज्ञापकेनापि णस्य नत्वं शक्यते समाधातुमिति न ततो नकारान्तता निश्चयं कर्तुं शक्यत इति ज्ञापकमेव ज्यायः ।

**आत्मनेपदानि भावकर्मणोः [2]३।१।७८**

भव्यत इति भावः, कर्मसाधनेन भावशब्देनेह भाव्यमानरूपः क्रियात्मको धात्वर्थ उच्यते । कर्मग्रहणेन च साधनकर्मणोर्ग्रहणं, न क्रियाकर्मणः, तत्र

१. न्यूनपाठः (भं०)
२. ३।२।४० (दृ० वृ०)

भाव इत्येव सिद्धत्वात्। धातोरात्मनेपदानि भवन्तीति धातोरेकस्वरः स्वरादित्यतो धातोरित्यस्यापेक्षणात्। अथ क्र्यादेरनन्तरादिति कस्मान्न विज्ञायते, भावकर्मविहितेऽद्यतन्यात्मनेपदे प्रथमैकवचने परत इति विहिते हन्तेर्घत्वारम्भात्। नहि क्र्यादेः [1]अनन्तराद् भावकर्मणोरात्मनेपदे विज्ञायमाने सति हन्तेरक्र्यादिकादिस्सम्भवति, यत्र च परे तस्य घत्वविधानमर्थवत्स्यात्।

कर्मवत्कर्मकर्त्ता [2]३।२।३६

कर्मणा तुल्यं वर्तत इति कर्म-शब्दात्तुल्यार्थतृतीयान्ताद् वतिः। ननु तुल्यं नामोभयाधिष्ठानमिति तुल्यार्थविहिता तृतीया कर्मकर्तृशब्दादपि कस्मान्न भवति, न भवति, वतेः पूर्वमुपमानात् कर्मशब्दादुपजातया तृतीययैवोभयसमवेतस्यापि तुल्यत्वप्रतिपादनात् कर्मकर्ता कर्मवद् भवतीत्यस्यार्थं व्याचक्षण्वन्नाह—कर्मणि यानि कार्याणीत्यादि कार्यशब्दमुच्चारयन्कार्यातिदेशोऽयमिति दर्शयति। कथं पुनरतिदेशान्तरसम्भवेऽपि कार्यातिदेशोऽयमिति शक्यं विज्ञातुम्? सामर्थ्यात्। तथाहि निमित्तातिदेशस्तावदत्र न सम्भवति, नहि कर्मशब्दस्य यन्निमित्तं क्रियमाणत्वं नाम तत् कर्तर्यतिदेष्टुं शक्यते, विरुद्धत्वात्। नापि व्यपदेशातिदेशः, तस्य संज्ञा-पक्षादभिन्नत्वात्। संज्ञापक्षे च वक्ष्यमाणो दोषः वतिग्रहणं चापार्थकं स्यात् नापि [3]शास्त्रातिदेशः, तस्य कार्यार्थत्वादित्यतिदेशान्तरसम्भवेऽपि कार्यातिदेश एवायम्। कानि पुनस्तानि कार्याणि कर्मण्युक्तानि यानि कर्मकर्तर्यतिदिश्यन्ते इत्याह—य आत्मनेपदमपि। इच् इत्येतानि तत्र सार्वधातुके यणित्यनेन कर्मणि यणुक्तः। आत्मनेपदानि भावकर्मणोरित्यनेन इजपि। भावकर्मणोश्चेत्यनेन कृत्यक्तखलर्थास्तु कर्मण्युक्ता अपि कर्मकर्तरि नातिदिश्यन्ते। प्रकरणान्तरस्थत्वात्। तेन भेत्तव्यं कुशूलेन, भिन्नं कुशूलेन, ईषद् भेदं कुशूलेनेत्यादौ कर्मवद्भावात प्रवृत्तेः कर्म व्यपदेशाभावादकर्मकत्वादकर्मणां भावे कृत्यक्तखलर्थाः भवन्तीति भावे कृत्यादयस्सिद्धा भवन्तीति, न तु भेत्तव्यः कुशूलस्स्वयमेव, भिन्नः कुशूलस्स्वयमेव, ईषद् भेदः कुशूलस्स्वयमेवेति कर्मणि। एवं च भावे कृत्यादिभिः प्रवृत्तैः कर्त्ता नाभिहित इति तमभिधातुं कुशूलात् तृतीया प्रवर्तते। ननु [4]कर्मणि कर्त्ता चान्यः तत्कोऽयं नाम कर्मकर्त्ता इत्याह—यस्येत्यादि। अत्रैव दृष्टान्तमाह – यथेत्यादि। आदिग्रहणेन निष्कर्मशब्दादि गृह्यते। प्रोत्साहयतीति। वा-शब्दमुच्चारयन्नवस्तुवृत्तेन केदारस्य कर्मणः कर्तृत्वम्, किं तर्हि,

१. अनन्तरम् (भं०)
२. ३।२।४१ (दु० वृ०)
३. कार्यातिदेशः (भं०)
४. कर्मण्य (वा०)

सौकर्यातिशयविवक्षयेति दर्शयति । लूयते केदारस्स्वयमेवेति केदारस्यैवात्म-भेदविवक्षया द्विधा भवनं प्रति कर्तृत्वं न कर्मान्तरस्येति प्रतिपादयितुं स्वयं शब्दः प्रयुज्यते । कर्मवद् भावादत्र यण्णात्मनेपदे स्तः । सिंहो माणवक इत्या-दिवत्परार्थे शब्दप्रयोगादन्तरेणापि वतिमतिदेशार्थत्वेऽवगते यद्वतेः करणं तत्स्वा-श्रयकार्यप्रतिपत्त्यर्थम् । विनाप्यतिदेशेन यत्प्राप्यते तत् स्वाश्रयम् । असति हि वतौ संज्ञासूत्रमिदं स्यात्, ततश्च कर्मकर्तुः कर्मसंज्ञायां सत्यां भिद्यते कुशूले-नेत्यत्र सकर्मकत्वाद् भिदेर्भावे आत्मनेपदं न स्यात् । अकर्मकेभ्यो हि भावे आत्मने पदं स्मर्यते । सति तु वतौ कर्मकर्तुः कर्मवद् भावेऽतिदिश्यमानेऽपि न तस्य सुगतं कर्मकर्तृत्वम्, कर्मस्वभावमपगतमित्यकर्मकत्वाद् भावे आत्मने-पदं सिद्धं भवति ? इह कस्मान्न भवति ? पचत्योदनं देवदत्तः, [1]राध्यत ओदनः स्वयमेव इति । उच्यते—कर्मकर्तुरनेन कर्मवद्भावोऽतिदिश्यते । कर्मत्वं कर्तृत्वं च क्रियापेक्षम् अतो यस्यां क्रियायां कर्मत्वं, प्रत्यासत्तेः यदि तस्यामेव कर्तृत्वं भवतीति । एवं सति कर्मवद्भावः प्रवर्तते । पचत्योदन-मित्यादौ तु पाके ओदनस्य कर्मत्वं, राधने तु कर्तृत्वमिति भिन्नयोर्धात्वोरोदन-स्य कर्मकर्तृभावान्न भवति कर्मवद्भावग्रहणं करणकर्तुरधिकरणकर्तुर्वा मा भूदिति । साध्वसिश्छिनत्ति, साधुस्थाली पचतीति । वेति वर्तते, सा च व्यवस्थितविभाषा, तेन कर्मस्थक्रियाणामेव धातूनां कर्मकर्तुः कर्मवद्भावो न तु कर्मस्थक्रियाणाम् । तेनास्यते [2]माषः स्वयमेव, गम्यते ग्रामः स्वयमेवेत्येव न भवति, असन-गमन-क्रिये हि कर्तृस्थे, क्वचित्तु कर्तृकर्मस्थ[3]क्रियायाः अपि भवति । आरोहन्ति हस्तिनं हस्तिपकाः, आरोहयते हस्ती स्वयमेव । आत्मने-पदमेवात्र कर्मवद्भावान्न तु यण्-प्रत्ययः । एवं दुग्धे गौस्स्वयमेव, दुहेर्ण्या-त्मनेपदमेव न त्विच्प्रत्ययः । अदुग्ध गौस्स्वयमेव । स्नुनमिश्रन्थिग्रन्थीनामपि यण्-इचौ न भवतः । प्रस्नुते गौस्स्वयमेवेति । प्रास्नुत गौः स्वयमेव, नमते दण्डस्स्वयमेव आनंस्त दण्डस्स्वयमेव । नान्तरभावितेण्णन्तः कर्मस्थक्रियः, श्रथ्नीते मेखला स्वयमेव अश्रन्थिष्ठ मेखला स्वयमेव, ग्रथ्नीते मेखला स्वयमेव अग्रन्थिष्ठ मेखला स्वयमेव । एवं कारयते कटस्स्वयमेव अचीकरत कटस्स्वय-मेवेत्यादि हेतिवन्नन्तानामपि मन्तव्यम् ।

**कर्तरि रुचादिङानुबन्धेभ्यः [4]३।२।३६**

रुचिना सदृशाः रुचादयः इति । आदिशब्दस्य प्रकारार्थत्वात् । एवम-

---

१. पच्यत ओदनः (वा०)
२. मास (वा० + भं०)
३. क्रियस्यापि (वा०)
४. ३।२।४१ (दुवृ०)

स्वपदेन विग्रहः, व्यञ्जनान्तस्य यत्सुभोरिति गत्वं न स्यात्, स्वरूपभङ्गप्रसङ्गात्। रुच इति वा अकारान्त इहोपात्तः। रुचादिग्रहणेन रुचिसदृशेभ्यो धातुभ्यः आत्मनेपदं चिकीर्षितम्। तत्र केन रूपेण रुचिना धातूनां सादृश्यमित्याह—[1]रुचिरनुदात्तेदितो नीचभागनिष्पन्नस्स्वरोऽनुदात्त इत्युच्यते। इदिति पूर्वाचार्यप्रसिद्ध्यानुबन्धो व्यपदिश्यते, तेनानुदात्त इत्यस्य सोऽनुदात्तेत्, तेन रुचिनानुदात्तानुबन्धेन सदृशाः ये धातवो धातुपाठे पठ्यन्ते, यत्पठित्वानुदात्तेत इत्यन्ते पठ्यन्ते सर्वे रुचादिग्रहणेन गृह्यन्ते। यद्येवमनुदात्तानुबन्धधातूपलक्षणं रुचिरेव विज्ञायते किमादिग्रहणेन, नैतत्, प्रत्ययविधानं प्रत्युपक्षीणो रुचिः कथमनुदात्तानुबन्धाद् धातूननुपलक्षयेत्। शिष्ये सुषवे इति सर्वत्रात्मन इति गुणःभावः, कर्मव्यतिहारेऽर्थे वर्तमानादित्यादि श्रुवः श्रृ चेत्यतः चकारानुवृत्तेर्विजृम्भितमेतत्। परस्परं करणं वेति। यथा सम्प्रहरन्ते राजानः इति कर्मशब्दः क्रियावाचीति लोके कर्मशब्देन क्रियाया अप्रसिद्धत्वात्। एतेन साधनात्मकस्य कर्मणो नात्र ग्रहणमिति दर्शयति। तस्य त्वग्रहणमधातुवाच्यत्वात्। नहि साधनकर्मधातोः क्रियावाचिनो वाच्यं भवति। व्यतिहारो विनिमयो व्यतिलुनीत इत्येकसाधनसाध्यायाः क्रियायाः व्यतिहारो नोपपद्यत इति कर्मव्यतिहारे एकवचनं नोदाह्रियते। यत्र तु प्रकरणादिना अन्यदीया क्रिया तेन क्रियमाणा लक्ष्यते, तत्र प्रयुज्यत एवैकवचनम्। व्यत्यभविष्ट व्यत्यास्त इत्यादौ वि अति पूर्वाविति कर्मव्यतिहारस्य द्योतको, गत्यर्थेभ्यो धातुभ्यो हिंसार्थेभ्यस्तु नेष्यत इति चानुवृत्तिरात्मनेपदसमुच्चयार्थत्वादिति भावः। हिंसार्थेभ्यस्त्विति तु-शब्दाद् व्यतिहसन्ति, व्यतिजल्पन्ति इत्यादावपि हसादीनां शब्दक्रियाणां निषेधः। इतरेतर अन्योन्य इत्यादि। नन्वितरेतरादित्येवोपपदैः कर्मव्यतिहारो द्योतित इति केवलेषूपपदेष्वात्मनेपदस्य प्राप्तिः, नैतत्, प्रकृतिवाच्ये हि कर्मव्यतिहार आत्मनेपदं विधीयते। तच्च यथा व्यत्ययादिभिरुपसर्गैर्द्योतितेऽपि तस्मिन्भवति। एवमितरेतरादिशब्दद्योतितेऽपि प्राप्नोति इति निषिध्यते। नेरुपसर्गादिति लक्षणप्रतिपदोक्तपरिभाषयेति भावः यद्वा नि-शब्देनोपसर्गेणैव विशेरन्तरङ्गसम्बन्ध इत्युपसर्गस्यैव नेर्ग्रहणात्। परिव्यवेभ्य इत्युपसर्गेभ्यः क्रीणातेरुपसर्गैरेव पर्यादिभिस्सम्बन्धात। तेनेह न भवति, बहवो वयः पक्षिणो यस्मिन्वने तद् बहुविक्रीणाति वनमिति। आङ्पूर्वाद् दाञः इत्यादि। यद्येवं कूलं व्याददाति, विपादिकां व्याददातीत्यत्रापि प्राप्नोति, एवं तर्ह्यस्योद्घाटनं समानक्रियादपि चानुवृत्या प्रतिषेधो भवति, लक्ष्यानुरोधेन च प्रतिषेधस्मरणात्। स्वस्मिन्नङ्गे कर्मत्वेन विवक्षिते निषेधो नान्यत्र। तेन व्याददते पिपीलिका पतङ्गमुखमित्यत्रात्मने-

---

१. रुचिरनुदात्तेति (ख०)

पदं भवत्येव । अनुसंपर्याङ्भ्यामित्यादि । माणवकमनुक्रीडतीति । अत्र त्वनोः कर्मप्रवचनीयत्वान्न भवति । समा साहचर्यादुपसर्गाणामन्वादीनां ग्रहणात् । माणवकमन्विति माणवकेन सहेत्यर्थः । स्पर्धायामिति पराभिभवेच्छायाम् । इत्थमन्यस्मादपीत्यादि । तेन आङ्पूर्वाद् गमेः इन्नन्तात् क्षमायामात्मनेपदम् । आगमयस्व सहस्वेत्यर्थः । शिक्षेर्जिज्ञासायाम्, शकेस्सनि द्विर्वचने कृते सनि मीमेत्यादिना स्वरस्येमादेशेऽभ्यासलोपे स्कोस्सयोगाद्योरिति सकारे लुप्ते षत्वे च यत् शिक्ष इति रूपं तत इदमात्मनेपदम्, विद्यामुपशिक्षते । अन्ये तु शिक्ष विद्योपादान इत्यस्य रुचादित्वादात्मनेपदं सिद्धमपि जिज्ञासायां नियम्यत इत्याहुः । आशिषि नाथः । सर्पिषो नाथते नियमार्थं चैतत् । आशिष्येव न याञ्चादाविति । हरतेर्गतिताच्छील्ये गतौ ताच्छील्यं स्वभावत एवायत्नेनानुष्ठानम् । पैतृकमश्वा अनुहरन्ते, पितुरागतं गमनमश्वाः स्वभावत आचरन्तीत्यर्थः । शप उपलम्भने, वाङ्मात्रनिविष्टं शास्त्रादिना शरीरस्पर्शनमुपालम्भनम् । देवदत्ताय शपते । किरतेर्हर्षजीविकाकुलायकरणेषु विषयेषु कुलाय आलूय अपस्किरते वृषभो हृष्टः, अपस्किरते कुक्कुटो भक्ष्यार्थी, अपस्किरते श्वा [1]आनन्द्रयार्थी । आङि नुप्रच्छ्योः, आनुते शृगालः, आपृच्छते गुरुम् । प्रकाशनस्थेयाख्यां च स्थः । स्वाभिप्रायकथनं प्रकाशनम् । स्थेयमाख्या स्थेयाख्या, विवादनिर्णेता लोके [2]स्थेय उच्यते । तिष्ठते वृषली, तिष्ठते त्वयि । तद् ईहात्मकेऽनूर्ध्वकर्मणि । कुट्वाम्ब उत्तिष्ठते, ईहात्मक इति किम् स अस्माद् ग्रामाद् गच्छतमुपतिष्ठति । उपाद् देवपूजासङ्गतिकरणमित्रकरणपथिषु । ईश्वरमुपतिष्ठते, रथिकानुपतिष्ठते, महामात्यानुपष्ठिते, अयं पन्थाः श्रुघ्नमुपतिष्ठते । देवपूजासङ्गतिकरणमित्रकरणानि गम्यमानानि । पन्थास्तु कर्त्ता । लिप्सायां वा । विप्रो ग्राममुपतिष्ठते उपतिष्ठतीति वा । आङो यमहनिभ्यामकर्मकाभ्याम् । आयच्छते, आहते, घुटि हन्तेरित्यन्तलोपः । स्वस्मिन्नङ्गे तु कर्मण्यात्मनेपदं भवत्येव, आयच्छते पाणिम्, आहते शिरः । इह तु न भवति – आहन्ति शिरः परकीयम् समो गमृच्छिप्रच्छिस्वृश्रुविदिदृशिभ्योऽकर्मकेभ्यः । सङ्गच्छते, समृच्छते, संपृच्छते, संस्वरते, संश्रृणुते, संवित्ते, संपश्यते । अकर्मकेभ्य इति किम् ? ग्रामं सङ्गच्छति । ज्ञा निह्नुतौ । शतमुपजानीते, निह्नुत इत्यर्थः आत्मार्थे क्रियाफलेऽनुपसर्गात् । सञ्जानीते, गां जानीते । अवाद् गिरतेः । अवगिरते । समोऽभ्युपगमे । शतं संगिरते । समश्चरेस्तृतीयान्तेन युक्तत्वात् । अश्वेन सञ्चरते । उपाद्यमः पाणिग्रहणे भार्यामुपयच्छते । मर्देर्विकरणविषय-

---

1. आश्रयार्थी (मं०)
2. स्थैर्य (?)

त्वात् मीयते । अन्यत्र मेत्स्यति । समः क्ष्णुवः । संक्ष्णुते शस्त्रम् एवमाद्युन्नेयम् ।

**इञ्‌व्यजादेरुभयम्** [1]३।२।४०

यजिना सदृशाः यजादयः इत्येतेन प्रकारार्थोऽयमादिशब्दो न व्यवस्थावाचीति दर्शयति। इन्नन्तात् ञकारानुबन्धादिति केवलस्येनो ञकारस्य च प्रकृतित्वेन सम्भवादेवमुक्तम् । यजादिभ्यश्चेति । यजिसदृशेत्युभयपदिभ्यो न तु क्रमपरिपठितेभ्य एवोभयशब्दाच्चायमात्मनेपदप्रस्ताव उपादीयमान आत्मनेपदसजातीयमपरं परस्मैपदमेवाक्षिपतीत्याह—उभयं परस्मैपदात्मनेपदं च भवतीति । इह यजादिग्रहणे न यजिसदृशेभ्यो धातुभ्य उभयं चिकीर्षितं, तत्र केन रूपेण यजिना सादृश्यं धातूनामित्याह—यजिस्स्वरितेदिति उदात्तानुदात्तौ वर्णधर्मौ समाह्रियेते यस्मिन्स्वरे सः स्वरित उच्यते । इदित्यनुबन्धो व्यपदिश्यते, स्वरित इत् स स्वरितेत् । तेन स्वरितानुबन्धेन यजिना सदृशाः ये धातवः धातुपाठे पठ्यन्ते, यान्पठित्वा स्वरितेतः इत्यन्ते पठ्यन्ते ते सर्वे यजादिग्रहणेन गृह्यन्त इत्यर्थः । ज्योतिषामिति । आदित्यादीनामप्रतिबन्धे उत्साहे स्फीततायां च क्रमेरात्मनेपदमेव स्मर्यते । पाठेऽस्य क्रमते बुद्धिः न प्रतिहन्यत इत्यर्थः । वेदाध्ययनाय क्रमते उत्सहत इत्यर्थः । अस्मिंच्छास्त्राणि क्रमन्ते स्फीतीभवन्तीत्यर्थः । उपपराभ्यामेषु वार्थेषूपक्रमते पराक्रमते । वेः पादविक्षेपे, साधु विक्रमते प्रोपाभ्यामादिकर्मणि । प्रक्रमते भोक्तुम् । उपक्रमते, भोक्तुम् विशिष्ट एव विषय इत्यादि । कः पुनरसौ विशिष्टो विषय इत्याह—तेन यत्रेत्यादि । क्रियायाः फलं [2]क्रियाफलम्, येन कर्त्रा यज्यादिशब्दाभिधेया क्रिया कर्तुमारब्धा तस्या [3]चैतेन क्रियाजनितेन सम्बन्धो भवति । एवमात्मनेपदमिञ्जयादेः प्रवर्तते, तेन किं सिद्धं भवतीत्याह—तेनेत्यादि । ननु याजका अपि दक्षिणालक्षणेन क्रियाजनितेन फलेनाभिसम्बध्यन्त एव । ततो यजन्ति याजका इत्यत्रापि आत्मार्थे क्रियाफले आत्मनेपदं प्राप्नोति, अस्त्येतत् प्रधाने कार्यसंप्रत्ययात् प्रधानभूतमिह फलं गृह्यते । तत्र स्वर्गादि तदुद्दिश्य यागादिक्रियारम्भात् । तेन च फलेन कर्तुर्यजमानस्याभिसम्बन्धो न तु याजकानामिति न भवति । यजन्ति याजका इत्यत्रात्मनेपदम् । अथ यत्र प्रधानेन मुख्यफलसम्बन्धभाजा कर्मकारेण सहारब्धा क्रिया द्वयोश्चैकत्र निर्देशः । कथं तत्र भवितव्यं, क्रियात्मनेपदेनाहोस्वित्

---

१. ३।२।४५ (दु० वृ०)
२. न्यूनपाठः (वा०)
३. चित्तेन (वा०)

परस्मैपदेन? उच्यते—स्वामिदासगतं [1]भेदमनपेक्ष्य क्रियामात्रविवक्षायांस्वामिदासौ पचत इत्यत्र परस्मैपदमेव भवति। भीस्मयोस्त्विवन्नन्तायाः परार्थेऽपि क्रियाफलमात्मनेपदं स्मर्यते, हेतौ प्रयोजकाच्च भयविस्मयौ चेत् स्याताम्। भुण्डो भीषयते, जटिलो विस्मापयते। भियष्षुग्वेति भियष्षुगागमः, स्मिङः स्मिङि क्रीणामिनीत्यात्वम्। अर्तिह्रीति पकारागमः। इह त्वात्मनेपदं न भवति, कुञ्चिकया भाययतीति। रूपेण विस्मापयति इति। नह्यत्र हेतोः प्रयोजकौ भयविस्मयौ, किं तर्हि, कुञ्चिकादेः करणात्। ननु प्रयोजकसाध्यावेवात्र भयविस्मयौ, सत्यम् हेतोर्भयविस्मयौ किं तर्हि कुञ्चिकादेः करणात् चेत्स्यातामित्येवंविधविशेषणोपादानसामर्थ्यात्त्वेवं निश्चीयते, यदोपायान्तररहितात् हेतोरेव भयविस्मयावुपजायेते। तदात्मनेपदं प्रवर्तते। कुञ्चिकया भाययतीत्यादौ तु कुञ्चिकादिकारणमव्यपेक्षत्वात् हेतौ भयविस्मयौ न त्वव्यवहिताद्धेतुमात्रादिति न भवत्यात्मनेपदम्। उपपदेन द्योतित आत्मार्थे क्रियाफले विकल्पेनात्मनेपदं स्मर्यते, स्वं कटं कारयते, स्वं कटं कारयति, स्वं यज्ञं याजयते स्वं यज्ञं याजयतीत्यादौ।

**पूर्ववत् सन्नन्तात्** [2]३।२।४१

पूर्वस्मादिव पूर्ववत्, सन्प्रत्ययान्तादात्मनेपदं परस्मैपदम् उभयं वा भवतीति। एतेनान्तरमुभयमित्येतदेव न सम्बध्यते, किं तर्ह्यात्मनेपदग्रहणमपीति दर्शयति ([3]एतच्च पूर्वग्रहणाल्लभ्यते, उभयमित्येवानुवृत्तौ सत्यां ह्यपार्थकं पूर्ववद् ग्रहणं स्यात्। पूर्वशब्दस्यावधिमव्यपेक्षत्वात्सन्निहितस्य सन एवावधित्वेन विज्ञायत इत्याह—सनः पूर्वस्येति। आत्मनेपदादुत्पन्नाविति। आदिग्रहणेनोभयपदं गृह्यते, यन्निमित्तं तत्सन्नन्तस्याप्यतिदिश्यते, एतेन निमित्तातिदेशोऽयमिति दर्शयति।) यद्यपि च सनः पूर्वस्मिन्धातौ यत्समवेतमनुदात्तानुबन्धत्वाद्यात्मनेपदाद्युत्पत्तौ निमित्तं तत्सन्नन्ते नेतु[4] न शक्यते, तथापि धातुस्थमपि तदतिदेशबलेन सन्नन्तेऽप्यात्मनेपदादिलक्षणं कार्यं जनयति। एवं च सत्यतिदेशे यत्फलं सम्पद्यते तद् दर्शयितुमाह—तेनेत्यादि। यद्येवं धर्मं जिज्ञासते, गुरुं शुश्रूषते, नष्टं सुस्मूर्षते, नृपं दिदृक्षते इत्यात्मनेपदं न प्राप्नोति, नहि सनः पूर्वेभ्यो ज्ञा-श्रु स्मृ-दृशिभ्य आत्मने-पदं दृश्यते। यद्यपि शतं प्रतिजानीते,

१. तदे (वा०)
२. ३।२।४६ (दु०वृ०)
३. कोष्ठांकितोंशः न्यूनपाठः (वा०)
४. नेतुम् (वा०)

सर्पिषो जानीते, शतं जानीते, सहस्रं जानीते। संश्रृण्वते, संपश्यते इत्यात्मनेपददर्शनम्, तथापि जानातेरुपसर्गपूर्वादपह्नववृत्तेस्तथाकर्मकात्संप्रतिपूर्वाच्च श्रुद्रुदृशिभ्यामपि संपूर्वाभ्यां सकर्मकाभ्याम्। ततोऽन्यत्र विषये धर्मं जिज्ञासत इत्यादावात्मनेपद न सिध्यति। एवं तर्हि सन इति कर्तव्येऽन्तग्रहणादधिकविषयोपसङ्ग्रहार्थात्सिेत्स्यति। अनुपूर्वात्तु जानातेः प्रत्याङ्पूर्वाच्च श्रृणोतेर्न भवति। पुत्रमनुजिज्ञासति, प्रतिशुश्रूषति, आशुश्रूषति मृङ् प्राणत्यागे, इत्यस्येत्यादि। कथं पुनरिष्यमाणोऽप्यतिदेशोऽस्य निषेद्धुं शक्यते, उच्यते— पूर्वत्र यन्निमित्तं किं तर्हि विकरणविषय आशीरद्यतन्यौ च सनीष्यतीत्यादावात्मनेपदं न दृश्यते। एवं चासति केवलस्य म्रियतेरात्मनेपदनिमित्तत्वं नास्तीति। असन्नन्तादपि तत्रात्मनेपदं न भवति।

अतएव शिशत्सतीत्यत्र शदेरात्मनेपदिनोऽपि सन्नन्तस्य पूर्ववदतिदेशो न भवति। शदिमात्रस्यात्मनेपदनिमित्तत्वाभावात्। विकरणविषय एव हि तस्यात्मनेपदं स्मर्यत। तेनात्मनेपदिनोऽपि सन्नन्तस्य पूर्ववदतिदेशो न भवति। पदं न भवतीति। ङानुबन्धत्वात् प्राप्तम्, किमर्थस्तर्हि मृङः ङानुबन्धः, पूर्वाचार्यार्थः। [1]यथेकः ककारः।

**शेषात्कर्तरि परस्मैपदम्** [2]३।२।४२

[3]शिष असर्वोपयोगः इत्यस्मादाधृषाद्वेति विकल्पितेन्प्रत्ययान्ताः शिष्यन्त इत्यकर्तरि च कारक इति घञ्, यस्मादात्मनेपदादिनोक्तमशेष इति। यद्येवमशेषत्वान्मरिष्यति, अमरिष्यदित्यादौ मृङः परस्मैपदं न प्राप्नोति, नैतत्, अद्यतन्याशिषे विकरणविषये च मृङः [4]आत्मनेपदकरणादन्यत्राप्यशेषत्वमनपेतमेव। अशेषाद् बाधकस्य विद्यमानत्वादर्थाच्छेषादेव भविष्यतीति शेषग्रहणम्। सन्नन्तानुवृत्तिर्माभूदिति भावकर्मणोरात्मनेपदं विहितमित्यर्थात्कर्तर्येव परस्मैपदं विज्ञास्यते, तत्किं कर्तृग्रहणेनेत्यभिप्रायेणाह – कर्तरीति किमिति। इतरोप्यास्ते [5]शय्यते क्रियत इत्यादावशेषभावकर्मणोरात्मनेपदस्य सावकाशत्वाच्छेषाद् गमिप्रभृतेः कर्मण्यपि परस्मैपदं स्यादिति तन्निवृत्तये कर्तव्यं कर्तृग्रहणम्, इत्थं तेन प्रत्युदाहरति, गम्यते ग्राम इति। नन्वेवमपि कर्तृग्रहणानुवृत्तेः

---

१. अस्पष्टः

२. ३।२।४७ (दु० वृ०)

३. शेषः (?)

४. स्मरणात् (मं०)

५. राध्यते (वा०)

कर्तर्येव भविष्यति, अस्त्येतत्, शुद्धकर्तृप्रतिपत्त्यर्थं कर्तृग्रहणम्। तेन हन्यते वृषलः स्वयमेवेति कर्मकर्तरि परस्मैपदं न भवति, कर्मवद्भावादात्मनेपदमशेषात्, लुनात्यादेस्सावकाशं शेषात्कर्मकर्तरि स्वाश्रयकर्तृत्वप्रतिबन्धो न परस्मैपदेन परत्वाद् बाध्यते, यद्येवम् असिच्छिनत्तीति करणकर्तर्यपि तन्न प्राप्नोति, नैतत्, कर्त्रवस्थायामत्र करणत्वाभावात् शुद्ध एव कर्त्ता, हन्यते वृषलस्स्वयमेवेत्यत्र तु स्वाश्रये कर्तृत्वेऽप्यातिदेशिकं कर्मत्वमस्तीत्यशुद्धोऽत्र कर्तेति, नायं विषयः परस्मैपदस्य। अनुबन्धत्वादुभयं प्राप्तमिति इञ्ज्यजादेरित्यादिना पूर्ववदुभयं प्राप्तमिति यजादित्वात्।

[1]द्वितीयः पादः।

## तृतीयः पादः

**द्विर्वचनमभ्यासस्य ३।३।१**

द्विः वचनं द्विर्वचनमिति तत्पुरुष इति विभक्तयो द्वितीयाद्या इत्यादिना प्रथमान्तयोरप्ययं तत्पुरुषः, उक्तं हि तत्पुरुषसंज्ञाविधौ द्वितीयाद्यभावेऽपि क्वचिद् दृश्यते। समास इति। अविद्यमानोऽभ्यासो यस्य सोऽनभ्यास इति लोप्य इत्यर्हप्रत्ययनिर्देशाद्विद्यमानशब्दस्य लोपः। एकस्वरो यस्येत्यादि। एतेनैकस्वरस्येति बहुव्रीहिरयमाद्यग्रहणात्, न तु कर्मधारय इति दर्शयति। कर्मधारये हि सतीण् प्रभृतय एवैकस्वराः धातवो द्विरुच्येरन्। तथा च व्यावर्त्याभावादाद्यग्रहणमपार्थकं स्यात्। यद्येवम्, उपलक्षणस्य कार्येण योगादेकेन स्वरेणोपलक्षितस्यास्वरस्यैवाद्यस्य द्विर्वचनं स्यात्, नैतत्, अस्वरस्य हि तस्य द्विर्वचने क्रियमाणे सत्येकस्वरो न द्विरुक्तः स्यात्। एकस्वरश्च द्विः वक्तव्यः। तद्गुणसंविज्ञानो ह्ययं बहुव्रीहिः, स उपलक्ष्यः, गुणश्चोपलक्षणभूतः, तेषां संविज्ञानं प्रतिपत्तिर्यत्र बहुव्रीहौ सः तथोक्तः। तेनैतदुक्तं भवति, इह सर्वत्र सम्बन्धे बहुव्रीहिस्स्मर्यते, स च सम्बन्धो यदा संयोगसमवायलक्षणो भवति तदोपलक्षणमपि कार्येण युज्यते, यथा — शुक्लवाससमानय, लम्बकर्णो भोज्यतामिति, स एव बहुव्रीहिः तदगुणसंविज्ञानः। यदा तु स्व-स्वामिभावादिकः सम्बन्धः, तदोपलक्षणं कार्येण न सम्बध्यते यथा - चित्रगुं भोजयेति। सोऽप्येष बहुव्रीहिरुपलक्षणविनिर्मुक्तः, एकस्वर इति च विशिष्टावयवोपलक्षितोऽवयवी बहुव्रीहावत्रान्यपदार्थः। न च विनावयवमवयविनो भावोऽस्तीत्यर्थादवयविनः

---

१. भट्टोग्रभूतिकृतायां शिष्यहितान्यासे शिष्यालोकाभिधाने आख्यातप्रकरणे द्वितीयः पादः (भं०)

कार्यमुच्यमानमुपलक्षणस्याप्यवयवस्य विज्ञायत इति न भवत्यस्वरस्याद्यस्य द्विरुक्तिः, धातोर्य आदिरेकस्वरः तस्यानभ्यासस्याकृतद्विर्वचनस्येत्येतेन तिस्रोऽप्येताः सौत्र्यः षष्ठ्यस्तुल्याधिकरणाः[1] धातोरित्येषा त्वाद्यावयवापेक्षया अवयविषष्ठीति दर्शयति। एकस्वरस्येत्यनेन तु न धातुस्सामानाधिकरण्येन विशेष्यते, जागर्त्यादीनां द्विर्वचनदर्शनात्। अथ धातोरित्येतत् कुतः, उच्यते--चण्परोक्षेत्यादि सूत्रारम्भान्नेदं स्वातन्त्र्येण द्विर्वचनस्य विधायकमिति निमित्तापेक्षं सदधिकारार्थं सम्पद्यते। अधिकारश्चायं [2]चणादिवाक्ये उपतिष्ठते, तत्रैवोपस्थितस्य सतोऽस्य विशिष्टवाक्यार्थरचनायामपेक्षाविनिवृत्तेः। चणादिभिश्च स्वप्रकृतिधातुराक्षिप्यत इत्यर्थाद् धातोरिति लभ्यते। दरिद्राविति। असिद्ध्यपीत्यत्राम्प्रत्ययो न भवति तद्विधावुषविदेत्यतो वेत्यस्यापेक्षणात्। जाइत्यस्य द्विर्वचनमिति स्वरमध्यवर्तिव्यञ्जनमुत्तरस्याङ्गमिति स्मरणात् गकारो व्यञ्जनमुत्तरं स्वरसन्धिः, न तु पूर्वस्वरावयव इत्यभिप्रायेण जा इत्यस्य द्विर्वचनमित्युक्तम्। यत्त्वेकस्वराः पच्प्रभृतयो तेषु यद् द्वितीयं व्यञ्जनं तदनुस्वारो व्यञ्जन चाक्षराङ्ग इति पूर्वस्वरसम्बन्ध्येव। एवं पपाचेत्यादौ पच्प्रभृतिद्विरुच्यते। ननु नायमिकार इत्यादिरेकस्वरव्यपदेशोऽप्यत्र व्यतिरिक्तवर्णनिबन्धनो नास्तीति मन्तव्यम्। आद्यन्तवदित्यादि। आद्यन्तत्वैकस्वरत्वयोरप्यस्तित्व एष परिहारः। अस्मिंश्च परिहारे पपाचेत्यादावपि द्विर्वचनं सिद्धम्। अन्यथा त्वाद्यस्यैकस्वरस्य विधीयमानमत्र द्विर्वचनं न स्यात्। अनाद्यैकस्वरापेक्षिण [एकस्वरत्वस्य पच्प्रभृतावसम्भवात्। गौणमप्येवंविधमेकस्वरत्वमाश्रीयते। परोक्षायामभ्यासस्येत्येताभ्यामव्यपदेशभाजः पूर्वस्य सम्प्रसारणारम्भात्। द्वे इति कर्तव्ये वचनग्रहणं द्विःवचनमुक्तिरुच्चारणं भवतीति द्विष्प्रयोगःद्विर्वचनपक्षपरिग्रहार्थम्। अन्यथा द्वे इत्यस्य संख्याशब्दस्य संख्येयवृत्तित्वात् संख्यानामन्वाख्यायकत्वेन प्रस्तुततदाच्छब्दरूपं स्यात्। ततश्चाद्यस्यैक स्वरस्य स्थाने द्वे इति व्याख्यायां स्थाने द्विर्वचनपक्षः परिगृह्यते। तथा च सति जिघांसतीत्यत्र हन् इत्येवमात्मके रूपसमुदाये आदेशे कृतेऽभ्यासस्य हन्तेश्च [3]सम्प्रसारणत्वादभ्यासादुत्तरो हन्तिहकारो नास्तीतित्यभ्यासाच्चेति घत्वं न स्यात्। द्विष्प्रयोगः द्विर्वचनपक्षे तु स एव शब्दः व्यवस्थित एव द्विरुच्चार्यते न तु तस्य स्थाने शब्दान्तरादेशो विधीयत इत्यभ्याससम्प्रमोहापगमादभ्यासादुत्तरस्य हन्तिहकारघत्वं सिद्धं भवति। तस्माद् द्विष्प्रयोगः द्विर्वचनमिदं न तु स्थाने द्विर्वचनमित्यस्यार्थस्य प्रतिपत्त्यर्थं वचनग्रहणं क्रियते। नन्वभ्यासाच्चेति

---

१. समानाधिकरणः (भं०)
२. चणादि (भं०)
३. मुग्ध (?)

वचनारम्भाद् घत्वं भविष्यतीति [1]नास्त्येष स्थाने द्विर्वचनपक्षे दोषः। अयं तर्हि दोषः, इहाटिटदिति स्वरविधिः स्वर इति वचनात्कारितलोपात् पूर्वं टिशब्दस्याटिटदिति कृते समुदायादेशे कारितबुद्धिसम्प्रमोहात् कारितेर्लोपो न स्यात्। द्विष्प्रयोगद्विर्वचने तु व्यवस्थितस्य टिशब्दस्य द्विरुच्चारणात्कारितबुद्धिः अनिवृत्तेति कारितलोपस्सिद्धो भवति। एषोऽप्यदोषः। स्थानिवद्भावेन टिटीत्यस्य टिग्रहणेन ग्रहणात् टिनिबन्धनस्य चणि परे कारितलोपस्याव्याघातात्। तस्मात् स्थाने द्विर्वचनपक्षेऽप्यदोष इति किं तन्निवृत्त्यर्थेन वचनग्रहणेन, एवं तर्ह्यभिहितेन दोषपरिहारक्रमेण मन्दमतीनां प्रतिपत्तिगौरवं स्यात् इति [2]तन्निवृत्तये वचनग्रहणम्। ततस्सन्निति धातोर्वा कर्मण इत्यादिना अस्य च लोपत इति कृतेत्वलोपस्य [3]अनन्यधातोरिति यलोपो न भवति[4] तद्विधौ व्यञ्जनाद् दिश्योरित्यतो व्यञ्जनादित्यस्यानुवृत्तेः।

**स्वरादेर्द्वितीयस्य ३।३।२**

स्वर आदिर्यस्य धातोरिति विग्रहः अनभ्यासो यो द्वितीय एकस्वर इत्यनभ्यासो कृतद्विर्वचन इत्यर्थः। द्विर्वचनं भवतीत्यधिक्रियत इति। निमित्तमव्यपेक्षत्वात्परार्थ्यादिदमप्यधिकारार्थमिति भावः। पूर्वेणाद्यस्य द्विर्वचनं प्राप्तमिति तदनेन बाध्यत इति शेषः। असत्यपि च विरोधे विशेषश्रुतिस्सामान्यश्रुतेः तक्र-कौण्डिन्यन्यायेन बाधिका दृष्टेत्याद्यं द्विर्वचनमनेन द्वितीयद्विर्वचनेन बाध्यते। यद्येवमव्यञ्जनस्य ([5]द्वितीयस्यापि न प्राप्नोति आद्यद्विर्वचनसम्बधेन हि यत् व्यञ्जनस्यापि) पूर्वेण द्विर्वचनं प्राप्तं तस्याप्यनेन ([6]द्विर्वचनेन बाध्यमानत्वात्। सत्यम्। न नवदरा इति निषेधारम्भाद् ज्ञायते द्वितीयद्विर्वचन[7]पक्षे व्यञ्जनमपि [8]द्विरुच्यत एवेति। अन्यथा हि प्राप्त्यभावान्न नवदराणां द्वितीयद्विर्वचननिषेधोऽपार्थकस्स्यात्। अनेन शिडिति द्विर्वचनमिति स्वरविधिः स्वर इति वचनाद्वक्तव्या, आद्य शब्द इति गत्यर्थात्कौटिल्य एव य-शब्दो वक्तव्य इत्यस्मात्। ननु स्वपदार्थप्राधान्येनान्तरङ्गत्वस्वरादेरिति कर्मधारयो

---

१. नास्त्येव (वा०)
२. न्यूनपाठः (वा०)
३. अनन्ं (भं०)
४. न्यूनपाठः (वा०)
५. को० अ० पा० (भं०)
६. को० अ० पा० (भं०)
७. प्रसङ्गे (भं०)
८. विरुध्यत (भं०)

[1]ग्रहीष्यते। ततः [2]पञ्चम्यां सत्यपञ्चम्या निर्दिष्टे परस्येति वचनात् द्वितीयस्यैव द्विर्वचनं विज्ञास्यत इति नार्थो द्वितीयग्रहणेन, उच्यते— विशेषद्योतनार्थम्। [3]तेनेर्षितेर्विशब्दस्येत्यादि यदुच्यते तत्सर्वं गृहीतं भवति। नामधातोर्वेति, नाम भूत्वा यो धातुः सम्पन्नः ते धातव इति वचनेन स नामधातुः। आद्यस्य द्वितीयस्य तृतीयस्य वेत्येकस्वरोऽत्र वाच्यः।

**न नवदरास्संयोगादयोऽये ३।३।३**

संयोगस्यादय इति संयोगादय इति संयोगस्य शिष्टदेशावयवः यकारपरस्तु यदसंयोग इति संयोगादय इति तत्पुरुष उत्तरपदार्थप्रधानः लब्धप्रधानभावस्संयोगः कथमय इत्यनेन सम्बध्यते, उच्यते—फलभूतः तेन संयोगस्याभिसम्बन्धः। तथा हि न तेन संयोगोऽभिसम्बध्यते, किं तर्हि नवदरा अभिसम्बध्यन्ते। यकारे परे ये नवदराः तेषां द्विर्वचननिषेधो न भवतीति। ये च यकारे परे नवदराः ते अर्थादेव संयोगस्यादयो भवन्ति। असंयोगादित्वे हि तेषां निषेधस्याप्राप्तेरयः इत्यस्य निषेध्यनिषेधकारिणोः वैफल्यं प्रसज्येत। तस्मात्फलभूतो योऽयमयः इत्यनेन संयोगस्याभिसम्बन्धः साक्षात्त्वेतन्नवदराणां विशेषणम्। उब्जिजिषतीति बकारस्यैतदुदाहरणम्। उब्ज आर्जव इत्ययं हि बकारोपधः पठ्यते। अभ्युद्ग इत्यादिरूपं द्व्युपसर्गस्य गमेः डो सति भविष्यति। अड्डिडिषतीति। अत्र अड्ड ? इत्यस्य प्रत्ययोत्पत्तेः पूर्वमन्तरङ्गत्वात्तवर्गः चटवर्गयोगे चटवर्गादिति तस्य डत्वं प्राप्तमपि दकारोपादानसामर्थ्यात् तावत् न भवति, कृते वा डत्वे भूतपूर्वदकाराश्रयो द्विर्वचननिषेधो भविष्यति। यद्येवमिन्द्रशब्दात् यिन्, सन्, इट्, इन्दिद्रीषतीत्यत्रापि द्रिशब्दे द्विरुच्यमाने दकारस्य द्विर्वचनं न प्राप्नोति, नैतत्, पूर्वसूत्राद्धि कर्मधारयसमाविष्टं स्वरादेरिति वर्तते। तेनादेस्स्वरात्परेषां संयोगादिभूतानां नवदराणां निषेधः। इन्द्रशब्दे तु नायं दकारः स्वरादेः परो नकारेण व्यवधानात्, इति न भवति तस्य द्विर्वचननिषेधः।

**पूर्वोऽभ्यासः ३।३।४**

अभिपूर्वादस्यतेरभ्यस्यत इत्यकर्तरि च कारके इति घञ्, द्विर्वचनमिति वर्तते इति अर्थवशाद्विभक्तिविपरिणाम इति सप्तम्यन्तमिति शेषः, तदाह— द्विर्वचने कृत इति।

---

१. दृश्यते (भं०)
२. न्यूनपाठः (भं०)
३. इषितेर्ये (?)

**द्वयमभ्यस्तम् ३।३।५**

द्वावयवौ यस्येति द्विशब्दात्तसादित्वादयः प्रत्ययः। अभ्यस्यतेस्येति निष्ठेति क्तः। जोहूयत इति। नन्वभ्यस्तसंज्ञाया ददतीत्यादिः प्रदर्शितो विषयः, तत्किमस्योदाहरणस्योपन्यासेन, एवं मन्यते, इह द्वयग्रहणं न कर्त्तव्यम्,अभ्यस्तमित्येतावदिति क्रियताम्, पृथगयोगारम्भसामर्थ्याच्च न पूर्वस्य संज्ञा विज्ञास्यते, किं तर्हि, द्विर्वचनानुवृत्त्या द्विरुक्तौ सत्यां श्रूयमाणस्य द्वयस्यैवेति किं द्वयग्रहणेन, तत्क्रियते, द्विरुक्तावपि सत्यां परस्य भागस्य मा भूदिति। अन्यथा— जोहूयत इत्यादावभ्यासो कृतसम्प्रसारणः श्रूयते। न च द्विर्वचनात् परत्वात् परस्य कृते सम्प्रसारणे कृतेऽभ्यस्तसम्प्रसारणे सम्प्रसारणस्य धातोः द्विर्वचनं भविष्यतीति शक्यं वक्तुं, द्विर्वचनप्रस्तावाद् द्विरुक्तौ सत्यां परस्य भागस्य मा-भूदिति अभ्यस्तसंज्ञाप्रवृत्तेस्तस्यैव सम्प्रसारणप्रसङ्गात्। न चापि श्रूयमाणस्य द्वयस्य संज्ञा लभ्यते। पूर्वस्याभ्याससंज्ञायां सत्यां पूर्वशब्दाक्षिप्तस्य परस्यैवाभ्यस्तसंज्ञासम्बन्धात्, तस्मात् द्विर्वचनेऽपि सति परस्याभ्याससंज्ञानिवृत्त्यर्थं [1]वक्तव्यं द्वयग्रहणम्। तेन जोहूयत इत्यादौ द्वयोरपि धात्वभ्यासयोस्सम्प्रसारणं सिद्धं भवति। तदनेन द्वयग्रहणाभिप्रायेण जोहूयत इत्यस्योदाहरणोपन्यासः।

**जक्षादिश्च ३।३।६**

जक्ष आदिर्यस्य गणस्येति विग्रहः। अकृतद्विर्वचन इति। द्विर्वचनशास्त्राभावात्। एतेन पूर्वेणासिद्धावसत्यां योगारम्भोऽयमिति दर्शयतीत्येष जक्षादिरिति व्याकरणस्य लक्ष्यमूलत्वात्, दीधीवेव्यौ तु क्वचित् परिगृहीतौ, किं तयोरभ्यस्तकार्यमिति न विद्मः।

**चणपरोक्षा चेक्रीयितसन्नन्तेषु ३।३।७**

चेक्रीयितं च सन् चेति द्वन्द्वे सनोऽल्पस्वरस्य परनिपातलक्षणव्यभिचारसूचनार्थः। तेनोलूखलमुसल इति सिद्धम्। तथा चेक्रीयितान्ते चेति। एतेनान्तग्रहणाच्चेक्रीयितस्य द्विर्वचनं सिद्धं भवति। ननु प्रतीषिषतीत्यसनोऽकारकरणादेव तत्सेत्स्यतीति, अस्त्येतत्, अटिटिषतीत्यत्र तु सनि परे विधीयमानं पूर्वस्य द्विर्वचनमिटो न स्यात्, सन्भक्तत्वात्। सन्नन्तस्य तु द्विर्वचने सतीटो पि तत् सिद्धं भवति। द्विर्वचनं न भवतीति। व्यञ्जनादेर्धातोराद्यस्यैकस्वरस्य, स्वरादेर्द्वितीयस्य। पपाठेति। पठ् द्विरुच्यते। नन्वकारेण यथा पठिरेकस्वरस्तथावयवा अपि, तेषामपि प्रयोगान्तरे पर्यायेण द्विर्वचनं प्राप्नोति। आनर्थ-

---

१. कर्तव्यम् (भं०)

क्यान्न भवतीति चेन्न ? अर्थवद्ग्रहणपरिभाषा ह्ययं विशिष्टशब्दस्वरूपोपादाने सत्युपतिष्ठते । यथोक्तं लिङ्गसंज्ञाविधौ न चेह विशिष्टं शब्दस्वरूपमुपात्तं तत्कथं तया व्यवस्था स्यात् । एवं तर्हि समुदायद्विर्वचने सति सर्वेषामवयवानां समकालं द्विर्वचननिष्पत्तेस्समुदायस्यैव प्रत्येकमवयवद्विर्वचनपरिहारेण द्विरुक्तौ विज्ञास्यते ।

**जुहोत्यादीनां सार्वधातुके ३।३।८**

शितपा निर्देशोऽसन्देहार्थः । लुकीति कर्तव्ये सार्वधातुकग्रहणं विस्पष्टार्थम् । जुहोत्यादीनां यण्-प्रत्ययस्तस्य लुक्तेति व्याख्यायमाने सत्यवैस्पष्ट्यं स्यात् ।

**अभ्यासस्यादिर्व्यञ्जनमवशेष्यम् १३।३।६**

आदौ व्यञ्जनमिति। आदिदेशावच्छिन्नं व्यञ्जनं न तु ककारस्साक्षात् तदकरणात्, अभ्यासस्य यदादिव्यञ्जनं तदशेषं स्थाप्यं भवतीति । ननु निसर्गसिद्धं तस्यावशेषणमिति किमनेन योगेनेत्याशङ्क्याह—सामर्थ्यादिति । योगारम्भसामर्थ्यादादिव्यञ्जनावशेषनिमित्तोऽयमनादिव्यञ्जनस्य लोपो विधीयते । तेनादेर्व्यञ्जनस्यावशेषणं न त्वनादेरिति नियमविज्ञानात्सिद्धमप्यवशेषणमनादिव्यञ्जननिवृत्तिफलं विज्ञायते । यद्येवम्, असत्यादिव्यञ्जनावशेषः न प्राप्नोत्यनादिव्यञ्जनवती काचिदभ्यासव्यक्तिः, तेन पपाचेत्यादौ कस्यांचिदभ्यासजातावादिव्यञ्जनमवशिष्यमाणं सर्वत्रानादेर्व्यञ्जनादेर्निवृत्तिं करोति, अभ्यासजातेरभिन्नत्वात् । तेन किं सिद्धं भवति इत्याह—तेनेत्यादि । तेनादिस्वरावशेषदर्शनेऽप्यनादिव्यञ्जनं लुप्यत इत्यर्थः । स्वरस्यापि लोपः प्राप्नोति । आदिव्यञ्जनविशेषसमये स्वरस्य किमायातं येनासावप्यवशिष्यत इति प्रश्नार्थः । अन्यवर्णस्येत्यादि न्यायसिद्धेऽर्थे निदर्शनमेतत् । तथा ह्यादौ व्यञ्जनमवशिष्यमाणं सजातीयत्वादनादेर्व्यञ्जनस्यैव निवृत्तिं विधत्ते, न तु भिन्नजातीयस्य स्वरस्येति तस्यावशेषणमवस्थितमिति केवलस्य लोपप्राप्तिः ।

**शिट् परोऽघोषः ३।३।१०**

शिटः परः शिट्पर इति तत्पुरुषोऽयं न बहुव्रीहिः, बहुव्रीहौ ह्यघोषात् परस्य शिटो लोपार्थमिदं वचनं स्यात् । तथा च पप्सावित्यापूर्वेणैव शिटो निवृत्तिस्सिद्धेतियोगारम्भः विफलः स्यात् ।

**हो जः [1]३।३।११**

हकारस्य जकारादेशो भवतीति विपर्ययस्तु न भवति प्रकरणक्रमेण पूर्वं

---

१. ३।३।१२ (दु० वृ०)

स्थानिनो जकारस्यानुपादानात् । जुहोतेरिति लिङ्गाच्च ।

**न कवतेश्चेक्रीयिते**[1] ३।३।१२

कोरिति कर्तव्ये किमर्थः कवतेरिति विकरणनिर्देश इत्याह—[2]कार्यतेरिति विकरणनिर्देश इत्यादिको इति सामान्यनिर्देशात् कु-शब्द इत्यस्याप्यदादिकस्य ग्रहणं प्राप्नोति, अतस्तन्निवृत्त्यर्थो विकरणनिर्देशः । नहि तस्य कवतेरिति रूपं घटते विकरणस्य लुग्विधानात् । ननु चोकूयत इत्यस्य रूपस्य सिद्धये विकरणनिर्देशः क्रियते, एतच्च रूपं कारित्यपि कृते निरनुबन्धकग्रहणेन सानुबन्धकस्येति परिभाषया कु-शब्द इत्यस्य भौवादिकस्य भविष्यतीति नार्थो विकरणनिर्देशेन, नैतत् [3]प्रत्ययग्रहणपरिभाषायास्स्मर्यमाणत्वादिहाग्रहणात् । यद्वा रूपसामान्यपरिग्रहात् सानुबन्धकोऽपि गृह्यते । एवमपि लुग्विकरणपरिभाषया कु-शब्द इत्ययं न ग्रहीष्यते, कुवतेरिति तर्हि तौदादिकस्य ग्रहणमिति चेत्, न । तस्याकूतादिशब्दसिद्धये दीर्घान्तरस्य प्रयोगस्मरणात्, कोरिति रूपासम्भवात् । एवं च सत्यपार्थको विकरणनिर्देशः, अस्त्येतत्, गुर्वी तु प्रतिपत्तिस्स्यादिति यथान्यासकरणमेव ज्यायः ।

**ह्रस्वः**[4] ३।३।१३

सन्ध्यक्षराणां ह्रस्वादेश इदुताविति ह्रस्वलक्षणे सन्ध्यक्षराणामादेशे कर्तव्ये इदुतावेव ह्रस्वौ भवत इत्यर्थः ।

**दीर्घ इणः परोक्षायामगुणे**[5] ३।३।१४

अविद्यमानो गुणो यत्र प्रत्यय इति द्वित्वबहुत्वार्थाभिधायी प्रत्ययोऽत्रान्यपदार्थः । परोक्षायां यो गुण इति परोक्षायां यो व्यवस्थितो तुस्प्रभृतिरगुण इत्यर्थः । पूर्वं द्विर्वचनमिति कृते तु तस्मिन्परमपीणश्चेति यत्वं बाधित्वा वर्णमात्रापेक्षत्वेनान्तरङ्गत्वात् समानदीर्घत्वं प्राप्तमपि योगारम्भसामर्थ्यात् न प्रवर्तते । तस्मिन्हि प्रवर्तमाने सतीणः योऽभ्यास इति प्रविवेकाभावादपार्थको योगारम्भस्स्यात् । तस्मात्तदारम्भसामर्थ्यादन्तरङ्गमपि समानदीर्घत्वं न प्रवर्तते इयायेति । यद्यत्र दीर्घस्स्यात् ततस्तद्विधानसामर्थ्यादियादेशान्न स्यात् ।

---

१. ३।३।१४ (दु० वृ०)

२. कवतेरिति (भं०)

३. प्रत्ययग्रहणस्याः परिभाषायाः (भं०)

४. ३।३।१५ (दु० वृ०)

५. ३।३।१७ (दु० वृ०)

**अस्यादेस्सर्वत्र** [1]३।३।१५

नन्वाटेत्यादीनि रूपाणि समानदीर्घत्वेन सिद्धानीति किं योगारम्भेण, न चाकारे लोपमित्यस्यास्ति प्राप्तिः। विभक्त्यधिकारे तस्य विधानात्। नापि सन्ध्यक्षरयोरित्यस्य प्रत्यययोः असन्ध्यक्षरयोस्तत्र ग्रहणात्। प्रायेण हि तत्प्रकरणविहितं कार्यं प्रत्ययनिमित्तमेवेत्यसन्ध्यक्षरेऽपि तत्र प्रत्ययावेव गृह्येते। एवमाशङ्क्य परिहारार्थमाह – समानदीर्घेणेत्यादि। तस्माद् ग्रहणेन कृतदीर्घस्योत्तरत्राकारस्य नागमो यथा स्यादित्येतदर्थमयं योग आरभ्यते, अन्यथा हि परामृष्टव्याभावादपार्थकमुत्तरत्र तस्माद् ग्रहणं स्यात्, तत्तर्हीत्यादिना पराभिप्रायमाशङ्क्यमेवमित्यादिना परिहरति। असति हि तस्माद् ग्रहणेऽभ्यासमात्रात्परस्य धातोरादिवकारागमो भवतीति व्याख्यायां चक्षिङोऽपि आदिनकारागमस्स्यात्। तस्मादेतद् दोषापाकरणार्थं तस्मादिति कर्तव्यं तच्चैवमुपपद्यते यद्येषः योग आरभ्यते।

**तस्मान्नागमः परादिरन्तश्चेत्संयोगः** [2]३।३।१६

पर आगमी नकार आगमः, शिष्टं स्पष्टम्। द्विर्वचनबहुवचनयोरिति तयोः परयोः परोक्षायां चेत्यगुणत्वाद्, अगुणपरतायामनुषङ्गलोपस्य प्राप्तत्वात्। आगमग्रहणं विस्पष्टार्थम्। आदिशब्देन विशिष्टदेशावयववाचिनागमार्थतया लब्धत्वात्। आटेति। अट पट गतौ, अट द्विर्वचनम्। अस्यादेरिति दीर्घः, अस्योपधाया इति दीर्घः, दीर्घात्परलोपः। नत्वश्नोतेश्चेत्येतन्नियमार्थं विज्ञास्यते। यदा धातोरसत्यन्तसंयोगे नकारागमो भवति तदाश्नोतेरेव, नान्यस्येति। तेनाटेत्यादौ न भविष्यतीति किमेतन्निवृत्त्यर्थेनान्तश्चेत्संयोग इत्यनेन, न चाश्नाति निवृत्त्यर्थमश्नोतेश्चेत्येतत् घटते, यदि ह्येतावद् अश्नोतेश्चेत्यस्य प्रयोजनं स्यात् नाश्ना इत्येवं ब्रूयात्। एवं तर्हि शक्यते वक्तुं, एवं प्रतिपत्तिगौरवस्स्यात्।

**ऋकारे च** [3]३।३।१७

ऋकारे आदिर्नकारागमो भवतीति। एतेन ऋकारस्यागमित्वं दर्शयति। आनृधतुरित्यादिपरोक्षायां चेति गुणाभावः। आनृध इत्यादि। अत्रापि सर्वत्रात्मन इत्यादिना णत्वविधौ न-ग्रहणेन ऋवर्णादपि णत्वस्य सिद्धत्वात् यद् ऋवर्ण-ग्रहणं क्रियते तद्वर्णैकदेशावर्णत्वेन न गृह्यन्त इत्यमुमेवार्थं द्योतयति। एवं च सत्यानृधतुरित्यादौ ऋकार अंशत रेफानुगृह्यन्ते इति ऋइत्युपधेरसंयोगान्त-

---

१. ३।३।१८ (दु० वृ०)
२. ३।३।१९ (दु० वृ०)
३. ३।३।२० (दु० वृ०)

त्वात्पूर्वेण न सिध्यतीति योगारम्भः ।

भवतेरः [1]३।३।१८

भवतेरित्यकर्तृवाचीत्यपि श्तिपि शानुबन्धबलादन्विकरणः । यद्येवं यणपि स्यात्, कृत्ययुटोऽन्यत्रापीति न भविष्यति । कर्मण्यात्मनेपदमिति । आत्मनेपदानि भावकर्मणोरित्यनेन भुव इति न कृतमित्यादि । ननु चेक्रीयितलुकि तं मा भूदित्येवमर्थो भवतेरिति निर्देशस्स्यात् । तन्निर्देशे हि चेक्रीयितलुकि कार्यं नेष्यते । नास्त्यनुबन्धगणसंख्यैकस्वरोक्तिषु इति निषेधस्मरणात् । सत्यम्, अस्त्येतत् । [2]छन्दसि तु चेक्रीयितलुको विषयः । तत्र कथं प्रायशो भाषाविषयमिदं लक्षणं व्यवस्थाकारि स्यात् ।

निजिविजिविषां गुणः सार्वधातुके [3]३।३।१९

धातुत्रयोपादानाद्विषेरनन्तरं वृत्करणमनार्षमिति नोक्तम् । निजादीनामिति एदिति कर्त्तव्ये गुणग्रहणमनादिव्यञ्जन([4]मनादिव्यञ्जन)स्यायमेकारो लोपस्य बाधको विधीयत इत्याशङ्का-निवृत्त्यर्थम् ।

भृञ्हाङ्माङामित् [5]३।३।२०

भृञ् भरण इति भौवादिकस्य भृञो न ग्रहणम्, तस्य विकरणेन व्यवधानात्सार्वधातुके परेऽभ्यासासम्भवात् ।

अर्तिपिपर्त्योश्च [6]३।३।२१

तस्यैव हि सार्वधातुकेऽभ्याससम्भवतीति जौहोत्यादिकत्वात् जुहोत्यादीनां सार्वधातुक इति द्विर्वचनविधानात् । न तु ऋ गतिप्रापणयोरित्यस्येति भौवादिकस्येति । योगविभागो वैचित्र्यार्थः ।

सन्यवर्णस्य [7]३।३।२२

सन्निमित्तस्येति । सन्प्रत्ययो निमित्तं कारणं यस्याभ्यासस्येति विग्रहः ।

---

१. ३।३।२२ (दु० वृ०)
२. छन्दस्तु (भं०)
३. ३।३।२३ (दु० वृ०)
४. द्विरुक्तिः (वा०)
५. ३।३।२४ (दु० वृ०)
६. ३।३।२५ (दु० वृ०)
७. ३।३।२६ (दु० वृ०)

बुभूषतीति। उवर्णगुणादिभ्यश्चेतीडभावः। पापचिषत इति। अत्र दीर्घोऽनागमान्तस्येति कृते दीर्घे तद्विधानसामर्थ्याद् ह्रस्वभावः चेक्रीयितनिमित्तोऽत्राभ्यासो न तु सन्निमित्त इतीत्वं न भवति।

**उवर्णस्य जान्तःस्थापवर्गपरस्यावर्णे ३।३।२३**

ते जान्तस्थापवर्गा इत्यादि। एतेन बहुव्रीहावनुपसर्जनीभूता अपि जान्तस्थापवर्गा([1]त्यादिना एतेन) अवर्ण इत्यनेनार्थाद्विश्लेष्यन्ते [2]विश्लेष्यस्यान्यस्यासम्भवादिति दर्शयति। इनि कृतं स्थानिवद् भवतीत्यस्य च स्थानिवद् भवतीत्यस्य च स्थानिवद्भावस्यास्तित्वे इदमेव वचनं ज्ञापकं यदि हीनि कृतस्य कार्यस्य स्थानिवद्भावो न स्यात् ततो जिजावयिषतीत्यादौ जा इत्यादीनां द्विर्वचने कृते पूर्वेणैवेत्वस्य सिद्धत्वादपार्थकमिदं वचनं स्यात्, वचनारम्भात्तु ज्ञायते इनि कृतं वृद्ध्यादिकं कार्यं स्थानिवद् भवतीति। नन्वसत्येतस्मिन्वचने यियविषति यियविषतः इति न सिध्येत्। [3]इष्टवशाद् यौतेः सिसङ्पूङित्यादिना च पनतेरिनि कृते स्वरविधिरिति वचनात् गुणात्प्राग्द्विर्वचने कृते सन्यवर्णाभावात्। नायं दोषः, स्वरविधिपरिभाषायां कृद्ग्रहणादरिरिषतीत्यादिसिद्धये क्वचिद् द्विवचनादपि पूर्वं स्वरविधिः गुणे [4]प्रवर्तते। तस्मिन्प्रवृत्तौ द्विरुक्तौ सत्यामभ्यासस्यावर्णस्येत्वं सेत्स्यति। अथैतस्य स्थानिवद्भावास्तित्वस्य [5]ज्ञाने किं प्रयोजनम्? [6]दुधावयिषति जुहावयिषति इत्यादौ धुह इत्यादीनां द्विरुक्तिः। यद्येवमचिकीर्तदित्यत्रापि कृतेरिनि कृतस्येरन्नादेशस्य स्थानिवद्भावाद् कृत्-इत्यस्य द्विर्वचनं स्यात्। तथा चाभ्यासस्येकारान्तता न [7]सिध्यते, नैतत्। अवर्णपरतया तुल्यजातीयस्यावर्णपरस्यैव ज्ञापनात्। अभ्यासस्य य उवर्णः तस्यावर्णपरायामन्तस्थायां परस्यामिति मकारादिवर्णव्यवधानेऽप्युवर्णस्यान्तस्थपरत्वं व्यवधानेऽपि परशब्दस्य प्रयोगदर्शनात्। यथा बाल्यात्परं वृद्धत्वमिति।

**गुणश्चेक्रीयिते [8]३।३।२४**

अभ्यासस्य गुणो भवतीति। एकार ओकारश्च। कथम्, उच्यते—इह गुण-

---

१. न्यूनपाठः (भं०)
२. विशेष्यस्य (भं०)
३. यष्टि (वा०)
४. प्रवर्धते (वा०)
५. ज्ञापकेन (भं०)
६. पपावयिषति (भं०)
७. सेत्स्यति (भं०)
८. ३।३।२८ (दु० वृ०)

ग्रहणेन एदोदाः उपस्थाप्यन्ते ते चान्तरतम्यादिवर्णोवर्णऋवर्णानां स्थाने भवन्ति। तत्राभ्यासस्येवर्णोवर्णावेव स्तः न तु ऋवर्णः, तयोश्च गुणो विधीयमानः एकार ओकारश्च प्रवर्तते नान्यः।

**दीर्घोऽनागमान्तस्य [1]३।३।२५**

दीर्घग्रहणेनेह ह्रस्वस्य स्थानित्वेनाक्षेपात् ह्रस्वान्तस्याभ्यासस्य दीर्घेण भवितव्यम्। आगमविषये च धातुविशेषोपादानेन विधीयमानत्वात् विशेषविहित आगमे कृते केवलस्य सामान्यस्य दीर्घस्य प्राप्तिः। तदपार्थकमनागमान्तग्रहणमित्याकूतेन पूर्वपक्षयति। नन्वित्यादि। सामान्यस्य दीर्घस्येति धातुसामान्यसम्बन्धिनोऽभ्यासस्य विधानात् सत्यमित्यादिना सिद्धान्तयति। अभ्यासविषये बाधका बाध्यं न बाधन्त इत्यस्यार्थस्य ज्ञापनार्थमिदमनागमान्तग्रहणम्। किमेतस्य ज्ञापने प्रयोजनम्। मीमांसत इत्यादौ दीर्घत्वेन ह्रस्वत्वे[2]त्वयोरनिवृत्तिः। अजीगणदित्यत्र चैतेनादि[3]व्यञ्जनावशिष्टबाधनम्।

**वञ्चिस्रन्सिध्वन्सिभ्रन्सिकसिपतिपदिस्कन्दामन्तो नी [4]३।३।२६**

नी-शब्दो विधीयमान अभ्यासो विधिभाक्। अन्त इति नी-शब्दस्य विशेषणम्। नीरागमो भवतीति। ननु कथं पुनरागमशब्दं विना तस्यागमत्वमवगन्तुं शक्यमित्याह--अन्तशब्द इत्यादि। विशिष्टदेशावयववाचित्वेनात्रान्तशब्दस्य प्रसिद्धत्वादिति भावः। एवमन्यत्राप्येवंविधे विषयेऽन्तशब्दश्रुतावागमागमिसम्बन्धो मन्तव्यः दीर्घोच्चारणसामर्थ्यादिति। अन्यथा हि नि-शब्दमेव प्रक्रिया लाघवार्थं विदध्यात्। एतेन चेक्रीयिते नी-शब्दस्य गुणप्राप्तिरपि प्रत्युक्ता।

**अतोऽन्तोऽनुस्वारोऽनुनासिकान्तस्य [5]३।३।२७**

अनुस्वारो विधीयमान अभ्यासो विधिभाक्। अन्त इत्यनुस्वारविशेषणम्। अत इति तपरकरणं वैचित्र्यार्थम्। लाक्षणिकस्याकारान्तस्येति। यो ह्रस्व इति ह्रस्वत्वे कृते सत्यकारान्तस्य। बाभाम्यते। भाम क्रोधे भौवादिकः। अत्यर्थं भामते। य-शब्दः, अन्तग्रहणं कार्यान्तरसूचनार्थम्। तेन यंयम्यते, यंय्यम्यत इत्यादौ सानुस्वारः परसवर्णविकल्पः सिद्धः। नन्वनुस्वार एवान्तो यथा

---

१. ३।३।२६ (दु० वृ०)

२. अस्पष्ट (?)

३. व्यञ्जनावशेष्य (मं०)

४. ३।३।३० (दु० वृ०)

५. ३।३।३१ (दु० वृ०)

स्याद्वर्गान्तस्य मा भूदित्येवमर्थमन्तग्रहणं कस्मान्न भवति ? न भवति, वर्गान्तविधावनुवर्तमानयोस्सनोस्स्थानित्वादनुस्वारस्य वर्गान्तप्रवृत्तेः पुनरन्तग्रहणं "चञ्चलं हि मनः कृष्ण" इत्यादिसिद्धयर्थम् ।

**चरफलोरुच्च परस्यास्य** [1]३।३।२८

फलनिष्पत्ताविति रूपसामान्योपलक्षणमेतत् । तेन ञिफला विशरणेत्ययमपि गृह्यते । न च निरनुबन्धकपरिभाषा रूपसामान्यपरिग्रहे सत्यवतरति । परस्याकारस्येति धातुसम्बन्धिनः, गर्हित्तं चलतीति लुपपदेत्यादिना वक्तव्याच्च चरेर्य-शब्दः तदिति तपरकरणं पंफलतीत्यत्र चेक्रीयितलुक्युपधागुणनिवृत्त्यर्थम् । यद्येवं चञ्चूर्तीत्यत्र नामिनो र्वोरिति दीर्घत्वमपि न स्यात् । तद्विधौ ढे ढलोपो दीर्घश्च इत्यतश्चानुवृत्त्या भविष्यति ।

**ऋमतो रीः** [2]३।३।२९

ऋमतो धातोरिति, नत्वभ्यासस्य, असम्भवात् । अनन्त्येन च ऋता ऋम नत्वन्त्येन । तत्र ऋतः ईदन्त इत्यादिना ईकारागमविधानादृतोऽसम्भवात् । यद्येवमन्त्याभावेऽन्त्यसदेशस्येति बचनादृतिप्रभृतय एव ऋ ऋमन्तस्संगृहीताः स्युः न व्रश्चादयः । चानुवृत्तित्वेऽपि संग्रहीष्यन्ते । स्थादोश्चेति सूत्रारम्भसामर्थ्यादिति नित्यायां हि लक्षणपरिभाषायां समस्थितेत्यादौ स्थादोरिद्यतन्यामात्मन इत्यनेन विहितस्येत्यस्य लाक्षणिकत्वादेव गुणो न भविष्यतीति किं तन्निवृत्तेन स्थादोश्चेति सूत्रारम्भेण तदारम्भात्तु ज्ञायते अनित्या लक्षणप्रतिपदोक्तपरिभाषेति तेन किं सिद्धं भवतीत्याह—तेनेत्यादि । लाक्षणिक इति ग्रहिज्यावयीत्यादिना लक्षणेन विहितत्वात् ।

**रि रेफो च लुकि** [3]३।३।३०

चेक्रीयितस्य लुकि सतीति चेक्रीयितग्रहणस्य विभक्तिविपरिणामेन षष्ठ्यन्ततया व्याख्यानादेवमुक्तम् । ऋमतो धातोरितीहान्त्येनान्तेन च ऋमता ऋमत्वं धातोः विज्ञायते । चेक्रीयितलुकि छन्दोविषयः ऋदन्तस्येकारागमप्रवृत्तिं प्रति सन्देहात् । तेन करोति नृत्यति प्रभृतयो ऋमन्तो गृह्यन्ते । सर्वविधिभ्य इत्यादि । ननु लोपविधेरनेन बलवत्वमुक्तं न तु लुग्विधेः, नैतत्, लोपशब्दस्यादर्शनमात्राभिधायिनो लुक्यपि वाचकत्वेन प्रवृत्तेः । तेन लोपविधेः बलवत्वेऽपि लुग्विधेः बलवत्वं सिद्धं भवति । तत इति । चेक्रीयितलुकोऽन-

---

१. ३।३।३२ (दु० वृ०)
२. ३।३।३३ (दु० वृ०)
३. दुर्गवृत्तौ नोल्लिखितमिदं सूत्रम् ।

न्तरम्, ननु लुग्लोपेन प्रत्ययकृतमिति निषेधात् कथमत्र प्रत्ययलक्षणेन चेक्रीयिताश्रयं द्विर्वचनं प्राप्नुयादित्याशङ्क्याह—लुग्लोप इत्यादि। कथं नोपतिष्ठत इत्याह—नञा निर्दिष्टमनित्यमित्यादि। लक्ष्यदर्शनवशेन लुग्लोपवचनं क्वचित् प्रत्ययलक्षणस्यानिषेधमिति भावः। चर्करीतं च परस्मैपदमिति चर्करीतं चेक्रीयितलुगन्तमुच्यते। तददादौ मन्तव्यम्, परस्मैपदं ततो भवति इत्यर्थः। अपि शब्दादिति णत्वविधौ सन्निहितत्वात्। एवं च चरीकर्ति चरिकर्ति चर्करत्याद्यपि करोतेः चेक्रीयितलुगन्तस्योदाहार्यम्। ऋमता इत्यत्र च ऋकारव्यक्तिः गृह्यत इत्याहुः। तेन स्वरस्सवर्णस्येत्यस्या जातिविषयायाः परिभाषाया इहानुपस्थानात्। ङकारान्तानां कुङ्प्रभृतीनामभ्यासस्य सौत्रकार्यं न भवति। चरकर्ति, अत्यर्थं किरति, य-शब्दः, अन्यत् पूर्ववदिति परस्मैपदम्।

**आलोपे समानस्य सन्वल्लघुनि चण्परे**[1] ३।३।३१

लघुनोऽपि नामिनस्स्वर इति नुरागमः सनि यदुक्तमिति। सन्यवर्णस्येत्यादिना सूत्रद्वयेन इति चण्पर इति कथं पुनः चण्परः इत्ययं बहुव्रीहिरन्यपदार्थमिनं निमित्तत्वेनोपस्थापयतीति दर्शयति कथं पुनः ज्ञायते चण्पर इत्ययं बहुव्रीहिरिति, परग्रहणात्। कर्मधारये ह्यस्मिन्परग्रहणमपार्थकं स्यात्, चणीत्येवं ब्रूयात्, चण्परतः श्रिद्रुस्रुकमीनामभिसम्भवति तत्कथमिन्प्रत्ययस्यैवान्यपदार्थत्वं लभ्यत इत्याशङ्क्याह—इन्प्रत्ययोऽन्यपदार्थ इतीन्प्रत्यय एवेत्यवधारणमत्र द्रष्टव्यम्। कथं पुनः श्रयत्यादीनयास्येन्प्रत्ययस्यैवान्यपदार्थत्वं लभ्यत इत्याह—नह्यत्रेत्यादि। अत्रेति सौत्रविषय उच्यते तमितीनः प्रत्यवमर्शः। तेनायमर्थः, यत्र समान लोपाभावः, लघु च धात्वक्षरं सन्वद्भावस्य विषयत्वेनोपात्तं तत्रान्यपदार्थ इनैवोपात्तो भवितुमर्हति। इन्प्रत्ययवत्त्व एव विषये समानलोपस्य गुरुणा धात्वक्षरस्य च सम्भवात्। न तु श्रयत्यादिविषये तस्मात् सत्वभावविषयपर्यालोचनया चण् पर इत्यत्रेनैवान्यपदार्थत्वं, तेन तस्यैव निमित्तभावो लभ्यते। यद्येवं चणीत्येव क्रियताम्। एवमपि कृते श्रयत्यर्थाच्चाण्परस्यैवेनो निमित्तत्वं विज्ञास्यत इति किं परग्रहणेन, सत्यम्। अर्थलभ्यमपीनो निमित्तत्वं मन्दमतीननुगृहीतुं परग्रहणेनाख्याप्यते, अचीकरदित्यादि लघुन्यत्र व्यवहितेऽपि वचनसामर्थ्यात् सन्वद्भावः। एकवर्णव्यवहिते च तस्मिन्वचनं चरितार्थमित्यनेकवर्णव्यवहिते न प्रवर्तते। तेन अजजागरदित्यत्र न भवति। ननु व्यवधानस्याङ्गीकृतत्वात् तस्य चाविशिष्टत्वादनेकवर्णव्यवहितेन प्रवर्तत इति कस्मान्नोच्यते। स्यादेतद्, एकेन वर्णेन सर्वत्र व्यवधानमिति तदाश्रितमनेकेन तु व्यवधानं न भवति। चण् भवतीति।

---

१. ३।३।३५ (दु० वृ०)

तन्नाश्रीयत इति चेन्न, वचनेनास्य हि सामर्थ्यतोऽङ्गीकृतोऽव्यवहितो विषयः। तत्र च तद्व्यामूढ व्यवहितविषयावगाहित्वेन प्रवर्तमानं प्रविवेकशून्यमेकवर्णव्यवहितवदनेकवर्णव्यवधानेऽपि प्रवर्तते। अत्रोच्यते - लघुनीति सप्तमीनिर्देशात् सप्तम्या निर्दिष्टे पूर्वस्येति परिभाषोपतिष्ठते तत्र निर्दिष्टग्रहणस्यानन्तर्यार्थत्वादनन्तरेण लघुनि कार्येण भवितव्यम्। न च तदनन्तरमस्तीति वचनाद व्यवधानमाश्रीयते। तच्चैकेनैव वर्णेन नत्वनेकेन, कुतः, अनेकवर्णव्यवधानापेक्षया एकवर्णव्यवहिते सन्वद्भावो लघुनि न भवति। यद्येवमचिक्षणदित्यत्राप्यनेकवर्णव्यवधानान्न प्राप्नोति, त्वरादीनां सन्वदित्वबाधनार्थत्वादारम्भादेवंविधे लघुनि संयोगव्यवहितेऽपि भविष्यति। अचकथदिति। इनि लिङ्गस्यैकारस्समानो लुप्यते, अददृषदिति, अत्राप्यश्शब्दः लोपोऽकारः। एवमुत्तरसूत्रेऽपीति दीर्धत्वमेवंविधे विषये वाच्यमित्यर्थः। तत्रापि ह्यलोपे समानस्येति सम्बध्यते। तच्चैतदिन्जातेराश्रयणादिन्व्यक्तिभेदमनाश्रित्य समानलोपत्वाभावात्सिद्धमिति नापूर्वत्वेन वक्तव्यम्, वक्तव्याद् ह्रस्व इत्यसावपि हि समानलोपत्वान्न प्राप्नोति। अहं पपाचेति संज्ञापूर्वको विधिरनित्य इति वचनादुपधादीर्घत्वाभावः।

**अत् त्वरादीनां च [1]३।३।३२**

अभ्यासस्य योऽन्त्य इति। अस्येत्यस्यापेक्षणादन्त्य इति लभ्यते। अकारस्याकारविधानं सन्वदित्वं दीर्घत्वं च बाध्यत इति। ननु सन्वदित्वं बाधतु कामं तद्बाधने चापेक्षणसामर्थ्यात् कथं तद् बाधते, दीर्घत्वं स्वसामर्थ्यादेव, यदि हि विहितेऽप्यकारे दीर्घस्यादाकारमेव इममादेशं विदध्यात्। इत्येते त्वरादयः इति व्याकरणस्य लक्ष्यमूलत्वात्।

**गणेरी च [1]३।३।३३**

गणेरिति। गण संख्याने इत्यस्य चुरादीन्यस्य च लोपः, तत्र समानलोपत्वादप्राप्तयोस्सन्वदित्वदीर्घत्वयोरिदमीत्वं विधीयते।

**इतो लोपोऽभ्यासस्य [2]३।३।३४**

इतो ग्रहणमधिकारद्योतनार्थमिति मन्दमतीननुग्रहीतुमधिकारद्योतनलक्षणमितो ग्रहणस्य प्रयोजनमिति भावः। अभ्यासस्यान्त्यस्य स्यादिति।

---

१. ३।३।३७ (दु० वृ०)

१. इदं सूत्रं दुर्गवृत्तौ नोल्लिखितम्।

२. ३।३।३८ (दु०वृ०)

न्त्वस्थाने द्विर्वचनमपेक्षा, सोऽनर्थकः, कृता द्विर्वचनस्य समुदायस्यैवार्थवत्वादेकदेशस्य वर्णवदर्थवत्वाभावात्। द्विष्प्रयोजनः द्विर्वचनः पक्षेऽप्यनर्थक एव, न अर्थान्तरवाचित्वात्, न चानर्थकेभ्य एव वर्णान्त्यपरिभाषोपतिष्ठते, नानर्थके वर्णान्त्यविधिरिति वचनात्। भुवस्त्वभ्यासान्त्यस्यानर्थकस्याप्येतद्विधौ वाभ्यासविधेरर्थग्रहणस्याभिन्नस्याभिसम्बन्धात्। तेन सर्वस्यैवाभ्यासस्य लोपो विज्ञास्यते न तु तदर्थस्येति किमभ्यासग्रहणेन ? सत्यम्। इयादिकार्यमाजस्स्वरस्य पाक्षिकी लोपाशङ्का स्यादित्यभ्यासग्रहणम्। अभ्यासलोपश्चेत्युत्तरत्र कृतं ति न कृतं वैचित्र्यार्थम्।

**सनि मिमीमादारभलभशकपतपदामिस् स्वरस्य** [1]३।३।३५

डुमिञ् प्रक्षेपण इति वेति। ननु मी-ग्रहणेन कथं भिन्नरूपस्य डुमिञो ग्रहणं लभ्यते इत्याह—डुमिञोऽपीत्यादि। एवमपि लाक्षणिकत्वादस्य ग्रहणं न प्राप्नोति, लक्षणप्रतिपदोक्तपरिभाषाया अनित्यत्वाद् भविष्यति त्रयाणां ग्रहणमिति रूपसामान्यपरिग्रहात्, अन्यथा निरनुबन्धकपरिभाषया माङ्माङो न गृह्येयाताम्। दा इति दासंज्ञकानामिति ग्रहणमभिसम्बध्यते, रूपमात्रं त्वत्र न गृह्यते, इसादेशेन धा-रूपस्यापि व्याप्तत्वात्। पतिस्सनिवेडिति वक्तव्यात्। सेटि सनि पतिर्नेष्यत इति सनीति सन्व्यक्तेः परिग्रहादिटि च कृते व्यक्त्यन्तराविर्भावादिति भावः। कथं, अमीमपदिति किं कथमत्रेत्याह—अत्रेत्यादि। सन्यभ्यासलोप उच्यते, इनि चण् परे च सन्वद्भावोऽस्ति, एवं च मित्सतीत्यादिवदमीमपदित्यत्रापीनि चण्परे सन्वद्भावादभ्यासलोपः प्राप्नोति, स केन प्रकारेण न भवतीत्येषोऽत्र कथमर्थः ? उच्यत इत्यादिपरिहारः। अयमर्थः सत्यमुच्यमानोऽभ्यासलोपः इति चण्परेऽतिदिश्यमानो मीमादीनामेव योऽभ्यासः तस्य-एवातिदेष्टुं न्याय्यः न शब्दान्तराणाम्, अन्यथा हि अपीपचदित्यत्राप्यतिदेशादभ्यासलोपः स्यात्। अमीमपदित्यत्र च नायं मी इत्यस्याभ्यासः, किं तर्हि, मापेः शब्दान्तरस्येति नाभ्यातिदेशादस्ति लोपप्रसङ्गः, इमादेशसन्नियोगेन विधीयमानोऽभ्यासलोप इमादेशभावे न भवति। अथवा सन्वदिति प्राधान्यात् रूपातिदेशोऽयम्, तेन सनि यदभ्यासस्य रूपं दृष्टं तदिनि चण्परेऽतिदिश्यते न च लोपोऽतिदेष्टुं युक्तः, अरूपत्वात्। हिंसायामर्थे राधेरिति अनेकार्थत्वात्, अरिरत्सतीति। आराधनमत्रार्थः।

**आप्नोतेरीः** [2]३।३।३६

ज्ञा अवबोधन इत्यस्येन्नन्तस्य स्वरस्येति ज्ञापेरकारस्य नत्वन्त्यस्येकारस्य,

१. ३।३।३९ (दु० वृ०)
२. ३।३।४० (दु० वृ०)

तस्यानवकाशत्वात्। कारितस्यानामीति कारितलोपप्रवृत्तेः न च कारणेत्यादि कारितलोपस्यावकाशः, अत्रापि गुणादिकार्यप्रवृत्तेः तस्यानवकाशत्वात्। न चेत्वमप्यनवकाशम्, ([1]अनन्त्ययैरकारे तस्य सावकाशत्वात्।) कथं पुनस्सत्य-न्त्येनान्त्यस्य प्राप्नुयात्, उच्यते, ज्ञापिनात्र स्वरे विशेष्यते, ज्ञापेर्यस्स्वर इति न तु स्वरेण ज्ञापेः स्वरान्त्यस्य ज्ञापेरिति कुतः, अव्यभिचारात् एवं च ज्ञापिना स्वरेण विशेष्यमाणे नान्त्यस्यापि [2]स्वरेणेत्वं प्रवर्तमानं नावकाशमिति शक्यते वक्तुम्। एवं चानवकाशत्वादन्त्यस्वरे इकारे लुप्ते ज्ञापेरनन्त्यस्यैवा-कारस्येत्वं विज्ञायते, सन्येतौ वेडाविति वक्तव्यादेताविति दधिऋधिज्ञापीति इट् पक्षे त्वेतन्नेष्यत इति ईकारादेशादिलक्षणं कार्यम्, कुतो हेतोः नेष्यते, सन्नीति सन्व्यक्तेः परिग्रहात्।

**रभेरिच्च [3]३।३।३७**

सन्ययं वेडिति वक्तव्यम्, वक्तव्यादनुषङ्ग लोप इति अनुषङ्गलोपविधा-नुक्तम्। इट् पक्षे इत्वमीत्वं च नेष्यत इति सन्व्यक्तेः परिग्रहात्। चानुवृत्तेः कर्मकर्तरि मुचेस्स्वरस्य सन्यौत्वं वा भवत्यभ्यासलोपश्च, मोक्षते वत्सः स्वयमेव, मुमुक्षते वत्सः स्वयमेव, कर्मवद्भावात्कर्मण्यात्मनेपदे यणि तु कर्तव्ये कर्म-वद्भावो नेष्यते तद्विधौ व्यवस्थितविभाषानुवृत्तेः कर्मकर्तरीति किम्? मुमुक्षति वत्सं देवदत्तः।

**दिगि दयतेः परोक्षायाम् [4]३।३।३८**

दिगिति लुप्तप्रथमैकवचनम्। अभ्यासलोप इति सम्बध्यते। तत्र केचि-दाहुः—तत्र देङ् रक्षण इत्यस्य द्विर्वचने प्राप्ते दिग्यादेशोऽयमारभ्यमाणो द्वि-र्वचनं बाधते, न द्विरुक्तेरभावादभ्यासो नास्तीत्यस्याभ्यासग्रहणमिह न सम्बध्यते ([5]अन्ये तु देर्द्विवचनं दिग्यादेशेन बाध्यते) दिग्यादेशस्य यद् द्विर्वचनं प्राप्तं तत्परोक्षायां ख्याञो द्विर्वचनवदशक्यं बाधितुमिति वर्णयन्तो दिग्यादेशे कृते द्विरुक्तौ सत्यां योऽभ्यासस्तस्य लोपार्थमभ्यासलोपग्रहणमिह सम्बन्धनीय-मित्याहुः—दयतेरिति सामान्यनिर्देशे किं देङो ग्रहणम्। अथ दयतेः दानार्थस्ये-त्याह—दयतेरित्यादि। अत्रैव कारणमाह—आम्प्रत्ययेनेत्यादि। यद्येवमसन्दे-

---

१. अनन्त्ये स्वरे तस्यावकाशत्वात् (भं०)
२. स्वरस्येत्वम् (भं०)
३. ३।३।४१ (दु० वृ०)
४. ३।३।४२ (दु० वृ०)
५. को० अ० पा० (भं०)

हार्थः देङ् इति तस्मान्न कृतमित्याह—देङ् इति न कृतं वैचित्र्यात्।

[1]इति तृतीयः पादः।

## चतुर्थः पादः

**सपरस्वरायाः सम्प्रसारणमन्तस्थायाः ३।४।१**

सम्प्रसारणमिति । संपूर्वात् सर्तेरिन्नन्ताद् युट् । परिभाषेयमिति नाधिकारः। अधिकारे [2]ह्यस्मिन् प्रस्त्येः सम्प्रसारणमन्तस्थायास्सपरस्वरायास्स्थाने न स्यात्। परिभाषायां तु सकलशास्त्रव्यापित्यां तदपि सपरस्वरायास्स्थाने सिद्धं भवति। ननु तद्दीर्घमन्त्यमित्यत्र यत्तद्ग्रहणं तदस्य सम्प्रसारणस्य प्रस्त्यादिधातुविषयस्य चाभिन्नबुद्धिप्रतिपत्त्यर्थं व्याख्यास्यामः, तेन यथेदं सम्प्रसारणं सपरस्वरायाः अन्तस्थायाः स्थाने भवत्येवं [3]प्रस्त्यादिधातुविषयेऽपि भविष्यति । नैतत्, आहूतादिशब्दविषयं यदप्राकरणिकमपि यण्वद्भावार्थं सम्प्रसारणं तस्यापि दीर्घो यथा स्यात्, इत्येवमर्थं तत्र तद्ग्रहणं स्यात् । स्यादेतत्, अन्त्यग्रहणादेवानन्त्यसंप्रसारणदीर्घदीर्घव्यावृत्त्यर्थादातिदेशिकस्य सम्प्रसारणस्य दीर्घो भविष्यति । अन्यथा गृहीत इत्यादावनन्त्यस्य सम्प्रसारणस्याप्राकरणिकत्वादेव दीर्घो भविष्यतीति किमन्त्यग्रहणेन कृतं स्यात्। कृतं च ततो ज्ञायते यदुताप्राकरिणकस्यापि सम्प्रसारणस्य दीर्घत्वमस्तीति । एवञ्च तद्ग्रहणमतिरिच्यमानमभिन्नबुद्धिप्रतिपत्त्यर्थमेव ज्ञायते। [4]ननु प्रस्त्यादिधातुविषयमपि यत्सम्प्रसारणं तस्य दीर्घत्वं प्रतिपत्त्यर्थमन्तग्रहण स्यात्, अन्यथा वेञ् सम्प्रसारणस्यैवानन्तरत्वाद् दीर्घत्वं भवेत्। ततोऽन्त्यः सामान्यपरिग्रहार्थं भवन्नन्त्यग्रहणं कथमातिदेशिकस्य सम्प्रसारणस्य दीर्घत्वं प्रवर्तयेत्। व्येञ्सम्प्रसारणस्यैव दीर्घत्वप्रवृत्तौ संपरिभ्यां वा दीर्घश्चेत्येकमेव योगं कुर्यादिति चेन्न, सति ह्येकयोगे लब्धस्थानिवद्भावायाः अन्तस्थाया एव पाक्षिकं दीर्घत्वं प्रसज्येत्, न तु सम्प्रसारणस्यानन्त्यस्यापि। तर्हि सम्प्रसारणस्य दीर्घत्वं स्यात्, अन्त्यग्रहणस्यान्त्यसामान्यपरिग्रहार्थत्वेनान्त्यविषये व्यावृत्तिकारित्वाभावादिति चेत्, न च तदुक्तमिति सामान्येन ज्ञापकान्न

---

१. भट्टोग्रभूतिकृतायां शिष्यहितायां वृत्तौ शिष्यालोकाभिधाने आख्यातप्रकरणे तृतीयः पादः (भं०)

२. हन्त्यस्य सम्प्रसारणमित्यादिना प्रकारेण विधीयमानमप्राकरणिकम् (भं०)

३. प्रस्थादि (वा०)

४. तन्न अस्त्यस्याः (भं०)

भविष्यति तदेवं तद् ग्रहणमाहूतादौ सम्प्रसारणदीर्घत्वप्रवृत्त्यर्थं भवदभिन्नबुद्धिप्रतिपत्त्यर्थत्वेनाशक्यं व्याख्यातुम् । अतः प्रस्त्यादिधातुविषयस्यापि सम्प्रसारणस्य सस्वरान्तस्थाविषयत्वेन प्रवृत्तिर्यथा स्यादिति परिभाषैव ज्यायसी न त्वधिकारः । किं च यदधिकारः स्यात्, उत्तरत्रैव सपरस्वराया इत्यादि पदत्रयं ब्रूयात् । असंयुक्तविधानं त्विदमपार्थकं भवेत् । परिभाषास्वरूपं व्याख्यातुमाह—परेण स्वरेणेत्यादि । अन्तस्थास्थानिकानामेव य्वृतां सम्प्रसारणव्यपदेशादन्तस्थाया एव सिद्धं सम्प्रसारणमिति सपरस्वरत्वमत्र परिभाष्यते । ननु [1]न परिभाषितव्यं तत्, तथाहि यदि ग्रहादीनामन्तस्थमात्रस्य सम्प्रसारणं स्यात् । ततस्तस्य सपरस्वरनिमित्तके रत्वादिलक्षणे सन्धिकार्ये कृते सति यदेव रूपं सम्प्रसारणात्प्रागासीत् तत्कृतेऽपि सम्प्रसारणे सम्पद्यते इति विफलं सम्प्रसारणविधानं स्यात् । एवं च मा भूत् तस्य वैफल्यमिति तद्विधानबलादेव सिद्धं सपरस्वराया अन्तस्थायाः । सम्प्रसारणमिति नार्थोऽनया परिभाषयेति पूर्वपक्षयति । नन्वित्यादिना अपार्थकं सपरस्वरग्रहणमिति प्रधानपदाक्षेपद्वारेण [2]सूत्रस्यैवायमाक्षेपः, असारमेतदित्यादिना तस्य प्रयोजनमाह—अयमर्थः यथा सम्प्रसारणविधानसामर्थ्यान्न[3] प्रवर्तते, तथा च गृह्णातीत्यादयः प्रयोगाः अकृतरत्वादिलक्षणाः सन्धिकार्याः स्युः । तन्मा भूदेष इति परिभाषार्थमिदमारभ्यते । परेणैवेत्यादि । यद्यपि [4]पूर्वदेशावस्थितेनापि स्वरेण सस्वरत्वं भवति । ननु धातुपरदेशावस्थितेन च सहभावस्योभयथापि घटनात्, तथापि परेणैव स्वरेण सस्वरत्वं शास्त्रे प्रसिद्धं न पूर्वेण, तथा च त्वमत्रेत्यत्र मकारस्य विद्यमानेऽपि पूर्वस्मिन्स्वरे लब्धस्वरव्यपदेशस्य [5]सतः परनयनं कुर्वन्ति । एवं च सस्वराया इत्येवमपि कृते [6]परेणैव सस्वरत्वं विज्ञास्यत इति किं परग्रहणेनेत्याह—परग्रहणं विस्पष्टार्थमिति । असति हि परग्रहणे वयो यकारस्य पूर्वस्वरेणापि सम्प्रसारणशङ्कायामवैस्पष्ट्यं स्यादिति भावः । स्वरग्रहणमपि विस्पष्टार्थमेव । ननु धातुस्वरेण यथा स्यात्, [7]ऊयतेरित्यादौ प्रत्ययस्वरेण मा भूदिति विशिष्टस्वर-

---

१. च (भं०)

२. सूत्रस्यायमाक्षेपः (वा०)

३. तसस्वरायास्सम्प्रसारणं भवति, एवं सामर्थ्यस्याविशेषादन्तस्थामात्रस्यास्वरस्य कृतसम्प्रसारणे सन्धिकार्यमेव सम्प्रसारणविधानसामर्थ्या (स्खलितपाठः)

४. पूर्ववदेव (भं०)

५. स ततः परं यं च (भं०)

६. नैव स्वरेण (भं०)

७. यतुरिन्यादौ (भं०)

परिग्रहार्थं स्वरग्रहणं स्यात्, नैतत्, अगुणे हि परे पूर्वस्य वयेरन्तस्थायाः सम्प्रसारणं ([1]विधीयते, प्रत्ययस्वरस्य निमित्तभावेनागमात् पूर्वं कार्यसम्बन्धेऽङ्गभावो नास्तीति केवलेन सह सम्प्रसारणस्य प्राप्तिः। व्यधादिवकारस्य परेण यकारेण सह सम्प्रसारण)मसति स्वरग्रहणे स्यादिति चेत्, एवं हि सति सम्प्रसारणनिषेधारम्भो निर्विषयः स्यात्। ननु सम्प्रसारणनिषेधारम्भे संज्ञापूर्वकत्वेनान्तस्थायाः स्थाने यूवृतो [2]भाव्यन्ते। भावितानां च तेषां सम्प्रसारणसंज्ञा ([3]विधीयत इति संज्ञाविधानयोः परस्परप्रतिबन्धादितरेतराश्रयदोषः प्राप्नोति, सत्यम्, भाविसंज्ञा)विधानाददोषः। यथा अस्य सूत्रस्य शाटकं वयेति। तेन ते ([4]यूवृतोऽनेन प्रकारेण भाव्यन्ते) येषां भावितानामुत्तरत्र सम्प्रसारणसंज्ञा विधीयत इति सम्प्रसारणसंज्ञातोऽन्तस्थायाः स्थानित्वे लब्धे अन्तग्रहणं सम्प्रसारणबलीयस्त्वार्थम्। तेन [5]शुशुवतुरित्यादौ श्वि, अतुस् उस् इति स्थिते परमपीयादेशं बाधित्वा सम्प्रसारणं सिद्धं भवति।

**ग्रहिज्यावयिव्यधिवष्टिव्यचिप्रच्छिव्रश्चिभ्रस्जीनामगुणे ३।४।२**

वेञो वयिरित्येतेन ग्रहादिभिरात्मनेपदिभिस्साहचर्यादात्मनेपदिनो वयेरादेशस्य ग्रहणम्, नत्वयवेत्यादि गत्यर्थधातुवर्गपरिपठितस्य वय गतावित्यस्यात्मनेपदिन इति दर्शयति। यद्यपि च वेञो वयिरादेशः वेञ्च यजादिः। अतः स्थानिवद्भावादेव यजादित्वाद् वयेस्सिद्धं सम्प्रसारणं तथापि तस्य [6]न वेञ्श्व्योरगुणे च इति यो निषेधः प्राप्नोति स मा भूदित्येतदर्थं वयिग्रहणमिह क्रियते। वष्टीति श्तिपा निर्देशाच्चेक्रीयितलुकि न भवति वावष्टः। चेक्रीयितलुगन्ताद्ववरीर्वर्तमाना तस्। उरुव्यच इत्यत्रासुनि कुटादित्वाल्लब्धगुणव्यपदेशेऽपि व्यचेस्सम्प्रसारणं न भवत्यौणादिकत्वात्।

**स्वपिवचियजादीनां यण् परोक्षाशीष्षु ३।४।३**

इहायमादिशब्दोऽन्ते प्रयुज्यमानोऽपि स्वपिवचिभ्यां कस्मान्न सम्बध्यते इत्याह—आदिशब्द इत्यादि। यजिनैवेत्यवधारणमत्र मन्तव्यम्। कस्मात् पुनर्यजिनैव सम्बध्यते न तु स्वपिवचिभ्यामित्याह—स्वपिग्रहणं ह्यपार्थकं

---

१. को० न्यूनपाठः (भं)
२. बाध्यन्ते (भं०)
३. को० न्यूनपाठः (वा०)
४. प्रकरणेनानेन यूवृतः बाध्यन्ते (भं०)
५. एतेषु पपतुरित्यादिषु (भं०)
६. न वाश्व्योरगुणे च (दु० वृ०)

स्यादित्यसावपि हि वच्यादिरिति । यद्यादिशब्दस्य द्वन्द्वगर्भो बहुव्रीहिराश्रयणेन स्वपिवचिभ्यामपि सम्बन्धस्स्यात् ततो वचिवयी अपीत्यत्र स्वपेः पाठाद् वचादित्वादेव सिद्धं स्वपेरपि सम्प्रसारणमिति पृथक् स्वपिग्रहणं न कुर्यात् । कृतं च ततो ज्ञायते नायमादिशब्दः प्रत्येकं सम्बध्यत इति । ननु स्वपिवचियजादयस्त्रयः यण् परोक्षाशिषोऽपि तिस्रः तत्र स्युः । यथासंख्यं कस्मान्न भवतीत्याह—यथासंख्यमनुदेश इत्यादि । अनित्यत्वं चास्याः परिभाषायाः न वेञ्श्व्योरगुणे चेति सूत्रारम्भादेव गम्यते । नह्यत्र यथासंख्ये सति वेञ्श्व्योः यजादिपठितयोः परोक्षायामगुणायामस्ति सम्प्रसारणप्राप्तिः येन तयोः सफलो निषेधारम्भः स्यात् ।

**परोक्षायामभ्यासस्योभयेषाम् ३।४।४**

उभावयवौ येषामिति उभशब्दात् तसादित्वादयप्रत्ययः । उभयशब्दोऽत्र ग्रहादिस्वपादिराशी द्वावपेक्ष्य प्रयुक्तः । राशिद्वयान्तर्गतास्तु बह्वीर्व्यक्तीरपेक्ष्य बहुत्वेन निर्देशः । तदेतदाह—उभयेषां ग्रहादीनां स्वपादीनां चेत्यादि । सत्यसति वा सम्प्रसारण इति । सति सम्प्रसारणे अकार इवर्णस्येत्यत्वविधानादसत्यप्यादिव्यञ्जनावशेषादिरेफलोपः प्रवर्तत इति भावः । व्रश्चेरप्यविशेष इति सत्यसति वा सम्प्रसारण इत्यनुषज्यते । व्रश्चेरप्यविशेष इत्येकीयमतमसारमित्याह—अकृत इत्यादि वकारस्य सम्प्रसारणं स्यादिति । व्रश्चेर्ग्रहाद्यन्तर्भावात्प्रवृत्तिमतः सम्प्रसारणस्य निषेद्धुमशक्यत्वात् । कृते तर्हि रेफस्य सम्प्रसारणे यावत्सम्भवस्तावद्विधिरिति वकारस्यापि कस्मान्न भवतीत्याह—कृतेत्यादि ननु कोऽयं सम्प्रसारणनिषेधस्य विषयः यावता सम्प्रसारणे सति सम्प्रसारणे वा [1]परस्मिन् सम्प्रसारणस्य निषेधः । न च रेफस्य यत् सम्प्रसारणं तत्सदिति वा परमिति वा शक्यते व्यपदेष्टुम् अत्वस्य प्रवृत्तेः । न चात्वस्य स्थानिवद्भावोऽस्ति, अवर्णविधाविति निषेधादपर-निमित्तकत्वाच्च । एवं तर्हि सम्प्रसारणजातमत्वमेवोपचारात्सम्प्रसारण([2]वतीषु व्यक्तिषु गौणभेदे सम्प्रसारण)शब्देनाभिधायिष्यते यथा—काकाज्जातः काक इति, तेनान्ते सम्प्रसारणव्यपदेशभाजि सति परस्मिन्वा वकारस्य सम्प्रसारणनिषेधः सिद्धो भवति । विध्यादित्यादौ निषेधविषयमेव सम्भवति सति को नाम दैवश्रप्ता उपचारमाश्रयेत् । अस्त्येतत्, व्यक्तिपक्षपरिग्रहे सर्वासु सम्प्रसारण([3]वतीषु व्यक्तिषु गौणभेदभिन्नास्वपि निषेधः प्रवर्तिष्यते अतो व्रश्चेरभ्यासस्य

---

१. प्यस्मिन् (भं०)

२. को० न्यूनपाठः (भं०)

३. को० न्यूनपाठः (वा०)

सम्प्रसारणे) सति विशेषः। अगुणार्थं चेदमिति च-शब्दोऽवधारणे सगुणार्थमेवेदमित्यर्थः, कथं पुनरगुणप्रस्तावेऽपि सगुणत्वमस्य योगस्य शक्यं विज्ञातुमित्याह—अगुणे हीत्यादि। कृते धातोः सम्प्रसारणे इति पूर्वेण योगद्वयेनाभ्यासस्य तत्सञ्जातमिति कृतसम्प्रसारणस्य द्विर्वचनविधानात्। तस्माद् योगारम्भसामर्थ्यात् अवसीयते, तत्र सगुणे धातोस्सम्प्रसारणं नास्ति तदर्थं वचनमिति उभयेषां ग्रहणमनन्तराणामेव स्वपादीनामनुवृत्तिः मा भूदिति।

**न वेञ्श्व्योरगुणे च** [1]३।४।५

च-शब्दादित्यादि। अगुणे चेत्यगुणग्रहणादनन्तरं च-शब्दः श्रूयमाणः सगुणायां परोक्षायां प्रतिषेधं समुच्चिनोति। न च सगुणायां तस्यां वेञो धातोः श्वयते वा सम्प्रसारणप्राप्तिरस्तीत्यर्थात्तयोर्योऽभ्यासस्तस्य च शब्दात्सम्प्रसारणनिषेधो विज्ञायते, यजादित्वात्प्राप्तिरिति धातोरभ्यासस्य च तत्र धातोः स्वपिवचीत्यादिना प्राप्तिः। अभ्यासस्यापि परोक्षायामभ्यासस्येत्यादिना। अतएव श्वयुवेर्वेत्यनेन श्वयतेर्धातोः परोक्षायां सगुणायां सम्प्रसारणाभावपक्षे अभ्यासस्य सम्प्रसारणम्। परोक्षायामभ्यासस्येत्यादिना प्राप्नोति तन्निवृत्त्यर्थमिह श्वयतेर्ग्रहणं क्रियते।

**स्वापेश्चणि** [2]३।४।६

स्वापेरितीन्नन्तस्यानुकरणभूतः स्वपिरिह निर्दिश्यते यदि तु निर्देश काल एवेन्प्रत्ययः क्रियते ततस्तदन्तस्य धातुत्वात्षष्ठी नोत्पद्यते। एवं सर्वत्रेति निर्देशो बोद्धव्यः। स्वापेरिन्नन्तस्येति नत्वाप्नोतेः सुपूर्वस्येन्नन्तस्य, अवयवप्रसिद्धेस्समुदायप्रसिद्धिर्बलीयसीति वचनात् केवलस्य स्वापेश्चणि ग्रहणादित्यादि। असतीनो निर्देशो केवलस्य स्वपेश्चणपरत्वमिति वचनाद्विज्ञायते यथा—श्वयतेर इत्यत्र श्वयते अण्परत्वम्। तच्चैवं विज्ञायते इतीनो निर्देशः कर्तव्यः।

**चायः की** [3]३ ४।७

दीर्घोच्चारणं प्रक्रियालाघवार्थमिति। अयमत्रार्थः, ह्रस्व उच्चार्यमाणे नाम्यन्तानां यणायीत्यादिना दीर्घत्वे सति प्रक्रियागौरवं स्यात्। चेक्रीयित इति × चेक्रीयितलुगर्थं तु दीर्घोच्चारणं न भवति। चेक्रीयिते लुक्यपि

१. नवाश्व्योरगुणे च ३।४।६ (दु० वृ०)
२. ३।४।८ (दु० वृ०)
३. ३।४।१० (दु० वृ०)

प्रत्ययलक्षणेन द्विर्वचनादिकार्यवद् दीर्घत्वस्यापि प्रवृत्तेः। अस्य योगस्योत्तरत्रास्य च सम्प्रसारणप्रकरणे प्रणयनं [1]श्वयतेर्वेत्यत्र चेक्रीयितपरोक्षयोरुपजीवनार्थम्। अन्यथा द्विश्चेक्रीयितपरोक्षायाः ग्रहणे कर्त्तव्ये स्याताम्, अतएवानुकृष्टस्याप्युत्तरत्र चेक्रीयितस्य श्वयतेर्वेत्यत्रानुवृत्तिस्सिद्धा भवति।

श्वयतेर्वा [2]३।४।८

वा सम्प्रसारणं भवतीति। नत्वनन्तरः [3]वीभावः विशेषातिदिष्टः प्रकृतं न बाधत इति वचनात् सम्प्रसारणे प्राप्ते चायं विकल्पः चेक्रीयिते अप्राप्तत्वात्परोक्षायामगुणायां यजादित्वान्नित्यं प्राप्तत्वादन्यत्रापि प्राप्तत्वात्।

कारिते च संश्चणोः [4]३।४।९

चण्परे सन्पर इत्युभयत्रापि बहुव्रीहिः। अथ शुशावयिषतीत्यत्र सन्नुत्पत्तेः पूर्वमिनाश्रया वृद्धिः कस्मान्न भवतीत्याह—अपवादविषय इत्यादि। इच्छाविशिष्टोऽत्र हेतुहेतुमद्भावो विवक्षितः न हेतुहेतुमद्भावमात्रम्। अत इच्छायां शुशावयिषतीत्यत्र सन्नुत्पत्तेः। तस्मिन्प्रयोगे सन्कार्ये सत्यपवादस्य सम्प्रसारणस्यायं विषयो भवति सन्परे कारिते सम्प्रसारणविधानात्। न चापवादविषय उत्सर्गः प्रवर्तते तेनात्र [5]सम्प्रसारणविषय इनाश्रया वृद्धिर्न भवति। ननु बहिरङ्गासिद्धपरिभाषाया वृद्धावन्तरङ्गायामिन्मात्राश्रयायां कर्त्तव्यायां बहिरङ्गं सन्परं कारितमाश्रित्य यद्विधीयते सम्प्रसारणं तदसिद्धमिति कथमिव सम्प्रसारणेन वृद्धिरत्र बाध्यते, अस्त्येतत्, अन्तस्था ग्रहणात्तु सम्प्रसारणबलीयस्त्वमुक्तम्, अतो यथा शुशुवतुरित्यादौ परमपीयादेशं बाधित्वा सम्प्रसारणं भवति। एवं च शुशावयिषतीत्यादावप्यन्तरङ्गां वृद्धिं बाधित्वा सम्प्रसारणमेव बलीयः प्रवर्तते। सनः पूर्वमिति। उपलक्षणमेतत्, चणः पूर्वमित्यपि बोद्धव्यम्। अपवादो हि सम्प्रसारणमिति धातुप्रत्ययविशेषं चोपादाय विधीयमानत्वात् वृद्धिः तूत्सर्ग इति नामिनात्र संशब्देन विधानादुत्सृज्यते सामान्येन विधीयत इत्यर्थः।

यदि सम्प्रसारणेनापवादत्वाद् वृद्धिर्बाध्यते तर्हि प्रवृत्ते सम्प्रसारणे

---

१. श्वयतेरन्यत्र (भं०)
२. ३।४।१२ (दु० वृ०)
३. प्र (भं०)
४. ३।४।१३ (दु० वृ०)
५. विना (भं०)

तस्यापवादत्वानपायाच्छुशब्दस्य वृद्धिर्न प्राप्नोति इत्याकूतेनाह—कृते हीत्यादि। पुनः प्रसङ्गविज्ञानाद् भविष्यतीति परिहारः। अयमर्थः द्वे अत्र वृद्धी, एका शिवस्थानिका शु-स्थानिका चान्या। तत्र यदि शिवस्थानिकायाः वृद्धेः सम्प्रसारणेनापवादत्वाद् बाधः किमेतावता शुस्थानिका चान्या, तत्र शुस्थानिकाया अपि बाधस्स्यात्। ततस्तद्विषयायाः वृद्धेरबाधात् प्रसङ्गः। प्रवृत्तिर्विज्ञायत इत्यसौ भवत्येव। यदि तर्हि द्वे वृद्धी पुनरर्थो न सङ्गच्छते। वृद्धिशब्दसामन्यात्संगम्यते।

**ह्वयतेर्नित्यम्** [1]३।४।१०

जुहावयिषतीत्यत्र शाच्छासेत्यादिना विधीयमानमायिरादेशोऽन्तरङ्गत्वात्प्राप्तमपि सम्प्रसारणं बाधते बलीयस्त्वात्। नित्यग्रहणं विकल्पनिवृत्त्यर्थम्। ननु ह्वयतेरिति क्रियताम्, पृथग् योगारम्भारच्चास्माद्विकल्पो निवर्तिष्यते। असत्यां हि तन्निवृत्तौ ह्वश्च कारिते च संश्चणोरित्येकमेव योगं कुर्यात् नैतत्, कारितमात्रानुवृत्तयेऽपि ह्वयतेः पृथग्योगारम्भः आशङ्क्यते, ततश्चैवं पृथग्योगादनिष्टमाशङ्क्यमाने विकल्पनिवृत्तिरशक्या विज्ञातुमिति नित्यग्रहणम्।

**अभ्यस्तस्य च** [2]३।४।११

च-शब्दो ह्वयतेरनुकर्षणार्थः, यद्येवं ह्वोऽभ्यस्तस्येति क्रियतां किं पूर्वेण योगेन, नैतत्, एवं क्रियमाणे सति ह्वयतीति ह्वायकः, वुण्, तमाचष्ट इतीन्, ह्वायकयतेस्सन्, जिह्वायकयिषतीत्यत्रापि प्राप्नोतीत्येतदपि ह्वोऽभ्यस्तमाद्यस्यैकस्वरस्य द्विर्वचनविधानात्। पूर्वस्मिन्तु [3]योगे आरभ्यमाणे सत्यत्र न भवति, तस्यानभ्यस्तनिमित्तेन प्रत्ययेनकारितेनैव व्यवधाने सम्प्रसारणविधानार्थत्वात्प्रत्ययान्तरकृतव्यवधानपरिहारादिति यथान्यासकरणमेव ज्यायः, इह तु कृतद्विर्वचनस्य ह्वयतेर्द्वयोरपि धात्वभ्यासयोस्सम्प्रसारणमिष्यते, तच्च न प्राप्नोति, एकस्य भागस्य कृते सम्प्रसारणे अपरस्य न सम्प्रसारणे सम्प्रसारणमिति प्रतिषेधप्रवृत्तेः। अभ्यस्तस्य सम्प्रसारणं कर्तव्यम्, अभ्यस्तसंज्ञा च द्वयस्येत्युभयोरपि धात्वभ्यासयोः ([4]समुदित)योरेका, तत्रैकस्यापि भागस्य सम्प्रसारणे सति कृतसम्प्रसारणमभ्यस्तं सम्पन्नमवयवात्मकत्वात् समुदायस्येत्यपरो भागो कृतसम्प्रसारण एव

---

१. ३।४।१४ (दु० वृ०)

२. ३।४।१५ (दु० वृ०)

३. सूत्रे (भं०)

४. सम्प्रसारणं भविष्यतीति, तन्न, यस्मादभ्यस्तसंज्ञासंपादितधात्वभ्यास (भं०)

श्रूयेत, एवं तर्हि प्राथम्यात् पूर्वमभ्यासस्य भविष्यति ततः परस्येत्येवं च सति नास्त्यवसरः, सम्प्रसारणनिषेधस्य सम्प्रसारणे परतस्तस्य प्रवृत्तेः। अथापि सम्प्रसारणे सतीति सत् सप्तमी व्याख्यायते। एवमपि सप्तम्या निर्दिष्टे पूर्वस्यान्तस्थावर्णस्य निषेधेन भवितव्यम्, नोत्तरस्य। यत्तूक्तमेकस्यापि सम्प्रसारणे सति कृतसम्प्रसारणमभ्यस्तं सम्पन्नमित्यपरस्य सम्प्रसारणं न स्यादिति, तन्न, यतोऽभ्यस्तसंज्ञा द्वयस्य विधीयते, द्वौ चावयवौ यस्य तत् द्वयमुच्यते, तत्रैकस्यावयवस्य प्रवृत्तेऽपि सम्प्रसारणं ([1]प्रवृत्तमेव) अभ्यस्तस्य सम्प्रसारणविधानादभ्यस्तव्यपदेशस्य च द्वयविषयत्वेन प्रवृत्तेरवयवान्तरस्य विना निमित्तं परिहर्तुमशक्यत्वात्। अतो द्वयोरपि धात्वभ्यासयोस्सम्प्रसारणं सिद्धं भवति।

**द्युतिस्वाप्योरभ्यासस्य [2]३।४।१२**

स्वपेश्चेन्नन्तस्येति, न तु घञन्तेन्नन्तस्य, कुतः, स्वापेः श्रुतो घञः अप्रतिभासमानत्वात्। तस्य हि स्वपिरिन् प्रत्ययश्च प्रतिभासते। न तु घञपि, तत्कथमप्रतिभासमाने विना हेतुं घञन्तेन्नन्ते स्यात् कार्यम्। तेन तत्र सिस्वापयिषतीत्येव भवति।

**न सम्प्रसारणे सम्प्रसारणम् [3]३।४।१३**

पुनरिकारसहितस्तस्य वकारस्य न भवतीति यावत्सम्भवस्तावद्विधिरिति प्राप्तम्; ननु कथं प्राप्तम्, यावता [4]व्यतिवच्योरविकृतयोस्तद्विधीयते न तु विकृतयोरित्याशङ्क्याह—यद्यपीत्यादि।

**सन्ध्यक्षरान्तानामाकारोऽविकरणे [5]३।४।१४**

विकरणविषये न भवतीत्येतेन विकरण इति प्रसज्यप्रतिषेधपक्षाङ्गीकारेण विषयसप्तमीयं न तु पर्युदासपक्षा[6]ङ्गीकारेण परसप्तमीति दर्शयति ननु सन्ध्यक्षरेण धातुं विशेषयिष्यामः, विशेषणेन विशेष्यस्य तदन्तविधिर्भवति, अतोऽन्तरेणाप्यन्तग्रहणं सन्ध्यक्षरान्तत्वं विज्ञास्यत इति नार्थोऽन्तग्रहणेन, अस्त्येतत्,

---

१. यद्यवयवान्तरनिषेधकं वचनं नास्ति ततस्तस्यापि सम्प्रसारणं प्रवर्तेत एव (भं०)

२. ३।४।१६ (दु० वृ०)

३. ३।४।१७ (दु० वृ०)

४. विधिव्यधोऽग्नि (वा०)

५. ३।४।१८ (दु० वृ०)

६. वष्टम्भेव (भं०)

विशेषणविशेष्यभावं प्रति तु कामचाराद् धातुभिरपि सन्ध्यक्षरं विशेष्यते। धातूनां यत्सन्ध्यक्षरमिति ततो ढौकितेत्यादौ मध्यवर्तिनोऽपि सन्ध्यक्षरस्यात्वं प्रसज्येत, तन्मा भूदेष दोष इत्यन्तग्रहणं कर्त्तव्यम्। सन्ध्यक्षरस्य लाक्षणिकत्वादिति लक्षणानुसन्धानद्वारेण सन्ध्यक्षरमुपजातं, तत्र प्रतीतेर्बहिरङ्गत्वादात्वं न भवतीति भावः। तथा च मीनात्यादीनामात्वमारभ्यते। अन्यथा तु तेषामपि गुणवृद्ध्योः कृतयोः सन्ध्यक्षरत्वादेवात्वं सिद्धमिति मीनात्यादिसूत्रं न कुर्यात्। ([1]यणि परतो लोपविधानाद्विकरण आत्वं न भविष्यतीति मन्यमानस्य प्रश्नः? यद्येवैतद् ज्ञापकं स्यात्, न विकरणान्तर इति मन्वानः प्रत्युदाहरति सुग्लायतीति।) अविकरण इति—पर्युदास एवायं प्रसज्यप्रतिषेधो वेति सन्देहावसर आह—अविकरण इति नायं पर्युदास इति। यदि स्यात्, किं स्यादित्याह—तस्मिन्हसतीत्यादिपर्युदासे हि सति विकरणसदृशे प्रत्यये परत आत्वं विज्ञास्यते। ततश्च किं भवेदित्याह—ततश्चेत्यादि। प्रत्ययनिमित्तमात्वे विज्ञायमाने सति सुग्ल इत्यत्र शोभनं ग्लायतीति विगृहीतेनानुत्पाद्य प्रत्ययमात्वं शक्यं कर्तुमिति कर्तृविहिते तृचि परत आत्वं स्यात् ततश्च सुग्लातेत्यनिष्टं रूपमापद्येत। प्रसज्यप्रतिषेधे तदनिष्टं नापद्यत इत्याह—प्रसज्यप्रतिषेधे त्वित्यादि। तत्र हि विकरण([2]निषेधमात्रे तात्पर्यम्, न तु विकरण) सदृशे प्रत्यये परतो न विधानम्, अतः सु[3]पूर्वस्य ग्लायतेर्निमित्तानपेक्षया पूर्वमात्वं प्रवर्तते, प्रवृत्ते तस्मिन्नादन्तत्वात् ग्लायतेरादन्तनिमित्तः उपसर्गे त्वातो ड इति ड-प्रत्ययस्सिद्धो भवति। तस्मादविकरण इति प्रसज्यप्रतिषेधोऽयं तेन विकरणविषये न भवतीत्यविकरण इति विषयसप्तमीयं जायते न परसप्तमी।

**नॉव्ययतेः परोक्षायाम्** [4]३।४।१५

परोक्षायां विषय इति न तु परस्याम्, निमित्तानपेक्षस्य पूर्वमात्वस्य विधानात्। परोक्षायामिति च सामान्योपादानेऽप्यद्बलादेव गृह्यते न वचनान्तरम्। तत्रागुणत्वाद्यजादित्वात्सम्प्रसारणस्य प्रवृत्तौ सत्यां निषेधस्य विशेषानुपलम्भात् आत्वं न भवतीति पूर्वेण प्राप्तम्। ननु आनुबन्धत्वादसन्ध्यक्षरान्तत्वाद् व्येञः कथं तस्य प्राप्तिः। उच्यते, नानुबन्धकृतमसन्ध्यक्षरान्तत्वमिति वचनात्।

१. को० अधिकः पाठः (मं०)
२. को० अ० पा० (मं०)
३. सु प्रत्ययस्य (मं०)
४. ३।४।२१ (दु० वृ०)

**मीनातिमिनोतिदीङां गुणवृद्धिस्थाने** [1]३।४।१६

आमन्त्रणाद् गणाच्चौरादिकाददन्तात्। गुण्यत इति स्वरान्तत्वादल्, वर्धनं वृद्धिः, स्त्रियां क्तिः, तिष्ठतेऽत्रेत्यधिकरणयुडन्तः स्थानशब्दः, आकारोऽनुवर्तत इति, नत्वनन्तरः प्रतिषेधः प्रतिषेध्याभावात्। गुणवृद्धिस्थाने प्रत्यय इति विषयसप्तमीयं न परसप्तमी तेन गुणवृद्धिस्थाने प्रत्यये निर्विषयभूतेऽनुत्पन्न एव मीनात्यादीनां पूर्वमात्वं भवति। एवं च कृत्वा [2]उपादेयो वर्तत इत्यत्र स्वरान्तलक्षणमलं बाधित्वा इङाभ्यामित्यकारान्तलक्षणो घञ् सिद्धो भवति। ईषदुपादानमित्यत्र च खलं बाधित्वा आतो युः दरिद्रातेरिति युः, ननु गुणवृद्धिस्थाने प्रत्यय इति कथमयं सामानाधिकरण्येन निर्देशः। नहि प्रत्ययो नाम गुणस्य वृद्धेर्वा स्थानं किन्तर्हि प्रकृतिरित्याशङ्क्याह—यस्मिन्प्रत्यय इत्यादि। एतेन तिष्ठतिरिहार्थात् प्राप्तौ वर्तत इति दर्शयति। प्रमीयत इति नाम्यन्तानां यणायीति दीर्घः सनि च दीङः नाम्यन्तानामनिटामित्यादिना सूत्रारम्भस्य प्रयोजनमाह—उपदिदासत इत्यत्रात्वे कृते सनिमीम्यादेत्यादिना इत्यस्याभ्यासलोपौ प्राप्तौ न भवतः। दाग्रहणेन तत्र दारूपस्यास्याग्रहणात्। तत्र हि दा इत्यनेन दा-संज्ञका गृह्यन्ते। न च दीङ अयं कृतात्वो ग्रहणेन दा-संज्ञाविधौ ग्रहीतुं शक्यते, अनैमित्तिकात्ववद्भिर्दारूपैस्सनि दीङः कृतात्वस्यासाहचर्यात्।

**स्मिजिक्रीङामिनि** [3]३।४।१७

आत्वं भवतीति वृद्धेरपवादः। सोमविक्रयी ब्राह्मणः इत्यत्र न भवति, अस्येन्प्रत्ययस्याप्राकरणिकत्वात्सार्वधातुकसाधारणस्य वेञोऽत्र ग्रहणात्। वि पूर्वात्क्रीणातेः सोमं विक्रीतवानिति विक्रयात् कुत्सायामितीन्प्रत्ययः। हेतुभयेऽर्थ इत्यादि। ननु भयं त्रासः, स च बिभेतेरेवार्थः न स्मयते तत्कथं हेतुभयेऽर्थे भयं तस्य निवृत्तिस्स्यात्। सत्यम्, भयशब्देन त्वत्र चित्तविक्षोभ[4]कारितया सादृश्यात् स्मयत्यर्थोऽभिधीयते। द्रष्टा हि सादृश्यादर्थान्तरेऽपि शब्दानां वृत्तिः। यथा—अग्निर्माणवक इति। तेन हेतुभयेऽर्थे हेतुजनितविस्मय इत्यर्थोऽत्र मन्तव्यः। कुञ्चिकया विस्माययतीति करणमव्यपेक्षाद्धेतोरत्र विस्मयो नतु हेतोरेवेत्यात्वाभावः। आत्मनेपदमपीत्यादिना केवलमात्वं यावदात्मनेपदमपीत्येषोऽपिशब्दस्यार्थः। इहापि भयग्रहणेन स्मयत्यर्थ उच्यते। वी, ली, भी इत्येतेषामित्यादि। वी गति प्रजनकान्त्यसन-

---

१. ३।४।२२ (दु० वृ०)
२. उपपदयो (वा०) उपादायो (भं०)
३. ३।४।२४ (दु० वृ०)
४. भयस्वभावतया (भं०)

खादनेषु । ली श्लेषणे, लीङ् श्लेषणे इति वा । जिभी भये । तत्र वी गती-त्यस्याभिधानशक्तिस्वाभाव्यात् प्रजने गर्भग्रहणे एवार्थः आत्वं भवति न त्वन्यत्र । वापयतीति, गर्भं ग्राहयतीत्यर्थः । तत् नु एतत् वपिनैव सिद्धं, न सिध्यति । प्रजनेऽस्याः वृत्तेः । अनेकार्थत्वं न सर्वत्र युज्यते । न सर्वे सर्वार्था इति वचनात् । तथा च मीनात्यादिसूत्रमारब्धम् । अन्यथा मा-प्रभृतिभिर्धातु-भिर्मीनात्यादि-अर्थ-[1]वृत्तिभिः मापयतीत्यादीनां प्रयोगाणां सिद्धत्वात्सूत्रमिदम-नारम्भणीयं स्यात् । मीनात्यादीनामिनि प्रयोगश्चानभिधानादपि परिहर्तुं न शक्यते । इहापि वीङ्-ग्रहणमनर्थकं स्यात् । जायतिना क्षयार्थेनाप्नोतिना च जापयति अध्यापयतीत्यनयोस्सिद्धत्वात् । तस्माल्लक्षणानुसरणमेव ज्यायः । प्रलम्भनन्यग्भावनयोस्तु नित्यमात्वं भवति । वा-शब्दस्य व्यवस्थितविभाषा-विज्ञानात् । प्रलम्भनं मिथ्याफलव्याख्यानम् । कस्त्वामुल्लापयते, श्येनोवर्ति-कामपलापयते, मुण्डो भापयत इति । अथात्रात्वमपेक्षेऽपि एकदेशविकृतस्यान-न्यत्वाद् भियष्षुग्वेति षकारागमः कस्मान्न भवति, वा शब्दस्य व्यवस्थित-विभाषाविज्ञानात् आत्वाभाव एव पक्षे षकारागमस्य प्रवृत्तेर्हेतुभयेऽर्थे इत्यभि-धानशक्तिस्वाभाव्याल्लब्धोऽयमर्थः । आत्मनेपदमिति हेतुभय एवेति । अत्राप्य-भिधानशक्तिरेव हेतुः । षिध्यतेरिति षिधु संराद्धावित्यस्य । पारलौकिक इति । परलोकः प्रयोजनमस्येतीकण्, उभयपदवृद्धिः, ततो नञ्समासः । धात्वर्थविशेषणं चैतत् । न च-एतत् परलोकप्रयोजनस्सिध्यतीत्यर्थो भवति इति । भोक्ष्यत इत्येतेन धात्वर्थस्य पारलौकिकतां दर्शयति । ननु साधयतीत्येत[2]त्सिद्धिनैव सिद्धम् सिध्यत्यपारलौकिके तु षिधेरपि प्रयोगस्स्यात् । पारलौकिके तु साधेः न चैतत्सिद्धम् । अनभिधानं च अन्धकुक्कुटीन्यायः । ततो वक्तव्यमेव ज्यायः । पायसं सेधयतीत्यादिविप्रेभ्यो दास्यामीत्येवमभिसन्धाय योऽन्नं साधयति सोऽन्यजन्मनि फलमाप्नोतीत्यर्थः । पारलौकिकेऽर्थेऽत्र सिधिर्वर्तते इत्यात्वा-भावः ।

**सृजिदृशोरागमोऽकारः स्वरात्परो धुटि गुणवृद्धिस्थाने** [3]३।४।१८

उपधागुणे व्यञ्जनान्तानामनिटामिति च वृद्धौ प्राप्तायां वचनम् । स्रष्टेत्यादि युजिरुजीत्यादि रिशिरुशीत्यादिना च यथाक्रमं सृजिदृशोरिडभावः । स्रष्टुं द्रष्टु-मिति, सर्जनं दर्शनमिति विग्रहः । ऋकारोपधस्येत्यादि । यद्येवं, तृढं वृढमित्या-दावपि प्राप्नोति । वाशब्दस्य व्यवस्थितविभाषात्वान्न भविष्यति । वक्तव्यात्

१. युक्तिभिः (मं०)
२. साधेनेव (मं०)
३. ३।४।२५ (दु० वृ०)

सृजिति। स्पृशिसृजिदृशिभ्यो वा सन् वक्तव्य इति यद्विकल्पेन सृजदृशोः सनः विधानं तस्मात्सनिह विकल्प्यते। पक्षे सिज्भवत्येव। रधादित्वादिटो विकल्पः इति तृप्दृपोः। यद्येवमतार्प्सीदित्यादिषूदाहरणेषु व्यञ्जनान्तानामनिटामस्य च दीर्घः इति वृद्धिदीर्घौ न स्याताम्। वेट्त्वादित्याशङ्कयाह—वृद्धिदीर्घावत्र वक्तव्याविति।

**वेङिदीङो योऽन्त्यस्वरादावगुणे** [1]३।४।१९

य इवर्णस्येति यत्वं प्राप्तमिति द्विर्वचने सत्यनेकाक्षरत्वात् उपादिदीयत इत्यादि सर्वत्रात्मन इत्यगुणत्वम्। दीयत इति यण् नोऽत्रागुणत्वम्, अनि च विकरण इति नियमात्। अन्तग्रहणं यकारस्य विशिष्टदेशावयवत्वेनागमत्व-प्रतिपत्त्यर्थम्। अन्यथा दीङ यण्प्रत्ययः तन्मध्यपात्ययं यकारो विज्ञायते तथा च तेन व्यवधानाद् दीङो द्विर्वचनं न स्यात्। मीनात्यादिसूत्रेण च तस्यात्वं भवेत्। आगमस्वरात्पर इत्यनुवर्तिष्यते [2]ततो सदोष इति चेत्, सत्यम्, अवैस्पष्ट्यं स्यात्।

**आलोपोऽसार्वधातुके** [3]३।४।२०

आ इति लुप्तषष्ठीकम्, अत्रासार्वधातुकग्रहणं किमर्थम्, सार्वधातुकसंज्ञा मा भूदिति चेन्न, यदि तत्रापि स्यादभ्यस्तानामाकारस्येति सार्वधातुक आलोप-विधानार्थं वचनमपार्थकं स्यात्। ईत्वविधावेतद्वचनमनुवादार्थत्वान्नापार्थकमिति चेत्, तन्न। यदि ह्यनुवादार्थं तत् स्यात्। न त्वालोपप्राप्त्यर्थम्, ततः क्र्या-दिविकरणाकारस्येत्युक्त्वा अभ्यस्तानां चेकारो व्यञ्जनादावद इत्येवं ब्रूयात्। तस्मादालोपप्राप्त्यर्थम् [4]अपि तत्। एवं च तदेतदर्थमुपपद्यते, यद्यसार्वधातुक इति ([5]च सा लोपविधानं स्यात् न सार्वधातुक इति) नार्थोऽसार्वधातुक इति ग्रहणेन प्रधिरित्यादावालोपसिध्यर्थमप्राकरणिकासार्वधातुकपरिग्रहार्थम्। असार्व-धातुकग्रहणमिति चेत्, न, कि-प्रत्ययस्यागुणार्थत्वात्कानुबन्धकरणादेवाप्राकर-णिकेऽप्यसार्वधातुक आलोपस्यासिद्धत्वात्। अत्रोच्यते, उत्तरार्थमसार्वधातुक-ग्रहणम्। गातेत्यत्रात्वं मा भूत्? इहापि प्रतिपत्तिगौरवपरिग्रहार्थम्।

---

१. ३।४।२६ (दु० वृ०)
२. ततोऽयमदोषः (वा०)
३. ३।४।२७ (दु० वृ०)
४. एव (मं०)
५. को० अ० पा० (मं०)

**इटि च [1]३।४।२१**

योगविभागो वैचित्र्यार्थः।

**दामागायतिपिबतिस्थास्यतिजहातीनामीकारो व्यञ्जनादौ [2]३।४।२२**

दा इति दा-संज्ञकाः गृह्यन्ते इति कुतः बह्वादेश्च विधीयत इति लिङ्गात्, सामान्य इत्यादि रूपसामान्यपरिग्रहात् सर्वे मा रूपा गृह्यन्त इति भावः। गायतीति। गै शब्द इत्यस्य स्तिप्यन्विकरणेन निर्देशः, अपरे तु गाङ् गतावित्यस्याप्यत्र ग्रहणमित्याहुः। अथ कुतः तस्यास्ति स्तिपीकार इत्याह—निर्देशसामर्थ्यादित्यादि। यद्येवं यणो गुणत्वादीत्वं प्राप्नोति, तत्कस्मान्न भवतीत्याह—ईत्वाभावः चेति निर्देशसामर्थ्यादित्यनुषज्यते। यतिस्तु प्रयत्नार्थोऽत्र गृह्यते। आकारस्येहाभिसम्बध्यमानस्य स्थानित्वात्, स्यतेश्च तदसम्भवात्। [3]दीदयते इत्यादि द्विर्वचनात्परत्वादीत्वं ततो द्वि[4]रुक्तिः, दायन्ते व्रीहय इति दाप् लवने, अदाबिति निषेधान्नायं दा-संज्ञकः। पिबतीति निर्देशः पाते रक्षणार्थस्य निवृत्त्यर्थ इति निहितस्यादादिकस्य पिबतीति रूपं भवतीति भावः। लुग्विकरणत्वात्सिद्धा तस्य निवृत्तिः, पायतेरपि [5]शोषणार्थस्य ग्रहणं स्यात्, लाक्षणिकत्वान्न भविष्यतीति चेत्, प्रतिपदोक्तपरिभाषाया अनित्यत्वदर्शनात् प्राप्नोतीति कर्तव्यः श्तिपा निर्देशः। पायतेरिति, पा रक्षणे यण् स्यतीति निर्देश इत्यादि। मा इति [6]कर्तव्ये मायतेरपि क्षयार्थस्य ग्रहणं प्राप्नोति। शो इति तु न कृतं वैचित्र्यार्थम्।

**आशिष्येकारः [7]३।४।२३**

धातुना संयोगे विशेषयितव्य इति। आशीराक्षिप्तेन धातुना संयोगो विशेष्यते। धातोर्यः संयोगस्तदादेरिति, न च निर्यायादित्यत्र संयोगो धातुसम्बन्धीत्येत्वाभावः।

**अन उस्सिजभ्यस्तविदादिभ्योऽभुवः [8]३।४।२४**

ह्यस्तन्यद्यतन्योरन् गृह्यते, अन्तर्वर्तिनीं विभक्तिं प्रत्ययलक्षणेनाश्रित्य

---

१. ३।४।२८ (दु० वृ०)
२. ३।४।२९ (दु० वृ०)
३. देदीयते (?)
४. विभक्तिः (मं०)
५. तर्हि शेषणार्थस्य (मं०)
६. कृते (मं०)
७. ३।४।३० (दु० वृ०)
८. ३।४।३१ (दु० वृ०)

पदान्तवृत्तेः सिचश्कारस्य तृतीयः, सिच इति । सिच प्रत्ययान्तधातोः, नहि ततोऽनन्तरस्सम्भवति । अबिभयुरनेनिजुरिति द्वयमभ्यस्तमित्यभ्यस्त-संज्ञा । अजागरुरित्यत्रापि जक्षादेश्चेत्यनेन । अविदुरित्यदादेर्लुक्, नहि ताभ्यामित्यादि । ताभ्यां सता विचारणार्थाभ्यां दैवादिकरौधादिकाभ्यां विदिभ्यां यस्मात्परस्यानो नाभिसम्भवः तस्मात्तौ न गृह्येते, कस्मात् पुनः सम्भवः नास्ति इत्याह—([1]आत्मनेपदादिति । अन्प्रत्ययश्च परस्मैपदसंज्ञक इति भावः । अथ यस्माद्विधिर्यजादित्वादुभयपदिनो लाभार्थात् तौदादिका-दन्सम्भवति । स कस्मान्न गृह्यत इत्याह—लाभार्थ इत्यादि) अत्रैव हेतुमाह—अम् विकरणेनेत्यादि । एवं च ततः परोऽन्प्रत्ययो न सम्भवतीति नासौ गृह्यते । अयुः अयानीत्यादि, या प्रापणे द्विष् अप्रीतावत्रेत्यादिना भुवः परस्यान उसा-देशप्राप्तिस्सिचो निमित्तत्वं स्यादिति दर्शयति । कथं पुनः लुग्लोपवचने स्थितेऽपि प्रत्ययलक्षणेन सिचो निमित्तत्वं स्यादित्याह—लुग्लोप इत्यादि । अनुपस्थानं हेतुं पृच्छति कुत इति प्रत्यये हि पर इत्यादिना हेतुमाह—अयं भावः, अस्मादेवाभुव इति निषेधकरणाल्लिङ्गात् । लुग्लोपो न प्रत्ययकृत-मित्यत्र प्रत्यये कृतं प्रत्ययकृतमिति सप्तमी तत्पुरुषः आश्रीयते न तु प्रत्ययात् तं प्रत्ययकृतमिति पञ्चमीतत्पुरुषः । तेन यत्र प्रत्यये परे पूर्वस्याः प्रकृतेः कार्यं प्राप्तं यथा क्तीत्यत्र जश्शसोः लुक्येत्वं तत्र कर्तव्ये लुग्लोपवचनं प्रत्ययलक्षण-निषेधकारित्वेनोपतिष्ठते, यत्र तु प्रत्ययात् परस्य कार्यस्य प्राप्तिस्तत्रैतदनिवा-रकं ([2]प्रत्ययलक्षणस्यानुपस्थानात्) लुग्लोपवचनस्यासिज्निमित्तं प्रत्ययलक्षणेन प्राप्तिमपवदितुमभुव इति निषेधः क्रियते, न च [3]बोभूवन्नित्येतद् व्यावृत्त्यर्थ-मभ्यस्तनिमित्तस्य भुवः प्राप्तिरिति शक्यमभिधातुम् असन्देहार्थमभुव इत्येवमकरणात् ।

**इचस्तलोपः [4]३।४।२५**

क्वचित्पूर्वपरौ सवौ इति सर्वस्येति न तु परकार्ये विकार्यादिरित्यादेः, कुतस्त इति संघातस्य निर्देशात् । अन्यथा ([5]ह्यसन्देहार्थमकारमपास्यात्वस्य इति । एव निर्देशात्, स आख्यातिकस्त-शब्दः गृह्यते, इत्यत्र हेतुमाह—प्रत्यासत्तेरित्येतत् प्रकरणविहित एव त शब्दः । प्रत्यासत्तेरिति गृह्यते, न तु

१. को० अ० पा० (वा०)
२. लक्षणस्येत्यनवस्थानात् (भं०)
३. बोभवदित्येतद् (भं०)
४. ३।४।३२ (दु० वृ०)
५. ह्यसन्देहार्थं तकारमपास्य अ इत्येव (?)

प्रकरणान्तरविहितः प्रत्ययावयवः अकारितरामिति [1]यावत्सम्भवः तावद्विधिः इति वचनात्प्राप्तिः। नन्विच इति षष्ठीं व्याख्यास्यामः तेन इचो यस्तशब्दो निमित्तानिमित्तभावलक्षणेन सम्बन्धेन सम्बन्धी तस्य लोपो विज्ञास्यते नान्यस्येति किमत्र प्रत्यासत्ति[2]न्यायाश्रयणेन शक्यमेवमभिधातुं यदि षष्ठीनिर्देशे किं न च प्रमाणं स्यात्। [3]एवमप्यानर्थक्यान्न ग्रहीष्यते। अर्थवद्ग्रहणपरिभाषानित्यत्वदर्शनाद् गृह्यते। तत्र ग्रहणमिचो लोपनिवृत्त्यर्थम्। लोपे सतीचो विधानमपार्थकं स्यादिति चेत् न, लोपविधानयोगारम्भादुभयमपि पाक्षिकं विज्ञायते न चैवमुच्यमाने इज्विधावेवाग्रहणं कुर्यात् इति शक्यभिधातुम्, एवं हि विक्रियमाणे इचो विषय उत्सर्गः सिजपि पक्षे प्रसज्येत, तस्मादिचो लोपनिवृत्तये ग्रहणम्।

**हेरकारादहन्ते [4]३।४।२६**

यस्य हेर्हन्तिपरत्वं सम्भवति तस्य हेः प्रत्ययस्यात्र ग्रहणम्। तेन स हिनोतीत्यत्र न भवति। आदिति कर्तव्ये कारवचनं तपरस्तत्कालस्य कारशब्दपरः चेति तत्कालार्थम्। तेन वाहि अत इति तु न कृतं कारशब्दपरोऽपि तत्कालस्य ग्राहक इत्यर्थस्य प्रदर्शनार्थम्। नन्वित्यादि चोद्यम्, सत्यमित्यादिना परिहरति। वर्णग्रहणे सन्निपातलक्षणो विधिः कारणविघातं प्रति निमित्तमेवेत्यस्यार्थस्य [5]इदमेवाहन्तिरिति निषेधकारणं लिङ्गम्। तथा च दाक्षिरित्यत्रावर्णनिमित्तोऽपीण्प्रत्ययो वर्णलोपं प्रति निमित्तमेव। एवं [6]च हि निमित्तो हि ङादेशो विहन्यादेव। तमिति। अहन्तेरिति निषेधः क्रियते। तातङ्पक्षे हेर्लोपो नेष्यत इति स्थानिवद्भावात्प्राप्नोति कथं पुनरिष्यमाणोऽप्यसौ नेष्यते, हेरिति हि व्यक्तेः परिग्रहणस्मरणात्।

**मोश्च विकरणादसंयोगात् [7]३।४।२७**

असंयोगादसंयुक्तादित्येतेन संयुज्यत इति संयोग इति ([8]कर्मघञन्तोऽत्र

---

१. यावस्तम्भवद्विधि (भं०)
२. व्याख्याश्रवणेन (भं०)
३. एवास्यानर्थक्यानुग्रहीष्यते (भं०)
४. ३।४।३३ (दु० वृ०)
५. एवेदमेव हन्तेरिति (भं०)
६. बहिर्निमित्तोऽपि विजादेश (भं०)
७. ३।४।३४ (दु० वृ०)
८. को० न्यूनपाठः (भं०)

संयोगशब्दो गृहीत इति दर्शयति । तेनासंयुक्ताद्वर्णान्तरेणासम्बध्यमानादित्यर्थो विज्ञायते । यदि तु प्रसिद्धस्संयोगशब्दार्थो गृह्यते तक्ष्णुहि इत्यत्रैव निषेधस्स्यात् शक्नुहीत्यत्र तु न स्यात् ।

**उकारलोपो वमोर्वा** [1]३।४।२८

अर्थवशादिति असंयोगस्य विकरणे य [2]उकारस्तत्सम्बन्धेनाभिस्पष्टार्थ उपजातः । तत्सामर्थ्यादित्यर्थः, एवं च सति उकार इति लुप्तषष्ठीकपदम् । अन्यथा विकरणमपेक्षमाणस्याकारस्य लोपशब्देन सहायुक्तार्थत्वात् ([3]समासो न स्यात् । अथवा उकारलोप इति समुदायेन विकरणोऽभिसम्बध्यते, विकरणस्याकारलोपो भवतीति । एवं च विकरणमपेक्षमाण उकारः लोपशब्देन युक्तार्थत्वात्) समस्यत एवेत्युकारलोप इत्येकमेव पदम्, तन्वः, तन्मः इत्यत्र अविकरणसम्बन्धिनोऽप्युकारस्य व्यपदेशिवद्भावादेकस्मिन्निति वचनाल्लोपः वमोः परयोरिति यस्मिन्विधिस्तदादाविति वचनाद्वकारमकारयोः प्रत्यययोरित्यर्थः । ह्यस्तनी वमावेव तु न गृह्येते, वमयोरित्यसन्देहार्थमकरणात् । एवं च सति वकारे अकार उच्चारणार्थः । परत्वाद् गुणस्य प्रवृत्तिरिति लोपस्यावकाशः । द्वित्वबहुत्वे सुन्वः तन्वः इति गुणस्यावकाशो वमोरन्यः, सुनोति, करोतीति सुनोमि करोमि इत्यत्र तूभयप्रसङ्गे परत्वाद् गुण एव प्रवर्तते । उकारग्रहणमित्यादि । श्रूयमाणं वमोस्स्थानित्वमपहाय कथमनुमितस्याकारस्य स्थानित्वं लभ्यत इति भावः । सप्तम्यन्तयोस्तयोः कथं स्थानित्वमिति चेत्, असत्युकारोपादाने सप्तम्यन्तौ तौ षष्ठ्यन्ताविति नास्ति विशेषणे प्रमाणम् ।

**करोतेर्नित्यम्** [4]३।४।२९

कृञ् हिंसायामित्यस्येति कृणुतेस्सौवादिकस्य नित्यग्रहणं चेत्यस्य निवृत्त्यर्थम् । ननु तदनुवृत्तौ पूर्वेण सिद्धत्वात् पुनरारम्भो व्यर्थस्स्यादिति तद्बलादेव नित्यग्रहणमवाप्यत इति किमनेनेत्याह — पुनरारम्भसामर्थ्यादित्यादि । वमाभ्यामन्यत्रापि निमित्ते विकरणलोपार्थः पुनरारम्भ आशङ्क्यत इत्येवमवैस्पष्ट्यं स्यादिति भावः ।

---

१. ३।४।३५ (दु० वृ०)
२. सम्बन्धे सति षष्ठ्यर्थः (भं०)
३. को० न्यूनपाठः (भं०)
४. ३।४।३७ (दु० वृ०)

**सप्तम्यां ये च** [1]३।४।३०

सप्तम्यामेव यकारस्सम्भवतीति नत्वाशीर्यकारे तस्यासार्वधातुकत्वात् ।

**अस्योकारस्सार्वधातुके गुणे** [2]३।४।३१

करोतेरस्याकारस्येति करोतेः करोतीति गुणे कृते योऽकारस्तस्येत्यर्थः । अथेदमोऽस्येति रूपं करोतेः प्रत्यवमर्शकारि कस्मान्न भवति । तस्यानन्तरस्य किं प्रत्यवमर्शेनेति चेत् ? लब्धस्थानिवद्भावस्योकारस्य स्वरादौ वत्वनिवृत्तिफलमिदमुत्वविधानं स्यादित्युकारनिवृत्तये युक्तः । [3]तदसौ सत्यनेन रूपेण करोतेः प्रत्यवमर्शः किं पुनस्स्याद् इति प्रत्यवमृश्यते । तस्यान्तस्योत्वम्, नैतत्, अकुरुच्छरोरिति कुरुशब्दस्य निर्देशात् । अतएव संहितासाम्येऽपि ह्रस्वोऽयमादेशो न दीर्घः, कुर्वित्यत्र लोपविधेर्बलवत्वाद् बलीयांसमपि हि लोपम् उत्वं बाधते स्वरादेशत्वात् । तद्ग्रहणेनेति । आगमिग्रहणेन । यदि पुनरयं करोतेः उकारान्तताविशिष्ट इहानुवर्तयितुं शक्यते, शक्यं सार्वधातुकग्रहणमकर्तुम् । न शक्यम्, उत्तरार्थत्वात् । तथा चोभयेषामीत्वमुच्यमानं लालायत इत्यत्र न भवति ।

**रुधादेर्विकरणान्तलोपः** [4]३।४।३२

वर्णान्त्यपरिभाषातो लब्धमन्तग्रहणमिति किं तेनेत्याह – अन्तग्रहणमित्यादि । साक्षाच्छ्रूयमाणस्य विकरणस्यैव [5]स्यादित्यन्तग्रहणम् । लोपस्स्यात्, नत्वन्तस्येति भावः । लोपे सतीत्यादिना पराभिप्रायमाशङ्क्य सगुणेत्यादिना परिहरति, असत्यन्तग्रहणे रुणद्धीत्यादौ गुणे श्रूयमाणस्य न शब्दस्यागुणे लोपस्स्यात् । सर्वस्य तस्य मा ([6]भूदन्तस्यैव यथा स्यादित्यन्तग्रहणम् ।

**अभ्यस्तानामाकारस्य** [7]३।४।३३

सामान्येन विधानमिति । स्वरादौ व्यञ्जनादौ च ।

---

१. ये च ३।४।३८ (दु० वृ०)
२. ३।४।३९ (दु० वृ०)
३. इदम् करोतेः (भं०)
४. ३।४।४० (दु० वृ०)
५. न्यूनपाठः (भं०)
६. भूदित्यन्तग्रहणम् (भं०)
७. ३।४।४२ (दु० वृ०)

**आदीनां विकरणस्य [1]३।४।३४**

पूर्ववत् [2]स्वरादावयं लोप इति व्यञ्जनादावीत्वं वक्ष्यतीति। यथापूर्वमुक्तं तथेहापि मन्तव्यमिति भावः। विकरणस्येति कर्तव्ये आदिग्रहणं आदीनां यो दृष्टो विकरणः तस्यान्यतोऽपि धातोर्विहितस्याकारलोपो यथा स्यादित्युपलक्षणार्थम्। तेन स्तन्भु-स्तुन्भु-इत्यादि यदुक्तं तदुपपन्नं भवति। न चासति आदिग्रहणे दीव्याव इत्यादावपि विकरणाकारस्यास्तीत्वस्य प्राप्तिः। तस्य लाक्षणिकत्वात्। पूर्वोक्ते निमित्त इति स्वरादावगुणे सार्वधातुके [3]स्तुन्भुन्तीत्यादि। अनिदनुबन्धानामित्यनुषङ्गलोपः नाभ्यस्तयोरिति कृते स्नातीत्यादावपि लोप आशङ्क्येत।

**उभयेषामीकारो व्यञ्जनादावदः [4]३।४।३५**

दा-संज्ञकादि वर्जयित्वेति। दा-संज्ञकानां य आकारस्तं वर्जयित्वेत्यर्थः। अथ कुतो दा-संज्ञकानां ग्रहणं लभ्यते, उच्यते—तथोश्च दधातेरिति धातुग्रहणानुवृत्त्या धाञो धातुः स्यादिचतुर्थत्वविधानात्। न ह्यद इति च रूपमात्रपरिग्रहे सति धाञो धातुत्वमुपपद्यते, अभ्यस्तलक्षणमालोपं बाधित्वा ईत्वस्य प्रवृत्तेः धातुग्रहणानुवृत्तौ तत्र किं प्रमाणमिति चेत्, धाञ इति कर्तव्ये अधिकविशेषोपसङ्ग्रहार्थो दधातेरिति श्तिपा निर्देशः। अतएव नेदमदो धातोर्ग्रहणम्, तत्परिग्रहे दा-संज्ञकानामीत्वप्रवृत्तेर्धातुत्वासम्भवात्। धातुता-लक्षणविशेषोपसङ्ग्रहार्थोऽनर्थकः श्तिपो निर्देशः स्यात्। यद्येवमद इति निषेधान्यथानुपपत्त्यै वाभ्यस्ताकारोऽप्यनुवर्तिष्यत इति किमुभयेषां ग्रहणेन, नैतत् सति ह्युभयेषां ग्रहणेऽद इति निषेधोऽयमित्यवसीयते। असति तु विधिरेवायमदेर्धातोर्विज्ञायते, तस्मात् कर्तव्यमुभयेषां ग्रहणम्। आ-लोप-प्राप्त इति पूर्वेण सूत्रद्वयेन। जहातीति। असति व्यञ्जनादि[5]ग्रहणवशात्स्वरादावपि ईत्वलोपौ प्रसज्येयाताम्। पूर्वोक्ते निमित्त इति व्यञ्जनादावगुणे सार्वधातुके।

**इकारो दरिद्रातेः [6]३।४।३६**

ईत्वं प्राप्तमिति। जक्षादेश्चेति दरिद्रातेरभ्यस्तत्वात्पूर्वसूत्रेणेत्वं वा वक्त-

१. ३।४।४३ (दु० वृ०)
२. स्वराणामवयवो (भं०)
३. स्तभ्नोतीत्यादि (भं०)
४. ३।४।४४ (दु० वृ०)
५. ग्रहणे वचनात् (भं०)
६. ३।४।४५ (दु० वृ०)

व्यम्—इति। एतच्च दरिद्रा इति कर्तव्ये श्तिपानिर्देश([1]स्सिद्ध इति प्रतिषिद्धेऽवत् अर्वाक्कालप्रणीतमिति सूत्रकाल)स्याधिकं विशेषं द्योतनार्थत्वाल्लभ्यते।

**लोपस्सप्तम्यां जहातेः** [2]३।४।३७

ईत्वं प्राप्तमिति। अभ्यस्तत्वादुभयेषामीकार इत्यनेन। ननु सप्तम्या निमित्तभावेऽपि यकारस्यैवार्थादिह निमित्तत्वम् अन्यत्राभ्यस्तानामाकारस्य इति लोपस्य प्रसिद्धत्वात्। अतो य इति कर्तव्ये किं सप्तमीग्रहणेनेत्याह—य इति कर्तव्य इत्यादि। नन्वेवं सत्याशीर्यकारेऽपि स्यात्, न च सार्वधातुकग्रहणमनुवर्तयितुं शक्यते, सार्वधातुकग्रहणस्योत्तरत्रानर्थक्यप्रसङ्गात्। एवं तर्हि आशीर्यकारे परत आशिष्येकार इत्येत्वं विधीयते, तदनवकाश—([3]वशात्कालान्तरेणापि प्राप्तमित्यर्थः) लोपस्य बाधको भविष्यत्यतो नास्त्याशीर्यकारेऽप्राप्तिः।

**घुटि हन्तेस्सार्वधातुके** [4]३।४।३८

हन्तेर्लोरस्सिद्ध ([5]इति प्रतिषेधत्वात् अर्वाक्कालप्रणीतमिति सूत्रकालात् कालान्तरे केनापि प्रणीतमित्यर्थः)

**शासेरिदुपधायाः अण्व्यञ्जनयोः** [6]३।४।३९

अणो गुणत्वाव्यभिचाराद् गुणग्रहणमिहाभिसम्बध्यमानमर्थाद् व्यञ्जनादेरेव विशेषणमित्याह—अगुणे च व्यञ्जनादाविति। व्यञ्जनमात्रस्यागुणस्यासम्भवाद् व्यञ्जनादाविति लभ्यते। सार्वधातुक इति निवृत्तम्। शासु अनुशिष्टाविति निर्देशात्। आर्यशीरित्यादि शासे आर्यमित्रशब्दपूर्वात्क्विप्, इत्वं न प्राप्नोतीति कथमित्याह—नह्यत्रेत्यादि। कथं पुनस्सन्निहितेऽपि क्विपि नात्र व्यञ्जनं पर-सप्तमीति शक्यते वक्तुमित्याह—सर्वविधिभ्य इत्यादि। इत्वं क्रियतां क्विपो वा लोप इति सम्प्रसारणायां लोपविधेर्बलवत्वान्नित्यत्वाच्च पूर्वं क्विपो वा लोप इति सति लोपे कुतस्तस्य सन्निधानम्, अतो नात्र व्यञ्जनपरमस्ति, प्रत्ययलोपपरिभाषया लुप्तेऽपि क्विपीत्वं [7]सेत्स्यतीत्यतश्च

१. को० न्यूनपाठः (वा०)
२. ३।४।४६ (दु० वृ०)
३. को० न्यूनपाठः (वा०)
४. ३।४।४७ (दु० वृ०)
५. को० न्यूनपाठः (मं०)
६. ३।४।४८ (दु० वृ०)
७. सेत्स्यतीति तच्च (मं०)

विघटयितुमाह—न चास्तीत्यादि। अत्रैव हेतुमाह—वर्णाश्रय इत्यादि। वर्णो यत्र प्राधान्येन निमित्तत्वेन परिगृह्यते, तत्र प्रत्ययलोपपरिभाषया प्रत्ययलोप-निमित्तं कार्यं न प्रवर्तते, वर्णाश्रये नास्ति प्रत्ययलक्षणमिति निषेधात्। इह च व्यञ्जनवर्णमित्वं प्रति निमित्तत्वेनाश्रितमिति कथं प्रत्ययलोप परिभाषा प्रवर्तते। तस्मादित्वं न सिध्यति। अत्र सत्यमित्यादिना समाधानमाह—तच्च गतार्थम्। सजुषाशिषो र इति रत्वमिति रत्वविधावाङ उपसर्गस्याप्राधान्यादिति भावः। आशास्त इति। आङः शासु इच्छायाम्, रुचादित्वादात्मनेपदम्। अन्विकरणः, अदादेर्लुक्, कुतः पुनरेष विशेष इति शासिरनुशिष्ट्यर्थो गृह्यते न त्विच्छार्थ इत्येष विशेष इति। कुतो हेतो लभ्यते, यतो लभ्यते तं हेतुमाह—अण्-ग्रहणादिति, तमेव विवृण्वन् आह—यस्माच्छासेरित्यादि। द्वाविमौ शासीपठितौ, एकोनुशिष्टार्थः। द्वितीयश्चेच्छार्थः। [1]अत्र पूर्वः परस्मैपदी, अपरोऽप्यात्मनेपदी। अण्-प्रत्ययश्चेह निमित्तत्वेनोपात्तः स च पुषादिसूत्रेण परस्मैपदे विधानाच्छासेरण् परस्मैपदिने एव [2]परस्सम्भवति, नत्वात्मनेपदिनः। एवं चेच्छार्थादण्प्रत्ययो न सम्भवति। नासौ गृह्यते। ननु यद्यण्प्रत्ययेन संसर्गादनुशिष्ट्यर्थाच्छासिर्गृह्यते तर्हि व्य-ञ्जनेनोभयोरपि संसर्गादिच्छार्थस्यापि ग्रहणं प्राप्नोतीत्याशङ्क्याह—यद्यपी-त्यादि। यद्यपि व्यञ्जनेन संसर्गो द्वयोरप्यस्ति तथापि साधारणासाधारण-सम्बन्धि[3]सन्धाने यस्यैव साधारणस्सम्बन्धी सन्निहितस्तस्यैव लोके प्रतीति-र्भवति, तथा च वृद्धानां किशोराणां च मध्ये धेनवो बध्यन्तामित्युक्ते वडवा एव प्रतीयन्ते, एवमिहापि अण्व्यञ्जनयोरिति निमित्तसंसर्गोऽनुशिष्ट्यर्थे शासि-विषय एव प्रतीतिरुपजायते, नेच्छार्थे शासिविषये, तेनाशास्त इत्यादाविच्छार्थ-स्य शासेरित्वं न भवति। यद्येवमित्यादि। यदीच्छार्थो न गृह्यते तर्हि तस्य क्विपि सत्याशीरित्यत्रेत्वं न सिध्यतीति प्रश्नः। आशासनमिति। क्विबिति कृत्ययुटोऽन्यत्रापीत्यनेन तपरकरणं तत्कालार्थम्, ईकारोऽपि मा भूत् स्वरस्स-वर्णस्येति वचनात्प्राप्नोति, विधीयमानोऽपि च स्वरस्सवर्णग्राहको दृष्टः। यथा उत्वं मात् इत्युकार ऊकारौ सतीकारे किमिकारेण कृत स्यादिति चेत् सोऽप्य-स्तु। विधानसामर्थ्यात् परिभाषाबलात्त्वीकारोऽपि प्रसज्येत इति तन्निवृत्तये तपरकरणम्। आत इति कर्तव्य उपधाग्रहणं वैचित्र्यार्थम्। शासिष्ट इत्यत्रा-भ्यासाकारस्यापीत्वं प्रसज्येत इति चेत्, न व्यञ्जने हि परे पूर्वस्याकारस्यान-न्तरस्येत्वं ([4]विधीयते, सप्तम्या निर्दिष्टे पूर्वस्येति निर्दिष्टग्रहणस्यानन्तर्यार्थ-

१. तत्र (भं०)
२. परे सम्भवति (भं०)
३. सन्निधाने (भं०)
४. को० न्यूनपाठः (भं०)

त्वात्। न चानन्तर आकारोऽस्तीति कृत्वा एकवर्णव्यवहितोऽसौ कार्यत्वेन विज्ञायते, तेन परभागसम्बन्धिन एव तस्यैत्वं) न तु पूर्वभाग सम्बन्धिनोऽपि।

हन्तेर्जं हौ [1] ३।४।४०

तातङ्विषये ज-भावाभावौ हि व्यक्तेरिह निमित्तत्वेन परिग्रहस्मरणात्, तेन हतात्।

दास्त्योरेऽभ्यासलोपश्च [2] ३।४।४१

दा-संज्ञकानामिति संज्ञाविधानसामर्थ्यात् दा-संज्ञका गृह्यन्ते। वर्णान्त्यस्य विधिरिति परिभाषेयमनित्येति नानर्थकं वर्णान्त्यविधिरिति वचनात्। अनर्थकश्चाभ्यास इति प्रागुक्तम्। यत्र चाभ्यासस्सम्भवति इति, दासंज्ञके तु नत्वसौ, देहि, धेहीति दाञ्धाञोरेतत्, रूपेणान्येषां दा-संज्ञकानां विकरणेन हेर्व्यवधानात्। ननु लोपश्चेति क्रियताम्, न च लोपो दास्त्योरन्त्यस्य पाक्षिको विज्ञातुं शक्यते, एत्वलोपावित्येकविभक्तिनिर्देशाकरणात्। एवं च दास्त्योष्षष्ठीनिर्दिष्टयोः परोभाग इत्वेनावष्टब्धव्य इति पूर्वस्यैव भागस्यार्थाल्लोपो विज्ञास्यत इति किमभ्यासग्रहणेन, नैतत्, परस्यैव भागस्य पाक्षिको लोपप्रसङ्गात्। एकस्यैव स्थानिन आदेशद्वयं पृथग्विभक्तिनिर्दिष्टं, यथा--परो लोपोऽन्यस्वरे यं वेत्यत्र। किञ्च परस्य भागस्य योऽन्त्यः तस्य लोपः पूर्वस्य चैत्वमित्येषाप्याशङ्का स्यादिति कर्तव्यमनभ्यासग्रहणम्।

अस्यैकव्यञ्जनमध्येऽनादेशादेः परोक्षायां [3] ३।४।४२

अस्येत्यकारः पचादिधात्वेकदेशोऽनुक्रियते। एकव्यञ्जनञ्च एकव्यञ्जनञ्च एकव्यञ्जनम् इत्येतेन मध्यार्थान्यथानुपपत्त्या कृतैकशेषोऽयमेकव्यञ्जनशब्दो निर्दिष्ट इति दर्शयति। कथं पुनरेकस्यकव्यञ्जनशब्दस्य शेषः, परस्य तु निवृत्तिरित्याह--स्वरूपाणामित्यादि। सति चैकशेषे शिष्यमाणस्य द्व्यर्थवृत्तित्वात् द्विर्वचनान्तस्यैव मध्यशब्देन विग्रह इत्याह—तत इत्यादि। एकशब्दोऽत्रासहायवाचीति नत्वन्यप्रधानसङ्ख्या प्रथमसमानवाची, अन्यार्थस्येहारम्भात्। तेनेति। एकशब्दस्यासहायार्थवाचित्वेन हेतुना इहाकारस्य कार्यमुच्यमानं स्वरस्सवर्णस्येत्याकारस्यापि कस्मान्न भवतीत्याह—स्वर-

---

१. ३।४।४९ (दु० वृ०)
२. ३।४।५० (दु० वृ०)
३. ३।४।५१ (दु० वृ०)

स्सवर्णस्येत्यादि। अनित्यत्वे हेतुमाह—उवर्ण ओ इत्यादाविति। उवर्ण ओ ऋवर्णे अरित्यादौ हि यद्वर्णग्रहणं तत्स्वरस्सवर्णस्य ग्राहक इत्यस्य वचनस्य क्वचिदुपस्थानं द्योतयति। यदि च सर्वत्रैतद्वचनं प्रवर्तते, उवर्णग्रहणमपार्थकं स्यात् तस्मात्ततो वर्णग्रहणादवगम्यते सवर्णग्राहकं वचनं सर्वत्र न प्रवर्तते इति। एतदुक्तं भवति। वर्णसामान्यविवक्षा परे निर्देशे वचनमेतत् न तु वर्णविवक्षापरेऽपि। इह चाकारव्यक्तिर्विवक्षिता नत्वकारसामान्यमित्यकारस्य न भवति। चकणतुरिति चत्वे सत्ययमादेशादिः। यद्येवं सेहे नोमतुरित्यादावप्यनादेशादेरिति निषेधः प्राप्नोतीति सत्वनत्वयोस्सतोरादेशादित्वात्, नैतत्, परोक्षायामादेशादित्वादेत्वं विशेयिष्यामः। परोक्षायां य आदेशादेरिति। न च सत्वनत्वे परोक्षायामिति तदादिरादेशादिर्न भवति, यद्यादेशात् इत्वं प्रति परोक्षां व्याप्रियते तर्हि सौत्रं कार्यमनैमित्तिकं स्यात्। नायं दोषः। परोक्षाया एव प्रत्यासत्तेर्निमित्तत्वात्। ननूत्तरत्र फलिभजिग्रहणात् त्रपाद्युपादानाच्चानादेशादेरेकव्यञ्जन मध्य इति च विशेषो [1]अवश्यमेवेति किं [2]गुरुसूत्रकरणेन, उच्यते—थल्यनन्तर एत्वाभ्यासलोपविधानाय फलिभजिग्रहणं स्यात्। न त्वादेशादेर्निषेधज्ञापनाय। एवं त्रपाद्युपादानमपि भवेत्, तस्माद् गौरवकरणमेव ज्यायः। अहं पपाचेति संज्ञापूर्वको विधिरनित्य इत्युपधादीर्घाभावः हिंसायामर्थ इति अनेकार्थत्वात्।

**थलि च सेटि** [3]३।४।४३

सगुणार्थमिदम्। [4]थलीति किमिति। एवं मन्यते, परोक्षाग्रहणमभि-[5]सम्बध्यते, अगुणार्थं चैतत्। [6]थलोऽन्यस्सेट्सु गुणोऽस्ति। अतोऽन्तरेणापि थल्ग्रहणं थल्येव सेटि कार्यं विज्ञास्यत इति किं थल्ग्रहणेन। पापचितेति प्रत्युदाहरन्नप्येवं मनुते। अनुवर्तमानमपि परोक्षाग्रहणमनेकव्यञ्जनमध्य आदेशादिविषये चागुणायामपि परोक्षायामेत्वाभ्यासलोपयोर्विधायकं स्यात्। तथा च ररक्षिवेत्यादावपि तौ भवेताम्। तस्मादशक्यं परोक्षाग्रहणमभिसम्बद्धुम्। तथा च पापचितेत्यत्रापि सेटि प्राप्नोतीति तन्निवृत्तये थलीति क्रियते चकारः परोक्षायामगुण इत्यस्योत्तरत्रानुकर्षणार्थः। यद्येवं व शसददे॰

१. वाच्यत इति (भं०)
२. शुभ (भं०)
३. ३।४।५२ (दु० वृ०)
४. अधिकः पाठः (भं०)
५. अभिसम्वत्स्यते (?)
६. थल्यन्यस्सेट्सु (भं०)

त्यत्रैतन्नानुकृष्येत, चानुकृष्टस्योत्तरत्रानुवृत्तेः। एवं तर्हि चकारस्तत्रानुकृष्यते तेन तदनुकरणात्परोक्षायामगुणायामपि तत्र निषेधो भविष्यति।

**तृफलभजत्रपश्च श्रन्थिग्रन्थिदम्भीनां च** [1]३।४।४४।

लाक्षणिकत्वादेकव्यञ्जन[2]मध्यत्वस्येति। तथा च बभज्वान् ममध्वानित्यादौ भञ्जि भक्तौ [3]क्वन्सानुषङ्गलोपे सत्येत्वभ्यासलोपौ न भवतः। अवर्णस्येति। अकारस्य आकारस्य च भेजतुरित्यादि यजादित्वादुभयपदम्। [4]रेजे इत्यादि रुचादित्वादात्मनेपदम्।

**न शसददवादिगुणिनाम्** [5]३।४।४५

पूर्वोक्तनिमित्त इति परोक्षायामगुणायां थलि सेटि च ननु गुणिनामकारस्य लाक्षणिकत्वादेवैत्वस्याप्राप्तिरिति किं गुणिग्रहणेन? सत्यम्, प्रतिपदोक्तपरिभाषाया अनित्यत्वप्रदर्शनात् अस्ति [6]प्राप्तिरित्याशङ्का।

**स्वरादाविवर्णोवर्णान्तस्य धातोरियुवौ** [7]३।४।४६

ततोऽन्तशब्देन कर्मधारय इति न तु बहुव्रीहिरिति शेषः। निर्देश[8]सामर्थ्याच्च विशेषणस्याप्यन्तशब्दस्य परनिपातः। यदि पुनरयं बहुव्रीहिस्स्यात्किं स्यादित्याह—यदि त्वित्यादि। यद्येवं बहुव्रीहिर्विज्ञास्यते ततः तस्यान्यपदार्थस्य धातोः प्राधान्यात् तस्यानेकवर्णससवर्णस्येति सवर्णस्येयुवौ न स्याताम्। कर्मधारये तु धातुसम्बन्धिनोऽन्तभूतस्येवर्णोवर्णस्यैव तौ विज्ञायेते इति न भवत्येष दोषः। नन्वियुवौ तालव्यौष्ठ्यावन्तरतम्यादिवर्णोवर्णयोरेव भविष्यतः न धातोः, नैतत्, धातुप्रतिलब्धस्योपसर्जनीभावस्य तयोः बुद्धावपरिस्फुरतोरादेशाभ्यां सम्बन्धायोगात्। यदि कर्मधारयस्ततोऽन्तग्रहणमपार्थकम्। इवर्णोवर्णाभ्यां धातौ विशेष्यमाणे सत्यन्तग्रहणलब्धत्वात्। अस्त्येतत् विशेषणविशेष्यभावं प्रति तु कामचारात् धातुनापीवर्णोवर्णौ विशेष्येयाताम्। ततश्च धातोर्याविवर्णोवर्णौ

१. ३।४।५३ (दु० वृ०)
२. मध्ये त्वस्य (भं०)
३. क्विपा (भं०)
४. भेजे (भं०)
५. ३।४।५४ (दु० वृ०)
६. प्राप्ता नाशङ्का (भं०)
७. ३।४।५५ (दु० वृ०)
८. स्याप्यन्तर (भं०)

तयोरिति विज्ञायमाने मध्यवर्तिनोऽपीवर्णोवर्णयोस्स्थानित्वं स्यान्मा भूदेष दोष इत्यङ्गग्रहणम्। य्वन्तस्येति न कृतमसन्देहार्थम्। क्षिपन्तीति। तुदादेरनीत्यगुणत्वम्। लिङ्गस्य पूर्वमियुवोर्विधानात् धातुप्रकरणत्वाच्च धातुग्रहणे लब्धे किं धातुग्रहणेनेत्याह—धातुग्रहणमित्यादि। उत्तरार्थं धातुग्रहणं क्रियते, यत्वविधौ वक्ष्यमाणमनेकाक्षरस्येतीदं विशेषणं धातोर्यथा स्याद् धातूपसर्गसमुदायस्य मा भूत्। अन्यथा अधीयत इत्यत्रापि यत्वं स्यात्। नन्वसति धातुग्रहणे तन्वन्तीत्यत्र विकरणोकारस्याप्यविशेषादुवादेशस्स्यात्। ततस्तन्निवृत्तये धातुग्रहणं भवेत्, कथमुत्तरार्थं स्यादित्येतत् परमतमाशङ्क्य परिहर्तुमाह—न चेत्यादि। नास्ति विकरणोकारस्योवादेशप्राप्तिः, कुत्र इत्याह—नौविकरणस्येत्यादि। असति हि धातुग्रहणे नौविकरणस्येत्यतदनेन सिद्धत्वान्नियमार्थं विज्ञास्यते। यदा विकरणोकारस्योवादेशस्तदा नौरेव नान्यस्येति। तत् कथमसौ विकरणस्योवादेशप्राप्तिः। ननु विकरणस्यैव नौर्नान्यस्येति। विपरीतोऽपि नियमः कस्मान्न भवति, ततश्चान्तर्वत्नीत्यत्र धातोरुवादेशो न सिध्यतु विकरणस्य प्राप्नोत्येव, नैतत्, नानिष्टार्थशास्त्रप्रक्लृप्तिरिति विपरीतो नियमो न विज्ञास्यते, तस्माद् विकरणपरिहारेण धातोरेव भविष्यतीत्यनुपयुज्यमानमिह धातुग्रहणमुत्तर-सूत्रार्थमेव। इहापि प्रतिपत्तिगौरवपरिहारार्थम्।

**अभ्यासस्यासवर्णे** [1] ३।४।४७

अत्र न सम्बध्यत इति, उत्तरत्र तु सम्बध्यत इति भावः। इयेष उवोष इति। अत्र स्वरविधिपरिभाषया द्विर्वचने सत्युपधागुणः। तत इयुवावसवर्णपरत्वात्। यद्येवमनादिष्टात्स्वरात्पूर्वोऽभ्यासो भवति। ततश्च तस्य कार्ये कर्तव्ये गुणकार्ये कर्तव्ये गुणस्य स्थानिवद्भावात् सवर्णपरत्वात्कथमियुवौ स्याताम्। अस्त्येतत्, वमना तु स्थानिवद्भावे नाश्रयिष्यते। न शेयन्तीत्यादि वचनस्यावकाशः। यदि ह्येक एव ऋकार इदं वचनं प्रयोजयेत् विहाय असवर्णग्रहणमृकार इत्येवं कुर्यात्। तस्मादसवर्णग्रहणात्स्वरान्तरमपि प्रयोजकमस्य वचनस्येति नास्ति वचनसामर्थ्यात् स्थानिवद्भावस्य प्रवृत्तिः। ईषतुः, ऊषतुरिति। परोक्षायां चेत्यगुणत्वम्। नन्वत्र वर्णमात्रापेक्षत्वेनान्तरङ्गत्वात्समानदीर्घत्वे कृते तन्निमित्ते च परलोपे स्वरस्यापरत्वात् कथमियुवौ प्राप्नुतः। अस्त्येतत्। व्यक्तौ तु पदार्थे यावती काचिदिवर्णोवर्णान्ताभ्यासव्यक्तिस्तस्या इवर्ण-उवर्णयोरियुवभ्यां भवितव्यम्। यदि चान्तरङ्गत्वात् समानदीर्घत्वं स्यात्, तत एतद् व्यक्तिविषयं यल्लक्षण तस्यापार्थकत्वं स्यात्, अतो माभूत् तस्यापार्थकत्वमिति वचनात्समानदीर्घत्वे बाधनेनेयुवौ स्यातामित्यसवर्णे इति क्रियते।

---

१. ३।४।५६ (दु० भृ०)

**नोर्विकरणस्य** [1]३।४।४८

नोरसंयोगपूर्वस्येत्यादि नोर्वकार इत्यत्र य इवर्णास्तस्येत्यतोऽसंयोगपूर्व-स्येति वर्तते तेनासंयोगपूर्वस्य नोर्वत्वं वक्ष्यतीत्युक्तम्, तृण्वन्तीति, विकरण-स्यायमुवर्णो व्यपदेशिवद् भाव्यम्। अस्त्यनोरनर्थकादिति। अनर्थकत्वं त्ववयवशो निष्पत्तेः। यस्तु विकरणो नु शब्दः स कर्त्र्यर्थाभिधानप्रवृत्ताख्यात-प्रत्ययसहायभावेनार्थवानिति कृत्वा तस्यैवार्थवत्वात् परिग्रहो भविष्यतीति किं विकरणग्रहणेनेत्याह—विकरणग्रहणमित्यादि। असति हि विकरणग्रहणे धातो-रेव नोरयमुवादेशो निमित्तान्तरे विधीयत इति कश्चित् सम्भावयेत् तदेवंविध-सम्भावनाविनिवृत्तये विकरणग्रहणमित्यर्थः। नन्वेवं सति नोर्वकारो विकरण-स्येति नोर्वत्वविधानमपार्थकं स्यात्। तद्धितस्य वत्वमनेन सूत्रेण प्राप्तस्योवा-देशस्य बाधनार्थं क्रियते यदि चात्र धातोर्ग्रहणं स्यात् ततो विकरणस्य नोरुवा-देशो नैव प्राप्नोतीति। तद्बाधनार्थं वत्वविधानमपार्थकं स्यात्। तस्मात् ततो वत्वविधानान्नात्र धातोर्ग्रहणं भविष्यति, नैतत्, असंयोगपूर्वत्वे तस्य वत्वविधानस्य सार्थकत्वात्।

**य इवर्णस्यासंयोगपूर्वस्यानेकाक्षरस्य** [2]३।४।४९

य इति स्वरूपेणार्थेनार्थवत्वात् प्रथमा। अक्षरशब्देन स्वरा उच्यन्त इत्यन्वर्थस्याक्षरस्याक्षरशब्दस्य ग्रहणात्। स्वरादाविवर्णेतीयादेशः प्राप्त इति तेन सिद्धमपि यत्वं विधीयत इति भावः। दिदीव्यतुरित्यादि। ननु द्विष्प्रयोगः द्विर्वचनपक्षे स एव शब्दो द्विरुच्चार्यत इति कृतद्विर्वचनोऽपि चिनोत्यादिरेकस्वर एव, सत्यम्। आवृत्तिकृतेत्यनेकाक्षरत्वं भविष्यति। अभेदेऽपि हि वस्तुन आवृत्तिलक्षणधर्मभेदात् दृष्टो भेदव्यवहारो यथा—मरुद्भवान् पटुरासीत्। पटुतरश्चैषमोऽन्य एवासि संवृत्त इति। ननु मुख्यो दीदीप्रभृतिरनेकाक्षरो धातुरस्ति तत्कथं यत्रावृत्तिकृतं गौणमनेकाक्षरत्वं तत्र स्यात्, नैतत्, गौण-विषयपरिहारे ह्यसंयोगपूर्वग्रहणमपार्थकं स्यात्। संयोगपूर्वस्य मुख्यस्यानेकाक्षर-स्येवर्णान्त्यस्य धातोरसम्भवात्। तस्मादसंयोगपूर्वग्रहणाद् गौणमप्यनेकाक्षर-त्वमत्राश्रीयते। इवर्णोवर्णयोः प्रस्तावेऽप्यान्तरतम्यादिवर्णस्यैव यत्वं विज्ञास्यत इति किमिवर्णग्रहणेनेत्यभिप्रायेणाह—इवर्णस्येति किमिति आन्तरतम्ये यः प्रत्ये-तुमशक्तः वं प्रत्युवर्णस्यापि स्यादित्याकूतेन प्रत्युदाहरति। जुहुवतुरिति विधी-यन्त इति। तुदादेरनीत्यगुणत्वम्।

---

१. ३।४।५७ (दु० वृ०)
२. ३।४।५८ (दु० वृ०)

**इणश्च** [1]३।४।५०

इकोऽपीष्यत इति च शब्दात्, एरिति कृते धातुग्रहणानुवृत्त्या इकारेऽपि शेष्यमाणेऽपीटस्स्यादिति तन्निवृत्तये णकारोपादानम्।

**नोर्वकारो विकरणस्य** [2]३।४।५१

नु-ग्रहणं विस्पष्टार्थम्। उवर्ण-संयोगपूर्वग्रहणानुवृत्तौ हि नु ग्रहणं लभ्यत एव।

**जुहोतेः सार्वधातुके** [3]३।४।५२

श्तिपा निर्देशादिह न भवति, जोहुवति, चेक्रीयितलुगन्ताज्जुहोतेरन्ति-प्रत्ययः।

**भुवो वोऽन्तःपरोक्षाद्यतन्योः** [4]३।४।५३

अगुण इति निवृत्तम्, स्वरादाविति वर्तते। तेन परोक्षाद्यतन्यौ विशेष्येते तदाह—परोक्षाद्यतन्योस्स्वराद्योरिति वृद्धयावादेशौ कस्मान्न भवतः इति अटि परस्योपधाया इत्यादिना वृद्धिः प्राप्ता। अगुणे तु स्वरादाविवर्णेत्युवादेशः प्राप्तः, तौ च वृद्धयावादेशौ प्राप्तकार्योपलक्षणपराविति मन्तव्यम् तथा च थल्यपि परे गुणः प्राप्तः, तौ वृद्धयावादेशौ, स च गुणो वकारात्पूर्वा प्राप्ता-स्मन्तः कस्मान्न भवति। अनवकाशत्वं च वकारागमस्यानपेक्ष्यैष प्रसङ्गश्चो-दितोऽन्यथा वकारागमेऽनवकाशत्वाद् बलीयसि सति कथं वृद्धयादेः प्रसङ्गः स्यात्। तयोः कृतयोरित्यादि। प्रसक्ते वृद्धयादिकार्ये भूरूपापगमादुकारागमस्य प्राप्तिरिति अर्थः। एकदेशविकृतमित्यादिना तस्य प्राप्तिमाह—इदानीमनव-काशत्वाच्च वृद्धयादेरादेशादुकारागमो बलीयानिति। स एव पूर्वं प्रवर्तत इत्यभिप्रायेणोत्तरयति। अत्रोच्यत इत्यादि। कृते तस्मिन्वृद्धयावादेशौ न भवत इति। अनाप्यन्तत्वादनुवर्णान्तत्वाच्च बभूवानिति घोषवन्त्योश्च कृतीति इडभावः। बभूव इत्यत्र त्वघुट्स्वरादौ वन्सेर्व-शब्दस्योत्वे कृते सति स्वरादि-त्वेऽपि वकारागमो न भवति, बहिरङ्गासिद्धपरिभाषया त्वस्यासिद्धत्वात् स्वरादित्वाभावात्। पुनर्वकारो वैचित्र्यार्थ इति। ननु लब्धादेशभावः प्राग्व-कारोऽजहद्धर्मत्वादधिकाराणामिहाभिसम्बध्यमानोऽप्यादेश एव स्यात् नत्वा-

---

१. ३।४।५९ (दु० वृ०)
२. ३।४।६० (दु० वृ०)
३. ३।४।६१ (दु० वृ०)
४. ३।४।६२ (दु० वृ०)

गमः, नैतत्, अन्तग्रहणानर्थक्यप्रसङ्गात् । आदेशत्वे हि वर्णान्तविधित्वादेवान्त्यग्रहणमवाप्यत इति किं तेन कृतं स्यात् । आगमत्वे तु विशिष्टदेशावयवतां वकारस्याख्यापयितुमन्तग्रहणमर्थवद् भवति, तस्मादर्थान्तग्रहणादनुवर्तमानोऽप्यादेशो वकार इहागमो विज्ञास्यत इति नार्थः पुनर्वकारोपादानेन ।

**गोहेरूदुपधायाः** [1]३।४।५४

कृतगुणस्येति । कृतगुणो गुहिरत्रानुक्रियत इति भावः । इति तु नायं गुणो वृथा गोहेरिन्नन्तस्य स्वरादावुपधायाः तूत्वमुच्यमानं हकारस्य प्रसज्येत । अथ किमर्थमभूदिति दीर्घ उच्चार्यते, यावता ह्रस्वेऽप्युच्चार्यमाणे आन्तरतम्यादोकारस्य दीर्घ ऊकार एव भविष्यतीति नैतत् । दीर्घोऽत्रान्तरतम्यादादेशो न तु सूत्रोपात्तः, योऽत्र ह्रस्व इति नास्ति विशेषप्रमाणम् । एवं हि सूत्रोपात्तो ह्रस्व एवादेशस्स्यान्न तु दीर्घः । एतदपि चात्र शक्यते वक्तुं, यदि दीर्घ आदेशोऽभिमतस्स्यादसन्देहार्थमूकारमेवादेशं विदध्यात् इति । तस्मादसति दीर्घोच्चारणे ह्रस्व एवादेशस्स्यात् स मा भूदूकार एव यथा स्यादिति ऊदिति क्रियते । उदिति कर्तव्ये उपधाग्रहणं ह्रस्वविधावुपयोगार्थम् । अतएव गूहिति न कृतम् ।

**दुषेः कारिते** [2]३।४।५५

इनीति कृते युजरुजीत्यादिविहितस्य घिनिणोऽपीनः ग्रहणं कश्चित् सम्भावयेदिति कारित इत्युक्तम् ।

**वा चित्तविरागे** [3]३।४।५६

चिती संज्ञाने चेतनं चित्तं, भावे क्तः, विपूर्वाद् रञ्जेर्भावे घञ्, रञ्जेर्भावकरणयोरिति पञ्चमलोपः, वैचित्यमिति [4]चित्तस्याप्रतीतिता ।

**मानुबन्धानां ह्रस्वः** [5]३।४।५७

मकारोऽनुबन्धो येषां ते मानुबन्धाः । के पुनस्ते इत्याह—घट चेष्टायामित्यादि । षम ष्टम [6]वैकल्ये । इत्येतदन्ता इति । अतः परं वृत्करणात् ।

१. ३।४।६३ (दु० वृ०)
२. ३।४।६४ (दु० वृ०)
३. दुर्गवृत्तौ नोल्लिखितमिदं सूत्रम् ।
४. चित्तस्याप्रीतता (भं०)
५. ३।४।६५ (दु० वृ०)
६. वैक्लव्ये (भं०)

ननु नास्ति तेषां मकारोऽनुबन्धस्तत्कथं ते मानुबन्धा इति बहुव्रीहिणोच्यन्त इत्याह- अमानुबन्धा अपीत्यादि। कार्यार्थमिति ह्रस्वार्थम्। [1]तैलपायिकादिवत् अमिता अप्यवयवार्थेन मकारोऽनुबन्धो येषामिति विग्रहः क्रियते पूर्वाचार्यैः। मानुबन्धा उच्यन्त इति। तथा चाहुः—घटादयो मित इति मितो मानुबन्धा इत्यर्थः। तेषामुपधाया ह्रस्वो भवतीति। यद्येवं षणु गतिदानयोः, दक्ष गतिहिंसयोरित्यनयोः ह्रस्वभाविन्युपधा नास्तीति घटादिषु मानुबन्धप्रतिज्ञानार्थमनर्थकः पाठः। एवं तर्हि पाठसामर्थ्यादनयोरनुपधादीर्घत्वं प्रवर्तते। तथा च अक्षञ्जि अक्षाञ्जि, अदक्षि अदाक्षीत्युत्तरसूत्रेण ह्रस्वविकल्पः सिद्धः। शमयतीत्यादि। जनीजॄष्क्नसुरञ्जोऽमन्तत्वाच्छमिरमिभ्रमयो मानुबन्धाः। दॄ इत्ययं भयार्थे इति मानुबन्धास्स्मर्यत इति सम्बध्यते। एवं चलि कम्पनेऽर्थे इत्यत्रापि व्यवस्थितविकल्पानुवृत्तेस्सङ्क्रमयतीत्यादयः अदिति कर्तव्ये ह्रस्वग्रहणमन्त्यादेशनिवृत्त्यर्थम्। हेड वेष्टने इत्यस्य च घटादिषु पठितस्य हेडयतीति रूपमिष्टम्, अदितिकृते न सिध्येत्।

इचि वा [2]३।४।५८

कारित इति वर्तते तद्विशेषणमिज्ग्रहणम्। इच्परे कारिते ह्रस्वो भवति। यद्येवं शमयनप्रायोजीति शमेरिन्नन्तात्पुनरिनि कृते तदन्तादिचि सत्यशमि अशामीति ह्रस्वविकल्पो न प्राप्नोति, पूर्वेण लुप्तेऽपि स्थानिवद्भावात्परस्येना व्यवहितत्वात्, सत्यम्। इञ्जातेराश्रयणाददोषः।

जनिवध्योश्च [3]३।४।५९

जनिस्सामान्य इति जननार्थात्प्रादुर्भावार्थाच्च हन्तेश्च यो विधिरिति। अद्यतन्यां चेत्यनेन विहिताः। अथ बन्धनार्थो वधिः कस्मान्न गृह्यत इत्याह—वध बन्धन इत्यस्येत्यादि। ये तु मान्वधादिसूत्रे वेत्युत्तरसूत्रात् अभिसम्बध्नन्ति तान्प्रतिषेधे नित्यं मान्तत्वं नास्तीत्यसावपि गृह्यते यदि वधिर्नित्यमान्तत्वं तर्हि भक्षकश्च नास्ति बाधकोऽपि न विद्यत इति कथं प्रत्ययान्तरविषये वधेः प्रयोगः इति पृच्छति। यद्येवमित्यादि। ब्रूम इत्यादिनोत्तरयति। अयं च विचारो वृत्तिकृता यो मन्दमतिर्बकारवकारयोरौष्ठ्यत्वं दन्त्यौष्ठत्वं न वेत्ति तं प्रति कृतः।

---

१. तैलपायिकादिवत्मता (वा०)
२. ३।४।६६ (दु० वृ०)
३. ३।४।६७ (दु०वृ०)

**ओदौद्भ्यां यिन्नायी स्वरवत्**[१] ३।४।६०

आद्यं दत्वमन्तर्वर्तिनीं विभक्तिं प्रत्ययलक्षणेनाश्रित्य पदान्तत्वाद्वर्गप्रथमा इत्यनेन। अपरमपि धुटां तृतीय इत्यनेन। यिन्नायीति द्विर्भावः प्रत्ययलक्षणेन पदान्तत्वात्। स्वराविव स्वरवत्। यथासंख्यमिह नास्ति, यथासंख्यपरिभाषाया नवेञ्ज्योर्यपीति वेञो यपि सम्प्रसारणनिषेधारम्भात्क्वचिदनित्यत्वावगमात्। स्वरे परे यत्कार्यमोकारौकारयोरुक्तमिति किम् पुनस्तत्, अवावौ। ननु स्वर इत्येवं तावुक्तौ यद्यपि नोक्तौ तथाप्यर्थात्स्वर एव विज्ञायते। एतच्च यत्वविधावुक्तमेव। नन्वित्यादि चोद्यमसदित्यादिना परिहरति। तस्मिन्परिहृते सति लोपस्वरादेशपरिभाषयेत्यादिना परमतमाशङ्कते। स्यादेतत्, यद्यपि लोपविधे बलवत्वात् बलीयान्नालोपः प्राप्नोति, तथापि लोपस्वरादेशपरिभाषया स्वरस्य यावादेशाववावौ तावेव लोपात् पूर्वं भविष्यतः तत्किमायेस्स्वरवद्भावविधानेनेति, तन्न, कथमित्याह—स्वरो हि यादेशः इत्यादि। लोपस्वरादेशपरिभाषायां स्वरादेश इत्ययं कर्मधारयो न तु षष्ठीतत्पुरुषः। तस्मिन्हि सति स्वरयोरोदौतोरवावौ लोपात्पूर्वं सिद्धावित्यायेस्स्वरवद्भावशासनमपार्थकं स्यात्। कर्मधारये तु न तयोरस्ति पूर्वं प्रवृत्तिः, नहि तौ स्वरात्मकावादेशौ किं तर्हि स्वरव्यञ्जनात्मकाविति। स्वरादेश इति। कर्मधारय एव न्याय्यः ननु षष्ठीतत्पुरुष एव स्यात् येनायेस्स्वरवद्भावशासनमपार्थकं जायेत इत्याशङ्क्याह—अन्यथेत्यादि। यदि कर्मधारयादन्यः षष्ठीतत्पुरुषलक्षणः प्रकारः[३]आश्रयः यस्स इत्यत्र यत्तत् स्वरादेशपरिभाषया सिलोपात्पूर्वमिष्यमाणं त्यदाद्यत्वं न स्यात्, व्यञ्जनादेशत्वात्। कर्मधारये तु तत्पूर्वं सिद्धं भवतीति त्यदाद्यत्वस्य स्वररूपादेशत्वात्। अतः कर्मधारय एव युक्तः। एवं च पूर्वमवावौ न सिध्यत इत्यायेस्स्वरवद्भावविधानमर्थवद्भवति। इहातिनूयत इत्यतिनुशब्दात् अतिगिवाचरतीति विगृहीते सत्यपि प्रत्यय उपजायते। एकदेशविकृतस्यानन्यत्वादतिनौशब्दोऽयम्। अतस्स्वरवद्भावः कस्मान्न भवति, न भवत्यौकारव्यक्तेरिह परिग्रहस्मरणात्तस्याश्चैकदेशविकृतन्यायेनासम्भवात्। तेन हि न्यायेनातिनुशब्दस्यातिनौ-व्यपदेशोऽस्तु, न त्वौकारान्तता-व्यपदेशः, गौणो वायमौकारान्त इति न भवति।

**नाम्यन्तानां यणायियिन्नाशीश्च्विचेक्रीयितेषु ये दीर्घः**[४] ३।४।६१

यणो णकारस्य द्विर्भावो न भवति तस्य संज्ञापूर्वकेनानित्यत्वात्। लिङ्गा-

---

१. ओतो यिन् आयीस्वरवत् तथा औतश्च ३।४।६८ (दु० वृ०)
२. बलीयस्त्वात् (मं०)
३. अभिधीयते ततो यस्स (मं०)
४. ३।४।७० (दु० वृ०)

नाञ्चेति । यिन्नायिभ्यां लिङ्गस्याक्षेपादेवमुक्तम् । आशिषि ये यकार इत्यभिहिते सति कथं य इत्येतदाशिष एव विशेषणं न तु यणादीनामित्येतद्विशेषणं स्यादिति यो मन्यते तं प्रत्याह—य इत्येतदाशिषो विशेषणमिति सम्भवव्यभिचाराभ्यामाशिष एवैतद्विशेषणमिति भावः । अव्यभिचारादिति ([1]यण् नायियणश्चेक्रीयितं च यकाररूपतां न व्यभिचरन्तीत्यर्थः । चेष्टीष्टेति । नन्वस्तु दीर्घो अत्र तस्य गुणो भविष्यतीत्याह—यदि दीर्घस्स्याद् गुणो न भवेदिति दीर्घविधानसामर्थ्यादिति) शेषः । नाम्यन्तानामिति किम्, चिकीर्ष्यते, चिकीर्ष्यात् । अस्य च [2]लोप इत्यतो लोपं परत्वात्प्राप्तमपि विशेषविधानाद् दीर्घो बाधते ।

**इणोऽनुपसृष्टस्य [3]३।४।६२**

उपपूर्वात्सृजेः उपसृज्यते स्मेति क्तः, भृजादित्वात् षत्वम्, ([4]आशीग्रहणमिष्टत्वादपेक्ष्यत) इति न सर्वे यणादयः । कुतः, उच्यते । यिन्नायी तावन्नापेक्षते, धातोरिणस्तयोरसम्भवात् । चेक्रीयितमपि व्यञ्जनादेर्विधीयमानं ततो न सम्भवति । एवं यणाशिषोरपि मध्यादाशीरेवानन्तर्यादनुवर्तते, तेन तस्या एवात्रेष्टो निमित्तभावो न तु यणः । तेन तस्मिन् परः समीयत इत्यादौ इण उपसृष्टस्यापि दीर्घो भवति । [5]उपसर्गेण युक्तस्येति । कथं पुनः केवलस्येणः कार्यमुच्यमानमुपसर्गयुक्तस्य प्राप्नोति, धातुग्रहणे उपसर्गग्रहणं भवतीत्यतो वचनात् । अस्य वचनस्यास्तित्वे इदमेव निषेधकरणं लिङ्गम् । तथा च गोसन्दाय इति समो व्यवधायकत्वाभावात्कर्मण्यण् भवति । अथाप्रादेरिति कस्मान्न क्रियते, नैवं शक्यम् । [6]नरसन्धीयादित्यादौ कर्मप्रवचनीयः प्रादियोगेऽपि निषेधप्रसङ्गात् । अथोपसर्गेणैव प्रादिना धातोरन्तरङ्गस्सम्बन्धो नान्येनेत्युच्यते । तर्हि शक्यमनुपसृष्टग्रहणमकर्तुं, तत्क्रियते विस्पष्टार्थम् ।

**ऋत ईदन्ताच्चेक्रीयितयिन्नायिषु [7]३।४।६३**

ईकारो विधीयमानः ऋदन्तो विधिभाक् । ईकारस्य विशेषणमन्त इति

---

१. को० न्यूनपाठः (भं०)
२. लोपस्य न (भं०)
३. ३।४।७१ (दु० वृ०)
४. ग्रहणसम्बन्धादपेक्ष्यत (भं०)
५. न्यूनपाठः (वा०)
६. गोः सन्दीयात् (भं०)
७. ३।४।७२ (दु० वृ०)

ईकारागमो भवतीति। अन्तशब्दस्य विशिष्टदेशावयववादित्वात्। एवमन्यत्रापि मन्तव्यम्। मात्रीयति मात्रीयत इति मातरमिच्छत्यात्मनः। मात्रेवाचरति, यिन्नायीति। ऋ इति कर्तव्ये किमृत इति तपरकरणेनेत्याह—ऋतयति तपरकरणमित्यादि।

**इरन्यगुणे** [1]३।४।६४

अन्विकरणे अगुणे पर इति नत्वविकरणे, कुतः विकरणस्यैवानस्तुदादेरनीति साक्षाद् अगुण [2]उपदेशासम्भवात्। नन्वाद्रियत इत्यादिविकार आगमे कृते सतीयादेशेन भवितव्यम्, न च कृते तस्मिन् ह्रस्वस्य दीर्घस्य वा रूपं प्रति विशेषोऽस्ति। एवं च एकार एवानुवर्त्यताम् किमिकारागमविधानेनेत्यत आह—ईकारागमेऽनुवर्तमान इत्यादिना चोत्तरत्र विहिते इकारागमे नाम्यन्तानां यिन्नायीति तस्य दीर्घेण भवितव्यमिति शक्यं वक्तुमिकारागमविधानसामर्थ्यात्। [3]दीर्घस्य त्वस्याप्रवृत्तेः हरतीति परोऽप्यगुण आगमेन बाध्यते बलीयस्त्वात्। बलीयस्तत्रास्य कृतोऽन्यगुणे इत्येवं विशेषेण विधानात्।

**गुणोर्तिसंयोगाद्योः** [4]३।४।६५

ऋत इति वर्तते, तस्यार्तिसंयोगाद्योरिति विशेषणं विज्ञायत इत्याह—अर्तेस्संयोगादेश्च ऋकारस्येति, समृषीष्टेति। [5]सम्पूर्वादर्ते रुचादित्वात्मनेपदम्। इह कस्मादित्यादि। चोद्यमस्त्येतदित्यादिना परिहरति। एकपदविषय इत्येकपदं विषयो यस्येति विग्रहः। एकपदविषयत्वं तु गुणस्य पदान्तरानपेक्षत्वात्। सुडागमस्य तु पदद्वयं विषयः। बाह्यसंशब्दापेक्षत्वात्। अरिति कर्तव्ये गुणग्रहणस्य संज्ञापूर्वकत्वेनानित्यार्थत्वादिह न भवति, निह्रियते निह्रियात्।

**चेक्रीयिते च** [6]३।४।६६

पूर्वत्रैव चेक्रीयित इति न कृतमुत्तरत्र यिणाशिषोरपि कश्चिदनुवृत्ति सम्भावयेदिति।

---

१. ३।४।७३ (दु० वृ०)
२. व्यपदेश (भं०)
३. दीर्घत्वस्या (भं०)
४. ३।४।७५ (दु० वृ०)
५. को० न्यूनपाठः (भं०)
६. ३।४।७६ (दु० वृ०)

**आम्मोरीः** [1]३।४।६७

जेघ्रीयत इत्यादि। अत्र परत्वादीत्वं ततो द्विर्वचने इकारे विधातव्ये ईत्वविधानं प्रक्रियालाघवार्थम्। नाम्यन्तानां यिणायीत्यादिना विधीयमाने इत्वे प्रक्रिया[2]गौरवं स्यात्। इत्वविधानसामर्थ्याद्वा ईत्वमेव न भवेत्।

**यिन्यवर्णस्य** [3]३।४।६८

अस्येति कर्तव्ये वर्णग्रहणं कार्यान्तरवर्णनार्थम्। तेन अशनायति उदन्यति धनायति। उदक्-शब्दस्य उदन्नादेशः, बुभुक्षापिपासागर्धेष्वर्थेष्वमी प्रयोगाः, अर्थाभिधानस्य स्वाभाविकत्वात्। गवस्तृषा विशेषः, बुभुक्षायास्त्वन्यत्राशनीयतीत्यादि भवति।

**वा परोक्षायाम्** [4]३।४।६९

ननु सरक्-प्रत्ययविधाववगतस्वरूपेण घसिना प्रत्ययेन जघासेत्यादि सेत्स्यति। आद इत्याद्यपि अदिना तत्कि योगारम्भेण ? उच्यते—ज्ञापनार्थः प्रकृत्यन्तरघसिर्न सर्वत्र प्रयुज्यत इत्येतदनेन ज्ञाप्यते, अन्यथा हि योगारम्भो निरर्थकस्स्यात्। युटि तु तस्य प्रयोगं कृत्वा घसन इति लिङ्गात्।

**वेञो वयिः** [5]३।४।७०

इकार उच्चारणार्थ इति, न तु अनुबन्धः। नकारागमप्रसङ्गात्। नन्वप्रयोगित्वात्कथमयं नानुबन्धः नाप्रयोगित्वमात्रानुबन्धकत्वं, किन्तर्हि कार्यार्थमुच्चारितस्य सतः यदप्रयोगित्वं ततः कुत एतत्। अनुबन्ध इति पूर्वाचार्यसंज्ञापरिग्रहात् तथा च अनुबध्यते कार्यार्थमासज्यत इत्येवमनुबन्धशब्दार्थं व्याचक्षते, उवायेत्यादि वयिना सिद्धम्. तस्यात्मनेपदित्वात्।

**अद्यतन्यां च** [6]३।४।७१

अवधीत्यादिनान्तस्य हन्तेरिट्[7]प्रतिषेधतस्य मानोऽत्र न भवत्यनान्तत्वात्।

---

१. ३।४।७७ (दु० वृ०)
२. लाघवम् (भं०)
३. ३।४।७८ (दु० वृ०)
४. ३।४।८० (दु० वृ०)
५. ३।४।८१ (दु० वृ०)
६. ३।४।८३ (दु० वृ०)
७. सम्बध्य (भं०)

सेटो वेति दीर्घविकल्पस्तु न भवति वा-शब्दस्य ([1]तत्र व्यवस्थितविभाषा-वाचित्वात्। इष्टिवशान्न लोप इति हन्तेर्पञ्चमलोप इष्यत इति येयमिष्टि-स्तत्सामर्थ्यादित्यर्थः। योगविभाग उत्तरार्थः।

**इङः परोक्षायाम्** [2]३।४।७२

पूर्वं द्विर्वचनं स्या(दिति। ततश्चाधीग इत्याद्यनिष्टं भवेदिति भावः। कृतग्रहणादिति। स्वरविधिपरिभाषया द्विर्वचने सतीति सत्सप्तमी व्याख्याना-दर्थात्कृतग्रहणं लभ्यत एवेति यत्तत्र कृतग्रहणं क्रियते, ततोऽवगम्यते क्वचिद् द्विर्वचनादपि पूर्वं स्वरविधिः[3] (प्रवर्तयतः इति तेन पूर्वं स्वरविधिर्निदेशः) ततो द्विर्वचनम्, तेनेति कृतग्रहणेन अनन्तरिरिटि कृत इति स्मिङ्पूङित्यादिना यदि तु कृतग्रहणं क्वचित् पूर्वं स्वरविधेरेव गमकं न स्यात् ततो अरिरिष्यतीत्यत्रान्ते-रिटि कृते [4]स्वरादेर्द्वितीयस्येतीटो द्विर्वचने सति ततः स्वरविधौ गुणः समान-दीर्घत्वे च अरीषतीत्यनिष्टं प्रसज्येत, अध्यगीष्टेत्यादिगे इत्येवमकरणाद् गुणाभावः।

**सनीणिङोर्गमिः** [5]३।४।७३

बोधनेऽर्थे बोधनं ज्ञानम्, अवबोधनेऽर्थे इत्यादि। इण्वदिक् इति स्मरणा-दिकोऽप्यवबोधने अर्थे इष्यते, अधिगमयति, अधगयतीति सति दीर्घे मानुबन्धात् ह्रस्वः, मानुबन्धत्वं तु मान्तत्वात्। नन्वेतद् गमिनैव सिद्धम्, सिध्यत्यव-बोधने त्वर्थे इति इनः कारितेः प्रयोगस्स्यात् स मा भूदिति गमिरादेशो वक्तव्य एव। अनभिधानं च दुर्ज्ञानम्। अर्थान् प्रत्याययतीति बोधयतीत्यर्थः।

**अस्तेर्भूरसार्वधातुके** [6]३।४।७४

असार्वधातुकविषय इत्येतेनासार्वधातुक इति विषयसप्तमीयं न परसप्त-मीति दर्शयति। भवतीत्यादि विषयसप्तम्यामसञ्जाते प्रत्यये पूर्वं भूरादेशः तस्य स्थानिवद्भावाद् धातुत्वाच्छ्वस्तन्यादयो भवन्ति। अस्तेरिति श्तिपि निर्देशो वैचित्र्यार्थः। नत्वस्यतेर्निवृत्त्यर्थः। तस्याकारेणानुबन्धे सानुबन्धत्वा-

---

१. को० न्यूनपाठः (भं०)
२. ३।४।८५ (दु० वृ०)
३. कोष्ठांकितस्य स्थाने तावदेव इति पाठः (भं०)
४. ह्रस्वादेशाद् द्वितीयेति दीङो (भं०)
५. ३।४।८६ (दु० वृ०)
६. ३।४।८७ (दु० वृ०)

न्निरनुबन्धपरिभाषया ग्रहणासम्भवात्। नन्वस्तिरप्यकारेणानुबन्धवानेव, नैतत्, उच्चारणार्थो ह्रस्याकारो नत्वनुबन्धः, कार्याभावात्। भूरिति दीर्घोच्चारणं भूतादिसिध्यर्थम्। असार्वधातुक इति पर्युदासाश्रयणेन यदि सार्वधातुकसदृशे प्रत्यये परत इति परसप्तमी स्यात् तत्को दोषः येनासौ नाश्रीयत इत्याह— असार्वधातुक इति। यदीत्यादि। यद्येषा या सप्तमी व्याख्याथेत ततो येन भावकर्मार्थविवक्षायां कृत्यप्रत्यये भूरादेशश्चिकीर्षितः तस्य तस्मिन्परे तेन भवितव्यम्। एवं चास्तेः व्यञ्जनान्तत्वाद् घ्यणि परतः सञ्जाते त्वादेशेन भाव्यमित्यनिष्टं प्रसज्येत। विषयसप्तम्यां त्वेष दोषो नास्तीत्याह—विषयसप्तम्यां त्वित्यादि। तु शब्दो परसप्तमीपक्षाद् विषयसप्तमी ([1]पक्षस्य विशेषं) द्योतयति विषयसप्तम्या हि सार्वधातुकविषये न भवतीति निषेधमात्रे तात्पर्यत्वादादेशं प्रतिनिमित्तमनपेक्षितमिति पूर्वं त्वादेशः ([2]ततः तस्य स्वरान्तत्वात् घ्यणोऽपवादो स्वराद्य इति य-प्रत्यये सति भाव्यमिति इष्टं सिध्यति। अथेत्यादिना) कस्यायं प्रश्नः [3]ततस्त्वावश्यकाविवक्षायां भाव्यमित्ययं प्रयोग इष्टो नावश्यके तु भाव्यमित्येवं दोषः आपादित इत्यभिप्रायेणाह—[4]भवतीत्यादि। तस्माद् दुष्टत्वादसार्वधातुक इति विषयसप्तमीपक्षः भूरेवासार्वधातुके प्रयोक्ष्यते, नत्वस्तिरिति प्रयोगनैयत्ययं [5]मधुरमतिभिर्विना वचनं दुर्ज्ञानमिति योगारम्भः।

**ब्रुवो वचिः** [6]३।४।७५

ब्रूयादिति सप्तम्यां चेत्यगुणत्वम्। इडागमोऽत्र न भवति सगुणे तस्य विधानात्। इहापीत्यादि व्याख्यातप्रायम् वाच्यमिति घ्यण् वचोऽशब्द इति कत्वाभावः।

**चक्षिङः ख्याञ्** [7]३।४।७६

यद्यसार्वधातुके पर इत्यादि। असार्वधातुक इत्येतदिहाभिसम्बध्यमानं यदि परसप्तम्यन्तं विज्ञायेत ततश्चक्षिङः आत्मनेपदित्वादात्मनेपदे सार्वधातुके

---

१. न्यूनपाठः (भं०)
२. को० न्यूनपाठः (भं०)
३. इतरस्त्वावश्यविधर्मायं (भं०)
४. तस्माददुष्पक्षश्च द (भं०)
५. मधुरमतिविवेचनं (भं०)
६. ३।४।८८ (दु० वृ०)
७. ३।४।८९ (दु० वृ०)

सञ्जाते सति ख्याञादेशेन भवितव्यम् । एवं चात्मनेपदेनावष्टब्धः परदेश इत्युभयपदे प्रवृत्त्यभावात् तत्प्रवृत्तिफलं ख्याञो ञानुबन्धकरणमपार्थकं स्यात् । तस्मात् तत्कारणादवगम्यते । नूनं—ख्याञादेशोऽयमसार्वधातुकोत्पत्तेः पूर्वं प्रवर्तत इति । यथा चोभयपदं परं सिद्धं भवति तस्मात् ञानुबन्धकरण-सामर्थ्यादसार्वधातुक इति विषयसप्तमीपक्षः संचक्ष्यत इति संचक्षणीय इति विग्रहः । रुचादेश्च व्यञ्जनादेरिति युरिति । नन्वकर्मकादसौ स्मर्यमाणः कथं पक्षे सकर्मकः स्यात् । अविवक्षितकर्मत्वादकर्मकोऽ[1]यमिति भविष्यति । नृचक्षा राक्षसा इत्यमनिना भवत्यौणादिकत्वात् । नॄश्चक्षिष्यत इति विग्रहः । ननु चक्षिङो ङकार आत्मनेपदार्थ आसज्येत तच्च तस्य आत्मनेपदं रुचादित्वादेव सिद्धमिति किं ङानुबन्धकरणेनेत्याह—चक्षिङो रुचादित्वादित्यादि । तेन किं सिद्धं भवतीत्याह—तेनेत्यादि । रुचादिलक्षणस्यात्मनेपदस्यानित्यत्वेन हेतुना न सहति हिमं नोष्णमित्यादौ प्रयोगे सहे रुचादित्वादात्मनेपदिनोऽपि परस्मै-पदं सिद्धं भवति । यद्येवं ङकार एव क्रियताम्, अनुदात्तानुबन्धः त्विकारोऽस्य न कर्तव्यः । रुचादिनिमित्तस्यात्मनेपदस्यानित्यत्वमेत्वं कृते ज्ञापितं स्यादिति-चेन्न, गणकृतमनित्यमिति वचनात् तदनित्यत्वस्य सिद्धत्वात्, नैतत्, असति ह्यनुदात्तानुबन्ध इकारे रुचादित्वाभावाद्विचक्षण इत्यत्र रुचादिलक्षणो यु-प्रत्ययो न स्यात्, तस्मात् सत्यपि ङकारे रुचादित्वाभ्यनुज्ञानार्थश्चक्षिङ इकारोऽनु-दात्तानुबन्धः कर्तव्य एव ।

**अजेर्वी** [2]३।४।७७

आनन्तर्यात्परोक्षाग्रहणस्यानुवृत्तिं यो मन्यते तं प्रत्याह—विशेषादिष्ट इत्यादि । असार्वधातुकविषय इति । तेनासर्वधातुकोत्पत्तेः पूर्वं वीभावे कृते वयमित्यत्र स्वराद्य इति य-प्रत्ययः सिद्धो भवति । प्रजनन्त्यनेनेति करणे युट्, व्यञ्जनादावसार्वधातुकेऽपि विकल्पः स्मर्यते । प्रवेता प्राजिता प्रवेतुम् प्राजितुम् ।

**वा चेक्रीयितस्य** [3]३।४।७८

जुहोत्यादिरिति [4]नापेक्ष्यते बोभवीतीत्यादि । य-शब्दलुकि कृते प्रत्यय-लक्षणेन द्विर्वचनादिकार्यम् ।

---

१. अपीतितिष्ठति (भं०)
२. ३।४।६१ (दु० वृ०)
३. दुर्गवृत्तौ नोल्लिखितमिदं सूत्रम् ।
४. वक्ष्यते (भं०)

**इणुस्थादापिबतिभूभ्यस्सिचः परस्मै** [1]**३।४।७९**

इणो णानुबन्धनिर्देशो विस्पष्टार्थः । इण्वदिक इति द्विवचनादिकोऽपीष्यत एव । इणोऽप्यात्मनेपदित्वादिह ग्रहणेन सम्भवत्येव दा इति दा-संज्ञका इति दा-संज्ञाविधानसामर्थ्यात् । व्यत्यभविष्टेति कर्मव्यतिहारे रुचादित्वादात्मनेपदम् । पिबतीति निर्देशो धातुरूपप्रतिपत्त्यर्थः । पा रक्षण इत्यस्य हि लुग्विकरणत्वादेव ग्रहणं न भविष्यति, पायतेरपि [2]शोषणार्थस्य लाक्षणिकत्वात् । आघ्रासाताम् पुष्पो देवदत्तेनेति कर्मण्यात्मनेपदम् । अड् धात्वादिः दीर्घात् परलोपः, सिच् ।

[3]आख्यातप्रकरणे चतुर्थः पादः ।

## पञ्चमः पादः

**नाम्यन्तयोर्धातुविकरणयोर्गुणः ३।५।१**

इहायं गुणो धातुविकरणयोरारभ्यमाणो निर्दिश्यमानामादेशिनामादेशा इति वचनात् सर्वादेशः प्राप्नोति । अथापि वर्णान्तविधित्वादन्त्यस्य भवत्येव मध्यस्य नामिनोऽयं गुण इति विशेष([4]णसाधारण्यात्) अनवधारणात् साङ्कर्यं प्रसज्येत, स्वरादेशस्त्वनेकवर्णत्वात्सर्वस्य प्राप्नोति नत्वन्त्यस्य इत्यतश्चोद्यमपाकर्तुमाह—स्थानेऽन्तरतमपरिभाषयेत्यादि वर्णान्त्यपरिभाषया गुणोऽयमन्त्यस्य नामिनोर्विज्ञायमानेन साङ्कर्येण प्रवर्तते, कुतः स्थानेऽन्तरतमपरिभाषया अन्तरतमः सदृशतम एवादेशो भवतीति विसदृशस्थानिपरिहारेण सदृशस्यैव स्थानिनः [5]परिहारादेव स्थानिसादृश्यमाह—मूर्धन्यः ते इत्यादि मूर्ध्नि भवः मूर्धन्यः । एवं तालव्यौष्ठ्यशब्दौ । तत्र मूर्धन्य ऋवर्णः, ऋटुरषाः मूर्धन्याः इति वचनात् । तालव्य इवर्णः, इचुयशास्तालव्या इति ([6]तथा चोच्यते—

---

१. ३।४।९३ (दु० वृ०)

२. गोपार्थस्य (मं०)

३. भट्टोग्रभूतिकृतायां शिष्यहितायां वृत्तौ शिष्यालोकाभिधाने शिष्यहितान्यासे आख्यातप्रकरणे चतुर्थः पादः (मं०)

४. अधिकः पाठः (मं०)

५. परिग्रहात् तदेव (मं०)

६. ओष्ठ्य उवर्णः, उपूपध्मानीया औष्ठ्या इति गुणसंज्ञका अप्येदोतः तादृशा एव (पाठभेदः मं०)

ऋटुरषाः मूर्धन्याः, ए ऐ कण्ठ्यतालव्यौ, ओ औ कण्ठ्यौष्ठ्याविति ।) तदेवं सदृशस्य स्थानिनः कार्यत्वेनेह परिग्रह इति मूर्धन्यतालव्यौष्ठ्यानामृवर्णेवर्णोवर्णानां तादृशा एव यथाक्रमं अरेदोतः इति न भवति साङ्कर्यप्रसङ्गः । अरादेशस्त्वनेकवर्णोऽपि न सर्वादेशः । कर्तरि चेति लिङ्गात् । सामान्यापेक्षञ्चैतत् । लिङ्गमिति धात्वन्तरेष्वप्यन्त्यस्यैवारादेशो भवति । तत्र औष्ठ्यस्य ओकारस्ये([1]त्यादि उपूपध्मानीया ओष्ठ्या इति मकारस्य पवर्गीयत्वादौष्ठ्यत्वम् । तत्रासति नाम्यन्तग्रहणे स्थानेऽन्तरतमपरिभाषया उम्भितेत्यत्र मकारस्यौष्ठ्यस्य ओकारो) गुणः प्राप्नोति । स नाम्यन्तग्रहणान्न भवति । क्रीणातीत्यादावपि विकरणाकारस्यैकीयमते सर्वमुखस्थानत्वाद् गुणसंज्ञकेभ्योऽन्यतमो गुणः प्राप्नोति, अन्तग्रहणं यत्र तत्रस्थस्य नामिनो गुणनिवृत्त्यर्थम् । तेनेह न भवति । शिक्षिता । न च असत्यन्तग्रहणे योगस्योत्तरस्य न शक्यः प्रसङ्गः । अन्त्यस्य लघोर्गुणनिवृत्तिफलो नामिनो लघोरुपधाया एवेति नियमार्थोऽप्यसौ विज्ञायते, कथं पुनर्गौणस्य धातोर्न भवतीत्युक्ते सति नीभ्यां लूभ्यामित्यत्र गुणो व्याहर्तुं शक्यत इत्याह—नानयोरित्यादि । यस्य क्रियामात्रं प्रतिपादयति क्रियाभावो धातुरिति धातुसंज्ञा स मुख्यो धातुः । यस्तु क्रियोपसर्जनं कर्तारमाचक्षाणः क्विबन्तो धातुत्वमित्येवं धातुसंज्ञा स क्विबन्तता-लक्षणाद् गुणादवाप्तधातुव्यपदेशो न मुख्यो धातुरिति तस्य गुणो न भवति । मुख्ये धातौ वचनस्य कृतार्थत्वात् किमेकार[2]मात्रेण कृतं स्यादिति । अविकरण आत्वविधानाद्विकरणे [3]तु ग्रहणस्य प्रवृत्तेः फलशून्य एवेकारपाठो भवेदिति । तत्सामर्थ्याद् गायतीत्यादावैकारस्य गुणो न भवति । यद्येवमायादेशोऽपि न भवेत् । यं विधिं प्रत्युपदेशोऽनर्थकस्स विधिर्बाध्यते, यस्य तु विधिः निमित्तमेव नासौ विधिर्बाध्यत इत्येवं भविष्यति ।

**नामिनश्चोपधाया लघोः ३।५।२**

उपधाभूत इति उपधात्वं प्राप्तः । भूत इत्येतद् हि भू प्राप्तावित्यस्य चौरादिकस्याधृषाद्वेति विकल्पितेन्प्रत्ययस्य रूपम्, दोग्धा [4]द्वेष्टेति । अत्र धात्वन्तप्रत्ययाद्योर्व्यञ्जनयोरानन्तर्ये सति संयोगसंज्ञासमुपजातायां संयोगे गुर्विति पूर्वस्य गुरुसंज्ञायामपि सत्यां लघुसंज्ञाकार्यं न व्याहन्यते । [5]ननु

१. अधिकः पाठः (भं०)
२. पाठेन (भं०)
३. अपि (भं०)
४. चेष्टेति (भं०)
५. क्त्वा (भं०)

प्रत्ययस्य गुणनिषेधार्थत्कानुबन्धकरणात् इति [1]लघूपधगुणो भवत्येव। समासार्थं नामि-ग्रहणं पूर्वसूत्रादिहापकृष्टुमशक्यमिति पुनर्नामि-ग्रहणम्। [2]भिन्नन्वीति। अत्रेकारस्य गुणो न भवति। न चायमनि च विकरण इति नियमस्यविषयः। नियमानां तुल्यजातीयविषयव्यावृत्तिकारित्वात्। धातोः पर एवादेशः श्रूयमाण एव विकरणः तेन नियमेन गुणस्य व्यावृत्तेः। चणपर इति। चणपरो यस्मादिन इति विग्रहः। ऋवर्णस्येति। ऋकारस्य ॠकारस्य च ऋकारादेशो वक्तव्य इति क्वचिद् गुणस्य बाधकः। क्वचिच्च सर्वादिशस्य। पक्षे ऋकारस्य ऋकार इति। ननु चणुत्पत्तेः पूर्वमिनाश्रयेणान्तरङ्गत्वाद् गुणे कृते सति कुतः ऋकारस्य सत्ता येन तस्य ॠकारस्स्यात्। अस्त्येतत्। ऋकारादेशप्रणयनसामर्थ्यात्तु अन्तरङ्गोऽपि गुणो बाध्यते। अचिकीर्तदिति। अत्र अचकीर्तद् इति द्विरुच्यते, यथा चात्रेनिकृतस्य नास्ति स्थानिवद्भावः। तथा उवर्णस्य जान्तस्येत्यत्रोक्तम्। वैकल्पिकश्चायमृकारादेशश्च शब्दस्यानुक्त-समुच्चयार्थत्वाल्लभ्यत इति नापूर्वत्वेन वक्तव्यः। न च संज्ञापूर्वकत्वेनानित्यत्वं क्वचिद् गुणस्य भविष्यतीति शक्यं वर्णयितुं सर्वत्रोपधागुणस्यानित्यत्व-प्रसङ्गात्। इनि चणपरे एव लक्ष्यानुरोधादनित्यत्वं नान्यत्रेत्ययं लक्षणमनु-[3]बाधतां सति गत्यन्तरे प्रकट एवान्धकुक्कुटीन्याय इति च शब्दस्यायं भावः।

**अनि च विकरणे ३।५।३**

पूर्वेण सूत्रद्वयेनेति। एतेन नाम्यन्तगुणस्याप्ययं नियमः करोतिरित्या-रम्भादिति दर्शयति। अतिप्रसक्त इति। सर्वत्र विकरणे प्राप्तः, अन्येव विकरण इत्येतेन च शब्दोऽयमनेकार्थत्वान्निपातानामवधारणार्थवृत्तिरिहोपात्त इति दर्शयति। यद्यपि च सिद्धे विधिरारभ्यमाणो अन्तरेणापि च शब्दमव-धारणार्थो विज्ञायते तथापीष्टतोऽवधारणं यथा स्या([4]दिति च शब्द उपा-दीयते। अन्येव विकरण इतीष्टमवधारणं यथा स्या)द्विकरण एवानीत्यनिष्ट-मवधारणं मा भूत्। ननवस्यावधारणं स्यविकरणान्तरेण व्यावर्तयंस्तत्र निसर्ग-सिद्धैव व्यावृत्तिस्तस्य प्रतिषेधविषयत्वादिति तत्र गुणव्यावृत्तिवैफल्यादर्थादन्येव विकरणमित्येवं रूपेणैवेष्टमवधारणं विज्ञास्यते, न तु विकरण एवानीति। तत्किं च शब्दोपादानेन, सत्यमस्त्येतत्, अस्यैव त्विष्टस्य नियमस्य द्योतनाय च-शब्द उपादीयते। विकरण इति किम्, अद्विषन्, केवलमनीति वचनं निषेध-

१. लघुपपदग्रहणात् (भं०)
२. भिनत्तीति (भं०)
३. सम्भवतां (भं०)
४. न्यूनपाठः (भं०)

बाधनेन गुणस्य विधायकं स्यात् । न चैवं [1]शक्यम्, अभ्यस्तानामुसीत्यस्यानर्थक्यमविदुरित्यत्र गुणनिषेधाय अभ्यस्तानामेवोसीति नियमार्थत्वात् ।

**करोतेः** ३।५।४

पूर्वेण नियमेनेत्यादिना योगारम्भस्य प्रयोजनमाह — इह च व्यवस्थितविभाषाज्ञापकेन प्रत्याख्यानत्वकरणमयुक्तमिति प्रसङ्गादिति नात्र करोतेर्नित्यमिति ज्ञापकात्सिद्ध इति वाच्यः । कृञ् हिंसायामिति सौवादिकोऽयं कृणोतेः करोतिरिति विकरणनिर्देशेनापास्यत इत्यर्थः केचिदत्र समर्णोतीत्यादौ गुणसंसिद्धये [2]नव्युपलक्षणत्वं करोतेर्व्याचक्षते, तदसत् । करोतेरात्मनि गुणसंसिद्ध्यर्थमुपादीयमानस्य कृतकार्यस्य सतो विना हेतुमुपलक्षणत्वायोगात् ।

**मिदेः** ३।५।५

मिदेर्भौवादिकस्य गुणस्सिद्ध इति अनि च विकरण इत्यनेन दैवादिको गृह्यत इति नहि तस्य यनि गुणोऽस्त्यनि च विकरण इति नियमात् । कः पुनर्वर्णो मिदेर्गुणभाक्, इकारः कुतः योगस्यास्य प्रतिप्रसवार्थत्वात्, ननु दकारस्य पूर्वो गुणोऽस्त्विति विधिरयं स्यात् प्रतिप्रसवार्थे त्वस्य कारणं न विद्मः । कः पुनर्मकारस्य गुणः प्राप्नोति, प्रयोगभेदेन सर्व एव गुणसंज्ञकः, कुतः, वचनार्थे एवं तर्हि मिदः इरिति इमिदिः तस्य मिदेः इत्येवं व्याख्यास्यामः । तेनेकारस्यैव गुणः विज्ञास्यते नामिन इति वा अपेक्षिष्यामहे ।

**अभ्यस्तानामुसि** ३।५।६

अभ्यस्तानां सम्बन्धीयत्वमिति । एतेनाभ्यस्तसम्बन्धेन ([3]अभ्यस्तकारणतया यस्सञ्जातः तस्य ग्रहणं न तूस्मात्रस्येति दर्शयति एतच्च अभ्यस्तग्रहणनोसौ विशेषणाल्लभ्यते । विशेष्यमाणे तस्मिन्गुणसन्निधानादभ्यस्तानामेव विज्ञायते, अदादेर्लुगिति जागर्तेः स तु जक्षादेश्चेत्यनेनाभ्यस्तसंज्ञा अविदुः । दिद्युरिति अभ्यस्तसम्बन्धी नायमुसिति गुणाभावः ।

**न णकारानुबन्धचेक्रीयितयोः** ३।५।७

णकारानुबन्धे चेक्रीयिते च गुणो न भवतीति । एतेन सर्वविषयो गुणोऽनेन निषिध्यत इति दर्शयति । न चानन्तर्यादुपधाग्रहणस्यैवायं निषेधः । अतिसर्त्योरनि चेक्रीयिते च गुणविधानारम्भात् । कुरुतादिति तु प्रत्ययस्य

१. सति (बा०)
२. तनाद्युपलक्षणत्वम् (भं०)
३. को० न्यूनपाठः (भं०)]

तातङादेशः विकरणस्यात्र गुणो न भवति ।

**अभ्यस्तस्य चोपधाया नामिनस्स्वरे गुणिनि सर्वधिके ३।५।८**

गुणोऽस्मिन्नस्तीति गुणशब्दात् मत्त्वादित्वादिन्प्रत्ययः सर्वो धातुः प्रयोजनमस्य सार्वधातुषु वा भवमिति सर्वधातुशब्दात् तमादित्वात्कण्-प्रत्ययः । सगुण इति गुणनिमित्तत्वात् प्रत्ययस्य सगुणत्वं न तु गुणस्य स्थानित्वात् । नन्वित्यादिना चोद्यं नामि समवधान इत्यादिना निराकरोति । अयमर्थः, नामिनः गुणनिषेधो यथा स्यादिति । नैतदर्थं नामिग्रहणं किं तर्हि स्वरादेस्सर्वधातुकस्य योऽयमेतत् सूत्रसमुत्थो गुण इति व्यपदेशस्समायातः समवहिते नामिनि तस्य यथा स्यादसमवहिते मा भूदित्येवमर्थम् । किं च स्यात् यद्यसमवहितेऽपि स्यादित्याह—इतरथेत्यादि । उपधालोपस्स्यादिति । गमहनेत्यादिना । नन्वविद्यमानो नामिनो गुणो यत्र प्रत्यय इत्येवं अनिप्रत्ययस्य अगुणव्यपदेशः सो सति नामिनि कथमिव तस्य प्राप्नुयादित्याह—अनेनैवेत्यादि । नामि सम्बद्धे धातौ सूत्रेणार्थेनावाप्तो गुणव्यपदेशः अनिप्रत्ययो धात्वन्तरादपि परश्श्रूयमाणो वाचनिकादगुणत्वान्नापैत्येवेत्यगुणनिबन्धनः प्राप्नुयादेव, तत्र परतो जनेरुपधालोप इति तन्निवृत्तये नामिग्रहणं कृते हि तस्मिन्विशिष्टप्रकृत्युपादानेन यत्स्वरादेर्गुणिनस्सार्वधातुकस्यागुणत्वं तदुपात्तं प्रकृतिविशेषणपरिहारेण न प्रकृतिमात्रविषयतया कार्यं विधत्त इत्येतदत्रोक्तं भवति । गुणिन्येव [1]सार्थक इति । अगुणे गुणप्राप्त्यभावान्निषेधवैफल्यप्रसङ्गादिति भावः । अभ्यस्तानामुसि इत्यादेः परिहारस्यायमर्थः । नेह गुणिग्रहणमर्थलभ्ये गुणिनि गुणनिषेधार्थं क्रियते, किन्तर्हि गुणनिषेधबाधनेन । यत्रोसि गुणविधानात् गुण व्यपदेशोऽस्ति तत्रापि नामिन उपधायाः गुणनिषेधो यथा स्यादित्येतदर्थम् । असति हि गुणग्रहणे यथायमुसि गुणेऽभ्यस्तानामपवादत्वाद् बहुलत्वं लक्षणं गुणनिषेधः अबिभयुरित्यादौ बाधते, तद्वदभ्यस्तस्य चोपधाया इतीममपि गुणनिषेधं विशेषादनेनिजुरित्यादौ बाधते । अस्यैव वा गुणनिषेधस्य बाधः यथा स्यादनन्तरत्वात् न बहुलत्वलक्षणस्य, तस्मान्निषेधबाधको गुणो यत्र प्रत्ययो विद्यते तत्रापि गुणनिवृत्त्यर्थं गुणिनि ग्रहणम् । तेनानेनिजुरित्यादौ गुणं बलीयांसमुसि प्राप्तं बाधित्वा अभ्यस्तस्य चोपधायाः इत्यादिना निषेध एव भवति । ननु परत्वादेवासौ भविष्यति । नैतत्, विधिनिषेधयोरतुल्यबलवत्वात्परत्वेनावस्थानासम्भवात् । तृतीय[2]कक्षाप्राप्तौ वा अभ्यस्तानामुसि गुणो कक्ष्याप्राप्तस्त्वभ्यस्तस्य चोपधाया इत्ययं निषेध इत्यतोऽप्यतुल्यबलवत्वात् ।

१. प्राप्तः (मं०)
२. कक्ष्या (मं०)

**सनि चानिटि ३।५।९**

नामिन उपधाया इत्येतेनादिग्रहणं सति नामिनि सणौ गुणत्वप्रतिपत्त्यर्थमनुवर्तत इति दर्शयति। तथा च व्यवत्स्यतीत्यत्र व्यधेर्नाम्यभावात्सनो गुणत्वं नास्तीति ग्रहादिसूत्रेण सम्प्रसारणं न भवति। बुभुत्सत इति पूर्ववत्सनन्तादित्यात्मनेपदम्। ननु केवले सनि गुणनिषेध उच्यमानस्सेटि शब्दान्तरत्वात् कथं प्राप्नुयादिति नार्थोऽनिटीत्यनेन निषेधेनेत्याशङ्क्याह—आगमा इत्यादि। ननु रुदविदमुषां सनीति सेडर्थात् सूत्रारम्भादनित्य एव सत्ययं निषेधो विज्ञास्यते, नैतत्, व्यञ्जनार्देव्युपधस्य वकारान्तस्य सनो वैकल्पिकं गुणित्वमपनेतुमारभ्यमाणं रुदादिसूत्रं कथमिह सनोऽनिट्त्वं विशेषणमुपस्थापयेत्। तथा सेटचप्यस्ति प्रसङ्ग इत्यनिटीति उच्यते।

[1]**अद्यतन्याशिषोश्चात्मने ३।५।१०**

नामिन उपधाया इत्येतेनात्रापि नामिग्रहणं सति नामिन्यद्यतन्याशिषोरगुणत्वप्रतिपत्त्यर्थमनुवर्तत इति दर्शयति। तथा च यक्षीष्टेत्यत्र स्वपिवचीत्यादिना यजेस्सम्प्रसारणं न [2]भवत्याशिषो गुणत्वाभावात्। अद्यतन्याशिषोरात्मनेपदेऽनिटि पर इति। नन्वद्यतन्यात्मनेपदस्य सर्वत्र सिजा व्यवधानात् कथं परत्वं स्यात्, सिज्लोपविषयेऽपि स्थानिवद्भावाद् व्यवधानमेव, अत्रोच्यते। अद्यतन्यां सिजवश्यं भवतीति। तेन व्यवधानमव्यवधानमेव। अथात्मनेपदग्रहणं किमर्थम्, यावताद्यतन्याः परस्मैपदं व्यञ्जनान्तानामनिटामित्यस्य वृद्धिविषये इति। तत्र गुणस्य प्राप्त्यभावादर्थादद्यतन्यास्तावदात्मनेपदस्यैवेह निमित्तभावो लब्धः आशिषो हि परस्मैपदेऽपि निषेधोऽस्त्येवेति। तस्या अप्यात्मनेपदमेवात्र निमित्तं विज्ञास्यत इति नार्थः आत्मनेपदग्रहणेन, सत्यम्। [3]किन्त्वसत्यात्मनेपदग्रहणे व्यञ्जनान्तानामनिटामितीयं वृद्धिः गुणनिषेधविषये प्रवृत्तिमती स्यात्, परस्मैपदस्यापि गुणनिषेधविषयत्वात्। अतो यथा बाधित्वा निषेधम् अभैत्सीत्यादौ वृद्धिर्भवतीत्येवं न्यनुवीदित्यादावपि कुटादिलक्षणं [4]निषेधमपहाय स्वरान्तलक्षणा वृद्धिस्स्यात्। सति त्वात्मनेपदग्रहणे परस्मैपदस्य गुणनिषेधविषयत्वाभावात् गुणबाधनेन तत्र वृद्धेः प्रवृत्तिः न न निषेधबाधनेनेति। न्यनुवीदित्यादौ निषेधविषये वृद्ध्यभावस्सिद्धो भवति। एवं च गुणबाधकत्वं वृद्धेः ज्ञापयितुमात्मनेपदग्रहणं क्रियते। ननु न्यनुवीदित्या-

१. सिजाशिषोश्चात्मने (दु० पा०)
२. भवत्यविशेषो (मं०)
३. किन्त्वात्मनेपद (वा०)
४. अपहन्त्यस्वरादि (मं०), अपहन्त्यस्वरान्त (वा०)

दावन्तलक्षणा वृद्धिः नोपधालक्षणेति कथमात्मनेपदग्रहणमन्यस्याः वृद्धेर्गुण-बाधनेन प्रवृत्तिं ख्यापयेत्। उत्तरत्रात्मनेपदग्रहणस्यानुवृत्तेः। वृद्धिशब्दसामा-न्याच्चेति चेत् न, विफलप्रयासत्वादस्यार्थस्य। तथा हि ण्यनुप्रभृतेरस्तिवृद्धेः प्रसङ्गः। तस्याः येन नाप्राप्तिन्यायेन गुणविषय एव प्रवृत्तेः ([1]गुणो न भवि-ष्यतीति कृते दीर्घे गुणस्स्यादिति चेत्, किं तेन कृतं स्यात्। स्वभावदीर्घाणां दीर्घत्वाप्रवृत्तेः गुणस्स्यादिति चेत् न, तेषामपि गुणनिवृत्तये दीर्घत्वप्रवृत्तेः बलीयो दीर्घ) तत्र च प्रवृत्ता कृतार्था सती सा, न निषेधमवगाहते। यद्वा प्रत्ययसामान्यापेक्षत्वादन्तरङ्गे कुटादिनिषेधे कर्तव्ये प्रत्ययविशेषापेक्षा सिचि वृद्धिरसिद्धा। ततोऽपिन्यनुवीदित्यादौ नास्ति सिचि वृद्धेः प्रसङ्गः इति नार्थ आत्मनेपदग्रहणेन, सत्यम्। विस्पष्टार्थम्।

**ॠदन्तानां च ३।५।११**

तपरनिर्देशत्वात् तत् कालार्थात् स्तॄप्रभृतीनामॄदन्तानां निषेधस्याप्रवृत्तेः, अस्तीर्ष्ट, अस्तॄष्टेत्यादौ गुणः प्राप्नोति, स तु न भवति। नणकारेत्यत्र नेति योगविभागात्। योगविभागश्चावश्यमाश्रयणीयः। अन्यथा लोलुवः सरीसृज इत्यादौ गुणस्स्यात्। न च ॠकारग्रहणमॄकारान्तानामप्युपलक्षणम्, तस्य ॠकारान्तधातुविषये गुणनिषेधप्रतिपादनप्रवणत्वादन्योपलक्षणत्वायोगात्। यदि चैवं स्यादृवर्णानामिति कुर्यात्। तपरकरणं चेदानीम् मन्दमतीननुगृहीतुम-सन्देहार्थम्। अस्तीर्णेत्यदाविडागमाभावो नित्यमागमशासनमिति वचनात्।

**स्थादोश्च ३।५।१२**

तस्यां परस्यां नामिनोऽभावादिति। अभावस्त्वद्यतन्यामात्मनेपद एवेत्वस्य स्मरणात्। अद्यतनीग्रहणं सम्बध्यते इत्येतत् त्वबुधबोधनार्थमुक्तम्। यद्येव-मित्वादिविधानसामर्थ्याद् गुणो न भविष्यति। नैतत्, ह्रस्वनिमित्तं सिचो लोपं प्रवर्तयितुमित्वविधानमर्थवत्स्यात्। गुणस्तु स्यादेव नामिनो लाक्षणिक-त्वान्न भविष्यतीति चेत् तर्हि प्रतिपदोक्तपरिभाषायाः अनित्यत्वज्ञापनार्थं वचनम्। तेन जरीगृह्यत इत्यादौ लाक्षणिकस्यास्य ॠमतोरी इतिरी आगमः सिद्धः।

**भुवः सिज्लुकि ३।५।१३**

सिज्लुकीत्यत्र प्रत्ययलक्षणेनान्तर्वर्तिनीं विभक्तीमाश्रित्य पदान्तत्वा-त्तृतीयः। ननु नामिग्रहणानुवृत्त्या सिज्लुकि सति नामिनो गुणो न भवतीति

---

१. प्रमादात् उत्क्रमपाठः मुद्रितः।

व्याख्यायमाने भुवमन्तरेणान्यस्य धातोर्नामिनोऽसम्भवादर्थाद् [1]भुवो नामिन एव सिद्धो निषेध इति नार्थो भू-ग्रहणेन, सत्यम्, प्रकृतिग्रहणपरिभाषया तु चेक्रीयितलुगन्तस्यापि भुवो निषेधस्स्याद् भू-मात्रस्यैव यथा स्यादिति भू-ग्रहणम् ।

**नाम्यन्तानामनिटाम्** [2]३।५।१४

संयोग विप्रयोगाविटा सह प्रत्ययस्यागमिनः तत्कथमनिटामित्यनेन नाम्यन्ताः धातवो विशेष्यन्त इति यो मन्यते तं प्रत्याह—अविद्यमान इडेभ्य इत्यादि । एतेन धातूनामन्यपदार्थत्वेऽपि येभ्यो धातुभ्य इति पञ्चम्या प्रत्ययस्यैवेडभावोऽनिटामित्यनेनोच्यते इति दर्शयति । ननु दिदीषतीत्यादौ गुणनिषेधविषये सनि दीर्घत्वं नाप्राप्ते गुणे आरभ्यमाणं गुणं बाधिष्यते । ततो दीर्घविधानसामर्थ्यादेव गुणो न भविष्यतीति कृते दीर्घे गुणस्स्यादिति चेत्, किं तेन कृतं स्यात्, स्वभावदीर्घाणां दीर्घत्वाप्रवृत्तेर्गुणस्स्यादिति चेत्, न । तेषामपि गुण[3]निवृत्तये दीर्घत्वप्रवृत्तेः बलीयो दीर्घ([4]मिरूरावपि निषिध्येते इति चेत्, न । तयोः दीर्घनिमित्तत्वात् स्वभावदीर्घाणामपि दीर्घ)त्वमेव तयोर्निमित्तम्, अन्यथा तेषामिरूरौ गुणेन बाध्येयाताम् । तस्माद् दीर्घविधानसामर्थ्यादेव सर्वत्र सिद्धो गुणाभाव इति किमनेन योगारम्भेण । अत्रोच्यते, ज्ञीप्सतीत्यत्र कारितलोपो यथा स्यादिति योगोऽयमारभ्यते । इतरथा हि दीर्घत्वमनवकाशं विशेषाभावाद् गुणत्वात् कारितलोपमपि बाधेत, योगारम्भे तु सति निषेधेन गुणो बाधितः न तु दीर्घेणेति दीर्घस्यासति बाधकत्वे दिदीषतीत्यादिषु लब्धप्रसरं दीर्घत्वमनवकाशत्वात् कारितलोपो बाधते । ततो दीर्घत्वस्यावकाशदानाय योगारम्भः नन्वनारम्भे दीर्घत्वस्यानवकाशत्वं बाधहेतुश्चेत् कारितलोपस्यापि तदस्त्येव । यथैव दिदीषतीत्यादौ गुणप्रवृत्तेरनवकाशत्वं दीर्घस्यैव कारणेत्यादौ गुणादिकार्यप्रवृत्तेः कारितलोपस्यापीत्यनवकाशत्वादेव कारितलोपो दीर्घत्वं बाधिष्यते । अस्त्येतत्, द्वयोरनवकाशयोः परत्वेन व्यवस्थानात् परत्वाद् दीर्घ एव स्यात् । योगारम्भे तु सावकाशो दीर्घो अनवकाशेन कारितलोपेन बाध्यते । नन्वनारम्भेऽपि सावकाशो दीर्घो यत्र कुटादिनिषेधेन गुणो बाध्यते यथा—चुकूषत इत्यत्र, नैतत्, आकूतमिति प्रयोगदर्शनादूदन्त-

---

१. भूते (मं०)
२. ३।५।१७ (दु० वृ०)
३. प्रवृत्तये (मं०)
४. को० न्यूनपाठः (बा०)

स्यास्य धातोः स्मरणात् [1]गुध्रुवो तर्ह्यवकाशः अस्ति हि तयोरपि गुणनिषेधः कुटादित्वात् । एतदपि न, कुतः स्वरान्तानामित्यपास्यासन्देहार्थं दीर्घविधौ [2]गुध्रुवोरित्यकरणात् । तस्मान्न [3]गुध्रुवावेवावकाशो दीर्घत्वस्य, किं तर्हि धात्वन्तराण्यपि एवं चानारम्भेणावकाशस्सर्वत्र दीर्घो गुणवत्कारितलोपमपि बाधेत । ननु येन नाप्राप्तिन्यायेन गुणमेव बाधिष्यते, सत्यमेतत्, बाध्यविशेषचिन्तायां बाध्यसामान्यचिन्तायां तु बाध्यमात्रापेक्षणान्न कश्चिदनाक्रान्तो विध्यन्तरेण विषयोऽस्तीति सकलकार्यबाधप्रसङ्गे सति गुणवद् दीर्घलोपमपि बाधेत । ननु दीर्घे सत्यसति वा लोपवृत्तेर्नित्यत्वात् लोप एव भविष्यति, नैतत्, स्वरादेशत्वाद् दीर्घत्वस्य प्रवृत्तेः । तस्मादनारम्भे बलीयो दीर्घत्वमनवकाशत्वात् कारितलोपस्यापि बाधकं स्यात् । तन्मैवं विज्ञायीति दीर्घत्वस्यानवकाशदानाय योगारम्भः । कश्चित्त्वारम्भस्य कारितलोपप्रवृत्तिमात्र एव यदि प्रयोजनं स्यात् तत्सिद्धये ज्ञीप्सतीति निपातनमेव कुर्यादिति व्याचक्षाणश्चिन्त्य[4]प्रयोजनोऽयमारम्भः इति मन्यते । अतएव चोपधानामिनस्सन्यनिटि गुणनिषेधस्य सिद्धत्वादतिरिच्यते । अर्थात् नास्यन्तग्रहणमपि न चोद्यमेतत् ।

**सर्वेषामात्मने सार्वधातुकेऽनुत्तमे पञ्चम्याः** [5]३।५।१५

ननु पञ्चम्युत्तमे निषेधारम्भात् सार्वधातुके लब्धम् तत्किं सार्वधातुकग्रहणेन, नैतत्, सामान्येनापि निषेध आरभ्यमाणस्सार्वधातुकेऽपि प्रवर्तमानः पञ्चम्युत्तमेऽपि प्रवर्तते ततस्तत्र निषेधप्राप्तिमपनेतुमनुत्तमे पञ्चम्या इति सफलो निषेधारम्भस्स्यादिति न तस्य सार्वधातुकलाभं प्रति हेतुभावो लभ्यत इत्यसार्वधातुकेऽपि स्यात् । सर्वत्रात्मन इत्यारम्भान्न भविष्यतीति चेत्, गुर्वी तु प्रतिपत्तिस्स्यादिति सार्वधातुक इति क्रियते ।

**द्वित्वबहुत्वयोश्च परस्मै** [6]३।५।१६

द्वित्वबहुत्वयोः परयोरिति द्वित्वबहुत्वयोरर्थयोः परत्वासम्भवादर्थाद् द्वित्वबहुत्वार्थाभिधायिनो प्रत्ययो परयोरित्ययमर्थो विज्ञायते परस्मैपदग्रहणं विस्पष्टार्थम् । आरम्भसामर्थ्यादात्मनेपदं न भविष्यतीत्येवमुच्यमाने

---

१. आकुषः (मं०)
२, ३. आकुषः (मं०)
४. परिहारो (वा०)
५. ३।५।१८ दु० वृ०)
६. ३।५।१९ (दु० वृ०)

ह्यवैस्पष्ट्यं स्यात् नन्वसार्वधातुकार्थोऽप्यारम्भः [1]सम्बध्यते न परोक्षायां [2]चेत्यस्यारम्भात् ।

**आमि विदेरेव** [3]३।५।१७

एवकारो वैचित्र्यार्थ इति, उत्तरत्रेति शेषः । अयमर्थः, निपातानामनेकार्थत्वात् समुच्चयार्थ एवकार उत्तरत्र कुटादिगणमध्ये व्यचेः विचित्रं पाठं समुच्चिनोति, तेन विचिता विचितुमित्यादावगुणत्वनिबन्धनं ग्रहादिसूत्रेण सम्प्रसारणं सिद्धं भवति । यद्येवमुरुव्यचान्त इत्यसुन्यपि तत्प्राप्नोति, न भवत्यौणादिकत्वात् । तस्यैवमसम्भावदिति कुतः उषविदेत्यत्र जागर्तिसहचरितस्य ज्ञानार्थस्यैव विदेर्ग्रहणात् ।

**कुटादेरनिनिचट्सु** [4]३।५।१८

कुटादिरित्यत्र कुटेर्ग्रहणाशङ्का स्यादिति तृतीयो न विहितः अकारान्तो वा कुट इत्ययमुदात्तः यावत् कुट्शब्द इति ततः परं वृत्करणस्य पाठादिति भावः । इनि इचि अटि परे गुणो भवत्येवेति । एतेन नात्रानोर्निमित्तत्वं किं तर्हि नञा अयं निर्देशः इति दर्शयति, कुतः, अनि तुदादेरनीति गुणनिषेधस्य सिद्धत्वात् अणग्रहणानर्थक्यप्रसङ्गात् । परमपि च व्युपधालक्षणं गणित्वा विकल्पम् अयं कुटादिनिषेधो बाधते विशेषविहितत्वात् । तेन कुटादित्वात् कुटित्वा ।

**विजेरिटि** [5]३।५।१९

ओविजी भयचलनयोरित्यस्येति न तु विजिर् पृथक् भाव इत्यस्येति । अनिट्त्वात् । विजेरिटि उद्वेजमानाः प्रयुक्ता इति धातोश्च हेतावित्यनेन ।

**स्थादोरिरद्यतन्यामात्मने** [6]३।५।२०

विधीयमानस्य स्वरस्य सवर्णग्राहकत्वाद् भिन्नकालस्य ग्रहणप्रसङ्गान्नायं तकारस्तत्कालार्थः, अपि तु मुखसुखार्थः । न चासति तपरकरणे रेफान्तोऽयमादेश इति शङ्क्यते, स्थादोश्चेत्यारम्भात् । रेफान्ते ह्यादेशे सति विधानसामर्थ्यादुपधागुणाप्रवृत्तेरफलोऽसावारम्भस्स्यात् ।

---

१. सम्भाव्यते (भं०)
२. चेत्यनारम्भात् (भं०)
३. ३।५।२६ (दु० वृ०)
४. ३।५।२७ (दु० वृ०)
५. ३।५।२८ (दु० वृ०)
६. ३।५।२९ (दु० वृ०)

**मुचादेरागमो नकारस्स्वरादनि विकरणे** [1]३।५।२१

यस्स्वरस्तस्मात्पर इति । अथ पूर्वोऽपि कस्मान्न भवति लिम्पविन्दामिति निर्देशात् । नन्वनियमेऽप्येष निर्देशो घटते । अस्त्येतत् । [2]एकारकस्तु द्वयोर्निर्देशो न कर्तव्यस्स्यात्, [3]एकस्य परत्रागमं विदध्यादपरस्यापि पूर्वत्र परत्रैव त्वागमविधानादवसीयते स्वरात्पर एवायमागम इति । यद्येवमिह ज्ञापकात्परोऽसौ स्यादुत्तरत्र त्वनुवर्तमानोऽसावनियमेन स्यात् । नैतत्, अजहद्धर्मण अधिकाराः भवन्तीति ज्ञापकादिह लब्धापरत्वधर्मस्यैव उत्तरत्र नकारागमस्यानुवृत्तेः । मुञ्चतीत्यादि । कृत आगमेऽनुषङ्गलोपो नास्ति विधानसामर्थ्यात् वर्गान्तोऽपि तर्हि न स्यात् यं विधिं प्रत्युपदेश इति वचनाद् भविष्यति । नुरिति कर्तव्ये आगमग्रहणमागम उदनुबन्ध इत्यस्या एव परिभाषाया द्योतकमाहुः ।

**रधिजभोरचि** [4]३।५।२२

रधिश्च जभ चेति द्वन्द्वः । रन्धकः, जम्भकः । रध्यति जम्भत इति वुण्, रध्यते जभ्यते इति सार्वधातुके यण् ।

**नेटि रधेरपरोक्षायाम्** [5]३।५।२३

रधितव्यमिति रन्धनीयमिति विग्रहः । अथ क्वन्सोः कथं भवितव्यम्, रधिवानिति । रधेर्द्विर्वचनम्, एत्वाभ्यासलोपौ, अन्त्यादिसूत्रेण इट् नकारागमः, तस्यानिदनुबन्धेति न लोपः । नन्वसौ परोक्षायामिन्धीति नियमान्न स्यात् । क्वन्सोर्द्विककारकपाठसामर्थ्याद् [6]बभज्वान् इत्यादिवद् भविष्यति ।

**रभिलभोरविकरणपरोक्षयोः** [7]३।५।२४

आरम्भकः, आलम्भक इति [8]आरभ्यते आलभ्यत इति वुण्, नकारागमो वा वक्तव्य इति मन्तव्येत्यस्यानुवर्तमानस्य व्यवस्थितविभाषाविज्ञानात् सिद्धः ।

---

१. ३।५।३० (दु० वृ०)
२. एककस्तु (मं०)
३. एकत्र परत्रागमम् (मं०)
४. ३।५।३२ (दु० वृ०) तथा च न्यूनपाठः (वा०)
५. ३।५।३३ (दु०)
६. बभजुरिति (मं०)
७. ३।५।३४ (दु०)
८. ३।५।३५ (दु०)

लम्भं लम्भमिति लब्ध्वा, लब्ध्वेति णं प्रत्ययः अलम्भीत्यादि भावकर्मणोश्चेति इच्।

**हुधुड्भ्यां हेर्धिः** [1]३।५।२५

हुधुड्भ्यामिति घुटां तृतीय इति डत्वम्, जूहुधीति। हौ चेति गुणाभावः। सेड्विषय इत्यादि हेतुरत्र व्यवस्थितविभाषानुवृत्तिः।

**अस्तेः** [2]३।५।२६

नन्वस्तेः सकारं धुटमाश्रित्य पूर्वेणैव सिद्धौ धि-भावः इत्याह--नित्यानित्ययोरित्यादि। नित्यमेत्वं स्थानिवद्भावाद्धिभावे सत्यसति च प्रवृत्तेः धि-भावस्त्वसत्येत्वेन प्रवर्तते। धुडभावादिति नित्यत्वादेत्वम्। तस्मिन्कृते धुडस्सकारस्य विहितत्वाद् धित्वसिद्धावसत्यां योगारम्भः। ननु स्थानिवद्भावादेत्वेऽपि कृते धित्वं सेत्स्यतीत्याह—न चेत्यादि।

**शा च शास्तेः** [3]३।५।२७

च शब्दाद् हेर्धित्वं चेति। ननु शासेः धुडन्तादेव तत्सिद्धम्, न सिध्यति नित्यत्वाच्छाभावे सति धुडोऽभावात्। अथ हेरेवायं शाभावः कस्मान्न विज्ञायते, च-शब्दोऽपि पक्षे तस्य धित्वाभ्यनुज्ञानार्थस्स्यात्। नैतत्, व्याख्यानात्। अनुशाधीत्यादि। अत्र कृते शाभावे स्थानिवद्भावाच्छासिग्रहणेन ग्रहणाच्छासेरिदुपधाया [4]अण्व्यञ्जनयोः इतीत्वं शकारस्य प्राप्तं, तन्न भवति असन्देहार्थं य इत्येवमकरणार्थम्।

**लोपोऽभ्यस्तादन्तिनः** [5]३।५।२८

अन्तेरिकार उच्चारणार्थमिति न तु विवक्षितः, इतरथा हि अन्तप्रभृतीनामसङ्ग्रहस्स्यात्।

**आत्मने चानकारात्** [6]३।५।२९

([7]आत्मन इत्यत्र पदे शस्यादिलोप इत्यादिना लोप आत्मनेपद इत्येत-

---

१. ३।५।३५ (दु०)
२. ३।५।३६ (दु० वृ०)
३. ३।५।३७ (दु० वृ०)
४. न्यूनपाठः (वा०)
५. ३।५।३८ (दु० वृ०)
६. ३।५।३९ (दु० वृ०)
७. न्यूनपाठः (मं०)

च्चान्तरेणाधारभावेन विशेषणं तदाह—) आत्मने इत्यत्र पदे योऽन्तः शब्दः इति । अनकारादित्यस्यार्थं विवृण्वन्नाह—अकारान्तपरस्य न भवतीति । अथाघ्नत इत्यादौ न लोपप्रतिबन्धार्थं नकारान्नेति कस्मान्न व्याख्यायते, नैवं शक्यम्, एवं हि व्याख्यायमाने सत्यसन्ध्यक्षरस्येति कर्तव्येऽसन्ध्यक्षरयोरस्यते लल्लोपश्चेति गुरुसूत्रकरणमपार्थकं स्यात् । तस्य ह्येतत् प्रयोजनं पच्यन्ते इत्यादावकारस्याकार आदेशे कृते सत्यकारादुत्तरोऽन्तिरिति कृत्वा न लोपोऽनेन मा भूदिति । यदि चात्र नकारात्प्रतिषेधस्स्यात्तदा कृतेऽपि गुरुसूत्रे न लोपस्स्यादिति वेति तेन किं कृतं स्यात् । अतस्तत्करणादवगम्यते नूनमकारादयं निषेधो न तु नकारादिति । आघ्नत इत्यन्ते प्रत्ययः गमहनेत्युपधालोपः ।

शेतेरिदन्तेरादि [1]३।५।३०

आगमस्य चेति इकार उच्चारणार्थ इत्यनुषज्यते सांहितकेन तु रेफेण युक्तोऽयमिकारः आगमरूपोऽत्रोपात्त इति तु न मन्तव्यं, व्याख्यानात् । शेरत इत्यादि । आत्मने चानकारादिति न लोपः । ननु येन नाप्राप्तिन्यायेन रेफागमोऽयं नलोपं बाधते, न बाधते चानुवृत्त्या तस्यापि समुच्चयात् श्तिपानिर्देशेन चेक्रीयितलुकि मा भूदिति । शेश्यति । शीङश्चेक्रीयितलुगन्तादन्तिप्रत्ययः, लोपोऽभ्यस्तादन्तिनः इयवर्णस्येति यत्वं, अन्तिग्रहणं नकारस्य शेतेर्वा आदिर्मा भूदिति ।

वेत्तेस्सम्प्रति परस्मै वा टादयः [2]३।५।३१

अटादय इति तृतीयो न कृतः, व्यामोहो हि स्यात् । पदानामित्यस्य लोप इति आदि लोप इत्यादिना सम्प्रतिकालविहितानामिति सम्प्रति वर्तमानेत्यनेन अटादय आदेशाः वा भवन्तीति । यद्येवम्, आत्मनेपदसंज्ञका अप्यविशेषादटादय प्राप्नुवन्तीति आशङ्क्याह—स्थानेऽन्तरतमपरिभाषयेत्यादि । संवित्त इति । सर्वेषामात्मनेति गुणाभावः, विद इति कर्तव्ये श्तिपोऽधिकस्य निर्देशो अधिकस्य कार्यस्य यथादर्शनं प्रतिपत्त्यर्थः तेन संविद्यते संविदत इति सिद्धम् । न चासति श्तिपि विदादीनामन्येषां ग्रहणमाशङ्क्यते । लाभार्थाद्विकरणेन परस्मैपदानां व्यवहितत्वात् सत्ताविचारणार्थादप्यात्मनेपदिनस्तानि न सम्भवन्त्येव ।

---

१. ३।५।४० (दु० वृ०)
२. एतानि सूत्राणि दुर्गवृत्तौ नोल्लिखितानि ।

**ब्रुवः पञ्चानामादित आहश्च [1] ३।५।३२**

आदावादित इति ([2]सप्तम्यन्तादादिशब्दात्तस्प्रत्ययो वक्तव्यः पञ्च वादिभूता अजादय आदेशा वा भवन्तीति) पञ्चत्वं चादित्वं चान्तरतमपरिभाषया अटादीनामपि विज्ञायते, ब्रुवश्चाहिरादेश इति कस्मात्पुनर्लब्धस्थानिवद्भावानि परस्मैपदानि परिहृत्य ब्रुवः आहिरादेशश्शक्यो विज्ञातुम्। ब्रूमः, च शब्दोऽयं ब्रुवोऽनुकर्षणार्थस्तेन तस्यैवाहिरादेशो न परस्मैपदानाम्। न चायं शब्दो वाक्यभेदावगमार्थः तस्य च शब्दविधिवद्विनापि च शब्दं सिद्धत्वात्।

**थे थश्च [3] ३।५।३३**

अरहेरन्तस्येति, न तु ब्रुवः, तस्याहिश्चेत्यनेन च शब्दस्यानुकृष्टस्येहाननुवृत्तेः।

**आकारादट औ [4] ३।५।३४**

पपावित्यादि। अत्र पा-प्रभृतिभ्यो धातुभ्यः परस्याटः प्राप्तम्, परसवर्णलोपमनवकाशत्वादौत्वं बाधते। कृते त्वौत्वे स्वरविधिस्स्वर इति वचनाद् द्विर्वचनम्, ततः सन्ध्यक्षरे च इत्यालोपः।

**ऋदन्तस्येरगुणे [5] ३।५।३५**

इरादेशो भवतीति रेफान्तः। नन्वयं रेफस्सांहितिकः, किरो धान्य इति निर्देशात्, ऋदन्तस्येति बहुव्रीहौ धातोरन्यपदार्थत्वाल्लब्धाप्रधानभावस्य तस्यानेकवर्णस्सर्वस्येति वचनात् सर्वस्यैवेरादेशः प्राप्नोति, यो मन्यते तं प्रत्याह—अनेकवर्णस्येत्यादि। [6]तत्रैव कारणमाह—गिरतेरित्यादि। तेन किं सिद्धं भवतीत्याह – तेनेत्यादि। तपरकरणमसन्देहार्थम्। अन्तग्रहणं लाक्षणिकस्याप्यकारस्य यथा स्यादिति। चिकीर्षति। कथं कीर्तयति कीर्तीषोरिति निर्देशात्।

---

१, ३. एतानि सूत्राणि दुर्गवृत्तौ नोल्लिखितानि।

२. न्यूनपाठः (भं०)

४. ३।५।४१ (दु० वृ०)

५. ३।५।४२ (दु० वृ०)

६. अत्रैव (भं०)

**उरोष्ठ्योपधस्य च** [1]३।५।३६

[2]उकारादेशो भवतीति रेफान्तः। [3]अमुमूर्छति। पिपर्तेः निषेधारम्भात् ऋदन्तानां सनीड्विकल्पस्स्मर्यत इति पूर्वाचार्याः। तथा चाहुः—इट् सनि वेति च शब्दादित्यादि। ननु दन्त्यौष्ठ्यस्य वर्णस्यौष्ठय ग्रहणादोष्ठ्योपधत्वादेरादेशः सेत्स्यति, नैतत्, केवलौष्ठ्ये विषये चरितार्थस्य वचनस्यैवं प्रकारे विषये प्रवृत्त्यभावात्। ववूर्षतीति। वकारो अयम् अन्तस्थसंज्ञको दन्त्यौष्ठ्यः पवर्गीयस्त्वौष्ठ्य एवः इह तु ऋ गतौ सम्पूर्वः क्त-प्रत्ययः, इरादेशः, समीर्ण इत्यत्र न भवति धातुसम्बन्धिन ओष्ठ्यस्य ग्रहणात्।

**इन्यसमानो लोपोपधाया ह्रस्वश्चणि** [4]३।५।३७

इहानिन्नन्तानां धातूनां चणि परतो ह्रस्वभागुपधा नास्तीत्युपधा[5]ग्रहणाच्चण एवेनः आक्षेपो भविष्यति। तस्मिश्चाक्षिप्त इन्मात्राश्रयत्वेनान्तरङ्गत्वादलीलवदित्यादौ वृद्ध्यावादेशयोस्ततोश्चणि य-प्रत्ययस्तत्र तूपधाया ह्रस्व इत्येवमिनो लब्धत्वादतिरिच्यमाणमिदमिन्ग्रहणं चणि या उपधा तस्या ह्रस्वो मा भूदित्येवमर्थम्। चणि या उपधा तस्याः ह्रस्व इति यथा श्रुतेऽर्थे सम्भवति सति चणि यः प्रत्ययस्तत्रोपधायाः ह्रस्व इत्यशक्यं व्याख्यातुम्। एवं च वचनसामर्थ्यादनवकाशो ह्रस्वोऽन्तरङ्गमपि वृद्ध्यादिकार्यं बाधेत, इत्यूकारस्यैव ह्रस्वः स्यात्। न च कृते तस्मिन् वृद्धेरस्ति प्रसङ्गो बाधितत्वात्। बाध्यतां वृद्धिर्गुणो भविष्यतीति चेत् तर्हि [6]असीसपत् इत्यादौ। चायमन्तरङ्गमपि पूर्ववद् ह्रस्वो बाधेत, चण्युपधाया ह्रस्वत्वविधानात्। अयीयजदित्यादौ च नैव ह्रस्वस्स्यात्, चण्युपधाया ह्रस्वत्वभाक्त्वादितीनि चण्परे या उपधा तस्याः ह्रस्व इत्यस्यार्थस्य प्रतिपत्तये कर्तव्यमिन्ग्रहणम्। अरराजदिति। अत्रान्त्यस्वरादिलोपेन योऽसावकारः तस्यापि लोपस्समानलोपः, तेन समानलोपत्वात् ह्रस्वो न भवति। न चात्र स्वरादेशपरिभाषया लोपस्य स्थानिवत्वमस्तीति शक्यं वक्तुम्, स्वरव्यञ्जनादेशस्य स्वरादेशत्वात्। ननु स्वरोऽप्यत्र लुप्त इति कथं तल्लोपात् स्वरादेशत्वम् लोपस्य न स्यात्, स्वरव्यञ्जनसमुदाये स्थानिनि केवलस्य स्वरस्य

---

१. ३।५।४३ (दु० वृ०)
२. अमुमूर्छीत् (भं०)
३. उरादेशो (भं०)
४. ३ ५।४४ (दु० वृ०)
५. ग्रहणादेवेनः (भं०)
६. अदीदपत् (भं०)

स्थानित्वम् इति चेत्, तर्हि समानासमानलोपादपि नायं समानलोपस्स्यात्। योऽत्र समानस्तस्य लोपात् समानलोपोऽयमिति चेत्, तर्हि योऽत्र स्वरो लुप्यते तदाश्रयोऽपि स्थानिवद्भावोऽप्येवं भवेदिति प्राप्त्यभावात्, किं समानलोपनिषेधेन, अस्त्येतत्। प्रतिपत्तिगौरवं तु स्यादिति[1] प्राप्त्यभावात् किं समानलोपः स्यात्। यथान्यासकरणमेव न्याय्यः। उपधाया इति किमिति। एवं मन्यते, अन्त्यस्य मा भूदित्युपधाग्रहणं क्रियते। एतच्चाप्रयोजनम्, अलीलवदित्यादौ वृद्ध्यावादेशयोः कृतयोरन्त्यस्य ह्रस्वभाजोऽसम्भवात्। न च ह्रस्व[2]वचनान्तो बाध्यते तस्य अयीयजदित्यादौ सावकाशत्वात्, तस्मादिनि चण्परे अन्त्यो ह्रस्वभाङ् नास्तीत्यत्रान्त्यस्य समीपवर्तिनो वर्णस्य ह्रस्वो विज्ञायमाने उपधाभूतस्यैव विज्ञायत इति नार्थ उपधाग्रहणेनेति। अचकार्षीत्। प्रत्युदाहरन्नप्येवं मनुते, असत्युपधाग्रहणे विशेषानुपादानाच्छब्दमात्रविषयत्वेन ह्रस्वो विज्ञायमान काङ्क्षप्रभृतीनामपि प्राप्नोति स तेषां मा प्राप्नुयादित्युपधाग्रहणं कर्तव्यम्। न कर्तव्यम्, काङ्क्षप्रभृतीनां ह्रस्वभाजोऽनेकेन वर्णेन व्यवहितत्वात्। एकवर्णव्यवहिते विषये वचनं चरितार्थं नानेकवर्णव्यवहितं विषयमवगाहते। तथा चोच्यते, येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यादिति। एवं तर्हि उत्तरार्थमुपधाग्रहणम्। पिबतेर्लोप उपधायाः यथा स्यात्। अन्यथा अपीप्यदित्यादौ अन्तरङ्गमप्याकारस्यायिमादेशमनवकाशत्वाल्लोपो बाधेत। यद्येवम् उत्तरत्रैव तत्क्रियताम्, ब्रूमः—येन नाव्यवधानमित्यस्यानाश्रयणार्थमिहैव कृतम्। एवं ह्युपधाग्रहणेनैव अचकाङ्क्षदित्यादौ ह्रस्वव्यावृत्तिः सिद्धा भवति। चणीति किमिति। मानुबन्धानां कारिते परतो ह्रस्वशासनाल्लिङ्गादिमात्र एव नायं विधिः विज्ञास्यत इति मन्वानस्य प्रश्नः, लिङ्गादिनि केवले नायं विधिः किन्तर्हि, प्रत्ययान्तरे परत इति, स्यादेष निश्चयः चणीत्ययं विशेषो नावाप्यत इति मन्यमानोऽतिप्रसङ्गमापादयितुमाह—पाठयतीति। यत्रेत्यादि, ह्रस्वस्य प्राप्तौ समानलोपत्वादित्ययं हेतु इनि परत इनो लोपोऽस्य स्थानिवद्भावादिना चण्परस्येनो अव्यवहितत्वादिति हेत्वन्तरमप्यत्र मन्तव्यम्, एतच्च व्यक्तौ पदार्थ उक्तं न जातौ। तत्र हि इञ्जातेः निर्देशादिन्व्यतिरेकेण समानलोपस्यासत्वात् समानलोपत्वैव नास्ति। न [3]चेञ्जातेर्लोपः तश्याश्श्रूयमाणत्वात्। व्यवधानमप्यत्र नास्ति, जातेरेकत्वात् स्वात्मनि व्यवधानायोगात्। वदेरिन्नन्तादिति। हेत्विन्नन्तात्। पुनिरिनिति। धातोश्च हेतावित्ययेन वेत्यपक्षते। सा च व्यवस्थितविभाषा तेन भ्राज-भास-भाष-दीप-

---

१. न्यूनपाठः (मं०)
२. वचनान्तौ बाधेते (मं०)
३. चेन्कृते लोपः (बा०)

जीव-मील-पीड-कण भण-हेठि-प्रभृतीनां वा ह्रस्वः अबिभ्रजद् अबिभ्राजदित्याद्युदाहार्यम्। एवं च सति भ्राजभासोऽनिदनुबन्धकरणमपुराणमेव। ननु भ्राजनं भ्राजः तं कृतवानिति घञन्तादिनि समानलोपत्वात् ह्रस्वाभावे सत्यबिभ्राजदित्यादि सिद्धं, अबिभ्रजदित्याद्यपि केवल [1]इनितः किं व्यवस्थितविभाषापेक्षया, नैतत्। अर्थभेदात् नहि भ्राजमानोऽन्येन प्रयुक्त इति केवलाद् भ्राजेरिनि सति योऽर्थः स घञन्तेऽनन्तात्प्रतीयते। भ्राजनकर्तुरेव अतीतकालावच्छिन्नस्य तत्प्रतीतेरिति व्यवस्थितविभाषापेक्षैव ज्यायसी।

**लोपः पिबतेरी चाभ्यासस्य [2]३।५।३८**

लोपो भवतीति ह्रस्वापवादः। श्तिपानिर्देशश्चेक्रीयितलुक्-निवृत्त्यर्थः। अपीप्यत्। [3]प्रापणे या शब्दः। वा चेक्रीयितस्येति लुक्, द्विर्वचनम्, अभ्यासकार्यम्, इन् आयिरादेशः, दि, चण्, कारितलोपः, ह्रस्वः, अद्धात्वादिः। नन्वसति श्तिपि पाति पाययत्योरपि ग्रहणं स्यात्, न भविष्यति, लुग्विकरणत्वात्, लाक्षणिकत्वाच्च।

**तिष्ठतेरित् [4]३।५।३९**

अयमपि ह्रस्वापवादः। उत्तरत्र च श्तिपानिर्देशात्, अतिष्ठिपत्। तिष्ठतेर्य शब्दः, पूर्ववत् लुगादि इन्, पकार आगमः, शिष्टं पूर्ववत्।

**जिघ्रतेर्वा [5]३।५।४०**

श्तिपा निर्देशादजिघ्रपत्, जिघ्रतेर्य-शब्दः, पूर्ववल्लुगादिकार्यम्।

[6]पञ्चमः पादः।

---

१. इनि तत् (भं०)
२. ३।५।४६ (दु० वृ०)
३. पा पाने शब्दः (भं०)
४. ३।५।४७ (दु० वृ०)
५. ३।५।४८ (दु० वृ०)
६. भट्टोग्रभूतिकृते शिष्यहितान्यासे शिष्यालोकाभिधाने आख्यातप्रकरणे पञ्चमः पादः (भं०)

## षष्ठः पादः

**अनिदनुबन्धानामगुणेऽनुषङ्गलोपः ३।६।१**

ततो नञ्समासः इति तत्पुरुष इति शेषः। स पुर्नविभक्तयो द्वितीयाद्या इत्यादिना द्वितीयाद्यभावेऽपि च तत्पुरुषोऽस्तीति तत्रैवोक्तम्, स्रस्त इत्यादि [1]नडीङ्श्वीत्यादिना इडभावः। अनिदनुबन्धानामिति किमिति वदिप्रभृतीनामिदनुबन्धानामनुषङ्गस्याभावाल्लोपस्य प्राप्तिरेव नास्तीति नार्थोऽनिदनुबन्धानामिति निषेधेनेति भावः। अतएव निषेधारम्भाद् वृद्धकुमारीवरन्यायेनेदनुबन्धानामस्त्यनुषङ्ग इति सत्यां लोपप्राप्तावर्थवान्निषेध इत्याकूतेन प्रत्युदाहरति-वन्द्यत इति [2]वाकूतमभिव्यक्तुमाह—अनिदनुबन्धानामितीत्यादिना। यद्येवं लगि गत्यर्थः, कपि चलने इत्यनयोरिदनुबन्धत्वाद् विलगितः विकपित इत्यादिना सिध्यति नञा निर्दिष्टस्यानित्यत्वात् सेत्स्यति। लङ्गिकम्प्योर्गत्यर्थाकर्मकेत्यादिना कर्तरि क्तः, लक्ष्यानुरोधेन च अनित्यत्वं [3]स्पन्दते तेन कृच्छ्र [4]व्याप्तौ व्याधौ च यथाक्रमगमनयोरनुषङ्गलोपः, अन्यत्र तु विलङ्गित, विकम्पित इत्येव भवति। ननु विलगितः विलङ्गित इति रूपद्वयं लगि लङ्गिभ्यां [5]संज्ञार्थगत्यर्थाभ्यामेव सिद्धमिति किं तद्विषये नञा निर्दिष्टपरिभाषाश्रयणेन? नैतत्, सानुषङ्गस्यापि प्रयोगस्य कृच्छ्रप्राप्तौ प्रसङ्गात्। इह च येषामिकार एवानुबन्धः तेषां ([6]निषेध करणाल्लिङ्गान्नागमो ये तु भिदिप्रभृतय इरनुबन्धाः तेषां) न भवति। नहि इरनुबन्धा इदनुबन्धाः प्रतिज्ञातुं शक्यन्ते। यद्येवं चक्षिङो नागमः स्यात्, न भविष्यति चक्षिङः ख्याञिति अकृतनकारागमस्य तस्य निर्देशात्, नहि नकारागमभाजं धातुमाचार्यः क्वचिदिकारेण निर्दिष्टवान् अतः अन्तेदनुबन्धा इह धातवो निषेधविधौ गृह्यन्ते। अगुण इति किमिति वक्ष्यमाणाश्रयः प्रश्नः आश्रयममन्यमानः प्रत्युदाहरति। सस्नितेत्यादौ गुणस्य दर्शनाच्छ्वस्तन्यामगुणत्वं न सम्भवतीति भावः। आशयमिदानीं [7]प्रकटीकर्तुमाह—नन्वयमपीत्यादिना। अयमत्रार्थः। इहागुणग्रहणं यत्र श्वस्तन्यादौ गुणदर्शनात् सगुणत्वं तत्र मा भूदित्येवमर्थं

१. नडीश्वीत्यादिना (मं०)
२. तदेव (मं०)
३. स्मर्यते (मं०)
४. प्राप्तौ (मं०)
५. सङ्गतार्थागताभ्यामेव (मं०)
६. को० न्यूनपाठः (मं०)
७. प्रकटयितुमाह (मं०)

क्रियते । तच्चाप्रयोजनम्, इवस्तन्यादेरपि सगुणस्य [1]कुटिभेत्यादौ गुणस्यादर्शनादगुणत्वस्यापि सम्भवात् एवं च संस्रितेत्यादावगुणनिमित्तकोऽनुषङ्गलोपः [2]प्राप्नोत्येवेति प्रत्युदाहरणमेतत् किं च अगुणेऽपि प्रत्यये गुणस्य दर्शनाद् गुणत्वमशक्यप्रतिसाधनम् अतो मूलोदाहरणान्यप्यसङ्गतानीत्याशयेनाह—यणादयोऽपीत्यादि आदिग्रहणाच्चेक्रीयित निष्ठादयो गृह्यन्ते । [3]जागर्यत इत्यादाविति । इहाप्यादिग्रहणादरार्यते, सास्मर्यते जागरितः, जागरितवानित्यादयः ।

तदेवमगुणो गुणदर्शनात् सगुणत्वस्यापि सम्भवात् सगुणोऽपि गुणनिषेधवीक्षणादगुणव्यपदेशस्यापि प्रवृत्तेः क-प्रत्ययो गुणस्सगुणो वा क इति विशेषो नावधार्यते । ततस्सङ्कीर्णोऽयं शास्त्रे गुणागुणव्यवहार इति कथमत्र व्यवस्था कर्तव्या सगुणोऽयम्, अयं चागुण इति । अत्र परिहारमाह—उच्यत इत्यादिना । अत्राप्ययमर्थः । इहागुण इति योऽयं प्रत्ययस्य व्यपदेशः सः विद्यमानो गुणो यस्मिन्निति अनया व्युत्पत्त्या अस्यां च व्युत्पत्तौ प्रकृतिं परिहृत्य यत्र प्रत्ययो गुणो निषिध्यते यथा णनकारेत्यादौ णकारानुबन्धे चेक्रीयितेत्यत्र च स प्रत्ययः सामान्येन तत्र तत्रागुणे इति व्यपदिष्टो भवति । तथा च परोक्षायां चेत्यगुणत्वाज्जघ्नतुरित्यादावुपधालोपः प्रवर्तते । यत्र पुनः प्रत्यये प्रकृतिविशेषं परिहृत्य गुणो निषिध्यते तथा अभ्यस्तस्य चोपधाया इत्यादौ स्वरादौ गुणिनि सार्वधातुके तत्र तस्य प्रत्ययस्य तामेव विशिष्टाभ्यस्तलक्षणां प्रकृतिमुद्दिश्यागुणव्यपदेशो न तु सामान्येनासावगुणः तथा च प्रकृत्यन्तरे तस्यागुण[4]व्यपदेशाभावाज्जजनानीत्यत्र उपधालोपो न भवति [5]सनागुण इति [6]सर्वगुण इति सामान्येनेत्यत्रानुषज्यते । ननु प्रकृतौ सत्यामसत्यां च गुणनिषेधदर्शने तुल्येऽपि कुतो हेतोरयं विशेषो यदुत प्रकृतिविशेषपरिहारेण गुणनिषेधोऽयं प्रत्यये च सामान्येनागुणप्रकृतिविशेषमपरिहृत्य तु यत्र गुणापाकरणं सामान्येन गुण इत्याशङ्क्याह—लक्ष्यानुरोधादित्यादि । यद्येष विशेषो नाश्रीयते ततः सगुणागुणभेदो न कार्यम्, इह शास्त्रे लक्ष्यसंस्कारार्थमुच्यमानमुत्सीदेदिति तदनुरोधादयमाश्रीयते विशेषः ([7]तदेवमवस्थिते विशेषे) यदि-

---

१. गुटिते (भं०)
२. प्राप्नोति, एवं तु (भं०)
३. जजागार्यत (भं०)
४. व्यपदेशाभावाज्जनानी (भं०)
५. सार्वगुण इति (भं०)
६. न्यूनपाठः (वा०)
७. न्यूनपाठः (भं०)

दमगुणेऽपि क्वचिद् गुणस्य दर्शनं तत् काञ्चिदेव प्रकृतिमपेक्ष्योपजायमानं प्रामादिकं भवति सगुणो अपि गुणव्यावृत्तिः प्रामादिक्यैवेत्यतः प्रामादिकेन रूपेणो-पजायमानोऽप्यगुणे सगुणव्यपदेशः। सगुणे चागुणव्यपदेशो न प्रसिद्धागुणत्व-सगुणत्वव्यावृत्तौ प्रत्ययस्य व्याप्रियत इत्यभिहिते न्यायेन नास्ति साङ्कर्यप्रसङ्गः। भिन्नन्तीति निराकरोतीत्यर्थः। यद्येवम्, अनिटः सनो गुणत्वं प्रकृतिविशेषाव-ग्रहेणोच्यमानमुपधाना[1]मपि समवधान एव भवेत्, अन्यत्र तु तस्यागुणत्वा-भावात् धिप्सतीत्यत्र तु दम्भेरनुषङ्गलोपो दम्भेः सनि चानिटीति च शब्दा-दुपधानाम्यनपेक्षयापि क्वचिद्विज्ञास्यत इति नापूर्वत्वेनैषणीयः। अनिदनु-बन्धानामिति पर्युदासवृत्त्या न लोप इत्यपि कृते लब्धमनुषङ्गग्रहणमिति तदुपादानं लोपस्य क्वचिदनित्यत्वार्थम्, तेन तृम्फादीनां गुम्फादीनां तृम्फती-त्यादावन्यगुणेन भवत्यनुषङ्गलोपः। वा शब्दानुवृत्तेः व्यवस्थितविभाषात्वान्न भविष्यतीति चेत्। दुर्ज्ञानमेतत्।

**न शब्दाच्च विकरणात् ३।६।२**

अनिदनुबन्धानामगुण इति निवृत्तमिति। तेन सामान्ये नायं विधिरिति भावः। न शब्दादिति शक्यमकर्तुमिति। तत्तु कृतं विस्पष्टार्थम्।

**परोक्षायामिन्धिश्रन्थिग्रन्थिदम्भीनामगुणे ३।६।३**

अविद्यमानो गुणो यत्र प्रत्यय इति विग्रहः। अगुणायां परोक्षायां परत इति वस्तुव्याख्यानमेतत्। एवं तु वक्तव्यम्, परोक्षायां योऽगुणः तस्मिन्परत इति। छान्दसत्वात्। वैदिकत्वात्। छन्दसि हि दृष्टमनुविधीयते। न चेन्धेः तत्राम्प्रत्ययो दृष्ट इति समीन्ध इत्यत्र ([2]नासौ भवतीति भावः। ननु इन्धेर-व्यवहितायामनुषङ्गलोपारम्भादेवेत्यत्राम्न भविष्यति) नैतत्। आमा व्यवधाने-ऽपीन्धेर्ग्रहणसामर्थ्यादनुषङ्गलोपः स्यात्। अनुषङ्गलोपे सिद्ध इति। अनिदनु-बन्धानामित्यादिना इन्ध्यादीनामेव परोक्षायामित्येतेन प्रत्ययनियमोऽयमिति दर्शयति। यदि पुनः परोक्षाया([3]मेवेन्ध्यादीनामिति प्रकृतिनियमः स्यात्, इन्ध इत्या)दावनुषङ्गलोपो न भवेत् ननु प्रत्ययनियमेऽपि बभज्वानित्यत्र भञ्जेः क्वन्सावनुषङ्गलोपो न सिध्यति, क्वन्सोः ककारद्वयपाठसामर्थ्या-त्सेत्स्यति। अगुणग्रहणं विस्पष्टार्थम्। यदि हि सगुणे विध्यर्थमिदं स्यादि-न्धेरात्मनेपदिनो सम्भवात् सगुणस्योपादानमपार्थकं स्यात् उत्तरसूत्रारम्भश्च

१. नामि (वा०)
२. न्यूनपाठः (वा०)
३. न्यूनपाठः (मं०)

विफलो भवेत् ।

**दंशिसञ्जिरञ्जीनामनि ३।६।४**

अनि [1]परे इति । अव्यवहितोऽत्रान्गृह्यते योऽविकरणः नत्वन्यः उपदेश इत्यादि अनीति वचनात् घञि न भवति । कथं तर्हि दशनम् रजनम् राजकम् रज इति, उच्यते — दशनमित्येतावद् दन्श दशन इति निपातनात् सेत्स्यति, रजन रजक रजस्यपि रक्युन् क्विञ्छिल्पिसंज्ञयोरपूर्वस्यापि भूरञ्जिभ्यां किदिति क्युन् [2]क्वन्नसुन्नन्तत्वात्सामान्यलक्षणेनानुषङ्गलोपे सति सेत्स्यति । रञ्जेरित्यादि । मृग रमणं मृग क्रीडा । ननु जनीजृषक्नसुरञ्जोऽमन्ताच्चेति ह्रस्वविधानार्थात् मानुबन्धत्वप्रतिज्ञानादेव सिद्धो रञ्जेरनुषङ्गलोपः । अर्थाभिधानमपि स्वाभाविकत्वात् सिद्धमिति किं वक्तव्येन, नैतत्, मानुबन्धत्व([3]प्रतिज्ञानसामर्थ्यात् सञ्जिदन्शयोरिवानुपधाया अपि दीर्घत्वे सति ह्रस्वप्रवृत्तिसाफल्यात्, ततो मानुबन्धत्व)प्रतिज्ञानं रञ्जेरनुषङ्गलोपविधातुमक्षममिति वक्तव्यमेव ज्यायः ।

**अस्योपधाया दीर्घो वृद्धिर्नामि नामिनिजट्सु ३।६।५**

उपधाभूतस्येति । उपधात्वं प्राप्तस्य नामिनां चान्तर्गतानामिति । एतेन जागर्तेः कारित इति जागर्तेर्वृद्धिबाधनार्थाद् गुणविधानारम्भान्नामि वृद्धिविधावुपधाग्रहणं नाभिसम्बध्यत इति दर्शयति । इह चेनिजट्स्विति भिन्नमेतद्वाक्यं कार्यद्वयविशेषत्वेनाविज्ञायमानं दीर्घत्वविधावपीनिजटामेव निमित्तत्वं बोधयति । चकासतीति । चकाराकारस्य दीर्घाभावः । ननु सप्तम्या निर्दिष्टे पूर्वस्येति निर्दिष्टग्रहणस्यानन्तर्यार्थत्वात् सप्तमीनिर्दिष्ट इत्यनन्तरस्याकारस्य दीर्घेण भाव्यमनन्तरश्च नासावस्तीति अन्त्याभावपरिभाषयैवासावुपधायाः विज्ञास्यते न तु चकाराकारस्य । चिकीर्षयतीत्यादावनन्तरोकारोऽस्तीति चेत्, बाढम्, अस्तिलोपस्तस्य बाधकः । बाधित्वा लोपं स्वरादेशत्वाद् दीर्घ एव स्यादिति चेत्, अस्तु सवर्णग्रहणात् तस्याप्यस्य च लोप इति लोपो विज्ञास्यते, ततो नार्थ उपधाग्रहणेन, सत्यम्, प्रतिपत्तिगौरवपरिहारार्थम् तु आदिति कर्तव्ये दीर्घग्रहणं संज्ञापूर्वकपरिभाषापरिग्रहार्थम् । तथा चोतमैकवचने अटि वृद्धिदीर्घौ वा भवत इत्युपपद्यते । ननु नाम्यन्तानां धातूनां गुणे कृते सत्युपधादीर्घेणैव कारयतीत्यादि सिद्धमिति नार्थो नामि वृद्धिविधानेन, नैतत्,

---

१. परतः (भं०)

२. क्वन्नसुन्नन्त (भं०)

३. न्यूनपाठः (भं०)

सति गुणे अकारस्य कृत्रिमत्वादुपधादीर्घत्वस्य विधातुमशक्यत्वात् तथा चायि-विधावायिग्रहणं कृतम्, अन्यथा आयिग्रहणानुवृत्त्योपधादीर्घेणैव [1]कारयती-त्यादिसिद्धमित्यायिमादेशमिदं न विदध्यात् । यत्तु केनचित् पटेरिन्नन्तस्य अपीपटदिति प्रयोगं दृष्ट्वा सारूप्यापहृतबुद्धिना पटुशब्दस्याप्यपीपटदिति रूपं मन्वानेन नामिवृद्धिविधानस्य प्रयोजनमुक्तम्, यथा—पटुमाख्यदपीपट-दित्यत्र लिङ्गनामिनोः वृद्ध्यर्थं नामिवृद्धिविधानम्, अन्यथा पटुशब्दसम्बन्धिन उकारस्य समानस्य वृद्धावसत्यां लुप्तत्वात् समानलोपत्वात् सन्वदित्वं न स्यादिति, तन्न । यतो नात्र धातुप्रस्तावे पटुशब्दस्य लिङ्गस्य वृद्धिलक्षणं कार्यं शक्यं विज्ञातुम् । त्वचयतीत्यत्रापि त्वचो लिङ्गस्य उपधादीर्घत्वप्रसङ्गात् नामि वृद्धिरेव लिङ्गस्य न तूपधादीर्घत्वमिति [2]नास्ति विशेषे प्रमाणम् । नामिनामिति बहुत्वनिर्देशः प्रमाणमिति चेत् न, संज्ञिबहुत्वादपि तस्य न्याय्यत्वाद् गुणश्च नामिनामितिवत् । एवं च कथं बहुत्वनिर्देशो नाम नामि-वृद्धेर्लिङ्गमप्राकरणिकं बुद्धावुपस्फुरद्विषयत्वेनोपस्थापयेत् न चेन्प्रभृतिः लिङ्ग-नामिनोर्निमित्तं युज्यते, इजटोर्लिङ्गादसम्भवात् । तत्साहचर्याच्चेनपि धातु-विहितोऽत्र परिगृह्यमाणः कथं लिङ्गात्परः सम्भवेदिति न निमित्तरहिता वृद्धिर्लिङ्गस्य शक्या विज्ञातुम् । यदि च नामिवृद्धिर्लिङ्गार्था स्यात् ततो हलिकल्योरिनि वृद्धौ सत्यामन्त्यस्वरादिलोपेन च लुप्तायां तस्यां चणि परतो च [3]कलहलमित्यत्र समानलोपत्वात् सन्वदित्वं स्यात् । संज्ञापूर्वकत्वादत्र वृद्धेर-नित्यतेति चेत्, लिङ्गस्यासम्भवन्ती वृद्धिः पटुशब्दस्य नित्या हलिकल्योः स्वनित्येति । चित्रमेतत्, तस्मादपपटदिति भवितव्यम्, अतो न लिङ्गनामिनो-र्वृद्ध्यर्थम् नामिवृद्धिविधानमिति पूर्वक एवात्र समाधिः ।

**सिचि परस्मै स्वरान्तानाम् ३।६।६**

इह वृद्धिग्रहणमनुवर्तते, वृद्धिश्चान्तरतम्यादिवर्णोवर्णानां विज्ञायमानवर्णान्त-विधित्वादन्तदेशगतानां विज्ञास्यते । इवर्णाद्यन्तश्च स्वरान्त एवेत्यर्थात् स्व-रान्तग्रहणे लब्धे स्वरान्तग्रहणमुपदेशः स्वरान्तप्रतिपत्त्यर्थम् । तेनेह न भवति, तेनावोढत्, अत्रास्य च दीर्घ इति कृते वहेर्दीर्घत्वे सहिवहोरोदवर्णस्येति यदौत्वं तस्य वृद्धिर्न भवति ननु च स्वरेण धातुं विशेषयिष्यामः विशेषणेन च विशेष्यस्य तदन्तविधिर्भवति, एवं च लब्धमन्तग्रहणमिति किं तदुपादानेन ? उच्यते—विशेषणविशेष्यभावं प्रति कामचाराद् धातुनापि स्वरस्य यो विशेषण

---

१. अदायीत्यादि (वा०)

२. नामि (वा०)

३. कलद्हलदित्यत्र (भं०)

भावं मन्यते तं प्रति अचिरायीदित्यादौ अनिष्टस्यापि स्वरस्येकारस्य वृद्धिः प्राप्नुयादिति तन्निवृत्तयेऽन्तग्रहणं, चिरि हिंसायां स्वादौ पठ्यते स्म, दि, सिच्, इडादिकार्यम्, अनेन वृद्धिः ऐ आय् ।

**व्यञ्जनान्तानामनिटाम् ३।६।७**

नन्वनिटामिति कृते पृथगारम्भसामर्थ्यादेव व्यञ्जनान्तानामिति लब्धमिति किं व्यञ्जनान्तग्रहणेन, नैतत्, निमित्तव्यभिचारेणाप्यनिटामिति पृथगारम्भः सफलः स्यात्, तथा च निमित्तान्तरे स्वरान्तानामेव वृद्ध्यर्थमिदं विधानं स्यात् तन्मा भूदेष दोष इति व्यञ्जनान्तग्रहणम् । अन्तग्रहणमधिकविषयत्वेऽपि वृद्ध्यर्थम्, तेन अताप्र्सीत् अदाप्र्सीत् । वेटौ तृपिदृपी, नत्वनिटौ रधादित्वात् ।

**अस्य च दीर्घः ३।६।८**

अभाङ्क्षीदिति भञ्जिमुदाहरन्निवृत्तमिहोपधाग्रहणमिति दर्शयति । आदिति न कृतम् अन्यस्यापि दीर्घो यथा स्यादिति । तेन अत्राप्सीत्, अद्राप्सीत् ।

**सेटो वा[1] ३।६।९**

सह इटा वर्तते यो धातुरिति इट् प्रवृत्तौ पारम्पर्येण धातोरपि हेतुभावादेवमुक्तम् । इह सम्बध्यत इति न पूर्वत्र वा दीर्घो भवतीति । अप्राप्तः हकारसकारयकारान्तानामित्यादि । अन्तशब्दः प्रत्येकं सम्बध्यते । एतच्च वा शब्दस्य व्यवस्थितविभाषात्वात् सिद्धम् ।

**श्विजाग्रोर्गुणः ३।६।१०**

नेति कर्तव्ये गुणग्रहणमुत्तरार्थम् । वृद्धौ हि निवृत्तायां गुण एव विज्ञास्यते ।

**अर्तिसर्त्योररिण ३।६।११**

अणि पर इति पुषादिसूत्रविहिते प्रकरणान्तस्थे तु न भवति, पूर्वदेशं सरतीति पूर्वसारः ।

**यणाशिषोर्ये[2] ३।६।१२**

यणाशिषोर्यकारागमः प्राप्तो बाध्यते अत्र च य इत्येतदाशिषो विशेषणं न तु

---

१. दुर्गवृत्तौ नोल्लिखितमिदं सूत्रम् ।
२. ३।६।१३ (दु० वृ०)

यणो व्यभिचारात्। ननु जागर्तिः परस्मैपदित्वादाशीर्यकारं न व्यभिचरत्येवेति किं य-ग्रहणेन, नैतत्, भावकर्मार्थविवक्षायामात्मनेपदप्रवृत्तेर्व्यभिचारस्यासम्भवात्। अतो जागरिषीष्टेत्यादावपि गुणः स्यात् स मा भूदिति य-ग्रहणम्। यद्यपि चाय लोकोपचारविहितस्येज्वद्भावस्य विषयः तथापि इकारागमवन्तमपि बाधित्वा गुणः स्यात्।

**परोक्षायामगुणे** [1]३।६।१३

जजागरतुः जजागरुरिति परोक्षायां चेत्यगुणत्वम्। जाग्रतीत्यत्रापि द्वित्व-बहुत्वयोश्चेत्यादिना जजागारेति। नन्वयं विषयो बुद्धेः तत् को वात्र गुणस्य प्राप्तिरित्याह—वृद्धिं बाधित्वा गुणः स्यादिति गुणनिषेधवद् वृद्धिमपि गुणोऽत्र बाधेत इति भावः। कथं जजागृवान्, विशेषविहितस्याप्यस्यागुणस्य क्वन्सो-द्विककारकपाठेनाप्रवृत्तेः। अतएव यण्वद्भावसमर्थोऽपि जागर्तेरत्र गुणो न भवति। अशन्तृव्योरिति वा विकारादौ निषेधात्।

**ऋतश्च संयोगादेः** [2]३।६।१४

कथं च संचस्करतुः संचस्करुः। बहिरङ्गासिद्धपरिभाषया हि सुटो-ऽसिद्धत्वात्। असति संयोगादित्वे गुणो न प्राप्नोति, सत्यम्, मघोना-मित्यौत्वकरणात्तु तस्या अनित्यत्वाद् भविष्यति। नित्यत्वे हि सत्युत्वस्य बहिरङ्गस्यासिद्धत्वादौत्वं न स्यात्, तपरकरणमन्देहार्थम् न तु [3]तत्कालार्थम्। अन्यथा [4]स्तॄप्रभृतीनामातस्तरतुरित्यादि न सिध्येत्। परयोगेन सेत्स्यतीति चेत् किमिह तपरत्वेन कृतं स्यात्, सावकाशश्च परयोगो विचकर्तुरित्यादाविति तपरकरणे तत्कालार्थे स्तॄप्रभृतीनां गुणो न स्यादित्यसन्देहार्थमेव तत्।

**ॠदन्तानां च** [5]३।६।१५

अन्तग्रहणमृदन्तानामधिकारप्रवृत्त्यर्थम्। तेन शॄ दॄ पॄ इत्येतेषां वा ह्रस्वो भवति विशश्रतुः, विदद्रतुः, विपप्रतुः, पक्षे विशशरतुरित्यादि रूपम्। ननु विशश्रतुरित्यादीनि रूपाणि धातूनामेकार्थत्वात् श्रृ-द्रृ-प्रार्थे वर्तमानानां श्राद्राप्रामेव धातूनां सेत्स्यन्ति, सत्यम् विशिशृवानित्यादि तु क्वन्सौ न

---

१. ३।६।१४ (दु० वृ०)
२. ३।६।१५ (दु० वृ०)
३. तत्कार्यार्थम् (वा०)
४. स्तॄप्रभृतीनामतस्तरतुरित्यादि (भं०)
५. ३।६।१६ (दु० वृ०)

सिध्येत्, तथा हि यदि शॄप्रभृतेः क्वन्सुः क्रियेत, विशिशीर्वानित्यादिरूपं स्यात्। अथ श्रातिप्रभृतेस्ततो विशिशॄवानित्यादि। तस्मादन्तग्रहणमेव ह्रस्वविकल्पः प्रवृत्तये ज्यायः।

**ऋच्छ ऋतः** [1]३।६।१६

ऋत इति स्थानिनिर्देशार्थम् अन्यथा तालव्यस्य ककारस्याप्यन्तरतम एकारो गुणः स्यात्।

**शीङः सार्वधातुके** [2]३।६।१७

सर्वेषामात्मन इति निषेधः प्राप्त इति स बाध्यत इति शेषः। अथ सर्वस्य शीङः आन्तरतम्यादेकारो गुणो यथा स्यादिति विध्यर्थमिदं कस्मान्न भवति, न भवति सार्वधातुक इति लुप्तसप्तमीकात् पदात्परस्य शीङः सम्बन्धिन ईकारस्य लुप्तषष्ठीकस्य स्थानित्वेन निर्दिष्टत्वात्, अप्रमाणकमिति चेत्, अविच्छिन्नाचार्योपदेश एवात्र प्रमाणम्। शीङो ङानुबन्धनिर्देशाच्चेक्रीयितलुकि न भवति शेशीतः शेश्यति, शीङश्चेक्रीयितलुगन्तात् तस् अन्तिलोपोऽभ्यस्तादन्तिन इति नकारलोपः।

**अयीर्ये** [3]३।६।१८

अयिरादेशो भवतीति ईकारग्रहणानुवृत्त्या ईकारस्य न त्वनेकवर्णाच्छीङः सर्वस्य, शाशय्यत इति परत्वादयादेशः ततो द्विर्वचनम्।

**आयिरिच्यादन्तानाम्** [4]३।६।१९

आयिरित्याकारप्रश्लेषादाकारोऽत्र स्थानी विज्ञायते। अन्तग्रहणं लाक्षणिकस्याप्यादन्तस्य यथा स्यादिति। अग्लायि।

**शाच्छासाह्वाव्यावेन्यामिनि** [5]३।६।२०

शा इति षो अन्तकर्मणि इत्यस्य ग्रहणम्, सायतेरपि क्षयार्थस्य वेञो कृतात्वस्य निर्देशो वायतेश्शोषणार्थस्य निवृत्त्यर्थः। अकारपाठस्तु इहानार्षः। पा इति पिबतिर्गृह्यते पायतेरपि शोषणार्थः न तु पातीति रक्षणार्थः तस्य

---

१. ३।६।१७ (दु० वृ०)

२. ३।६।१८ (दु० वृ०)

३. ३।६।१९ (दु० वृ०)

४. ३।६।२० (दु० वृ०)

५. ३।६।२१ (दु० वृ०)

लागमविधानात् ।

**अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यादन्तानामन्तः पो यलोपो गुणश्च नामिनाम्** [1] ६।६।२१

रीङ् श्रवण इति वेति। ननु निरनुबन्धकपरिभाषया कथमयं सानुबन्धको गृह्यते, रूपसामान्यस्य विवक्षितत्वात् अन्तग्रहणं लाक्षणिकादन्त्यपरिग्रहार्थम्, तेन विस्मापय इत्यादि सिद्धम्, पुनरन्तग्रहणं विशिष्टदेशावयवत्वेन पकारस्यागमत्वप्रतिपत्त्यर्थम्। अन्योऽयमन्त्यादेशः स्यात्। य-लोपारम्भाद् अन्त्यादेशो न भविष्यति इति चेत्, एवमपि असत्यन्तग्रहणे आगमोऽयमनियतदेशः स्यात्। तस्माद् देशनैयत्यमागमस्याभिधातुमन्तग्रहणम्। ननु कृते आगमे य्वोर्व्यञ्जने य इति सिद्धो य-लोपः, न सिध्यति, तस्य कर्त्रन्तरप्रणीतत्वाद् ग्रहणस्य वा तत्राभिसम्बन्धात्।

**पातेर्लोऽन्तः** [2] ३।६।२२

पकारागमे प्राप्ते वचनम्। पालयतीति। नन्वेतत्पलिना चौरादिकेन सिद्धम्, न सिध्यति। पातेः पकारागमस्य प्रसङ्गात्, अन्तग्रहणं विस्पष्टार्थमिति। आदेशत्वाशङ्कायामवैस्पष्ट्यं स्यादिति भावः।

**धूञ्प्रीणात्योर्नः** [3] ३।६।२३

धूञ् विधूनने, पृण् प्रीणन इति गणकारवचनान्नकारागमो धुञ्येव स्यात् नान्यत्रेति वचनम्।

**भियष्षुग्वा** [4] ३।६।२४

षुगागमो वा भवतीति। अथागम इत्येतत् कुतः, अन्तग्रहणानुवृत्तेः। ननु भीषिचिन्तीति वचनाद् भियष्षान्तता सिद्धा, न सिध्यति। तस्य वचनस्य कर्त्रन्तरप्रणीतत्वात्। न च तद्वचनं विकल्पेन षान्ततां विधातुं क्षममिति नित्यं षान्तता स्यात्। हेतोरेव भये षान्तता नान्यत्र इति च विशेषो न ज्ञायते, षान्तो वा भीष् इति सौत्रो धातुरित्येवमपि कश्चित् सम्भावयेदिति वचनमेव ज्यायः। ककार इत्यादि कथं पुनः सति ककारे पूर्वाचार्याभिहितो विशेषः सूच्यते ककारोपलक्षितस्य षकारस्य पूर्वाचार्याभिहितस्येहोपादाने सति तत्रैव विशेषप्रतिपत्तेः। तेनेति पूर्वाचार्याभिहितविशेषसूचनापरेण ककारेण

---

१. ३।६।२२ (दु० वृ०)
२. ३।६।२३ (दु० वृ०)
३. ३।६।२४ (दु० वृ०)
४. दुर्गवृत्तौ नोल्लिखितमिदं सूत्रम्।

हेतुभयेऽर्थे इतीह बिभेतेरिनि परे षकारागमो विधीयते तस्य चेत् परत्वं हेतावर्थे धातोश्च हेतावित्ययेन बिभेतिश्च भयेऽर्थे वर्तते, ततो हेतोर्भये षकार आगमः सिद्ध इति हेतुभयलक्षणस्यार्थस्य ककारसङ्गाद् विशेषात् परिग्रहे सत्ययमर्थोऽत्र जायते। हेतोरेव यद्भयं तत्रायमागमो भवतीति। मुण्डो भीषयत इति हेतोरेवात्र करणनिरपेक्षाद् भयमिति षकारागमः रुचादित्वादि हेतुभयेऽर्थे रुचादित्वं स्मर्यते। मुण्डो भीषयत इति तत्र त्वपेक्षेऽप्येकदेशविकृतस्यानन्यत्वाद् भी-ग्रहणेन ग्रहणात् षकारागमः प्राप्नोति स तु न भवति, वा-शब्दस्य व्यवस्थितविभाषात्वात्। कुञ्चिकया भाययतीति करणमप्यपेक्षाद् हेतोरत्र भयं न तु [1]हेतोरेवेत्यागमः।

**स्फायेर्वादेशः [2]३।६।२५**

वेति निवृत्तमिति पुनरुत्तरत्र वा-ग्रहणम्, वकारादेशो भवतीति। अन्त्यस्य षकार आदेशो वा भवतीति नैनं विज्ञायते। पुनर्वा-ग्रहणादादेशो वेत्यसन्देहार्थमकरणाच्च आगमाशङ्कानिवृत्त्यर्थमिति आगमप्रायत्वादस्य प्रकरणस्य तदाशङ्केति भावः। अस्त्वागमो य-लोपग्रहणानुवृत्त्या च य-लोपे सतीष्टं सेत्स्यतीति चेत्, अस्पष्टमेतत्।

**रुहेः पो वा [3]३।६।२६**

दैवादिकेन रुहिणा विमोहनार्थेन रोपयतीति सिद्धम्, सत्यम्, सिध्यति जन्मार्थस्तु न प्रतीयते इति तदर्थप्रतिपत्तये वचनम्। अनेकार्थत्वं तु न सर्वत्र, न सर्वे सर्वार्थ इति वचनात्।

**शदेरगतौ तः [4]३।६।२७**

शद्लृ शातन इति शातनं युध्येव उकारादेशो विदध्यादिति वचनम्। अगताविति विशेषार्थं च।

**हस्य हन्तेर्घिरिनिचोः ३।६।२८**

इकार उच्चारणार्थः इति तड आघात इति निर्देशात्। अघानीति भावकर्मणश्चेतीच्। इचस्तलोपः। अद्यतन्यां चेति वधिरादेशोऽत्र न भवति। अद्यतन्यात्मनेपदे तस्य विकल्पेन स्मरणात्। हकारान्तस्येति ग्रहि-प्रभृतेराशङ्का-

---

1. हेतोरेवेत्यागमाभावः (मं०)
2. दु० वृ० तदेव
3. ३।६।२६ दुर्गवृत्तौ नोल्लिखितम्।
4. ३।६।२६ (दु० वृ०)

निवृत्त्यर्थमित्याशङ्कामात्रं निवर्त्यते, न तु हकारान्ते धातावाशङ्का काचित्, कुतः, उत्तरत्रावश्यानुवर्तनीयस्य हन्तेरिहाप्यनुवृत्तेरविरुद्धत्वात् मुख्यस्य हन्तेर्यथा स्यात्। वृत्रहणमाचष्टे वृत्रहयतीत्यत्र क्विबन्तस्य गौणस्य मा भूदिति मुख्यहन्तिप्रतिपत्त्यर्थं तु हन्ति-ग्रहणं न भवति। गौणमुख्यपरिभाषयैव गौणे विषयपरिहारस्य सिद्धत्वात्। इदि चेति कर्तव्ये इन्ग्रहणं विस्पष्टार्थम्।

**लुप्तोपधस्य च ३।६।२९**

अथ न इति कस्मान्न क्रियते, ने परतो हन्तेर्हकारस्य घत्वमिति चार्थो विज्ञास्यते, न चान्तरेणोपधालोपं नकारपरत्वं हकारस्य सम्भवतीत्यर्थान्न इत्यपि कृते लुप्तोपधत्वं लब्धमिति किं गौरवकरणेन। उपधालोपस्य स्थानिवद्भावात्कथं नकारपरत्वं स्यादिति चेद्वचनात् स्थानिवद्भावस्यानाश्रयणात्। एवं तर्हि प्रतिपत्तिगौरवं स्यादिति न इति न कृतम्।

**अभ्यासाच्च ३।६।३०**

जादिति कर्तव्येऽभ्यासग्रहणं विशिष्टाभ्यासपरिग्रहार्थम्। तेनाभ्यासनिमित्ते प्रत्यये यो हन्तिः तस्य योऽभ्यासः ततः परस्य हन्तिहकारस्य घत्वं न भवतीति सूत्रार्थविज्ञानादिह न भवति। हननीयितुमिच्छति जिहनीयिषतीति। हि गतौ वृद्धौ चेत्यस्याभ्यासात्परस्येति यो हकारस्तस्येत्यर्थः। चणोऽन्यत्र निमित्त इति परोक्षादौ। नन्वभ्यासनिमित्ते प्रत्यये यो हिनोतिः तस्य योऽभ्यासः तस्मात्परस्य हिनोतिहकारस्य घत्वं भवतीति व्याख्यानाश्रयणाच्चणि न भविष्यतीति किं चणोऽन्यत्रेत्यनेनाभिहितेन, नैतत्, जादिति कर्तव्ये अभ्यासग्रहणसामर्थ्यादेव पूर्वमाश्रितो विशेषः। कर्तव्यावसरे तु यदभ्यासग्रहणं तस्य विशिष्टाभ्यासपरिग्रहे नास्ति सामर्थ्यमिति चण्यपि सत्यभ्यासात्परो हिनोतिहकारो भवतीति सत्यां प्राप्तौ चणोऽन्यत्रेत्युच्यते। तथा च प्रजिघायिषतीत्येतदपि सिद्धं भवति प्रहायितुमिच्छतीति हिनोतेर्णिजन्तात्सन्।

**जेर्गिस्सन्परोक्षयोः ३।६।३१**

गेरादेशस्येकारः प्रयोगसमवायी न तु उच्चारणार्थः। दिवु क्रीडाविजिगीषेति लिङ्गात्। एवं प्रकरणसाहचर्यात् केरादेशस्यापि मन्तव्यम्, इह कस्मादित्यादि। यद्यपि जिनातेः कृतसम्प्रसारणे तद् दीर्घमन्त्यमिति दीर्घत्वे सञ्जाते जि-रूपं व्याहतं तथाप्येकदेशविकृतस्यानन्यत्वादस्ति प्राप्तिः। लाक्षणिकोऽयमित्यादि लक्ष्यानुसन्धानद्वारेणानुमिते जि-रूपो भवत्यनादेश इति भावः।

**चेः कि वा ३।६।३२**

चिक्य इत्यादिरूपं कि ज्ञान इत्यस्य कर्तरि न सिध्यति, परस्मैपदित्वात् ।

**सणोऽलोपस्स्वरेऽबहुत्वे ३।६।३३**

अधुक्षत् अधुक्षातामिति । यद्यत्राकारलोपो स्यात् आताम् आथाम् आदेरिरितीत्वं स्यात् ।

**दरिद्रातेरसार्वधातुके ३।६।३४**

लोपग्रहणमिहानुवर्तते । न त्वद् ग्रहणम्, आपेक्षणात् तदाह — अन्तलोपो भवतीति । दरिद्र इति कर्तव्ये दरिद्रातेरिति श्तिपोऽधिकस्य निर्देशोऽधिकविशेषसूचनार्थः । तेनाद्यतन्यां चेष्यत इत्यादि यदुक्तं तदुपपन्नं भवति ।

**व्रश्चिमस्जोर्धुटि ६।६।३४**

असार्वधातुक इति निवृत्त्यर्थम्, तेन सार्वधातुकेऽप्ययं विधिः । वरीवृष्टः, मामक्तः, चेक्रीयितलुकि सति तस्, अस्याभिधानमस्ति ।

**यन्योकारस्य ३।६।३६**

पठो यन्पठतीत्यत्र न भवति, धातुप्रस्तावाद् धातुनोऽकारस्य विशेषणात् । प्राकरणिकस्य वा यणो विकरणस्य वा ग्रहणाल्लाक्षणिकत्वाद्वा अयं हि यन्शब्दः इणः [1]शन्तृङीणश्चेति यत्वे सति व्युत्पाद्यते, नकार इहार्थ इति विशिष्टस्य नकारोपलक्षितस्य यकारस्य परिग्रहो यथा स्यादिति नकार इहोपादीयते । य इत्येतावति ह्यु च्यमाने सत्युपोयत इत्यत्रापि [2]वेञो वयिः यजादित्वात् सम्प्रसारणे नाम्यन्तानां यिन्नायीति दीर्घे सन्धौ च कृते परनिमित्तादेशपरिभाषया धात्वौकारोऽयमिति कृत्वा लोप ओकारस्य लाक्षणिकस्यापि सतो लक्षणप्रतिपदोक्तपरिभाषाया अनित्यत्वदर्शनात्, प्राप्नोति, स मा प्राप्नुयादिति नकारस्य लोपोपादानम् ।

**सन्ध्यक्षरे च [3]३।६।३७**

व्यतिरे, व्यतिसे इति कर्मव्यतिहारे रुचादित्वादात्मनेपदम् ।

---

१. शन्तृङोश्चेति (भं०)
२. वेञो वयि यजादित्वात् (भं०)
३. ३।६।३८ (दु० वृ०)

**अस्तेस्सौ**[1] **३।६।३८**

सौ सकारादाविति । एतेन साविति नेदं सिप्रत्ययग्रहणं किं तर्हि व्यतिस इत्येतत् सिद्ध्यर्थं सकारादेः प्रत्ययस्येति दर्शयति । तथा चाह—सिकारे इकार उच्चारणार्थं इति । यद्येवं सीति क्रियतां सौकारस्त्वपार्थकः, अस्त्येतत्, मात्राधिक्यकरणात् त्वस्तेरधिकमपि कार्यं सूच्यते । तेन व्यति ह इत्यत्र एकारे परतोऽस्तेस्सकारस्य हत्वं सिद्धं भवति । ईक्षामास इत्यत्र तु तन्न भवति वा-शब्दस्य अत्रापेक्ष्यमाणस्य व्यवस्थितविभाषा विज्ञानात् । श्तिपो धातुस्वरूप-प्रतिपत्त्यर्थत्वादभूरित्यत्र न भवति । न चास्यतिनिवृत्त्यर्थः श्तिपो निर्देशः, तस्य यनामकारादिप्रत्ययव्यवधानाद् ग्रहणासम्भवात् । यस्मिन्विधिस्तदादाविति वचनात् सकारादौ लोपो विज्ञायमान आसीरित्यत्रेटि कृते न भवति ।

[2]**दीधीवेव्योरिवर्णयोः ३।६।३९**

इवर्णे इकारे ईकारे चेति स्वरस्सवर्णस्य ग्राहक इति वचनात् । यद्येवमपार्थकम् वर्णग्रहणम्, न, तस्य श्रूयमाणवर्णप्रतिपत्त्यर्थत्वात् । तेन दीधीवेव्योः हेतुहेतुमद्भावविवक्षायामिनि कृते तदन्ताद् वुणि सति आदीध्यक, आवेव्यक इत्यत्र परत्वात् कारिते लुप्ते प्रत्यय[3]लक्षणेन सि-लोपः प्राप्तो न भवति । न चेदं वर्णाश्रयं कार्यमिवर्णादौ प्रत्यये विधानाल्लोपस्य प्रत्ययाश्रयत्वात् वुणुत्पत्तेः पूर्वमपि न भवति । विफलं ह्येवं सति वर्णग्रहणं स्यात् । यथासंख्यपरिभाषायाः सव्यभिचारित्वादिह यथासंख्याभावः ।

**असन्ध्यक्षरयोरस्य तौ सलोपश्च ३।६।४०**

तल्लोप इति तच्छब्देनासन्ध्यक्षरे प्रत्यवमृश्यते, अतएव तयोर्लोप इति विगृह्णाति । यथासंख्यमिति । अकारे परतोऽकारादेशः । सन्ध्यक्षरे च सन्ध्यक्षरमित्येष यथासंख्यार्थः । तयोश्च परयोर्लोप इति न तु पूर्वयोः । अन्यथा पचन्त इत्यादावनकारान्तत्वादात्मने चावकारादिति नलोपः स्यात् । गुरुसूत्रं चापार्थकं भवेत्, असन्ध्यक्षरयोरस्येत्येव सिद्धत्वात् लोपग्रहणानुवृत्त्या च सन्ध्यक्षरयोरकारस्य लोपमेव विदध्यात्, यान्तीति सवर्णग्रहणादप्यत्र न भवति । सन्ध्यक्षरे चेत्यारम्भात् ।

---

१. ३।६।३९ (दु० वृ०)
२. दीधीवेव्योरिवर्णयकारयोः ३।६।४१ (दु० वृ०)
३. लक्षणेनापि (भं०)

**नामि व्यञ्जनान्तादायेरादे** [1]३।६।४१

अग्नीयते पटूयत इति। अग्निरिवाचरति, पटुरिवाचरतीति विग्रहः। विद्वस्यते. पयस्यते अत्रापि विद्वानिवाचरति पय इवाचरतीति। ननु अग्नीयत इत्यादौ यत्वादिकार्ये कृते व्यञ्जनान्तत्वादकारे लुप्ते निमित्ताभावपरिभाषया इकारादिवर्णप्रत्यासत्तौ सत्याम् एकदेशविकृतस्यानन्यत्वादायिव्यपदेशानपाया-दायिनिमित्ते दीर्घत्वे च सति सिद्धिरस्त्येवेति नार्थो नामिग्रहणेन, नैतत्, सन्निपातपरिभाषया यत्वादेः कार्यस्याकारलोपं प्रति निमित्तत्वात्। अथापि तस्य निमित्तत्वमेवमप्यकाराभावादिकारादिवर्णप्रत्यासत्तावकारस्याप्युन्मज्जनं स्यात्। तथा च पुनर्यत्वादि पुनरालोप-पुनर्यत्वादिनिवृत्तिः पुनराकार इत्येवमव्यवस्था स्यात् तस्मान्नामिग्रहणं कर्तव्यम्। आदिग्रहणं विस्पष्टार्थम्। आयो पुंवद्भावविधानारम्भाद्धि सर्वप्रत्ययलोपप्राप्तौ परिह्रियमाणायामवैस्पष्ट्यं स्यात्।

**गमहनखनघसामुपधायास्स्वरादावनण्यगुणे** [2]३।६।४२

जग्मतुः जग्मुः इत्यादि परोक्षायां चेत्यगुणत्वम् ([3]जघ्ने इत्यादि रुचादित्वादात्मनेपदम्। अत्रापि सर्वत्रात्मनेपद इत्यस्य) जक्षतुः जक्षु इति अघोषेष्वशिडामिति घस्य कः, स्थानिवद्भावश्चात्रोपधालोपस्य नास्त्यतो लोपविधावलुप्तवद्भावशासनात्स्वरादेशपरिभाषाजनितस्य स्थानिवद्भावस्यानित्यत्वात्। उपधाग्रहणं प्रतिपत्तिगौरवपरिहारार्थम् इति। तथा ह्यत इति क्रियमाणे सति जग्मतीत्यत्राभ्यासाकारस्याप्यविशेषाल्लोपः प्राप्नुयात्, स च प्राप्नुवन् यावदेवं परिह्रियते। ननु तस्य न भविष्यति, स्वरादावनन्तरस्यैवातः कार्यित्वात्। न चासावनन्तरोऽस्तीतिवचनादेकवर्णव्यवहितः परभागस्थोऽकार आश्रयिष्यते नत्वनेकवर्णव्यवहितोऽभ्यासाकार इति तावत्प्रतिपत्तिगौरवं स्यादिति तत्परिहारः प्रयोजनमुपधाग्रहणस्य। गमेश्चेक्रीयितलुगन्तादन्तिप्रत्ययः, लोपोऽभ्यस्तादन्तिन इति नलोपः। अनणीति प्रसज्यप्रतिषेधपक्षे ([4]त्वेषा प्रत्ययमनपेक्ष्य कारितलोपे सत्येकस्वरत्वादेव) स्वरादावगुण इति कर्तव्यमेव।

---

१. ३।६।४२ (दु० वृ०)
२. ३।६।४३ (दु० वृ०)
३. न्यूनपाठः (वा०)
४. न्यूनपाठः (मं०)

**कारितस्यानामिड्विकरणे** [1]३।६।४३

एतद्वर्जिते प्रत्यये परत इति। एतेनानामिड्विकरण इति पर्युदासाद्विकरणसदृशे प्रत्यये परतो विधिरयमिति दर्शयति। तथा च सूचिसूत्रिमूत्रीणामिन्नन्तानामनेकस्वरत्वाद् य-शब्दो न सिध्यति इत्याचार्यस्तमुपसंचक्षते। प्रसज्यप्रतिषेधपक्षे त्वेषो प्रत्ययमनपेक्ष्य कारितलोपे सत्येकस्वरत्वादेव सिद्धो य-शब्द इति नोपसंचक्षीरन्। अयं च लोपो गुणदीर्घत्वे यादेश[2]वृद्धी न बाधते, अनवकाशत्वात्। ननु कारणा हारणेत्यत्र गुणं बाधते। कार्यंते हार्यंत इत्यत्रापि नाम्यन्तानां यणायीति दीर्घत्वम्। अचीकरत् अजीहरदित्यत्र य इवर्णस्येति यत्वम्। एवमररक्षदित्यत्रेयादेशं कारुकः हारक इत्यत्रेन्नन्तत्वात् वुणि वृद्धि निष्ठायामेवेटीत्येव निष्ठेटीन इत्यस्मान्नियमार्थे व्याख्यायमाने सतीड्ग्रहणं शक्यमकर्तुमिति न वाच्यम्, तस्य कत्रन्तरप्रणीतत्वा[3]दहं कारयेत्यत्रासन्ध्यक्षरविधौ कृतेऽपि स्थानिवद्भावाद्विकरणपरत्वमिति लोपाभावः। कारेरिन्नन्ताद्वर्तमान ग्रो अन्विकरण असन्ध्यक्षरविधिः।

**यस्यापत्यप्रत्ययस्यास्वरपूर्वस्य यिन्नायिषु** [4]३।६।४४

यस्येत्यकार उच्चारणार्थ इत्यनेन य-मात्रं लुप्यते इति भावः। यदि तु यकाराकारसमुदायस्य लोपः स्यात् ततो गार्गीयतेत्यादावीत्वं न स्यात्। गार्गायत इत्यादि न सिध्येत्, व्यञ्जनान्तत्वादायेरादिलोपस्य प्रवृत्तेः अस्वर एव तु यकारो न निर्दिष्टः वैचित्र्यार्थात्। ईत्वं न स्यादित्यवर्णाभावात्। आयेश्चेत्यादि। यद्यत्राकारलोपः स्यादिति सम्बध्यते। आर्यीयतीत्यादि। अरणीयत इत्यन्ते कर्मणि ध्यण्, वृद्धिः गार्ग्यः काम्यति, काम्य चेति काम्यप्रत्ययः। यद्येवं गर्गस्यायं गार्गीयत इत्यादि न सिध्यति। तद्धितविधौ वाणपत्ये इत्यतो बहुलार्थस्य वा-शब्दस्य यथादर्शनमनुक्तकार्यसङ्ग्रहार्थात् सेत्स्यति। ईकारे पर इत्यादि ऋत व्यञ्जीत्यादिना मदेः स्य प्रत्यये सति मत्स्य शब्द इति तत्सम्बन्धिनो यकारस्यानपत्यत्वाल्लोपो न प्राप्नोतीति वक्तव्यः। स तु नापूर्वत्वेन वाच्यः, यस्येति योगविभागात् सिद्धत्वात्। योगविभागश्चावश्यं कर्तव्यः। सूर्येणैकदिक्, सौरी, बलाका एवमादेरणिष्यत इत्यण्। अगस्त्यस्यापत्यं स्त्री अणन्तादीकार आगस्ती आगस्तीय इत्याद्यर्थम्, तिष्यपुष्ययोरणि पर इति य-लोपो वक्तव्य इत्यपेक्ष्यते। अत्र च नक्षत्राणीति

---

१. ३।६।४४ (दु० वृ०)

२. वृद्धीत्याधत्ते (वा०)

३. दयम् (भं०)

४. ३।६।४५ (दु० वृ०)

विशेषो मन्तव्यः तिष्यपुष्ययोरिति द्वयोरुपादानात् सिद्धशब्दस्य न भवति । एतदपि योगविभागादेव सिद्धम् ।

न लोपश्च [1]३।६।४५

न त्वीकार इति अन्यथा राज्ञीत्यादौ न-लोपः स्यादिति भावः । पथीयति इत्यादि । पन्थानमिच्छत्यात्मनः पन्था इवाचरति, राजानमिच्छत्यात्मनः राजेवाचरति, विद्वांसमिच्छत्यात्मनः विद्वानिवाचरतीति विग्रहः । इह यिन्नायीभ्यां लिङ्गमाक्षिप्यमाणं नकारेण वा विशेष्यते, तेन वा नकारः । तत्राद्ये पक्षे नकारान्तस्य लिङ्गस्य लोपो विज्ञायमान पथीयत इत्यादौ न प्राप्नोतीत्यपर पक्षोऽङ्गीकर्तव्यः । तत्र च लिङ्गस्य यो नकारः यत्र तत्रस्थः तस्य लोप इति व्याख्यायमाने सति नगरीयत इत्यादावपि लोपः प्राप्नोतीत्याशङ्क्याह— नगरीयतीत्यादावित्यादिग्रहणेन नन्दयतीत्यादयो गृह्यन्ते। अत्रैव हेतुमाह— लक्ष्यायत्तत्वादित्यनभिधानान्न भवतीति भावः । सूत्रैः सिद्धो न लोप इति । तत्र पन्थीत्यस्य व्यञ्जने चैषां निरिति न-लोपः सिद्धः । राजन्नित्यस्यापि लिङ्गान्तनकारस्येत्यनेन । विद्वन्स् इत्यस्यानुषङ्गश्चाक्रुञ्चेरित्यनेन । तदपार्थकोऽस्य योगस्यारम्भः । इह योगारम्भेत्यादि यिन्नाय्योः लोप एव यथा स्यात् कार्यान्तरं मा भूदिति नियमार्थोऽस्य योगस्यारम्भः । नियमार्थत्वे च सति विद्वस्यति, उखास्रस्यति, मधुलिह्यति, दोदुह्यति वाश्यति पयस्यतीत्यादौ विरामव्यञ्जनादिष्वित्यादिना दत्वादयो न भवन्ति । यद्येवं पुंस्यतीत्यादावनो लोपो न प्राप्नोतीति, चतुर्यति, अनुडुह्यति, गीर्यति, [2]अर्यति मर्षिष्यतीत्यादौ चोत्वादयः, सत्यम्, [3]उक्तः त्वत्राल्लोपादिविधावेव परिहारः, षत्वे तु तद्विधावपि शब्दसमाधिः विध्यर्थ इत्यपर इति, किमेवं सति भवतीत्याह—तथा चेत्यादि । तत्र च पक्षे दत्वादीनामभावः तद्विधावनुवृत्तेर्व्यवस्थितविभाषात्वात् लोपग्रहणं विस्पष्टार्थम् ।

यस्यानन्यधातोः [4]३।६।४६

अननीत्येन सार्वधातुकं लक्ष्यत इति । यदि पुनरिदमनि विकरणे निषेधकं वचनं स्यात् ततः क्रियत इत्यादावप्यधातोरिति प्रसज्यप्रतिषेधपक्षे य-लोपो भवेत् । पापच्यत इति । अत्राननीतिवचनात्सार्वधातुके न भवतीत्यधातोरिति

---

१. ३।६।४६ (दु० वृ०)
२. धूर्यति सर्पिष्यति (?)
३. कुतः (भं०)
४. यस्यानिन ३।६।४८ (दु० वृ०)

किमिति वक्ष्यमाणत्वाल्लोपवचनादेतत् सूत्रविहितस्य लोपविधेरनित्यत्वं विज्ञास्यते। ततो मव्यादीनां धातूनां य-लोपो न भविष्यति यद्वा द्वौ यकारौ तेषां पठ्येते, तत्रैकस्य यकारस्य कृते लोपे लोपशास्त्रस्य प्रवृत्तत्वादपरस्य लोपो न प्रसङ्क्ष्यति। ततो नार्थो धातोरित्यनेन निषेधेन इति मन्वानस्यैष प्रश्नः। स बिभेति प्रत्युदाहरतोऽयमाशयः यदि वक्ष्यमाणाल्लोपवचनादस्य विधेर-नित्यत्वं तर्हि बेभिद्यादीनामप्यनित्यत्वं लोपस्य प्राप्नोति नह्यत्र नित्यत्वात् मव्यादीनां न-लोपः बेभिद्यादीनां तु लोप इति विशेष उपलभ्यते। वक्ष्यमाणं वा लोपवचनं स्वस्थान एव प्रत्यासत्तेः अनित्यत्वं विदध्यात् न त्वन्यस्य य-लोपविधेः। ततश्चातो लोपो विकल्पेन प्राप्नोति। वकारे वा सिज्लोपा-नित्यत्वमविशेषात् स्यात्। न च द्वियकारकपाठे प्रमाणमस्ति तथा त्वेष वा यावत्सम्भवः तावद्विधिरित्यपरस्यापि यकारस्य लोपः प्राप्नुयादित्यधातोरिति कर्तव्यम्। यद्येवं विशेषानुपलम्भात् किमयं निषेधो मव्यादीनामुत बिभेद्यादीना-मित्याशङ्क्य विशेषं प्रतिपादयितुमाह—गौणमुख्ययोरित्यादि मुख्यस्य धातो-रिति मव्यप्रभृतेः। तस्य हि क्रियामात्रं प्रतिपादयति। प्रतिपादयतो धातुपाठ-परिपठितस्य क्रियाभावो धातुरिति मुख्यं धातुत्वम्। गौणो धातुरिति बेभिद्य-प्रभृतिः। स तु धातुषु पठितः सनादिप्रत्ययान्तत्वाद् धातुः, तेन तस्य गौणत्वाद-धातोरिति निषेधो न भवति।

**अस्य च लोपः** [1]३।६।४७

अधातोरिति निवृत्तमिति। तेन गणिप्रभृतीनामदन्तानां धातूनामप्यतो लोपो भवतीति भावः। इहाननीत्यभिसम्बध्यते तत्रानि परेऽकारस्य लोपे सत्यसति वा विशेषाभावात् किमननीत्यने([2]नाभिसम्बध्यमानेन, इह कृत्यमिति यश्चोदयेत् तं प्रत्याह—अननीत्यने) नेत्यादि इहास्य सार्वधातुकप्रत्ययोपलक्षण-परं अननीत्येतत्, तेन सार्वधातुके परतो लोपोऽयं विज्ञायमानः परनिमित्तक इति। तथात्वात् पिपठिषतेत्यादावातो लोपस्य स्थानिवद्भावे गुणादिकार्यं न प्रवर्तते। यद्वा सार्वधातुकग्रहणं सार्वधातुके मा भूदित्येवमर्थम्। तेन पठतीत्यादा-वकारस्य लोपो न भवति। तस्य लोपे सत्यदादेर्लुग्विकरणस्येति किमनेनेति चेत्, लुगर्थं तत्स्यात्, लोपे हि सति दुग्ध इत्यादौ विकरणे लुप्ते केन गुणो न भवेत्। उत्पत्तिरेवान्विकरणस्य किमर्थमिति चेत्, सति तस्मिन्नत्वादेः कार्यस्य प्रवृत्तिर्यथा स्यात्। तस्मादतो लोपस्य परनिमित्तत्व ख्यापयितुं सार्वधातुक-व्यावृत्तये चाननीत्येतदभिसम्बन्धनीयमेव। चिकीर्ष्यत इत्यादौ तु यणा

---

१. ३।६।४९ (दु० वृ०)
२. न्यूनपाठः (वा०)

व्यवहितं सार्वधातुकमित्यतो लोपो भवत्येव । मृगयत इति आगर्वादात्मनेपदीति मृगेरिन्नन्तादात्मनेपदम् । स्वरादेश इति स्वरस्यादेशः स्वरादेशः । आदिश्यते यो हि स आदेशः । लोपोऽप्यकारं स्थानिनमुपदिश्यत इत्यसावप्यादेशः ।

**सिचो धकारे** [1]३।६।४८

सिचः प्रत्ययस्य ग्रहणं तस्यैव धकारपरत्वसम्भवात् ।

**ह्रस्वाच्चानिटः** [2]३।६।४९

अविद्यमानस्य सिच इत्यादि विग्रहविशेष प्रदर्शनेनानिट इत्येतत् सिचो विशेषणं न तु ह्रस्वस्येति दर्शयति । नह्ययमत्रार्थः ह्रस्वाद् भवति, इटस्तु ह्रस्वान्न भवतीति । तथात्वे हि सनि नेट् अनिट् इत्येवं विगृह्णीयात् । कस्मात्पुनरेवं न विगृह्यते, उच्यते—इह सिचाक्षिप्तस्य धातोः ह्रस्वादिति विशेषणं विज्ञायते । तत्र ह्रस्वान्ताद् धातोः परस्य सिचो लोपो विज्ञायमान इटो ह्रस्वावयवत्वेन च पौर्वापर्यसम्भवादिटः परस्य सिचो नेति परत्वमशक्यं वर्णयितुम्, तस्मादनिट इत्यनेनात्र सिज्विशेष्यते तदाह— ह्रस्वात्परस्यानिटस्सिच इति । अचेष्टेति । नात्र ह्रस्वादुत्तरस्सिच्, स्वरादेशत्वादन्तरङ्गत्वाच्च पूर्वं गुणस्य प्रवृत्तेः । अवारिष्टामिति । अत्र ह्रस्वादृकारादुत्तरस्सेट्, सिचिति लोपाभावः । नन्वत्रेत्यादि वृद्धेरन्तरङ्गत्वं प्रकृत्याश्रयत्वात् । एवं चान्तरङ्गत्वाद् वृद्धौ सत्यां ह्रस्वात्परो नायं सिजिति ह्रस्वग्रहणेनैवावारिष्टामित्यत्र [3]व्यावृत्तिस्सिद्धयति, नार्थोऽनिट इति निषेधेन, स्यादेतत् ह्रस्वान्ताद् यो विहितस्सिच इति विहितविशेषणपक्षपरिग्रहे सति सत्यामपि वृद्धौ प्राप्नोतीत्येव सिचो लोप इति, तन्न, समवस्थितेत्यादौ सिज्लोपस्याप्रसङ्गात् । अत्र लोपविधेर्बलवत्वादिति समाधत्ते, बलवत्वं तु सर्वविधिभ्यो लोपः बलवान्विधिरिति वचनात् । अतो बाधित्वा वृद्धिं लोप एव प्राप्नुयात् स मा भूदित्यनिट् इति उच्यते ।

**स्कोः संयोगाद्योरन्ते च** [4]३।६।५०

स् च क् चेति विग्रहः । अन्ते पदान्ते च वर्तमानस्येति । एतेनान्त इत्येतत् संयोगस्य विशेषणं न तु स्कोः असम्भवादिति दर्शयति । ननूत्तरपदार्थप्रधाने

---

१. ३।६।५० (दु० वृ०)
२. ३।६।५२ (दु० वृ०)
३. व्यावृत्तिस्सिद्धेति (?)
४. ३।६।५४ (दु० वृ०)

तत्पुरुषे लब्धाप्रधानभावस्य संयोगस्याप्येतद्विशेषणं कथं स्यात् । समर्थादिति ब्रूमः, अन्यथा ह्यन्ते इत्येतदघटमानं स्यात् अथवा संयोग इति लुप्तषष्ठीकं पदमेतत् ।

**चवर्गस्य किरसवर्णः** [1]३।६।५१

वर्णान्तस्य विधिरित्यादिधातुना चवर्गे विशेष्यमाणे धातोर्यश्चवर्गः तस्य कत्वमिति व्याख्यायमानेऽन्त्यस्यापि तद् भवतीति कश्चित् सम्भावयेत् तदेतत् सम्भावनाविनिवृत्तये कर्तव्यमसवर्णग्रहणमित्यर्थः । घुटीति प्रत्ययस्य विशेषणाद् धातोः घुटि न भविष्यतीति चेत् दुर्ज्ञानमेतत् ।

**दादेर्घः** [2]३।६।५२

धातुसम्बन्धिनो दादेरवयवस्येति । एतेन धातुप्रस्तावादाक्षिप्तस्य धातोर्दादेरिति नेदं समानाधिकरणं किं तर्हि व्यधिकरणमिति दर्शयति । समानाधिकरणविशेषणपक्षे हि अधोक्ष्यन्नित्यादौ नित्यत्वादागमे कृते धातोरदादित्वाद् घत्वं न प्राप्नोति, पक्षान्तरे तु सत्यपि अकारागम आगमानामागमिग्रहणेन ग्रहणात् । अदुह् इत्यादेर्धातोः दुह् इत्यादि दादिरवयवस्तस्य घत्वं सिद्धं भवति । अत्रेत्यादिना सूत्रार्थमुदाहरणेषु योजयति । दोग्धा धोक्ष्यतीत्यत्र धातोरवयवो दादिर्न भवतीति कथं घत्वमिति परमतमाशङ्क्याह—यद्यप्यत्रेत्यादि । यद्यपि च दोग्धेत्यादौ दुह् इत्यस्य धातोर्दु इत्ययमवयवो दादिर्भवति तथापि न तस्यावयवस्य हकारोऽस्त्यवयव इति नासौ दादिरिति विज्ञायते द्रुहमुहेत्यादि । अत्र द्रुहेर्दादित्वान्नित्यं प्राप्तिरन्येषां तु प्राप्तिरित्युभयत्र विकल्पोऽयम् ।

**भृजादीनां षः** [3]३।६।५३

भृजी भर्जन इत्यस्य ग्रहणमिति यो मन्यते तं प्रत्याह—भ्रस्जेः । अतएवेत्यादि । इह घुटीत्यधिकाराद् धुटादिप्रत्यये परे षत्वं विज्ञायते । न च सेटो भृजेः धुडादिप्रत्ययः परः सम्भवतीति भर्ष्टेत्यादिलक्ष्यसिद्धये भ्रस्जेरयं भृजिरादेशो निपात्यते न त्विदं भृजेर्धातोर्ग्रहणम् । तेन भृजादिग्रहणेन भ्रस्जादयो गृह्यन्ते तेनैव हेतुद्वारेण प्रदर्शयन्नाह—लक्ष्यमूलत्वादित्यादि युजिरुजीति इडभावः, अवरीभर्ट् इति । अस्त्यर्थमभ्रज्जदिति यः शब्दः । स्रष्टेत्यादि पूर्व-

२. ३।६।५५ (दु० वृ०)
३. ३।६।५७ (दु० वृ०)
४. ३।६।५९ (दु० वृ०)

वदिङभावः। असरीसर्ट् इति। अत्यर्थं असृजदिति यः शब्दः। अययडित्यादि, अत्यर्थमयजत् अत्यर्थमराजत्, अत्यर्थमभ्राजदिति विग्रहः। राजिभ्राज्योः सेट्त्वाड् धुडादिः प्रत्ययेन सम्भवतीति तेनैतयोर्धुडादौ प्रत्ययमुदाहरणेन प्रदर्शयितुमिति भावः। भ्रस्जेर्यो भृजादेश इति सूत्रे निपातित इति शेषः। सगुणे प्रत्यये वा स्मर्यत इति निपातनस्येष्टविषयग्राहकत्वात्। भर्ष्टेति। पूर्ववदिङभावः, अगुणे तु यथाप्राप्तमेव रूपमिति भ्रस्जेरिति शेषः अगुणे भृजिरादेशो न भवतीत्यर्थः।

**छशोश्च** [1]३।६।५४

प्रष्टेत्यादि अत्र प्रच्छेर्धातूपदेशावस्थायामन्तरङ्गत्वात् द्विर्भावे कृते सत्येकस्य ककारस्य कृते षत्वे निमित्ताभावपरिभाषया पूर्वस्य निवृत्तिः। कृतद्विर्भावो वा च्छकारस्य इह स्थानित्वेनोपात्तः। न च वर्णान्त्यविधिरस्ति, नानर्थके वर्णान्त्यविधिरिति वचनात्। अपरीपर्ट, अवेवडिति, । अत्यर्थमपृच्छत् अत्यर्थमविशदिति य-शब्दः पूर्ववल्लुगादिकार्यम्। योगविभागो वैचित्र्यार्थः।

**भाषितपुंस्क पुंवदायौ** [2]३।६।५५

भाषित उक्तः पुमान्येनेति शब्दोऽत्रान्यपदार्थः। पूर्वं येन भाषितः पुमानिति क्तप्रत्ययेन धात्वर्थस्यातीतकालावच्छिन्नत्वादेवमुक्तम्। सम्प्रति स्त्रियां वर्तत इति वक्ष्यमाणो अत्र हेतुः ब्राह्मणायत इति। ब्राह्मणी शब्दोऽत्र जातेरयोपधादिती-प्रत्ययान्तः। चेः किः वेत्यतो वेति वर्तत इति मण्डूकप्लुतिन्यायेन। तेनेति व्यवस्थितविभाषानुवृत्तौ नपुंसकस्याप्यविशेषात्पुंवद्भावः स्यात्। पुंवदित्युक्ते स्त्रीनपुंसकयोरुभयोरप्याक्षेपात्। न च मुख्यत्वात्स्त्रिया एव पुंवद्भावो न तु मुख्यस्य नपुंसकस्य स्यात्। तस्मात्परिहर्तुं वेत्यनुवर्तयेत्। अतिनौ-शब्द आदेशो न भवतीति पुंवद्भावेन प्राप्तः। द्रोणीयत इति भाषितपुंस्कशब्दस्य शब्देऽन्यपदार्थे स्यादत्र पुंवद्भाव इति व्यवस्थितविभाषाविज्ञानं समाधिः। जात्यादेः प्रवृत्तिनिमित्तलक्षणस्यान्यपदार्थत्वात् कैवात्र पुंवद्भावप्राप्तिरित्यपरे। श्वश्रूयत इति श्वश्रू-शब्दो वेर्लोपो श्वशुरस्य चेत्यूङन्तः पुंवद्भावेन नात्र श्वसुर-शब्द आदेशो भवति।

---

१. ३।६।६० (दु० वृ०)
२. ३।६।६१ (दु० वृ०)

**आदातामाथमादेरिः** [1]३।६।५६

आदिनृकारव्यक्तेः परिग्रहस्मरणादिह न भवति व्यत्ययपातात्, पा रक्षणे। आदिग्रहणं सर्वादेशनिवृत्त्यर्थम्।

**या-शब्दस्य च सप्तम्याः** [2]३।६।५७

या इति। लुप्तषष्ठीके निर्देशे कर्तव्ये किं शब्दग्रहणेनेत्याह—या इति कर्तव्य इत्यादि। या इत्यस्य यकारात्मकस्य शब्दस्येत्वं यथा स्यादिति शब्दग्रहणम्। यदि पुनः तत् क्रियते किं स्यादित्याह—प्रकार्यम् इत्यादि। यकारमात्रस्येत्याकाररहितस्य। ननु इत्यादिना प्रयोजनमेतद्विघटयति। अतः सूत्रारम्भसामर्थ्यान्न भविष्यतीति नार्थः शब्दग्रहणेन, एतद्विघटयितुमाह—अयमर्थः। यथैव सूत्रारम्भसामर्थ्याद् यकारमात्रस्य न भवति। एवमतो हेतोर्यकारमात्रस्य त्वपरिभाषातो भवेत्। यत्वं न प्रतिपद्यत इतीकारस्य श्रवणं स्यात् तन्मा भूदेष दोष इति शब्दग्रहणम्। अन्तरङ्गत्वादित्यादि। चिकीर्ष्यादित्यत्र प्रकृत्याश्रयत्वेनान्तरङ्गत्वात् स्वरादेशत्वात्परमपीत्वं बाधित्वा लोपेऽकारस्य कृते नायमकारादुत्तरो या-शब्द इतीत्वप्राप्तिरस्तीति किं सप्तमीग्रहणेनेत्याह— सप्तमीग्रहणमित्यादि। असति हि सप्तमीग्रहणे प्राप्नुवन्तमप्यन्तरङ्गत्वादतो लोपं स्वरादेशत्वादिकं बलीयो बाधेत, ततः चाशीर्यकारोऽपि स्यादिति तन्निवृत्तये सप्तमीग्रहणम्।

**शमादीनां दीर्घो यनि** [3]३।६।५८

शमादीनां लक्ष्यायत्तत्वादित्यादि। एवं च सत्यस्यते स्थोऽन्त इत्यत्रास्यतेरिति निर्देशः उपपद्यते। आदिति कर्तव्ये दीर्घग्रहणमन्त्यादेशनिवृत्त्यर्थमुत्तरार्थं च।

**ष्ठिवुक्लम्वाचमामनि** [4]३।६।५९

क्लमे वक्तव्यादन्विकरण इति दैवादिकत्वादप्राप्तः।

**क्रमः परस्मै** [5]३।६।६०

वक्तव्याद्यनिति क्रमेः भौवादिकत्वादप्राप्तः। इहोत्क्रामेत्यादौ स्वरादेश-

१. ३।६।६२ (दु० वृ०)
२. ३।६।६४ (दु० वृ०)
३. ३।६।६६ (दु० वृ०)
४. ३।६।६७ (दु० वृ०)
५. ३।६।६८ (दु० वृ०)

त्वात्पूर्वं दीर्घः ततो हि लोपः। आक्रमते भानुरिति रुचादित्वाज्ज्योतिरुद्गमनेऽर्थे, आत्मनेपदम्।

**गमिष्यमाच्छः** [1]३।६।६१

परस्मा इति निवृत्तमिति। तदनुवृत्तौ हि संगच्छत इत्यत्र छत्वं न स्यादिति भावः। रुचादित्वात् सं-पूर्वाद् गमेरकर्मकादात्मनेपदम्। इषेरुदनुबन्धपरिग्रहो वैचित्र्यार्थः। इष्यतिरिष्णातेश्च ग्रहणं भविष्यति। ताभ्यामनो सम्भवात्। अनीति चेहानुवर्तते।

**पः पिबः** [2]३।६।६२

पा पाने इत्यस्येति न तु पायतेः पोषणार्थस्य, एकारोपदेशसामर्थ्यात्। नापि पातेः रक्षणार्थस्य, लुग्विकरणत्वात्। ज्ञापकाद् गुणाभाव इति पिबादेशोऽपि। अतएव सेत्स्यतीति चेत्, न। स्थितस्यैवं प्रत्याख्यानकरणे सत्यतिप्रसङ्गात्। विकरणाभावादिति। तदभावस्तु जन जनन इत्यस्य जौहोत्यादिकत्वात्।

**अर्तेः ऋच्छः** [3]३।६।६३

ऋ गतिप्रापणयोरित्यस्येति, न तु ऋ सृ गतावित्यस्य, लुग्विकरणत्वात्। ऋच्छिना ऋच्छतीत्येतत् सिद्धावप्यर्तेरनि प्रयोगनिवृत्त्यर्थम् वचनम्।

**सर्तेर्धावः** [4]३।६।६४

सृ गतावित्यस्येति भौवादिकस्य, न तु ऋगतावित्यस्य जौहोत्यादिकस्य, कुतः, लुग्विकरणकत्वात्। वेगितायां गताविति वेगः संजातो यस्याः तस्यां गताविर्त्यर्थः। तारकादित्वाद्वेगशब्दादितप्रत्ययः। प्रयोगद्वये सिद्धे इति धावेस्तु वेगितायामेव गतौ प्रयोगो भविष्यत्यर्थाभिधानस्य स्वाभाविकत्वादिति भावः।

**जा जनेर्विकरणे** [5]३।६।६५

विकरणे परत इति यति जायेत इति आते आथे इतीत्वम्। प्रादुर्भावार्थस्य जनेर्विकरणो यन्नेव सम्भवतीति यनि इति कस्मान्न क्रियते, यनीति

१. ३।६।६९ (दु० वृ०)
२. ३।६।७० (दु० वृ०)
३. ३।६।७७ (दु० वृ०)
४. ३।६।७८ (दु० वृ०)
५. ३।६।८१ (दु० वृ०)

कर्तव्य इत्यादि।

**प्वादीनां ह्रस्वः [1]३।६।६६**

पूञ् पवन इत्यादीनामिति। एतेन प्वादीनामिति सामान्योपादानेऽपि पूञ् पवन इत्यस्यैव क्रैयादिकस्य ग्रहणम्, न तु पूङ् पवन इत्यस्य भौवादिकस्येति दर्शयति। तस्य हि अन्विकरणे परे पवत इति गुणेन भवितव्यम्, न च गुणे सति ह्रस्वस्यासतस्सतो वा विशेषो अस्ति। तस्मात् क्रैयादिकस्सम्भवाद्विशेषः पूङ् पवन इत्ययं गृह्यते। कः पुनरनयोः पूङ्पूञोः अर्थभेदः। पुनातिर्धातुः धान्यादीनां विकक्षीकरणे वर्तते, पवतिस्तु पावनीकरणे। प्वादयः आगणान्ता इति व्री वरणे व्री-भ्री-भृ भरणे इत्यनयोः वृणाति भृणातीति ह्रस्वः सिध्यति। अन्तरात् तु यद् वृत्करणं तु ल्वादिसमाप्त्यर्थम्। अन्यथा ज्ञातिः पुष्टिरित्यादौ जानातिपुष्णात्योः ल्वादित्वात् क्तिप्रत्ययस्य निष्ठावदतिदेशान्नत्वं स्यात्। यद्यागणान्ताः प्वादयो जानातीत्यत्र ह्रस्वः प्राप्नोति, न भविष्यति ज्ञाश्चेति चकारेण ह्रस्वापाकरणार्थं जादेशविधानस्यैव पुनर्द्योतनात्। पूयते इति सार्वधातुके यण्।

**उकारस्य [2]३।६।६७**

तेन विकरणाभ्यस्तयोर्न भवतीति। ननु जुहोतेरिति निर्देशादभ्यस्तस्य न भविष्यति, नैतत्, जुहोत्यभ्यस्तविषय एवैष निर्देशो नाभ्यस्तान्तरविषये। अभ्यस्तसामान्यापेक्षो जुहोतेरिति निर्देश इति च दुर्ज्ञानमेतत्। यत इति द्वित्वबहुत्वयोरिति गुणाभावः।

**ऊर्णोतेर्वा [3]३।६।६८**

असार्वधातुके ऊर्णोतेरिटस्सम्भवात् व्यञ्जनादिपरत्वं नास्तीत्यर्थात्सार्वधातुक एवायं विधिरतः सार्वधातुक इति नोक्तम्। ननु पृथगारम्भाद्वेति लब्धमिति किं वा-ग्रहणेन, नैतत्, पृथगारम्भो हि स्वराद्यर्थो गुणार्थोऽपि वा स्यात्।

**गुणो [4]३।६।६९**

ननु नेति क्रियतां वृद्धौ च निषिद्धायामर्थाद् गुण एव विज्ञास्यत एवेति

---

१. ३।६।८३ (दु० वृ०)
२. ३।६।८४ (दु० वृ०)
३. ३।६।८५ (दु० वृ०)
४. ३।६।६९ (दुर्गवृत्तौ नोल्लिखितम्)

किं गुणग्रहणेन, नैतत्, विकल्पतामूर्णोतेर्वृद्धिं बाधित्वा नित्या वृद्धिः स्यान्न तु गुण इति गुणग्रहणम् ।

तृहेरिड्विकरणात् [1]३।६।७०

इह सार्वधातुक इति न सम्बध्यते, विकरणेनैव तदाक्षेपात् । तृहि हिंसि हिंसायामित्यस्येति, न तु तृंह इत्यस्य तौदादिकस्य कुतः, सानुबन्धकत्वात् । विकरणादिति न-शब्दात् पूर्वाचार्यप्रसिद्धचेति । यस्य टकार आसज्यते स प्रायेणागमो भवतीति पूर्वाचार्याणां प्रसिद्धिः । तथा चात्र बाहुल्येन व्यवहार इति पूर्वाचार्यप्रसिद्धे कार्ये इह विधीयमान आगमो विज्ञायते । यदि पुनष्टकारो ऽस्य नासज्येत किं स्यात्, विकरणात्परस्य तृहेरन्त्यस्य अयमादेशो सम्भाव्येत । ननु एवं सति विकरणग्रहणमपार्थकं स्यात् । उच्यते—विकरणग्रहणे तृहेरिति पञ्चमीत्याशङ्क्येत, तथा तृहेरुत्तरस्य सार्वधातुकस्यादेरादेश इकारः स्यात् । ([2]पञ्चम्या निर्दिष्टे परस्येति सार्वधातुकस्येति षष्ठीसम्बन्धात्, षष्ठीसम्बन्धे सति सार्वधातुके इति सप्तम्यक्तेऽर्थे इति चेत् न, सत्यपि विकरणग्रहणे अन्त्यस्यादेश इकारः स्यादि)त्यागमलिङ्गार्थमिकारस्य एकार आसज्यते, यद्येवं परो विकरणादयमागमः पूर्वो वा पर इति ब्रूमः, कुतो विकरण इति सप्तमीनिर्देशाकरणात् । अतृणेडिति अत्रागमविधेर्बलवत्त्वात्पूर्वमागमः ततो दिलोपः । प्रत्ययलक्षणेन वा सत्यपि दिलोपे आगमो भविष्यति न चेदं वर्णाश्रयं कार्यम् । व्यञ्जनमप्रधानीकृत्य तदादौ प्रत्यये कार्यविज्ञानात् ।

ब्रुव ईड् वचनादिः [3]३।६।७१

ईड् वचनमित्येकवचनम्, व्यञ्जनादेर्गुणिनः सार्वधातुकस्येति विभक्तिपरिणामादेवमुक्तम् । अन्यथा वचनस्येत्यनेन षष्ठ्यन्तेन सामानाधिकरण्यं न स्यात् । ब्रूयादिति । सप्तमीयात् । वक्तेति स्थानिवद्भावेनात्र प्राप्तिः । ईडिति पूर्वत्राकृतेश्चिन्त्यसमाधिः । चेक्रीयितलुगन्ताद्वेष्यत इति व्यवस्थितविभाषा चेयम् । तेन क्वचिन्नित्यमेव भवति । त्रिधा बद्धो वृषभो रोरवीति ।

अस्तेर्दिस्योः [4]३।३।७२

श्तिपानिर्देशादिति श्तिपो धातुस्वरूपप्रतिपत्त्यर्थत्वादिति भावः । त्वादेशे

१. ३।६।८७ (दु० वृ०)
२. न्यूनपाठः (भं०)
३. ३।६।८८ (दु० वृ०)
४. ३।६।८९ (दु० वृ०)

कृते न भवतीति स्थानिवद्भावात्प्राप्तः । नन्वस्यतिनिवृत्त्यर्थः श्तिपो निर्देशः स्यात्, न तस्य दिस्यो व्यवहितत्वाद् ग्रहणाप्रसङ्गात् ।

**सिचः** [1]३।६।७३

अस्तिसिज्भ्यां दिस्योरित्येको योगो न कृत इति यथासंख्यभयात् ।

**अणि वचेरोदुपधायाः** [2]३।६।७४

वचिमुच्चार्य योऽण् तत्र कार्यं विज्ञानादप्राकरणिकत्वाद्वा, पुस्तकवाच इत्यत्र कर्मण्यणि न भवति ।

**अस्यतेस्थोऽन्तः** [3]३।६।७५

श्तिपा निर्देशो धातुस्वरूपप्रतिपत्त्यर्थः । अस्तेरनाकाङ्क्षा ततोऽण् प्रत्ययाभावात् ।

**कृपे रो लः** [4]३।६।७६

ज्ञापकादृकारस्य ऌकार इष्यते । इति वर्णश्चानुकारी, वर्णग्रहणेन णत्वविधाववर्णग्रहणान्न गृह्यत इति मन्यते । कथं तर्हि कृपा क्रमेः सम्प्रसारणं चेति मिदादित्वादटि सति सम्प्रसारणं लाक्षणिकत्वात् । कृपणकर्पूरादयः त्वौणादिकाः कृपणस्य भावः कार्पण्यमित्यत्र तु वृद्धेर्बहिरङ्गाया असिद्धत्वाद्रेफाभावान्न भवति ।

**उपसर्गस्यायते:** [5]३।६।७७

इहायतिरुपसर्गविशेषणम् । अयति परो य उपसर्गः तस्य लत्वमिति रेफविशेषणपक्षेऽपि न दोषः । तथापि श्रुतत्वादुपसर्ग एव विशेष्यते । ननु कथं न दोषः, यावता पल्ययत इत्यादौ लत्वं न प्राप्नोति इकारेण व्यवधानात् । नैतत्, वचनात् व्यवधानेऽपि कार्यं विज्ञास्यते । [6]निलयमित्यत्र कृतार्थवचनमिति चेत्, न । सामान्यलक्षणस्यैकोपसर्गविषयत्वायोगात् । अन्यथा ह्युपसर्गग्रहणमपास्य निर् इत्येवं कुर्यात् ([7]दुश्शब्दस्तु प्रादिमध्ये सान्तो न तु रेफान्तो

---

१. ३।६।९० (दु० वृ०)
२. ३।६।९४ (दु० वृ०)
३. ३।६।९५ (दु० वृ०)
४. ३।६।९७ (दु० वृ०)
५. दुर्गवृत्तौ नोल्लिखितमिदं सूत्रम् ।
६. विलयनमित्यत्र (मं०)
७. न्यूनपाठः (वा०)

अन्यथा रेफान्तस्यैव तस्यासन्देहार्थमिदं निर्देशं कुर्यात्, यथा अनेन) कृतात्वस्य [1]उपलभ्यत इति भावः। आत्मनेपदम्, सार्वधातुके यण्, यदि तान्युपसर्गविशेषण अयतिग्रहणं तदा प्रत्यय इत्यत्रापि कस्मान्न भवतीत्याह—प्रत्यय इत्यत्रे-त्यादि।

**गिरतेश्चेक्रीयते** [2]३।६।७८

निजेगिल्यत इति नित्यत्वाल्लत्वे सति नामिनोर्वोरिति दीर्घो न भवति। श्तिपा निर्देशो धातुस्वरूपप्रतिपत्त्यर्थः। गृणाति निवृत्त्यर्थस्तु न भवति चेक्री-यितस्य तस्मादनभिधानादसम्भवात्।

**वा स्वरे** [3]३।६।७९

निगार्यते निगाल्यते इत्यत्र कारिते परतो लत्वविकल्पे सत्यात्मनेपदम्, सार्वधातुके यण् ततः कारितलोपः।

**तृतीयादेर्घढधभान्तस्य धातोरादिचतुर्थत्वं स्ध्वोः** [4]३।६।८०

स् च ध् च तौ स्ध्वाविति विग्रहः। ध्वेति संयोगादेर्धुट् इति न-लोपः। धातोरवयवो य-इत्यादिः। एतेन धातोरित्यवयवयोगात् षष्ठीयमिति दर्शयति। अन्यथा हि न्यगूढमित्यादौ नित्यत्वादाकारागमे कृते सति धातोः तृतीया-दित्वादादि चतुर्थत्वं न स्यात्। स्ववर्गादिति कुत इत्याह—प्रत्यासत्तेः इति धिप्सतीति दम्भिः, सनि वेट् धातुग्रहणं तृतीयादेर्धातूपसर्गसमुदायस्य मा भूदिति दुर्लप्स्यते। अवपृक्तस्य धकारस्योपादानादिह न भवति। दाधद्धि, दध् धारण इत्यस्य चेक्रीयितलुकि सति द्विर्वचने कृते वर्तमाना ति, घढधभेभ्य इति धत्वम्, धुटां तृतीय इति दस्य धः।

**तयोश्च दधातेः** [5]३।६।८१

धातुग्रहणमनुवर्तत इति समासान्तर्गतमपेक्षावशादिति शेषः। दधाति दधामीत्येतद् व्यावृत्तये हि धातुग्रहणमवश्यापेक्षणीयमेव। धत्स इत्यादि। नन्वत्र स्वरादेशपरिभाषया आलोपस्य स्थानिवद्भावात्कथं धातुत्वं स्यात्।

---

१. पल्यत (वा०)
२. ३।६।९८ (दु० वृ०)
३. ३।६।९९ (दु० वृ०)
४. ३।६।१०० (दु० वृ०)
५. ३।६।१०२ (दु० वृ०)

धातुग्रहणानुवृत्तिसामर्थ्यात् स्थानिवद्भावो नाश्रयिष्यते । अगुणे तस्य विधानादिति [1]तद्विधावस्योकार इत्येतौ गुणग्रहणानुवृत्तेः ।

[2]अनुषङ्गपादः षष्ठः ।

## सप्तमः पादः

**इडागमोऽसार्वधातुकस्यादिर्व्यञ्जनादेरयकारादेः ३।७।१**

धातोः परस्य व्यञ्जनादेरसार्वधातुकस्येति । एतेन व्यञ्जनादेरयकारादेरित्येतद्विशेषणद्वयं श्रुतस्यासार्वधातुकस्येति विज्ञायते, न तु प्रकरणोपात्तस्यानुमितस्य धातोरिति दर्शयति । यद्येवमसार्वधातुकस्य विशेष्यत्वाद्विशेषणभूते पदद्वये नुरागमः स्यात् । न भविष्यति, टादौ स्वरे पुंवद्भावस्य प्रवृत्तेः । सनि चानिटीत्यादेर्व्यवहारादागमस्य टकारोऽनुबन्ध इत्यवसितम् । आसज्जने प्रयोजनमाह—टकार इटश्चेटीत्यर्थ इति असति हीटष्टकारे इटश्चेटीत्यत्र इटीति कर्तुमुचितं स्यात् । ततश्चेवर्णान्ताद् धातोः परस्य सिच ईटि परे लोप इति सूत्रार्थे व्याख्यायमाने सत्यचैषीदित्यादावपि लोपः प्राप्नोति । यद्यपि चात्र नित्यत्वादन्तरङ्गत्वात्स्वरादेशत्वाच्च वृद्धौ कृतायां नायमिवर्णात्परः सिजिति शक्यते वक्तुम् । तथापि भूतपूर्वमिवर्णान्तत्वमाश्रित्य कृतायामपि वृद्धौ लोपः प्राप्नुयादेव । तस्मान्मा भूदेष दोष इतीटष्टकार इटश्चेटीत्यत्र विशेषणार्थः क्रियते । समुदायादेशार्थश्च । असति हि टकारे अग्रहीदित्यत्र ग्रहेः परस्येकारागमस्य नित्यत्वात्स्वरादेशत्वाच्च सिज्लोपात्पूर्वं दीर्घत्वे कृते सति नायमिकारागमात्परः सिजिति तस्य लोपो न स्यात् । न च स्थानिवद्भावो अस्ति, वर्णविधित्वात्, सति तु टकारे इडित्यस्य समुदायस्य दीर्घादेशं प्रति कार्यित्वात् सत्यपि पूर्वं दीर्घत्वे नायं दीर्घः स्थानिवर्णाश्रय इति । सति स्थानिवद्भावे सिज्लोपः सिद्धो भवति । भविता, भवितुम्, भवितव्यमिति, भवति, भवनाय, भवनीयमिति । यथाक्रमं विग्रहः । आगमग्रहणं विस्पष्टार्थम् । अस्तीत्यन्विकरणः । अदादेर्लुक् । अत्र सार्वधातुकत्वादिडभावः । ननु सार्वधातुके च रुदादेरिति नियमात् रुदादेरेव सार्वधातुके इडागमो नान्यस्मादिति, तत्किमसार्वधातुकग्रहणेन ? सार्वधातुक एव रुदादेरिति

---

१. तद्विधावप्यौकार (भं०)

२. भट्टोग्रभूतिकृते शिष्यहितान्यासे शिष्यालोकाभिधाने आख्यातप्रकरणे षष्ठः पादः ।

विपरीतोऽपि नियमः स्यादिति चेत्, न । भविष्यति, रुदादेस्सनि [1]नेटि गुणनिषेधारम्भात् । विपरीतनियमपक्षे हि सनि चानिटीत्यनेनैव गुणनिषेधस्य सिद्धत्वात् । रुदेस्सनि गुणनिषेधारम्भो विफलः स्यात्, स्यादेतत्, असति सार्वधातुकग्रहणे व्यञ्जनादेरित्यादिविशेषणद्वयं [2]धातूपनिपाति स्यात् । ततश्च [3]धातोः इडागमः प्राप्नुयादिति, तत्र गुणे क्त्वा सेडित्यादेर्व्यवहारात् प्रत्ययस्यैव विशेषणद्वयेन सम्बन्धविज्ञानात् । तदपार्थकमसार्वधातुकग्रहणम् । सत्यम् । प्रतिपत्तिगौरवपरिहारार्थं तु आदिग्रहणं देशविशेषणार्थः स नियमो हि स्यात् । भविष्यतीत्येतज्ज्ञापकम् [4]अप्यनुमापकमेव । बभूवेति । भवतेर इति अत्वम् भुवो वोऽन्तः आयिव्यञ्जनादेरिति न कृतं, वैचित्र्यात् ।

**स्नुक्रमिभ्यां परस्मै ३।७।२**

[5](परस्मैपदनिमित्ताभ्यामित्यादि । परस्मैपदस्य निमित्तं परस्मैपदनिमित्तं ताभ्यां स्नातेः) धात्वादेष्षस्स इति कृते सत्वे णस्य नत्वं निर्देशसामर्थ्यात् । इत्थमेव प्रकारेषु निर्देशेषु वाच्यम्, परस्मैपदनिमित्ताभ्यां स्नुक्रमोरेतद्विशेषणम् । पदनिमित्तशब्दयोस्त्वादिलोप इत्यादिना लोपः । अत्रेत्यादि । अत्रेत्यनेन प्रस्नवितेत्यादीन्युदाहरणानि प्रत्यवमृश्यन्ते स्नुक्रमी परस्मैपदनिमित्त इति । ननु चिक्रमिषतीत्यत्र सनन्तं धात्वन्तरं परस्मैपदनिमित्तं न तु क्रमिः । नैतत् । पूर्ववत्सन्नन्तादिति वचनात् । पूर्वं, धातुरूपमेवात्र परस्मैपदस्य निमित्तम् । अतो यद्यपि सन्नन्तात्परस्मैपदं विधीयते तथापि क्रमिरेवात्र निमित्तमस्तीत्यदोषः । इह तु प्रस्नविता, प्रस्नवितुम्, प्रस्नवितव्यम्, प्रक्रमिता, प्रक्रमितुम्, प्रक्रमितव्यमिति पूर्वेणेडागमो न त्वनेन स्नुक्रमोः परस्मैपदनिमित्तत्वाभावात् । निमित्तं हि कारणमुच्यते । न चाकुर्वन् कार्यं कारणं भवति परस्मैपदोत्पत्तिं प्रतियोग्यत्वमस्तीति चेत्, तन्न, यतो न योग्यतामात्रेण कारणत्वं तस्यौपचारिकत्वात्, कुसूलस्थस्येव बीजादेः । तस्मादत्र स्नुक्रमावाश्रित्य परस्मैपदं विधीयते । तत्रैव मुख्यं तयोः परस्मैपदनिमित्तत्वं नान्यत्रेति प्रस्नवितेत्यादौ पूर्वेणैवेडागमः । नियमार्थं वचनमिति । अथ यत्र पूर्वेणासिद्धिः तत्रेद विध्यर्थं, कस्मान्न भवति । चकारस्यात्र नियमद्योतनफलत्वात् । स च भिन्नक्रमः । परस्मैपदनिमित्तशब्दादनन्तरं बोद्धव्यः । तथा च परस्मैपदनिमित्ताभ्यामेवे-

---

१. सेटि (भं०)
२. धारूप (?)
३. धादेरादि (भं०)
४. नियमेऽप्युपन्नमेव (भं०)
५. न्यूनपाठः (भं०)

त्यर्थो जायते ([1]आनन्तर्यात् पच्यादिनिषेधमेव बाधेतेति चेत्, व्याप्तेर्न्यायान्न नियमव्यावृत्तिलक्षणमपि बाधिष्यते) आत्मनेपदनिमित्ताभ्यां मा भूदिति। यद्येवं प्रसुस्नविषे, प्रचक्रमिषे इत्यत्र न प्राप्नोति, भविष्यति क्रादिनियमात्। स यथा पच्यादिनिषेधं बाधते तद्वन्नियमव्यावृत्तिलक्षणमपि निषेधं बाधिष्यते। ([2]प्रतिषेध एव भवति) इह तु प्रस्नवितेवाचरति, प्रस्नवित्रीयते इत्याय्यन्तमात्मनेपदस्य निमित्तं न तु स्नौतिरिति प्रतिषेधो न भवति। प्रसुस्नुषति इत्यत्र तूवर्णगुणादिभ्यश्चे ([3]तीडभावः) परत्वात् एवं प्रक्रान्त उपक्रान्तेति तृच्-प्रत्ययः प्रोपपूर्वः, क्रमेरादिकर्मण्यर्थे रुचादिरिति तेन परस्मैपदनिमित्तत्वाभावात्। प्रोपपूर्वः क्रमेरिडागमो न भवतीति भावः।

[4]**सार्वधातुके च रुदादेः ३।७।३**

आरम्भसामर्थ्यात् सार्वधातुकग्रहणे लब्धे सार्वधातुकग्रहणमसार्वधातुके विशेषणद्वयं विकल्पे मा भूदित्येवमर्थम्। यद्येवमसार्वधातुकग्रहणस्य निवृत्तत्वात् तत्सम्बद्धं विशेषणद्वयमपि निवर्तते, सत्यम्, चकार-करणसामर्थ्यात् तु तन्न निवर्तयिष्यते। रोदितीत्यादि। अन्विकरणः, अदादेर्लुक्, नित्यत्वाद् यणि कृत इति सत्यसति वेडागमे यणः [5]प्रवर्तते नित्यत्वम् यणि तु कृते नास्तीडागमस्य प्रसङ्गः। पञ्चादीनां रुदादीनां ग्रहणादिति लक्ष्यानुरोधात्।

**ईशस्से ३।७।४**

सकारादाविति। एतेन स इति सकारादेर्ग्रहण न तु से प्रत्ययस्यैवेति दर्शयति। एतच्च सयीत्येवमकरणाल्लभ्यते। ईशिषे, ईशिष्वेति विकरणस्य लुक्।

**ईड्जनोः स्ध्वे च ३।७।५**

ईशमजनं स्ध्वे चेति न कृतं वैचित्र्यात्।

**से गमः परस्मै ३।७।६**

गमेर्गदेशस्य च ग्रहणमविशेषात्। परस्मैपदनिमित्तादित्यादि। परस्मैपदस्य

---

१. न्यूनपाठः (मं०)
२. न्यूनपाठः (मं०)
३ ति-प्रतिषेध एव भवति (मं०)
४. रुदादेः सार्वधातुके (दुर्गसूत्रपाठः)
५. प्रवृत्तेर्नित्यत्वम् (मं०)

निमित्तं, परस्मैपदनिमित्तं तस्मात् परस्मैपदनिमित्तात्। गमेरेतद्विशेषणं पद-निमित्तशब्दयोस्तु पूर्ववल्लोपः। यदि पुनः परस्मैपदनिमित्तमिति सप्तम्यन्त-माधारभावेन सकारस्य विशेषणं स्यात्, को दोषः इत्याह—परस्मैपदग्रहणं यदि सकारस्य विशेषणं स्यात् सन इडागमो न भवेदिति सनः परस्मैपदव्यप-देशस्याभावादिति भावः। ननु जिगमिष्यतीत्यत्र पूर्ववत्सन्नन्तादिति गमः परस्मैपदनिमित्तत्वात् युक्त इडागमः। जिगमिषा जिगमिषुरित्यत्रायुक्तः, नह्यत्र गमिः परस्मैपदस्य निमित्तं ततस्तस्याविधानादित्याशङ्क्याह—गमेः सर्वत्रेत्यादि। तत्रैव हेतुमाह—योग्यत्वादिति। ननु योग्यतामात्रेण मुख्यं निमित्तत्वं शक्यं परिग्रहीतुम्, अस्त्येतत्, किन्तु लक्ष्यानुरोधाद् गौणमुख्यव्यव-हारः कारकप्रकरण एवात्र नाश्रयिष्यत इति योग्यतामात्रेणापि निमित्तत्वपरि-ग्रहात् सर्वत्रेडागमो भवत्येव। गमिः संपूर्वो रुचादिरिति। तेन परस्मैपद-[1]निमित्ताभावादिडागमो नास्तीति भावः। यद्येवं संजिगमिषेत्यादि न सिध्यति चानुवृत्त्या कृद्विषये एवं प्रकारे भविष्यति।

हृन्ऋदन्तात्स्ये ३।७।७

बहुव्रीहिगर्भोऽत्र द्वन्द्वः। तपरकरणमसन्देहार्थम्, अन्तग्रहणं स्वरतेस्स्ये विकल्पबाधनार्थम्। स्वरिष्यति, असार्वधातुकस्य हि स्वरतेरिड्विकल्पः स्मर्यते। नन्वसत्यन्तग्रहणे ऋतेस्सौत्रस्य ग्रहण स्यात्। स्य एव ऋतेरिडागम इति च नियमार्थमुपादानं भवेत्। नियमपक्षे तृष्यादिसूत्रे ऋतेः क्त्वा प्रत्यय-स्येडाभावात्सेडिति विशेषणं कथमिति चेत्, यथासम्भवं भविष्यति। एवं तर्हि हन्तेर्विध्यर्थमुपादानमिति तत्साहचर्यादृत इत्यस्यापि विध्यर्थत्वं विज्ञायते, न नियमः, तच्च ऋदन्तानां ग्रहणे सत्युपपद्यते, न तु ऋतेः सौत्रस्य ग्रहणे। जिघांस्यत इत्यत्र यणि कृते स्य-शब्दस्यावयवशो निष्पत्तेर्लाक्षणिकत्वादा-गमाभावः।

**यमिरमिनम्यादन्तानां सिरन्तश्च [2]३।७।८**

अयंसीदित्यादि। अत्रेटि कृते अस्य च दीर्घ इति दीर्घो न भवति। तत्रा-निड्ग्रहणस्यानुवृतेः। व्यरंसीदित्यादि। वेरुपसर्गस्योपादानम् रमेरात्मनेप-दिनोऽपि परस्मैपदप्रवृत्त्यर्थम्। विपूर्वाद् हि रमेः परस्मैपदं स्मर्यते, अन्त-ग्रहणं लाक्षणिकस्याप्यादन्तस्य यथा स्यादिति। अग्लासिष्टाम्। पुनरन्तग्रहणं यम्यादीनां सकारादेशो मा भूदिति।

---

१. निमित्ततागमेनास्तीति भावः (भं०)

२ ३।७।१० (दु० वृ०)

स्मिङ्पूङ्रञ्ज्वशूकॄगॄधृप्रच्छां सनि [1]च [2]३।७।९

तदा कॄ गॄ इत्येतयोरिति विकल्पः प्राप्त इत्यनुषज्यते। कथं पुनरनयो-रसेटोस्सतो विकल्पः प्राप्त इत्याशङ्क्याह—ॠदन्तानामित्यादि। इह च कॄ-गॄ-धृ-ग्रहणेन कॄ विक्षेपे गॄ निगरणे धृङ् अनवस्थाने इत्येते तौदादिकाः गृह्यन्ते। प्रच्छिना तौदादिकेन साहचर्यात्। तेन कॄ हिंसायाम्. गॄ शब्दे इत्यनयोः क्रैयादिकयोः, धृङश्चावध्वंसनार्थस्य भौवादिकस्य ग्रहणं न भवति। पुपूषतीति। नाम्यन्तानामनिटामिति गुणाभावः। च-शब्दादु इति ओष्ठ्योपधस्येति वचनाद् दन्त्यौष्ठ्योपधस्य न प्राप्नोति, च-शब्दादित्युक्तम्। चिकीर्षतीत्यादौ न भवति। ॠदन्तस्य लाक्षणिकत्वात्। वृङ्वॄञ्भ्यां चेति च-शब्दः सनोऽनन्तरं बोद्धव्यम्, तेन निमित्तान्तरसमुच्चयादद्यतन्याशिषोरात्मनेपदेऽपि विकल्पः। अतरिष्ट, अतीर्ष्ट, न णकारेति योगविभागाद् गुणाभावः। आशिषि तरिषीष्ट, तीर्षीष्ट, अवरिष्ट, अवृत, वरिषीष्ट, वृषीष्ट, प्रावरिष्ट, प्रावृत, प्रावरिषीष्ट। ॠदन्तात् संयोगादेरप्यद्यतन्याशिषेरात्मनेपदे विकल्पः। अध्वरिषाताम्, अध्वृषाताम्, ध्वरिषीष्ट, ध्वृषीष्ट, समस्कृ, संस्कृषीष्टेति। अत्र तु सुटः पदद्वयापेक्षकत्वेन बहिरङ्गत्वादसिद्धत्वात् संयोगादित्वं नास्ति, यनि कृत इति दिवादेर्यन्नित्यनेन। गाढेति। होढ इत्यादिना ढत्वादिकार्यम्। इवन्ताद् धातोरिति दिव्मिव् इत्यादीनामेकदेशानुकरणमिवेति। सोऽन्तो यस्य धातोरिति विग्रहः। ईर्त्सतीति ॠधु वृद्धौ। वर्धितुमिच्छति, सन्, अघोषेष्वशिडामिति धस्य तः, ॠत्स इति स्थिते, स्वरादेर्द्वितीयस्येति त्स इत्यस्य द्विर्वचनं वक्तव्यादृकारस्य रादेशोऽभ्यासस्य च लोपः। बिभ्रज्जिषति इति। भ्रस्ज पाके, धुटां तृतीय इति सस्य दः, तवर्गश्चटेति दस्य जः, स्कोः संयोगाद्योरन्ते चैतत् त्वत्र न प्रवर्तते। धुटि तस्य विधानात्। बिभ्रक्षतीति। भृजादीनां षः षढोः कस्स इति कत्वम्, धिप्सतीति। दन्भु दन्भेः सन्, द्विर्वचनम् दन्भेरिच्चेति स्वरस्येत्वम्। अभ्यासलोपः तृतीयादेः घढेति दस्य च धः इष्टिवशान्न लोपः, अघोषेवशिडामिति भस्य पः। ज्ञीप्सतीति। जानातेरिति पकारागमे कृते सन्, द्विर्वचनम्, सनिमीमादेरिति स्वरस्येसादेशः, अभ्यासलोपः. स्कोस्संयोगाद्योरिति स लोपः। चकारोऽत्रानुवर्तते। स चानुक्तसमुच्चयार्थः। तेन हनिग्रहि-दृशिस्वरान्तानां सम्बन्धिनीषु भावकर्मविषयास्वस्य सिजाशीःश्वस्तनीषु परतो वा इज्वत् कार्यं भवति यदा चेज्वत्कार्यं तदास्य सिजाशीश्वस्तनीनामादिरिडागमः। आमि दीर्घवृद्धिघत्वानि प्रयोजनम्। इचि वेति च वैकल्पिको ह्रस्वः। स्ये तावत् घानिष्यते। हस्य हन्तेरिति घत्वं, पक्षे

---

१. अत्र च इत्यधिको पाठः (वा० + भं०)
२. ३।७।११ (दु० वृ०)

हनिष्यते । ग्राहिष्यते, ग्रहीष्यते द्रक्ष्यते, दर्शिष्यते, चायिष्यते, चेष्यते, दायिष्यते, दास्यते । सिचि अघानिषाताम्, अवधिषाताम्, अग्राहिषाताम्, अग्रहीषाताम् । अदृक्षाताम्, अदर्शिषाताम्, अचायिषाताम्, अचेषाताम्, अदायिषाताम्, आदिषाताम् । आशिषि घानिषीष्ट, वधिषीष्ट, ग्राहिषीष्ट, ग्रहीषीष्ट, दर्शिषीष्ट, दृक्षीष्ट, चायिषीष्ट, चेषीष्ट, दायिषीष्ट, दासीष्ट, । श्वस्तन्याम् घानिता, हन्ता, ग्राहिता, ग्रहीता, दर्शिता, द्रष्टा, चायिता, चेता, दायिता, दाता । इह घानिष्यते, अयिष्यते इति हन्तेर्वधिरादेशः । इणश्च गादेशः, इचि विहितावपि न भवतः । वा शब्दस्य व्यवस्थितविभाषाविज्ञानात् । इचि वैकल्पिको ह्रस्वः शमिष्यते, शामिष्यते । इज्वद्भाव पक्षे एते द्वे रूपे कारितस्य तु लोपो वक्तव्यः इट् परत्वाद् हि न प्राप्नोति । न चेज्वद्भावे विहिते सति इटः स्वरूपविनिवृत्तिः संजाता येनानामिड्विकरणे इति निषेधस्यायमविषयः स्यात् । यदा चेज्वद्भावपक्षः तदा कारितलोपाभावात् गुणे सति शमयिष्यत इति रूपम् । तथा सकारादावसार्वधातुके सिचोऽन्यत्र कृति दृतिहृतिभृतिवृतिभ्यो वेडागमः, कृती छेदने, वृती वेष्टने वा । कर्तिष्यते, अकर्तिष्यत, चिकर्तिषति, कर्त्स्यति, अकर्त्स्यत्, चिकृत्सति । एवमन्येषामुदाहार्यम् । सिचोऽन्यत्रेति किम्, अनर्तीत् ।

**इटो दीर्घो ग्रहेरपरोक्षायाम्**[1] ३।७।१०

ग्रहीता ग्रहीतुं, ग्रहीतव्यमिति गृह्णाति, ग्रहणाय ग्रहणीयमिति यथाक्रममिति विग्रहः । इट् तस्य चानेन दीर्घः । यद्येवमिडेवागमः कस्मान्न क्रियते, नैवं शक्यम्, अग्रहीदित्यत्र सिचो लोपो न सिध्यति । नन्वनुवर्तमानस्येटोऽर्थवशाद्विभक्तिविपरिणाम इति लुप्तषष्ठीकस्य स्थानित्वं विज्ञास्यत इति किमर्थं पुनरिहेड्ग्रहणमित्याह — इड्ग्रहणमित्यादि । असति हि इड्-ग्रहणे ग्रहेरिति पञ्चमीनिर्देशे प्रमाणाभावात् यथाश्रुतः एव स्थानिवद्भावं प्रतिपद्यत इति भावः जगृहिव, जगृहिम इति परोक्षायां वम, द्विर्वचनम् । ग्रहिज्यावयीति सम्प्रसारणम् । ग्रहिता ग्रहिष्यते इत्यत्र त्विज्वदिटो दीर्घो न भवति । ईदिति कर्तव्ये दीर्घग्रहणस्य संज्ञापूर्वकत्वेनानित्यत्वात् । ववरिथेति । नञा निर्दिष्टस्यानित्यत्वात् क्रादिनिषेधाभावात् अत्रेडागमः । भाषायां चेदमुच्यते । छन्दसि तु ववर्थेत्येव भवति परस्मैपदे परेऽपि सिचो दीर्घो नेष्यते । अस्तारिष्टाम्, प्रावारिष्टाम् चेक्रीयितलुगन्तादित्यादि । कथं पुनरिष्यमाणोऽपि चेक्रीयितलुगन्तात् ग्रहेरिटो दीर्घो नेष्यते । ग्रहेर्य इडिति विहितविशेषणपक्षपरिग्रहात् तेन ग्रहेर्यो विहितः इट् तस्य दीर्घः न तु जरीगृह्यत

---

१. ३।७।१२ (दु० वृ०)

इत्यस्माद् यो विहितः तस्यापि ये तु द्विष्प्रयोगद्विर्वचनावष्टम्भेन ग्रहेरेवायमिड्विहित इति व्याचक्षते तान्प्रति छान्दसत्वात् संज्ञापूर्वस्य वा विधेरनित्यत्वादिति समाधेयम् ।

**अनिडेकस्वरादातः [1]३।७।११**

अनिडिति योगविभागाद् वृधिशृधिस्यन्दिभ्यः सकारादेरसार्वधातुकस्य परस्मैपदस्य सनश्च इडागमो न भवति । वर्त्स्यति, अवर्त्स्यत् । विवृत्स्यति । एवं वृध्यादीनां त्रयाणामुदाहार्यम् । भविष्यन्ती क्रियातिपत्तिविषये सन्विषये च वृतादिभ्य आत्मनेपदे वा भवति । गणकृतमनित्यम् इति वचनात् परस्मैपदस्येति किम्, वर्तिष्यते अवर्तिष्यत इति आत्मनेपदेन च समानपदस्थेभ्यो वृतादिभ्य इडागमः स्मर्यत इति विवर्तिष्यत इत्यादिसिद्धम् । एवं कृपेः श्वस्तन्यां क्लृप्तास्त, क्लृप्स्यति, चिक्लृप्सतीहापि पूर्ववत् कृपेरात्मनेपदं वा भवति । परस्मैपदस्येति किम् कल्पितास्वः, कल्पिष्यते, अकल्पित इति सिद्धम् ।

**इवर्णादिश्वीश्रिडीङ्शीङः [2]३।७।१२**

चेता, चेषीष्टेत्यादि । गुणे कृतेऽपि यदीडागमः स्यात् प्रतिषेधेन किं कृतं स्यात् ।

**शकेः कात् [3]३।७।१३**

अथ किमर्थमिह प्रकरणे कादित्यादीनि विशेषपदान्युपादीयन्ते । नहि शकिप्रभृतयः, कान्तत्वं व्यभिचरन्तीत्याशङ्क्याह—कादित्यादीनामित्यादि । शाशकितेत्यादावल्लोपस्य स्थानिवद्भावाद् अकाद्यन्ते विषये इट प्रतिषेधो मा भूदित्येवमर्थं विशेषणपदोपादानमिति केचन मन्यन्ते । न चात्रैकस्वरग्रहणानुवृत्त्या व्यावृत्तिरस्ति, द्विष्प्रयोगद्विर्वचनपक्षे कृतद्विर्वचनानामपि शकिप्रभृतीनामेकस्वरत्वात् । न च वृत्तिकृतमनेकस्वरत्वं यत्वविधाविव सर्वत्राश्रयितुं युक्तम्, नियमविधानस्य परोक्षायामानर्थक्यप्रसङ्गात् कृतद्विर्वचनानां कादीनां वृत्तिकृतानेकस्वरत्वपरिग्रहे सति ऋदन्तादिलक्षणस्य ([4]एकस्वरविषयस्य प्रतिषेधस्याप्रवृत्तेः । न चानर्थक्यं नियमविधानस्यास्तु इति) वक्तुं शक्यम्, पेचिव इत्यादाविडागमाभावप्रसङ्गादिति । शाशकितेत्यादि कादीनां पदानां व्यावर्त्यम् । अन्ये त्वेवंविधो विषयः छान्दसो लक्षणं चेदं प्रायेण भाषाविषय-

---

१. ३।७।१३ (दु० वृ०)
२. ३।७।१४ (दु० वृ०)
३. ३।७।१७ (दु० वृ०)
४. न्यूनपाठः (वा०)

मिति किमेतेन व्यावर्त्येनेति वदन्तो वैचित्र्याय मातृकाक्रममित्थं प्रदर्शितवानाचार्य इत्येवंभूतं प्रयोजनमत्र व्याचक्षते क्वचित्तु [1]विशेषणार्थं प्रयोजनं हनिमन्यतेन्यादित्यत्र तथा चावधीदित्यत्र प्रतिषेधो न भवत्यनान्तत्वात् ।

**पचिवचिसिचिरिचिविचिमुचेश्चात्** [2]३।७।१४

इह प्रकरणे कृते समाहारे द्वन्द्वे नोरागमस्याभावो नित्यमागमशासनमिति वचनात् ।

**प्रच्छेश्छात्** [3]३।७।१५

विच्छिस्सेडिति [4]यस्त्वपठ्यं मध्ये अस्य पाठः सः पिपर्तिवन्मन्तव्यः । यथा हि जुहोतिप्रभृतीनामनिटां मध्ये पृ पालनपूरणयोरित्ययं सेट् पठित एवं विच्छिरपि [5]बोद्धव्यः ।

**युजिरुजिरञ्जिभुजिभजिभञ्जिसञ्जित्यजिभ्रस्जियजिमस्जिसृजिनिजिविजिस्वञ्जेर्जात्** [6]३।७।१६

मृजूष् शुद्धावित्ययमूदनुबन्धत्वाद् वेडिति स्वरतिसूतीत्यादिना योऽपि मृजूष् शौचालङ्कारयोरिति चौरादिकः, आधृषाद्वेति विकल्पितेन्प्रत्ययः सोऽप्यूदनुबन्धाद्वेडेव । मार्ष्टेति मृजादीनां षः विजिरिति पृथग्भावार्थो गृह्यते न तु ओविजी भयचलनयोः इत्ययम्, कुतः इट् प्रतिषेधार्थस्येदनुबन्धकरणस्यानर्थक्यप्रसङ्गात् ।

**[7]तुदिनुदिक्षुदिस्विदिस्विद्यतिविद्यतिविन्दतिविनत्तिच्छिदिभिदिहदिशदिसदिपदिस्कन्दिविवेर्दात्** [8]३।७।१७

ज्ञानार्थो विधिस्सेडिति लाभार्थोऽपि विन्दतिस्सेडिति केचन मन्यन्ते, तेन वेदिता [9]ऋणस्य इति । ततः इडागमो भवत्येव ।

---

१. विशेषणार्थत्वमपि प्रयोजनमपि यथा हनिमस्यतेन्नादित्यत्र (भं०)
२. ३।७।१८ (दु० वृ०)
३. ३।७।१९ (दु० वृ०)
४. यस्त्वनिटां (भं०)
५. योग्यस्य (वा०)
६. ३।७।२० (दु० वृ०)
७. अदितुदि इत्यधिकः पाठः (भं०)
८. ३।७।२१ (दु० वृ०)
९. धनस्य (भं०)

**राधिरुधिक्रुधिबन्धिशुधिसिध्यतिबुधिव्यधिसाधेर्धात्**[1] ३।७।१८

राध संसिद्धाविति राधोऽकर्मकाद् वृद्धावेवेत्ययमविशेषाद् गृह्यते। बुधेर्दैवादिकस्य ग्रहणं स्मर्यते, तेन बुध बोधन इत्यस्य बोधितेत्येव भवति। अन्ये तु भौवादिकस्यापि बुधेः ग्रहणमिति व्याचक्षते। सिधियुधिभ्यां च दैवादिकाभ्यां वधेस्साहचर्यं नाश्रीयत, साहचर्यपरिभाषायाः अनित्यत्वात्। तथा चामो चामित्यस्या अग्रहणम्।

**आपितपितिपिस्वपिवपिशपिछुपक्षिपिदिलिपिलुपिसृपेः पात्**[2] ३।७।१९

तृपिदृपी रधादित्वाद्वेटाविति तृप् प्रीतौ दृप् हर्षमोहनयोरित्येतौ यौ तु तुदादिषु तृप तृम्प तृप्तौ, दृप दृम्प आक्रोश इति पठ्येते तौ सेडावेव।

**द्विषिपुष्यतिकृषिश्लिष्यतित्विषिपिषिविषिशिषिशुषितुषिदुषेः षात्**[3] ३।७।२०

कृषिः भौवादिकः तौदादिकश्च गृह्यते। पुष्यतीति निर्देश इति येनेति शेषः।

**वसतिघसेः सात्**[4] ३।७।२१

घसिः सौत्रः। आदेशश्चेति। सूत्रे भवः सौत्रः। यः लदिघसां सरगित्यत्र पठ्यते अदनार्थ आदेशो योऽदेर्घस्लृ सन्नद्यतन्योरित्यनेन विहितः जिघत्सतीति। अदेर्घस्लादेशः। सस्य से सार्वधातुके तः।

**दहिदिहिमिहिरिहिरुहिलिहिलुहिनहिवहेर्हात्**[5] ३।७।२२

दहिदिहिदुहां दादेर्घ इति कृते च घत्वे घटधभेभ्य इति घत्वम्। घुटां तृतीय इत्यादिना गत्वम्, अन्येषां होढ इति सिहिप्रभृतीनां ढत्वे कृते पूर्ववद् घत्वम्, तवर्गस्य षटवर्गादिति धस्य ढः, ढो ढ लोपः, मुहुर्वेचित्य इत्ययं रधादित्वाद वेडिति तेन सोढा सोहितेत्येव तस्य भवति। अतोऽसाविह पठ्यते सहिरपि नित्यं सेडिति तेनासावपि न पठ्यत इति भावः।

---

१. ३।७।२२ (दु० वृ०) राधिरुधिक्रुधिक्षुधिबन्धिशुधिसिध्यतिबुध्यतियुधिव्यधिसाधेर्धात् (दुर्गपाठः)

२. ३।७।२४ (दु० वृ०)

३. ३।७।२८ (दु० वृ०)

४. ३।७।२९ (दु० वृ०)

५. दहिदिहिपिसृरुहिलिहिसहिवहेर्हात् (भं०) तथा च ३।७।३० (दु० वृ०)

**ग्रहगुहोस्सनि [1]३।७।२३**

ग्रहश्च गुहश्चेति द्वन्द्वः । ह-चतुर्थान्तस्येति घत्वम् । ग्रहेर्नित्यमिटि प्राप्ते गुहेरप्यूदनुबन्धत्वाद्विकल्पे वचनम् । ग्रहीतेति, इटो दीर्घः गूहितेति । गुहेरूदुपधायाः ।

**उवर्णगुपादिभ्यश्च [2]३।७।२४**

बहुव्रीहिगर्भोऽत्र द्वन्द्वः । गुपादिभ्यः सौत्रेभ्य इति यो गुप्तिज्किद्भ्यस्सन् मान्बधादिसूत्रे पठ्यन्ते तेभ्यः कुतः प्रत्यासन्नत्वात् । गुप् तिज् कित् इत्यादिना तानेव गुपादीन्स्वरूपेण प्रदर्शयति । उवर्णग्रहणेन उकारान्ता ऊकारान्ताश्च गृह्यन्त इति स्वरस्सवर्णस्येति वचनात् । ननूकारान्तेभ्यस्सिद्धो निषेध इति किं तेभ्यो निषेधेनेत्याशङ्क्याह—उकारान्तस्त्वित्यादि । येभ्यः उकारान्तेभ्यो निषेधो न सिद्धः ते इह यु-प्रभृतयः उवर्णग्रहणेन गृह्यन्ते । युयूषतीत्यादि । यवितुमिच्छतीत्यादिविग्रहः । इत्वे चेति सन्यवर्णस्येत्यनेन योगविभागो वैचित्र्यार्थः ।

**भुवस्सिज्लुकि [3]३।७।२५**

अभूदिति । भुवस्सिज्लुकीति गुणाभावः । व्यत्यभविष्टेति कर्मव्यतिहारे आत्मनेपदम् । भुवो लुकीति न कृतं प्रतिपत्तिगौरवं स्यादिति भुवमुच्चार्य यो लुक् कृते तस्मिन्निति व्याख्यायमाने सिच एव लुकि कार्यं विज्ञास्यते ।

**कृसृभृवृस्तुद्रुस्रुश्रुव एव परोक्षायाम् [4]३।७।२६**

समाहारे द्वन्द्वः क्र्यादीनां प्रतिषेधः सिद्ध इति वृङ्वृञ् ततो युरुणुक्षुश्नुक्ष्णुव इति च सूत्रद्वयेन । अतो वृङ्वृञ्भ्यां परोक्षायामिति सूत्रं कर्तव्यं क्र्यादिभ्यस्तु निषेधाय योगारम्भो न कर्तव्य इत्यत्र नियमार्थ इति योगारम्भस्य प्रयोजनमाह—क्रादय एवेत्यादिना नियमस्य स्वरूपं दर्शयति यतः क्रादय एव परोक्षायामनिटाः तेन किं सिद्धं भवतीत्याह—तेनेत्यादि । यतः क्रादय एव परोक्षायामनिटाः तेन हेतुनेत्यर्थः । अन्येषामिति पचिप्रभृतीनाम्, नियमपक्षे च वृ-ग्रहणं वृङ्वृञोरिटः प्राप्तौ सत्यां प्रतिषेधार्थं विज्ञायते । न चास्ति नियमनिषेधयोर्विरोधः, धातुभेदेनानेकवाक्योपप्लवात् तत्र किञ्चिद् वाक्यं नियमार्थं किञ्चिच्च प्रतिषेधार्थं विज्ञास्यते सिद्धे सत्यारम्भमाणस्य

---

१. ३।७।३१ (दु० वृ०)
२. ३।७।३२ (दु० वृ०)
३. ३।७।३४ (दु० वृ०)
४. ३।७।३५ सृवृभृस्तुद्रुस्रु व एव परोक्षायाम् (दु० वृ०)

विधेरन्तरेणाप्येवकारं नियमार्थत्वं भविष्यतीत्येवकारस्योपादानं क्रादय एव परोक्षायामनिटामिति विपरीतोऽपि नियम आशङ्क्यते। भृतौ कर्मशब्द इतीडागमस्याश्रयणाद्विपरीतनियमनिवृत्तिः सिद्धेति चेत् न। क्तिप्रत्यय एवैष निर्देश इडागमाभावं प्रतिपादयेत्।

**थल्यृकारात्**[1] ३।७।२७

पूर्वेण नियमेन प्राप्त इति। एतेन क्रादिनिवृत्त्या ऋकारान्तधातुमात्रविषये पूर्वेणेडागमप्राप्तौ सत्यां प्रतिषेधोऽनेन विधीयत इति दर्शयति। यदि पुनः क्रादयो न निवर्तेरंस्ततः पूर्वेणैव थलि सिद्धा तेषामिटो व्यावृत्तिः वचनमिदमारभ्यमाणं नियमार्थं स्यात् ऋकारान्तादेव थलि न भवति। अन्यतस्तु भवत्येवेति। ततश्च तुष्टोथ दुद्रोथेत्यत्रेडागमः प्राप्नोति। श्वस्तन्यां सत्यां नित्यनिट इत्यादि उपदिश्यते। शब्दव्युत्पत्त्यर्थमुपादीयत इत्युपदेशः सूत्रपाठ धातुपाठश्चोच्यते। तत्र यो धातुरकारवान् श्वस्तन्यां परस्यां नित्यमनिटो न तु विकल्पेन। तथा विधानात् पचि-प्रभृतेर्धातोर्थलि [2]वेडागमो भवितव्यः। स तु ऋत इति कर्तव्ये कारवचनात् थल्यधिकविशेषणसूचनार्थात् सिद्ध इति नापूर्वत्वेन वक्तव्यः। पपक्थेति। क्रादिनियमादिट्प्राप्तः पक्षे न भवति। जघसिथ इति क्रादिनियमादिडागमविकल्पः त्वत्र न भवति। नित्यानिट्त्वव्यपदेशस्याभावात् कथं पुनस्तस्य भावः इत्याह—श्वस्तन्यां घसेरसत्वादिति परोक्षायां विधीयमानस्य घसेः श्वस्तन्यां कुतः अस्ति सम्भव इति भावः। अञ्जेर्वेट्त्वादिति विकल्पेट्त्वमुदनुबन्धत्वात् अकारवत इति कारशब्दोपादानं कारशब्दपरश्चैव तत्कालार्थम्। तेन रराधिथेत्यादौ विकल्पो न भवति। सृजिदृशोश्चेति थलि वा वक्तव्यः इत्यपेक्षते। ययिथेति। इटि च इत्यालोपः, सस्रष्ठ, दद्रष्ठेति तवर्गस्य षटवर्गादिति थस्य ठत्वम्। अदेरकारवत्वाद् विकल्पः प्राप्तः इति श्वस्तन्यां नित्यनिट इत्यादिना व्येञोऽपि स्वरान्तत्वादिति विकल्पः प्राप्त इत्यनुषज्यते। अर्तेस्तु निषेधः प्राप्त इति थल्यृकारादित्यनेन। विव्ययिथेति। न व्ययतेः परोक्षायामित्यात्वाभावः।

**कृञोऽसुट:**[3] ३।७।२८

परोक्षायामिति वर्तते नान्तरस्थल् प्रत्यय इति भावः। व्याप्तिश्चात्र हेतुः करोतेः पूर्वत्रानार्षः पाठः इत्याहुः।

---

१. ३।७।३६ (दु० वृ०)

२. नेडागमो वक्तव्यः (वा०)

३. ३।७।३७ (दु० वृ०)

**सुट् संपर्युपेभ्यः करोतौ भूषणे [1]३।७।२६**

समवपूर्वादिणः। समवयनं समवाय इति स्वरान्तत्वादल्प्रत्ययः। गुणः, सुडागमः। करोतिः आगमी। सुट् संपर्युपेभ्य इति विधिः भूषणे समवाये चेत्यर्थः निर्देशः। समवाये चार्थः। इति समवायः समुदायः। पूर्वाचार्यप्रसिद्धचे-तीटानुबन्ध आगम आगमिन आदिर्भवतीति पूर्वाचार्य ([2]प्रसिद्धचेति इटानु-बन्धागमः आगमिन आदेशो भवतीति पूर्वाचार्या)णां प्रसिद्धिः तथा करोतेरयम-पूर्ववर्णोपजननरूपः सकार आगमः आदौ यथा स्यादित्येतदर्थः सुटः टकारः आसज्यते। च शब्दाद्विषयान्तरेऽपि सुडागमः संस्कृतम्। अनित्य इति। एव-मुपात्प्रतियत्नवैकृतवाक्याध्याहारेष्वर्थेषु सतो गुणान्तराधानं प्रतियत्नः। विकृतमेव वैकृतम्, स्वार्थ एवाण्प्रत्यय गम्यमानार्थस्य स्वरूपेणोपादानम् वाक्याध्याहारः, प्रतियत्ने काण्डगुणस्योपस्कुरुते। करोतेः प्रतियत्ने इति कर्मणि षष्ठी, वैकृते-उपस्कृतं भुङ्क्ते, विकृतं भुङ्क्ते इत्यर्थः। वाक्या-ध्याहारे उपस्कृतं जल्पति। उपात्किरतेर्लवणविषये, उपस्कारं काश्मीरिकांल्लु-नन्ति, विक्षिप्य लुनन्ति इत्यर्थः। कृ विक्षेपे इत्यतोऽण्-प्रत्ययोऽत्र वक्तव्यः। उपप्रतिभ्यां [3]किरतेर्हर्षजीविकाकुलायकरणेषु चतुष्पाच्छकुन्यालेखने। हर्षे तु उपस्किरते वृषभो हृष्टः। जीविकायाम्, अपस्किरते श्वा ([4]आश्रयार्थी हर्षादिविषये आत्मनेपदम्, रुदादित्वात् हर्षादित्यस्य त्वन्यत्र न भवति। अपस्किरते श्वा) ओदनपिण्डमाश्रित इति। इत्थमन्यत्रापि यथालक्ष्यं सुडा-गमो मन्तव्यः।

[5]इडागमपादः समाप्तः।

## अष्टमः पादः

**पदान्ते धुटां प्रथमः ३।८।१**

धुटां प्रथमो भवतीति। स्थानेऽन्तरतम-परिभाषया यो यस्यान्तरतमः

---

१. ३।७।३८ सुड् भूषणे संपर्युपात् (दु० वृ०)

२. न्यूनपाठः (बा०)

३. किरते इत्यतो अग्रे "हिंसाविषये च उपस्कीर्णं ते भूयात् प्रतिस्कीर्णं ते भूयात् हिंसानुबन्धी विक्षेपस्ते भूयादित्यर्थः। उपात्किरते" इत्यधिको पाठः (भं०)

४. न्यूनपाठः (वा०)

५. आख्यातप्रकरणे सप्तमः पादः (भं०)

स तस्य भवतीत्यर्थः। त्वन्नयनमिति। तव नयनं त्वन्नयनमिति षष्ठी (¹समासः त्वन्मदोरेकत्व इति युष्मदः त्वदादेशः। अर्थभुन्नाथ इति। अर्थं बुबुध्यत इति क्विप्, कर्मधारयोऽयं षष्ठीसमासो वा अत्र लुप्तायामपि विभक्तौ पूर्वपदस्य पदत्वं प्रत्ययलक्षणेन मन्तव्यम्। नन्वप्रस्तुतस्यादि-पदस्यान्ते वर्तमानानां धुटामुदाहरणप्रदर्शनमयुक्तम्। इदं तूदाहर्तव्यम्, अभून्नयनम्, आसीन्नाथ इति। न चात्र वा विराम इत्यनेन प्रथमप्रवृत्तौ सत्याम् उत्तरकाले पदान्तसम्बन्धे सति प्रथमानिमित्तं कार्यं भविष्यति तत्किमेतेनोदाहृतेन शक्यते वक्तुं यतः पदान्तरसम्बन्धात् प्राग्वा विरामे इत्यनेन यदा पक्षे प्रथमो न प्रवर्तते) तदा पाक्षिके अस्य तृतीयस्य पदान्तरसम्बन्धे सति श्रवण प्रसज्यते। ततो नु भवेद् वर्गप्रथमलक्षणं कार्यमित्युदा²हृतमेवैतत्। स्यादिपदं तु नोदाहर्तव्यम्। नैतत्, पदग्रहणं ह्यत्राप्रस्तुतस्यादिपदस्य परिग्रहार्थं विज्ञायतेत्यादिपदमात्रपरिग्रहे हि सति पदग्रहणमपार्थकं स्यात् इति स्यादिपदमुदाहर्तव्यमेव। वेद्मीति विद् ज्ञाने, अन्विकरण, अदादेर्लुक्, अत्र दकारस्य प्रथमो न भवति। अथेत्यादि। त्वन्नयनमित्यादौ पूर्वपदस्य योऽन्त्यो वर्णः तेन। विरम्यत इति भवत्यसौ विरामः, विरम्यतेऽनेनेति विराम इति कृत्वा ³ततश्च तत्र वा विराम इत्यनेन पाक्षिकस्य प्रथमस्यास्तु प्रवृत्तिः। आसीदित्यादौ वर्णान्तत्वादनेन नित्यं प्रथमोऽस्त्विति योगद्वयस्य विषयविभागमाह—अयमर्थः। विरम्यते तूष्णीं भूयते येन स विरामः, तथाविधश्च वर्णव्यपदेशः। परवर्णानुपलब्धौ सत्यां प्रवर्तते। अन्यथा तु सर्व एव वर्णो विरामव्यपदेशभाक्स्यात्। ततो यत्र परवर्णानुपलम्भनं स वा विराम इत्यस्य विधेर्बाधकस्य विषयः। पदान्तत्वं तु सामान्यं सत्यपरवर्णोपलम्भे भवति। असत्यपीति सः विषयोऽस्य योगस्य।

**रसकारयोर्विसृष्टः ३।८।२**

विसृज्यते स्मेति क्तः, मृजादीनां षः, विसर्जनीयस्य एषा पूर्वाचार्यसंज्ञा। सिद्धे सत्यारभ्यमाणो नियमार्थ इति। पूर्वत्र विसर्जनीयविधौ लिङ्गाधिकारात्याद्यन्त्यस्य चालिङ्गत्वात् कथं सिद्धो विसृष्ट इति चेन्न, तत्र न लोपविधौ लिङ्गग्रहणात् क्वचिदलिङ्गस्यापि कार्यदर्शनात्। अरोदीदत्रेत्यादौ पूर्वेण सकारस्य प्रथमप्राप्ति बाधित्वा पुनर्विधानमिदं विसृष्टस्य विध्यर्थं स्यात् न तु

---

१. कोष्ठांकितः न्यूनपाठः (वा०)
२. हर्तव्यमेवैतत् (भं०)
३. ततः किम् (भं०)

नियमार्थमिदमिति चेत् न । प्रतिपदविहितत्वात् । विशेषविहितेनात्र विसर्जनीयेन प्रथमो बाधिष्यत इति नियमार्थमेवेदम् । वा विराम इत्यतः तत्र वा ग्रहणस्यानुवर्तमानस्य व्यवस्थितविभाषात्वात् । गीर्ष्वित्यादिवदस्सह इत्यादावपि विसृष्टो न भविष्यति इति । एतच्च तनुमतयो न प्रपद्यन्ते । अरोदोऽत्रेति । रुदिर् अश्रुविमोचने ह्यस्तनी दि अदो डित्यत्रेष्टिरस्ति तद्वशादडागमः । अद्धात्वादिः ।

थढधभेभ्यस्तथोर्धोऽधः ३।८।३

धाञः परयोस्तु न भवति इत्येतेन धाञो धान्तत्वात् प्राप्तौ सत्यामध इति निषेधोऽयं न त्वधान्तत्वाद् धेट इति दर्शयति । नन्वधः इति धान्तादयं धान्तनिषेध इति कस्मान्न व्याख्यायते विधौ श्रुतेनैवं शक्यमिति चेत्तर्हि विधिनिषेधयोरेकविषयतायां श्रूयमाणायां विकल्पोऽस्तु धाञस्तु निषेधोऽयमिति कुतस्त्योऽयं विशेषः, उच्यते—यदि धान्ताद्विकल्पोऽभिमतः स्याद् धो वेति पृथग्योगमसन्देहार्थं कुर्यादिति धाञो एवायं निषेधः । ननु सत्यां प्राप्तौ निषेधः युक्तः । न च धाञः प्राप्तिरस्त्यधान्तत्वात् । अधान्तत्वं त्वालोपस्य स्थानिवद्भावात् पूर्वं विधिं प्रति स्थानिवद्भावः । ([1]धत्वं च परविधिः तत्कथं स्थानिवद्भावः इति चेत्, न विधिग्रहणात् परविधिं प्रत्यस्त्येव स्थानिवद्भावः ।) अन्यथा पूर्वस्येति कुर्यात् । कार्यशब्दाध्याहारेण च षष्ठी विज्ञास्यते । तस्मात् स्थानिवद्भावात् [2]आकारान्तत्वात् धाञो नास्ति धान्तत्वप्राप्तिरित्ययुक्तो अध इति निषेधः । एवं तर्हि अयमेव निषेधो ज्ञापयति अनित्यः परविधौ स्थानिवद्भाव इति । तथा च राज्ञ इत्यत्र चवर्गादेशः सिद्धः, अन्यथा लुप्तधालोपस्य परविधौ [3]चवर्गे कर्तव्ये स्थानिवद्भावाज्जकारेण नकारस्य योगो नास्तीति ञत्वं न स्यात् । तस्मात् स्थानिवद्भावस्यानित्यत्वाद् धाञो धान्तत्वादस्ति प्राप्तिरित्यध इति निषेधः क्रियते । अघोषे प्रथम इति थढधभानां प्रथमः प्राप्त इति स यस्मिन्प्राप्ते यो विधिरारभ्यते स तस्य बाधको भवतीत्यनेन धत्वेन बाध्यत इति शेषः । धत्तः धत्थ इति धाञः वर्तमाना तस्, थस्, अन्विकरणः । जुहोत्यादेश्च जुहोत्यादीनामित्यादिना लुक् द्विर्वचने ऽभ्यस्तानामाकारस्येत्यालोपः । तथोश्च दधातेरित्यादिश्चतुर्थत्वम्, अघोषेष्वशिडामिति प्रथमः ।

---

१. न्यूनपाठः (वा०)
२. अधान्तत्वात् (भं०)
३. चवर्गादेः (भं०)

**षढोः कस्सि ३।८।४**

पिपिक्षति लिलिक्षति, पेष्टुमिच्छति, लेढुमिच्छति सन् ।

**तवर्गस्य षटवर्गात् टवर्गः ३।८।५**

षटवर्गादिति षष्ठीसमासगर्भो द्वन्द्वः । ईट्ट इति ईड् स्तुतौ, आदादिकः, टवर्गात्परस्य तवर्गस्य टवर्गः सिद्ध इति तवर्गश्चटवर्ग योगे इत्यादिना ।

**ढे ढलोपो दीर्घश्चोपधायाः ३।८।६**

ढकारे पर इति वर्णमात्रे । अकारस्तूच्चारणार्थः । तेन लीढादिवत् लीढ्वेत्यादावपि ढलोपः सिद्धो भवति । ढकारस्य लोपो भवतीति । धुटां तृतीयश्चतुर्थ इत्यस्य बाधकः । लीढः लीढवानिति लिह्यते स्मेति लेढि स्मेति विग्रहः । गूढः गूढवानिति गूह्यते स्म गूहति स्मेति, क्तक्तवन्तु, वेट्त्वादिडभावः । अलीढ अलीढा इति सणो वक्तव्याल्लुक् । लेढा द्रोढा इत्यादौ तु प्रत्यये सामान्यापेक्षत्वेनान्तरङ्गत्वात् गुणे कृते सति ढत्वादिकार्यम् । इह अयं दीर्घो ह्रस्वं स्थानिनमाक्षिपति, तेन ढे परतो ढलोपे कृते सत्यनिष्ठास्थानित्वेनोपधा न विज्ञायते । किं तर्हि भूतपूर्वैव, अन्यथा गूढ इत्यादौ गकारस्यान्तरतम आकारो दीर्घः स्यात् । यद्येवं ढलोपे सत्यन्तो ह्रस्वो दीर्घभाक्सञ्जातो न तूपधाभूत इति किमुपधाग्रहणेन ढस्यैवान्तरतम्यात्पाक्षिको दीर्घ एकारः स्यादिति चेत् न । दीर्घशब्देन ह्रस्वस्य स्थानित्वेनाक्षेपात् तस्यैव दीर्घो विज्ञास्यत इत्याशङ्क्याह—उपधाग्रहणमित्यादि ।

**सहिवहोरोदवर्णस्य ३।८।७**

सोढा वोढेति सहेर्वोषु सहेत्यादिना इड्विकल्पः, वहेरपि दहिदिहि इत्यादिनेडभावः । अकारत्वमिति । स्वरस्सवर्णस्येत्याकारस्यापि ग्रहणम् । वर्णग्रहणं चास्या एव परिभाषायाः द्योतकम्, अन्यथा अस्येत्येव कुर्यात् । ऊढ इति उह्यते स्मेति क्तः प्रत्ययः । अत्र नित्यत्वात् सम्प्रसारणे कृते सत्यवर्णत्वं नास्ति ।

**धुटां तृतीयश्चतुर्थः ३।८।८**

अदुग्धेति । दुहेः वक्तव्यात् सणो लुक् । अबुद्धेति । धुटश्च धुटीति सिज्लोपः, अनेन सस्य दः इति लृतुलसाः दन्त्या इति स्थानसावर्ण्यात् । ननु धुटां तृतीय इति सिद्धः । सामान्येन तृतीयः । तदपार्थकं पुनरिदं वचनमित्याह—पुनर्वचनमित्यादि । यद्येवं मज्जतीत्यत्र तृतीयो न प्राप्नोति

मस्जिनशोर्धुटि इति ज्ञापकाद् भविष्यति शक्यत इति णत्वमत्र न भवति ।

**अघोषेष्वशिटां प्रथमः ३।८।९**

अस्तीति शिटोऽत्र सकारस्य प्रथमः तकारो न भवति । पुनर्वचनम् धातुविषये धुटामशिटामेव प्रथम इति नियमार्थात् तदन्तपरिभाषोपस्थानाच्च शिटोऽन्त्यस्यैव निषेधोऽपि तु मध्यशिटोऽपि यदयं व्रश्चिभ्रस्जिमस्जामिति शकारस्य प्रथमं चकारं न करोति शकारोपदेशस्तु वरीवृष्ट इत्यादौ षत्वार्थः स्यात् ।

**अस्य वमोर्दीर्घः ३।८।१०**

[1]दीव्यामीत्यादि । दिवादेर्यन्, नामिनो र्वोरिति दीर्घः । अतो लोपो न भवति । दीर्घविधानसामर्थ्यादिति कथं पचमानः वर्तमान इति निर्देशात् ।

**स्वरान्तानां सनि [2]३।८।११**

चिचीषतीत्यादि । नाम्यन्तानामनिटामिति गुणाभावः । दीर्घेण ह्रस्वस्य आक्षेपात् । ह्रस्वान्तस्य धातोरन्त्यस्य दीर्घविज्ञानादर्थात् स्वरान्तग्रहणे लब्धे तदुपादानं विस्पष्टार्थम् । न च धातोर्यो ह्रस्वः तस्य दीर्घ इति व्याख्यायमाने सति यत्र तत्रस्थस्य ह्रस्वस्य दीर्घः स्यादिति शक्यं वक्तुम्, उत्तरसूत्रारम्भात् ।

**[3]हनिगमिङ्गोरुपधाया ३।८।१२**

गम् इङो गमिङिति क्वचिद् द्वितीयान्तं परपदमित्यादिनायं तत्पुरुषः ततो द्वन्द्वः । जिगमिषतीति । गम्लृ गतौ, गमेरुपादानं विस्पष्टार्थम् । इङः स्थानित्वं न भविष्यति, पूर्वेणैव सिद्धत्वात् इङ्ग्रहणानर्थक्यप्रसङ्गात् । ननु दीर्घेण ह्रस्वः आक्षिप्तः । स चोपधाभूत एव हनिगमिङ्गोः सम्भवति इति द्योतनार्थः । उपधाग्रहणेन ह्रस्ववतोऽभ्यासस्यापि स्यादिति चेत्, न । सनि परतो ह्यनन्तरस्य दीर्घभाजः कार्येण भवितव्यम् । न चासावनन्तरोऽस्तीत्यन्त्याभावपरिभाषया अन्त्यादेशस्य परभागसम्बधिन एव ह्रस्वस्य कार्यं विज्ञास्यते तदपादर्थकमुपधाग्रहणमित्याह—उपधाया एवेत्यादि विशेषान्तरसूचनार्थमिति ग्रन्थाधिक्यादर्थाधिक्यमिति कृत्वा ।

---

१. दीव्यामीत्यादि (वा०+भं०)

२. ३।८।१२ (दु० वृ०)

३. हनिङ्गमोरुपधायाः ३।८।१३ (दु० वृ०)

**नामिनो र्वोरकुर्छुरोर्व्यञ्जने [1] ३।८।१३**

र च व् चेति द्वन्द्वः, नाम्निस्थानी दीर्घः आदेशः र्वोरिति निमित्तं तयोर्विशेषणं निमित्तभवेन व्यञ्जनमिति। एतदेव व्याचष्टे व्यञ्जने परे र्वौ वाविति। कुरुग्रहणेन कुरुशब्द इत्यस्य यथावस्थितोच्चारणार्थमुकारं कृत्वा ग्रहणमिदमिति यो मन्दमतिस्सम्भावयेत् तं प्रत्याह—कुरुग्रहणेनेत्यादि। यदि कुरु शब्द इत्यस्य ग्रहणमभिमतं स्यात् कुरीतिनिर्देशमिकारेण प्रसिद्धेन कुर्यात्, उकारनिर्देशात्तु ज्ञायते करोतेरिदं विकरणान्तस्य ग्रहणमिति किरति नुवतीति तुदादेरनीति गुणाभावः। धातुप्रकरणादिह न भवति। चतुर इच्छति चतुर्यति दिव्यमिच्छति दिव्यति, इहापि न भवति। री गतिशोषणयोः। निर्यत्तः, वी गतिप्रजनकान्त्यसन[2]खादनेषु। विव्यतुरिति कुतो बहिरङ्गासिद्धपरिभाषया बाह्यप्रत्ययानपेक्षेऽन्तरङ्गे दीर्घे कर्तव्ये बाह्यस्वरापेक्षस्य यत्वस्यासिद्धत्वात् व्यञ्जनपरत्वाभावात्। अतएव किर्योः गिर्योरित्यत्रापि न भवति। अच् इत्यनुवर्तमाने ([3]कृसृस्पृतुरिभिदिछिदिभ्यः चेतीभावः)। इरादेशे च कृते किरिः गिरिरिति भवति। [4]भुजेः किच्च इत्यतः तत्र किद् ग्रहणानुवृत्तेः कानुबन्धत्वाद् गुणाभावः जिघ्न्योरित्यत्र तु न भवत्यौणादिकत्वात्। [5]जीर्यतेः क्रिन्रश्च वः इति जूषः क्रिनि प्रत्यये परे इरादेशस्य रेफस्य च वत्वे कृते रूपमेतत्।

**सस्य ह्यस्तन्यां दौ तः [6]३।८।१४**

अचकादन्वगादिति। अन्विकरणः, अदादेर्लुक्, अचकासीदिति भवत्ययं दि-प्रत्ययः, न तु ह्यस्तन्यामिति तत्वाभावः, ईडागमनेन च व्यवधानादिति न वाच्यम्। आगमास्तद्ग्रहणेन गृह्यन्त इतीडागमः स्यादिग्रहणेन ग्रहणात्, स्वावयवे व्यवधानाभावात्। अचकास्त्वमिति। त्वमिति युष्मदः प्रयोगः मध्यमपुरुषादिनिवृत्त्यर्थः। दधातेरिति दकारधकारयोः। अभिनत्वम् अरुणत्वम्, नत्वाभावपक्षे वा विरामे इति दधयोस्तत्वम्।

**अद् धात्वादिह्यस्तन्यद्यतनीक्रियातिपत्तिषु [7]३।८।१५**

अयजत् अपठत् इति, अन्विकरणः, अयाक्षीत् अपाक्षीदिति। यज देवता-

१. ३।८।१४ (दु० वृ०)
२. खादेषु (वा०)
३. कृगृशृपृकुटिभिदिछिदिभ्यश्च (उणादिसूत्र)
४. ५. (उणादिसूत्र)
६. ३।८।१५ (दु० वृ०)
७. ३।८।१६, अद् इत्यस्य स्थाने अड् इति (दु० वृ०)

मृजादौ, डुपचष् पाके, सिच्, यजेः मृजादीनां षः षढोः कस्स इति कत्वम्, पचेः चवर्गस्य किः। ह्यस्तन्यादिभिः धातुराक्षिप्तः तत्किं धातुग्रहणेनेत्याह— धातुग्रहणमित्यादि सन्निहितपरित्यागे कारणाभावात्। ह्यस्तन्यादीनामेवागमित्वं कश्चित् सम्भावयेदिति धातुग्रहणम्।

**स्वरादीनां वृद्धिरादेः** [1]३।८।१६

इह केचिदैज्यत, औप्यत, औह्यतेत्यादिकमधिकमादिवृद्धेर्विषयं प्रदर्शयन्ति। तत्रायं कार्याणां प्रवृत्तिक्रमः। यद्यपि यजिवपिवहीनां सञ्जाते प्रत्यये आगमविधेर्बलवत्त्वादाकारागमः प्राप्नोति तथापि पूर्वमन्तस्थग्रहणेन सम्प्रसारणस्य बलीयस्त्वमभिधानात् कार्यान्तरबाधनेन प्रथमं सम्प्रसारणं प्रवर्तते। तच्च यणादिना न प्रवृत्तिमदिति कृते यणि प्रवर्तते। ततः स्वरादित्वाद् वृद्धिः, प्रत्ययोत्पत्तिमात्रापेक्षोऽन्तरङ्गोऽकारागमः सम्प्रसारणं बाधेत इति चेत्, बाधेत, यदि सम्प्रसारणं प्रातिपद्येन विधीयमानं बलीयो न स्यात्। अन्तरङ्गादपि विधेः प्रतिपदो विधिर्बलवानिति स्मर्यते। स्वरादेर्वृद्धिरिति कर्तव्ये आदि ग्रहणमिष्टस्यादेः परिग्रहार्थम्, तेन ऐय्यरित्यत्र ऋकारस्य वृद्धिर्न भवति। स्वरादेरिति च कर्मधारयं विज्ञास्यामः। वन्तिपदार्थप्राधान्येनान्तरङ्गत्वात् ऐयरिति ऋ गतौ ह्यस्तनीदि, अन्विकरणः जुहोत्यादेश्च जुहोत्यादीनामिति लुक् द्विर्वचनेऽकार ऋवर्णस्य अर्तिपिपर्त्योश्चेतीत्वम्। अभ्यासस्यासवर्ण इतीय्, अनेन वृद्धिः, गुणव्यञ्जनाद् दिस्योरिति दिलोपः।

**अवर्णस्याकारः** [2]३।८।१७

आदेरवर्णस्य धातोरिति शेष.। सर्वमुखस्थानमिति। कण्ठस्थानतालुस्थानौष्ठस्थानञ्च इत्येवं सर्वमुखस्थानम्। सर्व इति आदैदौतः, अवर्णस्य वृद्धयः स्युरिति प्रयोगभेदेनान्तरतम्यात्। तदेतेन नियमार्थोऽयमारम्भः इति दर्शयति। अतएव सर्वविधप्रसङ्गविनिवृत्तये वर्णग्रहणमकारस्याकारादेशप्रतिपत्त्यर्थं [3]विधीयते।

**अस्तेः** [4]३।८।१८

अस्तेरादेरिति लोपः प्राप्त इत्येतेन पूर्वेण सिद्धावपि आरम्भो लोप

१. ३।८।१७ (दु० वृ०)
२. ३।८।१८ (दु० वृ०)
३. क्रियते (मं०)
४. ३।८।१९ (दु० वृ०)

बाधनार्थमिति दर्शयति । आस्तामासन्नित्यादौ लोपात्वयोर्विषयान्तरे चरितार्थयोः परत्वाल्लोपबाधनेनात्वमेव भविष्यति । एतच्चाशक्यमभिधातुम् । अस्ति साक्षादुपायविशेषविहितस्य लोपस्यैवासति योगारम्भे प्रवृत्तिरिति लोपबाधनार्थं वचनमिदमारभ्यते ।

**एतेर्य**[1] ३।८।१९

आकारो विधीयमानः यकारो विधिभाक् । आकारस्य विशेषणमादेरिति यकारस्य विशेषणमेतेरिति ह्यस्तन्यामिति प्रवर्तते । अद्यतनी क्रियातिपत्तिश्च न सम्बध्यते, तयोः परयोरेतेर्यकारासम्भवात् । अकारागमस्य बाधः । इण् कार्यमिकोऽपि स्मर्यत इति तस्यापि कृते यत्वे आकारागमः । अध्यायन्निति । अगादिति । यत्वमत्र न भवति स्वरादावगुणे तस्य विधानात् । नन्विणो ह्यस्तन्यां परस्यां यत्वं बाधित्वा परत्वात् स्वरादिलक्षणा वृद्धिः भविष्यति । ततो वृद्धावायादेशे कृते सिद्धं साध्यमिति किं योगारम्भेन, नैतत्, परामपि स्वरादिलक्षणां वृद्धिमिणमुच्चार्य विधीयमानं विशेषविहितत्वाद् यत्वमेव बाधत्वेन चोत्सर्गापवादयोः तुल्यबलयोः परत्वेन व्यवस्थां घटते तथा च यत्वे कृते सत्यायन्निति न सिध्यति इति तत्सिद्धये योगः ।

**न मा मास्म योगे**[2] ३।८।२०

अकारागमादयो न भवन्तीति । एतेनान्तरविहितमात्वमेव न निषिध्यते किं तर्ह्यकारागमादयोऽपीति दर्शयति । एतच्च मा-शब्दप्रयोगे सतीणो यत्वदर्शनाल्लभ्यते । यद्येवं सस्य तकारादेशोऽपि निषिध्यति । नायं दोषः धात्वादिग्रहणानुवृत्त्या धात्वादौ यत्प्राप्तं तस्यैव निषेधविज्ञानात् मा भवानटीदित्यादीत्यत्रावर्णस्याकार इत्येतन्न भवति । इत्यादीत्यादिग्रहणात् । मा स्म सन् मास्म यन्नित्यादि मन्तव्यम् । अस्तेरिणश्चैते रूपे मा स्म शब्दे माशब्दस्यानर्थकत्वात् मा-योग इति कृते मा-स्मयोगे न सिध्यतीति पृथङ् मास्मशब्दग्रहणम् । अतश्च यो मन्दमतिर्मास्मिशब्दस्यैकत्वं मन्यते, तं प्रत्युक्तम् । शब्दभेदे तु मास्मग्रहणं न कर्तव्यमेव । मा मास्माभ्यामिति तृतीयानिर्देशे कर्तव्ये योगग्रहणं न, क्वचिन्निषेधो मा भूदिति योगग्रहणं, मैवं मा भवानक्षतेत्यादिसिद्धमिति केचित् क्षिणु हिंसायाम्, अद्यतनीति सिच् वक्तव्यात् पञ्चमलोपाद् ह्रस्वश्चानिट इति सिज्लोपः अद्धात्वादिः । अन्ये तु विस्पष्टार्थं योगग्रहणमित्याहुः ।

---

१. ३।८।२० (दु० वृ०)

२. ३।८।२१ (दु० वृ०)

**नाम्यन्ताद् धातोराशीरद्यतनीपरोक्षासु धो ढः** [1]३।८।२१

आशीरिति सजुषाशिषोर इति रत्वम् । इरूरोरीरूरौ । अकृढ्वमिति ऋदन्तानां चेति गुणाभावः । तुष्टुढ्वे चकृढ्व इत्यत्रापि सर्वत्रात्मन इत्यनेन स्तुध्व इतीहापि सर्वेषामात्मने इत्यादिना इटः परस्येत्यादि एतच्च नामिना धातौ विशेष्यमाणे सत्यन्तग्रहणे लब्धे यदन्तग्रहणं कृतं तदपि । अत आचार्यमतं ज्ञाप्यत इत्यनया व्युत्पत्त्या मतान्तरोपसङ्ग्रहार्थमित्येवं लभ्यत इति नापूर्वत्वेन वक्तव्यम् । न चेदमन्तग्रहणं भूतपूर्वनाम्यन्तार्थम्, प्रावरिषीढ्वम्, अलविढ्वम् अलविढ्वे इत्यादौ गुणावादेशयोः कृतयोरपि इण्निमित्तस्य ढत्वविकल्पस्येष्यमाणत्वात् । आशीरादयो धातोरेव विहिता इति धातुग्रहणं विस्पष्टार्थम् ।

**मर्जो मार्जिः** [2]३।८।२२

मर्ज इतीदं मृजेः कृतगुणस्यानुकरणम् । मर्जेरिकार उच्चारणार्थः मृष्ट इति द्वित्वबहुत्वयोरिति गुणाभावः ।

**धात्वादेष्षस्सः** [3]३।८।२३

धातोर्य आदिः षकार इति आदिशब्दोऽत्रावयववाची तेन धातोर्योऽवयवष्षकार इत्यर्थः । षड्भिरिति हशषेति डत्वम् । षण्ड इत्यत्र न भवत्यौणादिकत्वात् । षणु दाने, डमन्तान्नुः, लषितेत्यादावुपदेशसामर्थ्यान्न भविष्यति इत्यादिग्रहणं विस्पष्टार्थम् । नामधातोर्षुक्छेश्च नेष्यत इति तत्र नामधातोरर्थलभ्य एव निषेध उक्तः । यतो न तस्य धात्वादिष्षकारः तथा ह्यादिरवयव उच्यते । आरम्भकश्चावयवः भवति । नामधातुश्चायिनारब्धो न तु षकारेणान्त्येन वेति, कुतः, तत्र षकारस्यादित्वम् । अथायं ष्ठिवेष्षकारात्परो वर्णः किं थकार उत ठकारः, यदि थकारः तदा टेष्ठीव्यत् इति न [4]सिध्यति, अथ ठकारः तदा तेष्ठीव्यत् इति दुष्यति । तत्कोऽत्र निश्चय इत्याह—ष्ठिवेष्षकारात्पर इत्यादि ष्ठिवेरभ्यासस्य रूपद्वयसम्पत्तये केचिदाचार्येण थकारोऽयमिति ग्राहितः अपरे तु ठकारोऽयमिति द्वयं चैतत् प्रमाणम्, तत्र यदा थकारः तदा द्वितीयचतुर्थयोरित्यादिना थस्य तत्वे कृते सति तेष्ठीव्यत् इति भवति यदा तु ठकारः तदा पूर्वं ठस्य टत्वे कृते टेष्टीव्यत् इति भवति । अथ सर्वे

---

१. ३।८।२२ (दु० वृ०)
२. ३।८।२३ (दु० वृ०)
३. ३।८।२४ (दु० वृ०)
४. दुष्यति (भं०)

धातवः सकारादयः कस्मान्न पठ्यन्त इति । एवं च सति सूत्रमिदं न कर्तव्यं भवतीति भावः । नैवं शक्यमिति सर्वे धातवस्सकारादयः पठितुमशक्या इत्यर्थः, कुत इत्याह—प्रत्ययविकारागमस्य इत्यादि । यदीदं सूत्रं नारभ्यते ततो विकारसकारस्य क्वचिदप्यभावात् तद्विषयं षत्वविधानमनन्वितं स्यात् । तथा च सिषेत्यादि कृतषत्वमेव श्रूयते, तदा तस्माद्विकारसकारस्य षत्वव्यवस्थार्थं षादयो धातवः पठितव्याः । सूत्रं चारब्धव्यम् । अथ किं सर्वे एव धातवः षादयः पठ्यन्ते उत नियता एव केचित्, नियता इति ब्रूमः, के च पुनः ते, स्वराद्यन्त्यपराः ये श्रूयन्ते तथा ([1]स्मिस्विदिस्वदिस्वञ्जिस्वपयश्च सृपिसृजिस्तृस्त्यासेकृसीकृ/इत्येते तु स्वरादन्त्यपरा अस्य षादयः स्मर्यन्ते ।

[2]णो नः ३।८।२४

धातोरादेः णकारस्येति धातोरवयवणकारस्येत्यर्थः । नामधातोर्नेष्यते इति पूर्ववदर्थलभ्योऽत्र निषेधः उपसर्गात्परस्य णोपदेशस्य धातोः णत्वव्यवस्थार्थं सर्वे धातवः आचार्येण णादयो न पठ्यन्ते इति णादयस्तेऽपि पठितव्याः तथा च सूत्रारम्भः । ते च णादयः न सर्वे किन्तु ([3]नृतिनन्दिनविक्रनदिनाधृनाथृ) इत्येतान्विहाय ।

निमित्तात्प्रत्ययविकारागमस्थस्सिष्षत्वम् [4]३।८।२५

निमित्तशब्दे दात्पूर्वस्य च द इत्येतन्न भवति निर्देशसामर्थ्यात् । सेरिकारः उच्चारणार्थः । सिद्धे षत्व इति नामिकरपरे इत्यादिना यदि सिद्धं तत्किमर्थं पुनरिदं वचनमित्याह—तत्तु उत्तरार्थमिति । उत्तरसूत्राभ्यां वक्ष्यमाणयोः विधिनियमयोर्विधेयो पक्षेऽपार्थे पुनर्वचनमित्यर्थः । अन्यथा ह्युत्तरसूत्रयोर्विधेयापरिज्ञानादसामञ्जस्यं स्यात् ।

शासिवसिघसीनां च [5]३।८।२६

शिष्टः शिष्टवानिति । शिष्यते स्मेति विग्रहः । नडीङ् श्वीदितीडभावः । उषितः उषितवानिति । वसतिस्मेति कर्तरि क्तः ।

---

१. ष्मिङ्ष्विदिष्वञ्जष्वपयश्च सृपिसृजिस्तृस्त्येसीकृसेकृ (दु० वृ०)
२. ३।८।२५ (दु० वृ०)
३. दुर्गवृत्तौ तु भिन्नपाठः
४. ३।८।२६ (दु० वृ०)
५. ३।८।२७ (दु० वृ०)

**स्तौतीन्तयोरेव सनि** [1]३।८।२७

सामान्यवाक्येन षत्वस्य सिद्धि मन्वानो योऽस्य योगस्यानर्थक्यमवबुध्यते तं प्रत्याह—पुनरारम्भ इत्यादि । यद्येवं विधिरारभ्यमाणोऽन्तरेणाप्येवकारं नियमार्थो भविष्यतीति किमेवकारेण, अस्त्येतत् । स्तौतीन्नन्तयोष्षण्येवेति विपरीतो नियमो सत्येव कारे सम्भाव्यते । तथा चतुष्टावेत्यत्र षत्वं न स्यात् । यद्येवं सोषुपिषत इत्यत्र षत्वं नियमान् न प्राप्नोति, सनुत्पत्तेः पूर्वं, चेक्रीयित उत्पन्ने सति भविष्यति स्वपेः चेक्रीयितेः स्वपिस्यमिव्येञामिति सम्प्रसारणम् सन् अस्य च ([2]निमित्तेऽस्मिन्विज्ञायमाने षत्वव्यावृत्तिरभ्यासस्थादेव निमित्ताद् हि) लोपः यस्यानेनेति यलोपः । तुल्यजातीयविषयव्यावृत्तिकारित्वाच्च नियमानामभ्यासस्थान्निमित्तान्नियमो विज्ञायमानो षत्वव्यावृत्तिः विज्ञायते । न धातुस्थात् । तेन प्रतीषिषतीत्यत्रेणः परस्य सनोऽभ्यासस्य सकारस्य षत्वं न व्यावर्त्यते षणीत्यनुबन्धनिर्देशस्सनः सन्दिग्धरूपप्रतिपत्त्यर्थम् ।

**लुग्लोपेन प्रत्ययकृतम्** [3]३।८।२८

प्रत्यये कृते प्राप्तमिति । अर्थात् कृतशब्दस्यात्र प्राप्तलक्षणोऽर्थः अन्यथा कृतं चेत्कार्यं ततो विहितं सत् प्रत्ययः योगपदवीमारूढं कथं निषेद्धुं शक्यते । [4]अन्यथा विषयान्तरे यत् कृतं कार्यं तदिह लुग्लोपेन निषिध्यते इत्येषोऽर्थः । प्रत्ययलक्षणेन प्राप्तिरिति । ननु प्रत्ययलोपे सति प्रत्ययलक्षणेन प्राप्तिः यत्र तु लुक्कृतः तत्र कथं लोपे [5]सत्येष व्यपदेशः स्यात् । लोपशब्दस्य सामान्यशब्दत्वात् लुक्यपि लोपशब्दो वर्तिष्यत इत्यदोषः । अत्र वृद्धिरादौ सणीति वृद्धिः प्राप्तेति सा लुग्लोपेति निषेधान्न भवति इति भावः । लुकः पूर्वं त्वसौ न भवति लुग्विधानसामर्थ्यात् । इतरथा हि लुक्प्रदेशेषु लोपग्रहणमेव कुर्यात् । लुग्लोपयोर्विशेषाभावात् लुकि न प्रत्ययकृतमिति न कृतं वैचित्र्यात् ।

**स्वरविधिस्स्वरे द्विर्वचननिमित्ते कृते द्विर्वचने** [6]३।८।२९

स्वरविधिरनियमेन प्राप्तः । कृते द्विर्वचने नियम्यते इति परिभाषेयमारभ्यते । परत्वादत्रेत्यादि । आलोपोपधालोपयोरवकाशः । आजिघ्नन्तीति

---

१. ३।८।२८ (दु० वृ०)
२. न्यूनपाठः (भं०)
३. ३।८।२९ (दु० वृ०)
४. अथवा (भं०)
५. सतीत्येष (भं०)
६. ३।८।३० (दु० वृ०)

द्विर्वचनस्यावकाशः, पपाच इति, पपतुः, जग्मतुरित्यादौ तूभयप्रसङ्गे परत्वादालोपोपधालोपयोः प्राप्तिम्मन्यते, परत्वात्कारितलोपः स्यादिति । कारणा, हारणा, कारितलोपस्यावकाशः द्विर्वचनस्य स एव आटिटदित्यादौ तूभयोः प्राप्तौ सत्यां परत्वात्कारितलोपः स्यात्, ततश्च न भवेद् द्विर्वचनमेकस्वरत्वाभावात् । आपिप्यत इति पी-आदेशः, स्वरव्यञ्जनविधिरिति नासौ द्विर्वचनसत्तामपेक्षते । जेघ्रीयत इति भवत्ययं य-शब्दो द्विर्वचनस्य निमित्तं न तु स्वरादिरिति पूर्वं स्वरविधिरीत्वं ततो द्विर्वचनं तेन पूर्वं स्वरविधिर्यत्वं, ततो द्विर्वचनमिति । यदि तु पूर्वं द्विर्वचनं स्यात् अभ्यास उकारो न श्रूयेत तत्र च बहिरङ्गासिद्धपरिभाषायाः अप्रवृत्तेः द्विर्वचनस्याकृतस्य सत्वेनायावातीथोऽसिद्धत्वात् कथं यत्वमिति, न वाच्यम् । मघोनामिति निर्देशात् स्वरानन्तर्येण बहिरङ्गपरिभाषाया अप्रवृत्तेः द्विर्वचनस्याकृतस्य सत्वेनायोगात् द्विर्वचन इत्येषैव सत्सप्तमी द्विर्वचनविषयं करणमवगमयिष्यतीति किमर्थं ग्रहणमित्याह—कृतग्रहणमित्यादि । यदि कृते द्विर्वचनं सर्वत्र स्वरविधिः स्यात् । अरिरिषतीत्यत्रेटो द्वितीयस्यैकस्वरस्य द्विर्वचनं भवेत् । तथा चारिरिषतीत्यनिष्टं प्राप्नोति, कृतग्रहणात्तु पूर्वं स्वरविधिरगुणस्ततो रिशब्दस्येष्टस्य द्विर्वचनं सिद्धं भवति । एतत् नन्वित्यादिना विघटयति । अप्रयोजनमेतत् कृतग्रहणस्य, यतो नात्र पूर्वं द्विर्वचनं प्राप्नोति । नह्यत्र द्विर्वचनस्य निमित्तं सन्प्रत्ययस्वरादिः इटि सति स्वरादिः इति चेत्, न । इटो द्विर्वचनस्य निमित्तत्वाभावात् । सन्-प्रत्ययो हि द्विर्वचनस्य निमित्तं न त्विडागमः तत्कथमरिरिषतीत्यत्र द्विर्वचनं स्यात्, अत्रास्त्येतदित्यादिना परिहारमाह—अत्रेति । साभिप्रायमेतत्, अयमर्थः, सत्यम्, इटो नास्ति द्विर्वचनं प्रतिनिमित्तभावः, किन्त्वरिरिषतीत्यत्रोदाहरणे सतीडागमे सन्प्रत्ययो द्विर्वचननिमित्तं भवति स्वरादिः । एवञ्चेटः सन्नवयत्वादि स इत्यस्य द्विर्वचननिमित्तत्वात्कथं पूर्वं द्विर्वचनसम्भावना भवेदतो गुणात्प्राग्द्विर्वचनं स्यादेव, तन्मा भूदेष दोष इति स्वरविधेर्गुणस्य पूर्वं प्रवृत्तये कर्तव्यं कृत-ग्रहणमेतदेव यदि चेत्यादिना द्रढयति । अतो यथा दधिष इत्यत्र स्वरादिपरोक्षा प्रत्ययं द्विर्वचननिमित्तमाश्रित्य सति द्विर्वचने स्वरविधिरालोपः तद्वदरिरिषतीत्यत्रापि सत्यां द्विरुक्तौ स्वरविधिगुणः स्यादेव ।

**अनुबन्धोऽप्रयोगी [1]३।८।३०**

यस्य नास्ति प्रयोगस्तस्यानुबन्धसंज्ञाविधानार्थमिदम्, नत्वनुबन्धानुवादेन प्रयोगित्वमनेन विधीयते । अनुबन्धव्यवहारस्यैवानवगतत्वात् । पूर्वाचार्य-

---

१. ३।८।३१ (दु० वृ०)

प्रसिद्धया तदवगमश्चेत् ततः एव तर्हि अप्रयोगित्वं सिद्धमिति किमप्रयोगित्व-विधानेन । अथान्वर्थोऽनुबन्धशब्दोऽनुबन्ध[1]व्यवहारमभिधत्ते तर्हि योऽनुबध्यते कार्यार्थमुपादीयते सोऽवश्यप्रयोग्येव भवति, कार्यं विधाय तस्य प्रयोजनाभावाद-श्रवणादप्रयोगित्वस्यार्थस्य लभ्यत्वात् । अतः प्रयोगित्वानुवादेनानुबन्धसंज्ञा विधीयते तथा च तयैव तत्र तत्र व्यवहारः । डु-शब्दः अकारानुबन्धाविति कार्यं तु त्रिमक्-प्रत्यय उभयपदं चाकृत्रिमम् । करोति कुरुते इति कार्यार्थं समुच्चारितस्येति, तथा चानुबध्यते कार्यार्थमासज्यत इत्येवानुबन्धशब्दस्यार्थं व्याचक्षते । वयिवच्यादीनामित्यादिग्रहणाद् व्यधेर्ग्रहणम् । नकारागमः स्या-दिति । अनिदनुबन्धानामिति ज्ञापकेन वेपथुरिति भावेऽर्थे अथु-प्रत्ययः ।

**शिडिति शादयः [2]३।८।३१**

शादयः शषसह् इति शब्दस्य वर्णसमाम्नायप्रसिद्धिः शादिप्रतिपत्त्यर्थ-त्वात् ।

**सम्प्रसारणं य्वृतोऽन्तःस्थानिमित्ताः [3]३।८।३२**

इज्यत इत्यादि यजिवपिग्रहीणामेतानि रूपाणि स्वपिवचियजादीनामित्या-दीनामिति सम्प्रसारणं यकारस्य इकारः, वकारस्य उकारः रेफस्य ऋकारः । गुरुसंज्ञापरिग्रहो वैचित्र्यार्थः । तपरकरणमसन्देहार्थमिति । अस्यौकारस्येति योऽन्तस्थायाः स्थाने न विहितस्येत्यर्थः । किमित्वेनेत्यादि । यदि तिष्ठतेरित्वे कृते सत्यां सम्प्रसारणसंज्ञायां दीर्घत्वं स्यादित्वं विफलं स्यात् । अत इत्व-विधानसामर्थ्यादेव [4]दीर्घो न भविष्यतीत्येवं यदि न मन्यसे तदा मैवं मंस्थाः [5]यतो अस्तीत्वविधानस्य फलं किम्, तदित्याह— सिज्लोप इति । इत्वविधाने सति ह्रस्वश्चानिट इति सिज्लोपः सिध्यति । ततो न ततः इट्त्वविधानाद् दीर्घो निवारयितुं शक्यते, तदाह— दीर्घः ([6]तु भवेदिति तस्मादन्तस्थानिमित्ता इति कर्तव्यम्, अन्तस्थाया) इति स्थानषष्ठी व्याख्याने सति निमित्तग्रहणं विस्पष्टार्थमेव ।

---

१. व्यवहारागमं विधत्ते । (भं०)
२. ३।८।३२ (दु० वृ०)
३. ३।८।३३ (दु० वृ०)
४. दीर्घम् (भं०)
५. अतो (भं०)
६. न्यूनपाठः (वा०)

**अरपूर्वे ई सन्ध्यक्षरे च गुणः [1]३।८।३३**

अर् इत्ययं शब्द इत्येतेनारः पूर्वे अर्पूर्वे इति नायं तत्पुरुष इति दर्शयति अन्यथा तस्य उत्तरपदार्थप्रधानत्वादर् संज्ञा न स्यात्। मा भूदिति चेत् तर्हि करोतेरित्यरो गुणशब्दोच्चारणेन विधानं न भवेत्। पूर्वशब्दस्यावधिमव्यपेक्षत्वात्, कुतस्ते पूर्वे सन्ध्यक्षरे इत्याह—पूर्वे चार इति अरः सन्निधानात् तदपेक्षं पूर्वत्वमित्यर्थः। तानीति, स च ते च तानि चेति नपुंसकैकशेषः।

**आरुत्तरे च वृद्धिः [2]३।८।३४**

वर्णपाठापेक्षया ए ओ इत्येताभ्यां पर इत्ययमर्थः। पूर्वे सन्ध्यक्षरे ए ओ इत्येते इहापेक्षेते तेन तदापेक्षयोत्तरे सन्ध्यक्षरे ऐ औ इह संज्ञिनी एवं व्याख्यायमाने सति ऐ औ इत्येते उत्तरे द्वे सन्ध्यक्षरे लभ्येते। तानीति पूर्ववन्नपुंसकैकशेषः।

[3]आख्यातप्रकरणे षुट्पादोऽष्टमः।

---

१. ३।८।३४ (दु० वृ०)

२. ३।८।३५ (दु० वृ०)

३. इति भट्टोग्रभूतिकृते शिष्यहितान्यासे शिष्यालोकाभिधाने आख्यातप्रकरणे अष्टमः पादः। (मं०)

# कृत्प्रकरणम्

## प्रथमः पादः

**सिद्धिरिज्वद् ञ्णानुबन्धे ४।१।१**

इचीवेज्वदिति । सप्तम्यन्तादिच्छब्दाद्वतिप्रत्ययोऽयमुपमेयस्य सप्तम्यन्तत्वादिति दर्शयति । स्वरूपभङ्गप्रसङ्गाच्च गत्वस्याप्रवृत्तिः । अन्तर्वर्तिनीं विभक्तिं प्रत्ययलक्षणेनाश्रित्य [1]तृतीयादेशप्रवृत्तेः स्वरूपभङ्गानवभास इत्यसौ भवत्येव । जागुः कृत्यशन्तृव्योरित्यतः कृतीत्यनुवर्तते इति सिंहावलोकितन्यायेनेति शेषः । तेन च कृतीत्यनुवर्तमाने ञ्णानुबन्धः प्रत्ययो विशेष्यते तथा च तद्धिते व्यावृत्तिः [2]अथवा ञकारानुबन्धस्यान्यस्यासम्भवात्कृदेव गृह्यत इति तत्साहचर्यात् णकारानुबन्धोऽपि कृदेव ञकारानुबन्धे णकारानुबन्धे च कृति प्रत्यये पर इति ञ्णानुबन्ध इत्यस्य बहुव्रीहिः प्रत्ययोऽन्यपदार्थः। ये तु ञ्णोऽनुबन्ध इति पदद्वयं व्याचक्षते तान्प्रति ञकारणकारयोः अनुबन्धयोः परत्वासम्भवे अस्यार्थात् तद्वतः प्रत्यस्य परत्वं विज्ञायते । धातोरिज्वत् कार्यं भवतीति । ञ्णानुबन्धस्य कृतः धातोरेव विधानात् धातोरित्युक्तम् । इचि यदुक्तमिति प्रातिपद्येनोच्चार्य इच्-प्रत्ययं यदिचि परतो विहितं कार्यं तदत्रादिश्यत इत्यर्थः, तेन घात आय इत्यत्र हन्तेरिणश्च यथाक्रमं वधिगादेशाविज्वद्भावान्न भवतः । नहि ताविचमुच्चार्य विहितावद्यतनी सं शब्दनेन विधानात् सिद्धिग्रहणं मङ्गलार्थमिति । तथा चाहुः—मङ्गलादीनि मङ्गलमध्यानि मङ्गलावसानानि च शास्त्राणि प्रथन्त इति । यद्वा प्रकरणमिदमन्येन केनापि प्रणीतमिति [3]इचप्रकरणारम्भे मङ्गलार्थमादौ सिद्धिशब्दं प्रणीतवान् ।

**हन्तेस्तः ४।१।२**

ञकारणकारानुबन्धे कृति पर इति । तेनेह न भवति भ्रौणघ्नः वार्त्रघ्नः इति भ्रूणं हतवान् वृत्रं हतवानिति क्विप् ब्रह्मभ्रूणवृत्रेष्विति क्विप्, ततस्तस्येदमित्यत्रार्थेऽण्प्रत्ययः आदिवृद्धिः, अवमसंयोगादित्यादिना अकारलोपः,

---

१. तृतीयादेशे तु प्रवृत्ते (भं०)

२. यदा (भं०)

३. मनिच्प्रकरणारम्भे (वा०)

हनेर्ह्धिरिति घत्वम्। यद्येवम्, ब्रह्महत्यामित्यत्र यणि परतः तत्वं न प्राप्नोति, प्रकीर्तितग्रहणान्न भविष्यति। श्तिपानिर्देशो धातुस्वरूपप्रतिपत्त्यर्थः।

**न सेटोऽमन्तस्यावमिकमिचमाम् ४।१।३**

सेटो धातोरितीटं प्रति धातोरपि निमित्तभावोऽस्तीति सेट इति धातोः विशेषणं न विरुध्यते। वमिकमिचमामिति प्रतिषेधो न भवतीति। एतेनावमिकमिचमामिति वाक्यभेदेनैतदत्राभिसम्बध्यते। नत्वेतत् कस्यचिद्विशेषणं घटत इति दर्शयति। तेन नकारः प्रतिषेधवाची, इज्वत् कार्यप्रतिषेधः प्रतिषिध्यमानः वमिकमिचमः प्रतिषेधभाज इत्यवयवार्थोऽत्र वाक्ये मन्तव्यः। ननु शमः शमकः इत्यादौ प्रत्ययस्य स्वरादित्वादिडागमस्य प्रसङ्ग एव नास्तीति सेटो निषेध उच्यमानः कथमत्र विषये स्यादित्याह—यद्यपीत्यादि प्रत्ययान्तरे ये सेटो धातवो दृष्टाः तेषामयमर्थान्निषेधः, अन्यथा सेट इति विशेषणोपादानमपार्थकं स्यादिति भावः। भवतश्च शमितमी प्रत्यान्तरे सेटो शमिता तमितेत्यादिप्रयोगदर्शनात्। यद्येवमित्यादि। उद्यमनमुपरमणमिति भावे घञ्, नहि यमिरमी सेटाविति। अतो निषेधाभावात्तयोरुपधादीर्घः स्यादिति भावः। अन्तग्रहणं विस्पष्टार्थम्, तेनेह न भवतीति, किं न भवति, अवमिकमिचमामिति प्रतिषेधः तेन न सेटोऽमन्तस्येत्यस्यैव प्रतिषेधस्य प्रवृत्तेः परिचम इत्यत्र दीर्घो न भवति। सफलक्षमणवामादेर्कुरोः कामुकात् मैथुनेच्छायामिति च ज्ञापकद्वयादिज्वद्भावनिषेधाभावो धातुकार्थविषय एव स्यात् प्रत्ययान्तरे त्विज्वद्भावनिषेधः भवेदिति यमिकमिग्रहणं कथम् आम इति भौवादिकस्यामगतावित्यस्यैतद्रूपमिति मन्यते। तथा चेह प्रतिषेधो ह्यत्र प्राप्नोतीति, किं तर्हि अम रोग इत्यस्य चौरादिकस्येति। यद्येवम्, मानुबन्धानां ह्रस्व इति ह्रस्वोऽस्य प्राप्नोति, न भविष्यति, नान्येऽमितो हेताविति मानुबन्धत्वनिषेधात्। एवं च सति भौवादिकस्याम इत्येव भवति कथं विश्राम इति प्रतिषेधोऽत्र न भवतीति प्रश्नार्थः। असाधुरेवायं प्रयोग इति। एवकारेणैतद् दर्शयति यथा नञा निर्दिष्टपरिभाषयात्रेज्वद्भावनिषेधो न भवतीति न वाच्यम्, सर्वथास्यासाधुत्वात्। तथा चाहुः—एवमादिकं प्रयोगमन्याय्यमेव मन्यन्त इति। कविप्रयोगात्तु शब्दानां [1]प्रयोगे सति विप्लवेत सर्वमेतत्।

**सार्वधातुकवच्छे [2]४।१।४**

अनुबन्ध इत्यत्रानुवर्तत इति। नत्वन्यपदार्थं प्रति गुणाभावमापन्नः पूर्व-

१. साधुत्वे सति सर्वमेव विप्लवेत् (भं०)
२. ४।१।५ (दु० वृ०)

मनुबन्धशब्दः कथमिह स्वातन्त्र्येणानुवर्तयितुं शक्यते, उच्यते—न-पूर्वकोऽनुबन्ध शब्द [1]इहानुवर्तयितुं शक्यते। किं तर्हि कृत्प्रकरणात् कृति शे प्रतिदेशोऽयं विज्ञायते न च कृत्संज्ञकः शकारः क्वचिदस्ति इत्यर्थाच्छकारवान् कृत्संज्ञको गृह्यते। यश्च कृत्संज्ञकः शकारवांस्तस्य शकारः सर्वत्रानुबन्धः कार्यार्थमासक्तस्य सतस्तस्योच्चारितप्रध्वंसित्वादनुबन्धानपायादित्यर्थाक्षिप्त इहानुबन्धशब्दोऽनुवर्तत इत्युक्तम्। उत्तरसूत्रयोश्चेति। अनेनैव न्यायेनोत्तरस्मिन्नपि योगद्वयेऽनुबन्धशब्दानुवृत्तिर्योजनीया इत्यर्थः। तत्र तर्हि ङकारमात्रं ककारमात्रं वा प्रत्ययोऽस्ति। ननु सार्वधातुकं श इत्येव कस्मान्न क्रियते, शकारानुबन्धवांश्च कृत्संज्ञकः सार्वधातुकं न भवति। इति परार्थे शब्दप्रयोगादन्तरेणापि वतिमतिदेशोऽवगम्यत एवेति किं वतिनिर्देशेन, अस्त्येतत्, सर्वसादृश्यार्थस्तु वतिनिर्देशः। तेनातिदेशप्रापितानां कार्याणां साङ्कर्यं न भवति। इति यस्य यदुक्तं तस्य तदेव प्रवर्तते, न तु तदन्यस्य।

**ङे न गुणः** [2]४।१।५

ङे इत्यत्राकार उच्चारणार्थः, एवं के इत्यत्रापि च। नन्वकारोऽस्त्येव प्रत्ययः। सत्यम्। अस्ति न तु तस्यैवोत्तरग्रहणं क्तादीनां कानुबन्धकरणानर्थक्यप्रसङ्गात्। गुणो न भवतीति। धातुविकरणयोरिति शेषः। न सेटोऽमन्तस्येत्यस्यानन्तरं ङे न गुण इति न कृतं वैचित्र्यात्।

**के यणवच्च योक्तवर्जम्** [3]४।१।६

योक्तं वर्जयित्वेति। कृत्ययुटोऽन्यत्रापीति णं प्रत्ययः ततो मान्तस्याव्ययत्वाच्चेति सेर्लुक्। ये यकारे यदुक्तमित्यादि। यत्र यणि परतः कार्यं विधीयमाने सति य-इत्येतन्निमित्तत्वेनोपात्तं यथा यणाशिषोर्य इत्यादौ तत्र कर्तव्येऽतिदेशोऽयं न भवतीत्यर्थः। इह यण्वद्भावातिदेशस्य फलमुक्तं गुणाभावः सम्प्रसारणं च। यद्येवं के सम्प्रसारणमित्येव क्रियताम्। च शब्दाच्च न गुण इत्यनुवर्तिष्यते, तत्किं गुरुसूत्रकरणेन, उत्तरार्थं यण्वद्वचनमिति चेत्, किं तेनोत्तरत्र साध्यम्, गुण इति चेत् गुणग्रहणमेव तर्हि तत्र क्रियताम्, अस्त्येतत्, गौरवं तु स्यात्। यणं साक्षादुच्चार्य यद्विहितं कार्यं तदत्रातिदिश्यते। यदि तु यणि यत्सम्भवति तदस्यातिदिश्येत्, ततः संशीतिरित्यत्रायिर्य इत्यायिरादेशः स्यात्। यद्येवं ग्रहादीनां सम्प्रसारणं कानुबन्धेन प्राप्नोति यणमुच्चार्य

---

१. इहानुवर्तते (भं०)
२. ४।१।६ (दु० वृ०)
३. ४।१।७ (दु० वृ०)

विधानात्। सत्यम्, ज्ञापकाद् भविष्यति यदियं जिनातेर्यपि सम्प्रसारणप्रतिषेधं शास्ति गुणप्रतिषेधः तर्हि नातिदिष्टः स्यात् नहि तद्विधौ यणः साक्षान्निमित्तभावोऽस्ति, णकारानुबन्ध इत्येवं विधानात् तर्हि गुणनिषेधेन गुण इत्यस्य चकारानुवृत्त्या विज्ञास्यते।

**जागुः कृत्यशन्तृङ्व्योः [1]४।१।७**

यणवद्भावाद् यणाशिषोर्ये इत्यनेन गुण इति क्वचित् इज्वद्भावाद् वृद्धौ प्राप्तायां क्वचिच्च गुणनिषेधे प्राप्ते सति सर्वत्र यणवद्भावात् गुणः प्रवर्तते। गुणनिषेधस्तु नातिदेशस्य फलमितरथा हि यणवद्भावोपजीवनमपार्थकं स्यात्। गुणनिषेधस्य ङे न गुण इत्यस्यानन्तरमेतत् सूत्रप्रणयने सति सिद्धत्वात्। तदुक्तम्, भट्टमखभूतिपादैः यद्ययं गुणबाधनार्थः वाच्यः, ङे न गुणात्पर अभिप्रेतो गुणस्तस्माद् यणवद्भावं समाश्रयेदिति। जागृत इति द्वित्वलक्षणं गुणनिषेधमत्र बाधित्वा गुणः स्यात्। स कृतीति वचनान्न भवति। अशन्तृव्योरिति पर्युदासात् कृद्ग्रहणे लब्धे कृद्ग्रहणं पूर्वत्राकृतिकार्यप्रतिपत्त्यर्थम्।

गुणप्रतिषेधविषयत्वेन वा सादृश्यं यस्य प्रत्ययस्य तस्यैवासति कृद्ग्रहणे निमित्तत्वं स्यात्। ततश्च गुणप्रतिषेधविषय एव जागरित इत्यादावनेन गुणः स्यात्। वृद्धिविषये तु जागर इत्यादौ वृद्धिरेव भवेदिति कृतीति कर्तव्यं शन्तुः शकारानुबन्धस्य प्रत्ययोपलक्षणपरत्वाच्छानङ्ङानशोरपि प्रतिषेधः। कतीह जाग्राणाः व्यतिजाग्राणाः। पूर्वत्र शक्तिवयस्ताच्छील्य इति शानङ् अपरत्र कर्मव्यतिहारे आत्मनेपदम्। वर्तमाने शन्तृङिति आनश्-प्रत्ययः। ननु शन्तृप्रतिषेधविधावुपक्षीणः कथं शकारानुबन्धप्रत्ययोपलक्षणपरः स्यात्, [2]अक्तृ इति निर्देशे कर्तव्ये शकारानुबन्धकरणसामर्थ्यात् भविष्यति। विग्रहणेन वकारादेः प्रतिषेधं केचिदाहुः तेन जजागृवानित्यत्रापि न भवति क्वन्सुकानावित्यादिना क्वन्सुः प्रत्ययः, परोक्षावद्भावाद् द्विर्वचनम्, ये तु वि-प्रत्यय एव प्रतिषेधमाचक्षते ते क्वन्सोर्द्विककारकपाठबलाज्जागर्तेर्गुणाभावमाहुः।

**गुणी क्त्वा सेडरुदादिक्षुधकुशक्लिशगुधमृडमृदवदवसग्रहाम् [3]४।१।८**

गुणोऽस्मिन्नस्तीति गुणीति मन्त्वादिविधाविति करणात् सप्तम्यर्थेऽपीन्प्रत्ययः। गुणित्वविधीयमानं क्त्वाप्रत्ययो विधिभाक्, तद्विशेषणं सेडिति। एवमुत्तरत्राप्यवयवार्थः। अरुदादिक्षुधेत्यादिवाक्यभेदेन सम्बध्यते, अत्र चाय-

१. ४।१।८ (दु० वृ०)
२. अन्त् (भं०)
३. ४।१।९ (दु० वृ०)

अवयवार्थः नकारः प्रतिषेधवाची गुणित्वं प्रतिषिध्यमाणं क्त्वाप्रत्ययप्रतिषेधभाक् तस्य विशेषणमरुदादीत्यादिरुदादयो रुदविदमुषां सनीत्यत्र ये ते गृह्यन्त इति न गणस्था इति विशेषः। कुतः गणस्थेभ्यः परस्य क्त्वा-प्रत्ययस्य सत्यसति वा गुणित्वे विशेषाभावात्। निकुचितिरिति। कुच सङ्कोचने, कुचितमिति क्तिः, रुदादिमध्ये च ये [1]व्युपधाधातवो पठ्यन्ते तेषां व्युपधालक्षणो विकल्पो न भवति, इतरथा हि प्रतिषेधार्थेन किं स्यात्। सम्प्रसारणभावादिति तदभावस्त्वयजादित्वादाच्छादनार्थस्य, निवासार्थस्तु यजादिषु पठ्यत इति तस्य गुणित्वे सति विशेषोऽस्तीत्यसावेव गृह्यते।

स्कन्दिस्यन्दोः क्त्वा [2]४।१।९

स्यन्देरनुषङ्गलोपो न लुप्तः स्वरूपभङ्गप्रसङ्गात्। असेडर्थं तु वचनमिति सेटः क्त्वाप्रत्ययस्तस्य पूर्वेणैव सिद्धत्वादिति भावः। स्कन्त्वास्यन्त्वेति। [3]अत्र गुणित्वे सत्यनुषङ्गलोपो न भवति। क्त्वाप्रत्ययस्योच्यमानं गुणित्वं कथं [4]तदादेशस्य प्राप्नुयाद् इत्याह—स्थानिवद्भावाद् हि स्यादिति। तेन पुनः क्त्वाग्रहणात् [5]क्त्वायाः क्त्वारूपो न तु विकारमापन्नः तस्य गुणित्वमिति यवादेशस्य तन्न भवति यदि स्यादनुषङ्गलोपः तस्मिन्परे न [6]भवेत्।

तृषिमृषिकृषिवञ्चिलुञ्च्यृतां च [7]४।१।१०

ऋतिः सौत्र इह। सूत्रे भवः सौत्र इति। स च घृणायां वर्तते। ऋकारान्तास्तु धातवो न गृह्यन्ते, व्याख्यानात्। सेट् इति च विशेषणम् यथासम्भवमपि शक्यं विज्ञातुम्।

थफान्तानां चानुषङ्गिणाम् [8]४।१।११

थफामिति कर्तव्ये थकारफकारव्यक्तीश्च बह्वीरपेक्ष्य बहुवचने सिद्धेऽन्तग्रहणं विस्पष्टार्थम्। कोथित्वेति व्युपलधक्षणोऽप्यत्र विकल्पो न भवति, अनुषङ्गिग्रहणसामर्थ्यात्। थफान्तानामिति कर्तव्येऽनुषङ्गिग्रहणं वैचित्र्यार्थम्,

---

१. व्युत्पन्ना (भं०)
२. ४।१।१० (दु०वृ०)
३. तत्र (भं०)
४. यथा (भं०)
५. न्यूनपाठः (वा०)
६. स्यात् (भं०)
७. ४।१।१२ (दु० वृ०)
८. ४।१।१३ (दु० वृ०)

उत्तरार्थं कुतो नेति चेत्, न। तत्रापि अनिड्ग्रहणस्य कारणात्। नश्यर्थमपि नोपयुज्यते, नशेर्नकारागमाव्यभिचारात्।

**जान्तनशामनिटाम्** [1]४।१।१२

अञ्जित्वेति। अञ्जेः ऊदनुबन्धत्वाद्वेट्, अत्र गुणी क्त्वा सेडिति नित्यं गुणित्वम्।

**शीङ्पूङ्धृषिक्ष्विदिस्विदिमिदां च निष्ठा सेट्** [2]४।१।१३

निष्ठेति कृत्ययुटोऽन्यत्रापीत्यङ्-प्रत्ययः, आतश्चोपसर्गे इत्यनेन तु न भवति तस्य भावे पचिगापास्थाभ्य इति क्ति-प्रत्ययेन बाधित्वात्। शीङो ङानुबन्धनिर्देशः चेक्रीयितलुकि गुणित्वनिवृत्त्यर्थः। [3]शेशियतः शेशियतवानिति। अन्यथा हि प्रकृतिग्रहणे चेक्रीयितलुगन्तस्यापि ग्रहणमिति वचनादत्रापि गुणित्वं स्यात् शीङ् स्वप्ने, य-शब्दः, तस्य वा चेक्रीयितस्येति लुक्, द्विर्वचनम्, क्तक्तवन्तू, इडागमः, य-इवर्णस्येति यत्वम्, इह च क्त्वाप्रत्ययो निवृत्त इति तत्संबद्धं वेति निवृत्तम्।

**मृषः क्षमायाम्** [4]४।१।१४

क्षमायामिति किमिति मृषिधातुः तितिक्षायामर्थे पठ्यते, मृष तितिक्षायामिति। तितिक्षा च क्षमैवोच्यते, तत्किं क्षमाग्रहणेनेति प्रश्नार्थः, उपसर्गसम्बन्धादर्थान्तरवृत्तेर्मृषेर्माभूदिति आकूतेन प्रत्युदाहरति। अपमृषितवाक्यमाह इति मृषिरत्र पारुष्ये वर्तते, क्षान्ताविति तु न कृतं वैचित्र्यात्। अस्ति च क्षान्तिशब्दः, क्षमि क्षान्त्यामिति ज्ञापकात्।

**ह्लादो ह्रस्वः** [5]४।१।१५

अदिति कर्तव्ये ह्रस्वग्रहणमन्त्यस्य स्थानित्वं मा भूदिति।

**छादेर्घेऽद्व्युपसर्गस्य** [6]४।१।१६

अद्व्युपसर्गस्येति। बहुव्रीहिगर्भो नञ्समासः। प्रतिषेधावगमो व्याख्या-

---

१. ४।१।१४ (दु० वृ०)
२. ४।१।१५ (दु० वृ०)
३. शयितः शयितवान् (दुर्गवृत्ति)
४. ४।१।१६ (दु० वृ०)
५. ४।१।१८ (दु० वृ०)
६. ४।१।१९ (दु० वृ०)

नात् । [1]अनेकोपधस्य छादेः ह्रस्वो नेष्यत इति द्विशब्दात्परस्यादिशब्दस्य लुप्तत्वात् । द्व्याद्युपसर्गस्य निषेधविज्ञानात् द्व्युपसर्गनिषेधे तु द्व्युपसर्गस्य ह्रस्वः प्राप्नुयात् । समुपाभिच्छाद इति पुंसि संज्ञायां घः ।

**इस्सन्तु [2]४।१।१७**

अद्व्युपसर्गस्येति निवृत्तमिति । पृथग्योगारम्भात् सूत्रे तृ-शब्दोच्चारणादिति यदिदं त्रेति तकारोच्चारणं ततो ज्ञायते षकारसन्निधानापगमात् ठत्वे निवृत्ते तकार एवावतिष्ठत इति ।

**दीर्घस्योपपदस्यानव्ययस्य खानुबन्धे [3]४।१।१८**

दीर्घान्तस्येति दीर्घेणोपपदस्य विशेषणात् तदन्तविधिः । खानुबन्धप्रत्यये सतीत्युपपदस्य खानुबन्धप्रत्ययपरत्वासम्भवात् पर इति नोक्तम् । दीर्घग्रहणं दीर्घान्तत्वपरिप्रापणार्थम् । तेनेह न भवति, वाङ्मन्या । दीर्घेणोपपदस्य विशेषणाद् दीर्घान्तत्वपरिग्रहः सिद्धः इति चेत्, उपपदेन यदा दीर्घो विशेष्यते उपपदस्य यो दीर्घ इति तदा दीर्घोपधस्यापि स्यात् विशेषणविशेष्यभावं प्रति कामचारात् दीर्घेणोपपदं विशेषयिष्यामः न तूपपदेन दीर्घम् । ततोऽयमदोष इति चेत् प्रतिपत्तिगौरवं स्यात् । अनुबन्धग्रहणं किम् ? इह मा भूत् मूषिकैव खनति मूषिकखानी कर्तर्युपमान इति णिनिः प्रत्ययः ।

**नामिनोऽम्प्रत्ययवच्चैकस्वरस्य [4]४।१।१९**

प्रत्ययवदिति प्रथमान्तत्वाद्वतेः उपमेयस्य सः प्रथमान्तत्वात् । तदाह—स च प्रत्ययवदिति । प्रत्ययशब्दस्य सामान्यशब्दत्वात् किं प्रत्ययवदागमो भवतीति विशेषणावधारणात्, पृच्छति, अथ किं प्रत्ययवदिति । उच्यत इत्यादिनोत्तरयति । अयमत्रार्थः । असौ बुद्धौ परिस्फुरतो प्रत्यासन्नं प्रत्ययग्रहणं सान्निध्यादमुमेव प्रत्ययं प्रतिपादयति । न प्रत्ययान्तरम् तस्य परिस्फुरणात् दवीयसी हि प्रत्ययान्तरविषयाप्रतिपत्तिः, नेदीयसीत्वम्प्रत्ययविषया एवमपीत्यादि । अम्प्रत्ययवदागमो भवतीत्ययमागमो भवतीत्युपगतेऽपि कस्यामः प्रत्ययस्य ग्रहणम्, द्वितीयैकवचनस्याख्यातिकस्य वा, अत्राह—द्वितीयैकवचनस्येति । अत्र च व्याख्यानं हेतुः कथमित्यादि आगमलिङ्गा-

---

१. अनेकोपसर्गस्य (भं०)
२. अपूर्णमिदं सूत्रं दुर्गवृत्तौ नोल्लिखितञ्चापि ।
३. ४।१।२० (दु० वृ०)
४. ४।१।२१ (दु० वृ०)

भावादयमादेशो नामिनः कस्मान्न व्याख्यायत इत्यर्थः । यदीत्यादि । यद्यादेशपक्षो व्याख्यायते प्रत्ययवदतिदेशो विफलः स्यात्, अमादेशे नामिना विहिते [1]सत्यप्रतिबद्धानां कार्याणां स्थानिनो भावात् अप्रवृत्तेः । इह श्रियमात्मानं ब्राह्मणकुलं मन्यत इति विगृहीते सति श्रिमन्यमिति भवितव्यम्, न तु श्रियंमन्यमिति कुतः, परित्यक्तलिङ्गस्य श्रीशब्दस्य ब्राह्मणकुले वृत्तिं स्मरन्ति, एवं सति नपुंसकह्रस्वत्वे कृते नपुंसकलक्षणागमस्यामो शब्दस्य लोपः प्रवर्तते न चैकपदाश्रयत्वादन्तरङ्गे लोपे कर्तव्ये बहिरङ्गो मागमः असिद्धः, तत्कथं तस्य लोपः स्यादिति वाच्यम्, बहिरङ्गासिद्धपरिभाषाया इहाग्रहणात् । तथा चारुन्तुद इत्यत्र संयोगादेर्वुट इति सलोपः सिद्धः । परिभाषापरिग्रहे तु मकारस्यासिद्धत्वादसति संयोगादित्वे मलोपो न स्यात् । ज्ञां मन्य इति जानातीति ज्ञः, नाम्युपधेत्यादिना कः स्त्रियामादाप् ह्रस्वस्यागमो न बाधितत्वादिति परत्वाद्विशेषविहितत्वाच्च ।

**ह्रस्वारुषोर्मोऽन्तः** [2]४।१।२०

स्वरिति कर्तव्ये अन्तग्रहणमन्यत्रापि मकारागमार्थम् । तेनोष्णं भद्रयोरित्याद्युपपन्नं भवति । एवं धेनुभव्या । कर्मधारयोऽयम् । भविष्यन्ती धेनुः, धेनुं भव्येति उच्यते । भव्येति हि कर्तरि कृत्य-प्रत्ययः, अनभ्यासमित्यः, अनभ्याशं दूरमित्यमस्येति विग्रहः । दूरात् परिहर्तव्यः इत्यर्थः । भ्राष्ट्रमिन्ध [3]अग्निमिन्धः श्येनंपाता क्रीडा, तैलंपाता क्रीडा । श्येनः पातोऽस्यां क्रीडायां वर्तत-इत्यादि विग्रहे कृते पतेर्भावघञन्तादेवमादेरणिष्यत इति अणत्र बोद्धव्यः, ई-प्रत्ययस्त्वजादिदर्शनान्न भवति ।

**सत्यागदास्तु निकारे** [4]४।१।२१

उपपदस्येति निवृत्त्यर्थम् । तेनेहापि भवति सत्यस्य कारः सत्यंकारः इत्यादावुपपद(ग्रहणे त्वभिसम्बध्यमानेऽत्र न स्यात् शास्त्रीयस्योपपद)त्वस्य घञन्तेऽकारशब्दे सत्यादीनामभावात् । अणन्त एव हि कार-शब्दे एषामुपपदत्वं कर्मण्युपपदेऽणो विधानात् ।

---

१. सत्यं प्रत्यत्र प्रतिबद्धानाम् (मं०)
२. ४।१।२२ (दु० वृ०)
३. न्यूनपाठः (वा०)
४. सत्यागदास्तूनां कारे ४।१।२३ (दु० वृ०)

**गिलेऽगिलस्य** [1]४।१।२२

मूलविभुजादिभ्यश्चेति क इति। अनेन कर्मोपपदे सर्वत्र कः प्रत्ययः अन्यथा त्वण्-प्रत्ययः स्यात्। यत्र तु कर्म नोपपदं निगिल इत्यादौ तत्र नाम्युपधेत्यादिना कः।

**उपसर्गादसुदुर्भ्यां लभेर्भात् खल्घञोः** [2]४।१।२३

प्राचि देशे प्राक्पुरस्तादयश्चेति। निपातनादस्तातेरुत्पन्नस्य लुक्, अव्ययञ्चैतत्। उपसर्गादिति किमिति गूढाशयः प्रश्नः। आशयं प्रकटीकर्तुमाह—अथेत्यादि। एवं च किमत्रोपसर्गग्रहणेन कृतमिति भावः। अत्रोच्यत इत्यादिना समाधानमाह—तद्गतार्थम्। सुलभः दुर्लभः इति खलि प्रत्युदाहृतम्, घञ्यपि प्रत्युदाहर्तव्यम्। सुलाभः दुर्लाभः इति। अत्र खल् न भवति सुदुरोरकृच्छार्थाभावात्। अत्र हि अधिक्षेपो निन्दा च सुदुरोः प्रतीयते। तद्यथा [3]किं सुषिक्तं तवात्र दुर्ब्राह्मण इति। केवलाभ्यां सुदुर्भ्यां प्रतिषेधः स्मर्यंत इति तथा चाहुः—न सुदुर्भ्यां केवलाभ्यामिति। एवं चोपसर्गसाहित्ये सत्यनिषेधः। अतिसुलम्भः। अतिदुर्लम्भः। अतिसुलभातिदुर्लभयोस्त्वभिहितेऽपि परिहारे परिहारान्तरं व्याचक्षते। नात्रोपसर्गसंज्ञोऽतिशब्दः, किं तर्हि, कर्मप्रवचनीयसंज्ञः। कर्मप्रवचनीयसंज्ञा चोपसर्गसंज्ञां बाधत इति पूर्वाचार्यः। तेनातिसुलभमतिदुर्लभमित्यत्र कर्मप्रवचनीयत्वादतः सुदुरौ केवलावेवेति प्रतिषेध एव भवति।

**वा कृति रात्रेः** [4]४।१।२४

कृत्यप्रत्यये सतीति। अन्तग्रहणानुवृत्त्या कृत्प्रत्ययान्ते सतीति। अन्तग्रहणानुवृत्त्या कृत्प्रत्ययान्ते सतीति बोद्धव्यम्। ननु रात्रिशब्दस्य कृतागमसम्भवादर्थात्प्रत्ययान्ते सतीति ज्ञाप्यते। तत्किमन्तग्रहणानुवृत्त्या नैतत् यदा हि रात्रिशब्दादाचारेऽर्थे विप्रत्ययः क्रियते तदा तस्य धातुत्वादस्ति कृतां सम्भवः। अप्राप्तविकल्पश्चायम्। खानुबन्ध इति हि निवृत्तम्, तदनुवृत्तौ तु ह्रस्वान्तत्वान्नित्यं प्राप्तिः स्यात्। खानुबन्धे तु रात्रेर्नित्यं मकारागमः। रात्रिम्मन्यमह इति। नत्वनेन परत्वाद्विकल्पः स्यात्। वा शब्दस्य व्यवस्थितविभाषाविज्ञानान्न भविष्यति। प्रखाय प्रखन्येत्यादाविति खनेः क्त्वो यवादेशः।

---

१. ४।१।२४ (दु० वृ०)
२. ४।१।२५ (दु० वृ०)
३. सुषिक्तं किं तवात्र (भं०)
४. ४।१।२८ (दु० वृ०)

आदिग्रहणात् प्रजाय प्रजन्येत्यादयः । खनेः खायते खन्यत इति सार्वधातुके यण् ।

**पुरन्दरवाचंयमसर्वंसहद्विषंतपाश्च** [1]४।१।२५

साधुत्वेन कथ्यन्त इत्यर्थ इति निपात्यन्ते साधुशब्दग्रहणमध्ये प्रक्षिप्यन्त इत्यतो निपात्यन्त इत्यस्य फलतः साधुत्वकथनमर्थो भवति । पुरपूर्व इति पुरशब्दः क्विब्भ्राजि इत्यादिना पॄणातेः क्विबन्तः ।

**धातोस्तोऽन्तः पानुबन्धे** [2]४।१।२६

ननु पानुबन्धेन कृता धातुराक्षिप्त इति तस्य धातोरिव विधानादिति भावः । न च कदाचिकीर्षतेः क्विप् कदाचिकीरिति प्रत्ययधातुनिवृत्त्यर्थं धातुग्रहणमुपयुज्यते सन इकारलोपे सत्यह्रस्वान्तत्वात् ([3]तकारान्तस्याप्रसङ्गात् नापि भावयतेः क्विन् भोरित्यादाविन्नन्तस्य भावे ह्रस्वान्तत्वात् असति धातुग्रहणेऽस्तिप्रसङ्गः । अनवकाशस्य कारितलोपस्य प्रवृत्तेरह्रस्वान्तत्वादित्याशङ्क्योक्तं तदनर्थकं धातुग्रहणमिति । असदेतदित्यादिनोत्तरयति । उपपदप्रकरणत्वादिति प्रकरणानामवच्छेदकत्वात् । ग्रामणीरित्यादावुपपदस्यैव प्रकरणोपात्तस्य ह्रस्वान्तस्य स्यान्न तु धातोरितिभावः । [4]इह प्रेत्य परेत्य इत्यादौ कथं तकारागमः यावता पूर्वं धातूपसर्गेण युज्यत इत्यत्र दर्शने धातूपसर्ग-सम्बन्धस्यान्तरङ्गत्वात् तन्निमित्ते सन्धिकार्ये प्रवृत्ते सति ह्रस्वो नैवास्ति । एकपदविषये अन्तरङ्गागमे कर्तव्ये पदद्वयविषयस्य बहिरङ्गस्य सन्धिकार्यस्यासिद्धत्वात् । ह्रस्वसतेति चेत् न । स्वरानन्तर्ये मघोनामिति निर्देशादसिद्धपरिभाषायाः अप्रवृत्तेः एवं तर्हि पूर्वं धातुः साधनेन युज्यत इतीदमप्यस्ति दर्शनम् । अत्र च दर्शने साधनाधीनत्वात् क्रियायाः प्रत्ययनिमित्तं कार्यमादौ प्रवर्तते । तथा च प्रत्यय इति निर्देशः [5]अन्यथा अत्रापि पूर्वमुपसर्गयोगे सति समानदीर्घत्वप्रवृत्तस्य परनिमित्तादेशपरिभाषया धातुव्यपदेशाद् गुणे सति प्रत्यय इति रूपं स्यात् । तस्मात् प्रेत्येत्यादौ तकारागमे सति सन्धिकार्यप्रवृत्तिः । सेनानिकुलं वृत्रहत्यामित्यादौ तु तकारागमेऽन्तरङ्गे कर्तव्ये बहिरङ्गस्य नपुंसकह्रस्वत्वस्य नकारलोपस्य चासिद्धत्वात् अह्रस्वान्तत्वादागमाभावः ।

---

१. ४।१।२९ (दु० वृ०)

२. ४।१।३० (दु० वृ०)

३. न्यूनपाठः (वा०)

४. इत्यपरेत्यादौ (भं०)

५. अन्यच्च (भं०)

**वेर्लोपोऽपृक्तस्य [2]४।१।२७**

पृच्यते स्मेति क्तः प्रत्ययः, न पृक्तोऽपृक्तः, वर्णान्तरेण न युक्त इत्यर्थः। क्विबादीनामिति। आदिग्रहणेन विड्वनोर्ग्रहणात् जागृविरिति गृशृसृजागृभ्यः क्विनिति क्विन्। इकारोऽस्य प्रयोगसमवायीत्यपृक्तत्वाभावः। अत्र च यदि लोपः स्यात् ततः प्रकृतिरेव प्रत्ययं ब्रूयात्।

**य्वोर्व्यञ्जनेऽये [3]४।१।२८**

कण्डूयतेः क्विप्, लोलूयतेः क्विप्, कण्डूः लोलूरित्यत्र यद्यपि नित्यत्वात् क्विपि लुप्ते व्यञ्जनाभावाद् य-लोपो न प्राप्नोति, तथापि प्रकृत्याश्रयत्वेनान्तरङ्गात्पूर्वं यलोपः यकारसहचरितस्य वकारस्यापि दन्त्यौष्ठस्य ग्रहणाल्लब्ध इत्यादौ ओष्ठ्यस्य न भवति। वृक्षं करोतीत्यत्र तु न भवति कृतीत्यनेनाभिसम्बध्यमानेन व्यञ्जनस्य विशेषणात् वृक्षं वृश्चतीति वृक्षवृट् व्रश्चेः क्विपि सम्प्रसारणम्, तमाचष्ट इति इन्कारितं च धात्वर्थे इतीन् अन्त्यस्वरादिलोपः विट् कारितलोपः।

**निष्ठेटीनः [4]४।१।२९**

नन्विन्नन्तान्निष्ठायामिडागमो व्यभिचारीत्यर्थादित्येव कार्यं विज्ञास्यत इति किमिड्ग्रहणेन, संज्ञापित इत्यत्र ज्ञापेस्सनि वेट्त्वान्निष्ठायामिडभावान्निष्ठामात्र इनो लोपो मा भूदित्येवमर्थमिड्ग्रहणमिति चेत्, न वेण्निबन्धनस्य संज्ञापित इत्यत्रेटि निषेधस्याप्रवृत्तिः। स हि निषेधो वेडामेकस्वराणां विज्ञायते। अन्त्यादिसूत्रान्नडीडादिसूत्रम् एकस्वरग्रहणस्यानुवृत्तेः। तथा दरिद्रात इत्यत्र दरिद्रातेस्सनि वेटोऽपि निषेधो न प्रवर्तत इति तस्मात् संज्ञापित इत्येतदप्रत्युदाहरणमिड्ग्रहणस्य। इडागमस्यात्र प्रवृत्तेरित्यपार्थकमिड्ग्रहणम्, नापार्थकम्, कालावधारणार्थत्वात्। कालोऽत्रावधार्यते इटि कृते इनो लोपो यथा स्यात्। अकृते तु मा भूत्। इतरथा हि कारितमित्यादाविन्लोपेडागमयोः प्राप्तयोः कृताकृतप्रसङ्गित्वेन नित्यत्वादिनि लुप्ते सत्येकदेशविकृतस्यानन्यत्वात् करोतेरेवायमिति ऋवर्णान्तलक्षण इट् प्रतिषेधः स्यात्। निष्ठेटीति तु कृते विहिते इटीनिलुप्ते कृतकार्यत्वात् प्रतिषेधो न प्रवर्तते।

---

२. ४।१।३४ (दु० वृ०)

३. ४।१।२८ (दु० वृ०)

४. ४।१।३५ (दु० वृ०)

**नालिवच्ण्वाय्यान्तेत्नुषु** [1]४।१।३०

गृहयालुः स्पृहयालुरिति । अदन्तत्वादुपधागुणाभावः । आयिरिति कर्तव्येनेति वचनं वैचित्र्यार्थम् ।

**लघुपूर्वो अय्यपि** [2]४।१।३१

विगणय्येति गणेरदन्तत्वादुपधादीर्घाभावः । नन्वित्यादि एष्वित्यनेन प्रशमय्येत्यादीन्युदाहरणानि प्रत्यवमृश्यन्ते । व्यवधानादिति सकारादिवर्णेन ।

**मीनात्यादिदानीमा** [3]४।१।३२

मीनात्यादयो दाददाश्च सौत्राणि गृह्यन्ते । प्रत्यासत्तेः तत्र मीनात्यादीनां गुणस्थानत्वान्मीनातिमिनोतिदादीनामित्यादिना आत्वं न सिध्यति इति विधीयते दादानां त्वीत्वे प्राप्ते वचनम् । पूर्वकमादिग्रहणं दा-शब्देनैवादि-शब्दस्य सम्बन्धाशङ्का माभूदिति ।

**क्षेर्दीर्घः** [4]४।१।३३

क्षि क्षय इत्यस्येति । रूपमात्रोपलक्षणपरमेतत् । क्षि निवासगत्योः । क्षीष् हिंसायां क्षि हिंसायामित्येतेषामपि हि ग्रहणमिष्यते ।

**निष्ठायां च** [5]४।१।३४

भावकर्मणोरर्थयोर्न भवतीति लक्ष्यानुरोधात् दीर्घस्यानित्यत्वस्मरणात् कर्तर्यधिकरणे च नित्यं दीर्घत्वम् । भावकर्मणोस्तु नैव कर्तरि । क्षीणः क्षीण-वानित्याद्युदाहृतम् । अधिकरणे प्रक्षीयतेऽस्मिन्निति प्रक्षीणमिदं वृषलस्य । अकर्मकेभ्योऽधिकरणे क्तः प्रत्ययः स्मर्यते । भावे क्षयणे क्षितम्, कर्मणि प्रक्षितः । अन्तर्भावितेन्नर्थोऽयं क्षयार्थः क्षिधातुः । प्रयोज्येन कर्मणा सकर्मकः कर्त्र्यधिकरणयोरपि विकल्पं स्मरति ।

**स्फायेः स्फी** [6]४।१।३५

निष्ठाग्रहणमनुवर्तते, न तु यपीति । विशेषातिदिष्टा परिभाषाया हि

१. ४।१।३७ (दु० वृ०)
२. ४।१।३८ (दु० वृ०)
३. ४।१।३९ (दु० वृ०)
४. ४।१।४० (दु० वृ०)
५. ४।१।४१ (दु० वृ०)
६. ४।१।४२ (दु० वृ०)

लक्ष्यानुसारित्वादत्र नाश्रीयते। निष्ठायां स्फायादेशे कृते इवर्णान्तलक्षण एवेटः प्रतिषेधो भविष्यतीति। स्फायेरीदनुबन्धकरणमादेशविकल्पसूचनार्थम् तेन स्फातः स्फातवानित्यपि सिद्धं भवति यद्यभिधानमस्ति।

**प्यायः पी स्वाङ्गे** [1]४।१।३६

स्वाङ्गे-वर्तमानस्य [2]प्यायी ओप्यायी वृद्धावित्येतस्येति कथं पुनः प्यायिधातुः स्वाङ्गे वर्तते। अर्थद्वारेण तेन स्वाङ्गे विषये धात्वर्थे वर्तमानस्य प्याय इति बोद्धव्यम्। स्वाङ्गमद्रवं मूर्तिमदित्येतद् गृह्यत इत्युभयपक्षसम्भवः इष्टपरिग्रहात्। आङ एवान्धूधसोर्यथा स्यादिति अन्धूधसोरेवाङ इत्येवमप्यत्र नियमो द्रष्टव्यः। तथा चाप्यनः चन्द्रमा इत्यत्र न भवति। प्रप्यानमूध इति व्वोर्व्यञ्जन इति यलोपः।

**शृतं पाके क्षीरहविषयोः** [3]४।१।३७

क्षीरहविषयोरर्थयोः पाके गम्यमाने इति तेन क्षीरहविषयोरर्थत्वम् पाकस्य च गम्यमानत्वमिति दर्शयति। तेन पक्वं यत् क्षीरं हविश्च तच्छृतशब्दस्य वाच्यं भवति, या श्रातिस्सेति गत्यर्थाकर्मकेत्यादिना श्रातेरकर्मकत्वात् कर्तरि क्तः। इन्नन्तस्यापि श्रातेर्निपातनमेतत् स्मर्यते, शृतं क्षीरं हविर्वा देवदत्तेनेति। श्रातेरिनि पकारागमे कृते मानुबन्धानां ह्रस्वः, ततः श्रप्यते स्मेति कर्मणि क्तः, श्रपेश्च शृभावः, कथं पुनः पाकविषये निपातनं क्रियमाणं श्रातेः केवलस्येन्नन्तस्य च लभ्यते। उभयथापि पाकार्थस्य सम्भवात् केवलो हि श्रातिः कर्मकर्तृविषयस्य पचेरर्थे पच्यमानकर्तृके वर्तते, यदपि कर्तृव्यापारे श्रातेः कारितमुत्पत्स्येत् तदा पचतीत्यस्य योऽर्थः स श्रयतीत्यतोऽवगम्यते। एवं च सति श्रातिः केवल इन्नन्तश्च पाकमर्थं वक्तुं शक्त इति। तत्र निपातनं क्रियमाणमुभयथापि पाकार्थस्य सम्भवात् भवति यदा तु पक्तुर्यः प्रयोजनकः तदीये प्रेषणादिलक्षणे व्यापारे श्रपेरपरं कारितुमुत्पत्स्यते तदा पाचनलक्षणार्थस्य प्रतीतेः पाकार्थस्याभावान्निपातनं न भवत्येव। श्रपितं क्षीरं देवदत्तेनेति यज्ञदत्तेनेति।

**प्रस्त्यस्सम्प्रसारणम्** [4]३।१।३८

प्रेषणयुक्तः स्त्यः प्रस्त्यः, प्रस्तीतः प्रस्तीतवानिति। अत्र प्रकृत्याश्रय-

---

१. ४।१।४३ (दु० वृ०)
२. स्फायी (भं०)
३. ४।१।४४ (दु० वृ०)
४. ४।१।४५ (दु० वृ०)

त्वेनान्तरङ्गत्वात् पूर्वं सम्प्रसारणम्, तस्मिन्कृते निमित्ताभावात्। अतो अन्तस्था संयुक्तादिति निष्ठा नत्वं न भवति। प्रसंस्तीतः, प्रसंस्तीतवानित्यत्रापि प्रेषणयोगः [1]स्त्यायतेः अस्तीति सम्प्रसारणं भवत्येव।

**द्रवघनस्पर्शयोः श्यः** [2]४।१।३६

शीतं जलम्, शीतं वर्तत इति। ननु शीतं वर्तत इत्यत्रैव प्रधानभूते स्पर्शेऽस्तु सम्प्रसारणम्, शीतं जलमित्यत्र तु स्पर्शवतो जलस्य प्रतीतेरप्रधानीभूतत्वात् स्पर्शस्य, कथं सम्प्रसारणं स्यात्, प्रधाने कार्यसम्प्रत्यय इत्यस्यात्रापरिग्रहात् सर्वत्र स्पर्शे भविष्यति। अपरिग्रहस्तु स्पर्शशब्दस्य परनिपातकरणात् परिभाषाव्यभिचारसूचकत्वाल्लभ्यते।

**प्रतेश्च** [3]४।१।४०

अद्रवघनस्पर्शार्थम् वचनमिति प्रतिपूर्वस्य श्यायतेः [4]रोगार्थवृत्तित्वात्।

**वाभ्यवाभ्याम्** [5]४।१।४१

उभयत्र विकल्पोऽयम्, द्रवघनस्पर्शयोरर्थान्तरेण विधानात्।

**श्येनश्च** [6]४।१४२

योगविभाग उत्तरार्थः।

**संपरिभ्यां वा** [7]४।१।४३

संवीय परिवीयेति। अत्र कृते सम्प्रसारणे तकारागमो न भवत्यन्तरङ्गत्वात्, तद् दीर्घमन्त्यमिति दीर्घत्वस्य प्रवृत्तेः। ननु कृतसम्प्रसारणं वी गतावित्यस्य अनेकार्थत्वात् धातूनां संवरणार्थवृत्तेर्भविष्यतीति किं योगारम्भेण, अस्त्येतत्, ज्ञापनार्थस्तु। एतज्ज्ञाप्यते। न सर्वे सर्वार्थ इति। यथा चात्वविधौ जिक्योरुपादानार्थमर्थवद् भवति।

---

१. स्थायते (वा०)
२. ४।१।४६ (दु० वृ०)
१. ४।१।४७ (दु० वृ०)
२. लोपार्थ…(भं०)
३. ४।१।४८ (दु० वृ०)
४. ४।१।५० (दु० वृ०)
५. ४।१।५१ (दु० वृ०)

**तद् दीर्घमन्त्यम्** [1]४।१।४४

अन्ते भवमन्त्यमिति। यदुगवादित इति योगविभागाद् यत् प्रत्ययः। तद्ग्रहणमाहूतादिशब्दस्याप्राकरणिकस्यापि यण्वद्भावार्थोऽस्य सम्प्रसारणस्य दीर्घत्व[2]प्रतिपत्त्यर्थम् ([3]ननु प्रकृतं सम्प्रसारणमन्त्यमेवेति व्यावर्त्याभावादपार्थकमन्त्यग्रहणम्, नापार्थकम्। अस्त्यस्य धातुविषयस्यापि सम्प्रसारणस्य दीर्घप्रतिपत्त्यर्थत्वात्। (अन्यथा व्येञः सम्प्रसारणस्यैवानन्तरत्वाद् दीर्घो भवेत्। शिष्टमत्र यद् वाच्यं तत्सपरस्वराया इत्यत्रोक्तम्।

**वः क्वौ** [4]४।१।४५

व इति वेञो ग्रहणम्, तस्यैव यजादित्वात् सम्प्रसारणसम्भवात्। सम्प्रसारणस्य चेदं दीर्घत्वम् विधीयते ऊरित्येतद्रूपमूये: क्विपि य्वोर्व्यञ्जने य इति य-लोपे [5]सति सिद्धमिति योगारम्भो वेञः तदादिविषये दीर्घत्वनिवृत्त्यर्थः।

**पञ्चमोपधायाः धुटि चागुणे** [6]४।१।४६

ऋणितृणिपृणादीनां दीर्घो नेष्यत इति कथं पुनरिष्यमाणोऽपि न भवति। उपधाग्रहणस्य संज्ञापूर्वकत्वेनानित्यत्वार्थत्वात्।

**छ्वोश्शूटौ पञ्चमे च** [7]४।१।४७

श च ऊट् च तौ शूटौ। गोविट्, [8]गोविषौ, गोविष इति विच्छ गतौ, गां विच्छतीति। क्विप्, अनेन छस्य शत्वम्, तच्च च्छकारद्वयस्य विज्ञायते। तस्यैव स्थानित्वेनोपादानात्। न चावर्णान्त्यस्य विधिरस्ति, अन्यथा हि च्छकारद्वयस्य स्थानित्वाश्रयणं वैफल्यं प्रसज्येत्, अनर्थके वा नास्त्युपस्थानं वर्णान्त्यपरिभाषायाः। अथाप्यस्त्युपस्थानम्, एवमप्यन्त्यस्य छकारस्य कृते शत्वे निमित्ताभावपरिभाषया पूर्वस्य निवृत्तिर्भविष्यति। शकारोऽत्र नोदाहृत इति। अत्रेत्यनेन धुडादिः प्रत्ययवमृश्यते कथं पुनः तत्र शकारादेशो नोदाहृत

---

१. ४।१।५२ (दु० वृ०)
२. प्रवृत्त्यर्थम् (भं०)
३. न्यूनपाठः (वा०)
४. ४।१।५३ (दु० वृ०)
५. कृते (भं०)
६. ४।१।५५ (दु० वृ०)
७. ३।१।५६ (दु० वृ०)
८. गोवशो गोविशः (भं०)

इत्याह—पृष्ट इत्यादौ विशेषाभावादिति किल धुडादिरगुणः । पृष्ट इत्येवमादिरुदाहर्तुं युक्तः । अत्र च छस्य शत्वे सत्यसति वा नास्ति विशेषः, छशोश्चेत्युभयथापि षत्वस्य प्रवृत्तेः । स्यो सेटि, अत्रेटि कृते गुणात् प्रागन्तरङ्गत्वाद् यत्वम् । बहिरङ्गासिद्धपरिभाषा चैवंविधे विषये नोपतिष्ठत इति तत्रोक्तम् ।

**राल्लोप्यौ** [1]४।१।४८

रेफादुत्तरच्छकारः कृति द्विर्भावो न सम्भवतीति केवल इह गृह्यते ।

**वनतितनोत्यादिप्रतिषेधं धुटि पञ्चमोऽच्चातः** [2]४।१।४९

[3]तनोत्यादीनामिति । मनु अवबोधने इत्येतदन्तानां प्रतिषिद्धेडामिति यमिरमिनमिगमिहनिमनीनाम् । आकारस्य चेति पञ्चमोपधेत्यादिना विहितस्य यस्मिन्प्राप्ते यो विधिरारभ्यते स तस्य बाधको भवतीत्येतदनाश्रयणेन चैतदुक्तम् । आकारस्याकारादेश इति । अन्यथा तु सर्वदा प्राप्ते पञ्चमोपधेत्यादिना दीर्घत्वे पञ्चमलोप आरभ्यमाणः तद्बाधत इति कैवाकारादेशस्य प्राप्तिर्येन तस्याकारादेशविधानाय अच्चात इति [4]विधानमर्थवत् स्यात् । नन्वेवमपि लोपविधेर्बलवत्वात् पञ्चमे लुप्ते दीर्घस्य का प्राप्तिरित्याशङ्क्याह—लोपस्वरादेशपरिभाषयेत्यादि । अन्ये तु पञ्चमे लुप्ते सत्यस्य च लोप इति योऽकारलोपः प्राप्नोति, तन्निवृत्त्यर्थमकारस्यैवायमकारादेशो विधीयत इति व्याचक्षते । [5]अत्र धुडादाविति निष्ठादौ पञ्चमलोपग्रहणानुवृत्त्या पञ्चमस्य स्थानित्वे लब्धे पञ्चमग्रहणमधिकविषयोपसङ्ग्रहार्थम् । तेन हन्तेः पञ्चमलोपः इष्यत इत्याद्युपपन्नं भवति ।

**यपि च** [6]४।१।५०

[7]अधुडर्थं वचनम् । भाविग्रहणाद् हि प्रागयबादेशे कृते धुट् नास्त्येव ।

---

१. ४।१।५८ (दु० वृ०)
२. ४।१।५९ (दु० वृ०)
३. न्यूनपाठः (वा०)
४. वचनमर्थवत् (भं०)
५. अन्यत्र (भं०)
६. ४।१।६० (दु० वृ०)
७. अधनर्थम् (वा०)

वा मः [1]४।१।५१

पूर्वेण नित्ये प्राप्ते वचनम्। ननु वायपीत्येवं क्रियताम्। व्यवस्थितविभाषाविज्ञानाच्च वनतितनोत्यादीनां [2]हि लोपो विज्ञास्यते। प्रतिषिद्धेटां तु केषाञ्चिद्विकल्पेन तत् किं योगद्वयकरणेन, सत्यम्, शक्यत एवं कर्तुं प्रतिपत्तिगौरवं तु स्यात्।

न तिकि दीर्घश्च [3]४।१।५२

विशेषादिष्टपरिभाषया वनतितनोत्यादिप्रतिषिद्धेटामिति वर्तते नत्वनन्तरो अकार एव। ननु नति कीर्ति क्रियताम्, तिकि यत्प्राप्तं तस्य निषेधो विज्ञायत इत्युभयोरपि दीर्घपञ्चमलोपयोः प्राप्तयोः सतो निषेधः सिद्ध इति किं दीर्घश्चेत्यनेन, सत्यम्, आनन्तर्यात् तु लोपस्यैव निषेधः स्यान्न तु दीर्घस्येति। तमपि निषेद्धुं दीर्घग्रहणं क्रियते। च शब्दोऽपि लोपस्यानुवृत्त्यर्थः कर्तव्यः।

वुष्घिनिणोश्च [4]४।१।५३

च शब्दोऽन्यस्यापि पञ्चमलोपार्थः। तेनावपूर्वस्योन्देः अवोदः हिमपूर्वस्य प्रपूर्वस्य च श्रन्थेः हिमश्रथः प्रश्रथः इत्येते घञन्ताः उपधादीर्घाभावः, संज्ञापूर्वकस्य विधेरनित्यत्वात्।

यमिमनितनिगमां क्वौ [5]४।१।५४

सर्वदा प्राप्ते पञ्चमलोप इत्यादिना दीर्घत्वं पञ्चमलोपो बाधत इति दीर्घस्यात्र विषये प्रवृत्त्यभावादच्चातः इति नोपयुज्यत एव।

विड्वनोरा: [6]४।१।५५

पञ्चम इत्येवेति। एतेन पञ्चममात्रस्येदमात्वम्, अतो यमिमनिहनिगमामिति नेह सम्बध्यत इति दर्शयति। विटि वनि च पर इति। एतेन प्रत्ययोरिदं ग्रहणम्, न तु विट आक्रोशे, वन षण भक्ताविति धातोरिति दर्श-

---

१. ४।१।६१ (दु०)
२. नित्यः (भं०)
३. ४।१।६२ (दु० वृ०)
४. ४।१।६७ (दु० वृ०)
५. ४।१।६९ (वृ० दु०)
६. ४।१।७० (दु० वृ०)

त्यति । कुतः, व्याख्यानात् पञ्चमस्थाने भवदात्वमान्तरतम्यात्सानुनासिकं तत् तु शुद्धस्योच्चारणसामर्थ्यान्न भवति । अन्यथा ह्यसन्देहार्थं सानुनासिकमेवाकारमुच्चारयेत्, दीर्घोच्चारणमेवावरीदित्यादिसिद्ध्यर्थम् । ओणृ अपनयने वनिप्, अनेन णकारस्यात्वम् ओ अव् वनोर चेती प्रत्ययो रेफश्चान्त्यस्य ।

स्फुरिस्फुल्योर्घञ्योतः [1]४।१।५६

वेति निवृत्तम् । योगारम्भसामर्थ्यात्, अन्यथा हि विस्फारः विस्फालः विस्फोलः इति स्फुर रूपाणि स्फुल् स्फल् चलनार्थे इत्यमीभिरेव धातुभिः सिद्धानीति योगारम्भेण किं कृतं स्यात्, अनभिधानाच्च स्फुरिस्फुल्योर्घञि प्रयोगो न भविष्यतीति दुर्ज्ञानमेतत् ।

इज्जहातेः क्त्वि [2]४।१।५७

जहातेरिति किमिति । किमर्थः श्तिपा निर्देशः क्रियत इति भावः । हा इति कृते हानो अपि ग्रहणं स्यात्, इति प्रत्युदाहरति । हात्वेति, हाक इति तु न कृतं, वैचित्र्यात् ।

द्यतिस्यतिमास्थां त्यगुणे [3]४।१।५८

इदं द्यतेरित्वं पुरस्तापवादा अनन्तरान्विधीन्बाधन्त इति [4]दशादेशमेव बाधते, न तुकारादेशं तेन नीतुमित्यत्रेत्व-तुकारादेशयोः प्रसङ्गे सति परस्तुकारादेश एव भवति । द्यतीति श्तिपानिर्देशो दा-संज्ञकानां निवृत्त्यर्थः, तेन घेटो न भवतीति, धीतः धीतवान् । स्यतीति श्तिपा निर्देशः सनोतेः कृतात्वस्य निवृत्त्यर्थः । दो ष इति न कृतं वैचित्र्यात् ।

वा च्छाशोः [5]४।१।५९

शो तनू करणे इत्यस्येति । अथ व्रतविषये नित्यमित्वमिष्यमाणं कथं लभ्यते, [6]ब्रूमः, यदि सर्वत्र विकल्पोऽभिमतस्स्यात् ततः श्यतिना शिञ च

---

१. ४।१।७४ (दु० वृ०)
२. ४।१।७५ (दु० वृ०)
३. ४।१।७६ (दु० वृ)
४. च दति शसेन (भं०)
५. ४।१।७७ (दु० वृ०)
६. उच्यते (भं०)

संशातः संशितयोः सिद्धत्वात् श्यत्यर्थेन विकल्पेन किं कृतं स्यात्, न च तयोरर्थभेदो धातूनामनेकार्थत्वात्। तस्मान्नायं सर्वविषयो विकल्पः। किं तर्हि व्रते नित्यमित्वमन्यत्र तु विकल्पेन।

**दधातेर्हि** [1]४।१।६०

घेटो निवृत्त्यर्थमिति ध इति कृते घेटोऽपि ग्रहणं स्यादिति भावः, धात्रः इति तु न कृतं वैचित्र्यात्।

**दद् दोऽधः** [2]४।१।६१

दातं क्षेत्रमिति दाप् लवन इत्यस्यादाबिति प्रतिषेधात् दासंज्ञा नास्ति, अयमादेशः तान्तोऽथवा थान्तः। यदि धान्तो दान्तो वा स्यात् दात्पूर्वस्य च दः घढधभेभ्य इति धत्वे स्याताम् ननु तकारमाश्रित्य दान्तधान्तावादेशौ सञ्जातौ तकारविघातं कुर्यात्। सन्निपातलक्षणो हि विधिरनिमित्तं तद्विघातस्य, नैतत्, वर्णग्रहणेऽस्याः परिभाषाया अनुपस्थानात् तथा चाहुः—वर्णग्रहणे निमित्तमिति।

**स्वरादुपसर्गात् तः** [3]४।१।६२

तकारादेशो भवतीति। अकार उच्चारणार्थः अन्यथेत्यादि। एकः तकारलक्षणोऽन्यप्रकारः स्यादित्यर्थः। द्वितकारनिर्देशे त्वनेकवर्णस्सर्वस्येति सर्वादेशः सिद्धः भवति।

**यपि चादो जग्धिः** [4]४।१।६३

कथमन्नम्। अदोऽनन्न इति ज्ञापकात्। अद्यतः सेति क्तः, दात्पूर्वस्य च दः, तकारादिप्रत्ययमात्रमपेक्ष्यान्तरङ्गत्वादकृत एव यपि जग्ध्यादेशे सिद्धे सति यद्यपीति क्रियते तज्ज्ञापनार्थम्। एतज्ज्ञाप्यते, यथान्तरङ्गानपि विधीन्बहिरङ्गो यः बाधत इति। तथा च यपि कृते तकारादित्वस्य विहितत्वाद् यपि यद्वा जग्ध्याभावो सिध्यतीति यपीत्युच्यते, किमेतस्य ज्ञापने प्रयोजनम्। प्रशस्य आपृच्छ्य आदीव्य प्रस्थाय प्रखन्य प्रदाय प्रधायेत्यत्र दीर्घस्थडित्वाददादेश हि भावी भावः। अन्तरङ्गत्वाद्धि दीर्घादयः पूर्वे स्युः। अन्तरङ्गं तु तेषां प्रकृत्याश्रयत्वात् बहिरङ्गासिद्धपरिभाषा यपीति वचनारम्भान्नोपतिष्ठते।

---

१. ४।१।७८ (दु० वृ०)
२. ४।१।८० (दु० वृ०)
३. ४।१।८१ (दु० वृ०)
४. ४।१।८२ (दु० वृ०)

**क्तक्तवतू निष्ठा [1] ४।१।६४**

क्तक्तवन्तू इत्येताविति कथं पुनरेतत् प्रत्यायमाणमिति लभ्यते। उणादयो भूतेऽपीति। भूतनिर्देशात्कषि घुषाक्तोऽनेडिति क्तमात्रनिर्देशात् तृतीयपादे निष्ठा-संज्ञोच्चारणेन क्तक्तवन्त्वोर्विधानं विधानप्रतिबन्धादियमत्र निष्ठा-संज्ञेतीतरेतराश्रयदोषः प्राप्नोति, नित्येषु शब्देषु यौ क्तक्तवन्तू तावाश्रित्य संज्ञाविज्ञानात् विज्ञानपूर्वकत्वं संज्ञावाक्यस्य नास्तीति क्व प्राप्तिरितरेतरा-श्रयदोषोऽस्य चेन्न, सानुबन्धकयोः क्तक्तवन्त्वोः प्रयोगे असत्वात् कथं शब्द-नित्यत्वादिति परिहारः स्यात्। अकारादयो हि वर्णाः स्वरादिसंज्ञावाक्येषु प्रयोगसमवायिन इति कृत्वा शक्या निर्देष्टुम्। न चैवं क्तक्तवन्तू क्व च न स्तः। एवं तर्हि भाविसंज्ञाविज्ञानाद् अदोषः, यथास्य सूत्रस्य शाटकं वयेति तेन तावतीते प्रत्ययो नाम क्वचिद्विधीयते, ययोर्विहितयो तयोर्निष्ठेत्येषा भवति।

**क्त्वाम् [2] २।१।६५**

कृत्वेति। एककर्तृकयोरिति क्त्वा। कर्तवै इति कर्मणि तवै। अलिङ्ग-संख्यमव्ययमित्यस्य एवायं प्रपञ्चः।

सिद्धिपादः प्रथमः।

## द्वितीयः पादः

**धातोः ४।२।१**

अधिकारोऽयमिति। विधेयस्यानिर्देशात् साकाङ्क्षत्वे सति पारार्थ्या-दिति भावः। तदेव पारार्थ्यं या नित्यादिना दर्शयति। ननु धातुशब्दोऽत्राधि-क्रियते इति प्रधानविभक्त्या प्रथमयासौ निर्देष्टव्यः, न तु पञ्चम्या। नहि ततः किञ्चदधिक्रियते, अस्त्येतत्, किन्तु स्वराद्य इत्यादावधिकारोपस्थान-वाक्ये यत्स्वरादित्यादि पदं पञ्चम्यन्तं धातुशब्दस्य विशेष्यत्वेनाभिमतं विद्यते, तद्धर्मापत्त्या धातोरित्ययं पञ्चम्या निर्देशः। अन्यथा धातुस्वरशब्दयोः प्रथमापञ्चम्यन्तयोर्विशेषणविशेष्यभावोऽधिकारबलादुपपद्यमानो मृदुमतीनां प्रतिपत्तिगौरवविधायी स्यात्। अथ यदीदं नारभ्येत, किं स्यात्, लिङ्गादपि

---

१. ४।१।८४ (दु० वृ०)

२. दुर्गवृत्तौ नोल्लिखितमिदं सूत्रम्।

तव्यादीनामुत्पत्तिः। ननु भावकर्मादिषु अर्थेषु तव्यादयो विधीयन्ते। तत्र च ता-त्वादिभिः प्रत्ययैः बाध्यमानाः तव्यादयः कथं लिङ्गाद् भवेयुः। कर्तादयोऽपि क्रियावाचिनं धातुमेवाक्षिपन्तीति कथं तेषु उणादयो लिङ्गादाशङ्क्येरन्। न च ततो वुणादीनामुत्पत्तौ सत्यामस्ति कर्त्राद्यर्थावसायः। एवं तर्हि उपपद-प्रसङ्गात् करोति कटमित्यादौ।

[1]सप्तम्युक्तमुपपदम् ४।३।२

अथ किमर्थमुपपदमिति गुर्वी संज्ञा क्रियते न शिडादिवल्लघ्व्येव क्रियता-मित्याह—गुरुसंज्ञाकरणमित्यादिधातोरर्थद्वारेण यत्समीपभूतं तस्य सम्बद्धार्थ-स्योपपदसंज्ञा यथा स्यात्। पश्य कुम्भं करोति कटमित्यादौ मा भूत्। नह्यत्र कुम्भस्यास्ति करोतिना सम्बन्धार्थं दृशिक्रियया तस्य सम्बन्धात्। अतोऽत्र कर्मोपपदलक्षणो न भवत्यण्-प्रत्ययः यद्यपि च प्रत्यासत्तेर्यस्यैव धातो-र्यत्कर्म तस्मिन्नेवोपपदे प्रत्ययो विज्ञास्यते, न विषयान्तरे। इत्येव सम्बन्धा-र्थत्वे प्रत्ययप्रसङ्गः परिहर्तुं शक्यते। तथापि तत्परिहारेण यत्प्रतिपत्तिगौरवं तदपरिहार्यमेवेति तत्परिहाराय न्यासकरणमेव ज्यायः। इह सप्तमीनिर्दिष्ट-स्योपपदसंज्ञा विधीयमाना कर्तरि कृदित्यादौ कर्त्रादेरपि सप्तमीनिर्दिष्टस्य प्राप्नोत्यविशेषात्। ततश्च कर्तर्युपपदे कृतो भवन्तीति व्याख्यायमाने सति देवदत्तः पक्ता, देवदत्तः पाचक इत्यादयोऽनिष्ठाप्रयोगाः। तस्य तेन समास इति समाससंज्ञायां सत्यां विभक्तिलोपे च कृते भवेयुरित्याशङ्क्याह—यत्-प्रत्ययान्तेनेत्यादि। [2]याः तस्य तेन, अयमर्थः, उपपदमितीयमन्वर्थसंज्ञा। समीपं पदमुपपदमिति। समीपं च तद् भवति यस्य कृत्प्रत्ययान्तेन शब्देना-र्थोऽभिधातुं न शक्यते यथा कुम्भकारादौ कुम्भादेः। नहि तु कुम्भादिशब्दः प्रतिपाद्यमर्थमणन्तशब्दोऽभिधातुं शक्नोति, अर्थाभिधानस्य स्वाभाविकत्वात्। अतोऽणन्तेन शब्देन तदर्थाभिधानात् पृथक्प्रयोगार्हत्वम् तस्य भवतीति स विषय उपपदसंज्ञायाः। यस्य पुनः प्रत्ययान्त एव शब्दोऽभिधायको यथा कर्त्रा-देस्तस्य शब्दार्थीभूतस्य सतः पृथक्प्रयोगानर्हत्वात् प्रत्ययान्तरसामीप्येन प्रयोगो नास्तीति कथं विषय उपपदसंज्ञायाः स्यात्। न चात्रान्तरङ्गे अर्थसम्बन्धे सत्युपपदसम्बन्धो बहिरङ्गश्चाशक्यः परिगृहीतुमन्तरङ्गस्य सम्बन्धस्य बलीय-स्त्वात्। तथा चाहुः—उपाधौ सम्भवत्युपपदं कल्पना न न्याय्या, अन्तरङ्ग-

१. भण्डारकरहस्तलेखे अप्राप्योऽयमंशः तथा च वा० हस्तलेखेऽपि अस्य सूत्रस्य स्वतन्त्ररूपेण उल्लेखः नास्ति। अनुमानत एवास्यात्र स्थितिः दर्शितास्ति।

२. न्यूनपाठः (भं०

त्वात् सम्बन्धस्येति। तस्मात् प्रत्ययान्तवाच्यः कर्त्रादिरर्थतः उक्तत्वात् पृथक्प्रयोगार्हो न भवतीति तस्योपपदसंज्ञा न भवति।

**तत्प्राङ् नाम चेत् ४।२।३**

कृदन्तशब्दसामीप्येन प्रयुज्यमानमुपपदं प्रागपि प्रयुज्यत इति [1]सिद्धे प्राक्प्रयोगेन नियमार्थमिदमारभ्यते। तत्र प्राक्प्रयोगो नियम्यमानमुपपदं नियमभाक्। तस्य विशेषणं नामेति चेच्छब्दो यद्यर्थे लिङ्गमित्यविशेषाभिधानेऽपि विभक्त्यन्तं लिङ्गानामितिमन्तव्यं न तु लिङ्गमात्रं, तदुक्तम्——अष्टौ यत्र प्रयुज्यन्त इत्यादि। भोक्तुमिच्छतीति भवति इच्छतिशब्दः उपपदम्, इच्छार्थेष्वेककर्तृकेष्वित्यत्र सप्तम्युक्तत्वात्, तत्तु नाम भवति इति परत्रापि प्रयुज्यते। अनिष्टप्रयोगादर्शनादिष्टः पूर्वप्रयोगः एव भविष्यतीति योगारम्भस्यैवार्थस्य प्रदर्शनार्थः। अतएवोपपदग्रहणानुवृत्तौ किं तद् ग्रहणेनेति, न चोदनीयमेतत्।

**तस्य तेन समासः ४।२।४**

तेन कृत्प्रत्ययान्तेन सहेति। अथ कृत्प्रत्ययान्तेनेति कुतो लभ्यते, उच्यते — यत्र नामोपपदं सूत्रं सप्तम्यन्तं विद्यते तत्रावश्यं कृत्प्रत्ययेन केनचिद् भाव्यमित्यर्थात् कृत्प्रत्ययान्तेनेति लभ्यते। समासे सत्यसौ लोपः इति। तत्स्था लोप्या इत्यादिना। विभक्तयो द्वितीयाद्या इत्यस्यैव अयं प्रपञ्चः। प्रपञ्चे तु गुरुलाघवमचिन्तनीयमिति नामग्रहणानुवृत्तौ किं तस्येत्यनेनेति, वक्तव्यमेतत्।

**नाव्ययेनानमा ४।२।५**

प्राग्भावसमासौ न भवत इति पाश्चात्येन सूत्रद्वयेन प्राप्तौ। मन्वन्तरङ्गत्वात् समासस्यैव निषेधो युक्तो न तु प्राग्भावस्य, तत्र केचिदाहुः—तत्प्राङ् नाम चेदित्यतस्तद् ग्रहणमिहाभिसम्बध्यते ततो यत्नात् प्राग्भावो [2]विनिवर्त्स्यते। अथवा नाव्ययेनानमेत्येष विधिः उभयोः योगयोः शेषभूतो विज्ञायते। समासमात्रनिषेधे तु पूर्व एव योगे [3]योगमिमं विदध्यात्। तस्य तेन समासः नाव्ययेनानमेति। न चैवं विहिते सति तेनाव्ययेनोपपदस्य समास निषेध एव प्राप्तेरनुमापकः स्यादिति चेत्, तर्हि तेनेत्यतदधिकत्वादपार्थकं

१. सिद्धः (भं०)
२. विनिषेत्स्यते (भं०)
३. एवेमं योगम् (भं०)

स्यात्, तस्माद् योगद्वयशेषभूतोऽयं योगः प्राग्भावस्यापि निषेधकः। अमन्तेनेति अमः केवलस्यासम्भवात् तदन्तप्रतिपत्तिः कालो भोक्तुमिति। भोक्तुमित्यव्ययमेतत्, क्त्वामसन्ध्यक्षरान्तोऽव्ययमित्यनेन। कन्यादर्शमिति। अत्र कन्याशब्दस्य प्राग्भावसमासौ न निषिध्येते। तथा च कन्या शब्दादमः सति समासे लोपो भवति।

**तृतीयादीनां वा ४।२।६**

अनमेति निवृत्तमिति, अनपेक्षणात्। तेनामन्तमव्ययं गृह्यते कर्तरि कृदित्यतः प्रागिति। अतः [1]परस्तु उपपदानामसम्भवादिति भावः। उभयत्र चायं विकल्पः अमन्तेनाव्ययेनाप्राप्तत्वात्। अन्येन त्वप्राप्तत्वात्। मूलकेनोपदंशं भुङ्क्ते इत्यादि। असमासपक्षोऽयम्, समासपक्षे तु विभक्तेर्लोपः, एवमुच्चैः कृत्य उच्चैः कृत्वा इत्याद्युदाहार्यम्। कृञोऽव्यय इत्यादिना क्त्वा प्रत्ययः समासपक्षे यवादेशः।

**कृत् ४।२।७**

करोतीति कृत्। क्विपि तकारागमः इत ऊर्ध्वं ये प्रत्ययाः इत्येतेन प्रत्यया एव वक्ष्यमाणाः प्राधान्यात् कृत्संज्ञया सम्बध्यन्ते। न तु प्रकृत्यादय इति दर्शयति।

**वाऽसरूपोऽस्त्रियाम् ४।२।८**

समानं रूपं यस्यासौ सरूपः, दृग्दृशदृक्षेषु समानस्य स इत्यत्र समानस्य स इति योगविभागात् समानशब्दस्य सभावः। समानरूपं यस्यापवादस्येति। अथेदमुत्सर्गापवादग्रहणं [2]कथमिवावाप्यते बाध्यमाने वा तस्मिन्नसरूपशब्दस्यापवाद एव विशेष्यः न तूत्सर्गः। इत्येतत् कुतः, उच्यते—उत्सर्गापवादग्रहणं तावदसरूपग्रहणादवाप्यते। तथा ह्यसारूप्यं नाम यद् भिन्नरूपत्वं तत्किञ्चित् प्रतियोगिनमपेक्षते। तदनपेक्षायां भिन्नरूपत्वस्यासम्भवात्। प्रतियोगिना च तुल्यविषयेन भवितव्यम्। भिन्नविषयप्रतियोग्यपेक्षया हि भिन्नरूपत्वे प्रतिपाद्यमाने सति न किञ्चिदुक्तं स्यात्। नहि तुसोऽभावार्थविहितस्य तव्यादीनां च भावकर्मार्थविहितानां रूपत्वप्रतिपत्तावस्ति किञ्चित् प्रयोजनम्। एवं च तुल्यविषयो यः प्रत्ययः स विषयतुल्यत्वादेवोत्सर्गापवादरूपतामवलम्बते इत्यर्थादायातमिहोत्सर्गापवादग्रहणम्।

---

१. परेषाम् (मं०)

२. कथमिवाप्यते (वा०)

असरूपशब्दस्य चापवाद एव विशेष्यः न तूत्सर्गः। यस्मादुपसर्गस्यापवादविषये पक्षे प्रवृत्तिर्यथा स्यादित्येतदर्थं वचनमिदमारभ्यते। यदि च वाऽसरूपशब्द-स्योत्सर्गो विशेष्यः स्यात् ततः सरूपोत्सर्गां स्त्रियां वा भवतीत्यस्य सूत्रस्यार्थः स्यात्। एवं चोत्सर्गो निजविषयपक्षे प्रवर्तमानः केनापवादविषये प्रवर्तते, स्वविषय एव हि तस्य पाक्षिकी प्रवृत्तिः स्यात्। अप्रवृत्तिपक्षे च प्रकृतिमात्र-मेव केवलं श्रूयते। न केवला प्रकृतिः प्रयोक्तव्येति समयान्नैष प्रसङ्ग इति चेत्, वासरूपोऽस्त्रियामित्यतोऽपि समयादुत्सर्गाभावपक्षे केवलं प्रकृतिप्रयोगे प्रसङ्ग-स्य विनिवारयितुमशक्यत्वात्। तस्मान्नात्रोत्सर्गो सरूपशब्दस्य विशेष्यः। अप-वादे तु विशेष्ये [1]सत्यसत्यसरूपोऽपवादोऽस्त्रियां वा भवतीति सूत्रार्थव्याख्याया-मपवादपक्षे प्रतिबन्धकाभावादुत्सर्गोऽपवादविषये प्रवर्तत एवेत्यपवाद [2]एवा-सरूपशब्दस्य विशेष्यः। कथमुत्सर्गस्यापवादविषये तु प्रवृत्तिः स्यात्। यावतापवादविषयपरिहारेण सर्वत्रोत्सर्गाणां प्रवृत्तिः तथा चाहुः— प्रकल्प्या-पवादविषयं तत उत्सर्गोऽभिनिविशत इति। निजे हि विषयेऽपवादो वैकल्पिकीं प्रवृत्तिमासादयतीति चेत्को नामायमुत्सर्गस्यापूर्वो धर्म उपजातो येनासावपवाद-विषयमवगाहेत। एवं तर्हि मा भूद्वचनवैयर्थ्यमिति कृत्वा नात्रासरूपोऽपवादो-ऽस्त्रियां वा भवतीत्यस्य अपवादस्य सत्ता विकल्प्यते, किं तर्हि बाधिका शक्तिः। एवं च यत्र पक्षेऽपवादो बाधको न भवति तत्रापवादविषयोऽयमिति व्यपदेशाभावादपवादाभावपक्षे प्रवर्तमान उत्सर्गः केन विनिवार्यते। नन्वन्त-रङ्गत्वादपवाद सत्ताया एव विकल्पः स्यात् न तु बहिरङ्गस्य बाधकत्वस्या-स्त्येतत्। वचनारम्भसामर्थ्यात् तु बहिरङ्गमपि तद्विकल्प्यते। तस्मादपवाद एव सरूपस्य विशेष्यः तस्य चापवादस्य बाधकत्वं विकल्प्यते तदेतत् [3]पूर्व-माह—असरूपोत्सर्गेणाभिन्नरूपोऽपवाद उत्सर्गस्य बाधको भवतीति। तेन कोऽर्थः सम्पद्यत इत्याह—अपवादविषय इत्यादिः। यदि तर्हि अपवादस्य बाधिकायां शक्तौ विकल्प्यमानायामपवादाभावपक्षे अपवादविषये उत्सर्गोऽपि पक्षे प्रवर्तते तर्हि क्तयुट्तुमुखलर्थेष्वप्युत्सर्गः पक्षे प्रवर्त्तते, ततश्च हसित, हसनं, इच्छति भोक्तुम्। अत्र क्त-युट्-तुमां विषये घञपि प्राप्नोति। ईषत्पान-स्सोमो भवता [4]खलगमि प्रसज्यते नैतत्, वाऽसरूपविधेः क्वचिदनित्यत्वम्, अपि हि विज्ञायते, कुतः, शासि युधि इत्यत्र अलंखल्वोरित्यत्र च खल्युटोः प्रापणार्थाद्वा ग्रहणात्। स्त्रियामित्यर्थं व्याख्यातुमाह—स्त्रियां क्तिरित्यत्र

१. न्यूनपाठः (भं०)
२. एव सरूप (भं०)
३. सर्वमाह (भं०)
४. खलपि (भं०)

प्रकरण इत्यादि । कथं पुनः अस्त्रियामित्येतावता स्त्रीप्रकरण इति लभ्यते । स्त्रियामभिधेयायामसरूपोऽपवाद उत्सर्गं वा न बाधत इत्ययमर्थः कस्मान्न भवति । न भवति । एवं हि व्याख्यायमाने सति लव्या लवितव्येति य-प्रत्यय-विषये तव्यानीयौ न स्याताम् । स्त्री-संशब्देनापि यः प्रत्ययो विहितः सोऽप्यत्र स्त्रीशब्देनाभिधीयते । एवं च ह्यभिधीयमाने सति व्याक्रोशी, व्याकृष्टिरिति [1]णच्-प्रत्ययविषये [2]क्तिः न स्यात् । [3]णच् प्रत्ययेऽपि हि स्त्रियामित्येवम् आचार्यैः स्मर्यते । तथा च कर्मव्यतिहारेण स्त्रियामित्यस्ति चात्र लोकोपचारात् तेन व्यवहारः । तस्मादस्त्रियामित्यनेन स्त्र्यधिकारविहिताः प्रत्ययाः गृह्यन्ते, तेषु वाऽसरूपविधिर्न प्रवर्तत इत्यर्थः । वुण्तृचावुत्सर्गावित्यादिः । अथासन्नौ तव्यानीयावुत्सर्गौ य-प्रत्ययं चापवादं सूत्रस्यास्य विषयं परिहरतः कोऽभिप्रायः । एवं मन्यते—वचनसामर्थ्यादिति स्वरान्तविषये तव्यानीययोरन्तरेणापि वासरूपविधिप्रवृत्तिर्भविष्यति । न च तयोर्व्यञ्जनान्ताः धातवो विषयाः, तेभ्योऽपि घ्यणो बाधकस्य विद्यमानत्वात् । एवं च वुण्तृचावुत्सर्गावच्प्रत्ययश्चापवादो विषयत्वेन कस्मादस्य नोक्तः । अत्राप्येवं मन्यते । सर्वधातुभ्यः पचादेराकृतिगणत्वादच् दृश्यते तद्विषये च यद्यन्तरेणापि वा सरूपविधिं वुण्तृचौ न स्याताम् तयोर्विधानमनर्थकं स्यादिति विधानसामर्थ्यादेवाच्प्रत्ययस्य विषये वुण्तृचौ भविष्यत इति युक्त्यन्तरशून्यः सूत्रस्य वुण्तृचावित्यादिना विषयो दर्शितः । तत्र वुण्तृचोरुत्सर्गत्वं धातुविशेषमुपादाय विधानात्, अतएवोत्सृज्येते सामान्येन विधीयेते इत्युत्सर्गशब्देन तावक्तौ तयोर्नाम्युपधः पृगृज्ञां क इति धातुविषोपादानेन विधानात् । कर्मण्यणीत्ययमुत्सर्ग इति । प्रकृतिविशेषानुपादानात् कर्मसामान्योपादानाच्च तस्यातोऽनुपसर्गाड्ड इति अपवाद इटि आतोऽनुपसर्गादिति विशेषेण विधानात् । नन्वित्यादिडाणोरनुबन्धसत्तारूपभेदविधायिनीति मन्यते । नानुबन्धकृतमित्यादिना स शब्दप्रसिद्धिद्योतकः निपातितः । उपहासपरं चैतदभिधानम्, किल योऽनुबन्ध उच्चारितप्रध्वंसी क्षणमात्रमपि नावतिष्ठते स कथं भिन्नरूपतामन्यस्य विदध्यात् । ज्ञापकं चात्र विद्यते, यदयं दाञ्धाञो वेति पक्षेण प्रत्ययप्रापणार्थं वा ग्रहणं करोति । तज्ज्ञापयति नानुबन्धकृतमसारूप्यमिति ।

**तव्यानीयौ ४।२।६**

वसेः कर्तर्यर्थ इति । लुग्विकरणपरिभाषया वसिर्निवासार्थो गृह्यते, न तु

---

१. ण (भं०)

२. क्तप्रत्ययो (भं०)

३. ण-प्रत्ययो हि (भं०)

आच्छादनार्थः ।

**स्वराद् यः ४।२।१०**

स्वरान्ताद् धातोरिति । एतेन स्वर आक्षेप इत्यस्य चौरादिकस्य नेह ग्रहणम्, इनो निर्देशाकरणात् । पण्यादिसूत्रे विक्रेयप्रत्ययश्रवणाच्चेति दर्शयति । कथं वध्यः, वधमर्हतीति य-प्रत्ययोऽत्र दष्टव्यः । यथा दण्डमर्हतीति दण्ड्य इति ।

**शकिसहिपवर्गान्ताच्च ४।२।११**

पस्य वर्गः पवर्गः, ततोऽन्तशब्देन बहुव्रीहौ सति शकिसहिभ्यां द्वन्द्वः । तकिशसि इत्यादि । च शब्दलभ्योऽयमर्थः । जनिमपरेऽत्र पठन्ति, स च न पठितव्यः जनेः घ्यणि, जनिवध्योश्चेत्युपधाह्रस्वत्वे च कृते जन्यशब्दस्य सिद्धत्वात् । योगविभागो वैचित्र्यार्थः । अतोऽन्तग्रहणेन किमिति न चोद्यमेतत् ।

**आत्खनोरिच्च ४।२।१२**

ईकारश्चान्तादेशः इति वर्णान्त्यविधिरित्यन्त्यस्य आकारान्ताद् य-प्रत्ययः सिद्ध इति स्वराद्य इत्यनेन । खनेस्तूभयं विधीयत इति । यण्-प्रत्यय ईत्वं च, घ्यण्-प्रत्ययो हि ततः प्राप्तः । तत्र तस्यापीति खनेर्यदीत्वं कृतं तस्य तस्येत्यनेन प्रत्यवमर्शः । अन्तरङ्गत्वादेत्वं प्रवर्तत इति अन्तरङ्गत्वं तस्य प्रत्ययापेक्षत्वात् ।

**[1]यमिमदिचरिगदां त्वनुपसर्गे ४।२।१३**

उपसर्गस्याभावोऽनुपसर्गमित्यव्ययीभावः । अथवा अविद्यमान उपसर्गो यस्मिन्धात्वर्थे सोऽनुपसर्गः, तेनानुपसर्गे धात्वर्थे ये यम्यादयो वर्तन्ते तेषामित्यर्थः । यमेः पूर्वेण सिद्धेऽपि उपादानमनुपसर्गार्थम् ।

**चरेराङि चागुरौ ४।२।१४**

च-शब्देनानुपसर्गग्रहणस्य परामर्शाच्चर्यमित्येतदनेनैव सेत्स्यतीति पूर्वे [2]चकारेरनार्षः पाठः इत्याहुः ।

---

१. यमिमदिगदां त्वनुपसर्गे (दुर्गपाठः)

२. चरेरार्षः (भं०)

**पण्यावद्यवर्याविक्रेयगर्ह्यानिरोधेषु ४।२।१५**

विक्रेयशब्दो य-प्रत्ययान्तः । गर्ह्यमित्ययमपि ण्यन्तः । निरोधशब्दो भावघञन्तः, तस्य नञा समासः निरोधः प्रतिबन्धः, प्रसरे विघातः इत्यर्थः । अस्त्यत्र निरोध इति ऋत्विजां धनसंविभागो ([1]योगादवश्यकर्तव्य इत्यकर्मणः कृत्यक्तखलर्था इत्यस्त्यत्रानिरोधः) ।

**वह्यं करणम् ४।२।१६**

करणेऽर्थे वह्यशब्दो निपात्यत इति भावकर्मणोः कृत्यक्तखलर्था इति भावकर्मणोरर्थयोः प्राप्तः ।

**उपसर्या काल्या प्रजने [2]४।२।१७**

काल्या, प्राप्तकालेति । तदस्य प्राप्तमित्यत्रार्थे कालशब्दात् तसादित्वाद् य-प्रत्ययः । प्रजननं प्रजनः । भावे घञ्, जनिवध्योश्चेत्युपधाह्रस्वः । उपसर्या गौरिति गर्भग्रहणे प्राप्तकालेत्यर्थः ।

**अजर्यं सङ्गते [3]४।२।१८**

संगमनं सङ्गतम्, नपुंसके भावे क्तः, संगते संगमने कर्तरीति । एतेन जीर्यतेरकर्मकत्वाद् भावार्थे प्राप्तो कर्तर्येव निपातनमिति दर्शयति । एवं च सति सङ्गतस्य चेत् कर्तृत्वं तदैतत् निपातितम् ।

**नाम्नि वदः क्यप् [4]४।२।१९**

मृषापूर्वाद् वदेः क्यबेवेष्यत इति न तु य-प्रत्ययः । मृषोद्यमिति । स्वपिवचीत्यादिना वदेः सम्प्रसारणम् । अथ किमर्थः क्यपः पानुबन्धः क्रियते, स हि तकारागमार्थः । न च वदेः आगमस्यातिसम्भवः, ह्रस्वान्तत्वाभावात् । नाप्युत्तरार्थः, [5]भृहन्त्योस्तकारागमं प्रत्ययोग्यत्वादित्याशङ्क्याह—क्यपः पानुबन्धकरणमित्यादि । केन पुनः प्रकारेण वृदृजुषीत्यत्राश्रूयमाणे क्यप्-प्रत्यये सूत्रे क्यपोऽस्य पानुबन्धकरणमुपकारीत्याह—तत्र हन्तीत्यादि । अस्य क्यपः पानुबन्धे सत्युपपद्यत इति । असति त्वस्य क्यपः पकारेऽनुबन्धे वृदृ-

---

१. यागादाववश्यकर्तव्य इत्यस्त्यत्रानिरोधः (मं०)
२. उपसर्या काल्या प्रजने ४।२।१८ (दु० वृ०)
३. अजर्यं सङ्गते च ४।२।१९ (दु० वृ०)
४. नाम्निः वदः क्यप् च ४।२।२० (दु० वृ०)
५. भृहत्योः तकारागमम् (मं०)

जुषीत्यत्र यद् वक्ष्यते पुनः क्यब्ग्रहणमुवर्णादावश्यक इत्यस्य घ्यणो बाधनार्थमिति तदघटमानं स्यात्। प्रत्ययद्वयस्य भिन्नत्वात् तस्मात् पुनः क्यब्ग्रहणमित्यादेर्वक्ष्यमाणवस्तुन उपपत्तये क्यपोऽस्य पानुबन्धः क्रियते।

**भावे भुवः** [1]४।२।२०

क्यबनुवर्तते, न तु यः प्रत्ययः, तस्य [2]पूर्वत्र चानुकृष्टत्वात् तत्राकर्मकत्वाद् भवतेरिति सत्तार्थस्य तस्याकर्मकत्वात् अनुपसर्गग्रहणं चात्रानुवर्तते ततोऽप्यकर्मकत्वमस्य सोपसर्गस्य तु भवतेः सकर्मकत्वम्, अनुभूयते कम्बलो देवदत्तेनेत्यादिवदकर्मका अपि धातवः सोपसर्गाः सकर्मकाः भवन्तीति। भावे एव क्यब्भविष्यतीति, न चासति भावग्रहणे [3]क्लादिकर्मण्यस्ति क्यपः प्रसङ्गो नभिधानादित्यादि। कथं भुव इत्यत्रेति। अनिन्नन्तो निर्देश इति शेषः। विकल्पेनास्मादिन्निष्यत इति। एवं च प्राप्त्यर्थस्य भवतेः कर्मणि मा भूत् इति भावग्रहणम्। ये तु प्राथम्यात् सत्तार्थस्यैवेह ग्रहणं भविष्यति न प्राप्त्यर्थस्येति व्याचक्षते, तान् प्रति उत्तरार्थं भावग्रहणम्, किमित्युत्तरत्रैवैतन्न कृतमिति चेत्, कृतमिहैव विस्पष्टार्थत्वात्

**हनस्त च** [4]४।२।२१

तकारस्यादेश इति न तु प्रत्ययः। अनभिधानात्। घञ् प्रत्युदाहर्तुं युक्त इति घ्यणि प्राप्ते क्यपो विधानमिदम्, असति तु क्यपि घ्यणे वोत्सर्गः प्रत्युदाहर्तुं न्याय्य इति भावः। किन्त्वनभिधानादिति नहि घात्य उपघात्य इति चोक्ते धात्वर्थमात्रं प्रतीयते। किन्तर्हि कर्मेति घञेव युक्तः प्रत्युदाहर्तुम्। ननु यपि चेति हन्तेः पञ्चमे लुप्ते तकारागमे च कृते श्वहत्येत्यादि सिध्यत्येवेति किं तदेत्यनेन। न चैकानुबन्धकग्रहणे न द्व्यनुबन्धकस्येति वचनाद् यपि चेत्यत्र क्यपो द्व्यनुबन्धकस्य कथं निमित्तभाव इति शक्यं वक्तुं, यपोऽप्यादेशस्य स्थानिगतं ककारमाश्रित्य द्व्यनुबन्धकत्वादेकानुबन्धकस्य यपो सम्भवात्। अत्रोच्यते—यपि चेत्यत्र वनत्यादिधातुसहचरितस्य सर्वसाधारणस्य यप आदेशग्रहणम् न त्वसाधारणस्यास्य क्यपः। तथा च पञ्चमलोपो हन्तेर्न सिध्यतीति त चेति क्रियते।

---

१. ४।२।२१ (दु० वृ०)
२. पूर्वसूत्रे (भं०)
३. कालादि (भं०)
४. ४।२।२२ (दु० वृ०)

**वृदृजुषीण्शासुस्तुगुहां क्यप्** [1]४।२।२२

([2]वृ इति वृङ्वृञोर्ग्रहणं स्मर्यते न वृण इति) व्याख्यानाद् इति शेषः। शासु अनुशिष्टाविति न तु शो तनूकरणे, षुञ् अभिषवे इत्येतौ, कुतः, अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसीति वचनादसन्देहाय वैपरीत्यनिर्देशाकरणाच्च। अनुपसर्ग इति निवृत्तम्। भाव इति च, तथा च उपसर्ग उपपदे कर्मण्यपि च भवति। उपेत्यो देवदत्तो यज्ञदत्तेति। कथमनिवार्यो गज इति प्रयोगः, वृञः चौरादिकादावावरणार्थात्। स्वराद् य इति य-प्रत्ययः। उपेयमित्येतत् त्वीङो गत्यर्थस्य रूपं न तु इणः। पुनः क्यब्ग्रहणमित्यादि। पुनः क्यब्ग्रहणाद् व्यवधारणं गम्यते, क्यबेव भवति। स न भवतीति, तेनावश्यं स्तुत्य इत्यत्रोवर्णादावश्यक इति प्राप्तो ध्यण् न भवति। शंसिदुहिगुहिभ्य इत्यादि। एवं हि सति गुहेरनार्षः पाठ इत्याहुः।

**ऋदुपधाच्चाक्लृपिचृतेः** [3]४।२।२३

निर्देशसामर्थ्याद् ऋकारस्य लृकार इति किं पुनस्तस्य लृकारादेशकरणेन प्रयोजनम्, क्लृप्तः क्लृप्तवानित्यादीनां सिद्धिः। न च कृपे रोल इत्यत्र र-श्रुतिः सामान्यपरिग्रहात् एतत् सिध्यति। तत्र वर्णाधिकाराद् यः इति वर्णस्य परिग्रहात्। न च ऋकारगतो रेफो [4]ऋ-ग्रहणेन गृह्यते, रषृवर्णेभ्य इत्यत्र पृथक् ऋवर्णग्रहणात् तपर-करणमसन्देहार्थम् चकारोऽनुक्तसमुच्चयार्थः। तेनाङ्पूर्वादञ्जेः संज्ञायां क्यबिष्यते, आज्यम्, जयतेर्हलौ च जित्योर्हलिः कर्मणि क्यप्, महद्धलं हलिः, जेयमन्यत्।

**भृञोऽसंज्ञायाम्** [5]४।२।२४

नन्वित्यादि यावता शब्दोऽयं पूर्वोत्तरयोर्वाक्ययोः सम्बन्धोपादानाय प्रयुज्यते, न च भार्या वधूरित्यत्र समजामनिषदेभ्योऽस्मिन् क्यपि प्रवर्तमाने सति असंज्ञाग्रहणमित्यपार्थकमिति शक्यते वक्तुम्। भार्या नाम क्षत्रियेति। पुंविशिष्टायां संज्ञायामस्य निषेधस्य चरितार्थत्वात्। स्त्रीविशिष्टायां तु संज्ञायां वाक्यान्तरेण क्यप्प्रत्ययः प्राप्नोत्यतोऽत्र भार्या वधूरित्येतन्न सिध्यति। भावे ह्यर्थे भृञः तेन क्यप् क्रियत इति तेनेति समजामनिषदेत्यनेन कथं पुनर्भाव इत्यस्य कर्मादेः

---

१. ४।२।२३ (दु० वृ०)

२. वृत्य इति वृञो ग्रहणं स्मर्यते न तु वृङः (भं०)

३. ४।२।२४ (दु० वृ०)

४. नु (वा०) (?) (भं०)

५. ४।२।२५ (दु० वृ०)

कारकस्य च तत्रानुवृत्तौ सत्यां भाव एवार्थे भृञः क्यप्प्रत्ययो लभ्यते। अनभिधान शक्तिस्वाभाव्यात् भृत्येति ह्युक्तं धात्वर्थमात्रं प्रतीक्षते। भार्या वधूरित्यत्र च कर्मरूपोऽर्थः, तथा च भार्या भर्तव्या पोषणीया या सैवमुच्यते। तत्कथं स क्यप् स्यादिति भावे विधीयमानः कर्मणि न भवतीत्यतो भार्या वधूरिति सिध्यति।

**पदपक्ष्ययोश्च** [1]४।२।२५

पक्षे भवः दिगादित्वाद् यः, अस्वैरिणि बाह्ययोरप्यर्थयोरिष्यत इति च शब्दाद् बाह्ये स्त्रीलिङ्गपरिग्रहात् पुंसि न भवति।

**वौ नीपूञ्भ्यां कल्कमुञ्जयोः** [2]४।२।२६

स्वराद् य इत्ययं बाध्यते, तैलादेः पेलवः मलसमूहः कल्क उच्यते, यथा तैलं कल्केन भावयेदिति।

**कृवृषिमृजां वा** [3]४।२।२७

ननु कृत्यकार्यशब्दौ ते कृत्याः आकारो महतः कार्यं इति च ज्ञापकात् सिद्धौ वृषिवर्ष्यशब्दावपि वृषेः भौवादिकस्य क्यपि सति चौरादिकस्य चेन्नन्तत्वाद्विहितयप्रत्ययस्य भविष्यतः। मृज्यमार्ज्य-शब्दावपि मृजेः क्यपि मार्गेरपि चौरादिकस्य य-प्रत्ययो विज्ञास्यते इति किं योगारम्भेण, अस्त्येतत्, [4]ज्ञापकात्स्थितेः प्रत्याख्यानकरणे सत्यन्यददपि बहुकर्तव्यं स्यात्। वृष्यादावप्यर्थभेदोऽस्ति, च सर्वे सर्वार्थाः।

**अमावास्या वा** [5]४।२।२८

वा-ग्रहणेनेत्यादि। न तु क्यप्प्रत्ययो विकल्प्यत इति। निपातनसामर्थ्यं चात्र हेतुः। वसेरिति, वस निवास इत्यस्य सम्प्रसारणाभावश्च निपातित इति यजादित्वात् सम्प्रसारणप्राप्तिः।

**आसुयुवपिरपित्रपिदमीनां च** [6]४।२।२९

आङ्पूर्वात् सुनोतेरिति आकारान्तास्तु धातवो आ-ग्रहणेन गृह्यन्ते,

---

१. ४।२।२७ (दु० वृ०)
२. ४।२।२८ (दु० वृ०)
३. ४।२।२९ दु० वृ०)
४. ज्ञापकात्स्थितस्य (भं०)
५. ४।२।४५ (दु० वृ०)
६. ४।२।३६ (दु० वृ०)

आदिति तपरः परिच्छिन्नस्याकारस्याकरणात् । यत्र ह्याकारान्ताः धातवः सूत्रे परिगृहीतुमिष्टास्तत्राद्ग्रहणं करोत्याचार्यः । यथा आखनोरी च । आद्-वर्णेत्यादौ घ्यणि परेऽनुषङ्गलोप इति अगुणपरत्वाभावाद् हि न प्राप्नोति । योगविभागो वैचित्र्यार्थः ।

**उवर्णादावश्यके** [1]४।२।३०

आवश्यके सतीति केन पुनः [2]प्रकारेण आवश्यकस्य सत्वमुपपदत्वेनोपाधि-रूपतया वा । उपाधिरूपतयेति, ब्रूमः, कुतः उपाधेः प्रत्ययान्तद्योत्यत्वात् तत्सम्बन्धस्यान्तरङ्गत्वात्, उपपदसम्बन्धस्तु पदान्तरवाच्यत्वाद्विप्रकृष्ट इति नासावाश्रीयते । यद्येवम्, अवश्यलाव्यमित्यादौ द्योत्यपक्षे गतार्थत्वादवश्यं शब्दप्रयोगे न प्राप्नोति, नायं दोषः गतार्थस्यापि हि क्वचिल्लोके प्रयोगो दृश्यत एवेति । तद्यथा पचाम्यहं द्वावपूपावानयेति यद्येवमुपपदत्वाभावान्नासौ पदलक्षणः तस्य तेन समासः इति समासो न प्राप्नोत्यवश्यलाव्यमिति तत्पुरुष-संज्ञाविधौ ज्ञेय इति वचनाद् भविष्यति । कृत्यप्रत्यये सतीति बोद्धव्यम्, काममनसोः परयोस्तु म इति म-लोपो वक्तव्य इत्यपेक्ष्यते, एवमन्यत्र ।

**धाय्योर्मानसामिधेन्योः** [3]४।२।३१

मीयत अनेनेति मानम्, अधिकरणे युट् । ञिइन्धी दीप्तौ सं पूर्वः समिन्धेः-क्विप्, अनुषङ्गलोपः, समिधामाधाने मन्त्रः सामिधेनी, समिधामाधानेषेण्यण्, णकारो वृद्ध्यर्थः, आदिवृद्धिः षकारः ईकारार्थः । अतएव निर्देशात् णस्य नत्वम्, षडनुबन्धात् त्वी । यस्यापत्यस्येति योगविभादिति य-लोपः । धा-ग्रहणेन दधातेः ग्रहणं न घेटः । तस्य सामिधेन्यां वृत्त्यसम्भवात् । रूढिविषयोलक्षणा-र्थम् चैतत्, न चात्र सामिधेनिग्रहणं सामिधेन्यामपि हि धाय्या शब्दो दृश्यते । धाय्याश्च सन्तीति ।

**प्राङ्नीयोस्सम्मतानित्ययोस्स्वरवत्** [4]४।२।३२

स मन्यत इति । ञ्यनुबन्धे सतीत्यादिना वर्तमाने काले क्तः, पञ्चम-लोपः, न सम्मतम्, असम्मतम् । न नित्यम्, अनित्यम् ततो द्वन्द्वः स्वर इव स्वरवत्, असम्मतेऽर्थे इति । अनभिप्रेत इत्यर्थः । यद्येवं कथं ज्येष्ठाय पुत्राय

१. ४।२।३७ (दु० वृ०)
२. कारणेन (भं०)
३. ४।२।३८ (दु० वृ०)
४. ४।२।३९ (दु० वृ०)

पिता ब्रह्म प्रब्रूयात्, प्रणाय्या वा अन्तेवासिने इत्यन्तेवासिविषयतया प्रणाय्य-शब्दस्य प्रयोगे नहि अन्तेवासिनोऽसम्मतत्वमस्ति, सत्यम्, असम्मतत्वम्, निरभिलाषत्वमप्युच्यत एव, तेनासम्मताय भवभोगाभिलाषरहितायान्तेवासिने इत्यन्तेवासिनि विषयतया ब्रह्म शाश्वतं ज्ञानं प्रब्रूयात् इति भवति प्रत्ययः, न तु सर्वस्मिन्ननित्य इति। घटादौ कुतः आनाय्यशब्दस्यानित्या विशेषे दक्षिणाग्नावेव रूढत्वात्। आनयनक्रिया सम्बन्धेऽप्ययं शब्दो हि एवार्थे वर्तते, गवादिशब्दवत्। नित्यमजागरणादिति अविच्छेदेनाज्वलनात्। दक्षिणाग्नौ चायमानाय्यशब्दो वर्तमानः न दक्षिणाग्निमात्रे वर्तते। किन्तर्हि विशिष्ट एव दक्षिणाग्नौ यो गार्हपत्यादानीयते न तु वित्तवतो वैश्यकुलस्य भ्राष्ट्रात्।

**संचिकुण्डपः क्रतौ** [1]४।२।३३

संचाय्य इति संचीयतेऽसाविति विग्रहः। कुण्ड पाय्यइति कुण्डे पीयतेऽसौ यत्रेत्यधिकरणे ण्यण् प्रत्ययः

**राजसूयश्च** [2]४।२।३४

राज्ञा सोतव्यो राजा वा इह सूयत इति कर्मण्यधिकरणे वा निपातनमेतत्।

**परिचाय्योपचाय्याग्नौ** [3]४।२।३५

ननु समूह्यशब्दोऽप्यग्नौ निपातयितव्यः, सम्पूर्वस्य वहेर्घ्यणि सम्प्रसारणे दीर्घत्वे च कृते समूह्य इति यथा स्यात्। नैतत्, ऊहेरेव घ्यणन्तस्यैतत् विज्ञास्यते, वह्यर्थावसायश्चानेकार्थत्वाद् भविष्यति।

**तवैकेकेत्यद् वा** [4]४।२।३६

छन्दोविषय इत्यादि। यद्येवं भाषाविषयेऽस्मिलक्षणे किमनेन योगारम्भेण नैतत्, नहि भाषाविषयमेवेदं लक्षणमित्यत्रास्ति नियमः, अन्यथा अर्वन्नर्वन्तोत्यादि बह्वनारम्भणीयं स्यादिति यत्किञ्चिदेतत्।

**ते कृत्याः** [5]४।२।३७

तच्छब्देनेत्यादि। तवैप्रभृतयः त्वनन्तरा एव प्रत्यवमृश्यन्ते, तद्ग्रहणा-

---

१. ४।२।४० (दु० वृ०)
२. ४।२।४१ (दु० वृ०)
३. ४।२।४३ (दु० वृ०)
४. दुर्गवृत्तौ नोल्लिखितमिदं सूत्रम्।
५. ४।२।४६ (दु० वृ०)

नर्थक्यप्रसङ्गात् । तव्यादयः कृत्यत्वाद् भावे कर्मणि चार्थे भवन्तीति भाव-कर्मणोः कृत्यक्तखलर्था इत्यनेन ।

ण्वुल्तृचौ [1]४।१।३८

तृचश्चकारस्य प्रयोगसमवायित्वं नास्तीति यो मन्यते तं प्रत्याह—तृचश्चकार इत्यादिः । एतदेवासति हीत्यादिना विवृणोति । यद्येवं तृणोऽपि नकारः परिह्रियतां येन निरनुबन्धकपरिभाषायाः प्रवृत्तिरेव न भवेत् । नैतत् । एवं हि सति न निष्ठादिष्विति षष्ठीनिषेधव्यवस्था तृ-शब्दप्रयोगे न स्यात्, द्वयोरपि तृ-स्वरूपत्वात् । अतस्तृन् प्रत्ययप्रयोगे षष्ठीनिषेधार्थं तृनो नकारः कर्तव्यः । तस्मिन् क्रियमाणे सति यदि तृचश्चकारो न क्रियते ततो निरनुबन्धकपरिभाषया आरादेशविधौ तृ-प्रत्ययस्यैवास्य ग्रहणं स्यान्न तृना, इति द्वयोरपि ग्रहणाय तृचश्चकारः कर्तव्यः ।

अच् पचादिभ्यः [2]४।२।३६

स्वरूपभङ्गभयादुभयत्रापि चास्य गत्वाभावः । नामगणे च पच इति यः शब्दोऽकारान्तः पठ्यते तत्राकारात्पूर्वो यो भागस्तस्यानुकरणं पचित्यत्र निर्दिश्यते तदुपलक्षिताश्च सर्वाः प्रकृतयस्तथैव गृह्यन्ते तदाह—नामगणमध्य इत्यादि । अथ धातुपाठस्थिताः पचादयः कस्मान्न गृह्यन्त इत्याह—धातु-पाठस्थितास्त्वित्यादि । अथ धातुपाठस्थिताः पचादयः गृह्येरंस्ततो देव-मेव[3]-मेषादयो भूयांसः शब्दाः न सिध्येयुः, पचेश्च प्राक् ये पठ्यन्ते धातवः तेभ्यः अच्प्रत्ययो न स्यादिति नामगणस्था एव ते गृह्यन्ते, यदि पुनर्न गृह्येरंस्तत-स्तेषां नामगणमध्ये पाठोऽनर्थकः स्यात् । लक्षणवाक्येनासंग्रहात् प्रत्युता-साधुत्वं भवेत् । प्रकृतय एव तर्हि गणे कस्मान्न पठ्यन्ते किं प्रत्ययान्तपाठेनेति चेत्, न । अधिककार्यसंसिध्यर्थत्वात् प्रत्ययान्तपाठस्य । तथा च सूदट् देवट् इत्यादा-वनुबन्धकार्यं प्रयोजनम् । [4]श्वपाचक इत्यादौ बाधक[5]बाधनम् । तथा ह्यत्राण् प्रत्ययो बाध्यते । तस्मात् प्रत्ययान्तपाठो ज्यायान् । नामगणस्थाश्च पचादयो गृह्यन्ते । एवमुत्तरसूत्राच्चेरपीत्यादि [6]नामगणस्थाश्च पचादयो गृह्यन्ते ।

१. ४।२।४७ (दु० वृ०)
२. ४।२।४८ (दु० वृ०)
३. सर्प (दुर्गवृत्तिः)
४. स्वपचः (भं०)
५. बाधनार्थम् (भं०)
६. नामग्रहण (वा०)

([1]एवमुत्तरसूत्रयोरपीत्यादिनामगणस्थाः) नन्द्यादयो ग्रहादयश्च गृह्यन्ते, न धातुपाठस्थिता इति भावः। आकृतिगणोऽयमिति। आकृत्या सादृश्येनोपलक्षितो गणः आकृतिगणः। आदिशब्दस्य प्रकारार्थस्याकृतिगणनिबन्धनार्थत्वात्। कथ पुनराकृतिगणत्वम्, पचादीनामवगम्यते। तस्य लुगचीत्यचि परतश्चेक्रीयित-लुकः शासनात्। ग्रहेश्चेति वा ग्रहणाच्च [2]तद्विधौ वा-ग्रहणं न भवेत्। ग्रहादेर्णिनिरिति [3]णिनिः प्रसङ्गः वासरूपविधिनैव पक्षे तत्सिद्धेः। अच् प्रत्ययस्तु ण प्रत्ययेन सरूपत्वाद् बाध्यत इति न सिद्धः ततः स एव पक्षोऽभ्य-नुज्ञायते। तदभ्यनुज्ञानं चाकृतिगणत्वे सत्युपपद्यते।

**नन्द्यादेर्ल्युः** [4]४।२।४,

नामगणे नन्दनेति पठितस्य यः प्रत्ययात् पूर्व इन्नन्तो भागः स इह नन्दीत्यनुक्रियते एवमुत्तरत्रापि ग्रह इत्ययं शब्दः नन्द्यादेर्धातुगणान्तादिति। नन्दनादिभ्यः प्रत्ययान्तेभ्यः धातूनुद्धृत्य यः तेषां गणस्तत इत्यर्थः। नाम-गणस्था हि पूर्ववन्नन्द्यादयोऽत्र गृह्यन्ते, प्रत्ययान्तपाठस्य हि नन्दनेत्यादेः प्रयोजनं केषाञ्चिदनुपसर्गाणामेव साधुत्वं यथा स्यात्। यथा नन्दनः रमण इत्यादीनाम्। क्वचिच्च णत्वं प्रयोजनं यथा लवणशब्दे, क्वचिच्च बाधक-बाधा [5]यथा कुलसदन इत्यादौ। अत्र हि कर्मोपपदलक्षणोऽण् बाध्यते। यः प्रत्ययो भवतीति वुणादीनां बाधः वासरूपेण यथाप्रयोगं तेऽपि भवन्त्येव नन्दकः नन्दयितेति।

**ग्रहादेर्णिनिः** [6]४।१।४१

ग्रहादेर्धातुगणादिति पूर्ववद् व्याख्याक्रमोऽत्र बोद्धव्यः।

**उपसर्गे त्वातो डः** [7]४।२।४२

दिहिलिहीति णः प्राप्तो बाध्यते, यद्येवम्, गोसन्दाय इत्यणोऽपि बाधः स्यात्, न भवति। पुरस्तादपवादन्यायेनैवानन्तरस्यैव णस्य बाधनात्। ननु

१. न्यूनपाठः (वा०)
२. तद्धि (भं०)
३. णिनेः प्रापकः (भं०)
४. ४।२।४६ (दु० वृ०)
५. बाधनार्थम् (?)
६. ४।२।५० (दु० वृ०)
७. ४।२।५२ (दु० वृ०)

क-प्रत्ययं प्रकृतं विधाय सुग्ल इत्यादि सिध्यत्येवेति किं प्रत्ययान्तकरणेनेत्याह—प्रत्ययान्तकरणमित्यादिगतार्थम् । तु-शब्दो बाधकविषयेऽपि क्वचिड्ड-प्रत्ययप्रवृत्त्यर्थः । तेन व्याघ्रम् इत्यत्र [1]शटं बाधित्वा डः सिद्धो भवतीति । एवं च यद्वक्ष्यति, जिघ्रातेः संज्ञायां नेष्यत इति तदुपपन्नं भवति ।

धेड्दृशिपाघ्रापदश्शङ् स्यात् [2]४।३।४३

पा इति पिबतेर्ग्रहणं न तु पातेः, लुग्विकरणत्वात् । धेडादिभिः भौवादिकैः साहचर्याच्च पूर्वेण ड-प्राप्ते वचनम् । शङो ङकारः उत्तरार्थः । ददः दध इत्यत्रागुणे प्रत्यये परत्वादभ्यस्तलक्षण आलोपो यथा स्यात् ।

साधिमाहिसातिचेद्युदेजिवेदिधारिपरिलिम्पविन्दां त्वनुपसर्गे [3]४।२।४४

सह्यादयोऽष्टाविनन्तानुकरणाः । लिम्पविन्दावप्यनुकरणावित्युक्तमेव । विदिस्सामान्य इति विशेषानुपादानात् । तत्र विदन्तं प्रयुङ्क्त इति ज्ञानार्थस्य विग्रहः । सत्तार्थस्य तु विद्यमानं, लाभार्थस्य तु विदन्तं प्रयुङ्क्त इति । विधारणार्थस्यापि विन्दानं प्रयुङ्क्त इति । विदि चेतनाख्यानविवादेष्वित्ययं विदिः, चुरादित्वात् । स्वार्थेऽनन्तः । अनुपसर्ग इत्युच्यते । तत्रेदं न सिध्यति, निलिम्पा नाम देवा इति । तु शब्दो विशेषप्रतिपत्त्यर्थः तत एव सेत्स्यति तथा च गोविन्दः अरबिन्द इत्यत्राण् न भवति ।

दान्धाञोर्वा [4]४।२।४५

दद दाने दध धारणे इत्याभ्यामचि कृते ददः दध इति रूपद्वयं सिद्धम्, दायः धायः इत्येतदपि णे सति ददाति दधात्योरिति योगारम्भोऽनार्ष इत्याहुः । वा ग्रहणं तु उत्तरत्र कर्तव्यमेव ।

ज्वलादिदुणीभ्यः णः [5]४।२।४६

कस गतावित्येतदन्तेभ्य इति । अतः परं वृत्करणादिति भावः घटाद्यन्तर्गणपातिनः तु ज्वलादयः सामान्येन गृह्यन्ते, अनभिधानात् । टुदु उपताप

---

१. शङम् (वा०)

२. धेट्दृशिपाघ्राध्मः शः ४।२।५३ (दु० वृ०)

३. साहिसातिवेद्युदेजिचेतिधारिपारिलिम्पविन्दां त्वनुपसर्गे ४।२।५४ (दु० वृ०)

४. दुर्गवृत्तावस्य सूत्रस्याभावः ।

५. ४।२।५५ वा ज्वलादिदुनीभुवोऽण् (दु० वृ०)

इति । दु द्रु गतावित्यस्यायमप्यत्र गृह्यते । यद्येवम्, दुनोतेः सानुबन्धकत्वाद् ग्रहणं न प्राप्नोति, दुन्योरल्पस्वरयोः परनिपात करणात् परिभाषाव्यभिचार-सूचनार्थत्वाद् भविष्यति । अनुपसर्गः भवतीति । व्यवस्थितविभाषाविज्ञानाच्च ज्वलादिभ्योऽनुपसर्गेभ्यो विकल्पः । दुन्योस्तु नित्यो विधिः । अतएव दावः नाव इति वृत्तावुदाहृतम् । भावः भव इति भवतीति कर्तरि विग्रहः ।

**दिहितिहिश्लिषिश्वसिव्यध्यतीणश्यातां च** [1]४।२।४७

दिहिश्लिषीणामुपादानस्य प्रयोजनं न विद्मः । दिहादीनां त्रयाणामचैव सिद्धत्वात् । नाप्युपधालक्षणः क-प्रत्ययः स्यादिति चेत्, देवमेव-मेषादिवन्न भविष्यति । चकारोऽनुक्तप्रकृतिसङ्ग्रहार्थः तेनावतरतीत्यवतारः ।

**गेहे त्वक्** [2]४।२।४८

गेहेऽर्थ इति । प्रत्ययार्थस्य कर्तुरेतद्विशेषणम्, उपपदं तु न भवति । उपाधिसम्बन्धस्यान्तरङ्गत्वात् । एवमन्यत्रापि वाच्यम् । गृहे स्थिता अपि दारा गृहशब्देनोच्यन्ते । इति । तात्स्थ्यात् तच्छब्दं भवतीति । यथा मञ्चस्था बाला मञ्चा शब्देनोच्यन्ते । ननु गौणेऽत्र गेहे प्रत्ययो न प्राप्नोति । तु शब्दाद् भविष्यति ।

**शिल्पिनि वुष्** [3]४।२।४९

शिल्पिन्यर्थ इति । कर्तुरेतद्विशेषणम् । नृतिखनिरञ्जिभ्यो एव प्रत्ययं स्मरन्तीति । नान्येभ्यः, अनभिधानादिति शेषः ।

**गस्थ कः** [4]४।२।५०

कै गै शब्द इत्यस्मादिति न तु गाङ् गतावित्यस्मादपि । कुतः थकन्प्रत्ययान्तात् गाथकशब्दात्, गायत्यर्थस्यैव प्रतीतेः नहि गायक इत्युक्ते स गत्यर्थः प्रतीयते ।

**हः कालव्रीह्योः** [5]४।२।५१

ओहाकः कानुबन्धकरणमित्यादि । सति तु ओहाकः ककारे द्वयोरपि

---

१. ४।२।५८ (दु० वृ०)
२. ४।२।६० (दु० वृ०)
३. ४।२।६१ (दु० वृ०)
४. ४।२।६२ (दु० वृ०)
५. ४।२।६४ (दु० वृ०)

जहातिजित्योर्द्व्यनुबन्धकत्वादेकानुबन्धकपरिभाषा तु नावतरतीति भावः।

**सुत्वां साधुकारिणि** ४।२।५२

साधु करोतीति साधुकारी। अतएव निर्देशात् णिनि-प्रत्ययः।

कृत्प्रकरणे द्वितीयः पादः।

## तृतीयः पादः

**कर्मण्यण्** ४।३।१

करोतेः क्रियते। तत्फलार्थिभिरिति कर्मभ्यो औणादिको मन्-प्रत्ययः। अत्र च ऋकारान्तलक्षणः प्रकृत्याश्रयोऽन्तरङ्ग इण प्रतिषेधो न्याय्यः, न तु घोषवन्निमित्तः प्रत्ययाश्रयो बहिरङ्ग इति तान्त्रिकाः। ततः कालभावयोरित्यादिना भावे सप्तमी। कर्मणः सत्तया प्रत्ययस्य हि सत्ता लक्ष्यते। एवं सर्वत्र मन्तव्यम्। अणीत्यतः स्वरूपेणार्थेनार्थवत्त्वाद्विभक्तिः कर्मण्युपपद इति न त्वर्थे कर्तुः प्रत्ययार्थेनाभिधानात्। कृत्रिमत्वाच्च साधनकर्मार्थो गृह्यते। यच्छास्त्रे संज्ञात्वेन प्रणीतत्वात् प्रत्यासन्नं नत्वकृत्रिमक्रियं कर्म। तद् ग्रहणे हि सति क्रियावाचिन्येवोपपदे प्रत्ययः स्यात्। स्वरूपमपि न गृह्यते, कर्मसंज्ञाविधानानर्थक्यप्रसङ्गात् भृतौ कर्मशब्द इत्यदा कर्मशब्दग्रहणाच्च शब्दादीनां चोत्तरत्र निषेधारम्भो विफलः स्यात्, प्राप्त्यभावात्। तच्चेदं कर्म त्रिविधम्—निर्वर्त्यम्, विकार्यम् प्राप्यञ्च। तत्र यस्योपादानकारणं नास्ति तन्निर्वर्त्यम्, यथा – संयोगं करोति। यस्य अपि सदप्युपादानकारणं न विवक्षितम्, तदपि निर्वर्त्यम्, यथा कटं करोतीति। विकार्यं तु यस्य सत एव विकारः किञ्चित् क्रियते यथा काष्ठानि दहतीति। यदा तूपादानकारणमेव परिणामित्वेन विवक्ष्यते यथा मृदा घटं करोतीति। तदपि विकार्यं कर्म। अथापि भेदो विवक्ष्यते मृदः घटं करोतीति। तदा तन्निर्वर्त्यमेव कर्म। प्राप्यं तु यस्य क्रियासम्बन्धमात्रम् उपादीयते यथा वेदमधीत इति। प्राप्यत्वं च यद्यपि क्रियया प्राप्यमाणत्वात् सर्वस्य कर्मणोऽस्ति तथाप्यवान्तरभेदविवक्षायामेतत् त्रैविध्यमुच्यते। तत्र त्रिविधेऽपि कर्मणि प्रत्ययोऽयम् विशेषस्यानुपादानात्। अतएव त्रीण्युदाहरणानि क्रमेणाह—कुम्भकार इत्यादि। करोत्यादिक्रियाभिः कुम्भादीनामाप्यमानत्वाद् द्वितीया। ननु बाधिकायाः कर्मषष्ठ्या विषयोऽयं

---

१. ४।२।६६ (दु० वृ०)

तत्कथमत्र द्वितीया स्यात् । षष्ठ्यपि न भवेद्, अनुपजातनिमित्तत्वादिति लिङ्गमात्र एवोपपदे प्रत्ययः स्यात्, नैतत्, एवं हि सति कुम्भादीनां कर्माख्यः शक्ति[1]विषयो नावगम्यत इति तदवगमायावश्यापेक्षणीयैव तेभ्यो द्वितीया । तां चान्तरङ्गत्वाल्लब्धास्पदां कृत् षष्ठी बहिरङ्गा सती नालं बाधितुमिति द्वितीयान्तेष्वेव तेषु प्रत्ययो न्याय्यः इह कस्मान्न भवति, महान्तं कुम्भं करोतीति, न भवति सापेक्षत्वात् । महाकुम्भकार इति तु भवत्येव यथा महाकुम्भशब्दः कर्मधारयः क्रियते, मृदं [2]कुम्भी करोतीत्यत्रापि सापेक्षत्वादेव न भवति । केन किमत्रापेक्ष्यत इति चेत् विकारेण प्रकृतिः तदनपेक्षायां च्विप्रत्ययस्य नाभावात् । अनभिधानादिति । अयमत्रार्थः नित्यानां शब्दानामिदमन्वाख्यानमात्रं शास्त्रम् । न चादित्यं पश्यतीत्याद्यर्थप्रतिपादनायादित्यदर्शादयः शब्दाः लोके प्रयुज्यन्त इति शास्त्रेणापि साधुत्वेनानुमन्यन्ते इति ।

**ह्वावामश्च ४।३।२**

ह्वावाम इति समाहारद्वन्द्वः नपुंसकह्रस्वत्वं तु न भवति निर्देशसामर्थ्यात् । वेञ् तन्तुसन्तान इति । अथ वातेरदादिकस्य ग्रहणं कस्मान्न भवति, अकर्मकत्वात् । ननु गत्यर्थो [3]वातिरकर्मक इति । चित्रमेतत् । गच्छतिवद् गम्यमान कर्मसद्भावात् । नैतत्, नेह धातवः सर्वे गतिमेकरूपामेव प्रतिपादयन्ति । प्रवृत्तिरूपा हि गतिः कैश्चिद् धातुभिरभिधीयते । कैश्चित्तु पादविहरणात्मिका । तदयं वातिकर्तृकां प्रवृत्तिरूपां गतिमाह—न च प्रवृत्तौ किञ्चन कर्मास्तीति युक्तमुक्तमकर्मकत्वाद् इति । वायति [4]परिशोषणार्थो न गृह्यते । अकर्मकत्वादेवमासामान्य इति तेन [5]समासेन माङ् माने, मीङ् प्रणिधाने इति त्रयाणां ग्रहणम् । निरनुबन्धकपरिभाषा तु न प्रवर्तते । मा इति रूपसामान्यविशेषपरिहारेण परिग्रहात् । यद्येवम्, मीञ् हिंसायाम्, डुमिञ् प्रक्षेपण इत्येतयोरपि मीनातिमिनोतीत्यादिना कृते आत्वे मारूपग्रहणं प्राप्नोति, इष्यत एवानयोरण् प्रत्ययः स च पूर्वेणास्तु, अनेन वा कोऽत्र विशेषः ।

**[6]शीलिकामिचरिभक्षिभ्यो णः ४।३।३**

शीलि-भक्षि इन्नन्तानुकरणाविह गृह्येते । कमिरमीनिङन्तानुकरणः ।

---

१. विशेषः (मं०)
२. कुम्भम् (मं०)
३. आवाति (वा०)
४. रपिशोषणार्थः (मं०)
५. मामान्येन (मं०)
६. शीलिलकामिभक्ष्याचरिभ्यो णः इति दुर्गपाठः । वा० ग्रन्थे तु शीलीत्यस्य स्थाने शूलीति पाठः वर्तते ।

निर्देशकाले तु लक्षणवाक्येन प्रत्यये क्रियमाणे सति पञ्चमी दुर्घटा स्यात् । अणि प्राप्ते वचनम् ।

**स्त्रीप्रत्ययकृतश्च** [1]४।३।४

ण-प्रत्ययो विशेषः । तथा च वक्ष्यति योगारम्भकरणमित्यादि । ननु मांसे शीलोऽस्य, धर्मे कामोऽस्येत्येवं बहुव्रीहौ कृते मांसशीलादयः सिध्यन्त्येवेति किमनेन योगारम्भेण । मांसं शीलयतीत्येवं विग्रहविवक्षायां कर्मोपपदलक्षणोऽण् प्रत्ययो एव भवति बहुव्रीहिः । तथा च मांसशील इत्यादौ असति बहुव्रीहौ मांसं शीलयतीत्यर्थविवक्षायां कर्मोपपदलक्षणो प्रत्यय एव स्यात् । तथा च स्त्रीत्वविवक्षायामणन्तादी-प्रत्ययो भवेत् । तन्मा भूदेष दोष इति योगारम्भः, किमेतस्य ज्ञापने प्रयोजनम् । अभिगमनमभिगमः । अल्प्रत्ययः । अम्भस्याभिगमोऽस्य इति बहुव्रीहिर्न भवति । अन्यथा अम्भोऽभिगम इत्यनिष्टं स्यात् । अम्भोऽभिगच्छतीत्यम्भोऽभिगामीत्यण् प्रत्यय एव तु ([2]भवति अत्र विषये बहुव्रीहिरनभिधानान्न भविष्यति, अण् प्रत्यय एव तु) प्रवर्तयिष्यते । तत्कथमेतज्ज्ञापने प्रयोजनं स्यादिति चेत्, इहाभिधानं बहुव्रीहेरभावं विधत्ते । पूर्वत्र कर्मोपपदलक्षणस्याण् प्रत्ययस्येत्येवमभिधानवाचो युक्तिः विश्रृङ्खला सती कथमिव लक्षणानुसारिणां प्रतिपत्तिगौरवविधायिनी न स्यादिति योगारम्भ एव ज्यायान् । [3]ईक्षिक्षणिक्षोणो वक्तव्य इत्यणो बाधः । स्त्रियां च विशेषः ।

**आतोऽनुपसर्गाड्डः** [4]४।३।५

अविद्यमान उपसर्गो यस्य धातोरिति विग्रहः ।

**नाम्नि स्थश्च** [5]४।३।६

कर्मणीति निवृत्तम् । अनुपसर्गादित्यत्र न सम्बध्यते । ड-प्रत्ययो भवतीति कृत्वा कर्तरि । यद्येवम्, आखूनामुत्थानमाखूत्थं वर्तत इति भावे न स्यात् । कृत्ययुटोऽन्यत्रापीत्येवं भविष्यति । यद्येवं कर्मादिष्वपि स्यात्, अनभिधानान्न भविष्यति । सर्वस्मादाकारान्तादिति । न केवलं तिष्ठतेरिति भावः । केचिदिच्छन्तीति । केचिद् इति वचनाद् अन्ये । किमत्र पृथग् ड-प्रत्ययप्रयासेन ।

---

१. शीलि (वा०)

२. न्यूनपाठः (वा०)

३. ईक्षिक्षमिक्षणो (भं०)

४. आतोऽनुपसर्गात् ४।३।४ (दु० वृ०)

५. ४।३।५ (दु० वृ०)

कृत्यमित्याह्वयतो द्विपाद इमे रूढिशब्दाः । न च रूढिष्ववयवार्थं प्रत्यभिनिवेष्टव्यमित्यतः कच्छं पिबतीत्येवं शब्दव्युत्पत्तिमात्रार्थे विग्रहे कृते कर्मण्युपपदे आदन्तलक्षण एव ड-प्रत्ययः कच्छपादौ भविष्यति, इत उत्तरं कर्मणि नाम्नीति च द्वयनुमवर्तते, तत्र सकर्मकेषु धातुषु कर्मणीत्येतद् उपतिष्ठते, अन्यत्र तु नाम्नीति ।

**प्रे दाज्ञः ४।३।७**

दाज्ञ इति समाहारे द्वन्द्वः । प्र-शब्दः पर इति । प्रशब्दपरो यस्मात् कर्मण इति विग्रहः । प्र-शब्दात्परमिति तु न विगृह्यते धात्वर्थेनोपसर्गस्य योगाभावप्रसङ्गात् । सोपसर्गार्थश्चायमारम्भः । दा इति ददातेर्ग्रहणं नान्येषाम्, अनभिधानात् ।

**समि ख्यः ४।३।८**

ख्या इति चक्षिङादेशो गृह्यत इति । एतच्च प्रथनार्थस्य संपूर्वस्य प्रयोगासम्भवाल्लभ्यते । प्रयोगसम्भवस्त्वस्याकर्मकत्वात् कर्मणीति चेहानुवर्तते ।

**गष्टक् ४।३।९**

कै गै शब्द इत्यस्मादिति न तु गाङ् गतावित्यस्मादपि, कुतः, अनभिधानात् । आतोऽनुपसर्गाड्डः इत्यस्य बाध इति । स्त्रियां च विशेषः ।

**सुराशीध्वोः पिबतेः ४।३।१०**

पिबतेरिति पा पान इत्यस्मात्, तस्यैव हि पिबतेरिति रूपः सम्भवति । पा रक्षण इत्यस्यालुग्विकरणार्थः । यद्येवम्, अतएवास्य ग्रहणं भविष्यतीति किं श्तिपो निर्देशेन, सत्यम्, विस्पष्टार्थं तु ।

**हृञोऽज्वयोऽनुद्यमनयोः ४।३।११**

वयोऽनुद्यमनयोरिति सामान्योपादानेऽपि यथासम्भवं व्यवस्था । एकापि हि सप्तमी विषयभेदाद् भिद्यते, तत्रानुद्यमनं धात्वर्थस्य विशेषणम् । वयस्तु गम्यमानं तदाह—अनुद्यमनेऽनुत्क्षेपणे वर्तमानात् हृञो अज्भवति वयसि च गम्यमान इति पृथग्वयोग्रहणमित्यादि । क्वचमाहर्तुं शक्नोतीत्येवं यदुद्यमनं सम्भाव्यते तद्वयोविशेषणमवगमयत इत्युद्यमनार्थं वयग्रहणम् ।

**अर्हश्च[1] ४।३।१२**

स्त्रियां विशेषार्थ इति । अणि सति प्रत्ययः, अचि त्वा प्रत्यय इत्येष

१. ४।३।१३ (दु० वृ०)

विशेषः। स्तम्बेरमः, कर्णेजप इति सत्यपि समासे कण्ठेकालादिवद्विभक्तेर्लोपो न भवति। सूचकः पिशुन उच्यते।

**धृङ् प्रहरणे चादण्डसूत्रयोः** [1]४।३।१३

प्रह्रियतेऽनेनेति प्रहरणम्, करणे युट्, वज्रधरादौ वज्रं धारयतीत्यादि विग्रहः कृतः, स कथं यावता केवलो धृङ्त्रोपात्तो न त्विन्नन्तः तत् कथमिनमाश्रित्य धारयतीत्यादिवाक्यं युज्यत इत्याशङ्क्याह--इन्नर्थमित्यादि। प्रयोज्यप्रयोजकभावलक्षण इनोऽर्थो वज्रधरादौ वन्तुर्भाव्यते। अनुप्रवेश्यते यतो वज्रधर इत्युक्तेन वज्रस्यावस्थानमात्रं प्रतीयते। किन्तर्हि वज्रमवतिष्ठमानं स्थितिं प्रतिलभमानमवस्थापयति। यस्स शतक्रतुः वज्रधर इत्युच्यते। एवं च शब्दार्थान्यथानुपपत्त्या योऽन्तर्भूतः प्रयोज्यप्रयोजक भावलक्षण इनोऽर्थस्तदाश्रयणेन केवलस्यापि धृङो धारयतीति वाक्यमुपपन्नमेव। ननु दण्डस्य प्रहरणत्वात् प्राप्तौ सत्यां युक्तो निषेधः सूत्रस्य त्वयुक्तो नहि तत् प्रहरणत्वेन प्रसिद्धमित्याह – सूत्रस्येत्यादिगतार्थम्।

**धनुर्दण्डत्सरुलाङ्गलाङ्कुशयष्टिशक्तितोमरेषु ग्रहेर्वा** [2]४।३।१४

समुच्चये वा शब्द इति। न तु विकल्पे, नित्यमच्प्रत्ययस्य दर्शनात्। च शब्द एव तु न कृतः, निपातानां विचित्रमर्थं प्रदर्शयितुम्। घटीघटयोरप्यजिष्यत इति लिङ्गग्रहणपरिभाषया घटे शब्देऽपि भविष्यतीति तदुपादानं परिभाषायाः नित्यत्वदर्शनात्। तथा च सखिशब्दस्य ([3]घुट्येत्वं सखिशब्दस्य न भवति) अव्ययस्यापि सत्त्ववचनत्वात् कर्मणि द्वितीयैकवचनम्। (अयमंशः वक्ष्यमणसूत्रस्यास्ति, वा० ग्रन्थे प्रमादात् अत्र लिखितः।

**शं पूर्वेभ्यः संज्ञायाम्** [4]४।३।१५

[5]शंकर इत्यादि। अत्र शं-शब्दस्याव्ययस्यापिसत्त्ववचनत्वात् कर्मणि द्वितीयैकवचनम् (तथाहि शंकरस्सुखं करोतीत्यर्थः। अव्ययानामपि हि केषांचित्सत्त्ववाचित्वं कर्मणा सम्बन्धो दृश्यत एव। यथा [6]जायेस्वोरोहावीहीति। अत एवाचार्याः चादिषु स्वरादीन्न पठितवन्तः अभिहितवन्तश्च। किञ्चिद-

---

१. ४।३।१४ (दु० वृ०) अत्रैव सूत्रे धृङः स्थाने दुर्गवृत्तौ धृञ् इति पाठः।
२. ४।३।१५ (दु० वृ०)
३. पाठाधिक्यम् (भं०)
४. ४।३।१७ (दु० वृ०)
५. न्यूनपाठः (वा०)
६. (?)

व्ययं दिवेत्यादिविभक्त्यर्थप्रधानं किञ्चिच्च पृथगित्यादि क्रियाप्रधानमिति। असत्त्ववाचित्वे तु विभक्त्यर्थप्राधान्यं प्रयुज्य एव विभक्त्यर्थस्य कारकात्मकत्वात्। कारकविभक्त्यात्मकत्वाच्छक्तेश्च शक्तिमदाधारत्वात् वैचित्र्यार्थमिति। ननु कृञो हेत्वादि-युट्-प्रत्ययबाधनार्थं पूर्वग्रहणम्, तत्कथं वैचित्र्यार्थं भवेत्। तथा ह्यचोऽवकाशः वशंवद इति। कृञो हेत्विति ट-प्रत्ययस्यावकाशः। श्राद्धकरः इति। करोतेः शम्युपपदे संज्ञायामुभयं प्राप्नोति। शङ्करा नाम परिव्राजिकेति परत्वाट्ट प्रत्ययस्स्यात्। पूर्वग्रहणात्तु पूर्वो ट एव भवति। तदेतस्मिन्प्रयोजने सति कथं वैचित्र्यार्थं पूर्वग्रहणं स्यात्, एवं मन्यते शङ्करा नाम परिव्राजिकेति। नैव करोतेः प्रयोगः, किन्तर्हि, गृणातेः शब्दार्थस्य, ततः शङ्करा शब्दोऽयं न तु शङ्करशब्दः। कथं प्रयोगकारकस्य वक्तव्यमिति, एवं च मुख्यप्रयोजनाभावात् उक्तम्, वैचित्र्यार्थमिति।

**शीङोऽधिकरणे [1]४।३।१६**

अवमूर्ध शय इति। अवाङ् मूर्धा यस्येति बहुव्रीहिः।

**अन्यत्रापि च [2]४।४।१७**

अन्यस्मिन्नुपपद इति। अनधिकरणे। आदाय चरतीत्यादायचरः इति नन्वत्रादातव्यं कर्मादायेत्यनेनापेक्ष्यत इति सापेक्षत्वात् कथं प्रत्ययः? उच्यते- नात्रादातव्यं कर्म विवक्ष्यते, अनादानवृत्तिपरत्वाच्छब्दस्य। आदाय चरति, नत्वनादायेति। ह्यत्र विवक्षितम्, एष्वेवोपपदेष्वत्र प्रत्ययं स्मरन्तीति नोपपदान्तरेण विधानादित्यर्थः।

**पुरोऽग्रतोऽग्रेषु सर्तेः [3]४।३।१८**

पुर इति पूर्वशब्दात् पुरस्तादादयश्चेत्यच्प्रत्ययः पुरादेशश्च। अग्रत इति। तसन्तोऽयमाद्यादित्वात्। अग्र इत्यव्ययानुकरणम्। पुरश्चाग्रतश्चाग्रश्चेति द्वन्द्वः। सर्तेरिति भौवादिकजुहोत्यादिकयोर्विकरणमकृत्वा सामान्येन निर्देशः।

**पूर्वे कर्तरि [4]४।३।१९**

कर्तृग्रहणमिह पूर्वशब्दस्य विशेषणम्, नत्वयं प्रत्ययार्थः। तस्य कर्तरि

---

१. ४।३।१८ (दु० वृ०)
२. अप्राप्योऽयं दुर्गवृत्तौ।
३. ४।३।२० (दु० वृ०)
४. ४।३।२१ (दु० वृ०)

कृदित्यनेनैव लब्धत्वात् कर्तृग्रहणानर्थक्यप्रसङ्गात्। पूर्वः सरतीति पूर्वसरः इति। नन्वत्र कर्मात्पूर्व इति सापेक्षत्वात् कथं प्रत्ययः। सम्बन्धिशब्दस्य सापेक्षस्यापि सतो नित्यं वृत्तिदर्शनात्। देवदत्तस्य गुरुकुलमित्यादिवत्। तथा च परपदेनेति समासः।

**कृञो हेतुताच्छील्यानुलोम्येषु अशब्दवैरकलहगाथाचाटुसूत्रमन्त्रपदेषु [1]४।३।२०**

अनुगतानि लोमान्यस्येति लोमशब्दात अकारः समासान्तः, नस्य तु क्वचिदिति न-लोपः। इवर्णावर्णलोपः ततोऽनुलोपस्य भाव इति यण्-प्रत्ययः। शब्दादिवर्जित इति। अत्र शब्दश्लोक इत्यादीनां तु लोपपदत्वम्, अविच्छिन्नाचार्योपदेशपारम्पर्यात्। हेतुताच्छील्यानुलोम्ये च गम्यमान इति। ननु हेतोः कथं गम्यमान इति। ननु हेतोः कथं गम्यमानता युक्ता, गम्यमानं हि तदुच्यते यत्साक्षाच्छब्देन नाभिधीयते। अथ चार्थमविनाभावत्वेन प्रतीयते, यथा गुड इत्युक्ते माधुर्यम्। यशस्कर इत्यादौ तु प्रत्ययान्तेन साक्षादेव ([2]यशो जनननिमित्तभूते हेतुरभिधीयते तथा हि यो यशसो हेतुस्स यशस्कर इति उच्यते तेन साक्षात् एव हेतोरत्राभिधानं न तु माधुर्यवद् गम्यमानत्वेन यत्त्वत्र विद्यादिपदं प्रयुज्यते तद्धेतु विशेषाभिव्यक्तये। श्राद्धकारः वचनकारः इत्यादौ तु ताच्छील्यानुलोम्येन प्रत्ययान्तवाच्ये, किन्तर्हि कर्त्रैवात्र साक्षात् प्रतीयते स च ताच्छील्यानुलोम्य अविनाभावित्वेनावगम्यत इति तयोः साक्षात् प्रत्ययान्तेनाभिधानाद् युक्तं गम्यमानत्वं हेतुस्तु कथं तत्सङ्गच्छते, सत्यम्, अस्त्यत्र। किन्तु कश्चिद् वाच्यत्वेन गम्यमानो भवति कश्चित् प्रतीयमानत्वेनेति हेतोः वाच्यता सङ्गच्छत, इतरयोस्तु प्रतीयमानत्वमिति न दोषः। यद् वा गम्यमान इत्येतद् हेतुपदेन [3]सम्भत्स्यामहे तेन हेतौ वाच्य इति व्याख्येयम्। फलसाधनयोग्यः पदार्थहेतुरिति। एतेन लौकिकस्य कारणपर्यायस्य हेतोरिह ग्रहणमिति दर्शयति। परिभाषकस्तु हेतुर्न गृह्यते। ताच्छील्यानुलोमाभ्यां लौकिकाभ्यां संज्ञात्वेन तस्य साहचर्यात् कुम्भकारादौ तु ताच्छील्यविवक्षायां कुम्भकार इति परत्वाट्टप्रत्ययो न भवत्यनभिधानात्।

**त्यदादिकाराद्यन्तानन्तबहुबाहुदिवाविभानिशाप्रभाभास्चित्रकर्तृनान्दीकिलिपिलिबिभक्तिक्षेत्रसंख्यासु च [4]४।३।२१**

कर्मणीत्यनुवर्तत इति। तदनुवर्तमानमपि दिवाशब्देन न सम्बध्यते,

---

१. कृञो हेतुताच्छील्यानुलोम्येष्वशब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु ४।३।२२ (दु० वृ०)
२. न्यूनपाठः (वा०)
३. सम्बध्यामहे (भं०)
४. दुर्गवृत्तावत्र भिन्नः पाठः ४।३।२३ (दु० वृ०)

तस्याधिकरणशक्तिप्रधानत्वात् कर्मत्वानुपपत्तेः। अहेत्वाद्यर्थं वचनमिति। हेत्वादिविवक्षायां पूर्वेणैव सिद्धत्वात्। त्यत्कर इति त्यत्-शब्दो यं तच्छब्द-पर्याय इत्याहुः। तथा अत्रान्तानन्तशब्दौ किमर्थं द्वावुपादेये, ते यावता अन्त-ग्रहणमेव क्रियतां नञ्समासे च सति अनन्तकर इति सिध्यत्येवेति किमन्तशब्दस्य पाठेन? सत्यम्, रूपं सिध्यति, अर्थस्तु भिन्नः। अन्यो ह्यन्तं करोतीत्यर्थः, अन्यस्त्वनन्तं करोतीति। दिवाकर इति। दिवा करोतीति दिवाकरः। दिवा-करोति प्राणिनश्चेष्टायुक्तानित्यर्थः। संख्याग्रहणेनार्थो गृह्यत इति निर्देस्यार्थ-परत्वात्। यथास्वादौ चेति चकारोऽनुक्तसमुच्चयार्थः। तेनाहस्करः धनुष्करः क्षपाकर इत्यादयः।

**भृतौ कर्मशब्दे**[1]४।३।२२

भृतिः, स्त्रियां क्तिः। अतएव ज्ञापकात्। अत्र च समजेत्यादिना क्यप् प्रत्ययः स्यात्। अन्ये तु क्रियाशब्दोऽयं न तु संज्ञाशब्दः। ततो नायं क्यप्-प्रत्ययस्य विषय इत्याहुः। भृतिः वेतनमिति कर्ममूल्यम्। शब्दग्रहणं कर्म-शब्दस्य स्वरूपेण परिग्रहार्थमिति। असति हि शब्दग्रहणे पारिभाषिकस्य कर्मणस्तावद् ग्रहणेन सम्भाव्यते। कर्माधिकारात् कर्मग्रहणानर्थक्यप्रसङ्गादिति प्रत्ययार्थत्वमेव कर्मणः कश्चित् सम्भावयेत्, तदेवंविधसम्भावनाविनिवृत्तये कर्मशब्दस्य स्वरूपेण परिग्रहो यथा स्यादिति शब्दग्रहणं कर्तव्यम्।

**एजेः खश्**[2]४।३।२३

एजिरिन्नतो गृह्यत इति। कुतः, कर्मणीत्यनुवृत्तेरनिन्नन्तस्य च[3]तस्य अकर्मकत्वात्। केचित्तु शानुबन्धकरणं खशो हेतुत्वेन व्याचक्षते। तथा हि यदि केवलस्य एजेर्ग्रहणं स्यात् ततः सार्वधातुकवद् भावार्थेन शकारेण किं कृतं स्यात्। एजिमात्रस्य सति असति वा अन्विकरणे विशेषाभावात्। इन्नन्तस्य तु ग्रहणे सत्यात्यन्विकरणे शकारे कारितलोपः स्यादिति शानुबन्धकरण-सामर्थ्यात् एजिरिन्नन्तो गृह्यत इति तदसत्, उत्तरार्थं शानुबन्धकरणं स्यात्। अन्यथा धेट आत्वं स्यात्। ध्मश्च धमादेशो न[4]भवेदिति पूर्वक एवात्र हेतुः।

---

१. ४।३।२४ (दु० वृ०)
२. ४।३।३० (दु० वृ०)
३. अस्य (भं०)
४. भवति (भं०)

**असूर्योग्रयोर्दृशः** [1]४।३।२४

असूर्यं पश्या इत्यत्र यो सूर्यशब्दः स इहानुक्रियते दृशिना नञस्सम्बन्धात् सूर्येणायोगात् समासानुपत्तेः। असूर्यश्च उग्रञ्चेति समाहारे द्वन्द्वः। सूर्योग्र-वर्जिते कर्मण्युपपदे इति तु न व्याख्यायते कर्ममात्र उपपदे दृशोऽण् प्रत्ययान-भिधानात्। न सूर्यं पश्यतीत्यसूर्यम्पश्या इति। एतेन दृशिना नञः सम्बन्ध-त्वं दर्शयति। यतोऽत्र नञो दृशिना सम्बन्धो न तु सूर्येण। सूर्य निषेधे तु प्रयोगो न भवत्यनभिधानात्। यद्येवम्, सूर्येण सहायुक्तार्थत्वात् समासो न प्राप्नोति। अस्मादेव वचनात् गमकत्वाद्वा भविष्यति। उग्रं पश्य इति यस्य तीव्रं दर्शनं स एवमुच्यते।

**ललाटे तपः** [2]४।३।२५

ललाटं तापयतीति। अन्तर्भावितेण्णर्थत्वे सति विग्रहः।

**मितनखपरिमाणेषु पचेः** [3]४।३।२६

परिमाणशब्देनार्थो गृह्यत इति, न तु स्वरूपम्। स्वरूपप्रधानस्य तस्य विक्लित्तिवचनेन पचिना सम्बन्धानुपपत्तेः। अतएव प्रस्थम्पच इत्यादौ प्रस्थादयः शब्दाः प्रस्थादिप्रमिते व्रीह्यादावुपचारेण वर्तन्ते, मुख्यस्य प्रस्थादेर्विक्लेदा-सम्भवात्। रूढिपरिमाणं चेह गृह्यते, न तु यौगिकम्। तदाहुः—लोके प्रसिद्धमित्यादि। अन्यथा मासं पचति, एकं पचतीत्यत्रापि प्रत्ययः प्राप्नोतीति भावः। मांसं पचतीति मांसं पाकेन व्याप्नोतीत्यर्थविवक्षायां मांसात् कर्मणि द्वितीया।

**कूल उद्रुजाद्वहेः** [4]४।३।२७

कूल इति सप्तम्यन्तं, ए अय्, अयादीनां य लोपः, कुलमुद्रुज इति हस्वारुषोरिति मागमः।

**वहंलिहाभ्रंलिहेरम्मदाश्च** [5]४।३।२८

खश् निपात्यत इति। कर्मण्यणित्यण् प्राप्तः। खशि सत्यन्विकरणः,

---

१. ४।३।३४ (दु० वृ०)
२. ४।३।३५ (दु० वृ०)
३. ४।३।३६ (दु० वृ०)
४. ४।३।३७ (दु० वृ०)
५. ४।३।३८ (दु० वृ०)

अदादेर्लुक् । वहं लेढि, अभ्रं लेढीति विग्रहः ।

**वदेः खः प्रियवशयोः** [1]४।३।२६

प्रत्ययानुकरणमुत्तरार्थमिति । यदुक्तं तदेव ह्युत्तरत्रेत्यादिना विवृणोति । खशश्शकारस्य सार्वधातुकवद् भावार्थत्वात् सति सार्वधातुकवद्भावे विकरण-प्रवृत्तेः । तर्हि प्रत्ययान्तरमुत्तरत्रैव कस्मान्न कृतमिति चेत्, वैचित्र्यात् ।

**शत्रुपरयोस्तापे** [2]४।३।२९

निमित्ताभावपरिभाषया दीर्घनिवृत्तिरिति । यद्येवम्, कार्यत इत्यादौ वृद्धेरपि निवृत्तिः प्राप्नोति, नैतत्, परिभाषाणां लक्ष्यते व्यवस्थाहेतुत्वात् । तथा चार्थवत्परिभाषा इन्हन्पूषेत्यत्र न प्रवर्तते । एवं च दण्डिनौ, वाग्मिना-विति द्वयोरप्यर्थवदनर्थकयोरिनो दीर्घत्वस्य व्यावृत्तिः । गिलेऽगिलस्येत्यत्र तु न प्रवर्तते । तेन मधु गिलतीत्यत्रानर्थके गिलशब्दे मकारागमो न भवति ।

**क्षेमप्रियमद्रेषु अण् च** [3]४।३।३१

अथवा ग्रहणं कस्मान्न क्रियत इति । नन्वेवं कृते सति नास्ति मात्रा-लाघवजनितः कश्चिद् विशेष इति किमेतेन चोदितेन, अस्त्येतत्, किन्तु सप्रयोजनमिदमण्ग्रहणम् । निष्प्रयोजनप्रश्नाय चोद्यम्, युक्तमेव अणेव पक्षे यथा स्यादिति हेत्वादिविवक्षायामपीति शेषः ।

**भावकरणयोस्त्वाशिते भुवः** [4]४।३।३२

आशनमाशितमित्याङ्पूर्वादश्नातेर्नपुंसके भावे क्तः । अथवा अश्नाती-त्याशित इति कृत्ययुटोऽन्यत्रापीति कर्तरि क्तः, दीर्घत्वञ्च । अतएव निर्देशात् आशितशब्द उपपदे भावे करणे चार्थ इति विपर्ययस्तु न भवति तु-शब्दाद्विशेषप्रतिपत्त्यर्थत्वात् ख-प्रत्ययो भवतीति । नत्वनन्तरोऽण्-प्रत्ययः तेन विशेषादिष्टेन प्रकृतस्य ख-प्रत्ययस्य बाधनात् । एवमपि चानुकृष्ट-त्वात् ख-प्रत्ययः कथमनुवर्तते, शकार एव त्वनुवर्तिष्यते । वाचकादेश्यं तु वाच्यं भवतीति च शब्दावेद्यमानः ख-प्रत्यय एव भवति, घञो युटश्चाप-वादः । वासरूपविधिना च युडपि भवति । न तु घञ्-प्रत्ययः सरूपत्वात् ।

---

१. ४।।२६ (दु० वृ०)
२. दुर्गवृत्ताविदं नास्ति ।
३. ४।३।४२ (दु० वृ०)
४. ४।३।४३ (दु० वृ०)

ननूक्तं क्त, युट् तस् खलर्थेषु वासरूपविधिनास्तीति तत्कथं युट्-प्रत्ययः स्यात्। अस्त्येतत्। किन्तु युड्विषय उत्सर्गो न भवतीति तस्यार्थो न पुनर्युडेव न भवतीति।

**नाम्नि तॄभृवृजिधारिदमितपिसहिभ्यस्संज्ञायाम्** [1]४।३।३३

वृ इति वृञ्वृञौ गृह्येते इति, नत्वयव-प्रसिद्धेस्समुदायप्रसिद्धिर्बलीयसीति वृजिर्गृह्यते कुतः संज्ञाग्रहणात्, न च वृजेः ख-प्रत्यये कृते सति संज्ञावगम्यते, नाम्न्युपपद इति तत्र संज्ञाशब्देषु येष्वर्थानुगमोऽस्ति शत्रुंतप इत्यादिषु, तत्र नाम्नि कर्मणि प्रत्ययः। यत्र त्वर्थानुगमो नास्ति रथन्तरमित्यादौ तत्र करणादौ यथा सम्भवं प्रत्ययः। रथन्तरमित्यादि। रथ इव तरति रथन्तराख्यं साम अध्येतुर्मुखान्निष्क्रमतीत्यर्थः। विश्वं बिभर्ति, पतिं वृणीते, पतिं वृणोति, धनं जितवान् युगं धारयति, अरिं दमयति, अरातिं तापयति, सर्वं सहत इति विग्रहः। दमिरकर्मकोऽप्यन्तर्भावितेण्णर्थः सकर्मको भवति, निमित्ताभावपरिभाषया [2]वृद्धिनिवृत्तौ गुण इति। ननु प्रत्ययलोपपरिभाषया इनाश्रया वृद्धिर्निवृत्तापि सती पुनस्स्यात्, नैतत्, श्रूयमाणे प्रत्ययविषये चरितार्था वृद्धिरेवंविधं विषयं नावगाहिष्यते, नाम्नीत्यनुवर्तमान इति नाम्नि स्थश्चेत्यर्थः।

**गमश्च** [3]४।३।३४

संज्ञायां विषय इति। यद्येवम्, हृदयङ्गम इत्यसंज्ञायां न सिध्यति, च-शब्दात् सेत्स्यति।

**विहङ्गतरङ्गभुजङ्गाश्च** [4]४।३।३५

च-शब्दात् तुरगभुजगावपीष्येते।

**अन्यतोऽपि च** [5]४।३।३६

अविशेषाभिधानेऽपि। छन्दस्येवायं प्रयोग इत्याहुः। यस्तु गिरिशमुपचचारेति भाषायामस्य प्रयोगः स गिरिर्विद्यते यस्येति मत्वादित्वात् गिरिशब्दात् श-प्रत्यये कृते भविष्यति। अनभिधानाच्चान्यो न गिरिशः किन्तु त्र्यम्बक एव।

---

१. ४।३।४४ (दु० वृ०)
२. वृद्धिनिमित्तौ (भं०)
३. ४।३।४५ (दु० वृ०)
४. ४।३।४८ (दु० वृ०)
५. ४।३।४९ (दु० वृ०)

**अपात्क्लेशतमसोः** [1]४।३।३७

धातूपसर्गसम्बन्धस्यान्तरङ्गत्वात् अपात् इत्यनेन हन्तेर्विशेष्यते, न तु क्लेशतमसी, तदाह—अपात्परा यो हन्तिरिति। अन्यतोऽपि चेत्यनेनात्र ड इत्युक्ते यदि कश्चिद् ब्रूयात् तर्हि किमनेन योगारम्भेणेति। तं प्रत्याह—योगारम्भ-स्त्वित्यादि अन्यतोऽपि चेत्ययमेव विशेषो योगारम्भेणानेन प्रपञ्च्यत इत्यर्थः।

**कुमारशीर्षयोर्णिनिः** [2]४।३।३८

शीर्षघातीत्यत्र एव निर्देशात् शिरसः शीर्षभावः। शिरश्शब्दः समानार्थो वा शीर्षशब्द इत्यन्ये।

**टग्लक्षणे जायापत्योः** [3]४।३।३९

लक्षणं चिह्नं विद्यते यस्येत्यादि। अथ लक्षणमात्रे चिह्ने कर्तृविशेषणे प्रत्ययोऽयमिति कस्मान्न व्याख्यायते। यथा पतिघ्नं लक्षणमेतत् कन्यायाः, जायाघ्नं लक्षणमेतत् कुमारस्येति, नैतत्, एवं हि व्याख्यायमाने सत्यमनुष्य-कर्तृकत्वादुत्तरसूत्रेणैव सिद्धत्वात् विफलोऽयमारम्भः स्यात्। लक्षणवति तु कर्तरि मनुष्यकर्तृकत्वादसिद्धत्वाद्विफल आरम्भो जायते।

**अमनुष्यकर्तृके** [4]४.३ ४०

अव्युत्पन्नो मनुष्यशब्दो रूढिरूपेण यो रक्षःपिशाचादिषु वर्तते। किन्तर्हि, व्युत्पन्नः कृतनञ्समासः। अन्यथा तिलकादौ वाच्ये प्रत्ययो न स्यात्। कथं कृतघ्नः खल इति। मनुष्यकर्तृकत्वाट्टक्-प्रत्ययो न प्राप्नोतीति प्रश्नः, अमनुष्येति कर्तव्ये कर्तृग्रहणे विस्पष्टार्थम्। कर्तरि कृदिति वचनाच्च यत् कर्तृग्रहणं लब्धं तद्विशेषण चेदं मनुष्यग्रहणं विज्ञास्यते।

**शक्तौ हस्तिकपाटयोः** [5]४।३।४१

हस्तिकपाटयोः कर्मणोरुपपदयोरिति, न तु कर्त्रोः, अतथात्वे हि सति तयोर-मनुष्यत्वात् पूर्वेणैव सिद्धत्वादपार्थको योगारम्भः स्यात्।

---

१. ४।३।५१

२. ४।३।५२

३. ४।३।५३

४. ४।३।५४

५. ४।३।५५

(एते सर्वे सूत्राङ्काः दुर्गवृत्त्यनुसारेण निर्दिष्टाः)

**पाणिघताडघौ शिल्पिनि** [1]४।३।४२

चकारोऽनुवर्तत इति, स चानुक्तसमुच्चयार्थः। तेन राजानं हन्ति राजघः।

**नग्नपलितप्रियान्धस्थूलसुभगाढ्येषु अभूततद्भावे कृञः ख्युट् करणे** [2]४।३।४३

अभूतस्य भावः अभूततद्भावः, यत्करण स्वेन रूपेण भूतं विकारात्मनात्व-भूतं तस्य कारणस्य यो विकारोन्मुखोऽवस्थाविशेषः स इह तस्येत्यनेन प्रत्यव-मृश्यते। कर्तरि चैषा षष्ठी गुरुकुलवन्नित्यसापेक्षत्वात् च तच्छब्दस्य सापे-क्षत्वे सति समासो न विरुध्यति। नग्नादिषु तदन्तेष्वपीष्यते येनविधिस्त-दन्तस्येति वचनात्। तेन अनग्नंकरणमित्याद्यपि भवति। अथ इत्यादि चोद्यमुच्यत इत्यादिना परिहरति। अयं चात्रार्थः। शुक्लीभवतीत्यादिवदभूत-तद्भावेऽर्थे तसादित्वाद्विहितश्च्विप्रत्ययः ख्युटो सकारागमार्थात् खकारा-सञ्जननात् न भवति। नहि सति च्विप्रत्यये सकारागमस्यास्ति सम्भवः। च्व्यन्तस्याव्ययत्वात् मकारागमविधौ चानव्ययस्येत्यनुवृत्तेः। न च खकारा-सञ्जननसामर्थ्यात् च्व्यन्तत्वेऽपि मकारागमोऽस्त्विति शक्यं वक्तुम् नानिष्टार्था शास्त्रप्रक्लृप्तिरिति वचनात्। अन्ये तु धातूपपदसमुदायेनाभूततद्भावस्य [3]गमितेश्च्विप्रत्ययो न भवतीति व्याचक्षते। अभूततद्भाव इति किमिति, करोतेरभूतप्रादुर्भावोऽर्थः, स चाभूततद्भाव एवेति नार्थोऽभूततद्भावग्रहणेनेति मन्यमानस्यैष प्रश्नः, तत्राभूतप्रादुर्भावाद् भिन्नोद्भूततद्भाव उत्पत्तिमात्रे ह्यभूतप्रादुर्भावः, अभूततद्भावः त्वन्य एव। यथोक्तं कारणस्य विकाररूपेणा-भूतस्य तदात्मना भावोद्भूततद्भाव इति अभूतप्रादुर्भावे चाभूततद्भावशब्द-वाच्ये सति घटं करोतीत्यादावपि च्विप्रत्ययः स्यात्। तस्माद् यत्र भावि-विकारजननम् प्रकृतेः कारणभावो विवक्ष्यते सोऽभूततद्भावस्य विषयः। अथाप्यभेदोऽनयोरेवमप्यसत्यभूततद्भावग्रहणे यदा प्रकरणादिना करोत्य-र्थान्तरे वर्तते तदा प्राप्नुयादेव प्रत्यय इत्याशयेन प्रत्युदाहरति। आढ्यं कुर्वन्ति तैलेनेति तदेवार्थान्तरवृत्तित्वं धातूनामनेकार्थत्वादित्यादिना कथयति। ननु च्वि-प्रत्ययो विकल्पेन स्मर्यते। तत्र तत् प्रवृत्तिपक्षे अनग्नीकुर्वन्त्यनेने-त्यादौ ख्युट्-प्रत्ययः कस्मान्न भवति, न भवति, [4]नग्नीत्यादिनैव च्व्यन्तेना-भूततद्भावस्योक्तत्वादनभिधानाद्वा, तथा च युडप्यत्र विषये न भवति।

---

१. ४।३।५६ (दु० वृ०)
२. ४।३।५७ (दु० वृ०)
३. गमितत्वाच्चिव (भं०)
४. न स्त्री (वा०)

**भुवः खिष्णुखुकञौ कर्तरि** [1]४।३।४४

नग्नादिष्विवेहापि तदन्तेष्वपि विधिः। तेनानग्नं भविष्णुः, अनग्नंभावुक इत्यादयः च्व्यन्तविषये तु न भवति पूर्ववत् तेन तत्र नग्नी[2]भवितेत्यादि भवति। इष्णुउकञौ तर्ह्यत्र कस्मान्न भवतः, न भवतः। तौ हि प्रत्ययौ ताच्छील्याद्यर्थविहितौ ये चामी ताच्छीलिकाः ते रूढिप्रकाराः। न च रूढयः च्व्यन्तेन प्रादिना वा विशेषयितुं शक्यन्ते ताः हि स्वविषयोपलक्षणाय प्रवृत्ताः नात्मातिशयद्योतनार्थाः। प्रादिभिरन्येन वा सम्बन्धमपेक्षन्ते। नहि भवति, प्रकामुकः देवदत्तः इति, कुतः, रूढित्वात्। केचित्तु ताच्छीलिकाः प्रादि सम्बन्ध-मनुभवन्त्येव। येषां धात्वर्थः तद्भूतभावः प्रतीयते यथा आगमुकः प्रवर्षुक इति। ये तु सोपसर्गा एव रूढिशब्दास्तेषामप्यविनाभावे वोपसर्गसम्बन्धो यथा व्याघ्रादीनां क्रियते तर्हि रूढिषु किमर्थमाश्रीयत इति चेत्, व्युत्पत्तिद्वारेण साधुत्वप्रतिपत्त्यर्थम्। तथा चागच्छन्नपि गौरित्युच्यते। गच्छन्नपि न गौरपि। तस्माच्च्व्यन्तविषये इष्णु-उकञौ न भवतः। ननु ष्णुख इत्येवं क्रियताम्, इडागमे च कृते सति नग्नंभविष्णुरित्यादि सिध्यति एवेति किमर्थं खिष्णोरिकार [3]उच्चार्यते, उच्यते—अघोषादिप्रत्ययविषये क्वचिदिडागम-स्यानित्यत्वज्ञापनार्थमिदमिकारोच्चारणम्, तेन वस्त्रम्, पत्रम् इत्यादि सिद्धम्।

**भजसहोः ण्विः** [4]४।३।४५

अविशेषाभिधानेऽपि सहेर्विणं छन्दस्येव स्मरन्ति। वहेरप्युत्तरत्र, तुरा-साहं पुरोधाय इत्यादयस्तु कवीनामेव प्रयोगाः।

**ण्युट् कव्यपुरीष्येषु** [5]४।३।४६

अयमपि छन्दस्येव विधिरुत्तरश्च। जीमूतवाहनादयस्तु संज्ञाशब्दाः यथा-कथञ्चित् साध्याः।

**अवयाउक्थशावहोऽश्वेतवाश्च** [6]४।३।४७

आमन्त्रणविषये दीर्घत्वमपि निपात्यत इति, तत्र हि दीर्घत्वं न सिध्यति

---

१. ४।३।५८ (दु० वृ०)
२. भवति (मं०)
३. उच्चारणार्थः (मं०)
४. भजो विण् सहश्छन्दसि ४।३।५९ (दु० वृ०)
५. दुर्गवृत्तौ नोपलभ्यते।
६. दुर्गवृत्तौ नोपलभ्यते।

तद्विधौ घुटि चासम्बुद्धावित्यतो सम्बुद्धिग्रहणस्यानुवृत्तेः। विरामविषये चेदं निपातनमतन्त्रत्वमिति। अवयाभ्यामित्यादि व्यञ्जनादावपि निपातनं भवति। अतन्त्रत्वं च लक्ष्यत इति स्वरादौ निपातनाभावः। श्वेतवाहौ श्वेतवाह इति।

दुहेः क्वो घश्च [1]४।३।४८

घकारादेशश्चेति नत्वयमपि प्रत्ययः पृथग्विभक्तिनिर्देशात्। अन्यथा कघावित्येवं ब्रूयात्। अथ ककारादेशो घकारस्तु प्रत्यय इत्येवं कस्मान्न विज्ञायते, उच्यते—घानुबन्धकरणमेवं सत्यपार्थकं स्यात्। अकारमेव प्रत्ययं विदध्यात्। श्रवणार्थो घकारः स्यादिति चेत्, भवेदेवम्, यदि तथाविधमभिधानं स्यात्।

विट्क्रमिगमिखनिसनिजनाम् [2]४।३।४९

जनेर्जननार्थस्य प्रादुर्भावार्थस्य च ग्रहणम्, अविशेषात्। तथा षणु दाने, वन षण संभक्ताविति द्वयं गृह्यते। अयमपि छन्दसि विधिः।

अदोऽनन्ने [3]४।३।५०

क्विपाऽसिद्धत्वाद् योगारम्भस्तस्यैव प्रपञ्चार्थः। अन्नोपपदे चानभिधानात् क्विप्प्रत्ययो न भविष्यति।

क्रव्ये च [4]४।३।५१

योगारम्भः प्रपञ्चार्थ इति। पूर्वयोगस्येति शेषः। ननु सति योगारम्भे यथा वासरूपविधिना कणाद इत्यत्र [5]अञ्ज भवति। तथा क्रव्यशब्देऽप्युपपदे भवेत्। ततश्च क्रव्यादित्यपि प्राप्नोति। अथ किं न भवतीति क्रव्यादिति भवति। यदा कृत्त विकृत्त-शब्द-उपपदे अदेः अण्प्रत्ययः। क्रव्यादेशश्च कृत्तविकृत्त-शब्दस्य क्रियते। कृत्तः विकृत्तः। मांसभक्षो हि क्रव्याद उच्यते। क्रव्यशब्दे तूपपदे क्रव्याद इति प्राप्नोति, क्रव्यादिति चेष्यते। आममांसभक्षः क्रव्यादुच्यते। एवं तर्हि अनभिधानात् क्रव्यशब्दोपपदेऽण् प्रत्ययो न भविष्यतीति मन्यते।

---

१. दुहः को घश्च ४।३।६३ (दु० वृ०)
२. ४।३।६४ (दु० वृ०)
३. ४।३।७१ (दु० वृ०)
४. ४।३।७२ (दु० वृ०)
५. अण् (वा०)

**क्विप् च** [1]४।३।५२

घृतस्पृगित्यादि । तदेके तूपपदे स्पृशेः क्विप् प्रत्ययो न भवत्यनभिधानात्, तेनोदकस्पर्श इत्यणेव तत्र भविष्यति ।

**ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चाम्** [2]४।३।५३

ऋतौ यजतीति वसन्तादिके । ननु लाक्षणिककार्यसिद्धये सर्वत्र निपातनमाश्रीयते । ऋत्विक्शब्दे च सर्वं लक्षणत एव सिद्धमिति किमस्य निपातनेनेत्याह—अयं शब्द इत्यादि विशिष्टविषय इति यजमानभृतक एव निपातनसामर्थ्यात् ऋत्विक्शब्दवाच्यो न तु यजमान इति विशेषप्रतिपत्तये निपातनमाश्रीयत इति भावः । कर्मण्यर्थे क्विब्निपात्यत इति कर्तरि कृदिति वचनात् कर्तरि प्राप्तः ।

**कर्मण्युपमाने त्यदादौ दृशेष्टक्सकौ च** [3]४।३।५४

कर्मणीत्येवेति कर्मण्यणित्यतः त्यादृक् [4]त्यादृश इत्यादि । अत्रोपपदवाच्यं कर्म प्रत्ययार्थस्य कर्मण उपमानं भवति । कर्मणीति किम् ? तमिव पश्यतीति कर्त्रर्थे न भवतीति भावः । अन्यशब्देऽप्युपपदे इति यदयं दृशादिषु परतस्समानशब्दस्य स-भावं शास्ति ततो ज्ञायते, यथा दर्शनमन्यदादावप्युपपदे क्वचिद् दृशेर्क्विबादयो भवन्तीति ।

**नाम्न्यजातौ णिनिस्ताच्छील्ये** [5]४।३।५५

णिनेरिकारस्याधिकस्य करणमनाम्न्यपि क्वचित् यथा स्यादिति । तेनोदासारी प्रत्यासारीति यदुदाहृतं तदुपपन्नं भवति । ब्राह्मणान्निमन्त्रयितेति, ब्राह्मणशब्दो जातिवाची भिन्नेष्वभिन्नाभिधानप्रत्ययहेतुत्वात् । उष्णादिशब्दानां तु शुक्लादिशब्दवत् गुणशब्दत्वम् । तथाहि स एव कदाचिदुष्णो भवति कदाचिदनुष्ण इति । न ते जातिवाचिनः जातिशब्दानां तु नास्ति तदेतद्रूपता । नहि स एव कदाचिद् गौः कदाचिदगौर्वा भवतीति ज्ञापकाद् भविष्यतीति । तच्चेदं ज्ञापकं अताच्छील्येऽपि क्वचिण्णिनेः प्रवृत्तिं ख्यापयति । तेनेदमपि सिद्धं भवति, ब्रह्म वदतीति ब्रह्मवादीति ।

---

१. ४।३।६८ (दु० वृ०)
२. ४।३।७३ (दु० वृ०)
३. ४।३।७५ (दु० वृ०)
४. तादृश् (भं०)+कर्मण्युपमाने त्यदादौ दृशष्टक्सकौ च (दुर्गपाठः).
५. ४।३।७६ (दु० वृ०)

कर्तर्युपमाने [1]४।३।५६

उष्ट्रक्रोशीत्यादि। अत्रोपपदस्य वाच्यः कर्ता प्रत्ययार्थस्य कर्तुरुपमानं भवति।

व्रताभीक्ष्ण्ययोश्च [2]४।३।५७

अभीक्ष्णमित्यस्य भावः आभीक्ष्ण्यम्, यण्-प्रत्ययः, प्रकीर्तितग्रहणात् अन्त्यस्वरादिलोपः, व्रतञ्चाभीक्ष्ण्यञ्चेति द्वन्द्वः। व्रतमिति [3]शास्त्रतो नियम उच्यते। आभीक्ष्ण्यं पौनःपुन्यम् तात्पर्यम् आसेवा वा इत्यनर्थान्तरम्। अश्राद्धभोजीत्यादि। तत्र धातूपपदप्रत्ययसमुदायेन व्रतं गम्यते। कामचारप्राप्तौ चायं नियमः। अर्थित्वात् सति भोजने श्राद्धं न भुङ्क्त एवेति। अश्राद्ध भुङ्क्त एवेत्येवं रूपस्त्वत्र नियमो न भवति। एवं हि नियमे सति यदैव श्राद्धं न भुङ्क्ते तदैवास्य व्रतलोपः प्राप्नोति। क्षीरपायिन इत्यादि पुनः पुनः क्षीरं कषायं च पिबतीत्यर्थः। णिनिप्रत्ययः, आयिरादेशः, जस्, णत्वम्, कृत्ययुटोऽन्यत्रापीत्यपिशब्दः [4]क्वचित्कृतां व्यभिचारे सूचयति तेनाभीक्ष्ण्येऽपि क्वचिन्न भवति, [5]कुल्माशखादः श्वा।

मनः पूर्वश्चात्र [6]४।३।५८

मन्यते पर इत्येतेनाविशेषाभिधानेऽपि मन ज्ञान इत्यस्य प्राथम्यात् बुद्धौ परिस्फुरतो दैवादिकस्य ग्रहणं न तु मनु अवबोधन इत्यस्य। मनुतेस्तानादिकस्येति दर्शयति यद्यपि [7]णिनि-प्रत्ययविषये वास्त्यनयोः प्रयोगभेदस्तथाप्युत्तरत्र खशि सत्यसितविकार कृतो विशेषः।

पूर्वपदामिति [8]८।३।५६

अत्रेति सप्तमीनिर्देशे सति सप्तम्या निर्दिष्टे पूर्वस्येति पूर्वपदं [9]लक्ष्यते।

---

१. ४।३।७७ (दु० वृ०)
२. ४।३।७८ (दु० वृ०)
३ शास्त्रविहितो (मं०)
४. क्वाचित्कं (मं०)
५. कुल्माशखौदः ख (वा०)
६. मनः पुंवच्चात्र ४।३।७६ (दु० व०)
७. मनिन् (मं०)
८. दुर्गवृत्तौ नोपलभ्यते।
६ लभ्यते (मं०)

सिद्धे पुंवद्भाव इति। पुंवद्भाषितपुंस्केत्यादिना अतुल्याधिकरणार्थमिति। अस्त्रीलिङ्गोत्तरपदार्थञ्च। तथाहि पट्वीं मन्यते पटुमानीत्यत्र नास्ति पूर्वपदोत्तरपदयोस्तुल्याधिकरणत्वम्, नापि स्त्रीलिङ्गमुत्तरपदमिति सिद्धावसत्यां पुंवद्भावो विधीयते। भाषितपुंस्कस्येत्यादि कथं पुनः सामान्याभिधानेऽपि भाषितपुंस्कः स्यादनूङन्तस्य चेत्येष विशेष उपलभ्यते। प्रत्यासत्तेरस्य शास्त्रातिदेशत्वादिति चेत्, तर्हि तदतिदेशे सति कथमस्त्री वृत्तितुल्याधिकरणे चोत्तरपदे पुंवद्भावस्स्यात्। पुंवदित्यतो वचनारम्भादिति चेत् कथमिदानीमभाषितपुंस्क ऊङन्तश्च परिहर्तुं शक्यते, एवं तर्हि चानुवृत्तेर्विशेषद्योतनार्थत्वाद् भाषितपुंस्कमनूङन्तं चात्र कार्यित्वेन विज्ञायते।

**खश्चात्ममाने** [1]४।३।६०

आत्मनो मान आत्ममान इति कर्मणीयं षष्ठी न तु कर्तरि। कुतः, आत्मग्रहणसामर्थ्यात्। कर्तृषष्ठ्यां ह्यस्यात्मनो यन्मननमित्यर्थः स्यात्, एवं चात्मनोऽन्यस्य पदार्थस्य मननासम्भवादात्मगुणत्वादेव मानस्यात्मग्रहणं लब्धमिति किं तेन कृतं स्यात्। दर्शनीयमानीत्यादि। अत्र प्रत्ययार्थः कर्ता दर्शनीयत्वादिना धर्मेण युक्तं यदा आत्मा आत्मानमेव मन्यते तदा आत्मने मन्यतिर्वर्तते। कथं पुनरनेकस्यैवार्थस्य कर्तृत्वं कर्मत्वं च युज्यत इति चेत्, निर्गुणत्वसगुणत्वभेदेन कर्तृकर्मणोर्व्यवस्थितत्वात्।

**करणेऽतीते यजेः** [2]४।२।६१

अतिपूर्वादिणोऽत्येति स्मेति गत्यर्थाकर्मकेत्यादिना कर्तरि क्तः प्रत्ययः। अतीते काले यजेरिति। [3]अतीतकालमाख्ये धात्वर्थे वर्तमानात् यजेरित्यर्थः। णिनिर्भवतीति प्रकृतत्वात्, न तु विशेषादिष्टः खश् प्रत्ययः। ननु णिनिरपि चानुकृष्टः कथम् अनुवर्तेत एवं तर्हि चकार एवात्रानुवर्तते। [4]वाचकदेशं वाच्यं भवतीति चकारसामर्थ्याल्लभ्यो णिनिरत्र विज्ञायते। अग्निष्टोमयाजीति। ननु स्वर्गकामेनाग्निष्टोमाख्य एव यागो निवर्त्यते। तत्कस्यां क्रियायामग्निष्टोमस्य करणत्वं स्यात्। भेदाश्रयो ह्ययं साध्यसाधकप्रविवेको यज्यर्थविशेष एव चाग्निष्टोमो यजिना पूर्वापरीभूतस्वभावः साध्यमानावस्थोऽर्थ उच्यते। स चाग्निष्टोम लक्षणादर्थादभिन्न एवेति कथं तस्यैव साध्यत्वं साधनत्वं

---

१. खचात्ममाने ४।३।८० (दु० वृ०)

२. ४।३।८१ (भं०)

३. अतीतकालाराख्ये (भं०)

४. वाचकदेशे (भं.)

च स्यात्। अत्र आज्येनेष्टवान् आज्ययाजी हविषेष्टवान् हविर्याजीत्येवमाद्यत्रो-दाहार्यम्। यत्र स्फुट आज्यादिः नास्ति करणभावः अग्निष्टोमयाजीत्यादि तु कथमत्रोदाहरणं स्यात्, उच्यते – अग्निष्टोमेन यजेत स्वर्गकाम [1]इत्यादौ वाक्ये यजेतेत्याख्यातपदे द्वयमुपलभ्यते। प्रत्ययार्थश्च तत्र य प्रत्ययार्थः कर्ता स व्यापाराविष्ट प्रतीयते. तेन च तद्व्यापारेण न धात्वर्थस्य कर्तव्यत्वमुच्यते। यागं कुर्यादिति यतः स्वर्गकाम इति फलप्रदमत्र श्रूयते। ततश्च स्वर्गः काम्यते न तु यागः। तत् कथं तस्य काम्यमानस्य क्रियमाणत्वं स्यादित्यग्निष्टोम-लक्षणस्य यागत्वकर्मत्वभावो नास्तीति करणत्वमेव तस्य। तथा चाग्निष्टोमे नेति तृतीया करणत्वेनाग्निष्टोमं निर्दिशति। कस्मिन्पुनः भाव्ये वस्तुन्यग्निष्टो-मस्य करणत्वम्, उच्यते— स्वर्गकाम इति। वेदवाक्ये श्रूयते तेन ईत इत्येतत् यजेरवच्छिद्य स्वर्गमित्येतत् फलपदं नीयते, स्वर्गं भावयेदिति। यद्यपि च स्वर्गकाम इति स्वर्गलक्षणस्य फलस्यान्यपदार्थो गुणीभूतत्वात्प्रत्ययार्थव्यापारेण कर्तव्यतावचनेन सम्बन्धो नोपपद्यते तथापि नात्र फलस्य तेन शाब्दः प्रधान-भूतोऽन्तरङ्गस्सम्बन्धोऽस्ति। तात्पर्यालोचनया तु वाक्यीयो बहिरङ्गोऽस्त्येव सम्बन्धः। तथाहि यागेन स्वर्गं भावयेदिति प्रतीतौ तस्योपपदतया प्राधान्य-मस्त्येवेति वाक्यगम्यत्वात् कार्यकारणभावस्य युज्यते कर्तव्यतावचनेन फलपदस्य सम्बन्धः अनुपपद्यमानेऽपि हि पदवाक्येऽन्तरङ्गे सम्बन्धे वाक्यस्या-नर्थक्यम्मा प्रासाङ्क्षीदिति बहिरङ्गोऽपि वाक्यवाच्यस्सम्बन्धः सम्भावित-त्वादाश्रीयत एव तदेवमग्निष्टोमेन यजते, स्वर्गकाम इति तृतीयाश्रवणान्यथा-नुपपत्त्या स्वर्गभावनां प्रति अस्त्येवाग्निष्टोमस्य करणत्वम्, यद्येवम्, प्रकृत्यर्थ-स्यानतिरेकाद् विशिष्टसम्बन्धो नोपपद्यत इति कथं युज्यते, अग्निष्टोमस्य करणत्वेनोपपदत्वम् स्यात्। तस्य तेन यथोपात्तेन रूपेण तस्योपपदत्वम्। किन्तर्हि युक्तार्थत्वेन अस्ति चात्र तत्, यतोऽग्निष्टोमस्य यजेश्च विशेषण-विशेष्यभावोऽत्रविशेषण सामान्यरूपतयावगम्यते। यदि विशेषणत्वादग्निष्टो-मस्य [2]ततोऽस्त्येवार्थातिरेको द्विष्ठः सम्बन्धहेतुः। तस्मादग्निष्टोमाख्येन यागेन स्वर्गं भावयेदिति वाक्यार्थे व्यवस्थिते स्वर्गफले साध्ये युक्तोऽग्निष्टोमस्यो-पायत्वात् करणभाव इति युज्यते। अग्निष्टोमयाजीत्येतदत्रोदाहरणम्।

**कर्मणि हनः [3]४।३।६२**

कर्मणीति नायमर्थः प्रत्ययान्तेन कर्तुरेवाभिधानादित्युपपदमेव तत्।

---

१. इत्येवमादौ (भं०)

२. ततोऽस्त्येवाभावातिरेकः (वा०)

३. ४।३।८२ (दु० वृ०)

यद्येवम्, तदनुवर्तत एवेति किं तेन ? सत्यम्, विस्पष्टार्थं तु कर्मण्यणित्यणि प्राप्ते वचनं वासरूपत्वात् तु सः अपि भवति, यदि तर्हि कर्मणि हन्तेर्णिनिर्विधीयते । कुमारशीर्षयोर्णिनिरिति वचनमनर्थकम्, नानर्थकमिह गृह्यते, अतीत इति वर्तते, तत्तु कालसामान्य इति स्मर्यते ।

**क्विब्ब्रह्मभ्रूणवृत्रेषु** [1]४।३।६२

ब्रह्मह इति ब्रह्मशब्देनात्र ब्राह्मण उच्यते स च पुल्लिङ्गः तेन ब्राह्मणं हतवानिति विग्रहः कृतः । ज्ञाने त्वत्र न वर्तते, हिंसायाः प्राणिधर्मत्वात् तस्य ज्ञानविषयत्वेनासम्भवात् । प्रपञ्चार्थमिति । नपुंसकैकशेषेणाय निर्देशः । अपरे तु नियमार्थमिति ([2]व्याचक्षते धातूपपदकालप्रत्ययलक्षणं च चतुर्विधं नियममाहुः । अन्ये त्वेकेन यत्नेन कथं चत्वारो नियमाः लभ्यन्त इति वर्णयन्तो नेदं नियमार्थमिति) मन्यन्ते । यदि च नियमः स्यात् ब्रह्महतवानिति निष्ठाप्रत्ययो न प्राप्नोति । अथ मध्येऽपवादाः पूर्वान्विधीन्बाधन्ते न परानित्यणेव बाध्यते न तु निष्ठाप्रत्यय इत्यभिधीयते । एवमपि वृत्रस्य हन्तेति तृच् प्रत्ययो न प्राप्नोति तत्र च नियमस्य प्रायिकत्वं वक्तव्यम्, अन्यथा मधुहेत्युपपदान्तरे ब्रह्मविदिति धात्वन्तराच्च क्विप्प्रत्ययो न सिध्यति । तस्मादभिधानानभिधानाभ्यां क्विब्व्यवस्था सिद्धेति किं नियमार्थत्वपरिग्रहेण तथा चोदकस्पर्श इत्यत्र क्विप्प्रत्ययो न भवत्यनभिधानादेव । ननु प्रपञ्चार्थत्वमपि । कथं यावता कर्मणि हन इत्यनेन णिनिना सामान्यविहितस्य क्विपो बाधः प्राप्नोतीति तद्बाधनायेदं क्विपो विधानं स्यान्न तु प्रपञ्चार्थम्, नैतत्, वासरूपविधिना क्विपोऽपि सिद्धत्वात् ।

**कृञःसुपुण्यपापकर्ममन्त्रपदेषु** [3]४।३।६३

असम्भवादिति । असम्भवस्तु सुशब्दस्याव्ययत्वात् [4]कर्मत्वानुपपत्तिः । यत्त्वेषु कर्मसूपपदेष्विति सामान्येन तद् बाहुल्याभिप्रायेण यथा [5]मल्लग्राम इति ।

**विक्रिय इन्कुत्सायाम्** [6]४।३।६५

अत्र स्मिडिति क्रीडामिनीत्यात्वं न भवतीति । कथं पुनः सामान्येनात्व-

---

१. ४।३।८३ (दु० वृ०)
२. न्यूनपाठः (मं०)
३. ४।३।८४ (दु० वृ०)
४. पत्तेः (मं०)
५. मन्त्रग्रासः (मं०)
६. ४।३।८७ (दु० वृ०)

मुच्यमानमत्र विषये न भवतीत्याह—आख्यातप्रकरणविहितस्यैवेनस्तत्र ग्रहणादिति हिमजिज्ञीडामिनीत्यत्र करणानामवच्छेदकत्वादाख्यातप्रकरण एव यो विहितो हेतावर्थे इन्प्रत्ययः स एव गृह्यते। तेनैतत्सूत्रविहित इनि परत आत्वं न भवति, यद्यपि च विक्रियशब्दमलन्त व्युत्पाद्य मन्त्वादित्वात् षष्ठीसमासोत्तरकालमिनप्रत्यये कृते लाक्षाविक्रयीत्यादि सिध्यति, तथापि विपूर्वात् क्रीणातेः कुत्साविषयेऽण् प्रत्ययः स्यात् स मा भूदेष दोष इति वचनम्। एतच्चाभ्युपगम्य वादेन परिहृतम्। यतो न कृदन्तान्मन्त्वादित्वादिन्प्रत्ययो लभ्यते, तथा चाहुः—एकाक्षरात् कृतो जातेः सप्तम्यां च न तौ स्मृताविति कार्यीत्यादयस्तु प्रामादिकाः।

**दृशेः क्वनिप्** [1]४।३।८६

ननु क्वनिप्प्रत्ययो मनिनादौ सूत्रविहितो दृशेरपि भविष्यतीति किं योगारम्भेण, अस्त्येतत्, मनिनादयोऽपि प्राप्नुयुः, उत्तरत्रेति कृञश्चेत्यत्र।

**सहराज्ञो युधः** [2]४।३।८७

अव्ययत्वादिति अव्ययस्यासत्त्ववाचित्वात् कर्मत्वानुपपत्तेरिति भावः, पचाद्यदन्तस्तु सह शब्दस्सत्त्ववाचिनोऽस्ति स तु न गृह्यते, व्याख्यानात्। कथं राज्ञेति। लब्धकर्मविशेषणेनेति शेषः। इन्नर्थं प्रयोज्यप्रयोजकभावमन्तर्भाव्येति, अकर्मकस्यापि युज्यतेः कर्मणा राज्ञा युध्यतेरकर्मकस्यापि सम्बन्धो न विरुध्यत इति शेषः। राजा हि युध्यते, त युद्ध स्वयुध्यस्वेत्यन्यः प्रयुक्ते तत्र योऽसावन्यस्य सम्बन्धी प्रेषणादिको व्यापारः इनोऽर्थस्तं युध्यतावनुप्रवेश्य युज्यते कर्मणा युध्यतेरकर्मकस्यापि सम्बन्धः। तेन राजयुध्वा इत्यत्र राजानं योधितवानित्यर्थो जायते।

**कृञश्च** [3]४।३।८८

योगविभागो यथासंख्यशङ्कानिवारणार्थः।

**सप्तमीपञ्चम्यन्ते जनेर्डः** [4]४।३।८९

निष्ठायां प्राप्तायामयमारम्भः। वासरूपविधिना सापि भवति। उपसरे

---

१. ४।३।८८ (दु० वृ०)
२. ४।३।८९ (दु० वृ०)
३. ४।३।९० (दु० वृ०)
४. ४।३।९१ (दु० वृ०)

जातवानिति इह कस्मान्न भवति, अश्वाज्जातः हस्तिनो जात इति, अनभिधानात् पञ्चम्यन्ते हि जातिवर्जिते प्रायेण डः स्मर्यते, क्वचित्तु जातावपि भवति। ब्राह्मणाज्जातः ब्राह्मणजो धर्मः क्षत्रियजं युध्यमित्यन्तर्ग्रहणं विस्पष्टार्थम्।

**निष्ठा** [1]४।३।७०

इहातीते काले निष्ठाप्रत्ययो विधीयते स प्रकृतः कटं देवदत्तः इत्यादि कर्मणि न प्राप्नोति। आद्येषु क्रियाक्षरेष्वतीतेष्वपि सर्वस्याः क्रियायाः अतीतत्वाभावात्। न चादिकर्मणि क्तः [2]कर्तरि चेत्येतदर्थादेशेन आदिकर्मणि निष्ठायाम् [3]अकर्मकम् अस्तीति शक्यं वक्तुं आनुबन्धे सतीत्यादिना हि विहितस्य वर्तमानकालविषयस्य क्त-प्रत्ययस्यैवैतदर्थादेशनं स्यात्, एवं तर्हि कृत्ययुटोऽन्यत्रापीत्येवमादिकर्मणि निष्ठा विज्ञास्यते।

**ङ्वनिप् सुयजेः** [4]४।३।७१

निष्ठायां प्राप्तायां वचनम्। सापि भवति वासरूपत्वात्। क्वनिबिति ककारं केचित् पठन्ति, तदयुक्तं यजेः सम्प्रसारणप्रसङ्गात्।

**जीर्यतेरन्तृन्** [5]४।३।७२

जरन्निति। जीर्यतेस्मेति कर्तरि विग्रहः। वासरूपेण निष्ठापि [6]भवति। जीर्णः जीर्णवानिति। न श्व्युवर्णेति इडभावः रान्निष्ठातो न इति णत्वम्।

कृत्प्रकरणे तृतीयः पादः।

## चतुर्थः पादः

**क्वन्सुकानौ परोक्षावत्** ४।४।१

धातोरतीते काले क्वन्सुकानौ प्रत्ययौ भवतः इति करणेऽतीति यजेरित्यतोऽतीतग्रहणानुवृत्तेरतीतकाल इत्युक्तम्। धात्वर्थविशेषणञ्चैतत्। तेना-

---

१. ४।३।६३ (दु० वृ०)
२. देशनमादि (मं०) अर्थादेशेन (वा०)
३. ज्ञापकम् (मं०)
४. ४।३।६४ (दु० वृ०)
५. ४।३।६५ (दु० वृ०)
६. न भवति (मं०)

तीतकालसाध्ये धात्वर्थे वर्तमानात् धातोरियमर्थो जायते। ननु परोक्षावदतिदेशसामर्थ्यादेवातीतकालावसायो भविष्यतीति किमतीतग्रहणानुवृत्त्या, अस्त्येतत्, किन्त्वतिदेशसामर्थ्यादतीतकालावसाये सत्यतीताद्यतन परोक्षा एव परोक्षाप्रत्ययवत् क्वन्सुकानौ स्याताम्। ततश्चातीतसामान्येन श्रुसदिवसिप्रभृतिभ्यस्तयोः प्रवृत्तिर्न स्यात्। उपशुश्रुवान् उपसेदिवान् अनूषिवानित्यादौ तस्माच्छ्रु प्रभृतिभ्योऽतीतसामान्ये क्वन्सुकानयोः प्रवृत्त्यर्थमतीतग्रहणमिहानुवर्तनीयम्। यद्येवम्, अतीतसामान्ये शृणोतीत्यादिभ्यः परोक्षादयो न स्युः। क्वन्सुकानाभ्यां बाध्यमानत्वात्। सत्यम्, अपि शब्दोऽत्रानुवर्तिष्यते, तस्यानुक्तसमुच्चयार्थत्वात् तेऽपि भवन्ति। उपशुश्राव, उपाश्रृणोत्, उपाश्रौषीत्, उपाससाद, उपासदत्, उपासीदत् अनुवास, अन्ववसत्, अन्ववात्सीदित्यादावघोषे प्रथम इति घस्य क इति। ननूपधालोपस्य स्वरादेशपरिभाषया ([1]स्थानिवद्भावाद घोषपरत्वं नास्तीति कथमत्र प्रथमस्स्यात्, सत्यम्, अनित्या तु स्वरादेशपरिभाषा) अलुप्तवच्चापूर्वविधाविति वचनात्। क्वन्सुरयं [2]द्विककाराः पठ्यन्ते इति द्वौ ककारावस्येति विग्रहः। तस्येति द्विककारकपाठस्य तत्रैकस्य ककारस्य प्रयोजनं च कृतवानित्यादौ सामान्यवाक्यविहितस्य गुणप्रतिषेधः, परोक्षावदतिदेशात्परोक्षायां चेत्यनेन त्वसौ न सिध्यति तत्र द्वित्वबहुत्वग्रहणस्यानुवृत्तेः न च क्वन्सोर्द्वित्वबहुत्वाभ्यां योगोऽस्ति बाह्यद्वित्वबहुत्वाश्रयणेऽप्येकत्वे गुणस्स्यात्। न च परोक्षावदिति सामान्यातिदेशे परोक्षायां चेत्यस्य द्वित्वबहुत्वविषयस्य निषेधस्यात्र विषये प्रवृत्तिश्शक्या विज्ञातुम्, सामान्यातिदेशे([3]विशेषस्यानतिदेशात्। नहि ब्राह्मणवदस्मिन्क्षत्रिये वर्तितव्यमित्यतिदेशे कौण्डिन्यः ब्राह्मणवदिति विशे)षातिदेशो विना सामर्थ्यं लभ्यते। तस्मादेकः ककारो गुणनिषेधार्थः, द्वितीयस्य तु किं प्रयोजनमित्याह—शिशीर्वानित्यादाविति। आदिग्रहणेन तितीर्वानित्यादीनां ग्रहणम्, ऋदन्तानां चेत्यस्यापीति अपिशब्देन गुणस्यात्र बलीयस्त्वं द्योतयति। अथैव विशशरतुरित्यादौ द्वित्वबहुत्वलक्षणं गुणनिषेधं बाधित्वा ऋदन्तानां चेति विशेषविहितो गुणः प्रवर्तते। एवं शिशीर्वानित्यादावपि अविशेषात् प्रवर्तते। तस्मात्तस्य बलीयसोऽपि गुणस्यापाकरणार्थं क्वन्सोरपरः [4]ककारः पठ्यते। अन्यथा ह्यसावपार्थकस्स्यात्। उकारस्त्वस्योच्चारणार्थः। ई-प्रत्ययस्तु नदादिसूत्रेण अन्सुग्रहणादेव सिद्धः। कान्-प्रत्ययस्याप्येतदर्थम् एव ककार इति शिशिराणः, पुपुराणः इत्यादौ

१. न्यूनपाठः (भं०)
२. द्विककारकः पठ्यते
३. न्यूनपाठः (वा०)
४. कारकः (वा०)

सर्वत्रात्मन इति गुणनिषेधबाधनेन य ऋदन्तलक्षणो गुणः प्राप्नोति तन्निषेधः प्रयोजनम् [1]कान्-प्रत्ययः ककारस्य सामान्यवाक्यविहितगुणनिषेधस्तु नास्य प्रयोजनम्, [2]तस्य सर्वत्रात्मन इत्यनेनैव सिद्धत्वात् । इदं च प्रयोजनमिति न केवलं ऋदन्तलक्षणगुणनिषेधः, क्वन्सोर्द्विककारकपाठस्य प्रयोजनम् । यावद् बभज्वान्, बबध्वानित्यादौ भन्जि बन्धि[3]प्रकृतेरनुषङ्गलोपप्रवृत्तिरपि प्रयोजनम् । कथं पुनरनुषङ्गलोपो न प्रवर्तते इत्याह—परोक्षायामित्यादि । न च यण्वद्भावात् तस्यास्ति प्रवृत्तिः, यणं साक्षादुच्चार्य यद्विहितं कार्यं तद् यणवद्भावादतिदिश्यत इति हि पूर्वमुक्तम्, न चानुषङ्गलोपविधौ यणोऽस्ति साक्षादुच्चारणं तत्कथं यण्वद्भावेनानुषङ्गलोपप्रवृत्तिः स्यात् तस्मात् प्रवृत्तिरपि प्रयोजनं क्वन्सोर्द्वि-ककारकपाठस्य [4]वत्करणं क्वन्सुकान्प्रत्ययान्ताद्विभक्ति-उत्पत्तिर्यथा स्यादिति परोक्षेत्येतावति ह्युच्यमाने सति परोक्षा सञ्ज्ञापि क्वन्सु-कानयोः सम्भाव्यते । ततश्चैतद्विभक्त्युत्पत्तिर्न स्यात् । उत्वविधावघुट्स्वरादा-विति निमित्तपरिग्रहाद्विभक्त्युत्पत्तिर्भविष्यतीति । चेत्, तद्विषयतैवास्य ज्ञाप-कस्य स्यात् कान्-प्रत्ययान्तात् तु विभक्तिर्न भवेत् ज्ञापकाभावात् । सामान्येन ज्ञापकमित्येतच्च तनुमतिभिर्दुर्ज्ञानमिति वत्करणमेव ज्यायः ।

**वर्तमाने शन्तृङ्ङानशावप्रथमैकाधिकरणामन्त्रयोः ४।४।२**

ततो नञ्समासे सत्यामन्त्रणशब्देन सह द्वन्द्व इति द्वन्द्वे तु कृते नञ्समासो कर्तव्यः अन्यथा प्रथमैकाधिकरणविषयेनैव निषेधेनामन्त्रणेनापि निषेधस्य सिद्धत्वादामन्त्रणग्रहणं पृथगपार्थकं स्यात् । वर्तमाने काले धातोरिति वर्त-मानकालसाध्ये धात्वर्थे यो धातुस्तस्मादित्यर्थः । अथ प्रथमैकाधिकरणे आमन्त्रणे च सतीति । एतेन कालभावयोरित्यादिना भावे सप्तमीयमिति दर्शयति । प्रथमान्तेन शब्देनेत्यादि । व्यधिकरणशब्दोऽत्राभिधेयवचनः, प्रथमा-ग्रहणेन च प्रथमान्तशब्दो लक्ष्यते । तेन यत्र प्रथमान्तेन शब्देन शन्तृङ्ङानश्-प्रत्ययान्तस्य शब्दतुल्यमभिधेयं तत्र शन्तृङ्ङानशौ न भवतः । अन्यत्र न सर्वत्र द्वितीयाद्यन्तेन शब्देन सामानाधिकरण्ये सति भवतीत्यर्थः । आमन्त्रणविषये च भवत इत्यर्थ इति प्रथमासामानाधिकरण्येऽपीति शेषः । अतएवाह— प्रथमै-काधिकरण इत्ययं निषेध इत्यादि । अत्र देवदत्तशब्देन प्रथमान्तेन सामाना-धिकरण्यमस्तीति न भवति अनित्यता इति । क्वचित्प्रथमासामानाधि-

१. क्वन् (भं०)
२. न्यूनपाठः (सं०)
३. प्रस्यते (भं०) प्रत्यते (वा०)
४. यत् (भं०)

करण्येऽपि भवत इति भावः । यद्येवमिति । [1]अथ समानाधिकरण्येऽपि प्रत्यय-दर्शनात् किमप्रथमैकाधिकरणग्रहणेन चात्र कृतमिति भावः । मैवमित्यादिना समाधत्ते । अयमर्थः । प्रथमैकाधिकरणग्रहणे क्रियमाणे सत्यप्रथमान्तेन सामानाधिकरण्ये सति नित्यं शन्तृङ्ङानशौ प्रवर्तेते । प्रथमान्तेन तु क्वचिद्वि-कल्पेन । यदि पुनः प्रथमैकाधिकरणं न क्रियेत ततो यथा द्वितीयाद्यन्तेन सामानाधिकरण्ये नित्यं ([2]तयोः प्रवृत्तिः प्रथमान्तेन तु नेति, तस्मात् प्रथमा) सामानाधिकरण्ये नित्यं मा भूतामित्यप्रथमैकाधिकरणग्रहणं कर्तव्यम् । तत्रेति प्रथमैकाधिकरणे यदि तर्हि अप्रथमैकाधिकरण इत्ययं निषेधो नित्यस्तथा सत्यामन्त्रणग्रहणमपार्थकम्, नापार्थकम्, तस्यैव निषेधनित्यत्वस्य प्रपञ्चार्थम् ।

लक्षणहेत्वोः क्रियायाः ४।४।३

लक्षणशब्दः कर्मसाधनः । क्रियत इति क्रियेति । कृञ्श चेति श-प्रत्ययः । भूतसङ्कीर्तनमिति । उणादयो भूतेऽपीति यावत् । लक्ष्यते येन तत् लक्षणम् । हेतुः कारणमित्येतेनानयोर्भेदं दर्शयति यतो लक्षणं लक्ष्यस्य प्रतीति-जननिमित्तमात्रं न तु स्वरूपनिष्पत्तिकारणम् । हेतुस्तु रूपनिर्वर्तक इति लक्षणादसौ भिद्यते । लक्षणे हेतौ चार्थे वर्तमानाद् धातोरिति । एतेन धात्वर्थ-विशेषत्वं लक्षणहेत्वोः दर्शयति । उपपदत्वमनयो([3]र्न भवति क्रियाग्रहणात् उपपदं हि धातोः भवति विषयत्वमनयो)रर्थलभ्यमिति किं क्रियाग्रहणेन, धात्वर्थविशेषणत्वे तु क्रियाग्रहणं द्रव्यगुणयोर्निवृत्त्यर्थम् कर्तव्यमेव । यतो धात्वर्थं द्रव्यगुणयोरपि लक्षणं भवति हेतुश्च । तस्मात् क्रियाग्रहणान्नोप-दत्वं लक्षणहेत्वोः । पचति पठति चेति । अत्र यौगपद्यमेव क्रियाद्वयस्यापि ख्यापितम्, न तु लक्ष्यलक्षणभावो हेतुमद्भावो वा कश्चिदस्ति । तौ हि क्रमेण प्रतीयमानयोरर्थयोर्भवतः । न चात्र क्रियाद्वयस्य क्रमोऽस्ति तथा च यौगपद्य-द्योतनाय च शब्दद्वयस्य प्रयोगः । यद्येवम्, शयाना वर्धते दूर्वेत्यादौ कथं प्रत्ययः । नहि शयनमत्र वृद्धेः लक्षणत्वेन वोपात्तः किन्तर्हि स्वभावमात्रकथनमेतत् । नैतत्, तत्त्वाख्यानमपि हि लक्षणं भवत्येव यथा चैतन्यलक्षणः पुरुषः इति चैतन्यलक्षणं स्वरूपमस्येत्यर्थः । इह तर्हि न प्राप्नोति गायन्नृत्यति, स्वपन्हसतीति । नह्यत्र लक्षणहेतू स्तः । तथा हि चातको नृत्यति, यो गायति, को वा हसति, यस्स्व-पतीत्यर्थो विवक्षितः । यस्मात् नात्र ज्ञातौ नृत्यहासौ गायनस्वापाभ्यां

१. प्रथमा (भं०)
२. भवतस्तथा प्रथमान्तेनापि शब्देन नित्यं भवेताम्, नह्यत्र विशेषोऽस्ति यथा द्वितीयान्तेन (भं०)
३. न्यूनपाठः (वा०)

ज्ञाप्येते। किन्त्वयमत्रार्थः, सर्वे नृत्यन्ति, अयं गायन्नृत्यतीति। गानमस्य [1]नृत्यक्रियातिशयकारिगुणो विवक्षितः। एवं स्वापो हासेऽतिशयं ख्यापयति। हास एवं विधोऽस्य यत्स्वपतोऽपि न निवर्तते इति। एवं तर्हि अपि शब्दानुवृत्तेरेवमादौ भविष्यति। अतएव यः तिष्ठञ्जुहोति स देवदत्तः। योऽधीयानः आस्ते स यज्ञदत्त इत्यादौ कर्तृविषयत्वे अपि लक्षणस्य भवत्येव हि प्रत्ययः। अत्र हि क्रियाद्वयेन स्वसाधनभूतः कर्ता लक्ष्यते, न त्वत्र परस्परेण स्थानहवनयोरध्ययनासनयोः वा कश्चिदस्ति लक्ष्यलक्षणभावः। यत्स्थानहवनयुक्तः स देवदत्त यश्चाध्ययनासनयुक्तः स यज्ञदत्त ([2]इत्यादौ कर्तृविषयत्वेऽपि लक्ष्यलक्षणस्य भवत्येव हि प्रत्ययः, यश्चाध्ययनासनयुक्त स यज्ञदत्त) इत्यर्थस्य विवक्षितत्वात् हेतुत्वमुक्तमिति हेतुभावो द्योतत इत्यर्थः।

**वेत्तेः शन्तुर्वसुः ४।४।४**

विद्वानिति ङे न गुण इति गुणाभावः विकल्पो नायं स्मर्यत इति। अन्यत्रापि चेत्, ततोऽपि शब्दस्यानुवृत्तिरिति शेषः। श्तिपानिर्देशो धातुस्वरूपप्रतिपत्त्यर्थः। न च विद इति कृते ज्ञानार्थादन्यस्यास्ति विदेः प्रसङ्गः। सत्ताविचारणार्थयोरात्मनेपदित्वात् शन्तृङोऽसम्भवात्। लाभार्थस्य तूभयपदित्वस्सम्भवत्यसौ, नत्वनन्तरोऽन्विकरणेन व्यवधानात् अतो विद इति कृते ज्ञानार्थस्यैव विदेर्ग्रहणं भविष्यति।

**आनोऽत्रात्मने ४।४।५**

पदमित्येतल्लुप्तमित्याहुरिति। एतेनात्मनेपदमित्येतावती संज्ञेयमिति दर्शयति। अत्रेति पाश्चात्त्यं प्रकरणं निर्दिश्यत इति तेनानुक्रान्तस्यैवान इत्यस्य संज्ञित्वमिति शानङो भवति यदि स्यादात्मनेपदिभ्य एव तस्योत्पत्तिर्भवेत्। ननु शानङ् वाक्यादनन्तरमात्मनेपदसंज्ञाया अप्रणयनाच्छानङो न न भविष्यति इति किमत्रेत्यनेन? सत्यम्, विस्पष्टार्थं तु क्वन्सादिप्रकरण इति। प्रकरणं प्रस्तावः य [3]आन इति कान्-प्रत्यय आनश्-प्रत्ययश्च। प्रस्थीयमान इति। प्र-पूर्वात्तिष्ठतेरात्मनेपदम्।

**ई तस्यासः ४।४।६**

नन्वान इत्यनुवर्तते एवेति किं तद् ग्रहणेनेति, आह—नानेन तद्ग्रहणेन

---

१. नृत्त (वा०)
२. न्यूनपाठः (वा०)
३. आयन (भं०)

प्रकृत आन-प्रत्ययः प्रत्यवमृश्यते इत्यप्रकृतत्वादेवानुवृत्तेरसिद्धत्वात्। किन्तु तद् ग्रहणसामर्थ्याद्वक्ष्यमाणः शानङ् परामृश्यते। तेन तस्यापीत्वं भवति।

**आन्मोऽन्तः आने ४।४।७**

इहान इति सप्तमी श्रूयते तेन सप्तम्या निर्दिष्टे पूर्वस्येत्यकारान्त आगमी विज्ञायते। नन्वादिति पञ्चम्यस्य श्रुता ततश्च पञ्चम्या निर्दिष्टे परस्येत्यान प्रत्ययस्यागमित्वं कस्मान्न भवति? न भवति, वर्तमान इति निर्देशात् तस्य ह्यागमित्वे सत्यन्त्यादेशे मकारागमस्स्यात्। आदित्येषा तर्हि [1]पदस्य कृतार्थेति चेत्, अकारात्परो य आन-प्रत्ययः तस्मिन् परे अकारान्तस्य मकारागम इत्येवं कृतार्था न भविष्यति। गमनिकामात्रमेतदिति चेत्, तर्हि तदेव प्रदर्शयितुं षष्ठ्याः स्थाने पञ्चमीयं कृता वैचित्र्यात्। तदाह—आदिति पञ्चमी षष्ठ्याः स्थान इति आन-ग्रहणे च शानङस्य कृतो गृह्यते व्याप्ते-र्न्यायात्।

**पूङ्यजोः शानङ् ४।४।८**

ङानुबन्धकरणमुत्तरार्थमिति। तेनोत्तरत्र विघ्नान इत्यत्रागुणप्रत्यय-निबन्धन उपधालोपः सिद्धो भवति वर्तमाने शन्तृङङानशावित्यस्यैवायं प्रपञ्च इति। न च प्रथमैकाधिकरणार्थोऽस्यारम्भो युज्यते, तत्राप्यानशः-प्रवृत्तिदर्शनादिति प्रपञ्चार्थत्वमेव ज्यायः।

**शक्तिवयस्ताच्छील्ये ४।४।९**

शक्त्यादिषु वा सरूपविधिना शन्तृङ् न भवति वा सरूपविधेः क्वचिद-नित्यत्वाभिधानात्। तच्च तत्रैवोक्तम्।

**इङ्धारिभ्यो शन्तृङकृच्छ्रे ४।४।१०**

न विद्यते कृच्छ्रं यस्य सोऽकृच्छ्रः। प्रत्ययार्थस्य कर्तुरेतद्विशेषणम्। तेन सुखसाध्यो यस्य कर्तुर्धात्वर्थस्सः कृच्छ्र उच्यते। अकृच्छ्रे गम्यमाने इति चैवं व्याख्यायते। अकृच्छ्रवाच्यत्वेन विज्ञायमान इति इङ आनश् प्राप्त इति वर्तमाने शन्तृङङानशावित्यनेन इङोऽनुबन्धत्वात्। धारेरपि शन्तृङङानशाविति प्राप्ताविति वचनविपरिणामेन सम्बध्यते। [2]अत्र च धारेरिन्नन्तत्वमुभयपद-प्राप्तेर्हेतुः वासरूपविधिना च इङ आनश्प्रत्ययो न भवति वासरूपविधेर-नित्यत्वात्।

---

१. पञ्चमस्य (भं०)
१. तत्र (भं०)

**सुञो यज्ञसंयोगे[1] ४।४।११**

संयोगशब्दो भावघञन्तः। यज्ञेन संयोगो यस्येति बहुव्रीहिः। धात्वर्थविशेषणञ्चैतत्। तदाह-यज्ञसंयोगे वर्तमानात् सुञ इति। सुञो योऽर्थोऽभिषवः तस्य यदा यज्ञेन संयोगो भवति, कदा च तस्य यज्ञेन संयोगो भवति यदा तद् यज्ञाङ्गं भवति। शन्तृङ्ङानशौ प्राप्तौ इति। सुञो ञानुबन्धत्वात्। सुन्वन्निति। यागफलभाग्यजमान एवमुच्यते, याजकास्तु यद्यप्यभिषवस्य कर्तारः तथापि तेनोच्यते, कुतः, संयोगग्रहणस्य प्रधानभूत कर्तृप्रतिपत्त्यर्थत्वात्। इह हि यज्ञ इत्येतावत्यपि कृते यज्ञविषयता सुनोत्यर्थस्य लभ्य एवेति संयोगग्रहणे क्रियमाणे प्रधानभूत कर्तृप्रतिपत्त्यर्थं जायते। तेन प्रधानभूतः कर्ता प्रत्ययान्तवाच्यो न तु याजकः।

**तच्छीलतद्धर्मतत्साधुकारिष्वाक्वेः[2] ४।४।१२**

आ इति प्रथमान्तमव्ययम्, क्वेरिति पर्यपाङ्योग इत्यनेन पञ्चमी। अभिविधौ चायमाकारः। न मर्यादायाम्। तेन क्विप्प्रत्ययोऽपि तच्छीलादौ विज्ञायते। कथं पुनर्मर्यादायां नायमाकारः इत्यवगम्यते तच्छीलाद्यर्थोपजीवनार्थं भ्राज्यादिभ्यः क्विपो विधानात्। यदि हि मर्यादायामयमाकारस्स्यात् तथा सति क्विप्चेत्यनेनैव सिद्धत्वादपार्थकं तेभ्यः क्विपो विधानं स्यात्। अभिविधौ त्वाकारे सति यदि तेभ्यः क्विप्न विधीयते, ततस्तच्छीलाद्यर्थविशेषविहितेन तृणा क्विपोऽबाधस्स्यात्। तस्मादभिविधावायमाकारो न मर्यादायाम्। कर्तरि वेदितव्य इत्येतेन तच्छीलादयः प्रत्ययार्थस्य कर्तुर्विशेषणभूता इति। अथ क्विपः प्रकृतयो वक्ष्यमाणास्ताभ्यः तच्छीलादिष्वपि उपपदेषु प्रत्ययाः भवन्ति, इति कस्मान्न व्याख्यायते। अशक्यमेवं व्याख्यातुम्। उपाधौ सम्प्रत्युपपदकल्पनाया अन्याय्यत्वात्। तदिति धात्वर्थो न निर्दिश्यत इति कुतः, ताच्छील्यादीनाम् कर्तृविशेषणत्वात् क्रियामव्यपेक्षत्वाच्च कर्तृव्यवहारस्य। क्रिया च धात्वर्थः।

**भ्राज्यलङ्कृञ्भूसहिरुचिवृतिवृधिप्रजनापत्रपीनामिष्णुच्[3] ४।४।१३**

अलंपूर्वात् कृदिति कृञ्करण इति भौवादिकः। डुकृञ् करण इति तानादिकोऽप्यविशेषात् गृह्यत इति केचिदाहुः। अन्ये त्वेकानुबन्धग्रहणे न द्व्यनुबन्धकस्येति डुकृञो न ग्रहणमिति वर्णयन्ति। षह मर्षण इति भौवादिकः

१. ४।४।१२ (दु० वृ०)
२. ४।४।१४ (दु० वृ०)
३. ४।४।१६ (दु० वृ०)

चौरादिकोऽप्याधृषाद्वेति विकल्पितेन्नन्तोऽस्ति सोऽपि गृह्यते। जनि पूर्वं इति जननार्थः प्रादुर्भावार्थश्च। इन्नन्तेभ्यश्चेति। कथं पुनरिन्नन्तानां ग्रहणं लभ्यते। इष्णुच्प्रत्यये परतः कारितलोपप्रतिषेधारम्भात्। अपत्रपीनामित्यत्र णत्वं न भवति स्वरूपभङ्गभयात्। तृणि प्राप्ते वचनम्। मण्डनार्थत्रिवक्षायां चालङ्कृञो युडपि बाध्यते। ननु मण्डनादन्यत्र सावकाशः इष्णुच्प्रत्ययो मण्डनार्थविवक्षायां युडा परत्वाद् बाध्यते, न बाध्यते, वासरूपविधिना तस्यापि प्रवृत्तेः।

**मदिपदिपतिपचामुदि** [1]४।४।१४

डुपचष् पाके इत्यस्यात्र ग्रहणं, पचि [2]व्यक्तीकरण इत्यस्यापि निरनुबन्धकग्रहणपरिभाषा च नोपतिष्ठते, रूपसामान्यपरिग्रहात्। उन्मदिष्णुरिति। उदो दकारस्य पदान्ते धुटामिति प्रथमः तस्य पञ्चमः।

**शमादीनामष्टानां घिनिण्** [3]४।४।१५

घिनिणो घकार उत्तरत्र कत्वगत्वार्थः।

**युज (रुज[4]) भजभुजद्रुह (दुह[5]) दुषाङ्क्रीडत्यजानुरुधाङ्यमाङ्यसरञ्जाभ्याङ्हनां च**[6] ४।४।१६

च-शब्दादभ्यपाभ्यां चरेराङश्च मुषेरिष्यते, अभिचारी, अपिचारी, आमोषी।

**समिसृजिपृथिज्वराम्** [7]४।४।१७

सम उपसर्गस्यात्र ग्रहणं न तु वैक्लव्यार्थस्य धातोरनभिधानात्। अतएव पृचिग्रहणेन धातुद्वयं न गृह्यते, इह कस्मान्न भवति, सम्पृणक्ति, शाकमिति। तत्र केचिदाहुः ([8]अकर्मणामेव घिनिणिति विशेषोऽत्र स्मर्यते, तेनात्र सकर्मकत्वं न भवति। अपरे त्वाहुः—एवं स्मर्यमाणो) सत्यात्मनः त्यागिनः

---

१. ४।४।१७ मदिपतिपचामुदि (दु० वृ०)
२. वक्ती (वा०)
३. ४।४।२१ (दु० वृ०)
४. न्यूनपाठः (दु० वृ०)
५. न्यूनपाठः (वा०)
६. ४।४।२२ (दु० वृ०)
७. ४।४।२३ (दु० वृ०)
८. न्यूनपाठः (वा०)

चैवेत्येवमादौ घिनिण्प्रत्ययो दुर्लभः स्यात्। तस्मादनभिधानात् सकर्मकत्वे सति न भवतीत्येवमत्र समाधेयम्।

**प्रे द्रुमथवदवसरपलवाम्** [1]४।४।१८

वसिर्निवासार्थो गृह्यते न त्वाच्छादनार्थः। लुग्विकरणत्वात्। ननु शमन शम इत्यादि विग्रहे कृते घञन्तेभ्यश्शमादिभ्यः सन्त्वादित्वादिन्प्रत्ययं विधाय शमीत्यादयः प्रयोगाः सिध्यन्त्येवेत्यपार्थकं घिनिणः प्रकरणम्, नापार्थकम्, वाकृतिरात्रेरित्यादिकृदन्तनिमित्तस्य कार्यस्य दर्शनात्। तच्छीलादिविवक्षायां च शमिप्रभृतिभ्यस्तृन्प्रत्ययः स्यात्। न च कृदन्तादिन्प्रत्ययो लभ्यत इति प्रागुक्तम्, आरभ्यमाणे तर्हि [2]घिनिण्प्रकरणे प्रयामीत्यादीनां कथं सिद्धिः, न कथंचित्, नहि तच्छीलस्यार्थस्य विवक्षायामेवमादयः प्रयोगा इष्यन्ते। अथ त्विष्यन्ते, ततोऽ[3]भ्याहृतां चेति च शब्दात् भविष्यन्ति।

**क्षिपरटवदवदिदेविभ्यो वुण् च** [4]४।४।१९

देवृ देवने इति सामान्येन विधीयमानस्तच्छीलादिष्वर्थेषु (न [5]तु क्रीडाद्यर्थे दिविरिन्नन्तः व्याख्यानात्, युट्प्रत्ययः क्षिपादिभ्यः सिद्ध इति) सामान्येन विधीयमानस्तच्छीलादिष्वर्थेषु क्षिपादिभ्योऽपि भविष्यतीति मन्यते, अनर्थकं वुण्ग्रहणमिति घिनिण्-प्रत्ययस्तु विधेय एव क्षिपादिभ्यो घिनिणिति विशेष-विहितेन। विशेषविहितत्वे तु यस्य क्षिपादीन्धातुविशेषानुपादाय विधीय-मानत्वात्। तच्छीलादिप्रकरणविहितानामित्यादि। एवं च वासरूपविधेर-भावाद् घिनिणा वुणो नित्यबाधः स्यात् इति वुणः [6]प्रत्यये वुण्ग्रहणं कर्तव्यम्। तेनेत्यादिना वासरूपविधेरभावज्ञापनस्य प्रयोजनविधिमाह—घटादयः प्राप्ता-स्ते न भवन्तीति। तेनालङ्कर्ता अलङ्कार इत्यादयः प्रयोगाः ताच्छील्याद्यर्थ-विवक्षायामसाधवः।

**निन्दहिंसक्लिशखादविनाशिव्याभाषासूयां वुञ्** [7]४।४।२०

सूत्रे गृहीत इति। अस्वरो ननु करणत्वेनेति शेषः। क्लिशिससामान्य इति

---

१. ४।४।२५ (दु० वृ०)
२. वा० ग्रन्थे प्रायशः विनिण् इत्यस्य स्थाने घिनिन् पाठः।
३. ह्यस्तनी च (भं०)
४. ४।४।२७ (दु० वृ०)
५. न्यूनपाठः (वा०)
६. प्रवृत्तये (भं०)
७ ४।४।२८ (दु० वृ०)

उपतापार्थो विबाधनार्थश्च । तत्र क्लिशेरुपतापार्थस्य व्याभाषेश्च रुचादित्वाद् युच्-प्रत्यये प्राप्ते शिष्टेभ्यस्तु तृनि प्राप्ते वचनम् । दरिद्रायक इति । दरिद्रातेरसार्वधातुक इत्यालोपोऽत्र न भवति । दरिद्रायकेस्तस्यानिष्यमाणत्वात् । तथा चाहुः—न दरिद्रायके लोपो दरिद्राणे च नेष्यत इति । गणक इति । गणेरदन्तत्वादुपधादीर्घाभावः । अनेकस्वरात्तु केचिन्नेच्छन्ति । एवं च सति गणकादयो वुणन्ता बोद्धव्याः तच्छीलादिविवक्षायां च तृनपि यथादर्शनं भवति । इन्नन्तस्यानेकस्वरस्य विनाशेरेव यथा स्यादिति । यद्येवम्, गणक इति न सिध्यति, नैतत्, तुल्यजातीये विषये नियमेन [1]व्यावृत्तेरपरस्य हेत्विन्नन्तस्यैव व्यावृत्तिर्न तु स्वार्थेन्नन्तस्य । असूयशब्दस्यापि नियमार्थमुपादानमिति । तस्याप्यनेकस्वरत्वात्सिद्धम्मन्यते, वुणासिद्धे निन्दादिभ्यो वुञो विधानं तृनादिना वुणः बाधः स्यादिति वासरूपविधिश्च नास्तीत्युक्तमेव ।

**क्रुधिमण्डिलिङ्गशब्दार्थेभ्यो युः [2]५।५।२१**

द्वन्द्वगर्भो बहुव्रीहिरिति तत्र क्रुधिमण्डिचलिशब्दाः धातुत्वात् तदर्था न भवन्तीति सामर्थ्यात् तदर्थ अर्थो येषामित्येवं बहुव्रीहि-अर्थोऽत्र विज्ञायते चलिशब्दार्थेभ्यश्चाकर्मकेभ्य एवेष्यते न तु सकर्मकेभ्यः, अनभिधानात् । तेनेह न भवति, पठिता विद्यामिति ।

**रुचादेश्च व्यञ्जनादेः [3]५।५।२२**

आत्मनेपदिनो ये धातवस्ते रुचादय इति । आदिशब्दस्य प्रकारवाचित्वात् । जुगुप्सनः, मीमांसन इति । जुगुप्सामीमांसाशब्दौ रुचादी । गुपिमान्योर्हि यदात्मनेपदप्रवृत्तिचिह्नं तदवयवे कृते लिङ्गसमुदायस्य विशेषकं भवतीत्यवयवगतमपि समुदाये व्याप्रियते । अथादिग्रहणं किमर्थं यावता व्यञ्जनादित्येव क्रियतां तच्च व्यञ्जनग्रहणमादिविशेषणमेव विज्ञास्यते, नान्तविशेषणं स्वरान्तस्य रुचादेरसम्भवाद् व्यावृत्त्याभावात् । नैतत्, इह हि न स्यात्, जुगुप्सनः मीमांसन इति जुगुप्सामीमांसाशब्दौ हि रुचादी भवतः स्वरान्तौ च । अतश्चानयोस्स्वरान्तयोः व्यावृत्त्यर्थं व्यञ्जनादिति वचनमन्तविशेषणमेव स्यान्न तु आदिविशेषणम् । कृते त्वादिव्यञ्जनग्रहणमादिविशेषणं विज्ञायते । एवं च व्यञ्जनादेरिति वचनात् स्वरादेरेव वधिप्रभृतिव्यावृत्तिस्स्वरान्तत्वादव्यावृत्तिरिति जुगुप्सादिभ्योऽपि प्रत्ययः सिद्धो भवति । तस्मा-

१. व्यावृत्ते. (भं०)
२. क्रुधिमण्डिचलनार्थेभ्यो युः ४।४।३० (दु० वृ०)
३. ४।४।३१ (दु० वृ०)

दादिग्रहणं कर्तव्यम् । अस्य च लोप इत्यत्र चाननीति परसप्तमी व्याख्याता । विषयसप्तम्यां तु जुगुप्सादीनां प्रागेव प्रत्ययोत्पत्तितो लोपे कृते सति स्वरान्तत्वं विहितमिति कथमेतद् व्यावृत्यम् । व्यञ्जनग्रहणस्यान्तविशेषणपक्षे स्यादिति तत्र पक्षे विस्पष्टार्थमादिग्रहणम् । परसप्तम्यां तु [1]व्यावृत्तमेवैतत् निमित्तापेक्षित्वादतो लोपस्येति तत्र पक्षे प्रयोजनवदादिग्रहणम्, सकर्मकाद् रुचादेर्न भवत्यनभिधानात् । सविता वस्त्रमिति ।

**जुचङ्क्रम्यदन्द्रम्यसिगृधिज्वलशुचां च** [2]४।४।२३

ज्वलादयस्सर्वे धात्वनुकरणाः । जु इति सौत्र इति वेगितायां गतौ वर्तते । पुनरुपादानं प्रपञ्चार्थमिति । चलनार्थलक्षण एव यु-प्रत्यय एवं प्रपञ्च्यत इत्यर्थः । ननु चल्यर्थस्सकर्मकेभ्यो नेष्यत इत्युक्ते तत्र चलनार्थानां सकर्मकार्थमिहोपादानं स्यात् । तथा चङ्क्रमणो ग्रामस्येत्यादिः सिध्यति । यत्र ग्रामादिकर्म विवक्ष्यते तत् कथं सति प्रयोजने प्रपञ्चार्थत्वम् युज्यते । अस्त्येतत्, अकर्मकेभ्यश्चलनार्थेभ्य इष्यते । न तु सकर्मकेभ्य इति । नेह विशेषणवचनमस्ति । सकर्मकेभ्यो ह्यनभिधानात् प्रत्ययो नेष्यते यत्र तु तेभ्यो व्यवधानमस्ति । तत्राभिधानवशादेव सामान्येनोपादीयमानः प्रत्ययस्तेभ्योऽपि भविष्यतीति किं तेषामिहोपादानेनेति प्रपञ्चार्थत्वमेव तेषां युक्तम् । च-शब्दाल्लोपन इत्यपि भवति ।

**न यान्तसूदीपदीक्षाम्** [3]४।४।२५

कथं मधुसूदन अरिसूदन इत्यादयः । नन्द्यादिषु द्रक्ष्यन्ते । ननु दीपे विशेषविहितेन प्रत्ययेन यु-प्रत्ययस्य बाधः भविष्यतीति दीपि-ग्रहणमपार्थकम्, नापार्थकम्, वासरूपविधिनापि हि यु-प्रत्ययोऽपि न प्राप्नोति । ताच्छीलिकानां च परस्परेण वासरूपविधिरस्त्येव तथा च कम्प्रा शाखा, कम्पना शाखेत्यादि सिद्धं भवति । अतो यु-प्रत्ययो मा भूदिति दीपिग्रहणमर्थवत् ।

**प्रे जुसुवोरिन्** [4]४।४।२५

षू प्रेरण इत्यस्यात्र ग्रहणम्, निरनुबन्धकत्वात् । न तु षूङ् प्राणिगर्भविमोचने । षूङ् प्राणिप्रसव इत्येतयोर्विपर्ययात् ।

---

१. व्यावर्त्यं (भं०) तथा च, व्यावृत्यम् (वा०)

२. ४।४।३२ जूचंक्रम्यदंद्रम्यसृगृधिज्वलशुचलषपतपदाम् (दु० वृ०)

३. ४।४।३३ (दु० वृ०)

४. ४।४।३६ (दु०वृ०)

**जीर्णदृक्षिविश्रिपरिभूवमाव्यथाभ्यासां च** [1]४।४।२६

जि-ग्रहणेन सर्वे जिरूपाः गृह्यन्ते । यद्यपि जयनं जय इत्यादिविग्रहे कृते सन्त्वादित्वादिनो विधाय जयीत्यादि रूपं सिध्यति, तथापि तच्छीलादिविवक्षायां जिप्रभृतिभ्यः तृन् प्रत्ययः स्यात्, तन्मा भूदिति वचनम् । वमाव्यथोश्च वमीत्यादि न सिध्यति ।

**शीतोष्णाभ्यां च सदेः** [2]४।४।२७

मन्त्वादित्वादातु-प्रत्ययः शीतोष्णशब्दाभ्यां हृदयशब्दादिवत् सिद्ध इति सूत्रपाठोऽयमनार्षो धातुप्रस्ताव इत्याहुः ।

**मिदिभासिभञ्जां घुरः** [3]४।४।२८

न कर्तुमात्र इति, अनभिधानात् ।

**चिछदिभिदिविदां कुरः** [4]४।४।२९

अनभिधानादिति ज्ञानक्रिया कर्तुरेव विदुरशब्देनाभिधानं नान्यस्येति भावः ।

**जागरूकः** [5]४।४।३०

वासरूपेण तु तृनप्युत्सर्गो भवति । [6]जागरितिः ।

**तस्य लुगचि** [7]४।४।३१

तस्य चेक्रीयितस्येति । कथं पुनश्चेक्रीयितमन्यपदार्थे गुणीभूते सति तस्येत्यनेन प्रत्यवमष्टुं [8]शक्येति । उच्यते—लुगिति प्रत्ययादर्शनस्यैषा संज्ञा कृता, प्रत्ययश्चेक्रीयितादन्यो नेह प्रस्तुतो यस्यान्यपरत्वं स्यादिति स एव तद्ग्रहणेन च प्रत्यवमृश्यते । प्रत्ययप्रकरणे योगस्यारम्भश्चेक्रीयितशब्दलोभात् ।

---

१. जीर्णदृक्षिविश्रिपरिभूवमाभ्यामव्यथां च ४।४।३७ (दु० वृ०)
२. ४।४।३७ अप्राप्योऽयं दुर्गवृत्तौ ।
३. ४।४।४१ (दु० वृ०)
४. ४।४।४२ (दु० वृ०)
५. ४।४।४३ (दु० वृ०)
६. जागरिता (भं०)
७. ४।४।४५ (दु० वृ०)
८. शक्यते (भं०)

**ततो यातेर्वरः [1]४।४।३२**

तत इति प्रस्तुतं चेक्रीयितं परामृश्यते तेन यातेः परश्चेक्रीयितं ततो वर-प्रत्यय इति प्रत्यय-प्रकरणे योगस्यारम्भः। तेन याते परश्चेक्रीयितं ततो वर-प्रत्यय इति सूत्रार्थः। यातेश्चेक्रीयितान्तादि तु फलव्याख्यानमेतत्।

**सृजीणनशां क्वरप् [2]४।४।३३**

सृजिग्रहणेन धातुद्वयं गृह्यते, न समुदायः। अनभिधानात्।

**दीपिकम्प्यजसिहिंसिकमिस्मिनमां रः [3]४।४।३४**

जसु मोक्षण इत्यस्य नञ्पूर्वस्य। अजसीत्यनुकरणम्। नञ्पूर्वश्चायं जसिः र-प्रत्ययान्तः। स्वभावात् क्रियासार्थस्य वर्तन्ते।

**सनन्ताशंसिभिक्षामुः [4]४।४।३६**

सनन्ताद् धातोरिति। एतेन सनः प्रत्ययस्य ग्रहणो न तु षणु दाने अति-बन्धन इत्येतयोर्धात्वोरिति दर्शयति एतच्चात्र सनाशंसीत्येवाकरणाल्लभ्यते। अनभिधानं चात्र हेतुः। आङा सहचरितस्य शंसेरिच्छार्थस्य ग्रहणम्। न तु स्तुत्यर्थस्य भिक्षिणा वा आत्मनेपदिना साहचर्यात्।

**विन्द्विच्छू च [5]४।४।३६**

विदेरुप्रत्यय इति ज्ञानार्थात् नत्वन्येभ्यो विदिभ्योऽनभिधानात्। निपातन-सामर्थ्याद्वा। इषेच्छात्वं चेति। इच्छायामित्यस्य ([6]इष्यतिष्य तु पूर्ववद् ग्रहणाभावः)।

**आद्दवर्णोपधालोपिनां किर्द्वे च [7]४।४।३७**

उपधालोपो विद्यते येषां ते उपधालोपिन इति। ननूपधालोपो येषां ते उपधालोपा इति बहुव्रीहिणैव निर्देशः क्रियताम्, तत्पुरुषं तु विधायेन्प्रत्यय-

---

१. ४।४।४६ (दु० वृ०)
२. सृजीनण्नशां क्वरप् ४।४।४८ (दु० वृ०)
३. ४।४।४९ (दु० वृ०)
४. ४।४।५१ (दु० वृ०)
५. ४।४।५२ (दु० वृ०)
६. इष्यत्यन्तस्य अर्थवद्ग्रहणाभावः (मं०)
७. ४।४।५३ (दु० वृ०)

निर्देशं कुर्वतः कोऽभिप्रायः ? उच्यते—एवं विधानामपि प्रयोगाणां साधुत्वमस्तीत्येतदनेन तत्पुरुषादिन्-प्रत्ययनिर्देशेन सूच्यते । तेन गोखुरवदरण्यम् लोहितवानिमान्ग्रामः दीर्घकेशी नट इत्यादि सिद्धं भवति । योग्यतया नोपधालोपित्वमवसेयम्, अन्यथा प्रत्ययोत्पत्तेः पूर्वं कथम् उपधालोपिव्यपदेशः स्यात् । किम्वक्तव्य इति च-शब्दात् प्रकृत्यन्तरसमुच्चयार्थात् पायतिरित्यत्र वञ्च्यादिसूत्रेण नीरागमो न भवत्यनित्यमागमशासनमिति वचनाद् । आदिति तपरकरणमसन्देहार्थम् । वा[1] ग्रहणमपि ।

**भियो रुग्लुकौ च** [2]४।४।३८

रुकक् लुककावपीष्यत इति । च-शब्दः रलयोरेक-विषयत्वस्मरणाद् रुके सिद्धे रुक्-प्रत्ययविधानमनेकविषयत्वस्मरणस्य सकलविषयत्वज्ञापनार्थम् ।

**क्विब्भ्राजिपॄप्लॄर्व्यजिग्रावस्तुद्युतिभासां च** [3]४।४।३९

तृना बाधो मा भूदिति वासरूपविधिश्च तच्छीलिकानामताच्छीलिकैः सह नास्तीत्युक्तमेव ।

**द्युतिगमोर्द्वे च** [4]४।४।४०

द्वे इति शब्दरूपापेक्षया नपुंसकेन निर्देशः ताच्छीलादीनामर्थानां [5]मूलोवधिः । अतः परं कर्तृमात्रे प्रत्ययाः विधीयन्ते यत्रार्थान्तरं नास्ति ।

**भुवो डु विसम्प्रेषु** [6]४।४।४१

अन्यतोऽप्ययं डु-प्रत्यय इष्यते । ([7]सितं भवति सितम्भः), [8]सम्भावयित्वमिति सम्भुः ।

**कर्मणि धेटष्ट्रन्** [9]४।४।४२

कर्मण्यर्थ इति न तूपपदे । अन्यथा ह्यन्प्रत्ययप्रकरण एव धेटः ष्ट्रन्निति

---

१. ४।४।५६
२. ४।४।५७
३. ४।४।५८
४. ४।४।५९
५. ४।४।६० (सर्वेऽप्येते दु० वृ०)
६. तथा वर्णग्रहणमपि (मं०)
७. पूर्णोऽवधिः
८. सितं द्रवमिति सितद्रुः (मं०)
९. सम्भावयतीति (मं०)

सूत्रं कुर्यात्। ननु तत्रैव क्रियमाणे सति वर्तमानकालपरिग्रहो न स्यात्। इह तु वर्तमानाधिकाराद्वर्तमानः कालो लभ्यते, इष्टमेवैतत्। धात्री-शब्दात्काल-विशेषस्यानवसायात् प्रपञ्चश्चायमौणादिकस्य ष्ट्रनो मन्तव्यः। धात्रीति स्तन्यदायिनी उच्यते। धात्रोऽपीष्यत इति केचिदाहुः तेन दधति तां भैषज्यार्थमिति धात्री आमलक्यप्युच्यते तदर्थं ध इति कर्तव्यम्, तत्तु न कृतं वैचित्र्यात्।

**नीदाप्शसुयुयुजस्तुतुदसिसिच्मिहपतदंशनहां करणे**[1] ४।४।४३

नीप्रभृतीनां समाहारे द्वन्द्वः। समासान्तविधेरनित्यत्वात् तु समासान्ताभावः। करण अर्थं इति न तूपपदे, अजादिषु केवलेष्वस्य दंष्ट्राशब्दस्य पाठात्। उपाधि[2]सम्बन्धस्य अन्तरङ्गत्वात् दाप् लवन इति। न तु दैप् शोधन इत्ययं, कुतः, अनभिधानात्। अनित्य इडागमः इति यौतेश्शमेः पतेश्च खिष्णोरिकारकरणादित्यत्रैव हेतुः। शेषानां तु यथालक्षणमस्त्येवेट् प्रतिषेधः।

**अर्तिलूधूसूखनिसहिचरिभ्य इत्रन्**[3] ४।४।४४

अर्तीति ऋ गतौ। ऋ सृ गताविति द्वयं गृह्यते, धू इति धू विधूनने इत्ययं गृह्यते न तु सानुबन्धकः कम्पनार्थः। षू ग्रहणेन षू प्रेरण इत्यस्य ग्रहणं न तु सौतिसूयत्योः सानुबन्धकत्वादेव ष्ट्रनोऽनुवृत्ताविडागमे सति लवित्रादयः सिद्धा इतीकारोच्चारणमन्त्यर्थम्।

**ऋषिदेवतयोश्च कर्तरि**[4] ४।४।४५

इह केचिच्चकारेण करणग्रहणमनुवृत्त्य ऋषौ करणे देवतायां च कर्तरीति यथासंख्येन सम्बन्धमिच्छन्ति। अन्ये तु स्वव्यापारं प्रतिकरणस्य कर्तृत्वात् कर्तृभावोऽस्तीति कर्तर्येव प्रत्ययो भविष्यतीति किं करण-ग्रहणानुवृत्त्येत्याहुः।

**ञ्यनुबन्धमतिबुद्धिपूजार्थेभ्यश्च क्तः**[5] ४।४।४६

मननं मतिः। अतएव ज्ञापकात् स्त्रियां क्ति-प्रत्ययः। अत्र हि समजादि-सूत्र-विहितेन क्यपा भवितव्यम्। अन्ये तु क्रियाशब्दोऽयं न संज्ञाशब्द इति

१. ४।४।६१ (दु० वृ०)
२. शब्दस्य (मं०)
३ ४।४।६३ (दु० वृ०)
४. ४।४।६५ (दु० वृ०)
५. ४।४।६६ (दु० वृ०)

क्यपा न भाव्यमिति मन्यते। बुद्धिशब्दोऽपि क्ति-प्रत्ययान्तः पूजनं पूजा षीषि-चित्तीत्यङ्-प्रत्ययः, कारितलोपः। तत्र मतिरिच्छोच्यते, बुधिश्च ज्ञानम्। ननु मतिबुद्धिशब्दावेकार्थौ तथा हि वक्तारो भवन्तीयं मे मतिः, इयं मे बुद्धि-रिति। तत्किम्मतिबुद्ध्योर्भेदोपादानेन, उच्यते—अर्थभेदस्य दर्शनात्। तथा च बुद्धिः ज्ञानमुच्यते। मतिश्च न ज्ञानमात्रम्। अपि तु तद्विशेष इच्छा। वर्तमानकाले क्त-प्रत्ययो भवतीति। यथासम्भवं भावकर्मणि कर्तरि च तस्य क्त-प्रत्ययस्यातीतकालविषयता वर्तमानकालविषयतया तक्रकौण्डिन्यन्यायेन बाध्यते। ज्ञानमित्येतत्त्वतीतेऽपि भवति। अन्यत्रापीति वचनात्। रक्षित इत्यादि। रक्षते रुष्यति हृष्यति तुष्यति, संयम्यते, तद्यच्छति, शेते तृप्यति लिप्यते बध्यत इति विग्रहः।

चतुर्थः पादः।

## पञ्चमः पादः

**उणादयो भूतेऽपि ४।५।१**

[1]भवति स्मेति। गत्यर्थाकर्मकेत्यादिना कर्तरि क्त-प्रत्ययः। न श्र्युवर्णे-तीडभावः ([2]वर्तमाने काल इति वर्तमाने शन्तृङ्ङानशावित्यतो वर्तमानग्रहणा-नुवृत्तेः वर्तमाने काल इत्युक्तम्) यद्येवम्, वर्तमाने पृषद्बृहन्महज्जगच्छन्तृव-दित्यत्र वर्तमानग्रहणमपार्थकम्, नापार्थकम्, भूतकालनिवृत्त्यर्थत्वात्। तत्र वर्तमानग्रहणस्य अन्यथा हि पृषदादय उणादित्वाद्वर्तमानवद् भूतेऽपि भवेयुः। पुनस्संज्ञायामित्यतश्च ग्रहणादिहानुवर्तते तेनोणादयः प्रत्ययाः संज्ञायां भवन्ति। धृषेर्विषये संज्ञायामित्यत्र च यत्संज्ञाग्रहणं कृतं तस्य नास्ति पौनरुक्त्यं संज्ञा-ग्रहणानुवृत्तेरदृढीकरणत्वात्। भस्म चर्मेति। नपुंसकात्स्यमोर्लोप इति सिलोपः। अपि शब्द उणादीनां विशेषद्योतनार्थः। तेन [3]प्रत्ययान्तरादपि ते भवन्ति। हृषेर्डुलप्, हर्षुल इति। शङ्केरपि भवन्ति, शङ्कुल इति। अविहिता अपि भवन्ति। तेनान्ते ([4]फिड्हिड्डौ ऋफिडः ऋहिडः) कार्यं च विहितमुणादि-प्रत्ययविषयमपि शब्दादेवावगन्तव्यम्। तेनात्रैवान्तेर्गुणाभावः। नन्वपि शब्दो

---

१. भवतीत्यादिना (भं०)

२. न्यूनपाठः (भं०)

३. प्रकृत्ययान्तरादपि (भं०)

४. तर्हि त्रौढि (भं०)

वर्तमानकालनिवृत्त्यर्थः । कथमुणादीनां विशेषं द्योतयेत्, नैतत्, एवं यदि-ह्येतावत्प्रयोजनमस्यापि शब्दस्य स्याच्च शब्दमेव कुर्यात् तस्मादपि शब्दो वर्तमानकाललक्षणं विशेषं विशेषान्तरं च द्योतयितुं क्रियते। यत्र च पञ्च-पादी विहिता उणादयः प्रत्ययाः शब्दव्युत्पत्तौ न व्याप्रियन्ते तत्र प्रकृति-प्रत्ययविशेषापरिज्ञाने सत्यक्षरं सारूप्यात् प्रकृतिप्रत्ययावूहितव्यौ । यथा ललेराटः ललाटमिति साधुत्वम् हि, अन्यथा शब्दानां न स्यात् । शिष्ट-व्यवहारप्रसिद्धिसिद्धेषु प्रकृत्यादय ऊह्याः, नान्यत्रेति गाव्यादीनां नास्ति साधुत्वम् ।

**भविष्यति गम्यादयः ४।५।२**

भविष्यतीति [1]भवश्शन्तृङ्ङावित्यादि । नाम्येन सहितश्शन्तृप्रत्ययः भविष्यतिकाले [2]भवन्तीति साधव इति शेषः। साधुत्वान्वाख्याने ह्ययं प्रयोगः भविष्यत्कालता चेय प्रत्ययस्य विधीयत इति केचित्। अन्ये तु प्रकृत्यर्थ-विशेषणमेतदित्याहुः। तत्र च णिदिति वर्तते इति। आङि णिदित्यतः तेन वृद्धिरिति णानुबन्धेन हेतुना प्रस्थायीति प्रात्स्थः, इत्यनेन इनिः, सोऽपि णानुबन्धः । आयिरादेशः प्रयायीत्यादौ नाम्न्यजातावित्यादिना णिनिः । प्रत्ययः । ननु [3]भविष्यत्सामान्यवाचिना भविष्यच्छब्देन भविष्यतीत्ययं निर्देशः क्रियते। ततश्च तत्रैव गम्यादीनां साधुत्वं स्यात्, न भविष्यत् तेन भविष्यद्विशेषे तच्च श्वो ग्रामं गमीति श्वस्तनविषये प्रयोगो न स्यात्। श्वस्तन्याः बाधिकायाः प्रवृत्तेः, अस्त्येतत्। किन्तु भविष्यदनद्यतनं श्वशब्दो द्योतयिष्यति।

**वुण्तुमौ क्रियायां क्रियार्थायाम् [4]४।५।३**

घञ् कीर्तनात् प्रागिति पदरुजेति यावत्। पाचको व्रजतीत्यादि। पक्ष्या-मीति। व्रजति करिष्यामीति। व्रजतीति वुण्-प्रत्ययः। पचनाय व्रजति, करणाय व्रजतीति। तुम्-प्रत्ययः। पचिः क्रियार्था च। व्रजति क्रियार्थोपपदम्। भक्षिष्ये रुचादित्वादात्मनेपदम्। नन्वसौ क्रियावाचीति। जटानां द्रव्यत्वात्। सा तु न दण्डपात्रार्थेऽपि प्रयोजनान्तरमुद्दिश्य धावनक्रियाप्रवृत्तेः। ननु सिद्धो वुण् प्रत्यय इति वुण् तृचावित्यनेन। स हि सामान्येन विधीयमानः क्रियायां क्रियार्थायाम-

१. भवतेश्शन्त्राणावित्यादि (भं०)
२. भविष्यन्तीति (भं०)
३. न्यूनपाठः (भं०)
४. ४।४।६६ (दु० वृ०)

प्युपपदे सामान्येन विधीयमानत्वाद् भविष्यति। तुमा बाधः स्यादिति। चेदिति क्रियायां क्रियार्थायां विधीयमानः तुम्-प्रत्ययो विशेषविहित इति तेन वुणो बाधं मन्यते। तेन भविष्यत्यर्थभेदादिति समानेऽर्थे उपजायमान अपवाद उत्सर्गं बाधते ततो भिन्नार्थविहितेन तुमा क इव वुणो बाधप्रसङ्गः। तमेवार्थभेदं दर्शयितुमाह—अव्ययकृते इत्यादि। तत्र चाभिधानशक्तिस्वाभाव्यं हेतुः। वुण्तृचौ कर्तरीति। कर्तरि कृदिति वचनात् ([1]शन्त्राणाभ्यां तर्हि इत्यादि। तौ हि कर्तरि कृदिति वचनात्) कर्तृविहिताविति समानार्थविहिताभ्यां ताभ्यां वुणो बाधमाशङ्कते। एवं तर्हि इत्यादि गतार्थम्। तृजादय इति। तेन कर्ता व्रजति, विक्षिप्तो व्रजतीत्यादयः क्रियापदविषये असाधवः (१+इतोऽग्रे समाप्ति यावत् पाठः ४।५।२२ (४१) सूत्रे उद्धृतो वर्तते मूलभूते वा० ग्रन्थे)।

**भाववाचिनश्च** [2]४।५।४

भाववाचिनः प्रत्ययाः घञादय इति। भावे इत्यधिकृत्य ये विहिताः प्रत्यया घञादयस्ते भावाधिकारविहिताः सन्तो भाववाचिन इति व्यपदिश्यन्ते। पाकाय व्रजतीत्यादि। पचनाय व्रजति, भोजनाय व्रजति, कर्तुं व्रजतीत्यर्थः। तुमर्थाच्च भाववाचिन इत्यनेन चतुर्थी। नन्वित्यादि चोद्यं नापार्थक इत्यादिना परिहरति। तुमा घञादीनां बाधः स्यादिति वासरूपविधिश्चात्र प्रकरणे नास्तीत्युक्तमेव। अथ भाव इत्येव कस्मान्नोच्यते, भावार्थविहिताः प्रत्ययाः घञादयः भावार्थसाहचर्याद् भावशब्देनाभिधायिष्यन्ते तत्किं वाचिग्रहणेन, अस्त्येतत्, वाचकता प्रतिपत्त्यर्थं तु तत् क्रियते। तेन याभ्य आकृतिभ्यो येन विशेषणेन ये प्रत्ययाः विहिताः ते ताभ्य एव तत्रैव भवन्ति नामसंज्ञस्य नेति साङ्कर्यनिरासो वाचि ग्रहणस्य फलं सम्पद्यते न तुमा बाधिताः घञादयः प्रतिप्रसूयमानास्सन्तो विनैव साङ्कर्यं विज्ञास्यन्ते। एवं तर्हि विस्पष्टार्थं वाचिग्रहणम्।

**कर्मणि चाण्** [3]४।५।५

क्रियायां क्रियार्थायां चोपपद इति। एतेन च-शब्दस्येह यौगपद्यद्योतनफलत्वात् क्रियाकर्मणी यदा युगपदुपपदभूते भवतः तदायमण्-प्रत्ययो न तु पर्यायेणेति दर्शयति क्रियाकर्मणोश्चोपपदत्वे तुल्येऽपि तत् प्राङ् नाम चेदिति

---

१. न्यूनपाठः (मं०)

२. ४।४।७० (दु० वृ०)

३. ४।४।७१ (दु० वृ०)

वचनाद् धातोः प्राक् कर्म प्रयुज्यते क्रिया तु कामचारेण अन्तरङ्गश्च धातोः साधनेन सम्बन्धः, तत् कथमसौ साधनप्रत्यासत्तिं विहाय क्रियोपपदप्रत्यासत्तिं गृह्णीयात्, काण्डलावो व्रजतीत्यादि। काण्डानि लविष्यामि, गां दास्यामीति विग्रहः। वुण्तुमाविति वुण्बाधनिवृत्त्यर्थमिति वुण्तुमावित्यादिना यो वुण्-प्रत्ययः तेन। गोदायः व्रजतीत्यादौ बाधकविषयेऽपि प्रवृत्त्यर्थं इत्येतदत्र मन्तव्यम्। न च काण्डलावो व्रजतीत्यादौ सावकाशोऽयमण् प्रत्ययो-बाधितुं शक्यते तद्विषये परत्वादप्येवाणः प्रवृत्तेः।

**शन्त्रानौ स्यसंहितौ शेषे च** [1]४।५।६

वर्तमाने शन्तृङ्ङानशावित्यादिना यौ शन्तृङ्ङानशौ विहितौ ताविह शन्त्रानौ ग्रहणेन गृह्येते। शन्तुशकारेण तयोरेव प्रत्यभिज्ञायमानत्वात् तथा च स्वरूपभङ्गप्रसङ्गाण्णत्वाभावः। अथ पूर्वाविव शन्त्रानौ प्रत्ययौ कस्मान्न विज्ञायेते, नैवं शक्यम्, एवं हि सत्यप्रथमैकाधिकरणे च सामान्येन ताविह स्याताम्, नत्वप्रथमैकाधिकरणे नित्यम्, अन्यत्र तु विकल्पेन च तथा करिष्यन्तं देवदत्तं पश्य, करिष्यमाणं देवदत्तं पश्येति नित्यमेवेष्यते। नन्वेवं सति ङानु-बन्धत्वात् शन्तृङि परतो गुणो न स्यात्, सार्वधातुकवद् भावाच्चान्विकरणो भवेत्। इडागमश्च न स्यात्। आनश्यपि परतो भावकर्मणोर्यः प्रसज्यते। नैते दोषाः गुणप्रतिषेधो हि तावन्न भविष्यति। शन्तृङः स्यशब्देन व्यवहित-त्वात्। अतएवान्विकरणस्य यणश्चाप्रसङ्गः। शब्दान्तरं च स्यशब्दो व्यवधा-यकत्वमुपेत्येव ननु शन्त्रानयोरादौ तावन्नासौ व्यवधायकः स्यात्। एवं तु देवदत्तः कुतः युक्तग्रहणे कर्तव्ये संहितग्रहणस्य विशिष्टसंहितत्वप्रतिपत्त्य-र्थत्वात्। इडागमो विज्ञापकादपि सिद्धौ यदयं भविष्यतीति निर्देशं करोति।

**पदरुजविशस्पृशशोचां घञ्** [2]४।५।७

पदेः वुण् तृचोर्बाधः रुजिप्रभृतिभ्योऽपि नाम्न्युपपदलक्षणस्य प्रत्ययस्य। कथं तर्हि पदम्, पद्यते प्रतीयते येनायं इति गोचरादिसूत्रेण च-शब्दाद् घञ्प्रत्ययो भविष्यति न तु पद्यते येनेत्यादिकां व्युत्पत्तिमाश्रित्य पदादयो व्यञ्जनाच्चेति करणे च घञन्ताः सिद्धाः। तदपार्थको योगारम्भः, करणे हि घञ् सिद्ध इति केनापह्नुतं कर्तरि त्वनेन विधीयते। ननु शब्दानामवयवार्थ-त्वाभावात् साधुत्वार्थं व्युत्पत्तिमात्रं कर्तव्यम्, तच्च करणे घञं विधाय सिद्धमेव, अस्त्येतत्, किन्तु संज्ञाशब्दानामपि सताम् एषा सप्तपर्णादिवदस्त्येव गमनादि-

१. ४।४।७२ (दु० वृ०)

२. ४।५।१ (दु० वृ०)

लक्षणावयवार्थत्वानुगमः। तच्च करणार्थायां व्युत्पत्तौ सिद्धौ सत्यामपि कर्त्रर्थादिदमारम्भणीयम्।

**सृस्थिरव्याध्योः** [1]४।५।८

सृ इति लुप्तपञ्चम्येकवचनान्तम्। घञ्भवतीति वुणादेरपवादः। स्थिरे व्याधौ चार्थे इति प्रत्ययार्थस्य कर्तुरेते विशेषणे। सरतीति सारः इति, सरति कालान्तरं प्राप्नोति न तु क्षणमात्रं तिष्ठत इत्यर्थः।

**भावे** [2]४।५।९

भवनं भावः। श्रिणीभूम्योऽनुपसर्ग इति भावे घञ्प्रत्ययः। यद्येवम्, घञुत्पत्तिमव्यपेक्षाभावशब्दस्य सिद्धिः तत् सिद्ध्यपेक्षा च घञः उत्पत्तिरितीतरेतराश्रयं प्राप्नोति, नैतत्, नित्यशब्ददर्शनपक्षे ह्यनादिबुद्धव्यवहारपरिगत([3]क्रियासामान्यवाची) यो भावशब्दः सौत्रार्थनिर्देशायोपात्तः तस्य च सूत्रकारकृतव्युत्पत्तिसमाश्रयणेनेदानीं व्युत्पत्तिमात्रं क्रियते न तु घञुत्पत्तिं विना नास्ति भावशब्दस्य सिद्धिः। दृश्यते च एवंविधो व्यवहारः यथा—करणे युडित्यादौ। अन्यथा ह्यपरिहार्य्य एव तत्रापीतरेतराश्रयो दोषः स्यात्। तस्मादेवमादौ क इवेतरेतराश्रयदोषः भावेऽर्थ इति न तूपपदे। कुतः, भाव इत्यतएव निर्देशादुपाधिसम्बन्धस्यान्तरङ्गत्वाच्च। नापि प्रकृत्यर्थविशेषणम्। साध्यरूपो हि भावः प्रकृत्यर्थो भावः, असम्भवादव्यभिचाराच्च। तथा हि यस्तावत्सिद्धस्वभावो भावः स कथं साध्यरूपार्थाभिधायिकायार्थो भवेत्। साध्यरूपो न कदाचित् प्रकृत्यर्थतां व्यभिचरति, ततो नेह प्रकृत्यर्थो तस्य च कथमपरः साध्यरूप एव भावो विशेषणं स्यात् भेदाभावात् सिद्धरूपोऽप्यसम्भवादेव विशेषणं नोपपद्यते। तस्मात् प्रकृत्यर्थश्चार्थो भावः अथ प्रत्ययार्थस्य कर्तुर्न भवति भावरूपो पाके कर्तृत्वम्। यथेति जीवन्तमानन्द इति। नैतत्। घञन्ते शब्दे भावस्य कतृत्वेनाप्रतीतेः। तथा च शृतं पाके इति निर्देशः। नह्यत्र पचतो घञन्तो भावकर्तृत्वेन प्रतीयते, तस्माद् भावे वाच्ये प्रत्यय इति सूत्रार्थः। ननु भवति विषय एव प्रत्ययार्थो, नैतत् सार्वधातुअनुगतं हि क्रियासामान्यं भवतेरर्थः। तच्च सर्वधात्वर्थ विषय इति [4]सर्वत्रप्रत्ययो भवति। एवं पाकौ पाका इति वक्ष्यमाणपूर्वपक्षोत्थापनाय द्विर्वचनबहुवचनयोः उपन्यासः तदाह—भावो धात्वर्थ उच्यत इति। सकलधात्वर्था-

---

१. सृस्थिरव्याध्योः ४।५।२ (दु० वृ०)
२. ४।५।३ (दु० वृ०)
३. क्रियायाः (भं०)
४. सर्व त्ययो (वा०)

नुगतं क्रियासामान्यं भवतेरर्थः इति कृत्वा । ननु धात्वर्थः क्रियत इति क्रियालक्षणमर्थं प्रतिपादयितुः शब्दस्य धातुसंज्ञाप्रवृत्तेः । अथ यदि क्रियाधात्वर्थः ततः किमित्याह – तस्याश्चेत्यादि । असिद्धरूपा पूर्वापरीभूतलक्षणप्रचयात्मिका अनिदन्तानिर्देश्या क्रिया, तस्याश्च सिद्धवस्तुविषयाभ्यां द्वित्वबहुत्वाभ्यां योगो नास्तीति द्वित्वबहुत्वाश्रयणेन विधीयमाने कथं पाकौ पाका इत्यादौ द्विर्वचनबहुवचने स्याताम् । अत्रास्त्येतदित्यादिना समाधत्ते । अयमर्थः । यद्यपि क्रियात्मको धात्वर्थः तथापि तस्य द्वौ धर्मौ, एकः साध्यतालक्षणः, सिद्धतालक्षणोऽप्यपरः । तत्र यः साध्यतालक्षणः स्वभावाद् धातुवाच्यः, यस्त्वपरः उपशान्तसकलकारक इवावभाति, यमाश्रित्य पाको वर्तते । तीव्रपाक इति क्रियायोगे विशेषयोगश्च स घञादिप्रत्ययवाच्यः । ततस्तदाश्रयणेन सिद्धवस्तुनिष्ठे द्विर्वचनबहुवचने सङ्गच्छेते । यद्येवम्, कारकस्य व्रज्या, भोक्तुम् पाक इति वुणतुमौ न सिध्यतः, पाकादीनां सिद्धरूपार्थाभिधायिनां क्रियोपपदत्वाभावात्, सत्यम् । प्रकृतिभागवाच्यं तु क्रियामाश्रित्य तौ भविष्यतः तथा च काष्ठैः पाक इति तामेव आश्रित्य कारकं समुन्नेयः । नन्वेवमपि भाव इत्येकवचनेन पुंल्लिङ्गः । न च निर्देशाद्वचनान्तरे लिङ्गान्तरे प्रत्ययं सिध्यति । पाकौ पाका इति । स्त्रियां भाव इति च समानाधिकरणसम्बन्धसम्भवात् स्त्रियामकर्तरि च कारके क्तिप्रत्ययः स्यात् न तु भावे, नैतत्, पुंल्लिङ्गैकवचननिर्देशस्यातन्त्रत्वात् यः करोति स कर्ता इत्यादिवत् । व्याकरणं हि प्रयोगमूलं प्रयोगे च सर्वलिङ्गसंख्ये भावे प्रत्यये दृश्य इति लिङ्गसंख्ययोरतन्त्रत्वम् । ते तर्हि किमर्थमुपादीयेत चेत् लिङ्गार्थस्य विना ताभ्यां निर्देष्टुमशक्यत्वात् नान्तरीयकत्वात् तयोरुपादानं मत्स्यग्रहणे सकलकण्टकस्येव न तु तयोः प्राधान्यमिति सर्वत्र भावे प्रत्ययः ।

**अकर्तरि च कारके संज्ञायाम्** [1]४।५।१०

अकर्तरीत्यत्र कर्तरि भवतीति विग्रहः । नञः क्रियासम्बन्धात् । आहरन्ति तस्मादित्याहर इति अपादाने घञ्-प्रत्ययः मधुराहार इति कर्मधारयः । कारकग्रहणं स्वार्थनिवृत्त्यर्थम् स्वार्थः प्रकृत्यर्थः, तत्र मा भूत् । ननु सिद्धं तत्र पूर्वेणासिद्धं बाह्ये सिद्धतालक्षणे प्रकृतिवाच्ये तत्र प्रत्ययः स्यात् । अस्तु को दोष इति चेत्, लिङ्गसंख्याभ्यां योगो न स्यात् । नन्वकर्तरीति पर्युदासात् कर्तृसदृशे कारके एव विज्ञास्यते न तु स्वार्थे इति किं कारकग्रहणेन, सत्यम्, अस्त्येतत्, किन्तु पर्युदासेन कर्तव्यम् । प्रसज्यप्रतिषेधे तु सादृश्यप्रतिपत्त्यभावात् कर्मादौ कारके न स्यादिति तदर्थं कारकग्रहणं क्रियते । अथ किं कारक-

---

१. ४।५।४ (दु० वृ०)

ग्रहणं करिष्यामीति प्रसज्यप्रतिषेधोऽङ्गीक्रियते तदन्यदपि किञ्चिदङ्गीकरणे प्रयोजनमस्ति, अस्तीति ब्रूमः। किं तत् प्रसज्यप्रतिषेधे समासज्ञापकं हि नञः क्रियायाः सम्बन्धमुत्तरपदेन साकमन्वयो नास्तीत्ययुक्तार्थत्वात् समासो न स्यात् तस्मात् प्रसज्यप्रतिषेधे समासज्ञापनार्थं कारकग्रहणं कर्तव्यम्। तेनासूर्यम्पश्या राजदाराः, अश्राद्धभोजी, अलवणभोजीत्यादि सिद्धं भवति। कर्तुरिति। नन्वे-तदनभिधानान्न भविष्यतीति किं संज्ञाग्रहणेन, क्रियमाणे च तस्मिन्को भवता दायो दत्तः, को भवता लाभो लब्धव्य इत्यत्र कर्मण्यसंज्ञायां न प्राप्नोति, एवं तर्हि संज्ञायां बाहुल्येन भवति। असंज्ञायां तु क्वचिदेवेत्यस्याख्यापनार्थं संज्ञा-ग्रहणम्। स चायमर्थश्च शब्दस्य संज्ञाग्रहणादनन्तरं द्रष्टव्यालभ्यते।

**सर्वस्मात् परिमाणे** [1]४।५।११

परिमीयत येन तत्परिमाणमिति। एतेन परिच्छिद्यते येन तत्परिमाणमिति यौगिकपरिमाणग्रहणेन सङ्ख्यापरिमाणग्रहणेन गृह्यन्त इति दर्शयति। तेनैकः तण्डुलः [2]निश्चाय इत्यादि सङ्गृहीतं भवति। रूढिप्रमाणग्रहणे त्वत्र न स्यात्। अभिधानवशादिति शब्दशक्तिस्वाभाव्यात्। इह यत्र प्रत्ययान्ताद् धात्वर्थमात्रं प्रतीयते तत्र भावे प्रत्ययः। यत्र तु कर्मादिविशिष्टोऽर्थोऽवगम्यते तत्र कर्मादौ अलो बाधस्सर्वत्रेति वक्ष्यमाणेऽपि प्रकरणे निश्चाय इति कर्मणि प्रत्ययः। ननु यथा परिमाणे अल्-प्रत्ययो बाध्यते तथा क्ति-प्रत्ययोऽप्यविशेषाद् बाध्यते। ततश्चैका तिलोच्छ्रितिः इत्यादि न सिध्येतेत्याह—पुरस्तादित्यादिः सर्वत्र ग्रहणस्य प्रयोजनमिति धात्वाश्रितस्यालप्रत्ययस्य यथा न घञा बाधः स्यात्। अर्थाश्रयस्य क्ति-प्रत्ययस्य मा भूदिति सर्वमादित्यस्य प्रयोजनं कैश्चिदुपवर्ण्यमानमेव पुरस्तादपवादन्यायेनाप्यस्य प्रयोजनस्यावगतत्वाद् इत्येवमत्र परिहारो वक्तव्यः। इह बाध्यविशेषापेक्षायामयं पुरस्तादपवाद-न्यायो बाध्यसामान्यापेक्षायां तु धात्वाश्रितमिवार्थाश्रयमपि प्रत्ययं बाधेत तमय घञ्प्रत्ययो मा बाधिष्ठा इति सर्वस्मादिति कर्तव्यम्।

**इङश्च** [1]४।५।१२

उपाध्याय इति। अस्योपधाया इत्यादिना वृद्धिः कथमुपाध्यायी? नदा-दित्वादी-प्रत्ययः। उपाध्यायेत्यपि भवति गणकृतस्यानित्यत्वात्। अत्र च यद्यपि क्त-प्रत्ययः प्राप्नोति तथापि बाध्यमानसामान्यविवक्षायामसावप्यनेन घञा बाध्यते।

---

१. ४।५।५ (दु० वृ०)
२. ४।५।६ (दु० वृ०)

**उपसर्गे रुवः** [1]४।५।१३

इह कस्मान्न भवति । विराविणं वर्तत इति । अन्यत्रापि इति वचनाद् इनुणेव भवति । समन्ताद्रवो वर्तत इति अभिविधौ भावे इनुणिति लोकोपचारादिनुण्-प्रत्ययः ततः अणिनुण इति लोकोपचारे इनुणन्तात् स्वार्थेऽण्-प्रत्ययः ।

**छन्दोनाम्नि च** [2]४।५।१४

छन्दोनाम्नि विषय इति । एतेन वैषयिकेऽधिकरणे एषा सप्तमी दर्शयति । यतो विष्टारपङ्क्तिप्रभृतयः शब्दाः छन्दो नामत्वेन तु घञन्तं शब्दरूपं, तत्र तु विष्टारपङ्क्तिशब्दे घञन्तं शब्दरूपम् अवयवत्वेन वर्तते । तस्माच्छन्दोनाम्नि प्रत्ययान्तस्याधिकरणभूते प्रत्ययोऽयमिति व्याख्यायते । गायत्र्यादय इति । आदिग्रहणेन उष्णिगनुष्टुबादीनां ग्रहणम् । नामग्रहणं ह्यनर्थकं स्यादिति विनापि ग्रहणं छन्दसीत्येतावत्युच्यमाने वेदस्य परिग्रहसिद्धिरिति भावः । तथा च बहुलं छन्दसीत्यन्यत्र व्यवहारः ।

**प्रे द्रुस्तुस्रुवः** [3]४।५।१५

चकारोऽत्रानुवर्तते । तेन समि स्तौतेर्यज्ञ इष्यते । संस्तावः छन्दोगानम् । यत्र देशे समेति स्तुवन्ति स एवमुच्यते । यज्ञ इति किम्, संस्तवश्छात्रयोः ।

**नियोऽवोदोः** [4]४।५।१६

उन्नयः पदार्थानामित्यन्यत्रापीति वचनादच्-प्रत्ययः ।

**निष्पूर्वः** [5]४।५।१७

निश्शब्दो पूर्वो यस्मात् स निष्पूर्वः । स चासौ पूः निष्पूः, तस्मन्निष्पुवः । एवमन्येषु अप्येवं प्रकारेषु निर्देशेषु विग्रहः कर्तव्यः । पुव इति पूङ्पूञो गृह्येते । अभिपूर्वाल्लूञो घञ् वक्तव्य इति चानुवृत्तेः ।

**उन्न्योर्गिरः** [6]४।५।१८

उदो दस्य पदान्ते धुटामिति प्रथमः । तस्य पञ्चमः । गिर इति । गॄ निगरण

---

१. ४।५।७ (दु० वृ०)
२. दुर्गवृत्तावपि ४।५।१४
३. दुर्गवृत्तावपि ४।५।१५
४. दुर्गवृत्तावपि ४।५।१६
५. दुर्गवृत्तौ तु "निरभ्यो पूल्वोः" ४।५।१७
६. ४।५।१८ (दु० वृ०)

इत्यस्य गिरतेस्तौदादिकस्यैकदेशोऽनुक्रियते । तेन गॄ शब्द इत्यस्य गृणातेः क्र्यादिकस्य व्यावृत्तिः । अन्ये तूभयोरपि ग्रहणमिच्छन्ति । गिर इति निर्देशोऽनार्ष इत्याहुः । तदत्र सूरयः प्रमाणम् ।

**किरो धान्ये [1]४।५।१९**

धान्यविषये धात्वर्थे वर्तमानादिति । एतेन धान्य इत्येतद् धात्वर्थस्य विषयभावेन विशेषणमिति दर्शयति । तेन धान्यविक्षेपे यः किरतिर्वर्तते तस्मात् प्रत्ययः प्रकृत्यर्थस्तु धान्यर्थं भवति धातोर्द्रव्ये धान्ये वृत्त्यसम्भवात् । प्रत्ययार्थोऽपि न भवति । धान्यस्यापि पृथक्प्रयोगात् ।

**नौ वृ च [2]४।५।२०**

वृ इति लुप्तपञ्चमीकम् । वृङ्वृञोः च सामान्येन ग्रहणम् । नीवारा नाम व्रीहय इति । अविशेषाभिधानेऽपि धान्यविषय एव नीवारशब्दो वाच्यः । निवरा कन्येति । निव्रियत इत्यल्प्रत्ययः । स च वासरूपविधिना । अन्यथाऽऽल्प्रत्ययापवादः क्तिप्रत्ययः स्यात् ।

**समि मुष्टौ [3]४।५।२१**

अङ्गुलीनां रचना विशेषा मुष्टिरिह गृह्यते । यस्तु मुष्टिशब्दः परिमाणे वर्तते, शाकस्य यदीह ग्रहणं स्याद् योगारम्भो निष्फलः स्यात् । सर्वस्मात्परिमाण इत्यनेन सिद्धत्वात् ।

**प्रे रश्मौ [4]४।५।२२**

अश्वादीनां संयमनार्था रज्जू रश्मिरिति बृहद् गृह्यत इति शेषः, अर्कादि सम्बन्धिनी तु दीप्तिर्न गृह्यते, प्रत्ययान्तस्य स्वभावात् तत्रावृत्तेः । सामान्य इव नीवारशब्दस्य ।

**वृणोतेराच्छादने [5]४।५।२३**

आच्छाद्यतेऽनेनेति छदेरिन्नन्ताद् युट्प्रत्ययः । आच्छादनविशेष उच्यते इति शब्दशक्तिस्वाभाव्यात् । श्तिपा वृञो निवृत्त्यर्थः ।

---

१. ४।५।२० (दु० वृ०)
२. ४।५।२१ नौ वृञः (दु० वृ०)
३. ४।५।२६ (दु० वृ०)
४. ४।५।२९ (दु० वृ०)
५. ४।५।३१ (दु० वृ०)

**परो भुवोऽवज्ञाने** [1]४।५।२४

अवज्ञा अवज्ञानमिति युट्-प्रत्ययः । अवज्ञान इति किम्, परिभवः समन्तादर्थेऽत्र परि-शब्दः ।

**चेस्तु हस्तादाने** [2]४।५।२५

हस्तादानं ग्रहणं प्रत्यासन्नतामुपलक्षयतीति कुतः, हस्तादानग्रहणसामर्थ्या-देव चिनोत्यर्थो हि हस्तादानविषय एव भवतीति किं हस्तादानग्रहणेन । तदेतत् क्रियमाणवस्तुनः प्रत्यासन्नन्तामुपलक्षयति ।

**शरीरनिवासयोः कश्चादेः** [3]४।५।२६

निवसन्त्यस्मिन्निति निवासः । व्यञ्जनान्ताच्चेत्यधिकरणे घञ्-प्रत्ययः । राशीकरणेऽप्यर्थे इति । अपि शब्दाच्चिताविति चीयतेऽसाविति चितिः । आकायमग्निं चिन्वीत । आदिग्रहणमन्त्यनिवृत्त्यर्थम् ।

**सङ्घे चानौत्तराधर्ये** [4]४।५।२७

अनौत्तराधर्ये सङ्घे अभिधेये इति । अनेकधर्मावेशने यस्सङ्घस्तत्राभिधेये प्रत्ययः । प्राणिनां समुदायः सङ्घ इति । तेन प्राणिसमुच्चय इत्यादौ न भवति । श्वनिचय इति षष्ठी समासः ।

**स्वरवृद्गमिग्रहामल्** [5]४।५।२८

स्वरान्ताद् धातोरिति । न तु स्वर आक्षेप इत्यस्मात् । कुतः, उपसर्ग एव इत्यादेः प्रकरणस्याल् प्रत्ययबाधक[6]स्यारम्भात् । ननूपसर्ग एवेत्यादि नियमसम्पत्तये प्रकरणारम्भोऽ[7]असावर्थवान्स्यात् । एवं तर्हि इङाभ्यां चेति सूत्रारम्भात् कृत्रिमत्वाच्च संज्ञाया एव ग्रहणम् ।

---

१. ४।५।३३ (दु० वृ०)
२. ४।५।३४ (दु० वृ०)
३. ४।५।३५ (दु० वृ०)
४. ४।५।३६ (दु० वृ०)
५. ४।५।४१ (दु० वृ०)
६. बाधकस्य
७. कृत्स्नोऽयं सूत्रन्यासः।

समजासनिसदनिपतिशीङ्सुविद्यटिचरिमनिभृञिणां संज्ञायाम् [1]४।५।२९

[2]……………अन्यत्रापीति वचनात् अकर्तरि च कारक इत्यतः संज्ञाग्रहणेऽनुवर्तमाने पुनः संज्ञाग्रहणं कर्मादावेव कारकेऽपि मा भूत्, भावेऽपि यथा स्यात्। पूर्वकं हि संज्ञाग्रहणं कर्मादिकारकप्रतिबद्धमिति तत्रैव।

सर्तेर्यश्च [3]४।५।३०

परिपूर्वादेव प्रत्ययः। केवलात् तु न भवति, अनभिधानात्। जागर्तेरपीष्यत इति। तत्र केचिदाहुः—अपूर्वेयमिष्टिरिति। अन्ये तु च-शब्दः सर्तेरनन्तरं बोद्धव्यः। तेन प्रकृत्यन्तरसमुच्चयाज्जागर्तेरपि य-प्रत्ययः समुच्चीयत इति मन्यते। अकारोऽपि दृश्यत इति। गुरोश्च निष्ठायां सेडित्येतत् सूत्रविहितः य-प्रत्ययः तस्य बाधः स्यात्। अन्यत्रापीति वचनान्न भविष्यति।

इच्छा [4]४।५।३१

भावेऽर्थे, न तु कर्मादौ अनभिधानात्। इच्छा-शब्दस्योच्चारणमस्त्येवेति उच्चारणं साभिप्रायमेतत्। उच्चारणमात्रात्किल प्रकृतिप्रत्ययकल्पनारहितादिच्छाशब्दस्य साधुत्वमुच्यते, तच्चोच्चारणमस्यान्यत्राप्यस्त्येव लक्षणानुमानं चोभयत्रापि तुल्यमिहान्यत्र च। न च श-प्रत्ययोपजीवनार्थमिदं निपातनमिकारप्रत्ययान्तस्यैव हि इच्छा-शब्दस्य साधुत्वं विज्ञास्यते, इच्छात्वं तु सौत्रमेव भविष्यति। इह निपातने यण्भाववत् कर्त्रन्तरप्रणीतेनेच्छाशब्देन कथमिदं निपातनं प्रत्यादेष्टुं शक्यत इति चेत्, वाक्यान्तरेणेच्छाशब्दस्य साधुत्वमस्तीत्येवं परतयैतदुक्तम्। इच्छार्थेष्वेककर्तृकेषु तुम् इत्यनेनापीच्छाशब्देन प्रयुक्तेनेच्छाशब्दस्य साधुत्वं शक्यमभिधातुम्। तस्मान्मुख्यप्रयोजनाभावादपार्थकमिदं निपातनं भवेत् वैचित्र्यार्थमेव।

शन्सुप्रत्ययाद: [5]४।५।३२

प्रत्ययग्रहणेनात्र सनादयः प्रत्ययाः प्रत्यवमृश्यन्ते। तदा नानामेव धातुव्यपदेशत्वाधिकारात् च धातोः प्रत्ययविधानात्। आशंसेत्यादि भावेऽर्थे कारप्रत्ययः। चिकीर्षा लोलूयितशब्दौ वा चेक्रीयितविषयोऽकारः प्रत्ययः। अस्य

---

१. ४।५।७८ (दु० वृ०)
२. रिक्तं निर्णेयम्।
३. ४।५।७९ (दु० वृ०)
४. ४।५।८० (दु० वृ०)
५. ४।५।८१ (दु० वृ०)

च लोपः। निष्ठायामनिट्त्वादिति अनिट्त्वं तु नत्वीटादिसूत्रेण वेज्वत्, वेट्त्वार्थादनुबन्धत्वात्। ननु प्रत्ययान्तानामुत्तरसूत्रेण सिद्धः प्रत्ययः, नैतत्, सन्ति हि प्रत्ययान्तात् पिपतिषेत्येव वमादयः गुरुमन्तो न भवन्तीति तदर्थं प्रत्ययग्रहणं कर्तव्यम्। कथं शास्ति, अन्यत्रापीति वचनात्।

**गुरोश्च निष्ठायां सेटः** [1]४।५।३३

गुरुमतो धातोरिति। शुक्लपट इत्यादिवद्विना मन्तुप्रत्यये न तद्वतोऽभिधानदर्शनादेवमुक्तं निष्ठा सेड्ग्रहणेन तु विशिष्टो धातुरुपलक्ष्यते। अकारप्रत्ययविधानवेलायां निष्ठासेट्त्वस्यासम्भवात्।

**षानुबन्धभिदादिभ्यस्त्वङ्** [2]४।५।३४

भिदा इत्यस्य नामगणे पठितस्य शब्दस्य प्रकृतिभावः सभिद् इत्यत्र निर्दिश्यते। पचादिवद् भिदादयो गृह्यन्त इति नामगणे पठिताः धातुगणे तु ये पठ्यन्ते ते न गृह्यन्ते। गणान्तरस्थानामपरिग्रहप्रसङ्गात् भिदिमतीभ्यः च ये धातवः पठ्यन्ते तेभ्यो जनिष्यमाणप्रत्ययेभ्योऽपि प्रत्ययः स्यात्। तस्मान्नामगणस्था एव भिदादयो गृह्यन्ते। तथा चान्तरवृत्तित्वपरिहारेण विदारणाद्यर्थोपसङ्ग्रहः सिद्धो भवति। कारेत्यादौ वृद्ध्यादिकार्यं च उपलभेति। रभिलभोरन्विकरणः परोक्षयोरिति नकारागमः। तस्यानिदनुबन्धेत्यनुषङ्गलोपः। घटादय इति। घट चेष्टायामित्यतः आरभ्य यावत् षम ष्टम वैक्लव्य इत्येतदन्ताः घटादयः। अतः परं वृत्करणात् कार्यार्थमिति। अकारप्रत्ययप्रवृत्तिः कार्यम्। सोऽर्थः प्रयोजनं यस्य षानुबन्धत्वपरिज्ञानस्य तत् तथोक्तम्। क्रियाविशेषणं चैतत्। शस्त्र्यामेवायं प्रयोग इति। ननु लोकविरुद्धमेतत्, चर्मकारकुले ह्यन्या, आरा शस्त्री चान्या प्रसिद्धा, ननु या एव सा आरा सैव शस्त्री, यदि नानयोरैकार्थ्यं स्यात् ततः आरा शस्त्रीति समानार्थत्वाद् युगपत् प्रयोगासम्भवात् द्वन्द्वो दुर्घटः स्यात् इति चिन्त्यमेतत् शब्दार्थविद्भिः। वक्तव्यादिति उपसर्गावर्णस्य धात्वृकारे परे आरादेशो वक्तव्य इत्यस्मात् क्षिपाशब्दो भिदादिषु पठ्यते स क्षि क्षय इत्यस्य बोद्धव्यः न तु क्षि हिंसायामित्यस्य। मेधा-शब्दं केचित् पठन्ति स न पठितव्यः, गुरुमत्वादेव नैव प्रत्यये कृते रूपस्यासिद्धत्वात् मृज् शब्दोऽपि न पठितव्यः षडनुबन्धत्वादेव मृजेः प्रत्ययस्य सिद्धत्वात्। डु-शब्दो यथादर्शनमन्यतोऽप्यङो भावार्थः। तेन मृगयेत्यादि सिद्धम्। मृगेरदन्तात् चौरादिकादङि सति गुणः। ङानुबन्धनिषेधस्तु

---

१. ४।५।८१ (दु० वृ०)
२. ४।५।८२ (दु० वृ०)

न भवति, नञा निर्दिष्टस्यानित्यत्वात् । कारितलोपस्तर्हि कस्मान्न भवति, नाल्विष्णवेति योगविभागात् ।

भीषिचिन्तिपूजिकथिकुम्बिचर्चिस्पृहितोलिदोलिभ्यश्च [1]४।५।३५

भीष्मादयः इन्नन्तानुकरणाः । भीषेति, बिभ्यतः प्रयुक्तिरति । विगृहीते धातोश्च हेताविति न् । भियष्षुग्वेति षकारागमः, ततो ङि-परे कारितलोपः । कथं तुलेति । कारिते परतो गुणः प्राप्नोतीति मन्यमानस्य प्रश्नः ।

आतश्चोपसर्गे [2]४।५।३६

कथं श्रद्धेति, श्रच्छब्दस्यानुपसर्गत्वादङ् प्रत्ययस्याभावं मन्यते । आश्रद्धेति ज्ञापकाद् इति । यथादर्शनं चानुपसर्गेऽपि सामान्येनैतद् ज्ञापकात् । तेनान्तर्धा इत्यपि सिद्धं भवति ।

इषिश्रन्थ्यासिघुट्टिवन्दिविदिकारितान्तेभ्यो युः [3]४।५।३७

कारितान्तशब्देन बहुव्रीहिः ततो द्वन्द्वः । क्तिप्रत्ययस्याप्रत्ययस्य च बाधः । कारितान्तेभ्यो हि प्रत्ययान्तत्वादकारः प्रत्ययः प्राप्नोति । इषेरनिच्छार्थस्यायं प्रत्ययः स्मर्यत इति, नत्विच्छार्थस्य, अनभिधानात् ।

कीर्तीषोः क्तिश्च [4]४।५।३८

कृत संशब्दन इत्ययमिन्नन्तोऽनुक्रियते, परिपूर्वादिति, न तु केवलात्, अनभिधानात् । अनिच्छार्थादिति गत्यर्थादाभीक्ष्ण्यार्थाच्च, तत्राप्यनभिधानमेव हेतुः । यद्येवम्, इषेः पूर्वत्र पाठोऽनर्थक इति । तत्र केचिदाहुः—ईष गतीत्यस्य पूर्वत्र ग्रहणमिति । अन्ये त्विषेरेवोपसर्गात् तेन तत्र य-प्रत्यय इत्याचक्षते ।

रोगाख्यायां वुञ् [5]४।५।३९

प्रवाहिकेति । अत्र वहेः क्ति-प्रत्ययः प्राप्तः । विषूचिकेति, अत्रापि सूचेरिकारान्तात् यु-प्रत्ययः । ननु रोग इत्येतावत्यपि कृते रोगे प्रत्ययान्ते वाच्येऽसति प्रत्यय इति सूत्रार्थो विज्ञायते, तत्किमाख्या ग्रहणेनेत्याह—आख्याग्रहणमित्यादि । भस्मकशब्दसान्निध्यादित्यादिना । तदेव रोगस्य पदान्तरद्योत्य-

---

१. ४।५।८३ (दु० वृ०)
२. ईषिश्रन्थ्यासिवन्दिविदिकारितान्तेभ्यो युः ४।५।८५ (दु० वृ०)
३. ४।५।८४ (दु० वृ०)
४. ४।५।८६ (दु० वृ०)
५. ४।५।८७ (दु० वृ०)

त्वमाह—यद्येवमित्यादि। यदि प्रत्ययान्तवाच्ये रोगे प्रत्ययो न तु पदान्तरद्योत्ये तर्हि शिरोऽर्तिरित्यत्र कस्मात् प्रत्ययो न भवति। नह्यत्र पदान्तरद्योत्ये रोग इत्याह—अन्यत्रापीत्यादि। आख्याग्रहणं त्विदानीमन्यत्रापीत्यस्यैव प्रपञ्चार्थम्। आसिका, शायिका, भावेऽर्थे वुञ्-प्रत्ययः।

**पर्यायार्हर्णेषु च** [1]४।५।४०

परिपूर्वादिणो, अतएव ज्ञापकात् कर्मेऽर्थे घञ्-प्रत्ययः। अर्ह-शब्दो भावघञन्तः। ऋण-शब्दो निपात इष्यते। क्त्वादेरपवादः। इक्षुभक्षिकां धारयसीति। भक्षेरिन्नन्ताद् यु-प्रत्ययः प्राप्तः उत्पत्तावपीष्यत इति। उत्पत्तिर्जन्म चिकीर्षा सोत्पद्यते इत्यादौ तु न भवति, अनभिधानात्। च शब्दो धातुनिर्देशमात्रे। इक्श्तिपौ भवत इति केचित्। तथा च भिदिः भवति। अन्ये तु ज्ञापकादनयोस्सिद्धिं मन्यन्ते, तथा च युजिरुजीति भवते र इति च निर्देशं करोति, तच्च ज्ञापकमवश्यमाश्रणीयम्। अत्र तु अन्विकरणो न स्यात्। अकर्तृवाचित्वात् श्तिपः सार्वधातुककरणसामर्थ्यं च। अविशेषाद् यणमपि विदध्यात्, कर्तृप्रत्ययसिद्धौ तु च-शब्दः उपास्यः तेन अकारः, एवकार इत्यादयः। न चात्र सर्वत्र ज्ञापकमस्ति। न च भावघञन्तः कारशब्दोऽपि ज्ञातुं शक्यते। एवकारकरणमित्यादावर्थस्यासङ्गतिप्रसङ्गात्। सन्ध्यक्षरयोस्त्वन्यत्रापीति वचनात् कारप्रत्ययाभावः। यदिह प्रत्ययस्तु ज्ञापकादेव सिद्धः। रमकारयोरित्यादयस्तु निर्देशाः ज्ञापकज्ञापितस्य विधेः क्वचिदनित्यत्वदर्शनात्। तथा चाणि वचेरिति सत्यपि ज्ञापके वचेरणिवधानमर्थवद् भवति। सम्पदादिभ्यः क्विप्प्रत्ययोऽपि च-शब्दाद् वक्तव्यः। भावेऽर्थे सम्पादनं सम्पत्। एवं विपत्, न वक्तव्यः, क्विप्चेत्यनेन सिद्धत्वात्। ननु कर्तरि सिद्धौ न तु भावे, अन्यत्रापीति वचनात् भावेऽपि भविष्यति। तथा च क्ति-प्रत्ययोऽपि सम्पदादिभ्यो दृश्यते। सम्पत्तिः विपत्तिरिति।

**कृत्ययुटोऽन्यत्रापि** [2]४।५।४१

ततोऽन्यत्रापि भवतीति करणादौ। यद्येवम्, भावकर्मणोः कृत्यानां विधानमनर्थकं प्राप्नोति। भावे करणाधिकरणयोश्च युटः भावादिष्वर्थेषु भवन्ति। अर्थान्तरे त्वल्पशः। एवं कृतोऽर्थदिशनस्यानर्थक्यप्रसङ्गः। कृद्ग्रहणे कर्तव्य इत्यादि। अथ किं कृतोऽपि प्राप्तमभिधेयं व्यभिचरन्ति येन कृत्ययुड्ग्रहणं प्रत्याख्यायते। एतमेव तत्, तदाह—कृत्प्रत्यया अपीत्यादि। ननु

---

१. ४।५।८६ (दु० वृ०)
२. ४।५।९२ दु० वृ०)

सूत्रारम्भसामर्थ्यादेव कृत्ययुटो यत्रार्थे विहिताः ततोऽन्यत्रार्थे विज्ञास्यन्ते। तत्किमन्यत्र ग्रहणेन, नैतत्, असति हि तस्मिन्प्रकृत्यन्तरादप्याशङ्क्येरन्, अन्यत्रग्रहणे तु सत्यन्यत्र भवन्ति न त्वन्यतः।

**नपुंसके भावे क्तः** [1]४।५।४२

ननु सिद्धो भावकर्मणोरित्यादिना भावेऽर्थे नपुंसकेऽन्यत्र च क्त-प्रत्ययः। कृतमित्यादौ सकर्मकेभ्यो भावेन सिद्ध इति चेत्, अविवक्षितत्वात् भावे एवात्र क्त-प्रत्ययो विज्ञायते। एवं तर्हि नपुंसके भावे विहितेन युटा तस्य बाधः स्यादिति सिद्धोऽप्यसौ न पुनर्विधीयते। न च वासरूपविधिरस्ति। तत् सत्तायां हि घञादीनामपि नपुंसके भावे प्रकृतिप्रसङ्गात्। अन्ये तु कालसामान्ये विधानार्थं वचनमिदमारब्धमित्याहुः इतरथा हि भावकर्मणोरित्यादिना क्त-प्रत्ययस्यातीत एव विधानं स्यात्। तत्र ह्यर्थादेशेन वाक्ये सिद्धः क्त-प्रत्ययो विध्यर्थमनूद्यत इति तस्य प्राप्त्यातीत एव भवति। अस्य तु वचनस्यापूर्वविधानार्थत्वात् कालसामान्ये क्त-प्रत्ययो लभ्यते।

**युट् च** [2]४।५।४३

टकारानुबन्ध उत्तरार्थ इति। ई-प्रत्ययप्रवृत्तिलक्षणं तस्य प्रयोजनमुत्तरत्र, नत्विह, यत्र नपुंसके विधिः।

**करणाधिकरणयोश्च** [3]४।५।४४

करणेऽधिकरणे चार्थे इति। न तूपपदे करणाधिकरणयोरित्यत एव निर्देशात्।

**पुंसि संज्ञाया घः** [4]४।५।४५

व्यञ्जनान्तात् घञ् वक्ष्यतीति व्यञ्जनान्ताश्चेत्यनेन।

**अवे तॄस्त्रोर्घञ्** [5]४।५।४६

घानुबन्धकरणमुत्तरार्थमिति। उत्तरत्र अपामार्ग इत्यादौ चजोः कगाविति घानुबन्धनिमित्तं कार्यं यथा स्यात्।

---

१. ४।५।६३ (दु० वृ०)
२. ४।५।६४ (दु० वृ०)
३. ४।५।६५ (दु० वृ०)
४. ४।५।६६ (दु० वृ०)
५. अवे तॄस्त्रोर्घञ् ४।५।६८ (दु० वृ०)

**व्यञ्जनान्ताच्च** [1]४।५।४७

घञ्प्रत्यये प्राप्ते वचनम् । अन्यत्रापीति वचनात् युड् भविष्यति । अन्तग्रहणं विस्पष्टार्थम् ।

**अध्यायन्यायोद्यावसंहाराधारावायाश्च** [2]४।५।४८

घञ् प्राप्तो बाध्यते । अव्यञ्जनार्थश्चायमारम्भः । च-शब्दादुदकशब्दोऽपि निपात्यते । उदकं विषयश्चेत्, धात्वर्थो न स्यात् । तैलोदङ्कः । उत्पूर्वादञ्चतेः घञि निपात्यते । व्यञ्जनान्तात् सिद्धोऽप्यसावुद विषयेऽपि प्रसज्येत । उदकविषये उदकोदञ्चनः, युडेव भवति । न तु घञ्-प्रत्ययोऽन्यथा मूलोदाहरणादत्र विशेषो न स्यात् ।

**ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्** [3]४।५।४९

कृच्छ्रं च अकृच्छ्रं च ते कृच्छ्राकृच्छ्रे ते अर्थे येषां ईषद्दुस्सूनां ते तथोक्ताः । कृच्छ्रं दुःखमित्यादि । एष चात्र विशेषः । यत्र यस्य सम्भवः तत् तस्य विशेषणं भवतीत्येवं लभ्यते । ईषद्भोजनमित्यादि । सुखेन युज्यत इति विग्रहः । अव्ययत्वान्मकारागमो न सम्भवतीति, तद्विधौ दीर्घोपपदस्येत्यतोऽनव्ययग्रहणस्यानुवृत्तेः । ईषदादीनां चाव्ययमलिङ्गसङ्ख्यमव्ययमिति स्मरणात् ।

**कर्तृकर्मणोश्च भूकृञोः** [4]४।५।५०

इह कर्तृकर्मणोः प्रत्ययार्थं न भवति । यदि स्यात् पूर्वत्र खानुबन्धकरणस्य इहार्थत्वमघटमानं स्यात् । चकारोऽत्र सन्नियोगार्थः । तेन कर्तृकर्मणोः ईषदादीनां युगपदत्वं विज्ञायते, खानुबन्धबलात् । नत्वीषदादिव्यवहितयोरपि तयोः खानुबन्धकरणसामर्थ्यात् मकारागमः स्यादिति कथं खानुबन्धबलादिति हेतुरयं युज्यते । एवं तर्हि कर्मणोरित्येषा ईषदाद्यपेक्षया परसप्तमी विज्ञास्यते । तदेतदाह - ईषद्दुस्सुषु कृच्छ्राकृच्छ्रार्थेषु कर्तृकर्मपरेषूपपदेषु इति । सुखेन अनाढ्येन आढ्येन भूयत इति । एतेनाभूततद्भाववृत्तिनोः कर्तृकर्मणोरुपपदत्वमत्रेति दर्शयति । एतच्चापि शब्दस्य विशेषद्योतनार्थस्येहानुवृत्तेर्लभ्यते । एवं सुखेन अनाढ्य आढ्यः क्रियते इत्येव विगृहीतव्यम् । इह तु न

---

१. ४।५।९९ (दु० वृ०)
२. अप्राप्योऽयं दुर्गवृत्तौ ।
३. ४।५।१०२ (दु० वृ०)
४. ४।५।१०३ (दु० वृ०)

भवति, स्वाढ्येन भूयत इति अभूततद्भावस्याविवक्षितत्वात्।

**शासियुधिदृशिधृषिमृषां वा** [1]४।५।५१

युप्रत्ययेन खलूच्यते इति धातुविशेषोपादानेन विधीयमानस्य यु-प्रत्ययस्य विशेषविहितत्वात्। स्त्र्यधिकारं परेणेति द्वितीयेनेनेति द्वितीया परेणेति पुरस्तादयश्चेत्यनेन प्रत्ययः।

**इच्छार्थेष्वेककर्तृकेषु तुम्** [2]४।५।५२

उभयत्रापि बहुव्रीहिरिति। इच्छार्थेष्वित्यत्र एककर्तृकेष्वित्यत्र च इच्छति भोक्तुमिति। अत्र य एव तुम्प्रकृतेः कर्ता स एव भुजेः इत्यस्त्येककर्तृत्वम्। कामयत इति, कमिरनिट्प्रत्ययान्तः। देवदत्त भुजनमित्यादि। अत्र भुजेर्देवदत्तः कर्ता इषेश्च यज्ञदत्त इति नास्त्येककर्तृत्वम्। तेन भुजेः प्रत्ययाभावः। ड-प्रत्ययवद् वुणपि स्यादिति। तस्माद् वुणो निवृत्त्यर्थं वचनमिति भावः। एककर्तृकेष्विति विशेषविधानार्थं च। इच्छां करोतीत्यत्र तु न भवति। अनभिधानात्।

**कालसमयवेलाशक्यार्थेषु** [3]४।५।५३

शकनं शक्यमिति शकिसहीत्यादिना य-प्रत्ययः। वुण्तुमावित्यादिना कालादिषु तुम्प्रत्ययो न सिद्ध्यत्यक्रियोपपदत्वात्। ननु भवति, धात्वर्थस्य प्रतीयमानत्वात् कथं अक्रियोपपदत्वं स्यात्। भवतिस्तु न प्रयुज्यते, उच्चारणस्य वक्त्रधीनत्वात्। नैतत्, क्रियार्थत्वाभावात्। नहि कालो भोक्तुमित्यत्र कालस्य सत्ता भोजनार्थेति प्रतीतिरस्ति, किन्त्वयमवसरो भोजनस्येत्ययमत्रार्थः प्रतीयते। न च भविष्यत्कालतावसायोऽस्ति। वुण्तुमावित्यत्र च भविष्यतीति सम्बध्यते। कालो भोक्तुं न भवतीति च वाक्यार्थे कथं सिद्धिः स्यात। सत्यम्, वा सिद्धौ वुणपि प्राप्नुयात्। अनभिधानं च विना वचनं सर्वत्र दुर्ज्ञानमिति योगारम्भ एव ज्यायान् शब्दाद् योद्धुं धनुरपि भवति प्रथमान्तेष्वेवेत्यादि। अन्यविभक्त्यन्तेषु तु प्रत्ययाभावेनाभिधातुं हेतुः। तथा च कालः पचति भूतानि इति प्रथमान्तत्वेऽपि न भवति। यद्येवम्, कालोभोजनस्येत्यत्र प्राप्नोति। वा सरूपविधिना युडपि भविष्यति।

---

१. ४।५।१०५, अत्र शासि इत्यस्य स्थाने शासु इति पाठः (दु० वृ०)
२. ४।४।१०६ (दु० वृ०)
३. ४।५।१०७ (दु० वृ०)

**अर्हतेस्तृ च** [1]४।५।५४

अर्हतेर्यः कर्तेत्यादि । तथा हेतोरेव प्रकृतित्वं कस्मान्न विज्ञायते, योगारम्भसामर्थ्यात् । ननु वुणपि प्राप्नुयादिति तन्निवृत्त्यर्थो योगारम्भः स्यात् । नैतत्, अनभिधानात् तन्निवृत्तेः सिद्धत्वात् । तृचेति च शब्दाद्वक्ष्यमाणानां कृत्यप्रत्ययानां अत्रविषये प्रवृत्त्यर्थः । तेन भवता खलु कन्या वोढव्या इत्याद्यपि भवति । यद्यपि चात्र सूत्रे कर्ता प्रत्ययार्थस्तथापि कर्तरि गम्यमाने इति व्याख्यायते । ननु तृचः प्रवृत्तौ कर्तुर्वाच्यत्वे गम्यमानत्वे च शब्दप्रापितानां तु कृत्यानां विधाने प्रतीयमानत्वेन तेन तेषां भावकर्मणोरर्थयोः प्रवृत्तावपि कर्तुः गम्यमानत्वं न व्याहन्यते । ननु ते सिद्धास्ते सामान्यवाक्येनैव, सत्यम्, सिद्धाः, सप्तम्या तु बाध्येरन् । प्रयोगतश्चेत्यनेन च शब्दादर्हे कर्तरि सप्तमी मन्यते । अतएव तृच्-प्रत्ययः सिद्धे अपि पुनर्विधीयते अन्यथा तु सप्तम्या सोऽपि बाध्यते । तदेतदाह—वुण्तृचाविति सिद्धः इत्यादि तृचः चकारो धातोः तृ-शब्दस्यारित्यत्र उणो ग्रहणार्थः ।

**प्रैषातिसर्गप्राप्तकालेषु प्रकृत्या** [2]४।५।५५

प्राप्तकाल इति कर्मधारये सति द्वन्द्वः । तया कृत्यानां भावो मा भूदिति । न च वासरूपविधिरिति तस्य कृत्प्रत्ययविषयत्वात् । ननु प्रैषादिष्वेव कृत्या यणः स्युरिति नियमार्थं कृत्यानां पुनर्विधानं स्यात् नैतत् । [3]वुमोपघ्व्य-धनघात्यम् इत्यन्यत्रापि तेषां दर्शनात् ।

**आवश्यकाधमर्ण्ययोर्णिनिः** [4]४।५।५६

अधमः ऋणोऽधमर्ण इति । क्वचिद् द्वितीयाद्यं तु परपदं पूर्वपदेन प्राप्ता जीविकादिवत् पयस्यत इत्येवमत्र तत्पुरुषः समासः । तस्य भाव आधमर्ण्यमिति यण्-प्रत्ययः । आवश्यकाधमर्ण्ययोः सतोरिति केन पूर्वरूपेणात्र तयोस्सत्त्वं विज्ञायते । प्रत्ययार्थस्य कर्तृविशेषभावेन तेनावश्यं भाविविशिष्टे च कर्तरि प्रत्ययः, उपपदत्वं त्वनयोर्न भवति । तथात्वे सति कारी हारीति केवलात् प्रत्ययो न प्राप्नोति । च-शब्दो नात्र परमतमाशङ्क्यै तदसारमित्यादिना दूषयति, तच्च गतार्थम् ।

---

१. ४।५।१०८ (दु० वृ०)
२. ४।५।११० (दु० वृ०)
३. अपाठ्योऽयमंशः ।
४. ४।५।१११ (दु० वृ०)

**तिक्कृतौ संज्ञायामाशिषि च** [४]४।५।५७

तर्तिः सर्तिरिति । न तिकि दीर्घश्चेति प्रतिषेधात् पञ्चमोपधेत्यादिना दीर्घो न भवति । वनतितनोत्यादीनां च पञ्चमलोपः । देवदत्तः यज्ञदत्त इति क्त-प्रत्ययः । दद् दोऽधः इति दद आदेशः ।

कृत्-प्रकरणे पञ्चमः पादः ।

## षष्ठः पादः

**धातुसम्बन्धे प्रत्ययाः** [१]४।६।१

धातुशब्दस्य कर्मषष्ठ्यन्तस्य भावघञन्तेन सम्बन्धशब्देन सह समासः । धातूनां सम्बन्धो धातुसम्बन्धः इति । न चात्र पूर्वपदार्थोत्तरपदयोरेकीभावात् पांसूदकवदविभागापत्तेः बह्वर्थो नावगम्यते इति कथं बहुवचनान्तो धातुशब्दः समस्येत् । अस्त्येतत् । सम्बन्धस्यानेकानुष्ठानत्वात् समासाद् बह्वर्थावगतेः धातुशब्दस्य योऽर्थः बहुवचनान्तस्यापि समासः । तत्र पुनर्बहुत्वावसाये प्रमाणं नोपलभ्यते तत्र कामं न्याय्य एव समासाभावो, नहि राज्ञां पुरुष इति वक्तव्येऽर्थे राजपुरुष इति वृत्तिर्भवति । सति तु संख्याविशेषावसायविषये प्रमाणं भवत्येव । संख्याविशेषावग्रहणे वृत्तिर्यथैकव्यञ्जनमध्ये इत्यत्र । नन्वेवमपि धातोः सम्बन्धो धातूनां विशेषणविशेष्यभाव इह व्याख्यायिष्यते । तत्र चैक एव धातोर्विशेष्यभूत एकेन व्यापारेण धात्वर्थो न विशेष्यते । यथोदाहरिष्यते । अग्निष्टोमयाजीपुत्रोऽस्य जनितेति तत् कथं बहूनां विशेषणविशेष्यभावलक्षणः सम्बन्धो यथोच्यते – धातूनां सम्बन्ध इति । अत्रोच्यते—नेहोदाहरणमादरणीयम्, विशेष्यस्य प्रधानीभूतस्यानेकविशेषणसम्बन्धस्यापि दर्शनात्, यथोदाहरति । अग्निष्टोमयाजी, गोमानस्य पुत्रो जनितेति । अत्र हि धात्वर्थो यज्यर्थेन मत्वर्थेनास्तीत्यनेन च विशेष्यत इति युज्यते । धातूनां सम्बन्धो धातुसम्बन्ध इति यद्येवम्, अग्निष्टोमयाजी पुत्रोऽस्य जनितेति, अत्र साधुत्वमसङ्गतम् । नायं दोषः, उत्तरा हि सङ्ख्या पूर्वां सङ्ख्यामन्तर्भाव्य वर्तते । तेन सत्यपि बहुवचनान्तस्य धातुशब्दस्य विग्रहे समासपदम् अनेकत्वसामान्यावगमकं पर्यवस्यतीति । द्वयोर्बहूनामपि परिग्रहः सिद्धो भवति । इह प्रत्ययग्रहणेन प्रत्ययसामान्यावधारितप्रत्ययविशेषमुपात्तमतो नापूर्व एव

४. ४।५।११२ (दु० वृ०)
१. ४।५।१२३ (दु० वृ०)

प्रत्ययाः केचिदिति विधित्सिताः येन विध्यर्थमिदं सूत्रमिति यो मन्यते तं प्रत्याह—साधुत्वाख्यानार्थमिति । यथा प्रदेशमाख्यातानामपि प्रत्ययानां कालभेदे सति धातुसम्बन्धे यदि साधुत्वं प्राप्तं तदुपमर्देन साधुत्वस्यान्वाख्यानार्थं सूत्रमिदमारभ्यते । तदावेदनप्रवणत्वादस्य शास्त्रस्य धातुशब्दोऽत्र धात्वर्थे वर्तते इति कथं पुनर्मुख्ये धात्वादौ वर्तमानो धातुशब्दो धात्वर्थे वर्तयितुं शक्यत इति, उपचारात् । ननूपचारव्यवहारोऽयं सर्वस्य सर्वत्र उपचारो मा भूदिति मुख्यार्थबाधया निमित्तेन प्रयोजनेन च दृश्यते । यथा–सिंहो माणवक इति । अत्र माणवकः सिंहो न भवतीति मुख्यार्थबाधो तावत् प्रयोजनमपि शौर्यातिशय प्रतिपादनम् । नहि शूरो माणवक इत्युक्ते शौर्यातिशयः प्रतीयते । यदि हि का मुख्यार्थबाधा, किं वा निमित्तं प्रयोजनमपि । किं येनोपचारः स्यात् । उच्यते—स्वार्थप्रतिपादनपरवशीकृतवृत्तीनां शब्दात्मकानां धातूनां परस्परेण सम्बन्धोऽनुपपन्न इति । मुख्यार्थे तावदस्त्येव बाधः, वाच्यवाचकभावलक्षणसम्बन्धनिमित्तम् । अर्थशब्दप्रयोगविनिवारणेन च लघिमा प्रयोजनमनाश्रिते उपचारे धात्वर्थसम्बन्ध इति वक्तुं युक्तः स्यात् । तस्मान्नित्यसन्निपातादुपचाराश्रयणेन युक्ता धातुशब्दस्य धात्वर्थे वृत्तिः । ननु साध्यैकस्वभावत्वात् साधनपरत्ववशानां धात्वर्थानामप्यनुपपन्न एव सम्बन्ध इत्याशङ्क्याह—विशेषणविशेष्यभावलक्षण इति । अयमत्रार्थः—धात्वर्थानां सम्बन्धानुपपत्तावप्यग्निष्टोमयाजीत्येवमादिपदवाच्यसाधनसमवेता या क्रिया सा क्रियान्तरं स्वाश्रयसाधनमुखेन विशिनष्टीति न किञ्चिदवद्यम् । कृतसंज्ञका इति प्राकरणिकेन रूपेण तदुक्तम्, अन्यथा प्रत्ययग्रहणेऽत्र प्रकरणान्तरविहितप्रत्ययपरिग्रहार्थे सति कथमेतत् वक्तुमुचितं स्यात् । भिन्नकालविहित इति । एतेन साधुत्वप्राप्तेर्निमित्तं दर्शयति । धातुसम्बन्धे सति धातव इति यथोपात्तकालपरिहारेण कालान्तरेऽपि प्रत्ययानां साधुत्वं भवतीत्यर्थः । अथ कुत एतदवसितम्, यत् काललक्षणधात्वर्थोपाधिव्यभिचारेण प्रत्ययानां साधुत्वमिति यथेष्टमपि प्रयुज्यमानाः प्रत्ययाः साधवो भवन्तीति कस्मान्न विज्ञायते । तच्च यतो विहिता यस्मिंश्च प्रत्ययार्थे काले च ततो अन्यतो अन्यस्मिंश्च प्रत्ययार्थे काले भवेयुरिति [1]सर्वसाधुत्वं प्राप्नोति, नैतत् एवं हि विज्ञायमाने सति तत्र-तत्र प्रत्ययविधानावसरे प्रकृतिविशेषस्यार्थस्य विशेषस्य चोपादानमनर्थकं स्यात् अथवा नानिष्टार्थशास्त्रप्रक्लृप्तिरिति वचनात् काललक्षणधात्वर्थोपाधिव्यभिचारेणैव [2]प्रत्येकस्य साधुत्वमिह विज्ञायते न तु प्रकृतेः । प्रकृतिप्रत्ययार्थव्यभिचारेण । जनितेति । जनेर्भविष्यति काले श्वस्तनीति भविष्यति ।

---

१. सर्वसाङ्कर्यं (?)

२. प्रत्ययस्य (?)

भविष्यन्त्याशीश्श्वस्तन्य इति वचनात् अथाग्निष्टोमयाजीति । यथैतदपास्य स्वकालं जनितेऽन्यस्य कालमवलम्बते, तद्वत् जनितेत्येतन्निजकालपरिहारेण विशेषस्य कालं कथमिव नावलम्बते । अथोच्यते विशेष्यमुपकार्यत्वात् प्रधानम्, न च प्रधानस्य गुणकालावलम्बनमुचितम्, प्राधान्यार्थानि प्रसङ्गात् विशेषणं तूपकारकत्वाद् गुणभूतं सत् प्रधानकालमदपेक्षत एवेति । तदेतदेव तावन्न विद्मः किमत्र विशेषणं किं वा विशेष्यमिति । जनितेत्येतद्विशेषणमग्निष्टोमयाजी-त्येतत् तु विशेष्यमिति वैपरीत्येनापि विशेषणविशेष्यभावः कुतो न भवतीत्य-भिप्रायेणाह—नन्वित्यादि । अत्रोच्यत इत्यादिना परिहारमाह—न भवति वैपरीत्येन विशेषणविशेष्यभावः । यतो जनितेत्येतदेवाख्यातपदमत्र विशेष्यं प्रधानत्वात्, प्राधान्ये तु तस्य क्रियाप्रधानमाख्यातमिति स्मरणात् । तथा देव-दत्तः तु काष्ठे स्थाल्यामोदनं पचतीति वाक्ये पचिक्रियैव प्रधानम्, तया विना च कारणमसत्कल्पत्वात् । अग्निष्टोमयाजीत्येतत् तु कृत्पदं विशेषणम् । कृतो हि प्रत्ययाः कर्तरि विधीयन्ते, कर्ता यां क्रियां प्रति परतन्त्रः ततः तमर्थमाच-क्षाणं कृत्पदं विशेषणम् । अतोऽवस्थिते एवं रूपे विशेषणविशेष्यभावे युक्ता कृत्पदस्य प्रधानकालबाधनं प्रत्यपेक्षा इह प्रत्यय-ग्रहणेन च कृदधिकारात् कृत्-ग्रहणं लभ्यत इति कृद्ग्रहणेनापि किं कृतमिति वाच्यम्, कृदधिकारस्य विशे-षापेक्षिणोऽत्राभिसम्बन्धमशक्यत्वादित्याह— कृद्ग्रहणे कर्तव्य इत्यादि । गोमानिति । वर्तमाने काले मन्तुरिति, तदस्यास्तीत्यादिना वर्तमानकालमस्ति इत्युपादाय मन्तुप्रत्ययविधानात् भूते भविष्यति च प्रत्यय इति । भूते तावत्-भूतकरणवत्यश्चेति वचनात् भविष्यत्यपि भविष्यति भविष्यन्त्याशीश्श्व-स्तन्य इति । ननु प्रकरणान्तरविहितप्रत्ययपरिग्रहणस्य न प्रयोजनमुचितम्, यतो गोमानासीदित्यादौ मन्तुप्रत्ययो वर्तमानमेव कालमाचष्टे तत्र गोसत्ताया वर्तमानत्वे गोस्वामिसत्ता ज्यायसीत्यादिना अतीतत्वे भावित्वे वा प्रतिपाद्य-स्यानेक इव विरोधः स्यात् । अयं हि गोमानासीदित्यादावर्थे वर्तमानगोसत्ता सम्बन्धी देवदत्त आसीद् भविता वेति । एवं च यथाकालं मन्त्वादिप्रत्ययानां विधानाद्विरोधाभावात् साधुत्वस्याप्रसङ्गात् । नार्थः प्रत्ययग्रहणेन । एवं तर्हि सूत्रमेवेदमनारम्भणीयमिति कोऽपराधः प्रत्ययग्रहणस्य । तथा ह्यग्निष्टोम-याजीत्ययमतीत एव काले साधुः । जनिष्यमाणस्य तु पुंसः एष भावितया व्यपदेशः । तथा ह्ययमत्रार्थः, सोऽस्य पुत्रो जनिता यो जातः सन् अग्निष्टो-मेनेष्ट्वा अग्निष्टोमयाजीति व्यपदेशं लब्ध इति, अतोऽस्त्यप्रधानस्य पदस्य सामानाधिकरण्यम्, यथा अस्योपपत्त्या भाव्यवस्थाशंसित्वमाश्रीयत इति प्रयोजनाभावात् सूत्रमिदमनारम्भणीयमेव । आरम्भेण भाविकृतासीदित्यत्र प्रत्युतासम्बद्धार्थः स्यात् तथा ह्यत्र विशेषणभूतेन भाव्यर्थेन विशेष्यभूते आख्यात-

पदवाच्यो विशेष्यत इति विशेषणस्य विशेष्यानुरोधात् कालतापत्तेः कृत्य-भूतमासीदित्यर्थः स्यात्। ततश्चास्यार्थस्य पौनरुक्त्या सम्बद्धार्थत्वमत्र केन विनिवार्येत, अनारम्भे तु न कश्चिद् दोषो भावित्वावस्थाया एवासीदित्यनेनातीतत्वाख्यानात्। तथा ह्ययमत्रार्थः, यदिदं कृत्यं प्रस्तुतं तत्पूर्वं भाव्यासीदिति। अवश्यञ्च यत् सम्प्रति वक्तुमारब्धं तत्पूर्वमनागतत्वाद् भावि भवति भावितावस्था इदानीमतीता सम्पद्यते तेन पूर्वं भाविनोऽर्थस्य सम्प्रति अतीतत्वेनाख्यानान्नेदं वक्तुं युज्यते भावि कृत्यमासीदिति। तदुक्तं भगवता व्यासेन "युगसहस्रेषु भविष्यद..........पन्नं, का कथा मरणावधेरिति" तस्मादनारम्भः श्रेयानित्यबुधबोधनार्थमिदमारभ्यते। यो भूतभविष्यत्कालयोरस्य सम्बन्धं मन्यमानो दशदाडिमादिप्रत्याख्यातमग्निष्टोमयाजीत्यादेरवबुध्यते, तान्बोधयितुं सूत्रमिदमारभ्यते।

**अलंखल्वोः प्रतिषेधयोः क्त्वा वा** [१]४।६।२

प्रतिषेधवाचिनोरिति। एतेनाप्रतिषेधवाचित्वादलंखलुशब्दाविह प्रतिशब्देनोक्ताविति दर्शयति। अलंकृत्वेत्यादि। भावे क्त्वा-प्रत्ययः, अव्ययकृतो भावे भवन्तीति वचनात्। तस्य तेन समास इत्युपपदसमासः तु न भवति, नाव्ययेनानमेति प्रतिषेधः। प्रकृत्यादित्वादिति। प्रकृत्यादिभ्यस्तृतीया वक्तव्येति वचनात्। मा कार्षीरिति। अद्यतनी, सि, सिच् परस्मायिति वृद्धिः। स्त्र्यधिकारं परं नास्ति, वासरूपविधिरिति वा ग्रहणं क्रियते।

**एककर्तृकयोः पूर्वकाले** [२]४।६।३

एककर्तृकयोः धात्वर्थयोरिति। धातोः प्रत्ययविधानात् तदर्थस्यान्यपदार्थत्वं लभ्यते। अधिकरणे चैषा षष्ठी निर्धारणे चात्र पौर्वकाल्येन गुणेन। इह च पूर्वकाल इति धातोरभिधेयद्वारेण विशेषणम्। पीत्वा शेते इति। दामा गायतीत्यादिना ईत्वम्। ननु अत्र पूर्वकालोत्तरकालसाध्यायां क्रियायां शक्तिर्भिन्ना, सा च कारकमतः तद्भेदात्, यथा ...... कर्तृत्वं स्यात्। अस्त्येतत्, शक्तिः तदाधारयोस्तु भेदो न विवक्ष्यते, तेन शक्त्याधारात् देवदत्त एव कर्ता, स च क्रियाद्वयेऽप्येक एवेति। तदपेक्ष्यैकर्तृकत्वम्। एककर्तृकयोरिति। द्वित्वनिर्देशस्यातन्त्रत्वाद् बहुष्वपि धात्वर्थेषु भवति। स्नात्वा भुक्त्वा पीत्वा व्रजति। न च स्नानादिक्रियाणामुत्तरोत्तरक्रियापेक्षं पौर्वकाल्यमस्तीति किं द्वित्वनिर्देशस्यातन्त्रत्वकथनेनेति वाच्यं, यतो व्रजतीति, अस्य आख्यातवाच्यायाः क्रियाया विशेष्यत्वात् प्राधान्यमिति तां प्रति

---

१. ४।६।१ (दु० वृ०)
२. ४।६।३ (दु० वृ०)

सर्वासां स्नानादिक्रियाणां विशेषणत्वम् । न च विशेषणानां परार्थानां विशेषोन्मुखानां परस्परेण सम्बन्धो घटते तत्कथमुत्तरोत्तरक्रियापेक्षत्वमत्र पौर्वकाल्यम् स्यात् । इह कथं भिन्नकर्तृकत्वे क्त्वाप्रत्ययः । प्रियं दृष्ट्वा सुखं भवतीति । अत्र हि दर्शने देवदत्तः कर्ता भवने तु सुखं, कृत्ययुटोऽन्यत्रापीति वचनात् भविष्यति, यद्वा सुखं भवतीति अस्य सुखमनुभवतीत्ययमर्थोऽन्यथा ह्यनुभूयमानतामन्तरेण स्वसंवेद्यरूपस्य भवनक्रियायां केवलं कर्तृता स्यात् । पचति पठति चेति । यौगपद्यमत्र क्रिययोर्विवक्षितम्, न तु पौर्वकाल्यम्, यद्येवम्, व्यादाय स्वपिति, सम्मील्य हसतीत्यत्र न प्राप्नोति, व्यादानसम्मीलनयोरपूर्वकालत्वात् । पौर्वकाल्यमिह स्वापहासयोः प्रसिद्धं न तु व्यादानसम्मीलनयोः । अस्त्येतत्, व्यादानसम्मीलनोत्तरकालभाविनस्तु ये स्वापहासक्रियावयवाः तदपेक्षे व्यादानसम्मीलनयोः पौर्वकाल्यमस्त्येव, सम्मील्येति हि भिन्नत्वात् क्त्वा प्रत्ययः । इह तर्हि अपूर्वकालत्वान्न प्राप्नोति । [1]अपमाय याचते अपमित्य याचते इति पूर्वं ह्यसौ याचते पश्चादपमयते, सत्यम् । अत्राप्यन्यत्रापीति वचनाद् भविष्यति । पक्षे यथाप्राप्तमपि भवति याचित्वा अपमयत इति । अथ यदा अपमयतेः प्रत्ययः तदा याचेः कस्मान्न भवति, येन नाप्राप्तिन्यायेन याचिप्रत्ययस्य बाधनात् । यद्वाक्यात् तस्य स्वतो नाभिव्यक्त्या क्रियाकारकस्य क्रमत्वात् । समाधानं क्रियावाचिपदान्तरापेक्षायां सत्यां यदि पुनः क्त्वा-प्रत्ययः स्यात् ततः क्रियाकारकस्वरूपानभिव्यक्तेः प्रतीतिः । विश्राम्येदिति तृतीयेन साधनक्रियावाचि पदान्तरापेक्षस्य तथाविधे तु पदे प्रयुक्षिते सति भवत्येव याचेः क्त्वा-प्रत्ययः । परमिति । अयाचित्वात् तङ्कुः इति । अपमित्य अपमामेति सेट् प्रणिधानं मयतेरिदन्यतरस्यामिति लोकोपचाराद् वैकल्पिकमिदम् ।

**परावरयोगे [2]४।६।४**

तयोर्योग इति परावरयोग इति, परावरशब्दयोः सम्बन्धिशब्दत्वात् । प्रतियोगिनो निर्देशेऽपि पूर्वापराभ्यामेवार्थाक्षिप्ताभ्यां योगो विज्ञायत इत्याह— परस्यावरेण योग इत्यादि । अपरेण पर्वतेन परस्य नद्या योग इति कथम्, उच्यते - इह योगः सम्बन्धः, स च विशेषणविशेष्यभावलक्षणः, तेनावरं यत्र परस्य विशेषणं भवति तत्र प्रत्ययः । अतिक्रम्य पर्वतं नदीत्यत्र च पूर्वभूतेन पर्वतेन परभूतायाः नद्याः सम्बन्धः तथा चासौ विशेष्यत्वात् प्राधान्याद् भवमान विभक्त्या प्रथमया निर्दिष्टा, पूर्वस्तु विशेषणत्वादप्राधान्याद् भूत-

---

१. अस्पष्टोऽयमंशः ।

२. दुर्गवृत्तावप्येवमेव क्रमाङ्कितम् ।

विभक्त्या द्वितीयया, तेनायं पूर्वेण परस्य योगः। इत्थमप्राप्य नदीं पर्वतः इत्यत्र परेणावरस्य योगः मन्तव्यः।

**णं चाभीक्ष्ण्ये द्विश्च पदम्** [1]४।६।५

अभीक्ष्णमित्यस्य भाव आभीक्ष्ण्यम्। यणि कृते प्रकीर्तितग्रहणादन्त्यस्वरादिलोपः द्वौ वारौ द्विरिति। तसादित्वाद् ड-प्रत्ययः। धात्वर्थे आभीक्ष्ण्यविशिष्टेषु वर्तमानाद् धातोरिति। एतेनाभीक्ष्ण्यं पौनःपुन्यं धात्वर्थस्य विशेषणमिति दर्शयति। पायं पायं शेते इति। आमिरिच्यादत्र नामित्यामिरादेशः। यदयं भुङ्क्ते ततः पठतीत्यादौ तु न भवति आभीक्ष्ण्याभावात् क्त्वा-प्रत्ययः तर्हि पौर्वकाल्ये कस्मान्न भवति, यत् तद्भ्यां तस्य प्रतिपादितत्वात्। यत्र तु तदन्येन प्रतिपादितं न भवति भवत्येव तत्र क्त्वा-प्रत्ययः। यथा यदयं भुक्त्वा व्रजत्यधीते ततः परमित्यत्र, यत्र हि यत्तद्भ्यां व्रजनाध्ययनविषयं पौर्वकाल्यं प्रतिपादितं न तु भोजनव्रजनविषयं तथा च भुजेः क्त्वा-प्रत्ययो भवति। यदि तर्हि अन्येन प्रतिपादितपौर्वकाल्ये क्त्वाप्रत्ययो न भवति तर्ह्यग्रे प्रथमपूर्वशब्दैर्यत्र पौर्वकाल्यं प्रतिपादितं तत्रासौ न प्राप्नोति। पूर्वं भुक्त्वा व्रजति इति। णं प्रत्ययोऽप्यत्रेष्यमाणो न प्राप्नोति, आभीक्ष्ण्याभावात्। अस्त्वेतत्, पूर्वसूत्रात् तु चकारो अनुवर्तिष्यते, तेनाग्रादिषु क्त्वाणमौ भविष्यतः। एवं चाग्रभोजनं व्रजतीत्याद्यपि भवति। अथ अत्रोपपदसमासः कस्मान्न भवति, नाव्ययेनानमेति प्रतिषेधात्। अनमेति च निषेधो नञा निर्दिष्टः, नित्यत्वात् क्त्वा न प्रवर्तते। नन्वित्यादि चोद्यम्, एवं तर्हीत्यादिना परिहरति। अन्यत्रेति, आभीक्ष्ण्यात्। वीप्सायामिति व्याप्तुमिच्छायाम्। पदस्येति क्त्वा णमन्तात् पदादन्त्यस्य सामीप्यस्याविवक्षितत्वाद् इति। आतुर्यमात्रं ह्यतो विवक्षितम्, न तु सामीप्यमित्यर्थः। इत्थमन्यत्रापीति। तेन चापले द्विर्भावः, अहरहः बुध्यस्व बुध्यस्वेति।

**कर्मण्याक्रोशे कृञः च खमुञ्** [2]४।६।६

करोतिरिहोच्चारणे वर्तते इति। अनेकार्थत्वात् तथा च मुण्डनेऽप्यसौ वर्तते यथा कृतश्मश्रुरपि पुनः श्मश्रूणि कारयति। स्थापनेऽपि वर्तते, हस्ते कुर्विति। यद्येवम्, धातूनां किमर्थप्रदर्शनेन, क्रियावाचित्वप्रदर्शनार्थं तदित्यदोषः। अन्ये त्वध्यारोपार्थवृत्तित्वं करोतेरिह वर्णयन्ति, तेन चौरंकारमाक्रोशतीत्यत्रा-

---

१. दुर्गवृत्तावप्येवमेव क्रमाङ्कितम्।

२. ४।६।७ (दु० वृ०)

यमर्थः । अचौरं चौरमध्यारोप्य चौरत्वमस्याध्यारोप्याक्रोशतीति ।

**स्वादौ च** [1]४।६।७

स्वादाविति स्वाद्वर्थः शब्दो गृह्यत इति अविच्छिन्नपारम्पर्यादाचार्योपदेशाद् यन्निर्देशस्यार्थपरत्वं भवतः, ते च स्वादौ स्वाद्वर्थ उपपदे प्रत्ययः । न चार्थस्योपपदत्वं सम्भवतीति सामर्थ्यात् तदर्थवाचिनां सम्पन्नादिशब्दानामुपपदत्वं विज्ञायते । तदेतदाह—स्वाद्वर्थ उपपद इति स्वाद्वर्थस्य वाचकशब्द उपपद इत्यर्थः एवं सर्वेषु अर्थनिर्देशेषु वाच्यम् ।

स्वादुं [2]............

[3].......... या

या। कर्तृवाच्ये देवदत्तादिपदमत्र प्रयुज्यते तदा तत् किं विभक्त्यन्तं प्रयुज्यताम्, प्रथमाविभक्त्या तुम्, कर्तरि तृतीया । ततो न भवति भुजिप्रत्ययेन कर्तुरभिहितत्वात् । ननु खमुञादिभिः न कर्तेति कस्मान्नोच्यते, अशक्यमेवं वक्तुम्, अव्ययकृतो भावे भवति इति हि भावे खमुञ् प्रत्ययो विधीयते । [4]शनु शक्तः, कर्तृत्वमन्या च करणशक्तिरन्या च । भुजिविषयायां शक्तावभिहितायामपि करणशक्तेरनभिहितत्वात् तदभिधानाय देवदत्तात् तृतीया स्यात् । नैष दोषः, प्रधानशक्त्यभिधाने सति गुणक्रियाशक्तेरनभिहितत्वात् तदभिधानाय देवदत्तादेव प्रकाशनात्, तथा चौदनः पक्त्वा भुज्यते इति पचिक्रियागता कर्मशक्तिर्भुजिक्रियाशक्त्यभिधाने सत्यभिहिते वावभासते । ततो न भवत्योदनात् द्वितीया । एवं देवदत्तादपि तृतीया न प्रवर्तते । अथ करणशक्तेर्भुजिशक्तेश्च किं कृतो गुणप्रधानभावः, क्रियाकृतः । स्वादुकरणं हि भुजिक्रियार्थम् । क्रियायाश्चेद् गुणप्रधानभावः कर्तृशक्त्योरपि तद्विषयत्वादसावस्त्येव, वेत्यपेक्षत इति । अलंखल्वोरित्यतः । द्विविषये स्त्रीविषये च खमुञ् नेष्यत इति वा शब्दस्यापेक्षितस्य व्यवस्थितविभाषात्वेन विज्ञानात् । द्विविषयः स पुनरभूततद्भावः । स्वादुकृत्वा पयो भुङ्क्ते । इति अस्वादु स्वादुकृत्वेति स्वादुशब्दाच्च्विप्रत्ययः । च्वौ चेति लोकोपचाराद् दीर्घः । दीर्घी भवतीति निर्देशाच्च्वेर्लोपः । नाव्ययेनानमेति समासनिषेधः । अनर्थकप्रयोग इति प्रयोजनाभावान्नैरर्थक्यं प्रयोगस्य तदेव तथा हीत्यादिना व्याचष्टे । यद्येवम्, अवगता-

---

१. ४।६।८ (दु० वृ०)

२. इतोऽग्रे त्रुटितो पाठः ।

३. अस्य न्यासव्याख्यानस्य प्रारम्भिको अंशः अनुपलब्धोऽस्ति ।

४. अस्पष्टोऽयमंशः ।

र्थस्य करोतेः प्रयोगो न प्राप्नोति, अवगतार्थस्यापि प्रयोगो दृश्यत एव। यथा द्वावपूपावानयेति द्विशब्दस्य।

**चर्मोदरयोः पूरेः** [1]४।६।८

पूरेः इन्नन्तादिति। कुतः, कर्मणि प्रवृत्तेः। अन्निन्तस्य चास्याकर्मकत्वात्कर्मोपपदं न सम्भवत्येवमिन्नन्तस्य तु सम्भवत्यपि धातव इन्नन्तात्सकर्मकाः भवन्तीति।

**वर्षप्रमाण ऊलोपश्च वा** [2]४।६।९

वर्षप्रमाणः गम्यमान इति। समुदायेन तस्य ऊकारलोप इति। तस्येति। पूरेः, कुत एतत्, ऊकारः पूरेरेव सूत्रे उपलभ्यमानत्वात्। तेन मूषकबिलपूरं दृष्टो देव इत्यत्रोपद ऊकारलोपो न भवति।

**चेलार्थे क्नोपेः** [3]४।६।१०

अर्थग्रहणं विस्पष्टार्थम्। निर्देशस्यार्थपरत्वादेव अर्थग्रहणं लभ्यत एव, यथा स्वादौ चेत्यत्र।

**हन्तेः करणे** [4]४।६।११

वचनं हिंसार्थ एव धात्वर्थो ग्रहणम्। घातं, भूमिं हन्तीत्यहिंसाविषयत्वेनोदाहृतम्। हिंसार्थोऽप्ययमारम्भः। तत्कथं यावता हिंसार्थाद् धातोः परत्वात् तेनैव प्रत्ययः प्राप्नोति। परमशब्दस्येष्टवाचित्वादनेनैव भविष्यति। एवं च सत्ययमनुप्रयोगनियमः सिद्धो भवति। हिंसार्थादित्यादिना तु सिद्धौ सत्यां धात्वन्तस्याप्यनुप्रयोगो भवेत्। कषादित्वाभावात् नित्यसमासश्च सिद्धो भवति। तस्य तेन समास इति। इतरथा तु तृतीयादीनां वेति समासविकल्पो भवेत्।

**स्वार्थे पुषः** [5]४।६।१२

स्वार्थे वा विधिः, करण उपपद इति। आत्मात्मीयज्ञातिधनवचनः स्वशब्दः। तत्र स्वपोषमित्यात्मवाचिन्युपपदे प्रत्ययः। गोपोषमित्यात्मीयवाचिनि,

---

१. ४।६।१३ (दु० वृ०)
२. ४।६।१४ (दु० वृ०)
३. ४।६।१५ (दु० वृ०)
४. ४।३।२१ (दु० वृ०)
५. ४।६।२३ (दु० वृ०)

पितृपोषमिति ज्ञातिवाचिनि, रैपोषमिति धनवाचिनि ।

**कषादिषु तैरेवानुप्रयोगः** [1]४।६।१३

अनुप्रयोगो नियम्यमानः कषादिष्विति विषयनिर्देशः तेनैवेति हेतौ तृतीया । णमन्तस्येतीत्यादिना योगारम्भस्य प्रयोजनमाचष्टे । इहार्थविगत्यर्थमनुशब्दस्य प्रयोगः । न च असत्यनुप्रयोगे निमूलकाषमित्येतावतो णमन्ताच्छब्दात्क्वचिदर्थोऽवगम्यते । ततोऽर्थावगमायानुगमायानुप्रयोगः सिद्धः, स तु धात्वन्तव्यावृत्त्या णं प्रकृतेरेव विधातव्यः ततो नियमार्थं वचनमिदमारभ्यते इति णमिनानुप्रयुज्यत इति । तदनुप्रयोगेऽपि णमन्तादर्थोऽवगम्यत इति तस्य प्रयोगो विनिवार्यते ।

**तृतीयायामुपदंशे** [2]४।६।१४

मूलकेनोपदंशं भुङ्क्त इति मूलकेनेति करण एषा तृतीया, न तु भुजेः । तत् करणं नोपदेशः । तस्य हि तत् कर्म भवति उपदिश्यमानत्वात् । भुजिं प्रति च तस्य करणभावे सत्युपपदसंज्ञा न प्राप्नोति । सत्यम् । भुजिं प्रति करणभावे सत्युपदंशिना सह तस्य सम्बन्धार्थत्वम् अस्त्येव, कर्मरूपत्वात् । न च भुजिसम्बन्धे सत्युपदंशसम्बन्धोऽस्य विनिवर्तते । विरोधाभावात् । करणरूपतया नास्ति सम्बन्ध इति चेत् मा भूत् तथा सम्बन्धः करणं तावद् भवति सम्बध्यमानार्थत्वं चोपदंशिना सहास्त्येवेति युक्तः उपदंशे प्रत्ययः ।

**हिंसार्थाच्चैककर्मकात्** [3]४।६।१५

हिंसा अर्थो यस्य सः हिंसार्थः । एकं कर्म यस्य स एककर्मकः, ककारस्समासः । अनुप्रयुज्यमानेन धातुना एककर्मकादिति प्रत्यासत्तेरेतल्लभ्यते । दण्डताडमिति । तड आघाते चौरादिकः ।

**सप्तम्यां च प्रमाणासत्त्योः** [4]४।६।१६

सदेराङ्पूर्वादासदनमासत्तिरिति क्तिप्रत्ययः । प्रमाणमायामः इति । आयामो दैर्घ्यम् । आसत्तिस्सन्निकर्षः सन्निकर्षः प्रत्यासत्तिः । द्व्यङ्गुलोत्कर्षं इति । द्वयोरङ्गुल्योस्समाहारः द्व्यङ्गुलम् । अकारस्समासान्तः ।

---

१. ४।६।३० (दु० वृ०)
२. ४।६।३१ ,,
३. ४।६।३२ ,,
४. ४।६।३३ ,,

**उपपीडरुधकर्षश्च** [1]४।६।१७

पार्श्वोपपीडमिति । पीड अवगाहने चौरादिकः ।

**द्वितीयायां च** [2]४।६।१८

योगविभागः उत्तरार्थः ।

**स्वाङ्गेऽध्रुवे** [3]४।६।१९

ध्रु गतिस्थैर्ययोः । पचादित्वादच् । कुटादित्वादगुणत्वम् । स्वरादाविवर्णेत्युवादेशः । न ध्रुवम् अध्रुवम् । नञ्-प्रश्लेषो व्याख्यानात् स्वाङ्गमद्रवं मूर्तिमदित्येतत् गृह्यते, न तु स्वमङ्गं स्वाङ्गमिति । उभयपक्षसम्भवः, इष्टपक्षपरिग्रहात् । [4]यद्येवमित्यादि । विपाटित उरसि प्राणिनः पञ्चत्वापत्तेः कारणत्वमुरसो नास्तीति विषेर्णम् प्रत्ययो न सिद्ध्यतीति मन्यमानस्य प्रश्नः । [5]विध्यादिक्रियाभिरिति । आदिना शब्देन पतनादिक्रियाणां ग्रहणम् । प्रपादानामिति गेहादीनाम् । आसेवः । आभीक्ष्ण्यमिति पौनःपुन्यम् । इत्यत्र । ननु णमन्त एव शब्दो व्याप्तिमासेवां च प्रापयतीति कस्मै प्रयोजनाय । गेहं गेहमिति । आदिद्विर्वचनं कृतमित्याशङ्क्याह—प्राप्त्यामेव । इत्यादि । तत्र कस्य व्याप्तौ द्विर्वचनम्, आसेवायां वा कस्येति विषयविभागमाह—तत्रेत्यादि । गेहस्थद्विर्वचनमिति । द्विश्च पदमिति वचनात् । व्याप्तौ द्रव्यवाचिनो गेहस्य द्विर्वचनमित्यत्र हेतुमाह—सा हीत्यादि । सा यस्माद् व्याप्तिर्श्रव्यस्य सिद्धरूपस्य सम्भवति न त्वसिद्धरूपायाः क्रियायाः तस्माद् व्याप्तौ द्रव्यवाचिनो गेहस्य द्विर्वचनम् । आसेवा तु पुनः पुनः करणं क्रियायाः साध्यैकस्वभावायाः एव भवति न तु सिद्धस्वभावस्य द्रव्यस्येति तस्यां क्रियावाचिनोऽनुपूर्वे शसादयो द्विरुच्यन्ते । यद्येवम्, गेहानुप्रवेशमास्त इति, अत्र द्विरुक्तौ कस्मान्न भवतीत्याह—यदा त्वित्यादि । कथमित्यादि व्याप्त्यासेवयोरर्थयोस्समासस्य विधानात् कथं तेन ते वक्तुं शक्यत इति भावः । परिहारमाह—अभिधानशक्तिस्वाभाव्यादिति । शब्देनार्थाभिधानस्य स्वाभाविकत्वादित्यर्थः न त्वासेवायां णं प्रत्ययस्सिद्ध इति किं तत्र णमो विधानेन । क्त्वा-निवृत्त्यर्थं तदिति चेत्, न । इष्टत्वादाभीक्ष्ण्ये क्त्वा-प्रत्ययस्य । गेहमनुप्रविश्यानुप्रविश्यास्ते इति

---

१. ४।६।३४

२. ४।६।३६

३. ४।६।३७ (सर्वे दुर्गवृत्तौ)

४. इतोऽग्रे परिक्लिश्य इति सूत्रस्य तथा च ।

५. इतोऽग्रे विशपति इति सूत्रं स्यादस्ति ।

आभीक्ष्ण्यं चासेवैव । एवं तर्ह्युपपदसमासः पाक्षिको यथा स्यात् सेवायां पुनर्णं विधीयते ।

**तृष्यश्वोः क्रियान्तरे कालेषु [1]४।६।२०**

क्रियामन्तरयतीति क्रियान्तर इति । अन्तरशब्दादन्तर ईकारोऽस्तीति तत्करोतीत्यत्रार्थे इन्नन्तात् क्रियाशब्द उपपदे क्रियामन्तरयति व्यवधत्ते इति विगृहीते सति कर्मण्यणि प्रत्ययः । क्रियान्तरे क्रियाव्यवधायकमिति । एतेनान्तरशब्दोऽयमिह व्यवधानवचन इति दर्शयति । अभिधेयद्वारेणैतत् तृष्यश्वोर्विशेषणम् । तृष्यश्वोर्योऽर्थस्य चेत् क्रियां व्यवधत्ते ततः प्रत्ययः । द्व्यहं तर्षमिति द्वयोरह्नोस्समाहार इत्यकारस्समासान्तः, नस्य तु क्वचिदिति न लोपः, इवर्णावर्णलोपश्च । तर्षेनेनात्र पानक्रिया व्यवहितेति । अद्य पाययित्वा द्व्यहमतिक्रम्य पुनः पाययतीति इत्यर्थः । द्व्याहत्य इति द्व्यहमत्ययमस्येत्यर्थः । अहरभ्यस्येषून् गत इति अहरिति नपुंसकात् स्यमोरिति अमो लोपः । अह्नः स इति सत्वम्, अत्यस्येति क्त्वो यवादेशः । अत्रेत्यादि । यथा मूलोदाहरणे मध्यवस्यसनपानक्रियायाः व्यवधायकेन तथेह गते ।

**कृञोऽव्यये यथेष्टाख्याने क्त्वा च [2]४।६।२१**

यथेष्टमाख्यानं यथेष्टाख्यानमिति षष्ठीसमासः । उच्चैः कृत्वा तृतीयादीनां वेत्युपपद समास इति पाक्षिकः समासः । पक्षे क्त्वो यवादेशः । समासविकल्पार्थं क्त्वा-ग्रहणम्, अन्यथा तु विकल्पाधिकाराद् यथादर्शनम् तस्य सिद्धिरस्त्येव ।

**स्वाङ्गे तप्तिः [3]४।६।२२**

क्त्वाणमावनुवर्तेते इति । चानुकृष्टः पूर्वत्र णं प्रत्ययः कथमिहानुवर्तेत इति चेत्, न । चकारस्यैवात्रानुवृत्तेः । स चानुवर्तमाने णं प्रत्ययमुपस्थापयिष्यते वाचके संवाच्यं भवतीति न्यायात् । सर्वतः कृत्वेति । एककर्तृकयोरिति क्त्वा-प्रत्ययः । अव्ययग्रहणेनेति । पूर्वसूत्रादनुवर्तमानेन खमुञ्, कृत्वा गत इति[4] ।

---

१. ४।६।४० (दु० वृ०)
२. ४।६।४२ (दु० वृ०)
३. ४।६।४४ (दु० वृ०)
४. अपूर्णोऽयं प्रतिभाति ।

**तिर्यच्यपवर्गे** [1]४।६।२३

......तिर अञ्चतीति क्विप्प्रत्ययः। तिर्यच्युपपद इति। ननु तिरश्चीति भवितव्यः, तत् कोऽयं तिर्यचीति निर्देशः। अस्त्येतत्, तिरसस्तु तिर्यादेशे कृते यत्तिर्यच् इति रूपं तस्येदमनुकरणशब्दत्वाच्च शब्दान्तरात् तिरश्चादेशो न भवति। न च प्रकृतिवदनुकरणं भवतीत्येतदत्र प्रवर्तते, कुतः, अनुक्रियमाणं यत् तिर्यगिति शब्दरूपं तस्यानुपलब्धिप्रसङ्गात्। तिर्यक्कृत्वेति, अञ्चतौ क्विबन्ते परे सहसं तिरसामित्यादिना तिरसः तिरि भावः तिर्यक्कृत्वा लतां गत इति वक्रत्वमत्र वाच्यं न तु समाप्तिः।

**भुवस्तूष्णीमिति च** [2]४।६।२४

तूष्णीमिति लुप्तसप्तमीकमिति कालभावयोरित्यादिना विहितायाः सप्तम्याः आदिलोपः इत्यादिना लोपः। द्विधा कृत्वेति। द्वाभ्यां प्रकाराभ्यां द्विधा। संख्यायां धा-प्रत्ययो वक्तव्यः इति धा-प्रत्ययः। द्वैधं कृत्वेति। द्वित्रिभ्यां धाधमुणौ च वक्तव्याविति धमुण्-प्रत्ययः। एषूपपदेषु इति। नाना विना द्विधा द्वैधं शब्देषु इत्युदाहार्यमिति। आदिग्रहणेन विना कृत्वा विनाकृत्य विनाकरणम्, द्विधाकृत्वा द्विधाकृत्य द्विधाकरणमित्यादयो गृह्यन्ते। च-शब्दोऽन्वक्छब्द-उपपदेऽनुलोम्ये गम्यमाने भुवः क्त्वाणमोः प्रवृत्त्यर्थः। अन्वग्भूय अन्वग्भूत्वा, अन्वग्भावम्। अनुलोम्य इति किम्, अन्वग्भूत्वा तिष्ठति अन्तर्भूत्वेत्यर्थः।

**शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुम्** [3]४।६।२५

ननु वुण्तुमावित्यादिना शकादिषूपपदेषु तुम्प्रत्ययः। तत् किमर्थोऽयं योगारम्भः इत्याह--वुण्तुमावित्यादि। एतच्चाभ्युपगम्य वादेन परिहृतम्। नन्वत्र तुम्प्रत्ययस्यास्ति सिद्धिरक्रियार्थोपपदत्वात्। तथाहि शक्नोति भोक्तुमित्यादिषु त्रिष्वाद्येषूदाहरणेषु नोपपदस्य क्रियार्थत्वं गम्यते, किन्तर्हि, प्रावीण्यम्। ग्लायति भोक्तुमित्यत्र भोजने आसक्तिः। घट सहार्हेत्युपपदे योग्यतानभिक्रम्युपपदे भोजनस्य प्रथमावस्था, लभ्युपपदे अप्यप्रत्याख्यानम्। अस्त्यर्थेष्वपि सम्भवमात्रम्।

---

१. आरम्भकाले अपूर्णोऽयम् ४।६।४३ (दु० वृ०)

२. ४।६।६५ (दु० वृ०)

३. ३।४।६५ (पा० अ०) दुर्गवृत्तौ तु नास्त्यस्योल्लेखः।

**कर्तरि कृत्** [1]४।६।२६

अर्थादिशनार्थमिदम्। तत्र कर्ता अर्थ आदिश्यमानः कृतः प्रत्ययार्थादिशन-भाजः। एवमुत्तरत्राप्यवयवार्थो मन्तव्यः। यद्येवम्, कर्तुरस्य विधीयमानत्वा-दप्राधान्यमिति कर्ता कृतामिति सूत्रनिर्देशो न्याय्यः। सत्यम्। येषां तु कृतां कर्ता अर्थस्तस्मिन्नर्थेऽवश्यं········प्रत्यय····· इत्यलं लुक्वारणाय। कर्तरीति सप्तम्या निर्देशः। एवमुत्तरेष्वप्यर्थादिशनेषु वाच्यं स्वार्थनिवृत्त्यर्थो-ऽयमारम्भ इति कथं पुनस्स्वार्थकृता प्रवृत्तिस्स्यादित्याह—अनिर्दिष्टा इति स्वार्थ इति प्रकृत्यर्थम्। यदि तर्हि कृतः कर्तरि विधीयन्ते ततः ल्युडपि कृत्वात् कर्तरि प्राप्नोति। करणे स विधीयत इति चेत्, विधीयताम्। कृत्वा तु कर्त-र्यपि प्राप्नोति। यद्यपि चकारद्वय एकप्रतीतये युगपन्न सम्भवति। तथापि पर्यायं न तस्य प्रवृत्तिं को निवारयेदित्याशङ्क्याह—येषामित्यादि। अयमर्थो नानेन विहितानां कृतां पश्चादर्थ आदिश्यते येन ल्युटापि विहितस्यायमर्थ-निर्देशः स्यात्। किं तर्ह्येकवाक्यतया वुण्तृचौ कर्तरि कर्मणि आत् कर्तरीत्येवं कर्तरि कृतोऽनेन विधीयन्ते, एवञ्च तैस्तैः ल्युट् प्रत्ययैरेकवाच्यतयावष्टब्ध-मिदमर्थादिशनवाक्यं स्वातन्त्र्येण कृतानार्थविदनाय प्रभवतीति कथं ल्युटोऽर्थ-मनपेक्षमाणस्य वा निमित्तं कर्तरि समर्पयेत्, तदेवं येषां प्रत्ययानामयं विषय आकाङ्क्षते तेषामेवेदमेकवाक्यतया सम्बध्यते नान्येषामर्थं प्रति निराकाङ्-क्षाणामिति ल्युट् करणेऽर्थे विहितः कर्तरि न भवति।

**भावकर्मणोः कृत्यक्तखलर्थाः** [2]४।६।२७

खल इव अर्थो विषयो यस्य स खलर्थः इति। तेनार्थशब्दोऽयमिह विषय-वाचीति दर्शयति। तेन यत्र विषये खल्-प्रत्यय उक्तः तत्र योऽन्यः प्रत्ययो विहितः तत् खलर्थ उच्यते। तेनार्थग्रहणादातो युः दरिद्रातेरित्यस्य यु-प्रत्य-यस्य ग्रहणं सिद्धं भवति। यद्येवम्, उपलक्षणत्वात् खलो भावकर्मणोः वृत्तिर्न स्यात्। नैतत्, उपलक्षणमपि क्वचित् कार्येण युज्यत एव। तथा देवदत्त-शालायां ब्राह्मणा आनीयन्तामित्युक्ते देवदत्तोऽपि ब्राह्मणानानयते इति। एवं खलर्थग्रहणेन खलोऽपि ग्रहणं न विरुध्यते। ननु यदि खलो ग्रहणं न स्यात् तदुपादानमपार्थकमेव भवेत्। यु-ग्रहणमेव कुर्यात्। नैतत्। ईषदादिविषय-विहिताद् योऽन्यस्यापि तस्य ग्रहणप्रसङ्गात्। खला सहचरितस्येति। साहचर्यं समानप्रकरणोपात्तेन रूपेण खल्यु-ग्रहणमेव तु न कृतम्, वैचित्र्यात्। योरन्यस्य ग्रहणं न भविष्यति खला सहचरितस्य परिग्रहात्। तत्राकर्मकेभ्यो भावप्रत्ययः

---

१. ४।६।४६ (दु० वृ०)

२. ४।६।४७ (दु० वृ०)

विहिताद् योरन्यस्यापि तस्य ग्रहणप्रसङ्गात्। सकर्मकेभ्यस्तु कर्मणि न तु भावे। वक्तव्यश्चात्र) विशेषः आशितव्यं शयनाय इति भावे कृत्यप्रत्यये उत्पन्न इति तेन कर्तुरनभिधानाद् भवतेः। भवतिशब्दात् कर्तरि तृतीया। कर्तव्यः कटो भवतेत्यादि। भोज्यमिति ण्यण्प्रत्ययः। भुजेर्न इति गत्वाभावः। कृत्य-प्रत्ययस्य कर्मणि सञ्जातत्वात् तेनैव कर्माभिहितमिति कटौदनाभ्यां द्वितीया-भावः। एवमन्यत्राप्यभिहिते कर्मणि द्वितीया न भवति कर्तर्यपि यथादर्शन-मन्यत्रापीति वचनात्। कृत्या भवन्ति। भवत्यसौ भव्यः। पक्षे यथाप्राप्तमपि भवति। कर्तव्यमनेन भावे य-प्रत्ययः अनेनेति कर्तरि तृतीया। इदमः टौसोरन इत्यनादेशः। गेयो माणवकः साम्नाम्। गायतीति गेयः, आत्खनोरी चेति ईत्वम्, कर्तुरभिहितत्वात्, माणवकात् तृतीया न भवति। स्वाध्यायस्येति कर्मणि षष्ठी। प्रवचनीयो गुरुणा स्वाध्यायः, कर्मणि प्रत्ययः। उपस्थानीयः शिष्यो गुरोः उपतिष्ठत इति कर्तरि प्रत्ययः। कर्मणि उपस्थानीयो गुरुः शिष्येण। जायत इति जन्तुः। जनेः ण्यणि सानुबन्धानां ह्रस्व इति पक्षे जन्य-मनेन। आप्लवते सावित्याप्लाव्यः। उवर्णादावश्यके इति कर्तरि ण्यण्-प्रत्ययः। स्वरवद्भावादावादेशः। पक्षे आप्लाव्यमानेन, आपतत्यसावापात्यः कर्तरि ण्यण्-प्रत्ययः पक्षे आपत्यमनेन।

**आदिकर्मणि क्तः कर्तरि च** [1]४।६।२८

आदिभूतः क्रियारूपेण आदिकर्तेति। एतेनादिश्चासौ कर्म च तदादि-कर्मेति। कर्मधारयो अयमिति दर्शयति। क्रियाग्रहणाच्च कर्मशब्दोऽत्र क्रिया-माचष्टे। न तु साधनकर्म इत्यपि दर्शयति एतच्चादिग्रहणाल्लभ्यते। साधन-कर्मपरिग्रहे हि तस्यैकत्वादादिग्रहणमपार्थकं स्यात्। क्रियावाचिग्रहणे तु बहूनां क्रियाक्षणानामादिमध्यान्तव्यपदेशः। सत्यम्। आदिभूतक्रियालक्षण-निवृत्त्यर्थमादिग्रहणं कर्तुं युक्तमेव। तस्मादादिग्रहणात् क्रिया कर्मात्र गृह्यते। च शब्दाद् यथाप्राप्तञ्चेति। केन पुनः आदिकर्मणि क्तो विहित इति न केनचित्। नह्यादिकर्मणि वाचनिकं क्त-प्रत्ययस्य विधानमस्ति एवं चादि-कर्मणि यः क्तो विहित इति कथमुक्तिः सङ्गता स्यात्। न चादिकर्मणीति वचनाद् यथानुपपत्त्या क्त-प्रत्ययः आदिकर्मण्यस्तीति शक्यं वक्तुं, ञ्यनुबन्धे सतीत्यादिवर्तमानकालविषयस्यापि क्त-प्रत्ययस्यासम्भवात्। तस्यैवेदं कर्मणि विधानं स्यात्, नत्वन्यविषयस्य इत्याशङ्क्याह आदिकर्मणि अतीते सती-त्यादि। आद्यस्य क्रियालक्षणस्य परिनिष्पन्नत्वादतीतत्वेन विवक्षायां निष्ठे-

---

१. ४।६।४८ (दु० वृ०)

त्यनेनैवादिकर्मणि क्त-प्रत्ययस्य विधानमस्तीत्यदोषः। आद्यक्रियालक्षणारम्भ-विवक्षायामतीतत्वासम्भवे कथं क्त-प्रत्यय इति चेत्, कृत्ययुटोऽन्यत्रापीति वचनात् प्रकृतः कटं देवदत्त इति कर्तरि क्त-प्रत्ययः, तेनैव कर्तुरभिहितत्वात् देवदत्तशब्दात् कर्तरि तृतीया न भवति। कर्म तु नाभिहितमिति तदभिधानाय कटाद् द्वितीयाभावः। ननु च-आदिभूत-क्रियालक्षणकाले कटोऽनभिवृत्त एव तदा हि कटे कारणानि सन्निहितानि। न च तान्येव कटः, तत्कथं प्रकृत-शब्देनातीतकालविहित क्त-प्रत्ययान्तेन कटस्य सामानाधिकरण्यमुपपद्यते। एव तर्ह्याद्येन क्रियालक्षणेन कारणानां यो विशेषः आहितस्तत्र तादर्थ्यात् कट-शब्दो सदविशेषोऽतीत एवेति युक्तं सामानाधिकरण्यम्।

**गत्यर्थाकर्मकश्लिषशीङ्स्थासवसरुहजनजीर्यतिभ्यश्च** [1]४।६।२९

च-शब्दाद् यथाप्राप्तं चेति भावकर्मणोः। गतं देवदत्तेनेति। सकर्मकत्वेऽप्यविवक्षितकर्मत्वाद् भावे प्रत्ययः विद्यमाने सति हि कर्मात् क्वचिन्न विवक्ष्यते यथा नेह पच्यते, तेन भुज्यत इति। न च श्लिषादीनां च कर्मकत्वा-देव सिद्धिरस्तीति किमर्थं पृथक्श्लिषादिग्रहणं [2]कृतमित्याह—अकर्मका इत्यादिगतार्थम्। पूर्वसूत्राच्चकारोऽनुवर्तते तेन गत्यर्थाकर्मकभोजनार्थेभ्यः क्त-प्रत्ययोऽधिकरणेऽर्थे भवति। यथाप्राप्ताभ्यनुज्ञानं चात्रेष्यत एव। तेन गत्यर्थेभ्यः कर्तृकर्मभावाधिकरणेषु क्त-प्रत्ययः। अकर्मकेभ्यः कर्तृभावाधिकर-णेषु भोजनार्थेभ्यः कर्मभावाधिकरणेषु क्त-प्रत्ययः। गतार्थेभ्यस्तावत्, इदमेषां यातं, यातो देवदत्तः, यातं देवदत्तेन, अकर्मकेभ्य इदमेषामासितम्, आसितो देवदत्तः, आसितं देवदत्तेन। भोजनार्थेभ्यः इदमेषां भुक्तं, भुक्तः ओदनो देव-दत्तेन, भुक्तं देवदत्तेन। ननु भोजनार्थेभ्यः क्त-प्रत्ययो न केनचित् कर्तरि विहितः तत् कथं पीताः गावः, युक्ताः ब्राह्मणा इति। कर्तरि क्त-प्रत्ययः। युक्तं चैतत्, अन्यथा क्त-प्रत्ययं न कर्तुरनभिहितत्वाद् गोब्राह्मणशब्दाभ्यां कर्तरि तृतीया स्यात्। सत्यमस्त्येतत्। भावे तु क्त-प्रत्ययं विधाय सत्त्वा-दित्वादकारप्रत्ययो भविष्यति।

**दाशगोघ्नौ सम्प्रदाने** [3]४।६।३०

अन्यत्रापीति वचनात् सम्प्रदाने दाशतेरच् प्रत्ययः सिद्धः। गोघ्नशब्दो-ऽप्यसतेषु कतृषु गोशब्दाद्विहितोऽच्-प्रत्यय इति योगारम्भः प्रपञ्चार्थः।

---

१. ४।६।४९ (दु० वृ०)
२. न कृतमित्याह (भं०)
३. ४।६।५० (दु० वृ०)

**भीष्मादयोऽपादाने** [1] ४।६।३१

नन्वेषां भीष्मादीनां रूढिशब्दत्वात् क्रियाकारकसम्बन्धो नास्तीत्यपादाने कथं वृत्तिः स्यात् । अस्त्येतत्, किन्तु रूढिशब्दानामपि केषांचिदस्त्येव क्रियाकारकसम्बन्धः यथा तैलपायिकादिशब्दानामित्यचोद्यमेतत् ।

**ताभ्यामन्यत्रोणादयः** [2] ४।६।३२

ताभ्यामिति निर्देशः सम्प्रदानापादानयोः प्रत्यवमर्शार्थः । अन्यथा अपादानस्य वानन्तरत्वात् प्रत्यवमर्शस्स्यात् । ततश्च तदेव पर्युदस्येत् न तु सम्प्रदानमतः तत् पर्युदसितुं ताभ्यामिति क्रियते ।

**युवुझामनाकान्ताः** [3] ४।६।३३

युडादीनां प्रत्ययानामनुबन्धानपास्य यत् यु-मात्रं तदिह यु-ग्रहणेन गृह्यते । एवं वुणादीनामपि इति निरनुबन्धकपरिभाषा तु नोपतिष्ठते । सामान्यमात्रपरिग्रहात् । नन्दन इति । टुनदि समृद्धौ, तस्माद् हेत्विन्नन्ताद् यु-प्रत्ययः । संज्ञात्वं हीयत इति नियतवर्णानुपूर्वीकत्वात् संज्ञा । वर्णविकारे सति हानिर्भवतीति अर्थः । एतत् प्रकरणविहितस्येत्यादि । ननु कृदधिकारादेव ऊर्णायुयुरित्यत्र न भविष्यति, नैतत्, विधीयमान प्रत्यय एव कृदधिकरणस्याभिसम्बन्धात् । न चेह कश्चित् प्रत्ययो विधीयेत येन कृदधिकारोऽभिसम्बध्येत, तदुक्तम्, केनचित् साध्येनैव सम्बध्यते, प्रथमान्तत्वादिति ।

**समासो भाविन्यनञः क्त्वो ल्यप्** [4] ४।६।३४

भविष्यतीति । भावि क्तवच्चेति । भवतेर्णोणादिक इनिः प्रत्ययः । ततः ङिणिदित्यतो णिद्ग्रहणमनुवर्तते । तेन नाम्योपधेत्यादिना वृद्धिः । नञ्समास इति । सप्तमीयं कालभावयोरित्यादि भावे सत्तायाम्, अत्र च समासस्संस्तत्रावश्यमसौ भवनक्रियायाः कर्ता भवतीति किं भाविग्रहणेनेत्याह—भाविग्रहणमित्यादिसमासस्य भविष्यत् कालावच्छेदार्थं भाविग्रहणं क्रियते तेन यत्र समासो भावी तत्र पूर्वं यणादेशः प्रवर्तते । ततः समासः । एवं च प्रत्ययोपदेशावस्थायामेव यवादेशे कृते सति प्रणम्येत्यादौ दीर्घत्वादयो न भवन्ति । घुडादेः प्रत्ययस्य परभूतत्वात्, अन्तरङ्गत्वादिति । अन्तरङ्गत्वं तु दीर्घस्यैकपदाश्रय-

१. ४।६।५१ (दु० वृ० भीमादयोऽपादाने)
२. ४।६।५२ (दु० वृ०)
३. ४।६।५४ (दु०वृ०)
४. ४।६।५५ (दु० वृ०)

त्वात् । समासस्य तु बहिरङ्गत्वं पदद्वयापेक्षित्वात् । ननु जग्ध्यादेशविधौ यपीति वचनं यवादेशस्य कार्यान्तरबाधनेन बलीयस्त्वम् अभिहितम्, अतः पूर्वं यवादेशे कृते दीर्घत्वादयो न भविष्यन्तीति किं माविग्रहणेन, एवं तर्ह्यन्यतरच्छक्यमकर्तुम् ।

**चजोः कुघ्गिण्ण्यतोः** [1]४।६।३५

अन्तरङ्गपरिभाषया इति । अवगतं चास्या अनित्यत्वम् । न वेञ्श्व्योरगुण च इति सूत्रार्थः स्यात् । एतच्च स्वपिवचीत्यत्रोक्तम् । यदि च निमित्तं प्रत्यस्याः परिभाषाया उपस्थानं भवेत्, युड्ग्रहणमनर्थकं स्यात् । तत्र परतः कत्वस्यासिद्धत्वात् परिभाषाणां चानित्यत्वं लक्ष्यदर्शनवशेनेति स्थान्यादेशसम्बन्धं प्रत्यस्याः अनित्यत्वाभावः । पक्तेत्यादि । डुपचष् पाके, त्यज् हानौ, इच्छार्थेष्वेककर्तृकेष्विति त्यजेस्तस्-प्रत्ययः, गत्वे सत्यघोषेष्वशिटां प्रथमः । अथ घुडादौ घत्वस्य किमुदाहरणम्, त्यक्तेत्यादि चेत्, न सत्यप्यत्र गत्वे प्रथमादेशविधानेन कत्वस्य प्रवृत्तेः वाक्यान्तरेण च कत्वस्यायं विषय इति किमिवात्र यत्वप्रवृत्त्या, स्यादेतत्, यत्र कत्वं न श्रूयते भग्नेत्यादौ स विषयो गत्वस्य चेति, न परत्वनित्यत्वाभ्यामनप्रवृत्तेः, नत्वे घुडोऽभावाद् गत्वस्य प्रवर्तयितुमशक्यत्वादिति घुडादौ गत्वस्योदाहरणम् अमन्यमानः पृच्छति नन्वित्यादि । नत्वस्यानित्यत्वं सत्यसति वा गत्वे प्रवृत्तेः नित्यविधेरन्तरङ्गत्वस्य बलीयस्त्वं परं विदुरित्यादिना आप्तवचनेन दृढयति । पूर्वपरोपपत्ताविति । पूर्वपरयोः विध्योरुपपत्तौ प्राप्तावित्यर्थः । परस्य नित्यस्य च नित्य एवेति विधिस्तदीया बलीया नित्यमपेक्षते । नित्यान्तरङ्गमोपगम इति प्रवृत्तिः, अन्तरङ्ग इति । अत्र विधिर्बलीयानित्यनुषज्यते । तथाविधः प्रातिपदो बलीयानिति, अन्तरङ्गमपि विधेः । तथा च कासाञ्चकारेत्यादौ प्रकृतिकार्यत्वादन्तरङ्गमपि द्विर्वचनं चकारस्यादिधातूपादानेन विधीयमान आम्-प्रत्ययो बाधते । इति नित्यादन्तरङ्गस्य बलीयस्त्वम्, अत इत्यर्थः । इतर इति । अन्यसापेक्षम् । [2]तद्घत्वन्न धुट्सापेक्ष्यान्तरङ्गत्वमिति घुडादौ गत्वस्योदाहरणमस्त्येव ।

**न्यङ्क्वादीनामपि हश्च घः** [3]४।६।३६

न्यङ्क्वादीनामपि । तादर्थ्ये एवा षष्ठी, यतः षष्ठ्यपि तादर्थ्यं ब्रूते ।

---

१. ४।६।५६ (दु० वृ०)

२. अस्पष्ट ।

३. ४।६।५७ (दु० वृ०)

यथा गुरोरिदं गुर्वर्थमिति, तेन न्यङ्क्वादीनां नङ् क्त्वा दृढं न्यङ्क्वादिशब्दसंसिद्धये च चजोः कगौ भवत इति सूत्रार्थः। यदि पुनरेव नोच्येत, ततो न्यङ्क्वादीनां चजोः कगौ भवत इत्यभिधानमनन्वितं स्यात्। तेषां चकारजकारयोरभावाद् दूरे पाकफले पाकशब्द इह पठ्यते। तौ दूरे मन्यते स्वयमेव फले पच्यते। स्वयमेवेति विगृहीते सति पचाद्यजन्तौ द्रष्टव्यौ, गणपाठसामर्थ्याच्चोपधादीर्घः। इत्यादय इति। आदिग्रहणात् तु क्तः, वक्त्रस्याति षट् गावसर्गमांसपाकादयोऽपि बोद्धव्याः।

**न कवर्गादिव्रज्याम्** [1]४।६।३७

चजोः कगावित्यादिना कत्वगत्वे प्राप्ते निषिध्येते। नेति योगविभागः कर्तव्यः। तेन किं सिद्धं भवतीत्याह तेनेत्यादि। एवं वञ्चेर्गतौ कत्वो न भवति। वञ्चो गतः। कर्मणि घञ्। गतेरन्यत्र वङ्कं काष्ठं कुटिलमित्यर्थः। गतावित्युक्तमनेकार्थत्वात्। उत्तरं तु प्रकरणं योगविभागलब्धस्यार्थस्य प्रपञ्चार्थम्।

**ण्यावश्यके** [2]४।६।३८

अवश्यपाच्यमित्यादि वक्तव्यादवश्यमो लोपः।

**प्रवचर्चिरुचियाचित्यजाम्** [3]४।६।३९

प्रवचर्चीत्यर्चेर्ग्रहणम्, ऋचेस्तु न गृह्यते यतोऽस्माद् ऋदुपधात्वात् क्यपा भाव्यमिति। तत्र परतः केन कत्वस्य प्राप्तिरिति।

**वचोऽशब्दे** [4]४।६।४०

प्रवाच्य इति ग्रन्थविशेषस्यैषा कस्यचित् संज्ञा इति तेन वचोऽशब्द इत्यनेन निषेधो न सिद्ध इति शब्दसंज्ञार्थं प्रवचिग्रहणम्।

**भुजोऽन्ने** [5]४।६।४१

अन्नग्रहणमिह तृप्तिविशेषसाधनपरत्वेन व्याचक्षते तेन भोज्यम् पय इत्याद्यपि भवति।

---

१. ४।६।५८ (दु० वृ०)
२. ४।६।५९ (दु० वृ०)
३. ४।६।६० (दु० वृ०)
४. ४।६।६१ (दु० वृ०)
५. ४।६।६३ (दु० वृ०)

**भुजन्युब्जौ पाणिरोगयोः** [1]४।६।४२

भुङ्क्तेऽनेन इति भुजः, लोके बाहौ भुजशब्दः । भुजावयवत्वात् । न्युब्जो जि विचेष्टीभवन्त्यस्मिन्निति उब्जः । व्यञ्जनान्तस्येति घञ्प्रत्ययः । उब्जिरयमुभयथा पठ्यते । दोपधः, उब्ज आर्जव इति । अत्युद्गतः, समुद्गत इति यथा स्यात् । ओष्ठ्योपधोऽपि, उब्ज, आर्जव इति उर्जितेत्यादि यथा स्यात् । द्वयं चैव प्रमाणमित्येके मन्यन्ते, अन्ये तु ओष्ठ्योपध एवायमित्याहुः । तर्हि अत्युद्गः समुद्गः इति गमेरयं द्व्युपसर्गात् प्रत्ययः ।

**दृग्दृशदृक्षेषु समानस्य सः** [2]४।६।४३

ननु समानशब्दात् परे टगादयो न सन्तीति । समानस्य त्यदादित्वात् त्यदादौ दोपधे दृगादीनां सम्भवादिति भावः । समानपूर्वाद् दृशेरिति यथादर्शनमुपपदान्तरोपलक्षणपरमेतदभिधानम् । तेनान्यशब्दपूर्वादपि दृशेः क्विबादयो भवन्ति । तथा च अन्यादृगित्याद्यपि सिद्धम् । समानस्य स इति योगविभागः कर्तव्यः । तेन सज्योतिः, सनाभिः, सवयाः, सगोत्रः, सरूपः, सवर्णः, सब्रह्मचारीत्यादि सिद्धम् । एवं समाने तीर्थे वासी सतीर्थ्यः, यत् प्रत्ययः । एवं समाने उदरे शयितः सोदर्यः, समानोदर्यः इत्यपि भवति । योगविभागादिषु प्रसिद्धः ।

**इदम ई** [3]४।६।४४

क्वचित् पूर्वपराविति सर्वस्येदम ईत्वम् ।

**अदसो मूः** [4]४।६।४५

आ सर्वनाम्न इत्यादिना योगारम्भं केचित् प्रत्याचक्षते केचिदिति वचनं मतान्तरोप..................करणिकम्, वावच्छेदकत्वात् । आत्वलक्षणात् तु पदकार्यमदस्तत्राप्राकरणिकमिति । यस्मिन्कृते न सिध्यतीति योगारम्भः ।

**आ सर्वनाम्नः** [5]४।६।४६

सर्वनाम्नः आत्वं भवतीति वर्णान्त्यविधिरित्यन्त्यस्य । इह भवादृगित्यादौ भवतेर्यद्यपि परनित्यत्वाभ्यामाबाधत्वं प्राप्नोति तथाप्यनुषङ्गमहत्याः संज्ञायाः

---

१. ४।६।६४ (दु० वृ०)
२. ४।६।६५ (दु० वृ०)
३. ४।६।६६ (दु० वृ०)
४. अदो मूः ४।६।६८ (दु० वृ०)
५. ४।६।६९ (दु० वृ०)

करणादनुषङ्गसंज्ञा निमित्तस्य कार्यस्य बलीयस्त्वात् पूर्वमनुषङ्गलोपः, अतान्तत्वम्।

**विश्वग्देवयोश्चान्त्यस्वरादेरद्र्यञ्चतो क्वौ** [1]४।६।४७

आदिति लुप्तप्रथमैकवचनम्। क्विप्-प्रत्ययः पर इति क्विप्प्रत्ययः परो यस्मादिति बहुव्रीहिः। अद्र्यङिङति अद्र्यञ्च इति स्थिते, यङिङति निर्देशात् ज्ञापकात् संयोगान्तलोपात् पूर्वं गत्वं ततो संयोगान्तलोपः।

**रुहेर्घो वा** [2]४।६।४८

अञ्चताविनिवृत्तमिति रुहेरुपादानात् यद्येव ·········· स्स्यात् न भविष्यत्यपेक्षावशात् क्वावित्यनुवृत्तेः, अथवा······ ·· तत्रैकमन्यतरमित्येतदसम्भवान्निवर्तिष्यते न तु·········· व्याख्यानात्······रस्येति लोपः······ ···परनिमित्तक·········· ङ्गत्वाभावान्न भवतीति चेत् न क्वौ लुप्ते न स्थानिवदिति वचनात् कथम ······· रयतेः भो इत्येवमादौ लोपस्यासति स्थानिवद्भावे क्विप्-प्रत्ययः··· ···इत्याह—न-लोपाभावे लाक्षणिकत्वादिति। ······ रङ्गमपि धातुरपि तद् व्यपदेशद्वयभाजि······ किं कत्यमित्याह··· ···धातुग्रहणमित्यादि·········स्येति लुक् द्विर्वचनम्, अतोऽन्तोऽनुस्वार ··। (अपूर्णश्चायं ग्रन्थः)।

---

१. ४।६।७० (दु० वृ०)

२. ४।६।७२ (दु० वृ०) विन्दुभिरङ्कितं स्थानं हस्तलेखस्य जीर्णत्वात् त्रुटितपाठत्वं सूचयति।

# तृतीय खण्ड (पाठालोचन पूर्वक अध्ययन)

## प्रथम विमर्श : ग्रन्थ वैशिष्ट्य

कातन्त्र-व्याकरण से सम्बन्धित प्रकाशित वाङ्मय के अभाव में न्यास-ग्रन्थ के सम्पूर्ण वैशिष्ट्य का उद्घाटन कर पाना असम्भव है, परन्तु कुछ विशेष तथ्य इस विषय में द्रष्टव्य हैं।

### सूत्रार्थ विचार

सूत्रार्थ विचार करते समय ग्रन्थकार ने पदच्छेद, सूत्र व्याख्या, सूत्र प्रयोजन, उदाहरण, प्रत्युदाहरण आदि के प्रदर्शन के समय अपने कौशल का परिचय दिया है। किस सूत्र में किस प्रकार का अर्थ निहित है इसका निर्धारण उसके पदच्छेद द्वारा सर्वोत्तम प्रकार से किया है। [1]वृत्ति द्वारा जिस अर्थ को प्रकट किया जाता है वह सूत्र में ही निहित होता है। तथा वार्तिक के द्वारा भी प्रकट किया जाने वाला अर्थ सूत्र के अर्थ का पूरक होता है। इस तरह यह स्पष्ट है कि वृत्ति, वार्तिक, व्याख्यान, इष्टि आदि व्याख्यान की सभी प्रकार की प्रक्रियाओं का केन्द्रविन्दु सूत्र ही होता है। ग्रन्थकार ने सूत्रार्थ निर्धारण के समय इन सभी प्रक्रियाओं का आश्रय लिया है।

[2]पाणिनीय परम्परा के व्याख्याकार सूत्र के किसी भी अंश को निष्प्रयोजन अथवा अनर्थक नहीं स्वीकार करते हैं, अज्ञात प्रयोजन वाले स्थल को भी अन्वेष्टव्य प्रयोजन मानकर उसका समुचित समादर करते हैं। परन्तु कातन्त्र व्याकरण के व्याख्याकार उग्रभूति भट्ट इस प्रकार की मान्यताओं को स्वीकार नहीं करते हैं। वे सूत्रकार के प्रति आलोचनात्मक दृष्टिकोण रखते हैं तथा आवश्यकतानुसार किसी सूत्र की अथवा उसके किसी अंश की उपयोगिता तथा अनुपयोगिता पर विचार करते समय अपनी निर्णायक मनोवृत्ति का परिचय वैचित्र्यार्थ, चिन्त्य, प्रपञ्चार्थ, निरर्थक आदि पदों के द्वारा देते हैं।

सूत्र-वृत्ति में उदाहरणों एवम् उनकी प्रक्रिया-सिद्धि को दर्शाने के साथ-

---

१. सूत्रेष्वेव तत्सर्वं यद् वृत्तौ यच्च वार्तिके।
सूत्रं योनिरिहार्थानां सर्वं सूत्रे प्रतिष्ठितम्॥ (दुर्गसिंह-कातन्त्र परिभाषा-सूत्रवृत्तिः)

२. तत्राशक्यं वर्णेनैकेनाप्यनर्थकेन भवितुम्, किं पुनरियता सूत्रेण (महाभाष्य)

साथ सूत्रान्तर्गत पदों की भी प्रक्रियासिद्धि का परिचय देना ग्रन्थकार की अपनी विशेषता है। इस सम्बन्ध में कतिपय उदाहरण द्रष्टव्य हैं।

१. सिद्धो वर्णसमाम्नायः १।१।१। (शि० वृ०)

षिधु संराद्धौ, सिध्यतिस्म, गत्यर्थाकर्मकेत्यादिना सिध्यतेरकर्मकत्वात् कर्तरि क्तः।

२. तत्र चतुर्दशादौ स्वराः १।१।२ (शि० वृत्ति)

तत्र तद् सप्तम्येकवचने ङि, तस्मिंस्तत्र, सप्तम्या इति त्र-प्रत्ययः। ...... चत्वारः, दशन् शब्दावौणादिकप्रत्ययान्तौ। ..। डुदाञ् दाने, आङ् पूर्वः, आदीयते प्रथम उपलभ्यत इत्युपसर्गे दः किः, आलोपो सार्वधातुक इत्यालोपः। स्वृ शब्दोपतापयोः। स्वर्यन्ते व्यञ्जनान्येभिरिति स्वराः....। एवं समानाः इत्यादावपि बोद्धव्यम्।

३. दश समानः १।१।३ (शि० वृ०)

श्वस् प्राणने, आनश्, पूर्वः, समाननं समानः, भावे घञ्, अस्योपधेति दीर्घः।

४. धातुविभक्तिवर्जमर्थवल्लिङ्गम् २।१।१ (शि० वृ०)

धातवश्च विभक्तयश्च धातुविभक्तय इति विग्रहविशेषप्रदर्शनेन धातोः विभक्तय इति।

५. तस्मात्परा विभक्तयः २।१।२ (शि० वृ०)

सि औ जस्, अम् औ शस्, टा भ्याम् भिस्, ङसि भ्याम् भ्यस्, ङस् ओस्, आम्, ङि ओस् सुप्, इत्यादि। विभक्तिरिति। विपूर्वात् भजेः विभज्यते आभिः लिङ्गार्थः कर्मादिभावेन विगृहीते, स्त्रियां क्तिः।

६. अथ परस्मै पदानि ३।१।१

परार्थानि पदानि, तादर्थ्यचतुर्थ्यन्तस्य परशब्दस्य पदशब्देन कृते समासे तत्स्था लोप्या इत्यादिना विभक्तिलोपो न भवति।

७. नवपराण्यात्मने ३।१।२

पराणीत्यत्र कृते नुरागमे परत्वनित्यत्वाभ्यां कृतेऽपि णत्वे घुटि चासम्बुद्धाविति च शब्दादुपधादीर्घः। सर्वत्रात्मन इति व्यवहारदर्शनादात्मन इत्येतावती संज्ञेयमिति यस्य भ्रमः, तं प्रत्याह—आत्मने पदानीत्यादि।...।

८. सिद्धिरिज्वदनुबन्धे ४।१।१

इचीवेज्वदिति। एतेन सप्तम्यन्तादिच्छशब्दाद् वति-प्रत्ययोऽयमुपमेयस्य सप्तम्यन्तत्वादिति दर्शयति। स्वरूपभङ्गप्रसङ्गभयाद् गत्वस्याप्रवृत्तिः......।

ऊपर प्रदर्शित इन कतिपय उदाहरणों के द्वारा यह स्पष्ट है कि ग्रन्थ-

कार सूत्रार्थप्रदर्शन एवम् उसकी उपयोगिता का परिचय कितनी सरल एवं सुबोध भाषा में प्रस्तुत करते हैं।

**[1]दुर्ग एवम् उग्रभूति का व्याख्यानात्मक स्वरूप :**

कातन्त्रसूत्र की उपलब्ध वृत्तियों में से अभी तक प्राप्त तथ्यों के आधार पर दुर्गवृत्ति को ही प्राचीनतम कहा जा सकता है। तथा दूसरे स्थान पर उग्रभूति को माना जाना चाहिए, क्योंकि दुर्ग (८वीं शती) एवम् उग्रभूति (१०वीं शती) के अन्तराल का कोई भी वृत्ति ग्रन्थ अभी तक उपलब्ध नहीं है। दुर्ग सिंह ने अपने वृत्तिग्रन्थ में सूत्रों की व्याख्या अत्यन्त संक्षिप्त एवं सरल ढंग से प्रस्तुत की है। परन्तु उग्रभूति ने अपने ग्रन्थ शिष्यहितावृत्ति एवं शिष्यालोकन्यास में इस परम्परा का निर्वाह नहीं किया है। उन्होंने वृत्ति एवं न्यासग्रन्थ में सूत्र की विस्तृत व्याख्या तथा प्रयोगों की विविधता एवम् इष्टिपद्धति का आश्रयण आदि के बारे में अत्यन्त सरल एवं विस्तृत ढंग से अपने पाण्डित्य का प्रदर्शन करने का प्रयास किया है। इस तरह के प्रयास का परिष्कृत रूप शिष्यहितान्यास में परिलक्षित होता है। इसके कतिपय उदाहरण द्रष्टव्य हैं।

१. कादीनि व्यञ्जनानि १।१।९

**दुर्गवृत्ति**

ककारादीनि हकारपर्यन्तानि व्यञ्जनसंज्ञकानि भवन्ति। क ख ग घ ङ। च छ ज झ ञ। ट ठ ड ढ ण। त थ द ध न। प फ ब भ म। य र ल व, श ष स ह। व्यञ्जनप्रदेशाः व्यञ्जनमस्वरं परं नयेत् (का० १।१।२१ इत्येवमादयः।

**शिष्यहितावृत्तिः—**

ककार आदिर्येषां वर्णानामिति विग्रहः। ककारादीनि वर्णानि व्यञ्जनसंज्ञकानि भवन्ति। व्यञ्जनानि तु [2]क......ह। व्यञ्जनसंज्ञायाः क्वप्रयोजनम्, मोऽनुस्वारं व्यञ्जन इत्यादिषु। रुद्रं स्तौमि। उपलक्षणस्यापि ककारस्य व्यञ्जनसंज्ञा। यः करोति स कर्ता इत्यत्र विसर्जनीयस्य लोपदर्शनात्।

**शिष्यालोकन्यास—**

ककारादिर्येषां वर्णानामिति विग्रहः। विपूर्वाद् अञ्जेः, व्यङ्ग्यः, स्वरेण प्रकटीकर्तव्यमिति। कृत्ययुटोऽन्यत्रापि कर्मणि युट्। ककारादीनि वर्णानि हकारान्तानि इति मन्तव्यम्। रुद्रं स्तौमीति। रुद्रस्तवनक्रियायां

---

१. दुर्ग से तात्पर्य वृत्तिकार से है। टीकाकार दुर्ग से नहीं।

२. ककार से लेकर हकार पर्यन्त सभी वर्ण।

रुद्रस्याकर्तृकत्वात् कर्मणि द्वितीया । ष्टुञ् स्तुतौ, धात्वादेष्षस्सष्षत्वनिवृत्तौ टकारस्यापि तकारः, स्तौतीन्नन्तयोरिति ज्ञापकात् । सि ञन्वि, अदादेर्लुक्, उकारस्य वृद्धिर्व्यञ्जनादावित्यौकारः । उपलक्षणस्यापि ककारस्य व्यञ्जनसंज्ञा भवतीत्युक्तम्, तत्र हेतुमाह—यः करोति स कर्ता इत्यत्र स शब्दात् परो लोप्य इति व्यञ्जननिमित्तको यो लोपो दृश्यते ततो ज्ञायते भवत्युपलक्षणस्यापि ककारस्य व्यञ्जनसंज्ञेति ।

ऊष्माणः शषसहाः १।१।१५

**दुर्गवृत्ति —**

श ष स ह इत्येते वर्णाः ऊष्मसंज्ञाः भवन्ति । शिडिति शादयः (का० ३।८।३२) इति । पुनर्लघुसंज्ञा । एषाः पूर्वाचार्यप्रसिद्धा अन्वर्था इह ज्ञाप्यते ।

**शिष्यहितावृत्तिः—**

शषसहाः वर्णा ऊष्मसंज्ञाः भवन्ति । ऊष्माणः श ष सहाः । ऊष्मसंज्ञायाः क्व प्रयोजनम्, मनोरनुष्मण्यनुस्वार इत्यस्यानर्थकत्वात् ऊष्मसंज्ञायाः प्रयोजनं नास्तीति योगारम्भो निरर्थक इत्याहुः ।

**यच्चार्चितं द्वयोः २।५।१३**

**दुर्गवृत्ति —**

तत्र द्वन्द्वग्रहणे समासे द्वयोर्यदर्चितं तत्पूर्वं निपतति । देवदैत्यौ, वासुदेवार्जुनौ, व्यभिचरति च । नरनारायणौ, उमामहेश्वरौ, काकमयूरौ ।

**शिष्यहितावृत्ति —**

द्वन्द्वे समाहारे द्वयोर्नाम्नोर्मध्याद् यदर्चितं पूजितं नाम तत् पूर्वं प्रयोज्यम् । मातापितरौ, आकारो महतेति कार्यग्रहणादात्वम् । वासुदेवार्जुनौ, ब्राह्मणक्षत्रियौ । द्वयोरिति किम्, भीमार्जुनवासुदेवाः । ऊनायास्संख्यायाः पूर्वनिपातो द्वन्द्व इष्यते । नवतिशतम्, अष्टोत्तरशतम् । अग्निसंज्ञकस्य । पटुगुप्तौ । स्वरादेरकारान्तस्य उष्ट्रखरम् । सर्वनाम्नस्संख्याविशेषणस्य सप्तम्यन्तस्य च बहुव्रीहौ । सर्वश्वेतः, द्विशुक्लः, चित्रगुः, कण्ठेकालः । निष्ठायां च । पीतोदकः । प्रियशब्दस्य बहुव्रीहौ वा । प्रियरुद्रः, रुद्रप्रियः । काकमयूरौ, शशिभास्करौ इत्यादयस्तु प्रयोगाः प्रमादजाः ।

इस तरह ध्यान पूर्वक देखने से यह स्पष्ट परिलक्षित होता है कि न्यासकार अथवा वृत्तिकार ने दुर्गवृत्ति की अपेक्षा केवल विस्तृत व्याख्याशैली को ही नहीं अपनाया है अपितु सूत्र द्वारा अग्राह्य प्रयोजनों की सिद्धि के लिए इष्टि पद्धति का भी आश्रय लिया है। तथा इनकी कल्पना करके वे अनेक प्रयोगों को व्याकरण के नियमों के अन्तर्गत लाने का प्रयास करते हैं। उग्र-

भूति की कृति में तथ्यगत विशेषताएँ भी अन्य कातन्त्रीय टीकाओं की अपेक्षा अधिक हैं। इस तरह के तथ्यों का विवेचन करने से ग्रन्थ के विस्तृत हो जाने का भय है। अतः आगामी पृष्ठों में केवल सामान्यरूप से उद्धृत की गई बातों का ही उल्लेख कर पाना सम्भव है। अतः शिष्यालोकन्यास ग्रन्थ में प्रयुक्त साहित्यिक सामग्री धार्मिक एवं सामाजिक सामग्री आदि का संक्षिप्त विवेचन प्रस्तुत हैं। साथ में कतिपय महत्त्वपूर्ण उदाहरणों पर भी चर्चा करना आवश्यक है।

**शिष्यालोकन्यास में प्रयुक्त उदाहरणों की समीक्षा —**

कोई भी लेखक अथवा साहित्यकार अपनी समसामयिक प्रवृत्तियों से अछूता नहीं रह सकता। कहीं न कहीं उसकी कृति में तत्कालीन धर्म, संस्कृति एवं समाज का प्रतिबिम्ब अवश्य ही प्रकट होता है। इसी के आधार पर ही स्वर्गीय वासुदेवशरण अग्रवाल आदि विद्वानों ने पाणिनि-कालीन भारत एवं पतञ्जलि-कालीन भारत नामक ग्रन्थों का निर्माण किया है। तथा बहुत कुछ सीमा तक वे अपने उद्देश्य में सफल रहे। इसी प्रकार उग्रभूति की इस रचना में इस प्रकार के जो तथ्य प्राप्त हुए हैं संक्षेप में उनके बारे में विवेचन प्रस्तुत किया जाता है। व्याकरणशास्त्र की परंपरा में प्रयुक्त उदाहरण पर्याप्त मात्रा में परम्परागत हैं, उन्हें किसी कालविशेष के साथ जोड़कर कोई ऐतिहासिक व सामाजिक तथ्य प्रस्तुत करना न्याय संगत बात नहीं कही जा सकती। यह बात अवश्य है कि कुछ उदाहरण ऐसे अवश्य होते हैं जो कि सामयिक परिवेश में प्रयुक्त हुए होते हैं। ऐसे उदाहरणों के द्वारा कुछ समाधान अवश्य निकाला जा सकता है।

**ग्रन्थकार का इष्ट देव—**

ग्रन्थ में अनेक स्थल पर रुद्र शब्द के प्रयोग को प्रमुखता दी गई है। अतः यह सम्भव है कि ग्रन्थकार रुद्र के प्रति अधिक श्रद्धा एवं विश्वास रखते हों। यथा —रुद्रं स्तौमि (१।१।९) रुद्रो मे स्वामी (२।३।३)। शिवो नौ स्वामी (२।३।२) आदि।

**सामाजिक स्थिति —**

तत्कालीन समाज शासक तथा यातायात की दृष्टि से उपयुक्त वातावरण में था (२।२।३८ सुकन्सः। शोभनाः पन्थानः यत्र नगरे तत्सुपथि २।३।६१।६४) समाज कृषिप्रधान एवं धनधान्य से युक्त था (कोष्ठागाराद् धान्यं गृह्णाति २।४।९, यवलू, यवाढकम्, यवमाषम् २।५।२, ११. कौद्दालिकः २।६।८)। समाज रचना का आधार वर्णव्यवस्था थी (ब्राह्मणक्षत्रियौ, २।५।१३,

समाजो ब्राह्मणानाम्, उदाजः क्षत्रियाणाम् ४।५।५४) समाज में चाण्डाल कहा जाने वाला वर्ग ग्राम के बाहर निवास करता था। (नगरबाह्याः चाण्डालगृहाः उच्यन्ते। २।१।२२)

गृहनिर्माणकार्य ईंटों के द्वारा होता था। (इष्टकचितम् २।५।२)

कृषियोग्य भूमि के लिए गोणी शब्द का प्रयोग होता था। जिसे कि आजकल लोक भाषा में आवासस्थान के आसपास की खेती योग्य भूमि को गोंयण कहा जाता है। (गोणादावपने २।७।३८)

सामूहिक रूप से मल्लयुद्ध आदि का आयोजन होता था (अहो मल्लस्य संग्राहः २।५।२६) कश्मीर प्रदेश में मिर्च मसाले की खेती होने का सङ्केत है। (उपस्कारं कश्मीरिकांल्लुनन्ति)

आस-पास के प्रदेश में दरद एवं नाग जातियों के होने का सङ्केत है। (२।७।३४-५३) समाज में वेद के अध्ययन की समुचित प्रथा थी। समाज में उसके प्रति अगाध निष्ठा थी। (मन्त्रो हीनः..., २।६।२८, वेदाध्यायः ४।३।१)

यथा अवसर दूर-दूर के प्रदेशों की समयानुसार यात्रा करने की प्रथा थी। (उपसर्या शरदि वाराणसी ४।२।१८)

प्रतिष्ठित लोगों की तरफ से मार्ग में यात्रियों के विभिन्न स्थानों पर पानी के पीने तथा आराम करने की व्यवस्था थी। (प्रज्ञः पथि प्रपा प्रददाति पन्थानम् ४।३।६) श्वा एवं वृषल समाज में उपयोगी समझे जाते थे क्योंकि इनके मारे जाने को हत्या शब्द से अभिहित किया है। जबकि सामान्यरूप से समाज विरोधी तत्त्वों के मारे जाने को वध कहते हैं। (श्वहत्या, वृषल-हत्या ४।२।२२)

उशीनर प्रदेश के लोगों की सामान्य रूप से क्षीरपायी होने की आदत है तथा गान्धार प्रदेश के लोग कषायपायी होते हैं। (४।३।७१)

छात्रगणों को अध्ययन की सुविधा के लिए शीत से बचने के लिए कण्डे की आग का आश्रय लेना पड़ता था। (कारीषोऽध्यापयते ३।२।१०)

सामाजिक व्यवस्था के अन्तर्गत यदि किसी कन्या का किसी व्यक्ति के साथ अग्नि को साक्षी मानकर विवाह कर दिया जाता था तब तो उसका कन्यात्व नष्ट हो जाता था परन्तु यदि बलात्कार अथवा प्रमाद-वश परपुरुष के साथ संयोग हो जाता था तो भी उसका कन्यात्व नष्ट नहीं समझा जाता था। यह प्रथा तत्कालीन उदारता पूर्ण सामाजिक व्यवस्था का परिचायक है। (कानीनः २।६।१)

## द्वितीय विमर्श : पाठालोचन

प्रस्तुत न्यासग्रंथ के केवल दो ही हस्तलेख उपलब्ध हैं। जिनके बारे में पहले के अध्यायों में वर्णन किया जा चुका है। इन दोनों हस्तलेखों में से वाडलियन पुस्तकालय के हस्तलेख की छाया-प्रति मुझे व्यक्तिगत रूप में प्राप्त है। तथा भण्डारकर प्राच्यविद्या शोध संस्थान से सम्बन्धित हस्तलेख को वहां जाकर वहीं पर ही उसका यथासम्भव अध्ययन कर संतोष करना पड़ा। इस हस्तलेख की प्रति अत्यन्त जीर्ण है, तथा कहीं-कहीं के पृष्ठ का आधा भाग अथवा सम्पूर्ण रूप नष्ट हो गया है। ये दोनों हस्तलेख विषय-वस्तु की दृष्टि से अपूर्ण हैं। ये दोनों ही शारदा लिपि में हैं। ऐसी स्थिति में पाठालोचन कार्य के समय ग्रन्थ की जीर्णता, अपूर्णता, लिपिजन्य अशुद्धपाठ, प्रतिलिपिकार का प्रमाद तथा पाठपरिवर्तन आदि के कारण उत्पन्न समस्याएँ हैं। ऐसी परिस्थिति में न्यास ग्रन्थ के मानकपाठ का निर्माण करने के लिए भारतीय पाठालोचन तथा पाण्डुलिपि विज्ञान आदि पाठालोचन प्रक्रिया से सम्बन्धित ग्रंथों का आश्रय लिया। परन्तु इन ग्रंथों में निर्दिष्ट सिद्धांतों के आधार पर पाठ का वास्तविक रूप प्रस्तुत कर पाना सम्भव नहीं है। क्योंकि हस्तलेख में संदेहास्पद स्थल की समस्याएँ उतनी नहीं हैं जितनी कि भ्रष्ट पाठ एवम् अशुद्धपाठ की हैं। ऐसी परिस्थिति में व्याकरण शास्त्र की परम्परागत शब्दावली अधिक उपयोगी सिद्ध हुई है।

इन दोनों पाण्डुलिपियों में से किसी एक को विशेष रूप से पाठालोचन कार्य के लिए स्वीकार नहीं किया गया है। परन्तु वाडलियन पुस्तकालय की छाया प्रति को आधार के रूप में स्वीकार किया गया है। क्योंकि मेरे पास व्यक्तिगत रूप से यही प्रति उपलब्ध है।

प्रस्तुत ग्रन्थ के मानक पाठ का निर्माण करते समय निम्न प्रकार के पाठों पर विचार किया गया है।

**१. प्रमाद के कारण छूटे हुए पाठ—**

दोनों हस्तलेखों में कुछ पाठ ऐसे हैं जो कि प्रतिलिपिकार के प्रमाद के कारण छूट गये हैं। इन छूटे हुए पाठों में प्रदर्शित विषयों का आभास किसी स्थल पर होता है, और किसी स्थल पर नहीं होता है। इस तरह के छूटे हुए पाठों की संख्या भण्डारकर प्रति में अधिक है। ऐसी परिस्थिति में यदि ये न्यून पाठ केवल शब्द मात्र में हैं तो उस शब्द का प्रस्तुत ग्रंथ के मूलपाठ में यथास्थान उल्लेख कर उस पर यथाक्रम से अनुक्रमाङ्क का उल्लेख करके नीचे टिप्पणी वाले भाग में अमुक ग्रन्थ का न्यूनपाठ के नाम से उल्लेख कर दिया जाता है। परन्तु जब न्यूनपाठ का स्वरूप वाक्य अथवा वाक्यांश

में होता है तब उस पूरे अंश को कोष्ठाङ्कित कर तत्पश्चात् पूर्ववत् विधि से उसका उल्लेख कर दिया गया है।

**२. मात्रा-भ्रष्ट पाठ —**

इस तरह के पाठ दो प्रकार के हैं। प्रथम प्रकार के वे पाठ हैं जिनकी मात्राओं में अन्तर होने से अर्थ में निरर्थक परिवर्तन परिलक्षित होता है। ऐसी स्थिति में उपयोगी पाठ स्वीकार कर उसका मूल पाठ में उल्लेख कर दिया गया है तथा उसका उल्लेख अधोभाग में नहीं किया गया है। लेकिन दूसरे प्रकार के वे पाठ हैं जिनसे अर्थ में सार्थक परिवर्तन आ जाता है। उनमें से उपयुक्त पाठ का चयन कर दूसरे पाठ का उल्लेख निर्दिष्ट क्रम के अनुसार नीचे कर दिया गया है।

**३. परिवर्तित पाठ —**

तीसरे प्रकार के वे पाठ हैं जो कि पाठ विशेष के स्थल पर दूसरी प्रति में सर्वथा परिवर्तित पाठ हैं। परन्तु उनके द्वारा अर्थ में कोई परिवर्तन नहीं नहीं आता है। ऐसी स्थिति में किसी एक पाठ का मूलग्रंथ में उल्लेख नीचे पाठ भेद के रूप में दूसरे पाठ का उल्लेख कर दिया गया है।

**४. अशुद्ध पाठ—**

ये पाठ दो प्रकार से अशुद्ध होते हैं पहले प्रकार के तो वे पाठ हैं जो कि किसी प्रति में अशुद्ध रहते हैं तथा दूसरी प्रति में शुद्ध होते हैं। ऐसी स्थिति में शुद्ध पाठ स्वीकार कर नीचे अशुद्ध पाठ का उल्लेख सम्बन्धित प्रति के नाम से कर दिया गया है। तथा दूसरे प्रकार के वे पाठ हैं जो कि दोनों प्रतियों में अशुद्ध होते हैं उन दोनों के स्थल पर स्वविवेकानुसार पाठ का उल्लेख कर के नीचे दोनों प्रतियों के नाम से अशुद्ध पाठ का उल्लेख कर दिया गया है।

**५. पाठान्तर पाठ—**

दोनों हस्तलेखों में कतिपय स्थलों पर इन में अपने आप में ही पाठान्तर उपलब्ध हैं। ऐसी परिस्थिति में पाठान्तर पाठ का उल्लेख उस हस्तलेख के नाम से अधोभाग में कर दिया गया है।

**६. लिङ्ग वचन एवं विभक्ति जन्य अशुद्ध पाठ —**

ऐसे पाठों का तत्तत् स्थलों पर उचित संशोधन कर मूल ग्रन्थ में उसका उल्लेख कर दिया गया है। तथा नीचे अलग से उसका उल्लेख नहीं किया गया है।

**७. सूत्र क्रमान्तर एवं सूत्र पाठान्तर—**

कातन्त्र-व्याकरण में सूत्रों की संख्या, प्रकरण एवं पाद तथा इन सब का

अनुक्रम, इन सब के बारे में निदशक अथवा मानक ग्रन्थ इस समय दुर्गवृत्ति है। प्रस्तुत न्यास ग्रंथ दुर्गवृत्ति पर न होकर शिष्यहिता वृत्ति पर है। तथा स्वयं ही अपने आप में पूर्ण रूप में उपलब्ध नहीं है। तथा वाडलियन प्रति में सूत्रपाठ अपूर्ण ही है। प्राय: सभी सूत्र अंश रूप में ही शीर्षक के रूप में उद्धृत हैं। भण्डारकर प्रति में सूत्रों के पूरे अंश का उल्लेख है। परन्तु यह हस्तलेख अपूर्ण तथा फटा हुआ भी है। ऐसी स्थिति में सूत्रपाठ में अन्तर तथा अनुक्रम में भिन्नता आदि के लिए दुर्गसूत्र पाठ को विचारणीय स्वीकार करते हुए सूत्र सम्बन्धी पाठ भेद के लिए दुर्ग की संख्या एवं सूत्र के स्वरूप का उल्लेख टिप्पणी वाले स्थान पर कर दिया है। न्यासग्रंथ में सभी सूत्रों पर न्यास उपलब्ध नहीं है, तथा सूत्र का कोई क्रमाङ्कन भी नहीं है। ऐसी स्थिति में दुर्गवृत्ति के सूत्र क्रम को उद्धृत करना आवश्यक हो गया। उदाहरणार्थ—दुर्गवृत्ति के कृत्प्रकरण के पांचवें पाद का अन्तिम सूत्र शिष्याहितान्यास के उसी प्रकरण के छठे पाद का प्रथम सूत्र है। (धातुसम्बन्धे प्रत्यया:)

इन सभी प्रकार के पाठों के उल्लेख एवं निर्धारण के सम्बन्ध में विस्तृत रूप से उल्लेख करना ग्रंथ के विस्तृत होने के भय से सम्भव नहीं हो सका है।

## तृतीय विमर्श : साहित्यिक उद्धरण

प्रस्तुत न्यास ग्रंथ में कतिपय स्थलों पर प्रसङ्गत: प्राचीन कवियों की कृतियों को उद्धृत किया गया है। जो कि लेखक के शास्त्र ज्ञान का परिचायक है तथा यह प्रकट करता है कि प्रस्तुत ग्रंथ का निर्माण एक व्यापक सन्दर्भ में हुआ है। ऐसे उद्धरणों की एक सूची प्रस्तुत की जा रही है। इनमें से कुछ उद्धरणों के संदर्भ-स्थलों की जानकारी मिल सकी है कुछ की नहीं। इससे यह पता चलता है कि संस्कृत साहित्य के इन ग्रंथों का व्यापक रूप से भारतवर्ष के पश्चिमोत्तर प्रांतों में भी प्रचार था।

| उद्धरण | सूत्रसंख्या | स्रोतग्रंथ |
|---|---|---|
| १. गोविन्दाय नमो नमो नम: —<br>इति स्पष्टाक्षरा भारती | ग्रंथ मंगलाचरण | × |
| २. स देवो जागर्ति तदेदं चेष्टते जगत्<br>यदा स्वपिति शान्तात्मा तदा सर्वं प्रलीयते। | ,, | मनुस्मृति |
| ३. कादम्बरी | ,, | कादम्बरी |
| ४. श्रिय: कुरूणाम् | ,, | किरातार्जुनीयम् |
| ५. सामन्तस्य महीपते: | ,, | × |

